'इ कायजो जराभारु कन्तु सुरभिसायक ।
सकल्पजन्मा शृङ्गारयोनिर्गूढाशयेशय [2] ॥
पुष्पायुध पुष्पकेतुर्भावजो विषमायुध ।
पञ्चायुधो मधुसख श्रीसूनुर्मधुसारथि ॥
वीरधन्वा स्वादुधन्वा स्मृतिभूरिक्षुसायक ॥'

एतानि[3] च ॥ २५–६ ॥

[1] विशारदा $A_1$ $B_4$ [2] शूर° $A_1$ [3] $A_1$ adds २१

**ब्रह्मसूर्ऋश्यकेतुः स्यादनिरुद्ध उषापतिः ॥ २७ ॥**

(वि.) ब्रह्मेति—ब्रह्म ज्ञान [1]सूते ब्रह्मसू । 'षूङ् प्राणिप्रसवे' । ऋश्यो मृग केतौ यस्य स ऋश्यकेतु । न निरुध्यत इति अनिरुद्ध । 'रुधिर् आवरणे' । उषाया पति उषापति । एतानि [2]प्रद्युम्नपुत्रनामानि । [3](अरविन्दमिति अशोकमिति नवमल्लिकेति चूतमिति नीलोत्पलमिति ते पञ्चापि मन्मथस्य सायकनामानि ।

अरविन्दमशोक च चूत च नवमल्लिका ।
नीलोत्पल च पञ्चैते पञ्चबाणस्य सायका ॥
[4]हृच्छय कामजश्चैत्रसख शृङ्गारयोनिज ।)

इति ॥ २७ ॥

[1] सूयते U [2] अनिरुद्ध° $B_2$ C $W_1$ [3] $K_2$ adds [4] हृच्छय चैत्रसख शृङ्गारयोनि U, $W_1$ $K_2$ adds प्रिय पुत्र श्रीपुत्र शूर्पकस्य अराति

(पा.) ब्रह्मसूर्विश्वकेतु —उषापति । कामपुत्रनामानि । 'क्लेद ती स्मरवल्लभा' 'ब्रह्मसूर्विश्वकेतु स्यात्' इति रभसकोशपाठाद् ब्रह्मसूशब्द कामपुत्रपर्याय ॥ २७ ॥

**लक्ष्मी. पद्मालया पद्मा कमला श्रीर्हरिप्रिया ।**
**([1]इन्दिरा लोकमाता मा क्षीरोदतनया रमा) ॥ २८ ॥**

(वि.) लक्ष्मीरिति—लक्ष्यत इति लक्ष्मी [2] । 'लक्ष दर्शनाङ्कनयो' । पद्मम् आलय यस्या सा पद्मालया । पद्यत इति पद्मा । 'पद्लृ सेवायाम्' [3] । [4]पद्ममस्या अस्तीति वा । काम्यत[5] इति कमला । 'कमु कान्तौ' । श्रीयत इति श्री ,[6] श्रयत इति वा । 'श्रिञ् सेवायाम्' । हरे प्रिया हरिप्रिया । इन्दि[7] रातीति इन्दिरा । 'इदि परमैश्वर्य' । 'रा दाने' । लोकाना माता लोकमाता । मा च । क्षीराब्धेस्तनया क्षीराब्धितनया । रमयतीति रमा । 'रमु क्रीडायाम्' ।

(⁸भार्गवी लोकजननी क्षीरसागरकन्यका)।

भार्गवीति—भृगोर्गोत्रापत्यं स्त्री भार्गवी। लोकानां जननी लोकजननी। क्षीरसागरस्य कन्यका क्षीरसागरकन्यका। एतानि लक्ष्मीनामानि॥ २८॥

[1] Found in D K₁ K₂ K₄ K₅ W₂ Y [2] लक्ष (लक्ष्य B₂) कलङ्क मुष्णातीति लक्ष्मीर्वा। मुष स्तये C W₂ adds लक्षेर्मुट् च [3] B₂ C add गत्यर्थे वा [4] B C add पद्मं हस्ते धारयतीति वा [5] कम्यते W₁ Y [6] D₂ K₂ add श्रयन्त्येतामिति वा [7] W₁ omits 6 lines [8] K₁ K₃ K₅ U Y omit

(पा.) लक्ष्मी—हरिप्रिया। लक्ष्मीनामानि। पद्मा कमलेत्यादिना पर्यायस्यापि ग्रहणम्। 'स्त्रीलिङ्गश्चाम्बुजाह्वया' इति वैजयन्ती (पृ ६, श्लो ३६)। 'ईर्लोकमाताब्धिसुता मा रमा गोमिनीन्दिरा'। एतानि[1] च॥ २८॥

[1] A₁ adds सप्त

# शङ्खो लक्ष्मीपतेः पाञ्चजन्यश्चक्रं सुदर्शनम्।
# कौमोदकी गदा खड्गो नन्दकः कौस्तुभो मणिः॥ २९॥

(वि) शङ्ख इति—पञ्चजनाख्ये [1]असुरे भवं पाञ्चजन्य इति लक्ष्मीपति शङ्खनाम। सुष्ठु दृश्यते सुदर्शनम्। पुलिङ्गपक्षे सुष्ठु शत्रून् पश्यतीति सुदर्शनः। 'दृशिर्[3] प्रेक्षणे'। चकते इति चक्रम्। इति विष्णुचक्रनाम। कुं [4]पृथिवीं मोदयतीति कुमोदकः विष्णुः[5] तस्येयं कौमोदकी। 'मुदि हर्षे'। कौपोदकीति पाठे[6] कुपोदकात् जायत इति कौपोदकी। इति विष्णुगदानाम। नन्दयतीति नन्दकः। 'टुनदि समृद्धौ'। इति विष्णुखड्गनाम[7]। कौ भुवि स्तोभते व्याप्नोतीति कुस्तुभः[8]। तस्यायं कौस्तुभः। 'ष्टुभु [9]स्तम्भे'। इति विष्णुमणिनाम॥ २९॥

[1] रक्षसि B C D K₁ U W [2] विष्णु B₂ D K₁ W₁ [3] दृशो पश्यादेशः A D₂ K₂ [4] भूमिं B C K₂ पृथ्वीं K₁ K₃ [5] स च विष्णुरित्यर्थः C [6] तत् पक्षे इयं व्याख्या B₂ C [7] विष्णुचन्द्रहासनाम K₂ [8] कुस्तुभः समुद्रः तत्र भवः B₂ C D K₁ K₂ U W [9] स्तोभे K₅ W₁

(पा.) शङ्खो—मणिः। लक्ष्मीपतेः शङ्खः पाञ्चजन्यः स्यात्। तस्य चक्रं सुदर्शनम्। विधेयानुवाद्यपदानि सर्वाण्यत्र समानलिङ्गानि[1]। अतः सुदर्शनशब्दस्य नपुंसकत्वं सिद्धम्। 'वपुरेव जगतां सुदर्शनः' इति माघप्रयोगात् (शिशु १४. ९६) पुंस्त्वं[2] च

सभावितम्। अत एव 'पर विरोधे शेष तु ज्ञेय शिष्टप्रयोगत' (३ ५ ४६) इति शास्त्रान्ते वक्ष्यति। तद्गदा कौमोदकी स्यात्। तत्खड्गो नन्दक स्यात्। तन्मणि कौस्तुभ इति शब्द्यते। 'चाप तु शार्ङ्गमुरसि वनमाला च मालिका' इति च। तद्योगात् शार्ङ्गी वनमालीति शब्दौ व्युत्पत्तिसिद्धौ ॥ २९ ॥

[1] $A_1$ adds स्यु [2] पुल्लिङ्ग व $B_3$ $B_1$

**([1]चापं शार्ङ्गं मुरारेस्तु श्रीवत्सो लाञ्छन स्मृतम् ॥)**

(वि.) चापमिति—शृङ्गस्य विकार शार्ङ्गं, मुरारे चापस्य नाम। तस्य लाञ्छन श्रीवत्स इति मतम्। श्री वक्षसि यस्येति वा।

[1] Found in $D_2$ $K_2$

**गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः।**
**नागान्तको विष्णुरथः सुपर्णः पन्नगाशनः ॥ ३० ॥**

(नि.) गरुत्मानिति—गरुतोऽस्य सन्तीति गरुत्मान्। [1]सर्पान् गिरतीति गरुड। 'गॄ निगरणे'। गरुद्भि डीयते इति वा गरुड। 'डीङ् विहायसा[2] गतौ'। [3]तृक्षस्यापत्य पुमान् तार्क्ष्य। विनताया अपत्य पुमान् वैनतय[4]। खगानामीश्वर खगेश्वर। [5]नागानाम् अन्तको नागान्तक। विष्णो रथ[6] विष्णुरथ। शोभनानि पर्णानि पक्षा यस्य स सुपर्ण। पन्नगा[7] अशन यस्य स पन्नगाशन। एतानि गरुडनामानि ॥ ३० ॥

[1] सनान् $D_1$ $D_2$ T [2] यसा $K_1$ O U Y [3] तृक्षाप य $W_1$
[4] $B_2$ C $K_5$ $W_2$ add स्त्रीभ्यो ढक् [5] नागान् अन्तयति नाशयतीति $B_2$ C
[6] B C add वाहनं [7] पन्नगान् अश्नातीति। 'अश भक्षणे B C

(पा.) गरुत्मान्—पन्नगाशन। गरुडनामानि। गरुत्मत्सौपर्णशब्दावपि विद्येते। 'विदधद्विमुखान् भटानिवाहीन् स गरुत्मेव महेन्द्रसाप कोपात्' इति चन्द्रकाव्यम्। [1]'शीर्णवीदय सौपर्ण कीर्णपर्ण पणाभृत' इति राघवपाण्डवीयम् (द्विस १८ ५२)॥३०॥

[1] 'जार्णवीस्पसौपणकीणपणपणाभृत MSS

**शुसुरीशः पशुपतिः शिवः शूली महेश्वरः।**
**ईश्वरः शर्व ईशानः शंकरश्चन्द्रशेखरः ॥ ३१ ॥**

भूतेशः खण्डपरशुर्गिरीशो गिरिशो मृडः ।
मृत्युंजयः कृत्तिवासाः पिनाकी प्रमथाधिपः ॥ ३२ ॥
उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत् ।
वामदेवो महादेवो विरूपाक्षस्त्रिलोचनः ॥ ३३ ॥
कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहितः ।
हरः स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुरान्तकः ॥ ३४ ॥
गङ्गाधरोऽन्धकरिपुः क्रतुध्वंसी वृषध्वजः ।
व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः ॥ ३५ ॥
(अहिर्बुध्न्योऽष्टमूर्तिश्च गजारिश्च महानटः ॥)

(वि.) शम्भुरिति—शं सुखमस्माद् भवतीति शम्भु[1]। ईष्टे इति ईश। 'ईश ऐश्वर्ये'। पशूनां पति पशुपति। शेरते [2]सज्जनमनांसि अस्मिन्निति शिव। अन्तकाले जगती[3] अस्मिन् शेते इति वा शिव। 'शीङ् स्वप्ने'। शिवकरत्वाद्वा शिव। शूलमस्यास्तीति शूली। महांश्चासौ ईश्वरश्च महेश्वर। महतां देवानाम् ईश्वरो वा[4]। शं[5] करोतीति शङ्कर। 'डुकृञ् करणे'। चन्द्र शेखर[6] यस्य स चन्द्रशेखर। भूतानामीश भूतेश। [7]भूता प्राप्ता शिवभक्ता तथा ई माया श्यतीति वा। 'शो तनूकरणे'। परशुना खण्डयतीति खण्डपरशु। 'खडि खड भेदने'। खण्ड परशु[8] अनेनेति वा। गिरीणामीशो गिरीश[9]। गिरौ शेते इति गिरिश[10]। मृडतीति [11]मृड। 'मृड सुखने'। मृत्यु जयतीति मृत्युंजय। 'जि जये'। कृत्तिश्चर्म वासो यस्य स कृत्तिवासा। पिनाकोऽस्यास्तीति पिनाकी। प्रमथानाम् अधिप प्रमथाधिप। उन् गृह्णातीति उग्र। 'ग्रह उपादाने'। उग्रत्वाद्वा उग्र। कपर्दोऽस्यास्तीति कपर्दी। श्री शोभा[12] कण्ठे यस्य स श्रीकण्ठ। शिति [13]मेचक कण्ठो यस्य स शितिकण्ठ। कपाल बिभर्तीति कपालभृत्। 'डुभृञ् धारणपोषणयो'। वाम श्रेष्ठ, स चासौ देवश्च वामदेव। वामया[14] दीव्यतीति वा वामे [15]सव्ये देवी यस्येति वा। वामया युक्तो वा। वामत्वात् वक्रत्वाद्वा[16]। महांश्चासौ देवश्च महादेव। सर्वत्र 'दिवु क्रीडे'त्यादि धातु। विरूपम् अक्षि यस्य स विरूपाक्ष। त्रीणि लोचनानि यस्य स त्रिलोचन। कृशानु[17] रेतो यस्य स कृशानुरेता। सर्वं जानातीति सर्वज्ञ। 'ज्ञा अवबोधने'। धू गङ्गा जटासु यस्य स धूर्जटि[18]। कण्ठे नील केशेषु लोहित नीललोहित। नीलश्चासौ लोहितश्च नीललोहित[19]।

हरतीति हरः। 'हृञ् हरणे'। स्मरं हरतीति स्मरहरः। भृज्ज्यते[20] अनेनेति भर्गः[21]। 'भ्रस्ज पाके'। सकलं बिभर्तीति वा। त्रीणि अम्बकानि लोचनानि यस्य सः त्र्यम्बकः। द्यौर्भूमिरापः तिस्रोऽम्बा[22] यस्येति वा। त्रयाणां ब्रह्मविष्णुरुद्राणाम् अम्बको वा। 'अम्ब जनने'। त्रिपुराणाम् अन्तकः त्रिपुरान्तकः। गङ्गायाः धरः गङ्गाधरः। अन्धकस्य[23] रिपुः अन्धकरिपुः। क्रतुं[24] ध्वंसयतीति क्रतुध्वंसी। 'ध्वंसु अवस्रंसने'। वृषः ध्वजे यस्य सः वृषध्वजः। व्योमवद् [25]विकीर्णः केशो यस्य सः व्योमकेशः। व्योम आकाशः को वायुः तदादीनामीशो[26] वा। सर्वमस्माद् भवतीति भवः। सर्वमस्मिन् भवतीति वा[27]। बिभेत्यस्माद् भीमः। 'ञिभी भये'। [28]प्रलये तिष्ठतीति स्थाणुः। 'ष्ठा गतिनिवृत्तौ'। रोदयति शत्रूनिति रुद्रः। 'रुदिर् अश्रुविमोचने'। [29]ऋतं सत्यं रातीति[30] वा। 'रा आदाने'। रुतं[31] शब्दं रायतीति वा। 'रै शब्दे'। रुदं रोदनं द्रावयतीति वा। 'द्रु गतौ'। उमायाः पतिः उमापतिः। एतानि [32]ईश्वरनामानि॥ ३१-५॥

[33](भस्माङ्गरागोऽस्थिधरः उमाक्षो नागकङ्कणः।)

(भस्म अङ्गरागो यस्य भस्माङ्गरागः। अस्थीनि धरतीति अस्थिधरः। उमाणि अक्षीणि यस्य उमाक्षः। नाग एव कङ्कणं यस्य नागकङ्कणः। एतानि ईशपर्यायनामानि।)

[1] C, $D_1$, I add 'भू सत्तायाम्'. [2] सुजन° $D_2$; निजजन° $B_2$, C. [3] जगत् C, $D_1$, I, $K_3$, $K_5$ [4] ईष्टे ईश्वरः 'ईश ऐश्वर्ये' A, $B_1$, C, $D_1$, $K_1$, $W_1$; शृणातीति शर्वः, 'शॄ हिंसायाम्' $K_1$, $W_1$; $B_2$, $K_1$, $K_2$, $K_5$, U, $W_2$, Y add ईष्टे ईशानः. [5] C, $D_2$, I, $K_3$, $K_5$, Y add सुरं. [6] शेरते A, $W_2$. [7] भूः माता: भूताः $K_3$, $W_2$; C adds शिवभक्ताः. [8] पशुर्नामासुरः $B_1$, $K_3$, $W_2$. [9] गिरयोऽस्य सन्तीति वा $K_1$, $K_3$, U, $W_1$, Y. [10] गिरि वाचि शेते वसतीति वा, 'शीङ् स्वप्ने' $B_2$, C, $D_2$, $K_2$; C adds अङ्कू। तस्य उपनिषत्प्रतिपाद्यत्वात् इत्यर्थः. [11] Y adds सुखयतीति. [12] C, I, $K_2$ add शिव°. [13] कालः $W_2$; कालकण्ठः A; नीलकण्ठः $K_1$. [14] $B_2$, C add शिवा. [15] वामभागे $B_2$. [16] वामायाः पार्वत्याः देवो वा, वामत्वात् वक्रत्वाद्वा वामः, स चासौ देवश्च C. [17] कृशानो $B_2$, $D_2$, $K_3$, $W_1$. [18] धूम्रा ($B_2$ omits मारम्यरूपा) जटा यस्य $B_2$, C, $D_1$; धुर इव° $W_2$. [19] $K_1$, $K_3$ omit. [20] $D_1$ adds संसारे; संसारे $B_1$, C, $K_2$ [21] $W_2$ adds भञ्जयति वा. [22] एतासां त्रिपुरान् अम्बयति पूरयतीति अम्बको वा। स्वार्थे कप्रत्ययः। 'अम्ब पूर्णे' C; अम्बकः पिता वा $K_3$. [23] अन्धकासुरस्य C, $D_1$, $K_3$, U. [24] °दक्षयज्ञं ध्वंसितुं शीलमस्यास्तीति $B_2$, C. [25] निस्तीर्णः $D_1$, $K_1$, $K_3$, Y. °र्णाः केशाः $K_2$, $W_1$. [26] $B_2$ adds अन्यादीनां. [27] $D_1$, I add 'भू सत्तायाम्'. [28] $K_1$, $W_1$ add अपि; $K_2$ adds काले. [29] U omits 2 lines. [30] C adds गृह्णातीति. [31] रुतं $D_2$, $W_1$; रुजादीनि दुःखं आगन्तं रात् द्रावयतीति वा $B_1$, C. [32] ईशानस्य A, T; शम्भु° $K_1$.

अहि सर्प एव बुध्यम् आभरण यस्य अहिर्बुध्न्य । अष्टसु दिक्षु मूर्ति यस्य स अष्टमूर्ति । महान् काल महाकाल । महान् नट महानट । महन्नग्न यस्येति वा । $K_2$ [33] Found in A $K_2$, $W_2$

(पा.) शंभुरीश —त्र्यम्बक । छान्दसानपि शब्दान् [1]सञ्ज्ञाशब्दत्वाद्भाषायामपि प्रयुञ्जत इति[2] त्रियम्बकशब्द प्रयोगार्ह एव । 'त्रियम्बक संयमिन ददर्श' इति [3]कालिदास । (कु स ३ ४४) नो चेत् दिवस्पतिप्रभृतिशब्दा अप्यव्यवहर्तव्या स्यु ॥ त्रिपुरान्तक —उमापति । [4]ईश्वरनामानि । अनुक्तम्—

'पञ्चाननोऽर्धमकुट कण्ठेकालो हरायुध ।
अष्टमूर्तिरयुग्माक्षो भालनेत्रोऽकृताञ्जन ॥
शैलधन्वार्धरमणिर्ज्योतिर्लिङ्ग यासुचन्दन ।
कालजरो महाकालो रेरिहाणो[5] महानट ॥
हिरण्यबाहुर्हेहोरो [6]गुडाकेशोऽहिभूषण ।
कटीटङ्क करुटिक कटप्रू परमेश्वर ॥
अहिर्बुध्न्यो[7] जटाटीरो[8] जटाजूटोऽग्निलोचन ॥'

एतानि च ॥ ३१–५ ॥

[1] $B_1$ omits [2] तेन $B_3$ $B_1$ [3] $B_1$ adds कुमारसंभवे [4] शिव° $B_1$
[5] रेलिहान $A_1$ [6] गुडकेश $A_1$ [7] अहिबुध्न $B_3$ [8] जटाचीर $B_1$

## कपर्दोऽस्य जटाजूटः पिनाकोऽजकवं धनुः ।

(नि.) कपर्द इति—क शिर [1]पिपर्ति पूरयतीति कपर्द । 'पृ पालनपूरणयो'। शिवजटाजूटनाम । अकति[2] अपि नाकति न नमति इति पिनाक । 'अक अग कुटिलाया गतौ'। पिनह्यत इति पिनाक । 'णह बन्धने'। अजस्य[3] कम् अस्थि तद्विकार अजकवम्। अजगवमिति वा पाठ । अजगवोऽस्थिविकार । शिवस्य धनुर्नामनी ॥

[1] पर्दयति $B_1$ C [2] अकति कुटिलीभवति इत्यक । अके न भवतीति नाक । शिवादितरै धनुर्धानाय न नम्यते (नमति $B_2$) इत्यर्थ । पिनाकोऽप्यर्थक । पिकारेण सहित इति वा । शिवादन्यैरपि न नम्यत इति यावत् । $B_2$ C [3] अजस्य इदम् आजकम् अजशृङ्गमित्यर्थ । तेन अजकेन अजशृङ्गेण व यते क्रियते यत् तत् अजकवम् । तन्निर्मितमित्यर्थ । सेवधार्थे कप्रत्यय । C आजगवमिति वा पाठ । अजश्च गौश्च अजगावौ । तयोर्विकार आजगवम् । $B_2$

(पा.) कपर्दोऽस्य—धनु । [1]शिवजटाजूट कपर्दनाम । पिनाक इति अजगव चेति तस्य धनुर्नामनी । अत्र अजगवशब्दस्य रूपान्तराण्यपि कथयन्ति ।

'स्थाणोर्धनुश्चाजगवम्' इति नाममाला। 'अजगावमजीगावम्'" इति वैजयन्ती (पृ ७ श्लो ५०)।

[1] कपर्द इति ईश्वरजटाजूटनाम A₁ [2] आजगव B₁ अजीगवमिति मुद्रितग्रन्थे (पृ ७ श्लो ५०)

## प्रमथाः स्युः पारिषदा ब्राह्मीत्याद्यास्तु मातरः ॥ ३६ ॥

(वि.) प्रमथा इति—प्रमथ्नन्ति शत्रूनिति प्रमथा। 'मन्थ विलोडने'। परिषदि साधव पारिषदा। ईश्वरस्य सभ्यनामानि। मान्ति परिवस्यामिति मातर। 'मा माने'। 'माङ् माने' इति वा धातु। मान वर्तनम्। शिवपरिचर्याकारिणीना ब्राह्म्यादीना नामानि।

> 'ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा।
> वाराही चैव माहेन्द्री चामुण्डा सप्त मातर ॥'

ब्रह्मण सम्बन्धिनी ब्राह्मी। महेश्वरस्य सम्बन्धिनी माहेश्वरी। कुमारस्य सम्बन्धिनी कौमारी। विष्णोरिय वैष्णवी। वराहस्य सम्बन्धिनी वाराही। महेन्द्रस्य सम्बन्धिनी माहेन्द्री। चामुण्डा इति सप्त [1]मातर ॥ ३६ ॥

[1] ब्राह्मी माहेश्वरी ब्राणी" वाराही वैष्णवी तथा।
कौमारी चमुण्डा च [2]कालसंहारिणीति च ॥ B C W₁ X [2] चेन्द्री D₂ I K₂ W₁ [3] संहारिणीति च D₂ I, K₂ derivations of ब्राह्मी, etc omitted in D₂ K₁ W₁ X

(पा.) प्रमथा —मातर। प्रमथा इतीश्वरदासनाम। अनुक्तम्—'भूतलोयानि भूतानि'। भूताना नामनी। 'कापिशेया पिशाचका'। गुरुनाथादितत्सहचरपिशाचनाम ॥ अनुक्तम्—

> 'ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा।
> वाराही चैव माहेन्द्री चामुण्डा सप्त मातर ॥'

ब्राह्मीप्रभृतय सप्त मातर स्यु[1]। 'ब्रह्माण्याद्या स्मृता सप्त मातरो देवता बुधै' इत्यभिधानात् ब्राह्मी ब्रह्माणीति च नाम भवति। 'चण्डमुण्डा तु चामुण्डा चर्चा मार्जारकर्णिका' इत्यभिधानात् चामुण्डा चण्डमुण्डा च भवति[2] ॥ ३६ ॥

[1] B₂ adds 'सप्तमातृका' [2] A₁ adds 'लोकाचार'

**विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा ।**

(वि.) विभूतिरिति—विभवतीति [1]विभूतिः भूतिश्च । ईश्वरस्य भावः कर्म वा ऐश्वर्यम् । [2]अणिमा महिमा लघिमा गरिमा प्राप्तिः[3] प्राकाम्यम् ईशिता वशित्वं चेति ऐश्वर्याष्टकमुच्यते । इत्यणिमाद्यष्टैश्वर्यनामानि ।

[1] विशेषेण भवतीति विभूतिः, 'भू सत्तायाम्' C
[2] अणिमा लघिमा प्राप्तिः गरिमा महिमेशिता ।
प्राकाम्यं वशिता चेति चैश्वर्याष्टकमुच्यते ॥ $B_1$ C, $D_2$
[3] प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टभूतयः $A_2$

(पा.) विभूतिः – अष्टधा । विभूत्यादीनि ऐश्वर्यनामानि । विभूतिभूतिशब्दौ क्तिन्नन्तत्वात् स्त्रीलिङ्गौ । ऐश्वर्यशब्दः ष्यञन्तत्वान्नपुंसकः । अणिमादिभेदेन तदेवाष्टविधम् ।

'अणिमा महिमा चैव गरिमा लघिमा तथा ।
प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टभूतयः ॥'

**उमा कात्यायनी गौरी काली हैमवतीश्वरी ॥ ३७ ॥**
**शिवा भवानी रुद्राणी शर्वाणी सर्वमङ्गला ।**
**अपर्णा पार्वती दुर्गा मृडानी चण्डिकाम्बिका ॥ ३८ ॥**
**(आर्या दाक्षायणी चैव गिरिजा मेनकात्मजा ।**
**सती च कालरात्री च भैरवी गणनायिका ॥)**

(वि.) उमेति—अवतीति उमा । 'अव रक्षणे' । [1]तपसः उ मेति मात्रा निषिद्धा या उमा । कति अयनानि सन्तीति विचारयतीति कत्ययनः[2] तस्य गोत्रापत्यं स्त्री कात्यायनी । गौरवर्णत्वाद् गौरी । तपसे [3]गुरते इति गौरी । 'गुरी उद्यमने' । कालवर्णत्वात् काली । हिमवतोऽपत्यं स्त्री हैमवती । ईश्वरस्य पत्नी ईश्वरी । ईष्टे इति वा ईश्वरा । अयमपि पाठः । शिवं मङ्गलमस्या अस्तीति [5]शिवा । शिवस्य पत्नी वा । तथा भवस्य [6]स्त्री भवानी । तथा रुद्राणीशर्वाणीशब्दौ । सर्वतो मङ्गलं [7]यस्याः सा सर्वमङ्गला । अपगतम् ऋणं पितुर्यस्याः सा अपर्णा । [8]तपःकाले अपगतानि[9] पर्णानि यस्याः अपर्णा । तपसि [10]स्वार्थं पर्णमपि नैच्छदित्यपर्णा । पर्वतस्य पुत्री पार्वती । दुःखेन गम्यते[11] इति दुर्गा । दुर्गे निवासोऽस्या अस्तीति वा । मृडस्य पत्नी मृडानी । चण्डते इति

चण्डिका[12]। 'चडि कोपे'। चण्डासुरमर्दनाद्वा[13]। अम्बते [14]जनयति सर्वमिति अम्बिका। 'अम्ब जनने'। एतानि पार्वतीनामानि ॥ ३७–८ ॥

[1] तपस उ अयि, मा मास्तु इति मात्रा मेनकया निषिद्धा वा $B_2$, C [2] ऋषि कश्चित् C [3] आगुरते $K_1$, T, अवगुरते $W_1$ [4] उद्यमे $D_2$, $K_2$, $K_5$ U, Y [5] शिवकरत्वाद्वा $B_2$ C [6] पत्नी $B_1$, C, $D_1$, $W_1$ [7] यया सा $K_1$ U, $W_1$ [8] तपश्चरकाले $D_2$ [9] अपगतानि आगामिसञ्चितप्रारब्धरूपाणि ऋणानि यस्या सा अपर्णा $B_2$ C [10] आहारार्थं $D_1$, $K_1$, $W_1$, Y omit तप र्णा [11] गम्या $K_5$, I adds 'गम्लृ सृप्लृ गतौ' [12] $W_2$ adds चण्डी [13] मथनत्वाद्वा $W_2$ [14] °जनं सूते सर्वं Y

(पा.) उमा—अम्बिका। ईश्वरीत्यत्र गौरादिपाठान् ङीप्। पक्षे टाप्। 'कर्बुरी चेश्वरेश्वरी' इति त्रिकाण्डशेष (प्र ३, श्लो ५५)। पार्वतीनामानि। अनुक्तम्—

'बर्हिर्ध्वजा महाकाली रक्तदन्त्येकपाटला।
दाक्षायणी महादेवी कौशिकी मेनकात्मजा ॥
कालरात्रिर्भगवती गिरिजा शारदा च सौ ॥'

एतानि च। सौ सवौ सव। सव सवौ सव। 'योर्गौनद्विभक्तौ' इति कातन्त्रसूत्र-नियमात् गोशब्दवत् णिकार्यं न भवति ॥ ३७–८ ॥

**विनायको विघ्नराजद्वैमातुरगणाधिपाः।**
**अप्येकदन्तहेरम्बलम्बोदरगजाननाः ॥ ३९ ॥**

(वि.) विनायक इति—विगतो नायको [1]नियन्ता यस्य स विनायक। विनयति शिक्षयति दुष्टानिति वा। 'णीञ् प्रापणे'। विघ्नाना राजा विघ्नराज[2]। द्वयोर्मात्रो उमागङ्गयोरपत्य द्वैमातुर। गणानाम् अधिप गणाधिप। एको दन्तो यस्य स एकदन्त। हिरते वर्धयति नेतृन् हेरम्ब। 'हिर वृद्धौ'। हे रम्बते शब्दायते वा हेरम्ब[3]। हेरम्बशब्दं करोतीति वा। लम्बम् उदर यस्य स लम्बोदर। गजस्येव आनन यस्य स गजानन। एतानि विघ्नेश्वरनामानि ॥ ३९ ॥

[1] प्रभु $K_1$ $K_2$ $K_3$ नता $B_1$, C, $W_2$ Y [2] $B_1$, C, $K_5$ $W_2$ add 'राजाह-सखिभ्यष्टच्' [3] देशविदम यं नु स्मह $W_2$, Y, अथवा याम्यो विनायकगुहयोरन्योन्य क्रोडागारे सेमति युद्धे विनायकादर प्रहृतो गुहस्य दन्तुरिताभिः रस्य एकतो भिन्न वा प्रकुप्य [illegible] निलीन विनायक प्रति योदनयात् आक्रोशत् गुहसात भनि ए तात विनायको

मा महत्य मञ्चे लभ्यते इति निवेदयामास। तदाप्रभृति हेरम्ब इति सर्वेऽप्याचक्षत इति ब्रह्माण्डपुराणे प्रसिद्धम्। तस्मात् हेरम्बः C. [4] आननमिवाननं C, $D_2$.

(पा.) विनायको—गजानना । विनायकनामानि ॥ ३९ ॥

**कार्त्तिकेयो महासेनः शरजन्मा षडाननः ।**
**पार्वतीनन्दनः स्कन्दः सेनानीरग्निभूर्गुहः ॥ ४० ॥**
**बाहुलेयस्तारकजिद् विशाखः शिखिवाहनः ।**
**षाण्मातुरः शक्तिधरः कुमारः क्रौञ्चदारणः ॥ ४१ ॥**
**(भृङ्गी भृङ्गिरिटस्तण्डुनन्दिनौ नन्दिकेश्वरे ।**
**कर्णमोटी तु चामुण्डा चर्ममुण्डा तु चर्चिका ॥)**

(वि.) कार्त्तिकेय इति—कृत्तिकानामपत्यं कार्त्तिकेयः। महती सेना यस्य सः महासेन । शराख्यतृणे जन्म यस्य शरजन्मा[1]। षड् आननानि यस्य षडानन । पार्वत्या नन्दन. पार्वतीनन्दन.। ईश्वरस्य [2]रेतस स्कन्दतीति स्कन्द । शत्रून् स्कन्दति शोषयतीति वा। 'स्कन्दिर् गतिशोषणयो'। सेनां नयतीति सेनानी.[3]। 'णीञ् प्रापणे'। अग्नेर्भवतीति अग्निभू । 'भू सत्तायाम्'। परायुधेभ्यः सेनां गूहतीति गुह.। 'गुहू संवरणे'। बहुलानां कृत्तिकानाम् अपत्यं पुमान् बाहुलेयः। तारकासुरं जयतीति तारकजित्। 'जि [4]जये'। विशाखासु[5] [6]भवतीति विशाख । विना [पक्षिणा] मयूरेण शासतीति[7] वा विशाख । 'शासृ व्याप्तौ'। शिखी वाहनं यस्य स शिखिवाहनः। [8]षण्मातृणामपत्यं षाण्मातुर । शक्तेर्धर, शक्तिं [9]धारयतीति वा शक्तिधरः। 'धृञ् धारणे'। [10]कुत्सितं मारयतीति कुमारः। कौ पृथिव्यां मां श्रियं रातीति वा। कुमारयति शिखिना वा। 'कुमार क्रीडायाम्'। सदा ब्रह्मचारित्वाद्वा कुमार । क्रौञ्चगिरिं दारयतीति[11] क्रौञ्चदारण । 'दृ विदारणे'। एतानि [12]कुमारनामानि ॥ ४०–१ ॥

[1] शरे जले जन्म $D_1$, I [2] रेतसा $W_1$, रेतसि $K_2$ [3] ईकारान्तः $B_2$, C
[4] अभिभवे I, $K_1$, $W_1$ [5] $B_2$, C add नक्षत्रेषु. [6] भवः $D_1$, I, $K_5$, $W_1$, विशाखसंभवः $K_1$. [7] $B_2$, C, $D_1$, I add व्याप्नोतीति [8] षण्णाम् $K_1$, $K_5$, $W_2$
[9] धरति $B_2$, C. [10] कुत्सितं भयकरं यथा भवति तथा शत्रून् मारयति। 'मृङ् प्राणत्यागे' C.
[11] $B_2$, C add खण्डयति [12] कुमारस्वामि° $D_2$, I, $K_1$, $K_3$, $W_1$, °स्वामिना A

(पा.) कार्त्तिकेयो—क्रौञ्चदारण । कार्त्तिकेयनामानि । अनुक्तम्—

सुब्रह्मण्यो ब्रह्मगर्भो नीलदंष्ट्रो हरात्मज ।
स्वामी शरेज[1] शरजो गाङ्गेय कुक्कुटध्वज ॥

एतानि च ॥ ४०–१ ॥

[1] जलेज $A_1$

**इन्द्रो मरुत्वान् मघवा बिडौजाः पाकशासनः ।**
**वृद्धश्रवाः शुनासीरः पुरुहूतः पुरंदरः ॥ ४२ ॥**
**जिष्णुर्लेखर्षभः शक्रः शतमन्युर्दिवस्पतिः ।**
**सुत्रामा गोत्रभिद् वज्री वासवो वृत्रहा वृषा ॥ ४३ ॥**
**वास्तोष्पतिः सुरपतिर्बलारातिः शचीपतिः ।**
**जम्भभेदी हरिहयः स्वाराण्नमुचिसूदनः ॥ ४४ ॥**
**संक्रन्दनो दुश्च्यवनस्तुराषाण्मेघवाहनः ।**
**आखण्डलः सहस्राक्ष ऋभुक्षाः**

(वि.) इन्द्र इति—इन्दतीति इन्द्र[1]। 'इदि परमैश्वर्ये'। मरुत अस्य सन्तीति मरुत्वान्। मह्यते मघवान्[2]। 'मह पूजायाम्'। मघं सौख्यमस्यास्तीति मघवा। वेडति इति विटम्। 'विड आक्रोशे'। 'भिड भेदने'। भिड शत्रुतापनम् आक्रोशन वा 'तेजोऽस्य बिडौजा'। पाको' नामासुर त शास्तीति पाकशासन । 'शासु अनुशिष्टौ'। पाक दितिगर्भ वा शास्तीति पाकशासन । वृद्धेभ्य श्रव श्रवण यस्य वृद्धश्रवा । वृद्ध श्रव कीर्तियस्येति वा। वृद्ध इति श्रूयते वा। 'श्रु श्रवणे'। शुनन्तीति 'शुना । 'शुन गतौ'। शुना सीरा लाङ्गलानि येन साधनेन शुनासीर । शुना समृद्धा सीरा येनेति वा। वायुसूर्यौ अस्य स्त इति वा। शु शोभना नासीरा अग्रेसरा यस्येति वा शुनासीर । पुरु भूयिष्ठ हूयते यज्ञेषु पुरुहूत । पुर शत्रो शरीरं पुरं वा दारयतीति पुरंदर । 'दॄ विदारणे'। जयतीति जिष्णु[3]। लेखाना देवानाम् ऋषभ श्रेष्ठ लेखर्षभ । शक्नोति दुष्टजये इति शक्र । 'शक्लृ शक्तौ'। शत मन्यव क्रतवो यस्य स शतमन्यु । दिव स्वर्गस्य पति दिवस्पति । सुष्ठु त्रायते इति सुत्रामा। 'त्रैङ् पालने'। शोभन त्राम बल यस्येति वा। गोत्रान [4]गिरीन्

मिनत्तीति गोत्रमित् । 'भिदिर विदारणे'[10] ॥ [11]वज्रोऽस्यास्तीति वज्री । वसूनामय स्वामी वासव । वसून्यस्य सन्तीति वा । वृत्र [12]हतवान् वृत्रहा । 'हन हिंसागत्यो'। वर्षतीति वृषा । नकारान्त । 'वृष सेचने'। वास्तो [13]गृहदेवताया पति वास्तोष्पति । सुराणा पति सुरपति । [14]वलस्याराति वलाराति । शच्या पति शचीपति । जम्भम् असुर [15]भिनत्तीति जम्भभेदी । 'भिदिर् [16]विदारणे'। [1] हरयो हरितो हया यस्य हरिहय । स्व स्वर्गे राजतीति स्वाराट्। 'राजृ दीप्तौ'। [18]नमुचि सूदयतीति नमुचिसूदन । 'षूद क्षरणे'। सक्रन्द नयति शत्रून् [19]सक्रन्दन । 'क्रदि आह्वाने रोदने च'। दु खेन च्योतितु शक्य दुश्च्यवन । 'च्युतिर् [20]क्षरणे'। शत्रूणा तुर [21]त्वरित सहते तुराषाट् । 'षह मर्षणे'। मेघो वाहन यस्य मेघवाहन । आखण्डयति रिपून् इत्याखण्डल । 'खडि [22]भेदने'। सहस्रम् अक्षीणि यस्य स सहस्राक्ष । इयर्तीति ऋभुक्षा [23]। 'ऋ गतौ'। ऋभून् देवान् क्षिपति कर्मसु इति वा ऋभुक्षा । नकारान्त । 'क्षिप प्रेरणे'[24] । एतानि इन्द्रनामानि ॥ ४२-५ ॥

[1] यद्वा इदन्ताराहनदघनादिवत् इम् इद सर्वं द्राति साक्षात्करोतीति इन्द्र । 'इ गतौ'। गतिशब्दस्तु ज्ञानात्मक C　[2] मघवा $K_1$, $K_3$ $K_5$, $W_2$, मह्यते पूज्यते इति मह । हकारस्य घश्च आदेश । मघ अस्यास्तीति मघवान् $B_2$ C　[3] सौम्य A　[4] ओजो $B_1$ $D_1$, $W_1$, बल C निज शत्रुसमुत्कोशन ओज $W_2$　[5] दितिगर्भे पाक शिशु चास्ति भेदयतीति वा $B_2$ C, D पाक गजेन्द्र वा $W_2$　[6] 'शुन गतिसमृद्ध्यो'। अथवा शुना आसीरा येषा ते । त च वायुसूर्यौ । तेऽस्य वशे तिष्ठन्तीति शुनासीर $B_2$, C　[7] पट्टण वा $B_1$, C $D_1$, $W_1$, Y　[8] C, $D_1$, I add 'जि जये'　[9] पवतान् C　[10] 'द्वैधीकरणे' A, $B_1$ C, $K_4$ $K_5$ T　[11] वज्र $B_1$, C, $W_2$　[12] हन्तीति $B_1$, C $K_3$ U $W_2$　[13] वास्तुपुरुषस्य $B_2$ C　[14] बलासुरस्य B, C　[15] C adds हिनस्ति　[16] 'द्वैधीकरणे' A, $B_1$, C, T, $W_1$　[17] हरिवर्णो A यामा C　[18] ऋण न मुञ्चतीति नमुचि A $D_2$ $K_1$ $W_1$　[19] सक्रन्दयतीति $D_2$, $K_1$, $K_5$, $W_1$　[20] क्षसन C, $K_2$　[21] तुदन (तोदन) आ समन्तात् सहते तुराषाट् C　[22] 'खण्डने' $D_2$ $K_2$ Y　[23] इयर्ति व्याप्नोतीति च भवतीति च क्षमते इति च धातुत्रयेण निष्पन्न ऋभुक्षा । 'ऋ गतौ, भू सत्तायाम्, क्षम सहने'। अथवा ऋभु अमोघ क्षिप्यते इति क्ष, तत् किं, धनुरित्यर्थ । अमोघ धनुर्यस्येति ऋभुक्षा C　[24] $K_3$ $K_5$ $W_4$ add उग्रधन्वा च

(पा.) इन्द्रो मरुत्वान्, मघवान्—मघवा इत्युभयथा पाठ । पूर्वस्योदाहरणम्—'स क्षिति सयुगमूर्ध्नि सहायता मघवत प्रतिपद्य महारथ'। (रघु ९ १९) अपरस्योदाहरणम्—'जानामि त्वा प्रकृतिपुरुष कामरूप मघोन'। (मेघ १ ६) वृद्धश्रवा शुनासीर । 'शक्र इव नाम्नविख्यातशुनासीर' इत्याश्चर्यमञ्जरी'श्लेषादृ दृश्य ।

'गुर्वीं वहन् सदानवलक्ष्यीकृत्वाङ्गदांशुनाशीरेण ।
अनुवनिताञ्जलिमुकुलं लक्ष्यीकृत्वाङ्गदा शुनासीरेण ॥'

इति हरिप्रबोधयमकात् तालव्यादि ।

पुरुहूत —हरिहय । 'प्रायो रूढिर्बलवती' इति [2]न्यायेन शतमन्युशब्दसाम्यात् शतमखादिशब्दा प्रयोक्तव्या इति हरिहयशब्दसाम्याद् हर्यश्वादिशब्दाश्च प्रयोक्तव्या न भवन्ति। हरिवाहनशब्द प्रयोक्तव्यो भवति। स्वाराट्—ऋभुक्षा । 'सहे साड स' (८ ३ ५६) इति साड्रूपे षत्वम्। तुरासाहौ तुरासाह । [4]पृतनाषाद् शब्दस्याप्ययमेव क्रम । 'हल्ङ्याब्भ्यो दीर्घात्' इति (६. १ ६८) हलाश्रितत्वात् स्थान्यतिदेशो न । इन्द्रनामानि ॥ अनुक्तम्—

प्राचीनबर्हिर्मेघपाण्डो महेन्द्र सितकुञ्जर ।
पूतक्रतु पुलोमारिर्दाल्मिरप्सरसा पति ।
पुरदस उग्रधन्वा हरिवान् वज्रदक्षिण ॥

एतानि च ॥ ४२—५ ॥

[1] °मन्यु° $A_1$ [2] न्यायो बलवान् $A_1$ [3] इय $A_1$ [4] एव पृतनाशब्देऽपि $B_3$, $B_4$

**तस्य तु प्रिया ॥ ४५ ॥**
**पुलोमजा शचीन्द्राणी नगरी त्वमरावती ।**
**हय उच्चैश्रवाः सूतो मातलिर्नन्दनं वनम् ॥ ४६ ॥**
**स्यात् प्रासादो वैजयन्तो जयन्तः पाकशासनिः ।**
**ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः ॥ ४७ ॥**
**ह्रादिनी वज्रमस्त्री स्यात् कुलिशं भिदुरं पविः ।**
**शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः ॥ ४८ ॥**

(वि.) पुलोमजेति—पुरूणि लोमानि यस्य स पुलोमा। तस्मात् पुलोम्न जायत[1] इति पुलोमजा । 'जनी प्रादुर्भावे' । शच्यते[2] हृस्यता गच्छतीति शची। 'शच गतौ'। इन्द्रस्य पत्नी इन्द्राणी। इन्द्रभार्यानामानि[3]॥ [4]अमरा अत्र [5]वसन्तीति अमरावती। इन्द्रनगरीनाम॥ उच्चैः श्रवः कीर्तिर्यस्य स

उच्चैःश्रवा । [6]उच्चै उन्नते श्रवसी[7] यस्येति वा । इन्द्रहयनाम[8] ॥ मतानि सूत कर्माणि लाति गृह्णातीति मतल । तस्यापत्य [9]मातलि । 'ला आदाने'। इन्द्र सारथिनाम ॥ नन्दयतीति नन्दनम् । 'टुनदि समृद्धौ'। इन्द्रवननाम ॥ विजयन्तस्य इन्द्रस्य अय [10]वैजयन्त । तत्प्रासादनाम ॥ जयति शत्रूनिति जयन्त । रूपेण[11] वा सर्वान् जयति अभिभवति जयन्त [12]। पाकशासनस्यापत्य पाकशासनि । इन्द्रपुत्रनामानि[13] ॥ इरा आप यत्र वसन्ति स इरावान् सिन्धु [14]। तत्र जात ऐरावत । अभ्रे मातङ्ग इव खेचरत्वात् अभ्रमातङ्ग [15]। इरा हाला तत्प्रधान वनम् इरावणम् तत्र जात ऐरावण [16]। अभ्रमो वल्लभ अभ्रमुवल्लभ । इन्द्रगजनामानि ॥ ह्लादते [17]ध्वनति अनया अस्तीति ह्लादिनी । ह्लादुनीति वा पाठ । वजति शीघ्र गच्छतीति वज्रम् । 'वज व्रज गतौ'। कुल्यते सतन्यते कीर्तिरनेनेति कुलिशम् । 'कुल सताने'। कु पृथिवीं[18] लेशयतीति वा । 'लिश अल्पीभावे'। कुलिन [19] पर्वतान् श्यतीति वा । 'शो तनूकरणे'। कुलिश-वज्रशब्दौ अस्त्रियौ । भिनत्ति ताञ्छील्येनेति भिदुरम् । पुनाति वैरमिति पवि । 'पूञ् पवने'। शत कोटयो[20] यस्य शतकोटि । स्वरतीति परान् स्वरु । 'स्वृ उपतापे'। शमयति शत्रूनिति [21]शम्ब । 'शमु उपशमने'। शत्रु दम्नोतीति दम्भोलि । 'दम्भु हिंसायाम्'। अश्नाति शत्रुजीवितम्[22] अश्नुते[23] वा अशनि । 'अश भोजने'। 'अशू व्याप्तौ'। अशनीति वा पाठ स्त्रीलिङ्गपक्षे । एतानि वज्रनामानि[24] ॥ ४६–८ ॥

[1] जात $B_2$, C, $D_2$, $K_2$, $W_1$ [2] शच्यते C, $D_2$, $K_5$ $W_1$, Y, श सुख चिनोतीति शची C [3] °पत्नी° A, $K_2$, T [4] $B_1$, U add इन्द्रस्य [5] सन्ति $D_1$ [6] $B_1$, C, T omit [7] A $B_2$ C add श्रोत्रे [8] °वाहन° A, Y [9] °लाति ताडयति अश्वान् । 'ला ताडने' 'अत इञ्' $B_1$, C [10] विजयत इन्द्रस्याय वैजयन्त $B_1$, C [11] रोपेण $W_2$ [12] 'जि जये' C, $D_1$ adds 'जि अभिभवे' [13] नामनी $B_2$, C [14] समुद्र C [15] आतमेव आतङ्क । भ्रमश्च आत च भ्रमाते । त गच्छतीति भ्रमातङ्ग । स न भवतीति अभ्रमातङ्ग । 'गम्लृ गतौ' C, भ्रमातङ्गात् अन्य अभ्रमातङ्ग $B_2$, श्वेताश्रयद्वा $K_2$ [16] आ समन्ताद्ध्रियमान वनम् आवनम्, ऐर च तत् आवन च ऐरावण क्षीरसमुद्र, तत्र जात ऐरावण $B_2$ C [17] अहङ्कार $B_2$ C [18] पृथ्वीं $K_1$, $W_1$ [19] कु भूमि तत्र लीयन्त इति कुल्य । ईकारान्त । पर्वता इत्यर्थ । तान् श्यतीति C [20] C adds अग्राणि [21] शत्रु शमयित्वा स्वपक्ष वहतीति शव । वबयोरभेद । 'शम उपरमे', 'वह मापणे' C, $K_1$, I, U [22] °जन $B_2$ $K_1$, $K_3$ [23] C adds व्याप्नोति [24] वज्रायुध° $B_2$ $D_2$

(पा.) तस्य तु प्रिया—इन्द्राणी । [1]तत्प्रियानामानि । 'मघोनी जयवाहिनी'। एते च । [2]महेन्द्राणीति पाठान्तरम् ॥ नगरी त्वमरावती । पुरनाम । अमरा इत्यप्यस्ति । 'दूर्वामरावतीस्थूणागुडूचीष्वमरा [3]मता' इति विश्वप्रकाशिका (पृ १३३,

श्लो. ९४)। हय उच्चैःश्रवाः। [4]तदश्वनाम॥ सूतो मातलिः। [5]इन्द्रसारथिनाम। 'सारथिस्तु हयंकषः' इति रभसकोशपाठात् हयंकषोऽपि स्यात्॥ नन्दनं वनम्। तत्क्रीडावनं[6] नन्दनम्॥ स्यात् प्रासादो वैजयन्तः। तत्प्रासादनाम। तच्च सप्तभूमिकाभवनम्। तस्य ध्वजोऽपि वैजयन्तः स्यात्। 'प्रासादो वैजयन्तोऽस्य वैजयन्तो ध्वजोऽपि च' इति वैजयन्ती (पृ. ९, श्लो. ९)। जयन्तः पाकशासनिः। तत्तनयनामनी॥ ऐरावतो—अभ्रमुवल्लभाः। तदारोहणगजनामानि। 'राथन्तरिश्चतुर्दन्तः'। एते च॥ ह्लादिनी—द्वयोः। [7]वज्रायुधनामानि। वज्रमस्त्री स्यात् कुलिशमिति संदष्टविशेषविधिः। पविः शतकोटिः स्वरुः शम्बो दम्भोलिरिति [8]परापरसाहचर्यम्। उभयत्र वैजयन्ती—(पृ. १०, श्लो. १३)

> 'अस्त्रियौ वज्रकुलिशौ भिदुरं शतधारकम्।
> [9]व्याधामः पुंसि दम्भोलिः शतकोटिः पविर्भिदुः'॥

अशनिर्द्वयोरित्यसंघातपक्षे विशेषविधिः। संघातपक्षे पुंलिङ्ग एव। 'वज्राशनिर्भिदुर्वज्रम्[10]' इति त्रिकाण्डशेषः (पृ. ४, श्लो. ६५)। 'वज्राशनिर्गिरिकिटः पविर्दम्भोलिरक्षजम्' इति रभसकोशः। अत्र स्वरुशब्दं विना सर्वे शब्दास्तालव्याः। शम्बशब्दस्तालव्यो दन्त्यश्च भवति।

> 'तालव्या अपि दन्त्याः स्युः शम्बशूकरपांशवः[11]।
> पल्वलः शम्बलं चैव जिह्वायां रसना च या'॥

इत्यूष्मभेदपाठात्॥ ४६-८॥

[1] पत्नी B₃. [2] A₁ adds अमरकोशे. [3] स्मृता B₃, B₄. [4] तदारोहणहय° A₁. [5] B₃ omits इन्द्र. [6] तद्वननाम B₂. [7] A₁ adds तद्गृहीत. [8] B₃ omits परापर. [9] व्याधानः B₂. [10] भिद्र इति मुद्रितग्रन्थे. [11] °शूकरपांसवः A₁.

**व्योमयानं विमानोऽस्त्री नारदाद्याः सुरर्षयः।**
**स्यात् सुधर्मा देवसभा पीयूषममृतं सुधा॥ ४९॥**

(वि.) व्योमेति—व्योम्नि [1]यानं व्योमयानम्। विमान्ति यतन्ते देवा अत्र विमानम्[2]। 'माङ् माने यतने च'। विमाननाम॥ [3]सुराणाम् ऋषयः सुरर्षयः। नारं नरसमूहं 'ददाति नारदः। नारदादिदेवर्षिनाम'॥ शोभनो धर्मोऽत्र सुधर्मा[4]। नकारान्तोऽप्यस्ति। देवसभानाम॥ पीयते इति पीयूषम्। 'पीङ् पाने'। न मृता

भवन्त्यनेनेत्यमृतम् । सुष्ठु धयन्त्येनां सुधा । 'धेट् पाने' (समुद्रनवनीत देश्याम्) अमृतनामानि ॥ ४९ ॥

[1] C adds विद्यमान　[2] स्त्रियतीति B₂, C　[3] B₁ omits 3 words
[4] दाति भेदयतीति 'दा अवखण्डने' C, I　[5] °सुर° W₁　[6] आकारान्त, स्त्रिया Y
[7] B₂, C add पिबन्ति, सुखेन धीयते सुधा D₂

(पा.) व्योमयान विमानोऽस्त्री । [1]विमाननामनी ॥ नारदाद्या —देवसभा । देवसभा सुधर्मा स्यात् । 'सुधर्मामिव स्वच्छन्दकौशिका विन्ध्याटवीं विवेश' इति वासवदत्ता । सज्ञाशब्दत्वाद् 'धर्मादनिच् केवलात्' इति (५ ४. १२४) अनिच् न भवति ॥ पीयूषममृत सुधा । अमृतनामानि ॥ ४९ ॥

[1] याननामनी B₂

मन्दाकिनी वियद्गङ्गा स्वर्णदी सुरदीर्घिका ।
मेरुः सुमेरुर्हेमाद्री रत्नसानुः सुरालयः ॥ ५० ॥
पञ्चैते देवतरवो मन्दारः पारिजातकः ।
संतानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥ ५१ ॥

(नि.) मन्दाकिनीति—मन्दम् अकति मन्दाकिनी । 'अक अग कुटिलायां गतौ' । वियति [1]गङ्गा वियद्गङ्गा । स्व स्वर्गे नदी स्वर्णदी । सुराणां दीर्घिका सुरदीर्घिका । [2]मन्दाकिनीनामानि ॥ मिनोति शिखरे ज्योतींषीति मेरु [4] । 'डुमिञ् प्रक्षेपणे' । सुष्ठु मिनोतीति सुमेरु । हन्यते हेम । 'हन्य गतिकान्त्यो' । हेम्नोऽद्रि हेमाद्रि । रत्नानि सानुषु यस्य [5]रत्नसानु । सुराणाम् आलय सुरालय । [6]मेरुनामानि ॥ मन्द्यते स्तूयते मन्दार । 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु' । मन्दा आरा अस्येति वा मन्दार । पारम् उदकमस्यास्तीति पारी समुद्र । तस्मात् जात पारिजात [7] । सतनोति वाञ्छितं सतान । 'तनु विस्तारे' । कल्पयति वाञ्छित कल्प, स चासौ वृक्षश्च कल्पवृक्ष । 'कलृपि [8]सामर्थ्ये' । हरेरिन्द्रस्य चन्दन हरिचन्दनम्[9] । एतानि पञ्च [10]देवतरुनामानि ॥ ५०–१ ॥

[1] B₂ C add विद्यमाना　[2] A K₁ T, U omit　[3] आकाशगङ्गा° D₁
[4] मीनाति हिनस्ति असुरानिति मेरु । 'मीञ् हिंसायाम्' D₁　[5] रत्नमया सानव D₁
[6] मेरुगिरि° B₁ C, D₁ K₁, K₅ W₁, Y　[7] पारिण पारावन (?) समुद्रात् जात D₁,

B₂, C add 'जनी प्रादुर्भावे' [8] 'वल्सी' A, K₁, W₁ [9] हरिम् इन्द्र चन्दयति ह्लादयतीति। 'चदि आह्लादने D₁ [10] देवतावृक्ष° D₁

(पा.) मन्दाकिनी—हरिचन्दनम्। [1]आकाशगङ्गानामानि। गिरिनद्यादित्वात् [2]स्वर्णदीत्यपि स्यात्। सिद्धनदीशब्द प्रयोगे दृष्ट। 'भेजे भीत पादुकसिद्धसिन्धोर-भूतपूर्वां श्रियमम्बुराशि '[3]। इति विदग्धकण्ठाभरणम्॥ हेमाद्रिरित्यादिमेरुगिरि-नामानि[4]। मन्दारादय पञ्च [5]सुरतरुनामानि॥ ५०-१॥

[1] स्वर्गङ्गा° B₃, B₆ [2] स्वर्नदीति पाठान्तरम् B₃ [3] अम्बुराशे B₃ [4] B₃ omits गिरि [5] देवतरव A₁

**सनत्कुमारो वैधात्रः स्वर्वैद्यावश्विनीसुतौ।**
**नासत्यावश्विनौ दस्रावाश्विनेयौ च तावुभौ॥ ५२॥**

(वि.) सनदिति—[1]सनत् नित्य कुमार सनत्कुमार। विधातुरपत्य वैधात्र। [2]वैद्यसहिताकर्तृविधातृपुत्रस्य नामनी॥ [3]अश्विन्या सुतौ अश्विनीसुतौ[4]। न असत्यौ नासत्यौ[5]। अश्वावनयो स्त इत्यश्विनौ। सदा अश्वारूढत्वाद्वा। दस्यत क्षपयत रोगानिति दस्रौ। 'दसु उपक्षये'। अश्विन्या [6]अपत्ये पुमासौ आश्विनेयौ[7]। एतानि स्वर्गवैद्यनामानि॥ ५२॥

[1] सनत् ब्रह्मा तस्य कुमार D₁ [2] सनत्कुमारनामानि D₁ [3] K₁, K₃, W₁ add स्व स्वर्गे वैद्यौ स्वर्वैद्यौ [4] सूर्यस्य पत्न्या संज्ञाया अश्वरूपधारिण्या सुतौ D₁ [5] न विद्यते असत्य ययोस्तौ D₁, सत्यौ न भवत इत्यसत्यौ B₂, C [6] पुत्रौ B₁, C, K₃ Y, D₁ adds तावुभौ सहचरावित्यर्थ [7] अश्विन्या अश्वरूपधरात्संज्ञाया जातौ, अश्विनीनक्षत्रजातौ वा D₁

(पा.) सनत्कुमारो वैधात्र। वैद्यशास्त्रकर्तृदेवर्षिनामनी॥ स्वर्वैद्यौ—तावुभौ। देववैद्ययोर्नामानि। नासत्य इति दस्र इति च तयो पृथक्नामनी। 'नासत्यदस्रौ नासत्यावश्विनौ [1]वरवाहनौ' इति वैजयन्ती (पृ १५ श्लो ५)। विरूपैकशेषादत्र नासत्यौ दस्रावित्युक्त मूलकारेण॥ ५२॥

[1] नरवाहनौ A₁, B₁

**स्त्रियां बहुष्वप्सरसः स्वर्वेश्या उर्वशीमुखाः।**
**(घृताची मेनका रम्भा उर्वशी च तिलोत्तमा।**

**सुकेशी मञ्जुघोषाद्याः कथ्यन्तेऽप्सरसो बुधैः ॥)**
**हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम् ॥ ५३ ॥**

(वि.) स्त्रियामिति—आप्यन्ते पुण्यकृद्भिरिति अप्सरस[1] । ऊरू अश्नुते, नारायणस्य ऊरोर्भवत्वात् [2]ऊर्वशी । ऊर्वशीमुखस्वर्वेश्यानाम । अप्सरा इत्येकवचनान्तमपि विद्यते ॥ गान धारयन्तीति गानपरा [3]गन्धर्वा । हाहा हूहू इत्यालापानुकारात् नामद्वयम् । एकनामेत्येके । अन्ययाविति भोजराज । हाहाहूहूप्रभृतिदेवगायकनामनी ॥ ५३ ॥

[1] अप्सु सरन्तीति । 'सृ गतौ' U, स्रवन्तीति I, अद्भ्य सृता अप्सरस, अपसारयन्ति स्मारयन्तीति, सकारान्त D₁, अद्भ्य निसृता निर्गता Y [2] उर्वशीति वा पाठ Y [3] गान धर्म येषा ते गन्धर्वा D₁, गान धारयन्ति, शिष्यान् पाठयन्ति, स्वय वहन्ति च ये ते गन्धर्वा । 'धृञ् धारणे' 'वह प्रापणे' C

(पा.) स्त्रिया—ऊर्वशीमुखा । ऊर्वशीरम्भामेनकादिस्वर्गगणिका अप्सरस इत्युच्यन्ते । बहुष्विति बहुवचनप्रकृतिरन्ते लिङ्गसमहे समीरिता । एकवचना विंशत्यादय । द्विवचना दम्पत्यादय । बहुवचना अप्सरःप्रभृतय । त्रिवचना वृक्षादय । अवचनान्यव्ययानि । केषाचिद् बहुत्वमनभिमतमेव । 'एकाप्सर प्रार्थितयोर्विवाद'[1] इत्यत्र बहुत्व प्रायिकाभिप्रायमुक्तम् । [2]अबहुवचनस्योदाहरणम्—

'सान्द्रकाण्डपटसवृतमूर्तेर्दन्तिदन्तशयनीयशयस्य ।
मानिनि कुलवधूरिव रागादप्सरा व्यधित पार्श्वमशून्यम्'॥

इति ॥ हाहा हूहू—त्रिदिवौकसाम् । हाहाशब्दो धातुजो न भवतीति केचिद् व्याचक्रिरे । तज्जल्पितमज्ञानविजृम्भितमेव । 'हेति निन्दित ध्वनिं जहातीति हाहा' इत्यमरभाष्यकारा प्रतिजानते । गन्धर्वैर्न्ति हाहसोरित्यभिधानान्तरपक्ष । हाहाहूहूप्रभृतयो देवगन्धर्वा । गान्धर्वा अपि भवन्ति । 'अपि गन्धर्वगान्धर्वदिव्यगायनगातव' इति रभसकोश[3] ॥ ५३ ॥

[1] A₁ omits विवाद [2] एकवचनस्य B D₁, रुक्मिणाभ्युदये (१७ ३२) इति टीकासर्वस्वे (पृ ३९) [3] °कोशकार A₁

**अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनंजयः ।**
**कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात् ॥ ५४ ॥**

बर्हिः शुष्मा कृष्णवर्त्मा शोचिष्केश उषर्बुधः ।
आश्रयाशो बृहद्भानुः कृशानुः पावकोऽनलः ॥ ५५ ॥
रोहिताश्वो वायुसखः शिखावानाशुशुक्षणिः ।
हिरण्यरेता हुतभुग् दहनो हव्यवाहनः ॥ ५६ ॥
सप्तार्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः ।
शुचिरप्पित्तम्

(वि.) अग्निरिति—[1]अङ्गति [2]ऊर्ध्वं गच्छतीत्यग्नि । 'अगि ऊर्ध्वगमने' । विश्वानरस्य ऋषेरपत्य वैश्वानर । हव्य [3]वहतीति वह्नि । 'वह प्रापणे' । होत्रस्य[4] हविषो वीति अश्व इव वहनात् वीतिहोत्र । अथवा वीतयोऽश्वा होत्र हव्यमस्येति वीतिहोत्र । वीति [5]आर्याणामशन होत्र होमसाधन तदस्यास्तीति वा वीतिहोत्र । धन [6]जयतीति धनजय । 'जि जये' । कूपीटस्याम्भसो[7] योनि कूपीटयोनि । कूपीट योनिरस्येति वा । ज्वलतीति ज्वलन । 'ज्वल दीप्तौ' । जात विद्यते इति जातवेद[8] । 'विद सत्तायाम्' । जात शुभाशुभ वेत्तीति वा । 'विद ज्ञाने' । वेदो हिरण्यम् अस्मात् [9]जातमिति वा । तनू न पातयति [10]तनूनपात् । 'पतॢ गतौ' । बृहति वर्धते आज्येनेति बर्हि[11] । 'बृहि वृद्धौ' । शोषयतीति शुष्मा[12] । बर्हो दर्भा शुष्म स्थानमस्येति बर्हि शुष्मा[13] । दर्भस्थानपक्षे एकनाम । कृष्ण वर्त्म मार्गोऽस्य कृष्णवर्त्मा । शोचींषि[14] केशा यस्य स शोचिष्केश । [15]उषसि बुध्यते प्रकाशते उषर्बुध । 'बुध अवगमने' । [16]आश्रयम् अश्नातीति आश्रयाश । 'अश भोजने' । आश्रयाशी इति वा पाठ । बृहन्त भानवो यस्य बृहद्भानु । कृशयति तनू स्वमान्द्यात् कृशानु[17] । 'कृश तनूकरणे' । कृशेन मन्थकाष्ठेन उत्पन्न इति वा । पुनातीति पावक । 'पूञ् पवने' । अनिति वर्धतेऽनेन अनल । 'अन प्राणने' । काष्ठादिभि अल पर्याप्ति नास्ति अस्येति वा । लोहितास्यो[18] मृग [19]अश्वोऽस्येति लोहिताश्व । वायो सखा वायुसख[20] । वायु सखा अस्येति वा । शिखा अस्यास्तीति शिखावान् । आशु शोषयितुमिच्छतीति आशुशुक्षणि । हिरण्य रेतोऽस्य हिरण्यरेता । हुत [21]भुङ्क्ते हुतभुक् । 'भुज पाल्नाभ्यवहारयो' । दहतीति दहन । 'दह भस्मीकरणे' । हव्ये हव्यविषये वाहते यतते इति हव्यवाहन । 'वाहृ प्रयत्ने' । हव्य वहतीति वा । 'वह प्रापणे' । सप्त अर्चींषि यस्य स [22]सप्तार्चि । दाम्यति ग्लापयति शमयति [23]दमुना । सकारान्त । 'दमु उपशमने' । शोचयति शत्रूनिति [24]शुक्र । 'शुच शोके' । शुच रातीति वा । 'रा आदाने' । शुक्र [25]रुद्र-रेतोऽस्यास्तीति वा । चित्रा भानवो यस्य चित्रभानु । विभैव[26] वसु धनमस्य विभावसु ।

[27]शोचयतीति शुचि.। 'शुच शोके'। शुद्धत्वाद्वा। अपां पित्तम् [28]अपित्तम्। एतानि अग्नेर्नामानि ॥ ५४–६ ॥

[1] अगति $B_1$, C, $D_1$, I, $K_3$, $W_2$ [2] कुटिलम् ऊर्ध्वं वा $D_1$ [3] $D_1$ adds प्रापयति देवान्. [4] हूयते इति होत्र हविर्द्रव्यम्। वीति वहन, तदश्व इव वहनात्, परनिपात, 'हु दानादानयो' C, होत्र हवि वीतिरशनं यस्य वीतिहोत्र. $D_1$ [5] अमराणा C. [6] C adds सपादयति [7] उदकस्य $K_3$, $W_1$ [8] $B_2$, C add जातश्चासौ वेदाश्च, 'जनी प्रादुर्भावे', A, $D_2$ add जाते जाते [9] जायते $W_2$ [10] इन्धन विना तनूं न पाति। 'पा रक्षणे' $D_1$, U [11] $K_1$, $K_3$ add सान्त [12] $D_1$ adds 'शुष शोषणे' [13] नकारान्त C, $W_1$ [14] $D_1$ adds ज्वाला [15] प्रात काले $B_2$, C, प्रभाते $D_1$. [16] °वर्ण. [17] कृशोऽपि अनिति वर्धते 'अन प्राणने' $D_1$ [18] $K_5$ omits 3 lines [19] रोहित कृष्णमृग अश्वो वाहन $B_2$, C [20] 'राजाह सखिभ्यष्टच्' $B_2$, C $D_1$ [21] भुनक्ति $K_3$ [22] काली कराली मनोजवा सुलोहिता सुधूम्रवर्णा स्फुलिङ्गिनी विश्वदासाख्या. जिह्वारूपज्वाला यस्य सप्तार्चि $D_1$ [23] दमना $B_1$, C, उपशाम्यति धन (इंधन) विना $D_1$ [24] शोषयति दावांदोन् $B_2$, C, $D_1$ [25] तेज $D_1$ [26] विभा प्रभा $B_2$, C, $D_1$, $K_3$ [27] $D_1$ adds दु खयति [28] अप पिबतीति अपित्, 'पा पाने', तनोतीति त, अपिच्च तत्त च अपित्तम् C

(पा.) अग्निर्वैश्वानरो—तनूनपात्। 'तनूनपाति पीतसर्पिषि पतङ्ग इव पातया म्यात्मानम्' इति हर्षचरितानुप्रासात् तान्त। बर्हि शुष्मा—शोचिष्केश[1] उपर्बुध। शोचिष्केश इत्यत्र कस्कादित्वात् षत्वमिति कतिचिद्वदन्ति[2]। आश्रयाशो—अपित्तम्। अग्निनामानि। बर्हि शुष्मेति सघातोऽप्यग्निनाम। अपा पित्तमिति वाक्य सदप्यग्निनाम। शुचिर इति वा पाठ।

'स्रुग्जिह्वो [3]मन्त्रजिह्वश्च त्रिधामा[4] वातसारथि।
स्वाहाप्रिय कृष्णगतिर्हव्यवाड्ढव्यसूदन।
धूमध्वजो हुतवह पाञ्चजन्यो वृषाकपि॥'

एतानि च ॥ ५४–६ ॥

[1] रोचिष्केश $A_1$, $B_1$ [2] $B_2$ omits [3] मित्र° $A_1$ [4] दावा $A_1$

**और्वस्तु वाडवो वडवानलः ॥ ५७ ॥**
**वह्नेर्द्वयोर्ज्वालकीलावर्चिर्हेतिः शिखा स्त्रियाम्।**

(वि.) और्व इति—ऊर्वतीत्यूर्व । 'उर्वी तुर्वी थुर्वी हिंसायाम्' । तस्यापत्य और्व । वडवाया भव वाडव । वडवायाम् अनल वडवानल । वडवाग्निनामानि ॥ ज्वलतीति ज्वाल । 'ज्वल दीप्तौ' । कीलति पक्ष्यादिगर्ति कील । 'कील बन्धने' । एतौ शब्दौ द्वयो स्त्रीपुंसयो । अर्च्यते अर्चि । सान्त । 'अर्च पूजायाम्' । स्त्रीपुंनपुंसकेषु अर्चि शब्द । प्रायेण अर्चि शब्द स्त्रीत्येके । हन्यते अनया हेति । 'हन हिंसागत्यो' । हिनोति वर्धते वा । 'हि गतौ वृद्धौ च' । हेतिशब्द सूर्यवह्निदीप्ति पर्याये स्त्रीलिङ्ग । आयुधपर्याये द्वयो । शाखति वह्नौ शिखा । 'शाखृ व्याप्तौ' । अग्निज्वालानामानि ॥ ५७ ॥

(पा.) औौर्वस्तु वाडवो वडवानल । समुद्राग्निनामानि । अनुक्तम्—'सहरक्षा द्रुमाशन' । अरण्याग्निनामनी ॥ वह्नेर्द्वयो —स्त्रियाम् । [1]अग्निज्वालानामानि । स्त्रियामिति अर्चिरादिविशेषविधि । अर्चिष पश्य, हेती पश्य, शिखा पश्य ॥ ५७ ॥

[1] वह्नि° B₃

त्रिषु स्फुलिङ्गोऽग्निकणः संतापः सज्वरः समौ ॥ ५८ ॥
([1]उल्का स्यान्निर्गता ज्वाला भूतिर्भसितभस्मनी ।
क्षारो रक्षा च दावस्तु दवो वनहुताशनः ॥)

(वि.) त्रिष्विति—स्फुलतीति स्फुलिङ्ग[2] । 'स्फुल संचलने' । अग्ने कण अग्निकण । अग्निकणनाम । [3]संतापयतीति संताप । 'तप संतापे' । सज्वरतीति सज्वर । 'ज्वर रोगे' । अग्निदाहनामनी । निर्गता ज्वाला अस्य उल्का । अपगतज्वालाग्निनाम । भूति भसितभस्मनी क्षार रक्षा । एतानि भूतिनामानि । दाव दव वनहुताशन । दवाग्निनामानि ॥ ५८ ॥

[1] Found in A B₁ [2] स्फुकारेण लिङ्गतीति D₁ स्फुरतीति W₂ ) [3] सम्यक् तापयति B₅, C ०तापेति B₈

(पा.) त्रिषु स्फुलिङ्गोऽग्निकण । वह्निकणनामानि । आवन्तताप्रसिद्ध्यर्थं त्रिषु स्फुलिङ्गेति कश्चित् पठति । 'त्रयी' 'स्फुलिङ्गोऽपुंसो ना सद्गाङ्गभाथ सज्वर' इति वैजयन्त्यामपि (पृ ११, श्लो ३१) तथैव पठिता । संताप सज्वर समौ । दाहनामनी । अनुक्तम्—'रटि स्त्री रटितं वह्ने' । अग्निरटित रेटिरित्युच्यते । तद्ध्वनिनाम । 'धूम स्यान्नमतस्मरि' । धूमनाम । 'उल्का स्यान्निर्गता ज्वाला' । निर्गतज्वाला उल्का स्यात् ।

विच्छिन्नज्वालनाम। 'मूतिर्भसितभस्मनी। क्षारो रक्षा[3] च'। भस्मनामानि॥ 'दावस्तु दवो वनहुताशने।' वनवह्निनामनी ॥५८

[1] स्त्रिपु $B_1$, $B_1$　　[2] 'स्फुलिङ्गो' इत्येव मुद्रितपुस्तके दृश्यते　　[3] रूक्षा $B_3$

**धर्मराजः पितृपतिः समवर्ती परेतराट् ।**
**कृतान्तो यमुनाभ्राता शमनो यमराड् यमः ॥ ५९ ॥**
**कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः ।**

(नि.) धर्मराज इति—[1]धर्मस्य राजा धर्मराज.। पितृणा[2] पति पितृपति.। [3]समं वर्तितु शीलमस्येति समवर्ती। 'वृतु वर्तने'। परेतेषु[4] राजते परेतराट्। 'राजृ दीप्तौ'। कृत अन्तो[5] येन कृतान्त। यमुनाया[6] भ्राता यमुनाभ्राता। शमयतीति[7] शमन। 'शमु उपशमे'। यमेन[8] राजते यमराट्। यमयति नियतिं [9]यच्छतीति [10]यम। 'यम उपरमे'। [11]कलयतीति काल। 'कल किल क्षेपे'। दण्ड धरति धारयतीति दण्डधर[12]। श्राद्धस्य देव श्राद्धदेव। विवस्वतोऽपत्य वैवस्वत। अन्त करोतीति अन्तक। [13]एतानि यमनामानि॥ ५९॥

[1] यथापराधदण्डदानेन $D_1$　　[2] $D_1$ adds कव्यवाहनादीना　　[3] सम वर्तते A $B_1$, सम्यग् वर्तते U　　[4] $W_1$ adds प्रेतेषु, श्मशानेषु C, परता मृतास्तेषा राजा $D_1$　　[5] $D_1$ adds नाश　　[6] नद्या $D_1$　　[7] प्राणिन $D_1$　　[8] नियमादिना C, 'राजृ दीप्तौ' I　　[9] नियच्छति A, I　　[10] प्रजासयमनात् यम, मृत्युप्रज्वरप्रभृतयोऽस्य किंकरा, तेषु राजेति यमराट् $D_1$, यमुनया सह यमलत्वे जातत्वाद्वा यम $D_1$　　[11] कालयति $D_2$ I, $K_1$, $K_2$ $K_5$ U धर्माधर्माणा आयुषा च सख्यान करोतीति काल। 'कल शब्दसख्यानयो' $D_1$ वेलास्वरूप इत्यर्थ C　　[12] कालदण्डाख्यस्य धर $D_1$, 'धृ धारणे' I　　[13] 'डुकृञ् करणे' I, एतानि धर्मराजनामानि A, I

(पा.) धर्मराज—अन्तक। यमनामानि। 'शमित्रेय कालकण्ठो दण्डी महिषवाहन'। एतानि च॥ ५९॥

**राक्षसः कौणपः क्रव्यात् क्रव्यादोऽस्रप आशरः[1] ॥ ६० ॥**
**रात्रिंचरो रात्रिचरः कर्बुरो निकषात्मजः ।**
**यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी ॥ ६१ ॥**

(वि.) राक्षस इति—रक्ष एव राक्षसः। कुणपं [2]शवमत्तीति कौणपः। कोणं पातीति वा। क्रव्यं मांसमत्तीति क्रव्यात्। क्रव्यादश्च। 'अद भक्षणे'। अस्रं [3]रक्तं पिबतीति अस्रपः। 'पा पाने'। अश्रप इति पाठे भक्ष्यमांसं न श्रपयति न पचतीत्यश्रपः। 'श्रा पाके'। असुर एव आसुरः। असून् प्राणान् रातीति वा। 'रा आदाने'। आशृणातीति आशरो[4] वा। 'शॄ हिंसायाम्'। रात्रौ चरतीति रात्रिंचरः। रात्रिचरश्च। 'चर गतिभक्षणयोः'। [5]कर्बुरवर्णत्वात् कर्बुरः। कृणाति[6] हिनस्तीति वा कर्बुरः। 'कॄ हिंसायाम्'। निकषाया[7] आत्मजः निकषात्मजः। निकषानाम रक्षोमाता। यातूनि यातनाः तीव्रवेदना धीयन्त अस्मिन्निति यातुधानः[8]। यातुना धीयतेऽत्रेति वा। विरुद्धलक्षणेन पुण्यवान् जनः पुण्यजनः[9]। [10]निर्ऋतेरपत्यं नैर्ऋतः। याति रक्षांसि यातु[11]। यातुशब्दः उकारान्तः। 'या प्रापणे'। रक्ष्यतेऽस्मात् जगदिति रक्षः[12]। 'रक्ष पालने'। नैर्ऋतनामानि[13] ॥ ६०–१ ॥

[1] आसुरः इति पाठान्तरम्. [2] °तद्भक्षणात् कौणपः $D_1$, $W_1$. [3] रुधिरं $D_2$, I, $K_1$, U, $W_1$, Y. [4] अशितमेव आशम्, अस्मै तदर्थं राति गृह्णाति हिंसतीत्यर्थः। तस्मादाशरः, 'रा हिंसायाम्' C. [5] °दशनत्वात् Y. [6] कृणोति Y. [7] निकषति हिनस्तीति निकषा राक्षसमाता $D_1$. [8] यात्विति नाम धीयते अत्रेति वा $W_1$; यातून् यातनाः प्राणिषु धत्ते सृजतीति। 'डुधाञ्°' C. [9] विपरीतलक्षणया पापजन इत्यर्थः $D_1$. [10] दिक्पालस्य $D_1$, निर्ऋत्या दिशि वर्तमानो वा नैर्ऋतः $D_1$. [11] यातयति व्यथयति $D_1$. [12] रक्षत्यात्मानमिति रक्षः $D_1$, सकारान्तं नपुंसकम् $B_2$, $D_1$, I. [13] निर्ऋतिनामानि $D_2$, $K_1$, $K_2$, Y.

(पा.) राक्षसः—निकषात्मजः। कीकसात्मज इति पाठान्तरम्। यातुधान.—यातुरक्षसी। नैर्ऋतनामानि। अनुक्तम्—'पलंकषो रात्रिमटो राज्यटो जललोहितः'। एतानि च ॥ ६०–१ ॥

## प्रचेता वरुणः पाशी यादसांपतिरप्पतिः।

(वि.) प्रचेता इति—प्रकृष्टं [1]चेतोऽस्य प्रचेताः। वृणोति पाशैरिति [2]वरुणः। 'वृञ् वरणे'। पाशोऽस्यास्तीति [3]पाशी। [4]यादसां पतिः। अपां पतिः अप्पतिः। उभयत्र षष्ठ्या अलुग्विकल्पः। वरुणनामानि ॥

[1] हृदयम् C. [2] वृण्वन्ति वरादीनमुमिति $D_1$. [3] पाशयोगात् पाशी $D_1$. [4] जलचराणां C, जलग्राहाणां Y; जलजन्तूनां $D_1$.

(पा.) प्रचेता —अप्पति । वरुणनामानि । 'अम्बुकान्तारोऽम्बुभूषण स्यान्मकरवाहन ' । एतानि च ॥

**श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः ॥ ६२ ॥**

**पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः ।**

**समीरमारुतमरुज्जगत्प्राणसमीरणाः ॥ ६३ ॥**

**नभस्वद्वातपवनपवमानप्रभञ्जनाः ।**

**(प्रकम्पनो महावातो झञ्झावातः सवृष्टिकः ॥)**

(नि.) श्वसन इति—श्वसन्ति अनेन प्राणिन श्वसन । 'श्वस [1]प्राणने ' । स्पृशतीति स्पर्शन । 'स्पृश सस्पर्शने ' । वातीति वायु । 'वा गतिगन्धनयो ' । मातरि आकाशे श्वयति[2] मातरिश्वा[3] । 'टुओश्वि गतिवृद्ध्यो ' । सदा गति यस्य सदागति । [4]पृषदाख्यो मृगोऽश्वो यस्य पृषदश्व । पृषता बिन्दूनाम् अश्व इति वा । गन्धस्य वह गन्धवह । [5]गन्ध [6]वहतीति वा । 'वह प्रापणे ' । अनित्यनेन अनिल [7] । 'अन प्राणने ' । आशु गच्छतीत्याशुग [8] । समीरतीति[9] समीर । 'ईर गतौ ' । अनेन क्षुपितेन[10] म्रियते[11] इति मारुत [12] । मरुश्चैनम् । जगता प्राण जगत्प्राण [13] । सम्यग् ईरयति समीरण [14] । 'ईर प्रेरणे ' । नभोऽस्यास्तीति नभस्वान्[15] । वातीति वात । 'वा गतिगन्धनयो ' । पवत इति पवन । 'पूङ् पवने' । पुनीते वा । पवमानश्च । 'पूञ् पवने' । प्रभञ्जयति[16] शाखादिक प्रभञ्जन । भञ्जो आमर्दने ' । प्रकम्पनो महानल झञ्झामारुत सवृष्टिक [17] । एतानि [18]वायुनामानि ॥ ६२–३ ॥

[1] निश्वासे $B_2$ C $W_2$ [2] $D_1$ adds सचरत [3] नान्त $D_1$ [4] पृषत् मृगोऽश्वो वाहन यस्य C, पृषन्ति जलकणा अश्वा यस्य $D_1$ [5] ग धयत इति गन्धम् $D_1$ [6] वाहयति A, $K_2$ $W_2$ [7] न विद्यते निल निलय स्थान यस्य C [8] 'गम्ल गतौ $D_1$, $W_1$ [9] समीर्ते $B_1$ $W_1$ [10] कुपिते $K_2$ C $W_2$ [11] म्रियन्ते $D_2$ $K_1$ $K_3$ $D_1$ adds लाक [12] अनेन जीववर्गा मा रुदन्ति न म्रिय ते इति C $D_1$, I add 'मृङ् प्राणत्यागे [13] जगदिति प्राण इति पदच्छेदपक्षे गच्छतीति जगत्, प्राणन्ति अनेन प्राण $D_1$ [14] ईरितु ग तु शी घ्रम् अस्य $D_1$ [15] तत्स्वामित्वाद्वा $D_1$ [16] प्रमनक्ति U, $W_2$ $B_1$ C add मर्दयति [17] पृष्टयाकुलश्च $W_2$ Y [18] मारुत° $B_1$, $K_5$ $W_2$

(पा.) श्वसन —प्रभञ्जना । वायुनामानि । जगदिति तस्यैव नामान्तर स्यात् । 'जगत् स्याद् विष्टपे क्लीव वायौ ना जङ्गमे त्रिपु' इति रुद्र । प्राण इत्यपि नामान्तर स्यात । 'हृदि स्थितानिले जीवे बले प्राण प्रकीर्तित ' इति रुद्र ।

'महाबल सततग शरण्युर्मृगवाहन ।
ध्वजप्रहरणो धूलिध्वज पृश्न प्रकम्पन ॥'

एतानि च ॥ ६२-३ ॥

**प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ॥ ६४ ॥**
**[1]हृदि प्राणो गुदेऽपानः समानो नाभिमण्डले ।**
**उदानः कण्ठदेशे स्याद् व्यानः सर्वशरीरगः ॥ ६५ ॥**
**शरीरस्था इमे**

(नि.) प्राण इति—प्रकर्षेण [2]बहिरानयतीति प्राण । [3]अधो नयतीति अपान । सर्वत्र[4] आनयतीति समान । उद् ऊर्ध्वम् आनयतीति उदान । विनयतीति व्यान । 'णीञ् प्रापणे'। प्राणयति अपानयति समानयति उदानयति व्यानयतीति वा यथाक्रम वक्तव्य । [6]एते पञ्च क्रमेण हृद्गुदनाभिकण्ठसर्वदेहस्थवायुनामानि ॥ ६४–५ ॥

[1] Verse included in most MSS [2] बहिरायाति $W_2$ अनन्ति अनेन $D_1$, U adds 'णीञ् प्रापणे [3] अपानयति $B_2$ $K_3$ $W_2$ [4] मातीति $K_3$ समम् आनयति $B_2$ C [5] विविधेषु जीवात्मान प्रशामानयतीति C विशेषेण नयति $D_1$ [6] एतानि देहस्थितवायुनामानि $D_1$

(पा.) प्राणो—शरीरस्था इमे । प्राणादय पञ्च शरीरवायव । अनुक्तम्—'झञ्झावात सवृष्टि स्यात्'। वृष्टिसहितवायुनाम[1] ॥ 'वात्या [वातस्तु मण्डली'। मण्डलाकारवातनाम । आन्ध्रभाषाया 'सुडिगाली'। 'गोगन्धन पुरोवात'। पुरोवायुनाम । 'यदुरुगाली'। 'परुष स्यादिरिञ्जण'। चण्डवातनाम[2]। 'डिदुनवटि गालि[3]'। '[4]मूर्ध्नि वात किंचुलुक'। उपरिवातनाम । '[5]ईन्दिगालि किंचुलुक्मु'। 'मध्यम स्वेदचूपक'। [6]समवात स्वेदचूपक स्यात्। 'समगालि' ॥ ६४—५ ॥

[1] वात झझावात स्यात् $A_1$ [2] वात इरिञ्जण स्यात् $A_1$ [3] 'विसरोटि' $A_1$ [4] मृदुवात $A_1$ [5] हींदि $B_3$ [6] समवायुनाम $B_3$ $B_4$

**रंहस्तरसी तु रयः स्यदः ।**
**जवो ऽथ शीघ्रं त्वरित लघु क्षिप्रमर द्रुतम् ॥ ६६ ॥**
**सत्वरं चपल तूर्णमविलम्बितमाशु च ।**

(वि.) रंह इति—रंहति सततं रंह । 'रहि गतौ'। तरत्यनेन तर । 'तॄ प्लवनतरणयो '। उभौ [1]सान्तौ । रयते अनेनेति रय । 'रय गतौ'। स्यन्दते अनेनेति स्यद.[2] । 'स्यन्दू प्रस्रवणे'। जवते अनेन जव.। 'जुङ् गतौ'। एतानि [3]सर्वेगगति-नामानि ॥ शिङ्घति येन धर्मेण[4] शीघ्रम् । 'शिघि व्याप्तौ'। त्वरते अनेन त्वरितम्[5] । 'ञित्वरा सम्भ्रमे'। त्वरया सह वर्तत इति सत्वरम् । लङ्घयते अनेन लघु । 'लघि [6]गत्याक्षेपे'। क्षिपत्यनेन [7]क्षिप्रम् । 'क्षिप प्रेरणे'। [8]अरम् इत्यव्ययम् । [9]द्रवतीति द्रुतम् । 'द्रु गतौ'। चोपत्यनेनेति चपलम् । 'चुप मन्दाया गतौ'। तुरते इति तूर्णम्[10] । 'तुर त्वरणे'। न विलम्ब्यते ऽस्मात्[11] अविलम्बितम् । 'लबि [12]आलम्बने'। अश्नुते आशु । 'अशू व्याप्तौ'[13] ॥ ६६ ॥

[1] एतौ सकारान्तौ नपुंसकलिङ्गौ च D₁, रहश्च तरश्च रहस्तरसीति सान्तं पदद्वयम् C [2] 'स्यदो जवे' (६ ४ २८) इति साधु B₁, C [3] °गुणि° D₂ [4] धर्मिण तत् D₁, W₁ [5] त्वरया सह वर्तते U, त्वरयतीति A [6] गतौ K₅, C, K₆, Y add भोजननिवृत्तौ च [7] क्षिप्यते अनेन K₅, W₁, इति क्षिप, क्षिपमेव क्षिप्रम् C [8] ऋच्छति अनेन अरम्, 'ऋ गतौ' D₁ [9] U adds असात् [10] त्वरयति अनेन B₁, C [11] अस्मिन् C [12] अवस्रंसने B₁, C, U, W₂, अवि° K₂ [13] वेगमात्रनामानि B₂, D₂, शीघ्र° A

(पा.) रहस्तरसी—आशु च । आद्यन्तयो. क्रियावयवयो. सामीप्य-नामानि[1] ॥ ६६ ॥

[1] B₃ adds जव —वेगनामानि

**सततानारताश्रान्तसंततविरतानिशम् ॥ ६७ ॥**

**नित्यानवरताजस्रमप्यथातिशयो भरः ।**

(वि.) सततमिति—सतन्यते [1]सततम् । सतत च। न विरते आरत विरामो[2] ऽत्रेति अनारतम् अविरतम् अनवरत च । न श्राम्यन्त्यत्रेति अश्रान्तम् । 'श्रमु तपसि खेदे च'। नास्ति निशा[3] अत्रेति अनिशम् । नियत भव[4] नित्यम् । न [5]जस्यतीति अजस्रम् । 'जसु [6]उपक्षये'। [7]अविच्छिन्नत्तिनामानि ॥ अतिशेते जयत्यनेनेति अतिशय [8]। भरतीति भर । 'भृञ् [9]भरणे' ॥ ६७ ॥

[1] B₁ adds 'समो वा हिततयो' (वा ६ १ १४४), 'तनु विस्तारे' B₂ C [2] विरत K₃ अरत, रज्यते अनेन इति रतम् आसक्तिरित्यर्थ रत न भवतीत्यरत विराम इत्यर्थ C, आ समन्तात् अरतम् आरतम् । आ समन्ताद् विराम इत्यर्थ, विरामो ऽवसानम् C.

[3] B, $D_2$, I, T add विरति विच्छेदकालो° $D_1$ [4] भवतीति A C [5] $K_5$ $W_2$ add शिथिलीभवतीति न विच्छिद्यते $D_1$ [6] मोक्षणे A, C $K_2$ [7] निरन्तर-क्रियानामानि $D_1$ [8] शीङ् स्वप्ने C, $D_2$, I [9] 'मृ मर्दने' $D_1$

(पा.) सततानारत—अजस्रमपि। क्रियाया क्रियान्तरेणाव्यवधानस्य नामानि ॥ ६७ ॥

अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम् ॥ ६८ ॥
तीव्रैकान्तनितान्तानि गाढबाढदृढानि च।
क्लीबे शीघ्राद्यसत्त्वे स्यात् त्रिष्वेषां सत्त्वगामि यत् ॥६९॥

(वि.) अतिवेलमिति—[1]वेलामतिक्रान्तम् अतिवेलम्। बिभर्तीति भृशम्। 'भृञ् भरणे'। [2]अर्थमतिक्रान्तम् अत्यर्थम्। [3]मात्रामतिक्रान्तम् अतिमात्रम्। उद्गाहते प्रादुर्भवतीति उद्गाढम्। 'गाहू विलोडने'। निःशेष सर्वो भरो ऽत्रेति निर्भरम्[4]। तीव्यतीति तीव्रम्। 'तीव स्थौल्ये'। एकोऽन्तो निश्चितोऽत्र एकान्तम्। नितरा ताम्यतीति नितान्तम्। 'तमु ग्लानौ'। गाहते गाढम्। 'गाहू [6] विलोडने'। बाहते बाढम्। 'बाहृ प्रयत्ने'। दृहतीति दृढम्। 'दृहि वृद्धौ'। बृढेति वा पाठ, बृहतीति बृढम्। 'बृह वृद्धौ'। अतिशयनामानि॥ क्लीबे शीघ्राद्यसत्त्वे स्यात्। [7]शीघ्रादिदृढपर्यन्तशब्दा [8]असत्त्वे क्रियाविशेषणत्वे गुणवृत्तित्वेऽपि नपुसकलिङ्गा। क्रियाविशेषणत्वे यथा—शीघ्र [9]पचति, सतत गच्छति, क्षिप्र करोतीत्यादि। गुणवृत्तित्वे यथा—अश्वस्य शीघ्रम्। तूलस्य लघु इत्यादि। अत्रातिशयभरशब्दौ गुणवृत्तित्वे पुल्लिङ्गौ। यथा—गन्धस्यातिशय [10]। पुष्पाणा भर इत्यादि। क्रियाविशेषणत्वे तु शीघ्रादिवन्नपुसकलिङ्गावेव। यथा—अतिशय भुङ्क्ते। भर तिष्ठति इत्यादि। त्रिष्वेषा सत्त्वगामि यत्। एषा शीघ्रादिपदाना मध्ये यत् सत्त्वगामि विशेष्यगामि, तत् त्रिषु लिङ्गेषु भवति। यथा—शीघ्रोऽश्व [11]। क्षिप्रा जरा[12]। सतत सुखम्। लघुस्तुप इत्यादि॥ ६८ ९॥

[1] $D_1$ U add मर्यादा [2] $D_1$ adds विषय अतिक्रामति C [3] मात्र स्तोक $D_1$ $W_1$ मात्र कात्स्न्ये तदतिक्रामति C [4] निःशेषेण भरो यस्मिन् तत् $D_1$ U omits 6 lines [5] नियत C निश्चल $W_2$ C adds अवसान [6] प्रयत्न A C $K_1$ $K_5$ [7] शीघ्रादयो दृढान्ता A $D_2$ $K_1$ $W_1$ शीघ्रश-दादारभ्य दृढशब्दपर्यन्त ये शब्दा वर्तन्ते त क्रियाविशेषणानि वा गुणवाचका वा नपुसकलिङ्गा एव भवन्ति $D_1$ [8] अव्यये स्यु C द्रव्यत्वे गुणपरत्वेऽपि पुल्लिङ्गम् C [9] $K_1$ $K_3$ $K_5$ $W_1$ Y add शीघ्र भुङ्क्ते [10] Y omits 3 words [11] $W_2$ adds शीघ्रा वध्वा [12] स्त्रिय $W_1$

(पा.) अथातिशयो—दृढानि च । क्रियावयवसाकल्यनामानि । क्लीबे—सत्त्वगामि यत् । उक्तानामेषां रंह प्रभृतिशब्दानां मध्ये[1] भावकरणप्रत्ययान्तवर्जितो यः शब्दोऽस्ति स शब्दोऽसत्त्वेऽद्रव्ये वर्तमानो[2] नपुंसकलिङ्गो भवति । यथा—शीघ्रं गच्छति । [3]सततं शेते । अतिमात्रं भुङ्क्ते । सत्त्वगामिद्रव्ये वर्ती सन् त्रिलिङ्गो भवति । यथा—शीघ्रो बाण । [4]सततो राग । अतिमात्रो भार.। भावकरणप्रत्ययान्ताः शब्दा उक्तलिङ्गा । अश्वस्य जव । हयस्यातिशय इत्यादि ॥ ६८–९ ॥

[1] A₁ adds शीघ्रादिग्रहणेन. [2] वर्ती ■ A₁ [3] सतत A₁ [4] सततो B₃.

कुबेरस्त्र्यम्बकसखो यक्षराड् गुह्यकेश्वरः ।
मनुष्यधर्मा धनदो राजराजो धनाधिपः ॥ ७० ॥
किंनरेशो वैश्रवणः पौलस्त्यो नरवाहनः ।
यक्षैकपिङ्गैलविलश्रीदपुण्यजनेश्वराः ॥ ७१ ॥

(वि.) कुबेर इति—कुत्सित[1] बेरं शरीरमस्येति कुबेर । त्र्यम्बकस्य[2] सखा त्र्यम्बकसख । यक्षेषु राजत इति यक्षराट् । 'राजृ दीप्तौ' । गुह्यकानाम् ईश्वर[3] गुह्यकेश्वर । मनुष्यस्येव [4]धर्मोऽस्येति मनुष्यधर्मा । नान्त । धनं दयते[5] धनदः । 'देङ् रक्षणे' । धन ददातीति वा धनद । 'डुदाञ् दाने' । [6]राज्ञा यक्षाणां राजा राजराज । धनानाम्[7] अधिप धनाधिप । किंनराणाम् ईश किंनरेश । [8]विश्रवसोऽपत्य वैश्रवण । पुलस्तेरपत्यं पौलस्त्य । पुलस्त्यस्यापत्य वा । नरो वाहनमस्य नरवाहन । यक्षजाति-[9]राजत्वाद् [10]यक्ष । एकं नेत्र [11]पिङ्गमस्य एकपिङ्ग । इलविलाया[12] अपत्यम् ऐलविल । इडविडा मातास्येति ऐडविडो वा । [13]लडयोरेकत्वस्मरणात् । श्रिय ददातीति श्रीद । 'डुदाञ् दाने' । [14]पुण्यजनानाम् ईश्वर पुण्यजनेश्वर. । एतानि कुबेरनामानि ॥ ७०-१ ॥

[1] तस्य देवादिशरीरापेक्षया कुत्सितत्वादिति भाव, कुत्सित बेरं यस्मात् अन्यस्य स, अतिसुन्दरशरीरत्वानित्यर्थ C [2] शिवस्य D₁ [3] ईश A, T [4] श्मश्रुलत्वादि W₁, आचार D₁ [5] रक्षति B₂, C, धनेन नन्दयति A, K₂, T [6] राजन इति राजान यक्षा B₂, C [7] धनस्य K₃, W₂ [8] विशेषेण शृणोतीति विश्रवा D₁ [9] K₅, W₂, Y omit राज [10] यक्ष्यते पूज्यते इति, 'यक्ष पूजायाम्' D₁. [11] पिङ्गलवर्णं A, D₂, K₁, K₂, U, W₂ [12] शिवपरिचर्याकारिणी A [13] डल (लड I) योरभेद C [14] रक्षसा यक्षाणा वा D₁

(पा.) कुवेर—वैश्रवण। विश्रव शब्दात् 'तस्येदम्' (४ ३ १२०) इत्यणि कृते विश्रवसो विश्रवणरवणाविति प्राप्ते विश्रवणादेशे[1] वृद्धौ वैश्रवण इति रूप सिद्धम्। पौलस्त्यो—पुण्यजनेश्वरा। कुवेरनामानि। अनुक्तम्—

'कैलासनाथो हर्यक्षो रत्नगर्भ सितोदर।
इच्छावसुर्निधिपतिस्तथा स्यादेकुण्डल॥'

एतानि च॥ ७०–१॥

[1] णित्वात् वृद्धौ सत्या A.

**अस्योद्यानं चैत्ररथं पुत्रस्तु नलकूबरः।**
**कैलासः स्थानमलका पूर्विमानं तु पुष्पकम्॥ ७२॥**

(नि.) अस्येति—चित्ररथेन [1]गन्धर्वेण निर्मित [2]चैत्ररथम्। [3]कुवेरोद्याननाम॥ नल इव कूवर चारु नलकूवर। [4]नलस्येव [5]कूवरो रथावयवोऽस्येति वा। कुवेरपुत्रनाम॥ के शिरसि शिवयो लासो नृत्य, तदस्यास्तीति कैलास। केलीना समूह कैल, तेन आस्यते स्थीयत इति कैलास[6]। 'आस उपवेशने'। केलयो जलभूम्यो आसन स्थितिर्यस्य केलस स्फटिकम्। तस्याय कैलास[7]। कुवेरस्थाननाम॥ अलति स्वस्थान भूपयतीति अलका। 'अल भूषणपर्याप्तिवारणेषु'[8]। कुवेरनगरीनाम॥ पुष्पमिव[9] पुष्पकम्[10]। कुवेरविमाननाम[11]॥ ७२॥

[1] °नामगन्धर्वै° U  [2] A, $K_2$ add वन  [3] °वन° $D_1$  [4] C adds महाराजस्य  [5] C adds युगधर नले कमले कूयते कीर्त्यते नलकू लक्ष्मी तया मीयते अभिलक्ष्यते नलकूबर, 'मीङ् वरणे', वबयोरभेद $D_1$  [6] के शिरसि इलाया लासोऽस्यन्त मस्यास्तीति 'सरूपाणामेकशेष एकविभक्तौ' $W_2$  [7] $W_1$ omits 2 lines  [8] °शक्तिवारणवाचकम्। 'अल भूपणे वा' $W_2$ १, इति वा धातु U  [9] एव, स्वार्थे कप्रत्यय, पुष्पसदृशमित्यर्थ C  [10] पुष्प्यति श्रियमिति U  [11] °पुष्पक° A, $B_1$, $K_2$ T

(पा.) अस्योद्यान चैत्ररथम्। [1]कुवेरोद्यानवननाम॥ पुत्रस्तु नलकूवर। तत्पुत्रनाम॥ कैलास स्थानम्। कुवेरस्थाननाम॥ 'अष्टापदो हराद्रि स्यात् कैलासो रजताचल' इत्ययमपि[2]। अलका पू। तन्नगरनाम॥ विमान तु पुष्पकम्। तद्विमान तु पुष्पक स्यात्॥ ७२॥

[1] उद्यान चैत्ररथ स्यात् $A_1$  [2] $A_1$ adds तत्प्रपञ्च एव

**स्यात् किंनरः किंपुरुषस्तुरगवदनो मयुः ।**
**निधिर्ना शेवधिर्भेदाः पद्मशङ्खादयो निधेः ॥ ७३ ॥**
**महापद्मश्च पद्मश्च शङ्खो मकरकच्छपौ ।**
**मुकुन्दकुन्दनीलाश्च चर्चाश्च निधयो नव ॥ ७४ ॥**

इति श्रीमदमरसिंहकृते नामलिङ्गानुशासने स्वर्गवर्गः

(वि.) स्यादिति—किंचिन्नर किंनर । किंचित् पुरुष किंपुरुष । कुत्सितो नरो वा । तुरगस्येव [1]वदनमस्य तुरगवदन । मयते विनिमयते[2] मयु । 'मय गतौ' । एतानि किंनरनामानि ॥ निधीयते[3] अत्रेति निधि । 'डुधाञ् धारणपोषणयो' । शेव स्थाप्य धन [4]धीयतेऽत्र शेवधि[5] । निधिनाम ॥ महांश्चासौ पद्मश्च महापद्म । पद्यते पद्म । 'पद्लृ सेवायाम्' । शमयति दु ख शङ्ख । 'शमु उपशमे[6]' । मकरवद् ग्रहीतुमशक्यत्वात् मकर । कूर्मवत् स्थितत्वात् कच्छप । कमनीयत्वात् [7]मुकुन्द । कुन्दश्च । नितराम् ईड्यते[8] नील । 'ईड स्तुतौ' । चर्च्यन्ते चर्चा । 'चर्च अध्ययने' । एतानि निधिभेद-नामानि[9] ॥ ७३-४ ॥

इति श्रीलिङ्गयसूरिविरचितायाममरकोशपदविवृतौ स्वर्गवर्गनामलिङ्गविवेचनम्

[1] वदनमिव वदन $B_2$ C　[2] नियमयति $k_3$　[3] नितरा धीयते पुष्यत इति ना पुलिङ्ग इत्यर्थं, एतत् काकाक्षिन्यायेन $D_1$　[4] तद्विधीयते $D_2$　[5] सेवधिरिति सकारादिरप्यस्ति $D_1$　[6] उपरमे $B_2$ $D_2$ $k_2$ $W_1$ उपशमने A　[7] अत्र वर्णव्यतिहार C　[8] पूज्यते C इत्ययोरभेद C　[9] नवनिधि° $D_2$ $k_1$ $k_2$ $k_3$ I

(पा.) स्यात् किंनर —मयु । किंनरनामानि । 'किमनेन गृहीतेन वागृहीतेन वा किंनरयुगलेन प्रयोजनम्' (काद पृ २२७) 'इदमुपश्रुतमश्वमुखद्वयम्' (पृ २२७) इति कादम्बर्यामभेद कथित ।

'विम्बोष्ठ बहु मनुते तुरगवक्त्रश्चुम्बत मुखमिह किंनर प्रियाया ।
श्लिष्यन्त मुहुरितरोऽपि त निजस्त्रीमुत्तुङ्गस्तनभरभङ्गभीरमध्याम् ॥'

इति माघकाव्ये (४ ३८) भेद कथित । अनुक्तम्—'गुह्यक स्यामणिचर' । गुह्यकनाम ॥ 'यक्ष पुण्यजन समौ' । यक्षनाम ॥ निधिर्ना शेवधि । निधिनामानि ॥ 'निधानगर्भामिव सागराम्बराम्' इति रघुवंशे (३ ९) ल्युडन्तनिधानशब्दोऽप्यस्ति । 'मानसेवधिमानसे' इति सेव्यप्रकृतिकसेवधिशब्दोऽप्यस्ति । भेदा—निधे । निधिभेदा ।

'पद्मोऽस्त्रिया महापद्म. शङ्खो मकरकच्छपौ ।
मुकुन्दकुन्दनीलाश्च [1]खर्वश्च निधयो नव ॥'

इति [2]तल्लिङ्गे तत्सख्यायां च [3]हारावलि ॥ ७३–४ ॥

इति [4]श्रीवत्सनृसिंहसूरिसुतमल्लिनाथसूरिविरचितेऽमरपदपारिजाते स्वर्गवर्ग

[1] वरश्च $A_1$ [2] $B_3$ adds तन्नामसु [3] हारावली $B_3$, $B_1$ [4] °नरसिंह° $A_1$

---

## २. व्योमवर्गः

**द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम् ।**
**नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम् ॥ १ ॥**
**वियद् विष्णुपदं वा तु पुंस्याकाशविहायसी ।**

इति व्योमवर्गः

(वि.) द्योदिवाविति—दीव्यतीति द्यौ । दिवि[1] च । द्वे स्त्रियाम् । न [2]भ्राजते अभ्रम् । 'भ्राजृ दीप्तौ'। विशेषेण अवति अवकाशदानेन व्योम[3] । 'अव रक्षणे'। पुष्णातीति पुष्करम् । 'पुष पुष्टौ'। पुष्कमुदकं रातीति वा पुष्करम् । 'रा दाने'। अम्बते शब्दायते इत्यम्बरम् । 'अवि शब्दे'। मेघैर्न भातीति नभ । 'भा दीप्तौ'। अन्त ऋक्षाणि यत्र अन्तरिक्षम् । द्यावापृथिव्योरन्तरीक्ष्यत[4] इति वा । 'ईक्ष दर्शने'। गच्छन्त्यत्र खगा इति गगनम्[5] । 'गम्लृ गतौ'। न विद्यतेऽन्तो यस्य तदनन्तम् । सुराणा वर्त्म मार्ग सुरवर्त्म । खन्यते खम्[6] । 'खनु अवदारणे'। वियच्छति न विरमतीति वियत्[7] । 'यम उपरमे'। विष्णो पद विष्णुपदम् । आ समन्तात् काशन्ते सूर्यादयोऽत्र आकाशम् । न काशते वा । 'काशृ दीप्तौ'। विजहाति सर्वं विहाय । विहायाश्च । 'ओहाक् त्यागे'। 'ओहाङ् गतौ'[8] ॥ १ ॥

[1] द्यौश्च $K_1$, द्यौश्च द्यौश्च द्योदिवौ, द्वन्द्वसमास, ओकारान्तवकारान्तस्त्रीलिङ्गौ $B_2$ C, इमावोकारान्तवकारान्तौ I, दिवु क्रीडेत्यादि धातु $W_1$ [2] अमूर्तत्वात् $D_1$ [3] विशेषेण एन विष्णुना उ ऊर्ध्वं मीयते आक्रम्यत इति व्योम, 'माङ् माने' C [4] °ईक्षण यस्यति A, I, $W_1$ [5] आद्यन्ताक्षरग्रहणाद् एव गगमिति भवति । गच्छन्त खगा अस्मिन् नीयन्त इति गगनम् । 'गम्लृ गतौ' 'णीञ् प्रापणे' $B_2$, C [6] खन्यते शून नीरूपत्वात् $D_1$

[7] विशब्द पक्षिवचन तेऽस्मिन् यान्तीति वा, 'या प्रापणे' C [8] इत्याकाशनामानि $D_2$, I, $K_1$, $W_2$, U, Y add—

विहायसोऽपि नाकोऽपि द्युरपि स्यात्तदव्ययम् ।
तारापथोऽन्तरिक्ष[9] च मेघाध्वा च महाबिलम् ॥

[9] शब्दगुण Y

इति व्योमवर्ग

(पा.) द्योदिवौ—सुरवर्त्म खम् । अन्तरिक्षमित्यत्र विशेष । अमरवार्त्तिककारेण वर्णनिर्देशनाया दीर्घकारान्तरिक्षशब्द इति प्रत्यपादि । अन्तरीक्ष्यते जगदनेनेत्यन्तरीक्षम् । द्यावापृथिव्योरन्तरीक्ष्यत इति वा । वेदे तु ह्रस्वेकारो दृश्यते । तत्रापि छान्दसमेव ह्रस्वत्वमिति । वियद् विष्णुपद—विहायसी । वैजयन्त्यामदन्तविहायसशब्द कथित । 'वायुवर्त्म विहायसम्' इति (पृ १७, श्लो १) । आकाशनामानि ॥

' विहायसोऽपि नाकोऽपि द्युरपि स्यात तदव्ययम् ।
तारापथोऽन्तरीक्ष च मेघद्वार महाबिलम् ॥'

एतानि च ॥ १ ॥

इति व्योमवर्ग

---

## ३. दिग्वर्गः

**दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः ।**
**प्राच्यवाचीप्रतीच्यस्ताः पूर्वदक्षिणपश्चिमाः ॥ १ ॥**
**उत्तरा दिगुदीची स्याद् दिश्यं तु त्रिषु दिग्भवे ।**

(वि.) दिश इति—प्राचीय दक्षिणेयमिति दिश्यते [1]दिक् । दिशत्यवकाशमिति वा । 'दिश अतिसर्जने' । कमुदक [2]स्कुभ्नातीति ककुप् । 'स्कुभु विस्तारे' । क वायु स्कुभ्नातीति वा । काशते काष्ठा । 'काशृ दीप्तौ' । अश्नुते आशा । 'अशू व्याप्तौ सघाते च' । हरन्त्यनया अप्रतीतमिति हरित् । 'हृञ् हरणे' । दिङ्नामानि ॥ प्रागञ्चति सूर्य प्राची । अवागञ्चति दक्षिणायनेन सूर्य इति अवाची । अपाचीति वा पाठ । प्रति पश्चादञ्चति सूर्य अस्तमय इति प्रतीची । [3]उत्तरमञ्चति सूर्य उत्तरायणेनेति उदीची ।

[4]'अञ्चु गतिपूजनयोः'। एतानि यथाक्रमं पूर्वदक्षिणपश्चिमोत्तरनामानि। इतरदिग्भ्यश्च आद्या[5] पूर्वा। दक्षते वर्धते इति दक्षिणा। 'दक्ष वृद्धौ शीघ्रार्थे च'। पश्चाद् भवा पश्चिमा। [6]उत्तरति मेर्वादिभूभृत इत्युत्तरा। 'तॄ प्लवनतरणयोः'॥ दिशि भवं[7] दिश्यम्। एतद् दिग्भवस्य इन्द्रायुधादेर्नाम ॥ १ ॥

[1] शकारान्तस्त्रीलिङ्गः Y. [2] $B_2$, C add विस्तारयति. [3] उत्तरत्र $B_2$; उदञ्चति $K_5$. [4] C adds सर्वत्र. [5] भवतीति $K_5$, भवन्ती $B_1$, C. [6] उत्तरति मेर्वादिभूभ्यः (भूः U) $B_1$, C, $W_2$, Y; भूभृद्भ्यः $K_5$. [7] अवाग्भवम् अवाचीनम्, उदीच्या दिशि उत्पन्नम् उदीचीनम्, प्रतीच्या दिशि उत्पन्न प्रतीचीनं, प्राच्यां दिशि उत्पन्नं प्राग्भव, एतानि वाच्यलिङ्गानि C, Y; $B_1$, C, Y add:

अवाग्भवमवाचीनमुदीचीनमुदग्भवम्।
प्रत्यग्भवं प्रतीचीन प्राचीनं प्राग्भव त्रिषु ॥

(पा.) दिशस्तु—त्रिषु दिग्भवे। स्त्री इति लिङ्गानुशासनम्। दिशां नामानि। 'दिग्दिशाशा ककुब्दीर्णा' इति वैजयन्ती (पृ. १७, श्लो. २)। हलन्तत्वाद्वैकल्पिकष्टाप्। प्राच्यवाची—पश्चिमाः। एतानि पूर्वदक्षिणपश्चिमदिशामेव नामानि। [1]प्राचीत्युक्ते पूर्वैव। अवाचीत्युक्ते दक्षिणैव। केचिदमुमेव [2]पवर्गमध्यमं पठन्ति। प्रतीचीति पश्चिमैव। उत्तरा—स्यात्। उदीचीति उत्तरैव। दिश्यं—दिग्भवे। दिग्भवार्थे दिश्यम्। [3]भवार्थे यत्प्रत्यय. ॥ १ ॥

[1] पूर्वेत्युक्ते प्राच्येव $A_1$. [2] अन्तःस्थमध्यमं $B_3$. [3] 'दिगादिभ्यो यत्' $B_1$.

**इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत् ॥ २ ॥**
**कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात्।**

(वि.) इन्द्र इति—[1]इन्द्रः, वह्निः, पितृपतिः, नैर्ऋतः, वरुणः, मरुत्, कुबेरः, ईश इति क्रमात् पूर्वादीनां दिशां पतयः ॥ २ ॥

[1] Y adds इन्दतीति इन्द्रः, हव्यं वहतीति वह्निः, पितॄणा पति पितृपतिः, निर्ऋतेः अपत्यं नैर्ऋतः, वृणोतीति पाशैः वरुणः, अनेन कुपितेन म्रियते मरुत्, कुत्सितं बेर शरीरं यस्य कुबेरः, ईष्टे ईशः इति पूर्वादीना दिशा क्रमात् पतिनामानि।

(पा.) इन्द्रो वह्निः—दिशां क्रमात्। इन्द्रादयः [1]पूर्वादीनां दिशां विदिशां च क्रमात् पतयः ॥ २ ॥

[1] पूर्वाद्यष्टदिक्पतयः $B_3$

**ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ॥ ३ ॥**
**पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः ।**

(नि.) <u>ऐरावत इति</u>—[1]इरा आप अस्मिन् सन्तीति इरावान् समुद्र , तस्मिन् जात ऐरावत । पुण्डरीकवर्णत्वात् पुण्डरीक । पुणति शोभत इति वा । 'पुण कर्मणि शुभे'। वायुमात्मानं मन्यते [2]वामन । 'मन ज्ञाने'। वाम वल्गु शरीरमस्यास्तीति वा । वामनत्वाद्वा । कुमुदवर्णत्वात् कुमुद । कु [3]पृथिवीं मोदयतीति वा । 'मुद हर्षे'। अञ्जनाभत्वात्[4] अञ्जन । अनक्ति गच्छतीति वा । 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु'। [5]पुष्यतीति पुष्पम् । 'पुष्प विकसने'। पुष्पवद् दन्तोऽस्यास्तीति पुष्पदन्त । सर्वभूम्या विदित सार्वभौम । शोभना प्रतीका अवयवा यस्य स सुप्रतीक । एतानि यथाक्रममष्टदिग्गजनामानि[6] ॥ ३ ॥

[1] इरायति समुद्र जात° $B_1$, $K_2$ $K_5$, U, $W_1$, Y [2] वाक्वात्मना समन्यत इति $B_1$, C [3] पृथ्वीं $K_1$, $K_2$ [4] °वर्णत्वात् $B_2$, C [5] C adds विकसतीति [6] °गजाना $D_2$

(पा.) <u>ऐरावत —दिग्गजा</u> । [1]ऐरावतादय पूर्वादिक्रमेण दिग्गजा ॥ ३ ॥

[1] दिग्गजनामानि $B_3$, $B_4$

**करिण्योऽभ्रमुकपिलापिङ्गलानुपमाः क्रमात् ॥ ४ ॥**
**[1]ताम्रपर्णी शुभ्रदन्ती चाङ्गना चाञ्जनावती ।**

(नि.) <u>करिण्य इति</u>—अभ्रेषु माति वर्तते अभ्रमु । 'मा माने'[3] । न भ्राम्यति [4]स्ववल्लभ हित्वा कचित् न भ्रमतीति अभ्रमु । 'भ्रमु [5]अनवस्थाने'। काम्यत[6] इति कपिला । 'कमु कान्तौ'। कपिलवर्णत्वाद्वा । पिङ्गलवर्णोऽस्या अस्तीति पिङ्गला । न विद्यते उपमा यस्या सा अनुपमा । [7]ताम्रपर्णाख्यौषधिसाहचर्यात् ताम्रपर्णी । [8]शोभनौ दन्तौ यस्या सा शुभ्रदन्ती । शोभनान्यङ्गानि यस्या सा अङ्गना । [9]अञ्जनाकारो वर्णो यस्या सा अञ्जनावती । एतानि[10] दिग्गजभार्यानामानि[11] ॥ ४ ॥

[1] ताम्रकर्णीति वा पाठ [2] अभ्र स्वर्गे माति च वर्तते च C [3] $K_2$ U, Y add वर्तते च [4] स्वावलम्ब $W_1$ [5] चलने $D_1$, $K_1$, $K_2$, $W_1$, Y [6] कम्यते Y [7] °वर्ण° U [8] शोभना दन्ता A, $B_1$, T, सुदन्ती $D_1$, $K_1$, $W_1$ [9] अञ्जनमिव C, Y [10] I, U, $W_1$, Y add ऐरावतादि° [11] °पत्नी° $B_1$, $K_5$, Y

(पा.) [1]करिण्यो—चाञ्जनावती। क्रमादैरावतादिदिग्गजाङ्गनानामानि ॥ ४ ॥

[1] ताम्रकर्णीति पाठान्तरम् $A_1$.

**क्लीबाव्ययं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियाम् ॥ ५ ॥**
**अभ्यन्तरं त्वन्तरालं चक्रवालं तु मण्डलम् ।**

(वि.) क्लीबेति—दिशोरिदम्[1] अपदिशम्। विशिष्टा दिक् विदिक्। विदिङ्मध्यनामानि ॥ अन्तरमवकाशम् अभिगतम् अभ्यन्तरम्। अभ्यन्तर्यन्ते बध्यन्ते अश्वादयः अत्रेति अभ्यन्तरम्। अन्तरम् आलाति अन्तरालम्। 'ला आदाने'। अष्टदिगादेरभ्यन्तरनामानि ॥ चक्राकारेण [2]वालते वर्तते चक्रवालम्। 'वाडृ आप्लाव्ये'। डलयोरेकत्वस्मरणात्। मण्डयति भूषयतीति मण्डलम्। 'मडि भूषायां हर्षे च'। दिङ्मण्डलनाम ॥ ५ ॥

[1] अन्तर $B_2$, C. [2] वलते $K_3$, $W_1$, Y.

(पा.) क्लीबाव्ययं—विदिक् स्त्रियाम्। दिग्वलयमध्यनामानि। आग्नेय्यादिक्रमेण विदिशां [1]नामान्यपि सन्ति।

'आग्नेयी तु चराशा[2] स्यात् नैर्ऋती तु दिगन्धकी[3]।
मारुत्यनन्ता शार्वी तु शालाक्षाप्यपराजिता ॥'

इति वैजयन्ती (पृ १७, श्लो. ४–५)। अभ्यन्तरं त्वन्तरालम्। सकलदिङ्मध्यनाम। चक्रवालं तु मण्डलम्। दिक्समूहनाम। अनुक्तम्—'दिग्युग्मं मण्डपीठिः स्यात्'। दिग्युग्मं[4] मण्डपीठिरित्युच्यते। 'दिगन्तः [5]करिशालुकम्'। दिगन्तः करिशालुकमित्युच्यते ॥ ५ ॥

[1] ईशादिनामानि $A_1$. [2] ईशान्या $A_1$; चतुराशा $B_3$ [3] दिगान्धकी $A_1$, $B_1$. [4] दिग्युग्मनाम $B_3$ [5] करिलोलुकम् $B_3$

**अभ्रं मेघो वारिवाहः स्तनयित्नुर्बलाहकः ॥ ६ ॥**
**धाराधरो जलधरस्तडित्वान् वारिदोऽम्बुभृत् ।**
**घनजीमूतमुदिरजलमुग्धूमयोनयः ॥ ७ ॥**

(वि.) अभ्रमिति—अभ्रति गच्छतीत्यभ्रम्। 'अभ्र गतौ'। अपो रातीत्यभ्रम्। 'रा दाने'। न भ्रश्यन्त्यापोऽस्मादिति वा। 'भ्रशु [1]अवस्रंसने'। मेहतीति मेघः। 'मिह सेचने'। वारि वहतीति वारिवाहः। 'वह प्रापणे'। स्तनयतीति स्तनयित्नुः। 'स्तन [2]देवशब्दे'। वलं न जहातीति वलाहम् उदकम्, तदस्यास्तीति [3]वलाहकः। धाराणां धरो धाराधरः। जलस्य[4] धरो जलधरः। तटितोऽत्र सन्तीति तटित्वान्। वारि ददातीति वारिदः। 'डुदाञ् दाने'। अम्बु बिभर्तीति अम्बुभृत्। 'डुभृञ्[5] धारणपोषणयोः'। वायुना हन्यत इति घनः। 'हन हिंसागत्योः'। जीवनम् उदकं मूयतेऽत्र जीमूतः। 'मूङ् बन्धने'। मोदन्ते येन कृपीवला [6]मुदिरः। 'मुद हर्षे'। जलं मुञ्चतीति जलमुक्। 'मुच्लृ मोक्षणे'। धूमो योनिर्यस्य सः धूमयोनिः। एतानि मेघनामानि॥ ६–७॥

[1] अध पतने $W_2$　　[2] °ध्वन° $B_2$ U, $W_1$　　[3] जहातीति हः, हः न भवतीत्यहः, वलस्याहः वलाहः वलस्यर्धनमित्यर्थः। वलाहं कम् उदकं यस्य सः वलाहकः $B_2$ C　　[4] जलं धरतीति C　　[5] 'भृञ् भरणे' $K_2$ $K_3$, Y　　[6] कृषीवलान् मोदयतीति मुदिरः C

(पा.) अभ्र—धूमयोनयः। मेघनामानि। 'नभ्राट् तटित्पतिर्देवो [1]नदनुर्जल-पोट्टण[2]'। एतानि च॥ ६–७॥

[1] नदन्नु $A_1$　　[2] °पोट्टल इति पाठश्चेत् साधीयान्

**कादम्बिनी मेघमाला त्रिषु मेघभवेऽभ्रियम्।**
**स्तनितं गर्जितं मेघनिर्घोषो रसितादि च॥ ८॥**

(वि.) कादम्बिनीति—कमुदकम् आददत इति कादम्बा[1] मेघाः, तेऽस्याः सन्तीति कादम्बिनी। कादम्बाः[2] कलहंसा अस्यां सन्तीति वा। कदम्बाः[3] पुष्प्यन्त्यत्रेति वा। मेघमालानाम॥ अभ्रे भवम् अभ्रियम्। मेघभवस्योदकादेर्नाम॥ [4]स्तनयतीति स्तनितम्। 'स्तन गदी देवशब्दे[5]'। गर्जतीति गर्जितम्। 'गर्ज शब्दे'। रसति [6]शब्दायते रसितम्। 'रस शब्दे'। मेघनिर्घोषनामानि॥ ८॥

[1] कम् आदत्त इति कादः, जलस्वीकरणमित्यर्थः, तदहन्तीति कादम्बाः, वयोरभेदः $B_1$, C
[2] मेघाः, नयतीति नः गमनमित्यर्थः, कादम्बनमस्या अस्तीति कादम्बिनी, 'णीञ् प्रापणे' C
[3] वृक्षविशेषाः C　　[4] स्तनति A, $B_1$, $K_1$, $W_1$　　[5] °ध्वन° C, I, $K_2$, $W_1$, Y
[6] शब्दयति A

(पा.) कादम्बिनी मेघमाला। मेघमालानाम। अनुक्तम्—'ऐरावतो राजमेघः' राजमेघनाम॥ 'मोयिलुयेयिलघिमैयलु'। अभ्रे[1] भवार्थे अभ्रियं स्यात्[2]। स्तनितं—

रसितादि च। मेघनिर्घोषनामानि। रसितादि चेति चशब्दो व्यभिचारप्रदर्शनार्थः। खरस्य रसितं, पावकस्य ह्रसितम् इत्यादि ॥ ८ ॥

[1] A$_1$ adds घने. [2] B$_4$ adds 'समुद्राभ्राद्धः'

**शम्पा शतह्रदाह्रादिन्यैरावत्यः क्षणप्रभा।**
**तडित् सौदामिनीविद्युच्चञ्चलाचपला अपि ॥ ९ ॥**

(वि.) शम्पेति—कृषीवलानां दुःखं शमयतीति शम्पा। 'शमु [1]उपशमने'। कर्षकाणां शं सुखं [2]पातीति वा। 'पा रक्षणे'। सम्पेति वा [3]पाठः। समन्तात् पातीति सम्पा। सम्यक् पिबति चाक्षुषं तेज इति वा। 'पा पाने'। शतं ह्रादते शतह्रदा[4]। 'ह्राद अव्यक्ते शब्दे'। [5]शतं ह्रदा विद्यन्ते अस्यामिति वा। वडवाज्योतिष्मत्या ह्रादत इति ह्रादिनी। ह्रादुनीति वा पाठः। [6]इरावति मेघे भवा ऐरावती। ऐरावतोऽभ्रनागः, तस्य[7] स्त्री वा। क्षणं प्रभा यस्याः सा क्षणप्रभा। प्रभया नयनानि ताडयतीति तडित्। 'तड आघाते'। [8]सुदाम्राद्रिणा सह वर्तत इति [9]सौदामिनी। सुदाम्ना अद्रिणा दीव्यतीति सौदामिनी। 'तेनैकदिक्' इति (४. ३. ११२) सादृश्यं व्यज्यते। सुदामवत् दीर्घाकारोऽस्या अस्तीति वा। सौदामनीति वा पाठः। विद्योतत इति विद्युत्। 'द्युत दीप्तौ'। चञ्चतीति चञ्चला। 'चञ्चु गतौ'। चोपतीति चपला। 'चुप मन्दायां गतौ'। चम्पयतीति वा चपला। 'चपि गतौ'। एतानि विद्युन्नामानि ॥ ९ ॥

[1] उपरमे K$_1$; °शमे U. [2] B$_1$, C, K$_1$, U add रक्षति. [3] पाठे I. [4] शतह्रदः समुद्रः विद्यतेऽस्यामिति वा I, K$_1$, K$_2$. [5] अपरिमितं C. [6] इरा आपः तद्वन्तः इरावन्तः मेघा इत्यर्थः, तेषु भवतीति B$_1$, C, D$_2$, K$_3$. [7] स तस्यामास्त इति B$_2$, D$_2$, K$_5$. [8] A, T, W$_1$ add °आख्येन. [9] सौधामिनीति वा पाठः, सुधामवत् कैलासवत् दीर्घाकारोऽस्य B$_2$, C; एतेन शैलसादृश्यं व्यज्यते B$_2$.

(पा.) शम्पा—सौदामिनी। 'सौदाम्नी स्यशनिर्विद्युत्' इति त्रिकाण्डशेषः (श्लो. ५, श्लो. ८७)। विद्युच्चञ्चलाचपला अपि। विद्युन्नामानि। 'आकालिकी स्याज्जलदा क्षणिकाप्यचिरद्युतिः'। एतानि च ॥ ९ ॥

**स्फूर्जथुर्वज्रनिर्घोषो मेघज्योतिरिरंमदः।**
**इन्द्रायुधं शक्रधनुस्तदेव ऋजु रोहितम् ॥ १० ॥**

(वि.) स्फूर्जथुरिति—स्फूर्जतीति स्फूर्जथु । 'टुओस्फूर्जे वज्रनिर्घोषे'। वज्रस्य [1]निर्घोषो वज्रनिर्घोष । वज्रनिर्घात इति वा पाठ । वज्रनिष्पेष इति च[2]। प्रहरद्विद्यु-च्छ दनामानि ॥ इरया अम्भसा माद्यतीति इरमद । 'मदी हर्षग्लपनयो'। मेघज्योतिर्नाम ॥ इन्द्रस्यायुधम् इन्द्रायुधम् । शक्रस्य धनु[3] शक्रधनु । [4]मेघप्रति फलितनानावर्णस्य धनुराकारेण दृश्यमानस्य सूर्यरश्मेर्नामनी ॥ रोहतीति रोहितम् । 'रुह् बीजजन्मनि प्रादुर्भावे च'। एतस्यैवाजिह्मस्य[5] धनुषो नाम ॥ १० ॥

[1] K₁ adds निर्घुष्यत इति निर्घोष [2] 'घुषिर् विशब्दने', 'हन हिंसागत्यो' 'पिष्ऌ सचूर्णने' इति क्रमेण पदत्रयस्यापि धातुत्रयम् । एतानि अशनि(पात Y)नामानि B₂ C
[3] K₁ U, W₁ add इव एव K₃ [4] प्रतीत° B₂ [5] अदीर्घस्य W₁

(पा.) स्फूर्जथुर्वज्रनिर्घोष । प्रहारकविद्युत्स्तुनिनाम । 'श्रुत्वा [illegible] [1]स्फूर्जथुप्रस्य निनाद परिदेविनी' इति भट्टि (५ ५२) । मेघज्योतिरिरमद । प्रहारकविद्युदग्निनाम ॥ अनुक्तम्—'निर्घात पडिको वज्र'। प्रहारकविद्युन्नामानि ॥ भाषया 'पिडुगु'[2]। इन्द्रायुध शक्रधनु । मेघप्रतिफलितनानावर्णस्य धनुराकारेण दृश्यमानस्य सूर्यकिरणस्य नामेति येचित् । कामधनुरिति केचित्[3]। मणिधनुरित्यन्ये[4]। तदेव ऋजु रोहितम् । तदेवायक्र चेद्रोहितमित्युच्यते। एतस्यैवावक्रस्य धनुषो नाम ॥ भाषया 'कोरडु'। 'यक्रमिन्द्रधनुर्ज्ञेय ऋजु रोहितमिष्यते' इत्युत्पलमाला । अथवा तदेव ऋजुरोहित-मित्युच्यते। 'ऋजुरोहितमिच्छन्ति बुधा शक्रशरासनम्' इति हलायुध (अ मा १ ५७) ॥ १० ॥

[1] विस्फूर्जथु° इति मुद्रितग्रन्थे (पृ १०२) [2] A₁ adds 'मस्तु' [3] A₁ adds व्यवहरन्ति [4] येचित् B₂, B₄

**वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ ।**
***धारासम्पात आसारः शीकरोऽम्बुकणाः स्मृताः ॥ ११ ॥***
**वर्षोपलस्तु करका मेघच्छन्नेऽह्नि दुर्दिनम् ।**

(वि.) वृष्टिरिति—वर्षतीति [1]वृष्टि । वर्षं च । वर्षशब्द अस्त्री । 'वृषु सेचने'। [2]वर्षनामनी ॥ अवगृह्णातीत्यवग्रह । अवग्रहश्च । 'ग्रह उपादाने'। वर्षप्रति-बन्धकनामानि[3] ॥ आ समन्तात् सरतीति आसार । 'सृ गतौ'। धाराणा सपात [4]धारासपात । धारासतानस्य[5] नामानि ॥ शीकते सिञ्चतीति शीकर । 'शीकृ सेचने'।

शीत करोतीति वा शीकर । 'डुकृञ् करणे'। सीकर इति वा पाठ । अम्बुकणनाम ॥ कृणाति[6] सस्यमिति करका। 'कृ हिंसायाम्'। कीर्यते वायुना भुवीति वा। 'कॄ विक्षेपे'। वर्षशिलानाम ॥ [8]दुष्ट दिन दुर्दिनम् । मेघच्छन्नाहोरात्रनाम ॥ ११ ॥

[1] वृष्टिशब्द स्त्रीलिङ्ग $D_2$ $K_3$, Y [2] वृष्टि° A, T, $W_1$ [3] °वध° $K_1$, $W_1$ [4] धरतीति धारा, 'डुधाञ् धारणपोषणयो', सम्यक् पततीति सपात, 'पतॢ गतौ', धाराणा सपात इति एक पद क्वचित् पठन्ति प्रगल्भवृष्टिनाम $B_2$, C [5] °सपात° $K_5$ $W_2$, Y सतत-तपतनस्य $K_3$ [6] हिंसति सर्परक्तपुच्छादिजन्तूनिति $B_2$ C [7] करकशब्द स्त्रीलिङ्ग पुल्लिङ्गश्च X [8] दुरित A

(पा.) वृष्टिर्वर्षं । वृष्टिनामनी ॥ तद्विघाते—समौ । [1]वर्षप्रतिबन्धनामानि ॥ वमहानग्रहाविति पाठान्तरम् । धारासपात आसार । धारावर्षनाम ॥ शीकरोऽम्बुकणा स्मृता । वायुवशाद्विशीर्णाम्बुकणा[2] शीकर स्यात् । वर्षोपलस्तु करक । वर्षशिलानाम । [3]घनोपल इति पाठान्तरम् । 'घनोपलस्तु करक पुंसि[4]का मटचीति च' इति वैजयन्ती (पृ २५, श्लो ७)। आद्यन्तकरकाशब्दोऽप्यस्ति। 'वर्षोपले तु करका करकोऽपि च दृश्यते' इति रुद्र । मेघच्छन्नेऽह्नि दुर्दिनम् । [5]मेघच्छन्नदिननाम । 'दुर्दिन जलदध्वान्तम्' इति रत्नकोशादय ॥ ११ ॥

[1] $A_1$ adds 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरि'त्यनेनाल्लोपो वैकल्पिक । [2] °कण नाम $B_3$ [3] $A_1$ adds तस्यैव [4] मञ्ली $B_2$ $B_4$ [5] मेघाच्छादितदिवा दुर्दिन स्यात् $A_1$

अन्तर्धा व्यवधा पुंसि त्वन्तर्धिरपवारणम् ॥ १२ ॥
अपिधानतिरोधानपिधानाच्छादनानि च ।

(नि) अन्तर्धेति—अन्तर्धीयतेऽनयेति अन्तर्धा। व्यवधीयतेऽनया व्यवधा । अन्तर्धानम् [1]अन्तर्धि । 'डुधाञ् धारणपोषणयो'। अपवार्यत इत्यपवारणम् । 'वृञ् [2]वरणे'। अपिदधातीत्यपिधानम्[3]। तिरोदधातीति तिरोधानम्[4]। छादयतीति छादनम् । 'छद अपवारणे'। [5]मेघानैश्चन्द्रादेरन्तर्धाननामानि ॥ १२ ॥

[1] अन्तर्धीयतेऽनेनेति° पुंल्लिङ्ग $B_2$ C $D_1$ omits 2 lines [2] ईवरणे $K_1$ [3] तिरधातीति तिधाम् X, $K_1$ [4] $W_1$ adds 'डुधाञ् धारणपोषणयो' [5] A, $B_1$, $K_2$ add °आच्छादित°

(पा.) अन्तर्धा—छादनानि च । मेघाद्यैश्चन्द्रादे[1]रन्तर्धाननामानि ॥ १२ ॥

[1] सूर्यादे $B_3$, $B_4$

हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः ॥ १३ ॥
विधुः सुधांशुः शुभ्रांशुरोषधीशो निशापतिः ।
अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधि. ॥ १४ ॥
द्विजराजः शशधरो नक्षत्रेशः क्षपाकरः ।

(वि.) हिमांशुरिति—हिमा अंशवो यस्य हिमांशु । चन्द्रेण कर्पूरेण मीयते उपमीयते[1] चन्द्रमा । 'माङ् माने'। चन्दतीति चन्द्र 'चदि आह्लादने दीप्तौ च'। मिमीते[3] कालमस्येति परिमाण करोतीति मा, चन्द्रश्चासौ माश्च चन्द्रमा । तुषारकिरणै उनत्ति क्लेदयतीति इन्दु । 'उन्दी क्लेदने'। कुमुदाना बान्धव कुमुदबान्धव । देवा एन विशेषेण धयन्तीति विधु । 'धेट पाने'। सुधारूपा अंशवो यस्य सुधांशु । शुभ्रा अंशवो यस्य शुभ्रांशु । ओषधीनाम् ईश ओषधीश[4] । निशाया पति [5]निशापति । अप्सु जात [6]अब्ज । ओषधी जीवयतीति जैवातृक । 'जीव [7]प्राणधारणे'। [8]सौति अमृत सोम । 'षु प्रसवैश्वर्ययो'। [9]ग्लायतीति ग्लौ । 'ग्लै हर्षक्षये'। मृग अङ्को यस्य स मृगाङ्क । कलाना निधि कलानिधि । द्विजाना राजा द्विजराज । शशस्य धर [10]शशधर । नक्षत्राणाम् ईश नक्षत्रेश । क्षपा करोतीति क्षपाकर[11] । [12](रोहिणीश सुधामूर्तिरात्रेयोऽमृतनिर्गम । समुद्रनवनीत[13] च)। एतानि चन्द्रनामानि ॥ १३-१४ ॥

[1] अनुमीयते A, $B_1$, C, T [2]सान्त C [3] मीयते कालोऽस्यति वा $B_1$, C, $K_3$ [4] ओषधीभि इष्टे ओषधीश । 'इश ऐश्वर्ये'। $D_1$, I, Y [5] निशाया स्पष्टीक्रियते इति निशाकर इति च पाठ, 'डुकृञ् करणे' C [6] आयत इति U, 'जनी प्रादुर्भावे' C [7] A, $K_2$ T add प्रीणने च [8] सूयते $B_2$ $K_3$, Y [9] $D_2$ I, $K_1$, Y add भाम्यति, शाम्यति $K_3$ [10] शश धरतीति C, $K_3$ U [11] $D_1$, I add 'डुकृञ् करणे' [12] $D_2$ $K_2$ $K_3$ add [13] $D_2$, $K_2$, $K_3$ $W_1$ add

(पा.) हिमांशु—क्षपाकर । चन्द्रनामानि । अनुक्रम—

'शुचिरोचि सुधासूतिरात्रेयोऽमृतनिर्गम ।
पुनर्युवा निशाकेतु प्राचीनतिलक शशी ॥
शशाङ्को रोहिणीकान्तो जराभा यज्वना पति ।

नक्षत्रनेमिरब्जारिश्चन्द्रिः श्रीसहोदरः ।
यथासुखः स्मरसखः समुद्रनवनीतकम् ॥'

एतानि च ॥ १३-१४ ॥

**कला तु षोडशो भागो बिम्बोऽस्त्री मण्डलं त्रिषु ॥ १५ ॥**
**भित्तं शकलखण्डे वा पुंस्यर्धोऽर्धं समेंऽशके ।**

(नि.) कलेति—कलयति संख्यातीति कला। 'कल गतौ संख्याने च'। षडधिका दश षोडश, षोडशानां पूरणः षोडशो [1]भागः। चन्द्रस्य षोडशांशस्य[2] नाम ॥ बिम्बति विस्तारं प्राप्नोतीति बिम्बः। 'बिम्ब आभोगे'। मण्डति व्याप्नोतीति मण्डलम्। 'मडि भूषायां व्याप्तौ च'। [3]चन्द्रमण्डलनामानि ॥ भिद्यत इति भित्तम्। 'भिदिर् विदारणे'। शक्यते [4]भेत्तुमिति शकलम्। 'शक्ल शक्तौ'। खण्ड्यत इति खण्डम्। [5]'खडि भेदने'। अर्धति भेदं गच्छतीत्यर्धः। अर्धं च[6]। 'अर्ध गतौ'। शकलनामानि ॥ १५ ॥

[1] षोडशांशः U. [2] °भागस्य C [3] चन्द्रसूर्यादि° $B_2$, $D_3$, $K_3$, U.
[4] भङ्क्तुं $K_3$. [5] खण्डने भेदने च $D_2$, $W_2$. [6] अर्धं समांशस्नाम I, $K_3$, U.

(पा.) कला तु षोडशो भागो। चन्द्रस्य षोडशांशनाम[1] ॥ बिम्बोऽस्त्री मण्डलं त्रिषु। चन्द्रस्य [2]समग्रशरीरनामनी ॥ ते द्वे आदित्यादिनामन्यपि[3] भवतः। 'जलनिधिजलप्रतिबिम्बितरविबिम्बराजताम्बरान्तावलम्बागृहीतार्द्रमांसभारेव बभासे वासरावसानवेला वैताली'। किं च—

'आदित्यवर्मणा[4] साम्यमादित्यः कथमश्नुते ।
विभिन्नमण्डलो [5]धीरैर्भिन्दता रविमण्डलम्[6] ॥' इति ।

भित्तं—पुंस्यर्धः। असमभागनामानि[7]। शकलखण्डे वा पुंसि। शकलं, शकलः। खण्डं, खण्डः। 'वा पुंसीति' अर्धेऽप्यन्वेति। तेन त्रिलिङ्गः। अर्धः कम्बलः, अर्धा शाटी, अर्धं वस्त्रम्। खण्डार्धशब्दौ गुणवचनौ। छेदभङ्गदलादयोऽप्यसमभागार्थवाः। 'बिसकिसलयच्छेदपाथेयवन्तः' (मेघ. १. ११), 'पुष्पोच्चयः पल्लवभङ्गभिन्नः' (कु. सं. ३. ६१) इत्यादि। अर्धं समेंऽशके। [8]नपुंसकलिङ्गाभिधायी अर्धशब्दः समभागार्थः।

'मातापितृत्वं जगतामाविष्कर्तुमिवेच्छतः ।
अर्धं नारी पुमानर्धं यस्य तस्य पदे पदे[9] ॥' इति ॥ १५ ॥

[1] °अंशः कला स्यात् $A_1$.  [2] सर्वे° $A_1$.  [3] $A_1$ adds °शरीर°.  [4] °चर्मणी $A_1$. [5] °मिण्ड° $A_1$  [6] °रथि° $B_3$.  [7] $A_1$ adds तस्योदाहरणम्—'खण्डे तु कृतशेखर' इति। अत्र खण्डशब्दो गुणवचनः। न्यासोदाहरणमपि गुणवचनविषयमेव.  [8] समभागेऽर्धे नपुंसकमेव $B_3$. [9] परे परेति $A_1$

**चन्द्रिका कौमुदी ज्योत्स्ना प्रसादस्तु प्रसन्नता ॥ १६ ॥**
**कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम् ।**

(वि.) चन्द्रिकेति—[1]चन्द्रो नियुक्तोऽस्यास्तीति चन्द्रिका। कुमुदानामियं[2] कौमुदी। ज्योतिरस्या[3] अस्तीति ज्योत्स्ना। चन्द्रप्रकाशनामानि ॥ प्रसीदतीति प्रसादः। 'षद्लृ विशरणगत्यवसादनेषु'। [4]प्रसन्नस्य भावः प्रसन्नता। नैर्मल्यनामानि ॥ कल्यते ज्ञायतेऽनेनेति कलङ्कः। 'कल संख्याने'। अङ्क्यते इत्यङ्कः। 'अकि लक्षणे'। लाञ्छ्यते लक्ष्यतेऽनेनेति लाञ्छनम्। 'लाछि लक्षणे'। चह्यते कल्यत इति चिह्नम्। 'चह कल्कने'। लक्ष्यते[5] लक्ष्म। लक्षणं च। 'लक्ष दर्शनाङ्कनयोः'[6]। चिह्ननामानि ॥ १६ ॥

[1] चन्द्रे नियुक्ता $B_2$, C, °नित्ययुक्ता $D_3$, $K_1$, $K_2$, $K_4$, चन्द्रातपेन $W_2$, चन्द्रादनपेता $B_1$ C  [2] C adds अब्जविशेषाणाम्.  [3] अस्या $B_2$, C, I, $K_3$  [4] तस्य भाव. तत्ता $W_2$  [5] अनेनेति $K_5$  [6] लक्ष्मेति नान्तः C

(पा.) चन्द्रिका कौमुदी ज्योत्स्ना। कौमुदीनामानि ॥ 'चान्द्री चन्द्रातपोऽपि च'। एते च ॥ प्रसादस्तु प्रसन्नता। प्रसादगुणनामनी ॥

'क्षीरक्षालितचन्द्रेव नीलधौताम्बरेव च।
टङ्कोल्लिखितसूर्येव वसन्तश्रीरदृश्यत' ॥ इति।

लाञ्छनं—लक्ष्मणम्। क्षकारमध्यः[1] क्ष्मकारमध्यश्च[1] भवति।

'लक्षणं नाम्नि चिह्ने च सौमित्रौ[2] चापि लक्षणः[3]।
लक्ष्मणं लाञ्छने नाम्नि रामभ्रातरि लक्ष्मणः ॥'

इति विश्वप्रकाशिका (पृ. ५०, श्लो. ४२)। चिह्ननामानि ॥ १६ ॥

[1] °मध्यं च $B_3$  [2] सौमित्रे $B_3$, $B_4$  [3] लक्षण $A_1$

**सुषमा परमा शोभा शोभा कान्तिर्द्युतिश्छविः ॥ १७ ॥**
**अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम् ।**
**प्रालेयं मिहिका चाथ हिमानी हिमसंहतिः ॥ १८ ॥**

(वि.) सुषमेति—सुष्ठु समा सुषमा। उत्कृष्टशोभानाम। शोभत इति शोभा। 'शुभ शोभने'। 'शुभ शुम्भ शोभार्थे' इति वा धातुः। काम्यते यया कान्तिः। 'कमु कान्तौ'। द्योतत इति द्युतिः। 'द्युत दीप्तौ'। छ्यति नाशयति [1]अन्धकारमिति [2]छविः। 'छो छेदने'। छ्यति अशोभामिति वा। कान्तिमात्रनामानि ॥ अवश्यायतेऽवपततीत्यवश्यायः। 'श्यैङ् गतौ'। [3]नितरां ह्रियतेऽग्निना[4] नीहारः। 'हृञ् हरणे'। तप्तं तोषयतीति [5]तुषारः। 'तुष तुष्टौ'। तोहति[6] पद्ममिति तुहिनम्। 'तुहिर् अर्दने'। हिनोति वर्धत इति हिमम्। 'हि गतौ वृद्धौ च'। तापं हन्तीति वा हिमम्। 'हन हिंसागत्योः'। प्रलयात्[7] शरदन्तादागतं प्रालेयम्। मेहति [8]भुवमिति मिहिका। 'मिह सेचने'। हिमिकेति वा पाठः। हिनोति वर्धते हिमिका। 'हि गतौ वृद्धौ च'। हिमनामानि ॥ [9]हिममहत्त्वं हिमानी, हिमस्य संहतिः। हिमसमूहनाम ॥ १७-१८ ॥

[1] असारं $B_1$, $K_3$, $W_2$, Y. [2] छवयति आशा जनयति असाविति छविः। 'छवि कान्तौ' C; छ्यति $D_2$, I, $K_5$ [3] नितान्त I, Y. [4] $B_2$, C add आदिना. [5] तुष्यन्त्यनेन (ओषधिविशेषा इति C) $B_1$, C, $D_1$, I, U, $W_1$, Y. [6] $W_2$ adds अर्दयति. [7] प्रलये शरदन्ते भवतीति C, U. [8] भुवि $B_1$, C, $D_1$, U, Y. [9] महत् हिमं $D_1$.

(पा.) सुषमा परमा शोभा। [1]अधिकशोभा सुषमा स्यात्। 'राधा शोभा विभूषा स्यादभिख्या सुषमा तथा' इति केषांचिच्छोभामात्रमेवाभिमतम् ॥ शोभा—छविः। शोभानामानि ॥ अवश्यायस्तु—मिहिका च। हिमनामानि ॥ अथ हिमानी हिमसंहतिः। हिमसमूहनाम[2] ॥ १७–१८ ॥

[1] परम° $B_3$ [2] $A_1$ adds हिमानीत्यत्र 'इन्द्रवरुण—' इत्यादिनानुगागमः.

**शीतं गुणे तद्वदर्थाः सुषिमः शिशिरो जडः ।**
**तुषारः शीतलः शीतो हिमः सप्तान्यलिङ्गकाः ॥ १९ ॥**

(वि.) शीतमिति—[1]गुणे जाड्ये शीतं क्लीबे योज्यम्। श्यायत इति शीतम्। 'श्यैङ् गतौ'। शैत्यगुणनाम ॥ तद्वदर्थाः [2]शीतपर्यायार्थाः अभिधेयवल्लिङ्गाः सप्त। सुष्ठु सिनोति बध्नाति व्यापारमिति सुषिमः। 'षिञ् बन्धने'। सुष्ठु श्यायते [3]सुशीम इति

वा पाठ । 'श्यैङ् गतौ' । शिनोति पद्मशोभा शिशिर[1] । 'शिञ् निशातने' । जडतीति जड[5] । 'जल शून्ये' । डलयोरेकत्वस्मरणात् । तुष्यत्यनेनेति तुषार[6] । शीत लातीति शीतल । 'ला आदाने' । श्यायत इति शीत । हिनोति वर्धते हिम । 'हि गतौ वृद्धौ च' । एते अभिधेयलिङ्गा । [7]शीतवद्द्रव्यनामानि ॥ १९ ॥

[1] शीत शैत्ये जाड्ये क्लीवे $B_2$ C [2] °तद्वन्त पर्याया अर्था B. [3] सुशिम° A, D., $K_1$, $B_1$ omits 2 lines [4] शिनोत्यर्थं श्यायते वा A, $W_1$ [5] जडति जघन्य करोति, 'जल जघन्ये' $B_2$ C, $W_2$ Y, 'जड मान्द्ये' A [6] C, $D_1$ add 'तुष तुष्टौ' [7] $K_5$, $W_1$, Y omit °वद्°

(पा.) शीत गुणे । गुण इति स्पर्शविशेषे शीत नपुसकम्[1] । देवदत्तस्य शीत वर्तते । तद्वदर्था —सप्तान्यलिङ्गका । सुषिमादय शीतगुणविशिष्टार्थ । विशेष्यलिङ्गका भवन्ति । सुषिमशब्दो ह्रस्वेकार मूर्धन्यमध्य । दीर्घेकारस्तालव्यमध्य इति केचन पठन्ति । 'शीफरो मेलक स्थिर[2]' । एतानि च ॥ १९ ॥

[1] नपुसकाभिधायी शीतशब्दोऽप्यस्ति $A_2$ [2] स्थित $A_1$

**ध्रुव औत्तानपादि स्यादगस्त्यः कुम्भसम्भवः ।**
**मैत्रावरुणिरस्यैव लोपामुद्रा सधर्मिणी ॥ २० ॥**

(वि.) ध्रुव इति—ध्रुवति स्थिरीभवतीति ध्रुव । 'ध्रुव गतिस्थैर्ययो' । उत्तानपादस्यापत्यम् औत्तानपादि । ध्रुवनामनी ॥ अग विन्ध्य गिरिं स्त्यायति स्तम्भयतीति अगस्त्य । अगस्तिरिति वा पाठ । 'स्त्यै शब्दसघातयो' । [1]कुम्भ सभवो यस्य कुम्भसभव । मित्रावरुणयोरपत्य मैत्रावरुणि । [2]अगस्त्यमुनिनामानि ॥ विरहे [3]सति शुश्रूषालोपेऽमुद्रा[4] न मुद [5]रातीति लोपामुद्रा[6] । 'रा दाने' । समानो धर्मो ऽस्यास्त्याः सधर्मिणी । अगस्त्यभार्यानाम ॥ २० ॥

[1] कुम्भे $D_2$ $K_2$ $K_3$ U X [2] $B_2$ omits °मुनि°, °ऋषि° $W_2$ [3] पति शुश्रूषा° $B_1$ C I, $K_5$ Y [4] लोपेन A, T [5] $D_1$ $K_1$, $K_5$, U, $W_1$ add ददाति [6] °लोपेन मुद्र भवतीति अमुत्, अमुदम् असन्तोष (असन्तोषाभाव $B_2$) रातीति अमुद्रा C

(पा.) ध्रुव —स्यात् । ध्रुवनामनी ॥ अगस्त्य —मैत्रावरुणि । अगस्त्यनामानि ॥ अगस्तिरित्यप्यस्ति । 'अगस्तिनाध्यासितविन्ध्यशृङ्गम्' इति भट्टिकाव्ये (१२ ७१) । 'और्वशेय कुम्भयोनिरगस्तिर्विन्ध्यकूटन[1]' इति वैजयन्ती (पृ ९५, श्लो १५१) । अस्यैव —सधर्मिणी । तस्य भार्या लोपामुद्रा स्यात् ॥ २० ॥

[1] °कुट्टन $B_3$ °कूटक इति मुद्रितपुस्तके ।

**नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम् ।**
**दाक्षायण्योऽश्विनीत्यादितारा अश्वयुगश्विनी ॥ २१ ॥**

(वि.) नक्षत्रमिति—न [1]क्षरति [2]नक्षत्रम् । 'क्षर संचलने'। न क्षीयत इति वा । 'क्षि क्षये'। न क्षदत इति वा नक्षत्रम् । 'क्षद गतिहिंसनयोः' । नक्षतीति वा । 'णक्ष गतौ'। ऋक्षति तमो नाशयतीति ऋक्षम्[3] । 'ऋक्ष हिंसायाम्'। ऋषतीति वा ऋक्षम् । 'ऋषी गतौ'। भा अस्यास्तीति [4]भम् । तरत्यनयेति तारा । तारैव तारका । 'तॄ प्लवनतरणयोः'। अवतीत्युडु[5] । 'अव रक्षणेत्यादि'। नक्षत्रनामानि ॥ दक्षस्यापत्यानि स्त्रियः दाक्षायण्यः । अश्विन्यादिरेतत्सत्नक्षत्रसाधारणनाम । अश्वा युज्यन्तेऽस्यामिति अश्वयुक् । 'युजिर् योगे'। अश्ववत्त्वादश्विनी । अश्विनीनक्षत्रनामनी ॥ २१ ॥

[1] क्षरति गच्छतीति क्षः नाश इत्यर्थः, क्षो न भवतीति नक्षः, नित्यत्वमित्यर्थः, तत् त्रायते इति नक्षत्रम् । 'क्षर गतौ' C. [2] न क्षरति न गच्छति $B_1$, I, Y. [3] अथवा तमोनाशं कृत्वा रक्षतीति ऋक्षम् । 'रक्ष पालने'। रेफऋकारयोरभेदः $B_2$, C [4] C adds 'भा दीप्तौ'. [5] उद् इयते गच्छतीति उडु । उडुशब्दः स्त्रीलिङ्गो वा । 'डीङ् विहायसा गतौ' C; उडति गच्छतीत्युडु, 'उड गतौ' $B_2$, C, I.

(पा.) नक्षत्रं—स्त्रियाम् । नक्षत्रनामानि ॥ अपिशब्दात् तारकाशब्दः नपुंसकश्च स्यात् । 'भं नक्षत्रं तारकं तारका च' इति हलायुधः (अ. मा. १.५१), 'तारा भं रात्रिजं धिष्ण्यं सनक्षत्रमुडुर्न ना' इति वैजयन्ती (पृ. २०, श्लो. ३८) । दाक्षायण्यो—ताराः । अश्विन्यादितारा[1] दाक्षायण्य इत्युच्यन्ते । सुभूतिटीकायां तत्प्रभेदेशः कृतः । अश्विनी, भरणी, कृत्तिकाः पद् बहुषु, रोहिणी, मृगशिरा स्त्रीक्लीबयोः, आर्द्रा, पुनर्वसू द्वौ, पुष्यः, आश्लेषमघाः स्त्रियां बहुत्वे च, पूर्वोत्तरफल्गुन्यौ, हस्तः, चित्रा, स्वातिः स्त्रीपुंसयोः, विशाखे द्वे, अनूराधा, ज्येष्ठा, मूलं नपुंसकम्, पूर्वाषाढा, उत्तराषाढा, श्रवणः पुमान्, धनिष्ठा, शतभिषक् स्त्री, पूर्वभाद्रपदे द्वे, उत्तरभाद्रपदे द्वे, रेवती इति ॥ अश्वयुगश्विनी । अश्विनीनक्षत्रनामनी ॥ २१ ॥

[1] °नक्षत्रनाम $B_2$

**राधा विशाखा पुष्ये तु सिध्यतिष्यौ श्रविष्ठया ।**
**समा धनिष्ठा स्युः प्रोष्ठपदा भाद्रपदाः स्त्रियः ॥ २२ ॥**

(वि.) राधेति—राध्यते पूज्यते राधा। 'राध साध संसिद्धौ'। [1]विशाखति कान्त्येति विशाखा। 'शाखृ व्याप्तौ'। विशाखानक्षत्रनामनी॥ [2]पुष्णात्यभिलषितमिति पुष्यः। 'पुष पुष्टौ'। सिध्यन्त्यर्था [3]अस्मिन्निति सिध्यः। 'षिधु संराद्धौ'। साध्नोत्यस्मिन्नर्थानिति सिद्धः। 'साध संसिद्धौ'। तुष्यन्त्यस्मिन् तिष्यः। त्वेषते प्रभया वा तिष्यः। 'त्विष दीप्तौ'। पुष्यनक्षत्रनामानि॥ शुभकर्मणि श्रूयते श्रविष्ठा। 'श्रु श्रवणे'। [4]दधन्ति धनं करोति धनिष्ठा। 'धन धान्ये'। धनिष्ठानामनी॥ प्रोष्ठे सारे पदे यासां ताः प्रोष्ठपदाः[5]। प्रोष्ठस्येव गोरिव पदे[6] यासां ताः इति वा प्रोष्ठपदाः। [7]भाद्रे सारे पदे यासां ताः भाद्रपदाः। [8]प्रोष्ठपदानामनी ॥ २२ ॥

[1] विशेषेण शाखति व्याप्नोति कान्त्येति $B_2$, C.　[2] $W_2$ adds अयलम्भिनम्.
[3] अनेन $B_2$, C.　[4] दधाति Y, ददाति धनिक करोति $B_2$, C, $K_1$, U, $W_2$.
[5] अथवा प्रोष्ठस्य मत्स्यविशेषस्य पदमिव पदं यस्याः $B_2$, C.　[6] मत्स्यस्येव पदानि A.
[7] भद्रं मङ्गलमनयोरस्तीति भाद्रे C.　[8] C adds भद्राकार°.

(पा.) राधा विशाखा। विशाखयोर्नामनी॥ 'विशाखयोश्च' इति (१. २. ६२) पाक्षिकैकवचनम्। पुष्ये—तिष्यौ। पुष्यनक्षत्रनामानि॥ श्रविष्ठया समा धनिष्ठा। धनिष्ठानामनी॥ स्युः—[1]स्त्रियाम्। भाद्रपदानामनी॥ समुदायसंख्यापेक्षया बहुवचनम्॥ २२॥

[1] प्रियः $B_2$

**मृगशीर्षं मृगशिरस्तस्मिन्नेवाग्रहायणी।**
**इल्वलास्तच्छिरोदेशे तारका निवसन्ति याः॥ २३॥**

(वि.) मृगशीर्षमिति—मृगस्येव शीर्षमस्य मृगशीर्षम्। एवं मृगशिरः। अग्रे हायना नवव्रीहयोऽस्याः सन्तीति आग्रहायणी। हायनस्य[1] वत्सरस्य अग्रमादिः अस्या अस्तीति वा। [2]मृगशिरोनक्षत्रनामानि॥ शिवबाणेन इल्यन्ते प्रेर्यन्ते इति इल्वलाः। 'इल स्वप्नप्रेरणयोः'। इन्वका इति वा पाठः। [4]इल्वका इति वा। 'इल प्रेरणे'। [5]मृगशिरःसमीपस्थतारकानाम[6] ॥ २३ ॥

[1] अग्रे हायनो वत्सरोऽस्या अस्तीति $B_1$, C, Y.　[2] °शिर° $K_1$.　[3] °इति इलः, वलन्ते चलन्तीति वलाः, एवं धातुद्वयेन पदार्थनिर्वाह। 'वल संचलने' C　[4] तत्पक्षे इलन्ति शिवबाणवत् प्रापयन्तीति इलानि, तानि वहन्तीति वाः, धातुद्वयेन इल्वा इति भवति। इल्वा एव इल्वकाः, क प्रत्ययः, धातुद्वयं च 'इल प्रापणे', 'वह प्रापणे' $B_2$, C.　[5] शीर्ष° $B_2$, I, $K_5$, U, $W_2$.　[6] °स्थित° A, $K_1$, I.

(पा.) मृगशीर्षं—आग्रहायणी। मृगशिरोनक्षत्रनामानि॥ इल्वला—या। तदिति तच्छब्देन प्रत्यासन्नमृगशिर एव परामृश्यते। तच्छिरोभागे या स्वल्पतारका सन्ति ता इल्वला इत्युच्यन्ते। इन्वका इति पाठोऽप्यस्ति। 'इन्वकास्तच्छिरोदेशे तारका इल्वला [1]अपि' इति वैजयन्ती (पृ २०, श्लो ३९)। अनुक्तम्[2]। 'ज्येष्ठा ज्येष्ठघ्नी'। ज्येष्ठानक्षत्रनामनी॥ 'अथो निष्ट्या स्वाति'। स्वातीनक्षत्रनामनी॥ 'आर्द्रा नक्षत्रशाखिनी'। आर्द्रानाम॥ २३॥

[1] मता $B_3$ $B_4$, मुद्रितग्रन्थे च [2] अनुक्त पाठ $A_1$

**बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः।**
**जीव आङ्गिरसो वाचस्पतिश्चित्रशिखण्डिजः॥ २४॥**

(टि.) बृहस्पतिरिति—बृहता वेदमन्त्राणा[1] पति बृहस्पति। सुराणामाचार्य सुराचार्य। गिरा पति गीष्पति। गीर्पतिर्वा। धिषणा बुद्धिरस्यास्तीति धिषण। [3]गृणाति [4]पुरुषार्थान् [5]गुरु। 'गॄ शब्दे'। जीव्यते मृतोऽनेनेति जीव। 'जीव प्राणधारणे'। अङ्गिरसोऽपत्य पुमानाङ्गिरस। वाचा पति वाचस्पति। चित्रशिखण्डिनोऽङ्गिरसो [6]जात चित्रशिखण्डिज। बृहस्पतिनामानि॥ २४॥

[1] देवमन्त्रिणा $W_2$ [2] 'बृहि वृद्धौ' C [3] गृह्णाति $B_1$, C, $W_2$, 'ग्रह उपादाने' C, $W_2$, Y [4] तत्त्वार्थान् Y [5] अथवा ग्राहयति शब्दयति गुरु, गुरुत्वात् स्वाक्रियात् गुरु $B_3$, C [6] जायत इति I, $K_3$, U

(पा.) बृहस्पति—गीष्पति। 'अहरादीना पत्यादिषु [1]वा रेफ' (वा ८ २ ७०) इति पाक्षिकरेफादेशात् गीर्पतिरपि[2]। धिषणो—चित्रशिखण्डिज। बृहस्पतेर्नामानि॥२४॥

[1] उपसंख्यान कर्तव्यम् $B_3$ [2] $A_1$ omits अपि

**शुक्रो दैत्यगुरुः काव्य उशना भार्गवः कविः।**
**अङ्गारकः कुजो भौमो लोहिताङ्गो महीसुतः॥ २५॥**

(टि.) शुक्र इति—[1]शुक्रवर्णत्वात् [2]शुक्र। [3]शुक्रात् रुद्रद्वारा आगत इति वा। रुद्रस्य शुक्रद्वारेण निर्गतत्वाद्वा। शुच दुःख देवेभ्यो [4]रातीति वा शुक्र। 'रा दाने'। दैत्याना गुरु दैत्यगुरु। कवेरपत्य पुमान् काव्य। दैत्येभ्य [5]पुष्टि वष्टि[6] कामयते उशना। 'वश कान्तौ'। अयं शब्द [7]सान्त। भृगोरपत्यं भार्गव। वयति चातुर्येण

वर्णयतीति कवि । '[9]कव् वर्णने'। शुक्रनामानि ॥ [10]अङ्गारवर्णत्वात् अङ्गारक । अङ्गानि आरयति पीडयतीति वा । 'आर पीडने'। कौ भूमेर्जात [11]कुज । भूमेरपत्य पुमान् भौम । [12]लोहितम् अङ्ग यस्य स लोहिताङ्ग । मह्या सुतो महीसुत । [13]मङ्गलनामानि ॥ २५ ॥

[1] शुक्र° B₁, C, D₁, W₁ [2] रल्योरभेद C [3] शुक्लात् रद्रादा D₂
[4] B₂ C, D₁ add ददाति, 'रा दाने' C, I [5] श्रेय D₂ K₂ K₅, हित U
[6] B₂, Y omit [7] कान्तिरिच्छेत्यथ C [8] सकारान्त D₂, K₃ [9] 'कुद् शब्दे' A, B₁, T [10] अङ्गारक° I, Y [11] C adds 'जनी प्रादुर्भावे' [12] लोहितान्यङ्गानि C [13] °मह° B₂ C, D₁, I, W₂, अङ्गारक° K₃ Y

(पा.) शुक्रो—कवि । शुक्रनामानि । उशनेत्यत्र ऋदुशनेत्यादिना (७ १ ९४) [1]सौ परे चानङ् स्यादसबुद्धौ । सबोधने[2] तु उशनसस्त्रिरूपम् । सान्त, तथा नान्त, तथाप्यदन्तम् । हे उशन, हे उशनन्, हे उशन ॥ अङ्गारक —महीसुत । अङ्गारकनामानि । 'वक्रो मङ्गल आरश्च' । एतानि च ॥ २५ ॥

[1] सावनङ्ङादशो A₁ [2] सबुद्धौ B₂ B₄

**रौहिणेयो बुधः सौम्यः समौ सौरिशनैश्चरौ ।**
**तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुंतुदः ॥ २६ ॥**

(वि.) रौहिणेय इति—रोहिण्या अपत्य पुमान् रौहिणेय । बुध्यत इति बुध । 'बुध अवगमने'। सोमस्यापत्य पुमान् [1]सौम्य । बुधनामानि ॥ [2]सूर्यस्यापत्य सौरि । सौरो वा । शनै [3] चरतीति शनैश्चर [4] । 'चर गतिभक्षणयो [5]। [5]शनिनामनी ॥ तम आयुध यस्य तम । सान्तनपुसकलिङ्गम्[6] । सूर्याचन्द्रमसौ तमयतीति वा । 'तमु ग्लानौ'। रहयति रिक्तीकरोति सूर्याचन्द्रमसौ राहु । रहयति त्यजति भुक्त्वा चन्द्रा *र्कावि*ति वा । 'रह त्यागे'। स्व 'अन्तरिक्षे भाति स्वर्भानु । 'भा दीप्तौ'। सिंहिकाया अपत्य सैंहिकेय । विधुमिन्दु [9]तुदतीति विधुतुद । 'तुद व्यथने'। ([10]महक्लोल अभ्रपिशाचकश्च) । एतानि [11]राहुनामानि ॥ २६ ॥

[1] बुधु मयति जानातीति वा सौम्य C [2] सूरस्य I, W₂ [3] C adds मन्द
[4] शनिश्च C, D₂ U add 'पङ्गु कोपश्छायासुत शनि [5] शनैश्चर° A, B₁, K₃ C adds पङ्गु, पङ्गु, कल्यति क्लेश करोतीति काल, करि कामधेनु, छायादेव्या पुत्र छायापुत्र, कृष्णवर्णत्वात् असित [6] तम अकारान्त पुल्लिङ्गश्च D₂ K₁, K₂ W₁ [7] C adds

ग्लपयति. [8] स्वर्गे $B_2$, C. [9] $K_5$, $W_1$ add व्यथयति. [10] $B_1$, $D_2$, $K_2$, $K_5$ add the two words. [11] एते शब्दाः केतोरपि वाचकाः C; केतुः शिखीति वाच्यम् $K_5$.

(पा.) रौहिणेयो—सौम्यः। बुधनामानि ॥ समौ—शनैश्चरौ। '[1]शनिमन्दखोडकोणच्छायापुत्रासितक्रोडाः'। एतानि च ॥ तमस्तु—विधुंतुदः। राहोर्नामानि। 'स एव ग्रहकल्लोलः स एवाभ्रपिशाचकः'। एते च ॥ २६ ॥

[1] शनिमन्दौ पङ्गुकालौ $B_3$

**सप्तर्षयो मरीच्यत्रिमुखाश्चित्रशिखण्डिनः।**
**राशीनामुदयो लग्नं ते तु मेषवृषादयः ॥ २७ ॥**

(वि.) सप्तर्षय इति—मरीच्यत्रिमुखाः सप्तर्षयः चित्रशिखण्डिनः स्युः। चित्राः शिखण्डा जटा येषां ते चित्रशिखण्डिनः। के ते।

[1]'मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः।
वसिष्ठश्चेति सप्तर्षीनाहुश्चित्रशिखण्डिनः ॥'

इति सप्तर्षिनामानि ॥ [2]राति ददाति [3]कल्याणादिफलमिति राशिः। तेषामुदयो लग्नमित्युच्यते। लगति ग्रहैः संबध्नाति लग्नम्। 'लगि सङ्गे'। राशयः मेषवृषादयः ॥ २७ ॥

[1] मरीचिरङ्गिरा अत्रिः °श्चैवाश्चित्रशिखण्डिनः $B_2$, $W_2$, Y. [2] रान्ति ददति इति राः कालविशेषाः, तान् शमयन्तीति राशयः। 'रा दाने' 'शम उपशमे' $B_2$, C. [3] कल्याणादिसफलं $K_3$; कालादि° $B_1$, $D_1$, $K_4$, $W_2$, Y.

(पा.) सप्तर्षयो—चित्रशिखण्डिनः। मरीच्यत्रिप्रमुखाः[1] समुदायोऽस्या चित्रशिखण्डिनः। राशीनामुदयो लग्नम्। राशीनामुदयनाम[2] ॥ ते तु मेषवृषादयः। ते त्विति राशयो मेषवृषभमिथुनकर्कटकसिंहकन्यातुलावृश्चिकधनुर्मकरकुम्भमीना इति द्वादश। एते सर्वे तत्तत्पर्यायनामलिङ्गभाजः ॥ २७ ॥

[1] $A_1$ adds पुलस्त्य°. [2] लग्नमित्युच्यते $A_1$.

**सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः।**
**भास्कराहस्करब्रध्नप्रभाकरविभाकराः ॥ २८ ॥**
**भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः।**

**विकर्तनार्कमार्तण्डमिहिरारुणपूषणः ॥ २९ ॥**
**द्युमणिस्तरणिर्मित्रश्चित्रभानुर्विरोचनः ।**
**विभावसुर्ग्रहपतिस्त्विषांपतिरहर्पतिः ॥ ३० ॥**
**भानुर्हंसः सहस्रांशुस्तपनः सविता रविः ।**
***(पद्माक्षस्तेजसांराशिश्छायानाथस्तमिस्रहा ।**
**कर्मसाक्षी जगच्चक्षुर्लोकबन्धुस्त्रयीतनुः ॥**
**प्रद्योतनो दिनमणिः खद्योतो लोकबान्धवः ।**
**इनो भगो धामनिधिश्चांशुमाल्यब्जिनीपतिः ॥)**

(त्रि.) सूरेति—सुवति कर्मणि सूरः । सूर्यश्च । 'षू प्रेरणे' । इयर्ति ऋच्छति[1] इति अर्यमा । 'ऋ गतौ' । अदितेरपत्यं पुमानादित्यः । द्वादश आत्मानो यस्य द्वादशात्मा । दिवा अहनि प्राणिनः चेष्टावतः करोतीति दिवाकरः[2] । भासं करोतीति भास्करः । अहः करोतीति अहस्करः[3] । अन्यतेजो यद्भाति प्रतिबध्नाति ब्रध्नः[4] । 'बन्ध बन्धने' । प्रभां करोतीति प्रभाकरः । विभां करोतीति विभाकरः । भासः सन्त्यस्य भास्वान् । विवस्ते प्रभया छादयतीति [5]विवस्वान् । 'वस आच्छादने' । विवः [6]तेजोऽस्यास्तीति वा विवस्वान् । सप्त अश्वा यस्य सः सप्ताश्वः । हरितः[7] अश्वा यस्य सः हरिदश्वः । उष्णा रश्मयो यस्य उष्णरश्मिः । तमः विकृन्ततीति विकर्तनः । 'कृती छेदने' । अर्च्यते[8] वालखिल्यादिभिरिति अर्कः । 'अर्क स्तवने' । अर्च्यते वा अर्कः । 'अर्च पूजायाम्' । अर्च्यते सेव्यते [9]वा । 'अर्च सेवायाम्' । मृतण्डस्यापत्यं मार्तण्डः । मृतमण्डं ब्रह्माण्डं जीवयतीति वा मार्ताण्डः । मेहति वर्षति मिहिरः । 'मिह सेचने' । इयर्तीति अरुणः । 'ऋ गतौ' । पुष्णातीति पूषा[10] । 'पुष पुष्टौ' । [11]दिवि मणिः द्युमणिः । तरति[12] नभः तरणिः । 'तॄ प्लवनतरणयोः' । मेद्यति स्निह्यतीति मित्रः । 'ञिमिदा स्नेहने' । सर्वस्य मित्रत्वाद्वा । चित्रा भानवो यस्य चित्रभानुः । विरोचते विरोचनः । 'रुच दीप्तावभिप्रीतौ च' । विभैव [13]वसु यस्य सः विभावसुः । ग्रहाणां पतिः ग्रहपतिः । त्विषां पतिः त्विषांपतिः । अह्नः पतिः अहर्पतिः, अहःपतिः । भातीति भानुः । 'भा दीप्तौ' । तमो हन्तीति हंसः । 'हन हिंसागत्योः' । सहस्रम् अंशवो यस्य सः सहस्रांशुः । तपतीति तपनः । 'तप संतापे' । सुवति सुमं सविता । 'षू प्रेरणे' । रूयते [14]श्रूयते रविः । 'रु शब्दे' । एतानि सूर्यनामानि ॥ २८–३० ॥

* Found in I, $K_2$, $K_3$: कर्मणः साक्षी कर्मसाक्षी । जगतां चक्षुः जगच्चक्षुः । अंशूनां माला अस्यास्तीति अंशुमाली । प्रद्योतयतीति प्रद्योतनः । 'द्युत दीप्तौ' । दिनस्य मणिः दिनमणिः ।

खे द्योतत इति खद्योत । लोकाना बान्धवो लोकबान्धव । सुरेषु उत्तम । धाम्ना निधि धामनिधि । पद्मिनीना वल्लभ पद्मिनीवल्लभ । तमो हरतीति हरि । 'हृञ् हरणे I

[1] C $K_5$ U $W_2$ add गच्छति　[2] 'डुकृञ् करणे' C　[3] अह्नि प्राणिन चेष्टावत करोतीति अहस्कर धातु पूर्ववत् C　[4] अस्य तेजोभि मृत्काष्ठादिक बध्नाति दृढीकरोतीति C　[5] विवस्त (प्रभया $B_2$) आच्छादयतीति विवा सान्त तत् किम्, कान्ति । सा अस्यास्तीति $B_2$ C　[6] भा $D_2$ $K_3$　[7] $B_2$ C add श्यामा　[8] स्तूयत $B_2$ C　[9] Y adds बालखिल्यादिभि　[10] नान्त C　[11] दिव C, $W_2$　[12] C adds विस्तारयति　[13] वसु $K_1$ $B_2$ C add घन　[14] स्तूयते U, Y

(पा.) सूर—विभाकरा । भास्कराहस्करेत्यत्र 'कस्कादिषु' (८. ३ ४८) इति पाक्षिकसादेशात् भा करा हु करौ इत्यपि भवत । भास्वत्—रवि । [1]आदित्यनामानि ।। 'वारुणीवारुणीभूतसौरभा सौरभास्पदम्' इति दण्ड्यलङ्कारयमकपाठात् (३ १८) सूरशब्दो दन्त्यादि । 'मार्ताण्ड सविता भानुरिन [2] पूषा दिनप्रणी' इति वैजयन्ती पाठात् (पृ १७ श्लो १०) मार्ताण्डशब्दो दीर्घमध्यम । 'तपुमार्तण्डमुण्डीरपाथिपेरु [4] गभस्तय' इति वैजयन्तीपाठात् (पृ १८, श्लो १३) मार्तण्डशब्दो ह्रस्वमध्य इति केचित् । 'कुमुदाकारा इवासोढशूरभास स्थिता राजपुत्रा' इति वासवदत्ताश्लेषात् शूरशब्दस्तालव्यादि ।

'कर्मसाक्षी जगच्चक्षुरंशुमाली त्रयीतनु ।
प्रद्योतनो दिनमणि खद्योतो लोकबान्धव ।।
सुरोत्तमो धामनिधि पद्मिनीवल्लभश्च स ।
पद्मबन्धुरुष्णांशुर्मार्तण्डो जलतस्कर ।।
रश्मिमाली जगच्चक्षु ।।' एतानि च ।। २८-३० ।।

[1] सूर्य° $B_3$　[2] भानुरिति मुद्रितग्रन्थे　[3] °पाथ $B_4$　[4] °पेरु° $A_4$

**माठरः पिङ्गलो दण्डश्चण्डांशोः पारिपार्श्वकाः ।। ३१ ।।**
**सूरसूतोऽरुणोऽनूरुः काश्यपिर्गरुडाग्रजः ।**
**परिवेषस्तु परिधिरुपसूर्यकमण्डले ।। ३२ ।।**

(नि.) माठर इति—चण्डांशो सूर्यस्य[1] परिवर्तमाना यमाग्नीन्द्रा क्रमेण माठर पिङ्गल दण्ड इत्युच्यन्ते । मठरस्यापत्य पुमान् माठर । मन्यते वा । 'मन ज्ञाने' । पिङ्गलवर्णत्वात् पिङ्गल । दण्डोऽस्यास्तीति दण्ड । पारिपार्श्वगा इति वा पाठ । परित पार्श्वे वर्तन्त इति पारिपार्श्वका [3] । सूरस्य[4] सूत सूरसूत । [5]अरुणवर्णोऽस्यास्तीति

अरुण । न विद्येते ऊरू यस्य स अनूरु । कश्यपस्यापत्य पुमान् काश्यपि । काश्यप इति वा पाठ । गरुडस्याग्रजो गरुडाग्रज । सूर्यसारथिनामानि ॥ परितो विष्यतेऽनेन परिवेष[6] । 'विष्लृ व्याप्तौ'। परितो धीयतेऽनेन परिधि । 'धि[7] धारणे'। परिवेषनामनी॥ समीपे सूर्यस्य [8]प्रतिकृति उपसूर्यकम् । मण्ड्यतेऽनेन मण्डलम् । 'मडि भूषाया व्याप्तौ च'। प्रतिसूर्यनामानि । चत्वार्यपि [9]नामानि परिवेषस्यैवेति केचित् ॥ ३१-२ ॥

[1] B₁, D₁, K₅ U, W₂, Y add पार्श्वे　[2] एते शब्दा व्याख्यायन्ते B D₂　[3] पारिपार्श्विका इति वा पाठ K₅　[4] सूर्यस्य D₁, K₁, W₂　[5] अरुणवर्णत्वात् W₂　[6] C ends here　[7] 'डुधाञ् धारणपोषणयो' W₁　[8] प्रतिकृतिरूप °सूर्यमण्डलम् B₂, U, K₅　[9] B₂ K₁ omit नामानि

(पा.) माठर —पारिपार्श्विका । रथरक्षणार्थमादित्यस्य [1]पार्श्वे स्थितदेवतानामानि ॥ सूरसूतो—गरुडाग्रज । काश्यप° इति पाठान्तरम् । अनूरुनामानि ॥ परिवेषस्तु—मण्डले । परिवेषनामानि ॥ अत्र चतुर्णां मध्ये प्रथमे द्वे परिवेषनामनी, उत्तरे द्वे प्रतिसूर्यनामनी इति केचित् । परिवेषशब्दो मूर्धन्यस्तालव्यश्च[3] ।

"[4]परिवेश विजानीयादुपसूर्यकमण्डले ।
परिवेष्टनमप्याहु परिवेष मनीषिण ॥"

इति शाश्वत (पृ ११, श्लो ११८) ॥ ३१-२॥

[1] परिपार्श्वे A₁　[2] B adds गरुडाग्रज　[3] A₁ adds भवति　[4] परिवेषमिति मुद्रितग्रन्थे

**किरणोस्रमयूखांशुगभस्तिघृणिपृश्नयः ।**
**भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम् ॥ ३३ ॥**

(वि.) किरणेति—तम कृणातीति किरण । 'कॄ हिंसायाम्'। आपो वसन्त्यत्र उस्र । 'वस निवासे'। [1]मिनोति [2]अवक्षिपति तम इति मयूख । 'डुमिञ् प्रक्षेपणे'। अश्नुते अंशु । 'अशू व्याप्तौ'। गा [3]दिश बिभर्ति दीपयति गभस्ति । 'भस भर्त्सनदीप्त्यो'। जिघर्ति [4]हरति जलमिति घृणि । 'घृ क्षरणदीप्त्यो'। दीप्यत इति वा । स्पृशतीति[5] पृश्नि । वृष्टिरिति पाठपक्षे वर्षतीति वृष्टि । वृष्णिरिति पाठपक्षे वर्षति क्ष्मामिति वृष्णि । 'वृष सेचने'। घृष्यत इति [6]घृष्णि । 'घृष [7]सघर्षे'। इति बहव पाठा [8]अवधारणीया । भातीति भानु । 'भा दीप्तौ'। तम कृणातीति कर । 'कॄ हिंसायाम्'। भुवि कीर्यत वा । 'कॄ विक्षेपे'। तमो म्रियतेऽनेन [9]मरीचि । स्त्रीपुसयो । [10]दीधीते दीप्यते दीधिति । 'दीधीङ् दीप्तिदेवनयो'। रश्मिनामानि॥ ३३॥

[1] $D_1$ adds दीप्त्या [2] अथ क्षिपति $K_s$ [3] भुव $B_2$, $D_1$, I, $K_5$, $W_2$
[4] दीपयति $B_2$, $K_s$, Y [5] $B_1$, $K_5$ add क्ष्माम् [6] घृष्टि A, $B_1$, $K_5$, $W_1$
[7] सधर्पणे U [8] आदरणीया $D_2$, I, $K_s$, $W_1$ [9] मरीची $B_1$, $D_1$, I, U add
'मृङ् प्राणत्यागे' [10] दीधीयते दीप्यतेऽनेन $K_5$ U

(पा.) किरणोस्र—स्त्रियाम् । किरणनामानि ॥ ३३ ॥

**स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः ।**
**रोचिः शोचिरुभे क्लीबे प्रकाशो द्योत आतपः ॥ ३४ ॥**

(वि.) स्युरिति—प्रभातीति प्रभा[1] । रोचते रुक् । रुचिश्च । 'रुच दीप्तौ' । त्वेपते[2] त्विट् । 'त्विष दीप्तौ' । भाति भा[3] । 'भा दीप्तौ' । भासते भा[4] । सकारान्त । 'भासृ दीप्तौ' । [5]छविरुक्ता । द्युतिश्च । दीप्यत इति दीप्ति । 'दीपी दीप्तौ' । रोचत इति रोचि । रुचिश्च[6] । शुच्यते शोचि । 'शुचिर् पूतीभावे' । उभे क्लीबे । दीप्तिनामानि ॥ [7]प्रकाशते प्रकाश । 'काशृ दीप्तौ' । द्योतते द्योत । 'द्युत दीप्तौ' । आ समन्तात् तपति इत्यातप । 'तप सतापे' । आतपनामानि ॥ किरणादीनि आतपान्तानि नामानि [8]रश्मीनामेवेति केचित् ॥ ३४ ॥

[1] $D_1$, I add 'भा दीप्तौ' [2] यथा A, $B_1$, I, $K_s$ [3] आकारान्तस्त्रीलिङ्ग $B_2$ [4] स्त्रीलिङ्ग Y [5] छ्यति नाशयत्यसार छवि, 'छो छेदने', द्योतत इति द्युति, 'द्युत दीप्तौ' Y [6] 'रुच दीप्तौ' $B_2$ $D_1$, $K_s$ $W_1$, Y [7] प्रकर्षेण काशते $B_2$ [8] रश्मिनामानीति $B_2$, I, $K_5$ $W_1$, Y

(पा.) स्यु प्रभा—दीप्तय ।

'जृम्भारम्भप्रविततदलोपान्तजालप्रविष्टै-
र्भाभिर्भानोर्नृपतय इव स्पृश्यमाना विबुद्धा[1] ।'

इति वेणीसहारे (२ ७) भा शब्दस्य पुस्त्व दृष्टम् । रोचि —आतप । प्रकाशनामानि । 'भल्यातिपालिकावलिकलशिवेशित्विषि[2] वासे.' (?) इत्यरुणदत्तलिङ्गानुशासने त्विषि-शब्दो दृष्ट । 'इन्दु विनान्यस्य न [3]विद्यते द्युत्' इति धर्मशर्माभ्युदये (१ १६) द्युत्-शब्दो दृष्ट ॥ ३४ ॥

[1] विबुद्धे $B_3$ [2] °कल्शीवेशी° $B_3$ [3] दृश्यते इति मुद्रितग्रन्थे

**कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति ।**
**तिग्मं तीक्ष्णं खरं तद्वन्मृगतृष्णा मरीचिका ॥ ३५ ॥**

## इति दिग्वर्गः

(वि.) कोष्णमिति—किंचिद् उष्णं कोष्णम् । ईषदुष्णं कवोष्णम् । मन्दं च तदुष्णं च मन्दोष्णम् । [1]किंचिदुष्णं कदुष्णम् । ईषदुष्णनामानि ॥ एषां धर्ममात्रे क्लीबत्वम् । [2]धर्मिवृत्तित्वे अभिधेयलिङ्गत्वम् । तेजयतीति तिग्मम् । 'तिज निशातने'[3] । तीक्ष्णं च । खनतीति खरम् । 'खनु अवदारणे' । खुरमिति वा पाठः । खुरतीति खुरम् । 'खुर [4]छेदने' । अत्युष्णनामानि[5] ॥ मृगाणां तृष्णास्ति[6] अस्यामिति मृगतृष्णिका । म्रियन्ते मृगा अनयेति मरीचिका । 'मृङ् प्राणत्यागे' । जलवत्प्रतीयमानसूर्यरश्मिनामनी ॥ ३५ ॥

इति श्रीलिङ्गयसूरिविरचितायाममरकोशपदविवृतौ दिग्वर्गविवृतिः

[1] मनागुष्णम् $B_1$, $K_5$, Y [2] धर्मिणि त्रिलिङ्गत्वम् $B_2$, $K_5$, U, Y. [3] $D_1$ adds क्षमायां च [4] भेदने A, $B_1$, T, $K_1$ [5] तद्वदिति धर्मे क्लीबत्वं, धर्मिणि त्रिलिङ्गत्वम् I, U, $W_2$ [6] $B_2$, $D_2$, I, $K_1$, $K_2$, $K_6$ omit अस्त्यस्यामिति

(पा.) कोष्ण—तद्वति । [1]कोष्णादयोऽल्पोष्णवाचकाः, ते गुणे [2]नपुंसकलिङ्गाः गुणिनि तु [3]त्रिलिङ्गा भवन्ति । तिग्म—तद्वत् । तिग्मादयोऽत्युष्णवाचकाः तद्वदिति कोष्णादय इव गुणे नपुंसकलिङ्गा गुणिनि त्रिलिङ्गा भवन्ति ॥ मृगतृष्णा मरीचिका । सलिलवत्प्रतीयमानरविकिरणनामनी । आन्ध्रभाषायां 'वडमावुलु' ॥ ३५ ॥

इति श्रीवत्सनृसिंहसूरिसुतमल्लिनाथ[4]विरचितेऽमरपदपारिजाते दिग्वर्गः

[1] एतान्यल्पोष्णनामानि $B_2$, $B_1$ [2] नपुंसकानि $B_3$ [3] त्रिलिङ्गानि $B_3$ [4] मल्लिकार्जुन $A_1$

---

## ४. कालवर्गः

**कालो दिष्टोऽप्यनेहापि समयोऽप्यथ पक्षतिः ।**
**प्रतिपद् द्वे इमे स्त्रीत्वे तदाद्यास्तिथयो द्वयोः ॥ १ ॥**

(नि.) काल इति—[1]कल्यते सख्यायते काल । 'कल सख्याने[2]' । [3]कलयति प्रेरयति वा काल । 'कल किल क्षेपे' । दिश्यते दिष्ट । 'दिश अतिसर्जने' । न ईहत इति अनेहा[4] । 'ईह चेष्टायाम्' । न हन्यते वा । सान्त [5]पुमान् । [6]कर्मणि समेति समय । 'इण् गतौ' । कालनामानि ॥ पक्षस्य मूल प्रारम्भदिन पक्षति । प्रतिपद्यते उपक्रम्यतेऽनया प्रतिपत् । '[7]पद गतौ' । पक्षप्रथमदिवसनामनी ॥ तन्यते [8]षष्टिघटिकादिभिरिति तिथि । 'तनु विस्तारे' । प्रतिपत्प्रभृति पञ्चदशीपर्यन्ततिथिनामानि[9] ॥ १ ॥

[1] काल्यते B₂ U [2] A, B₁, T add द्विस्विसंशयो [3] कालयति K₁ [4] ईहत इति ईहा, ईहा न भवतीति नेहा, नेहा न भवतीति अनेहा, इयदपि हन्यते ईहा, ईहा न भवतीति अनहा, द्वयोर्नञो प्रकृतार्थप्रतिपादकत्वेन हन्यमान इत्यर्थ B₂ [5] पुलिङ्ग U. [6] कर्मणा I, U [7] पद्ल A, Y [8] °घटिकाभि K₁, W₂ Y [9] °पर्यन्त दिवसनामानि B₂ K₃, W₂

(पा.) कालो समयोऽपि । कालनामानि । [1]अनेहेत्यादन्त पदम् । अन्यत्र अनेहसौ अनेहस । हे अनेह इत्यादि ॥ अथ पक्षति —स्त्रीत्वे । प्रतिपन्नामनी ॥ तदाद्यास्तिथयो द्वयो । आद्यशब्देन पक्षत्यादीनामेव ग्रहणम् । ताश्च[2] पञ्चदशतिथिशब्दवाच्या । स तिथिशब्दोऽपि स्त्रीपुसलिङ्ग ॥ १ ॥

[1] A₁ adds अनेहेत्यत्र 'ऋदुशन—' (७ १ ९४) इत्यादिनानङादेशोऽसवुद्धौ
[2] A₁ adds पक्षत्यादय

**घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ ।**
**प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्युषसी अपि ॥ २ ॥**
**व्युष्टं विभातं द्वे क्लीबे पुंसि गोसर्ग इष्यते ।**
**प्रभातं च दिनान्ते तु सायः संध्या पितृप्रसूः ॥ ३ ॥**

(वि.) घस्र इति—तमो घसतीति[1] घस्र । 'घस्लृ अदने' । तमो द्यतीति दिनम् । 'दो अवखण्डने' । सूर्येण न हीयते अह । 'ओहाक् त्यागे' । दीव्यन्ति देवा[2] अस्मिन्निति दिवस । 'दिवु क्रीडादौ' । वसन्ति व्यवहर्तार अस्मिन्निति वासर । 'वस निवासे' । [3]दिवसनामानि ॥ प्रत्यूषति निशामिति प्रत्यूष । 'ऊष रुजायाम्' । अह्नो मुखम् अहर्मुखम् । कलयति मङ्गल कल्यम् । 'कल सख्याने' । काले[4] साधु काल्यम् इति वा पाठ । ओषत्यन्धकारमिति[5] उष । प्रत्युषश्च । 'उष प्लुष दाहे' । [6]भातु प्रवृत्त प्रभातम् । 'भा दीप्तौ' । सूर्योदयात् प्राक् घटिकाचतुष्टयात्मकस्य कालस्य नामानि ॥

दिनं स्यतीति [7]साय । 'षोऽन्तकर्मणि'। दिनस्य पश्चाद्भागे मुहूर्तत्रयात्मककालनाम ॥ सम्यग् ध्यायन्त्यत्रेति[8] सध्या । 'ध्यै चिन्तायाम्'। अहोरात्रसधौ भवा वा । पितृणा प्रसू माता पितृप्रसू । दिनान्तादुपरि घटिकात्रयात्मकस्य[9] सूर्योदयात् प्राक् पञ्चघटिकात्मकस्य च कालस्य नामानि ॥ २–३ ॥

[1] $B_2$ adds व्यययति  [2] देहा $D_2$  [3] दिन° $K_3$  [4] कालेन साम्य $W_2$
[5] $B_1$, $K_5$ $W_2$ Y add उपरमयति  [6] प्रमातु $W_1$  [7] $B_1$ adds समापयति, दिनम् अन्तयति समापयतीति दिनान्त $B_2$  [8] °अस्या विमेरिति वा सध्या, अर्कोदयास्तमयकाल Y
[9] घटिकात्मकस्य A $W_3$ सूर्यास्तमयात् प्राक् $D_2$

(पा.) घस्रो—वासरौ। दिवसनामानि ॥ प्रत्यूषो—प्रभात च । सूर्योदयात् प्राग् घटिकाचतुष्टयात्मककालनामानि । [1]वैजयन्त्या प्रत्यूषशब्दो नपुसकलिङ्ग इति प्रतिज्ञातम् । 'व्युष्ट विभात प्रत्यूष सायात्रिकमहर्मुखम्' इति (प्र २२, श्लो ६८)। शाश्वतकोशे काल्यशब्दो ह्रस्वादि । 'कल्य प्रभातमध्ये[3] च कल्यो नीरोगदक्षयो ' इति (प्र ३, श्लो ७४)। 'गोपीथो गोसर्गस्त्रिघोष कथ्यते निशान्तश्च' एतानि च ॥ दिनान्ते तु सायम्। दिवसावसाननाम । सायमिति नपुसकत्वेन निर्दिष्टम्। 'सायमण्डनमभिरनरयन्त्य ' इति । सध्या पितृप्रसू । दिनान्तादुपरि घटिकात्रयात्मकस्य सूर्योदयात् प्राक् पञ्चघटिकात्मकस्य च कालस्य नामनी । सधाशब्दोऽप्यस्ति । 'सधा सध्या पितृप्रसू ' इति वैजयन्ती (प्र २२, श्लो ६९) ॥ २–३ ॥

[1] वैजयन्तीकारेण $A_1$  [2] कल्य° $B_1$  [3] प्रभात सज्ञित $B_1$ मुद्रितप्र ये च

**प्राह्णापराह्णमध्याह्नास्त्रिसध्यमथ शर्वरी ।**
**निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा ॥ ४ ॥**
**विभावरीतमस्विन्यौ रजनी यामिनी तमी ।**

(वि.) प्राह्ण इति—अह्न प्रान्ते[1] भव प्राह्ण । अह्न अपरो भाग अपराह्ण । अह्नो मध्यो भाग मध्याह्न । एते त्रय समाहृता त्रिसध्य भवति। तिसृणा सध्याना समाहार त्रिसध्यम् ॥ शृणाति [2]लोकचक्षूषीति शर्वरी । 'शॄ हिसायाम्'। नितरा श्यतीति सर्वचेष्टा [3]निशा । निशीथोऽस्त्यस्यामिति[4] निशीथिनी । राति ददाति सुखमिति रात्रि । 'रा दाने'। त्रयो यामा [5]यस्या सा त्रियामा । विश्रमाय क्षणमवसर[6] ददातीति क्षणदा । 'दा दाने'। क्षपयति आयुरिति क्षपा। 'क्षि क्षये'। तमसावृतत्वात् [7]विभावरी । तमोऽस्यामस्तीति तमस्विनी । तमसा [8]रज्यत इति रजनी । 'रञ्ज रागे'।

यामा अस्या सन्तीति यामिनी। तमयति चक्रवाकान् तमी। 'तमु ग्लानौ'। तमा इति वा पाठ। रात्रिनामानि ॥ ४ ॥

[1] प्रारम्भ $B_1$, $D_1$ I, $K_5$ $W_2$ [2] सर्वचेष्टा $W_2$ [3] नितरामस्या शेरत इति निशा। 'शीङ् स्वप्न'। नितरामस्यति निरस्यति सर्वचेष्टा इति वा निशा। 'अस निरसने' $B_2$, $D_1$, $W_1$ add 'शो तनूकरणे' [4] अस्या $W_1$ [5] यस्या $D_1$ [6] अवकाश A, $B_1$, T, U [7] भाभि व्रियत इति भावरी, भावरी न भवतीति विभावरी, 'वृञ् वरणे', भा कान्ति, न विद्यते भा यस्य तत् विभ तम, तत्र विभेन आ समन्तात् व्रियत इति विभावरी वा $B_2$ [8] रञ्जयति $B_1$, $D_1$, I, $K_5$, $W_2$

(पा.) प्राह्ण—त्रिसन्ध्यम्। प्राह्ण इति पूर्वाह्ण[1]। अपराह्ण इति सायाह्न[1]। मध्याह्न इति [2]मध्यदिनपर्याय। एतेषा त्रयाणा[3] समाहारस्त्रिसन्ध्यम्। त्रिसन्ध्यी इति च कतिचित् [4]कथयन्ति। समाहारस्यैकत्वाद् [5]एकवचनम्॥ अथ शर्वरी—तमी। 'तमासिता विरात्र स्याद् वासुरा यामिनी तमी' इति रभसकोशपाठात् तमा इत्यपि भवति। रात्रिनामानि ॥ ४ ॥

[1] $A_1$ adds पर्याय [2] दिनमध्य° $B_3$ [3] $B_3$ adds सध्याना [4] $B_3$ $B_4$ omit [5] $A_1$ adds पक्षद्वयेऽपि

**तमिस्रा तामसी रात्रिर्ज्यौत्स्नी चन्द्रिकयान्विता ॥ ५ ॥**
**आगामिवर्तमानाहर्युक्तायां निशि पक्षिणी।**

(वि.) तमिस्रेति—तमोऽस्त्यस्यामिति[1] तमिस्रा। तमोबहुला [2]तामसी। तमोयुक्तरात्रिनामनी॥ ज्योत्स्ना अस्त्यस्यामिति [3]ज्यौत्स्नी। ज्योत्स्ना ज्योत्स्नीति वा पाठ। चन्द्रिकायुक्तरात्रिनाम॥ उभयाह्नी पक्षाविव यस्या सा पक्षिणी। [4]उभयत अहोयुक्तरात्रिनाम॥ ५ ॥

[1] अस्या A, $B_1$, T [2] तमसा समूह तामसम्, तदस्यास्तीति तामसी $B_2$ [3] ज्योत्स्नी, आगामीतोऽस्यति $B_1$, I, $K_5$, $W_2$, $K_5$ omits 4 lines [4] उभयाह्नो° $D_1$, I, $W_2$, उभयत्राहोयुक्तनिशानाम $W_1$

(पा.) तमिस्रा—रात्रि। तमोयुक्तरात्रिस्तमिस्रा स्यात्। ज्योत्स्नी चन्द्रिकयान्विता। चन्द्रिकायुक्तरात्रिर्ज्योत्स्नी स्यात्। 'पूर्णेन्दुस्तु दिनमन्या'। पूर्णचन्द्रयुक्तरात्रिर्दिनंमन्या स्यात्। आगामि—पक्षिणी। पक्षद्वयवदुभयतोऽस्त्यह्न सयुक्ता रात्रि पक्षिणी स्यात्॥ ५ ॥

**गणरात्रं निशा बह्व्यः प्रदोषो रजनीमुखम् ॥ ६ ॥**
**अर्धरात्रनिशीथौ द्वौ द्वौ यामप्रहरौ समौ ।**

(वि.) गणरात्रमिति—रात्रीणां गणो[1] गणरात्रम् । [2]गणरात्रो वा । समाहारे नपुंसकम् । रात्रिसमूहनाम ॥ प्रकृष्टो दोषः [3]प्रारब्धा दोषा वा अत्रेति प्रदोषः । [4]रजनीमुखनाम ॥ रात्रेरर्धम् अर्धरात्रः । नियतं शेरतेऽत्र[5] निशीथः । 'शीङ् स्वप्ने' । [6]मध्यरात्रनामनी ॥ यातीति यामः । 'या प्रापणे' । प्रह्रियत इति प्रहरः[7] । 'हृञ् हरणे' । दिनस्य रात्रेर्वा चतुर्भागनामानि ॥ ६ ॥

[1] B₁, W₂ add समूहः　[2] W₂ omits　[3] प्रारब्ध B₁　[4] B₂ adds रजन्या मुखं रजनीमुखम्, एतत् प्रदोषकालनाम B₂ K₃ W₂　[5] A adds प्राणिनः　[6] मध्यरात्रि° A, B₁ D₂ W₁　[7] प्रकर्षेण ह्रियते° A.

(पा.) गणरात्रं निशा बह्व्यः । रात्रिसमूहः गणरात्रं स्यात् । अथवा बह्व्यः [1]रात्रयो गणरात्रमित्युच्यते । चिररात्रमपि [2]तन्नाम । 'बह्व्यस्तु गणरात्रं च चिररात्रं च रात्रयः' इति वैजयन्ती (पृ २१, श्लो ५९) । प्रदोषो रजनीमुखम् । [3]रात्रिमुखनाम ॥ अर्धरात्रनिशीथौ द्वौ । रात्रिमध्यनामनी । 'मध्यरात्रो [4]महारात्रिः' । एते च । द्वौ—समौ । दिनस्य रात्रेर्वा तुरीयांशनामनी ॥ ६ ॥

[1] निशा A₁　[2] B₂ omits　[3] रात्रेर्मुखं प्रदोषः स्यात् A₁　[4] महारात्री A₁

**स पर्वसंधिः प्रतिपत्पञ्चदश्योर्यदन्तरम् ॥ ७ ॥**
**पक्षान्तौ पञ्चदश्यौ द्वे पौर्णमासी तु पूर्णिमा ।**
**कलाहीने सानुमतिः पूर्णे राका निशाकरे ॥ ८ ॥**

(वि.) स इति—प्रतिपत्पञ्चदश्योर्यदन्तरं स संधिः, पर्व वा भवति । संधी यते[1] संधिः । पृणाति पालयति [2]अभिलषितमिति [3]पर्व । 'पॄ पालनपूरणयोः' । पर्वसंधिरिति एकं पदं वा । [4]शुक्लकृष्णपक्षान्तौ द्वे पञ्चदश्यौ भवतः । पञ्चदशसंख्यायाः पूरणी पञ्चदशी । पूर्णश्चासौ माश्च पूर्णमाः, पूर्णमसः चन्द्रस्येयं पौर्णमासी । पूर्णो मासोऽस्यामिति वा । 'पूर्णं मिमीते पूर्णिमा । 'माङ् माने' । पूर्यते मासः अनयेति वा । 'पूरी आप्यायने' । [7]शुक्लपञ्चदशीनामानि ॥ अनुमन्यते [8]अनुमतिः । 'मन ज्ञाने' । [9]चतुर्दशीमिश्रितपूर्णिमानाम ॥ यज्वभिः रायते राका । 'रै शब्दे' । राति ददाति [10]अभिलषितमिति वा । 'रा दाने' । [11]संपूर्णचन्द्रवत्पूर्णिमानाम ॥ ७–८ ॥

[1] 'डुधाञ् धारणपोषणयोः' $D_1$. [2] अभिलक्षितं $W_2$, अभिमतम् A. [3] पृणाति ददाति देवेभ्यो हविरिति वा $B_1$, $K_5$, $W_2$, Y. [4] शुक्लपक्ष° A. [5] $B_2$, $D_1$ add चन्द्रः; तस्येयं तिथिरिति पौर्णमासी I. [6] पूरणं पूर्णं $W_1$. [7] T adds पक्ष. [8] कलाहीने चन्द्रे कलामात्रहीने सति चन्द्रे या पूर्णिमा सा अनुमतिरित्यर्थः $B_2$, $K_5$, $W_2$, Y. [9] कलाहीनचन्द्रयुक्तपूर्णिमानाम $B_2$, I. [10] शुभम् Y; सुखम् $W_2$ [11] °चन्द्रमिश्रित° A, $B_1$, T.

(पा.) स पर्व—यदन्तरम्। प्रतिपत्पञ्चदश्योरन्तरालकालः पर्वसंधिरित्युच्यते। पक्षान्तौ—द्वे। [1]पौर्णमास्यमावास्ययोर्नामनी॥ 'पर्वणी पञ्चदश्यौ द्वे पक्षान्तौ नन्दिवर्धनौ' इति वैजयन्ती (पृ. २३, श्लो. ७३)। पौर्णमासी तु पूर्णिमा। [2]शुक्लपञ्चदशीनामनी॥ पूर्णमासी च भवति। 'पूर्णा च पूर्णमासी च पौर्णमासी च पूर्णिमा[3]' इति वैजयन्ती (पृ. २३, श्लो. ७३)। कलाहीने—निशाकरे। यस्यां चन्द्रः कलाहीनः [4]स्यात सा पूर्णिमा अनुमतिः स्यात्। यस्यां पूर्णश्चन्द्रः[5] सा राकेत्युच्यते। अनुक्तम्—'चैत्री तु मदनध्वजा'। पौषीमाघीप्रभृतयस्तत्तन्मासपूर्णिमासु॥ ७–८॥

[1] वक्ष्यमाणपञ्चदश्यौ द्वे पक्षान्तौ स्याताम् $A_1$. [2] पूर्णिमा° $A_1$. [3] पूर्णिका इति मुद्रितपुस्तके [4] चेत् $A_1$. [5] पूर्णचन्द्रः $A_1$.

**अमावास्या त्वमावस्या दर्शः सूर्येन्दुसंगमः।**
**सा दृष्टेन्दुः सिनीवाली सा नष्टेन्दुकला कुहूः॥ ९॥**

(वि.) अमावास्येति—चन्द्रार्कौ [1]अमा सह वसत. अत्रेति अमावास्या[2] अमावस्या च। दृश्येते सूर्याचन्द्रमसावत्रेति दर्शः। 'दृशिर् प्रेक्षणे'। सूर्येन्दू संगच्छेते अत्रेति सूर्येन्दुसंगमः। 'गम्लृ सृप्लृ गतौ'। कृष्णपञ्चदशीनाम॥ वालते चलतीति [3]वालः। 'वाडृ आप्लाव्ये'। वालेन चन्द्रेण सिनी सिता सिनीवाली। दृष्टचन्द्रदर्शनाम॥ कुहयते विस्मापयति तमसा कुहूः। 'कुह विस्मापने'। तमसा कुं भुवं हन्तीति वा[4]। नष्टचन्द्रदर्शनाम॥ ९॥

[1] *अमा इत्यव्ययं, सहार्थकं च। वा रिक्ते। वा अमा स्यात्, अमेति वा स्यादित्यर्थः $B_2$.* [2] $D_1$, I, $W_1$ add 'वस निवासे'. [3] चन्द्र इत्यर्थः $B_2$ [4] $B_2$, $D_1$, Y add 'हन हिंसागत्योः'.

(पा.) अमावास्या—संगमः। कृष्णपञ्चदशीनामानि॥ अमावासी, अमावसी इत्यपि स्यात्। 'दर्शोऽमावास्यमावसी' इति वैजयन्ती (पृ. २२, श्लो. ७०)। अमावसे-

त्यप्यस्ति । 'अमावास्या त्वमावसा'[1] इति वैजयन्ती (पृ. २२, श्लो. ७१) । सा दृष्टेन्दुः सिनीवाली । [2]सा अमावसा दृष्टचन्द्रा चेत् सिनीवालीत्युच्यते[3] । सा लक्ष्मीरस्यामस्तीति सिनी चन्द्रकला । सा वाला अस्यामिति सिनीवालीति व्युत्पत्त्या दन्त्यादिः । सा नष्टेन्दुकला कुहूः । सा[1] अमावसी नष्टेन्दुकला चेत् कुहूरित्युच्यते ॥ ९ ॥

[1] अमवसा $B_3$. [2] दृष्टेन्दुदर्शनाम $B_3$, $B_4$. [3] शब्द्यते $A_1$. [4] नष्टेन्दुदर्शनाम $B_2$

उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च ।
सोपप्लवोपरक्तौ द्वावग्न्युत्पात उपाहितः ॥ १० ॥
एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ ।

(वि.) उपराग इति—उपरज्येते सूर्याचन्द्रमसावनेनेति उपरागः । 'रञ्ज रागे' । गृह्येते सूर्याचन्द्रमसावनेन ग्रहः । 'ग्रह उपादाने' । ग्रहणनामनी ॥ उपप्लवेन सहितः सोपप्लवः । उपरज्यते उपरक्तः । राहुग्रस्ते इन्दौ पूष्णि च द्वौ शब्दौ वर्तेते । [1]अग्नेरुत्पातः अग्न्युत्पातः । उप समीपे [2]आहितमत्र उपाहितः । [3]धूमकेतुनाम ॥ [4]पुष्पं विकासः तद्वन्तौ पुष्पवन्तौ । सूर्याचन्द्रमसोः पृथङ्नाम ॥ १० ॥

[1] अग्निना कृतः उत्पातः $B_1$, $K_5$, $W_2$ [2] आहितम् $B_1$, $D_1$. [3] धूमकेत्वादि° $B_2$. [4] पुष्पवद् विकासः $K_1$.

(पा.) उपरागो ग्रहः । ग्रहणनामनी ॥ राहुग्रस्ते—द्वौ । राहुग्रस्तचन्द्रसूर्यनामनी ॥ अग्न्युत्पात उपाहितः । धूमकेतुनाम ॥ एकयोक्त्या—निशाकरौ । एकयोक्त्या [1]सूर्याचन्द्रमसौ [2]पुष्पवन्ताविति कथ्येते ।

'जातौ स्वकिरणसञ्चयपटावृतौ वियति पुष्पवन्तौ सन्तौ ।
बाणासनौ च घनरवपटावृतौ वियति पुष्पवन्तौ सन्तौ ॥'

इति हरिप्रबोधयमके ॥ पुष्पदन्तावपि भवतः । 'प्राक्प्रत्यग्धरणीधरशिखरस्थितपुष्पदन्ताभ्याम्' इति धर्मशर्माभ्युदये ॥ १० ॥

[1] सूर्यचन्द्रौ $B_3$ [2] पुष्पवत्पदवाच्यौ भवतः $B_3$, $B_4$.

अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कला ॥ ११ ॥
तास्तु त्रिंशत् क्षणस्ते तु मुहूर्तो द्वादशास्त्रियाम् ।

(नि). अष्टादशेति—निमिषतीति निमेष[1]। ते अष्टादश काष्ठा भवति। काशत इति काष्ठा[2]। ता काष्ठा त्रिंशत् कला भवति। काल कलयतीति कला[3]। ता कला त्रिंशत् [4]क्षणो भवति। क्षिणोति हिनस्तीति क्षण। 'क्षिणु हिंसायाम्'। ते क्षणा द्वादश मुहूर्तो[5] भवति। [6]मुहुर्मुहुरियर्तीति [7]मुहूर्त। 'ऋ गतौ'॥ ११॥

[1] निमिष A, $B_1$, T, U adds 'मिष उन्मील्ने' [2] $D_2$, I, $K_1$, $W_1$ add 'काशृ दीतौ' [3] 'कल किल क्षेपे' $D_1$ [4] क्षण I [5] मुहूर्त $K_1$ [6] $W_2$ omits one मुहु [7] मुह्यतीति मुहु, इयर्ति गच्छतीत्यर्थ। आहत्य उभयधात्वर्थमेल्नात् मुहूर्तो भवति। 'मुह वैचित्ये', 'ऋ गतौ' $B_2$

(पा.) अष्टादश—काष्ठा। मनुष्याक्षिपक्ष्मपरिक्षेपकालो निमेषो निमिषश्च भवति। 'निमेषनिमिषौ कालप्रभेदेऽक्षिनिमीलने' इति विश्वप्रकाशिका (पृ १७२, श्लो १५)। निमेषा अष्टादश स्युश्चेत् काष्ठा॥ त्रिंशत्तु ता कला। काष्ठात्रिंशच्चेत् कला। तास्तु त्रिंशत् क्षण। त्रिंशत्कला क्षण। ते तु—अस्त्रियाम्। क्षणा द्वादश स्युश्चेत् मुहूर्त[1]॥ ११॥

[1] $B_3$ adds स चास्त्रियाम्

**ते तु त्रिंशदहोरात्रः पक्षस्ते दश पञ्च च॥ १२॥**
**पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ।**

(वि.) ते त्विति—ते तु मुहूर्ता त्रिंशत् अहोरात्रो[1] भवति। अह्ना सहिता[2] रात्रि अहोरात्र। तेऽहोरात्रा पञ्चदश पक्षो भवति। [3]पचति [4]भूतानि पक्ष। 'डुपचष् पाके'। [5]पक्ष्यते वा पक्ष। 'पक्ष परिग्रहे'। पूर्वापरौ पक्षौ क्रमेण शुक्लकृष्णनामकौ[6] भवत। उभौ तौ मासो भवति॥ १२॥

[1] अहोरात्र $K_2$ [2] समेता $B_1$, अह समेना $B_2$ [3] परिणामयतीत्यर्थ $B_2$ [4] $B_2$ adds शरीरादीनि [5] पक्षति गृह्णातीति वा $B_2$ [6] °नामानौ $D_2$ $K_2$ $K_5$ $W_1$

(पा.) ते तु त्रिंशदहोरात्र। मुहूर्तत्रिंशत् अहोरात्र। अत्रापि अस्त्रियाम् इति लिङ्गमन्वेति। अहोरात्र, द्विरात्र, त्रिरात्रमिति वामनलिङ्गानुशासने (पृ १३, श्लो १६) तथैवोदाहृतत्वात्॥ पक्षस्ते दश पञ्च च। अहोरात्राणि[1] पञ्चदश चेत् पक्ष॥ पक्षौ—कृष्णौ। अत्र पूर्वपक्ष शुक्लपक्ष स्यात्। अपरपक्ष कृष्णपक्षोऽपि भवति॥

मासस्तु तावुभौ । पक्षौ द्वौ चेन्मास । [2]माश दोऽपि स्यात् । 'मासौ मासनिशाकरौ' इति वैजयन्ती (पृ ७७, श्लो ६१) । मा सान्त ॥ १२ ॥

[1] अहोरात्रा $B_3$　　[2] मासि इत्यपि $A_1$

**द्वौ द्वौ मार्गादिमासौ स्यादृतुस्तैरयनं त्रिभिः ॥ १३ ॥**
**अयने द्वे गतिरुदग्दक्षिणार्कस्य वत्सरः ।**

(वि). द्वाविति—[1]मस्यति परिणमतीति मास । 'मसी [2]परिणामे' । मास [3] चन्द्रस्याय मास इति वा । इयर्तीति ऋतु । 'ऋ गतौ' । तौ [4]मार्गादिमासौ द्वौ द्वौ ऋतु भवति । तै त्रिभि ऋतुभि अयनम् । अयते यात्यनेन सूर्य दक्षिणामुत्तरा चेति अयनम् । 'अय पय गतौ' । ते द्वे अयने अर्कस्य उदग्दक्षिणागतिश्च[5] वत्सरो भवति । वसन्त्यस्मिन् ऋतव वत्सर । 'वस निवासे' ॥ १३ ॥

[1] मस्यत परिमीयतेऽनेन $K_3$ $W_2$　　[2] 'मसी परिमाणे' A, I, T　　[3] माश्चन्द्र-स्याय $B_1$ $D_1$ I, $W_2$　　[4] मासादि° $B_2$　　[5] °गती च $W_2$

(पा.) द्वौ द्वौ—ऋतु । मार्गशीर्षादिमासद्वयम् ऋतु स्यात् । तैरयन त्रिभि । ऋतुभिस्त्रयश्चेद् अयनम् । अयने—वत्सर । [1]अर्कस्य उदक् उदीच्याम्' अयन गति रुत्तरायणम् । दक्षिणा दक्षिणस्यामयन गतिर्दक्षिणायनम् । ते त्वयने वत्सर ॥ १ ॥

[1] $A_1$ adds उदगिति अस्तातिप्रत्यया तस्योदीचीशब्दस्य सप्तमी, दक्षिणा इति आच्-प्रत्यया तद्दक्षिणाशब्दस्य सप्तमी　　[2] $A_1$ adds जाता गति

**समरात्रिंदिवे काले विषुवद् विषुवं च तत् ॥ १४ ॥**
**(पुष्ययुक्ता[1] पौर्णमासी पौषी मासे तु यत्र सा ।**
**नाम्ना स पौषो माघाद्याश्चैवमेकादशापरे ॥)**
**मार्गशीर्षे सहा मार्ग आग्रहायणिकश्च सः ।**

(वि.) समेति—रात्रिश्च दिवा च रात्रिंदिवम् । [2]समं रात्रिंदिव यस्मिन् काले स समरात्रिंदिव । अस्मिन् काले[3] विषुवत् विषुव च भवत । अहोरात्रयो विषु[4] साम्यमत्रास्तीति विषुवत् । विषुव च । पुष्यनक्षत्रयुक्ता पौर्णमासी पौषी, सा यत्रास्ति मासे स नाम्ना पौष[5] । अपरे एकादश[6] माघाद्या एवमूह्या[7] । कथम् ? [8]मघानक्षत्रयुक्ता

6

पौर्णमासी माघी। सा यत्रास्ति स माघ । [9]मृगशीर्षनक्षत्रयुक्ता [10]मार्गशीर्षी, सा यस्मिन्नस्ति स मार्गशीर्ष । शीतोष्णे सहतेऽत्र सहा [11]। सान्त । 'षह मर्षणे'। [12]मृगशिरोनक्षत्रयुक्ता पौर्णमासी मार्गी, सा यत्रास्ति स मार्ग । आग्रहायणी यत्रास्ति स आग्रहायणिक । [13]मार्गशीर्षनामानि ॥ १४ ॥

[1] Verse included in most of the MSS  [2] B₂ adds समान  [3] °विषुर्भवति विषुवत् विषुव च B₂  [4] विषु इति साम्येऽव्ययम् D₁ K₅  [5] A T add मास  [6] K₃ K₈ add मासा  [7] कथनीय K₁  [8] मघनक्षत्र° A B₁ T K₁  [9] °शिरो° A B₁ T  [10] W₁ adds पौर्णमासी  [11] सहतेऽत्र सहा A, T  [12] °शीष° B₁ K₁ K₃ W₁ omit °शिर°  [13] D₂ W₂ add °मास°

(पा.) समरात्रिंदिवे—तत्। [1]समं रात्रिंदिव यस्मिन् तस्मिन्[2] काले विषुवत् विषुव च शब्दौ भवत । समकालनामनी ॥ [3]पुष्ययुक्ता—अपरे। पुष्ययुक्ता पौर्णमासी पौषी। पुष्ययुक्तपूर्णिमानाम ॥ पौषस्तन्मासनाम ॥ अपरे एकादश चैव माघाद्या माघादिपदवाच्या ॥ मार्गशीर्षे—च स । मार्गशीर्षमासनामानि ॥ १४ ॥

[1] A adds रात्रिश्च दिवा च रात्रिंदिवम्  [2] अस्मिन् A₁  [3] A₁ omits the verse पुष्ययुक्ता

**पौषे तैषसहस्यौ द्वौ तपा माघेऽथ फाल्गुने ॥ १५ ॥**
**स्यात् तपस्यः फाल्गुनिकः स्याचैत्रे चैत्रिको मधुः ।**

(नि.) पौष इति—पौषी यत्रास्ति पौष, तैषी यत्रास्ति तैष । सहोऽस्यास्तीति [1]सहस्य । [2]पौषमासनामनी ॥ स्नानादिना पाप तपत्यत्रेति [3]तपा । सान्त । 'तप संताप'। मा न [4]विद्यमानम् अघमस्मिन्निति माघ । माघी अत्रास्तीति वा। माघमासनामनी ॥ [5]फाल्गुनी अत्रास्तीति फाल्गुन । फाल्गुनिकश्च। तपसि साधु तपस्य । फाल्गुनमासनामानि ॥ [6]चैत्री अत्रास्तीति चैत्र । चैत्रिकश्च[7]। मधुना पुष्परसेन योगान्मधु । [8]मधुर्वसन्तोऽत्रास्तीति वा मधु । चैत्रमासनामानि ॥ १५ ॥

[1] सहसि साधु U  [2] पुष्यमास° B₂ D₁ K₈ W₂  [3] तप अस्त्यस्मिन्निति D₁ K₈ तपति अस्मिन् B₂  [4] अविद्यमानम् B₁ U W₂  [5] फल्गुनीयुक्ता पूर्णिमा B₂  [6] चित्रानक्षत्रयुक्ता पूर्णिमा B₂  [7] चैत्रकश्च A  [8] B₁ omits one line

(पा.) पौषे—द्वौ । पौषमासनामनी ॥ तपा माघे । माघमासनामनी ॥ अथ—फाल्गुनिक । फाल्गुनमासनामनी ॥ स्यात्—मधु । चैत्रमासनामानि ॥ १५ ॥

**वैशाखे माधवो राधो ज्येष्ठे शुक्रः शुचिस्त्वयम् ॥ १६ ॥**
**आषाढे श्रावणे तु स्यान्नभाः श्रावणिकश्च सः ।**

(वि.) वैशाख इति—वैशाखी अत्रास्तीति वैशाख । मधौ साधु माधव । राधी अत्रास्तीति राध । [1]वैशाखनामानि ॥ [2]ज्येष्ठी अत्रास्तीति ज्येष्ठ[3] । शोचयति तापेन[4] प्राणिन इति शुक्र । 'शुच शोके' । ज्येष्ठमासनामनी ॥ जनान् तापेन शोचयतीति शुचि । आषाढाभियुक्ता पौर्णमासी आषाढी । सा अत्रास्तीति आषाढ । आषाढमासनामनी ॥ श्रावणी अत्रास्तीति श्रावण । श्रावणिकश्च । न बभस्ति न भाति मेघै नभा । 'भस भर्त्सनदीप्त्यो' । न भासते मेघैरिति वा । 'भास् दीप्तौ' । तपोऽत्र [5]नभ्यते नहयतीति वा नभा[6] । सान्त । नभोऽत्राभिभवतीति वा । 'णभ हिंसायाम्' । [7]श्रावणनामानि ॥ १६ ॥

[1] A, $B_2$ $D_1$, I, $W_2$ add °मास°   [2] ज्येष्ठायुक्ता पूर्णिमा ज्येष्ठी $B_2$   [3] ज्यैष्ठ $K_3$ $W_1$   [4] तापयति $B_2$   [5] नमते A, $B_1$, T   [6] मातीति भा, स न भवतीति नभा $B_2$   [7] $D_2$, $K_2$, U, $W_2$ add °मास°

(पा.) वैशाखे—राध । वैशाखमासनामानि ॥ ज्येष्ठे शुक्र । ज्येष्ठमासनामनी ॥ शुचिस्त्वयम् आषाढे । आषाढमासनामनी ॥ श्रावणे—स । श्रावणमासनामानि ॥ १६ ॥

**स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः ॥ १७ ॥**
**स्यादाश्विन इषोऽप्याश्वयुजोऽपि स्यात्तु कार्त्तिके ।**
**बाहुलोर्जौ कार्त्तिकिको हेमन्तः शिशिरोऽस्त्रियाम् ॥ १८ ॥**

(वि.) स्युरिति—नभसि साधु नभस्य । [1]प्रोष्ठपदी अत्रास्तीति [2]प्रोष्ठपद । [3]भद्राभ्या युक्ता [4]पौर्णमासी भाद्री । सा अत्रास्तीति भाद्र । [5]भाद्रपदी अत्रास्तीति भाद्रपद । [6]भाद्रपदनामानि ॥ अश्विनीनक्षत्रयुक्ता पौर्णमासी आश्विनी । सा अत्रास्तीति आश्विन । [7]दीक्षितैरिष्यत इति इष । 'इषु इच्छायाम्' । [8]आश्वयुजी अत्रास्तीति आश्वयुज । आश्वयुजमासनामानि ॥ कार्त्तिकी अत्रास्तीति कार्त्तिक । कार्त्तिकिकश्च । [9]बाहुली अत्रास्तीति बाहुल । [10]ऊर्जमत्रमास्तीति उर्ज । कार्त्तिकमासनामानि ॥ हिमेन हन्तीति हेमन्त[11] । हेमन्तर्तुनाम ॥ शीतेन गात्राणि शिनोति तनूकरोतीति शिशिर । 'शिञ् निशातने' । शिशिरर्तुनाम ॥ १७—१८ ॥

[1] प्रोष्ठपदायुक्ता पूर्णिमा प्रोष्ठपदा A   [2] प्रौष्ठपद $W_1$   [3] भद्रया युक्ता $K_3$ U, $W_2$   [4] पूर्णिमा $B_2$ $D_2$   [5] भाद्रपदायुक्ता(पौर्णमासी U) भाद्रपदी $B_1$ $K_3$

[6] $D_2$, $K_1$, $K_3$, $K_5$, U, $W_1$ add °मास° [7] $B_2$, $W_2$ omit दीक्षितै [8] अश्वयुग्युक्ता आश्वयुजी $D_1$ [9] बहुलायुक्ता पौर्णमासी बाहुली $B_1$, $D_1$, I, $K_5$ [10] ऊर्क् बलमन्नेति ऊर्जं $B_2$ [11] 'हन हिंसागत्यो' $B_2$, $D_1$

(पा.) स्यु—समा । भाद्रपदमासनामानि ॥ स्यादाश्विन—अपि । आश्वयुजमासनामानि ॥ स्यात्तु—कार्त्तिकिक । कार्त्तिकमासनामानि ॥ हेमन्त । हेमन्तर्तुनाम । शरदत्ययहिमागमादिशब्दा कविप्रयुक्ता । 'पतितमेव हिमागममङ्गिना वपुषि कान्तिहर शरदत्यये' । 'तपेन वर्षा शरदा हिमागमो वसन्तलक्ष्म्या शिशिर समेत्य च' । (शिशु १ ६६) इत्यादि ॥ शिशिरोऽस्त्रियाम् । शिशिरर्तुनाम ॥ १७–१८ ॥

**वसन्ते पुष्पसमयः सुरभिर्ग्रीष्म ऊष्मकः ।**
**निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः ॥ १९ ॥**

(वि.) वसन्त इति—[1]वसन्त्यस्मिन् [2]सुखं वसन्त । 'वस निवासे' । पुष्पाणा समय पुष्पसमय । सुष्ठु [3]रभते आह्लादन कर्तुमारभतेऽत्र सुरभि । 'रभ राभस्ये' । वसन्तऋतुनामानि ॥ जल गिरतीति ग्रीष्म । 'गॄ निगरणे' । ऊष्माण करोतीति ऊष्मक [4] । [5]निदह्यते जनोऽत्र निदाघ । 'दह भस्मीकरणे' । उष्णस्योपगम उष्णोपगम । ओषति तापेनेति उष्ण । 'उष प्लुष दाहे' । ऊष्मण आगम ऊष्मागम । तपतीति तप । 'तप सतापे' । अकारान्तोऽयम्[6] । ग्रीष्मऋतुनामानि ॥ १९ ॥

[1] वसति $D_2$ [2] सुखेन $W_1$, I adds यथा तथा [3] सुष्ठु रम्भितम् आह्लादक कर्तुं शीलमस्यास्तीति $B_2$ [4] $D_1$ adds 'डुकृञ् करणे' [5] निदहति जनान् $B_1$. [6] सकारान्तश्च $D_1$

(पा.) वसन्ते—सुरभि । वसन्तर्तुनामानि ॥ ग्रीष्म—तप । अकारान्तोऽय तप । ग्रीष्मर्तुनामानि ॥ १९ ॥

**स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा अथ शरत् स्त्रियाम् ।**
**षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमात् ॥ २० ॥**

(वि.) स्त्रियामिति—[1]प्रवर्षतीति प्रावृट् । 'वृष सेचने' । [2]अनुवर्षमन्तीति वर्षा । बहुवचनमेव [3]स्त्रिया वर्तते । वर्षर्तुनामनी ॥ शृणाति [4]पङ्क जल च शरत् । 'शॄ हिंसायाम्' । शरदृतुनाम ॥ अमी षट् मार्गादीना मासाना युगै युग्मै मासै क्रमात् [5]हेमन्तादिऋतवो भवन्ति ॥ २० ॥

[1] प्रवर्षेण वर्षतीति $B_2$ [2] आसु $D_1$, वृष्यन्ते आसु $B_2$ [3] स्त्रीलिङ्ग च $B_2$
[4] पङ्कजलानि $B_2$ [5] हेमन्तादय $D_1$, I

(पा.) स्त्रियां—वर्षा । वर्षर्तुनामानि । प्रावृषाशब्दोऽप्यस्ति । 'प्रावृषा तु जलार्णव' इति त्रिकाण्डशेष (पृ ६, श्लो ११५)॥ अथ शरत् स्त्रियाम् । शरदृतुनाम। शरदाशब्दोऽप्यस्ति । '[1]कालप्रभात शरदा' इति त्रिकाण्डशेष (पृ ६, श्लो ११५)॥ षडमी—क्रमात् । हेमन्तादय षडपि मार्गशीर्षादियुग्मक्रमेण ऋतुशब्दवाच्या पुलिङ्गा । यद्वा ऋतुशब्द पुलिङ्ग । [2]कार्तिकादियुग्मक्रमात् व्यवस्था[3] मा भूदिति मार्गग्रहणम् ॥२०॥

[1] कल्य विभात शरदा $A_1$ $B_1$ [2] $A_1$ adds पूर्व [3] $A_1$ adds वैदग्ध्य

**संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत् समाः ।**
**मासेन स्यादहोरात्रः पैत्रो वर्षेण दैवतः ॥ २१ ॥**

(वि.) संवत्सर इति—[1]संवसन्ति ऋतवोऽत्र संवत्सर । वत्सरश्च । 'वस निवासे'। आप्यते [2]अधिकमासेनेत्यब्द । 'आप्लृ व्याप्तौ'। अपो ददातीति वा। 'डुदाञ् दाने'। जहाति क्रमेण ऋतूनिति हायन । 'ओहाक् त्यागे'। शीर्यते [3]जगदनेनेति शरत्। 'शॄ हिंसायाम्'। समय तीति [4]जनान् समा । 'षम वैक्लव्ये'। अयं शब्द स्त्रीलिङ्गो बहुवचनान्त । एकवचनान्तो वा। संवत्सरनामानि ॥ मानुषेण मासेन पैत्र अहोरात्र स्यात् । पितॄणामय पैत्र । मानुषेण वर्षेण दैवत अहोरात्र स्यात्। देवतानामय दैवत ॥ २१ ॥

[1] वसन्तादिऋतवोऽत्र सम्यक् वसन्तीति $B_2$ [2] अखिल° $K_1$, Y [3] अन्नमनेनेति B. [4] जीवान् $B_1$, $K_5$, $W_2$

(पा.) संवत्सरो—समा । संवत्सरनामानि। अस्त्रीशब्दो हायनशब्दविशेषणम्। शरच्छब्दस्य, [1]समाशब्दसाहचर्यात् स्त्रीलिङ्गत्वैव। 'वर्षोऽस्त्री स्त्री शरत्समा' इति वैजयन्ती (पृ २४, श्लो ९१)। समाशब्दोऽस्मिन् शास्त्रे बहुप्रकृतिर । वामन लिङ्गानुशासनेऽप्येवमेवोक्तम्। 'बहवश्च समा सिक्ता वर्षा आप सुमनसो जलौकसो ऽप्सरस' इति (पृ १६, श्लो २३)॥ मासेन—पैत्र । मानुषेण मासेन पितॄणामहोरात्र । अत्र पक्षाभ्या दिवारात्रिविभाग ॥ वर्षेण दैवत । मानुषेण वर्षेण देवतानामहोरात्र स्यात्। अत्रायनाभ्या दिवारात्रिविभाग ॥ २१ ॥

[1] $A_1$ adds अस्त्रीशब्दसाहचर्यात् पुनपुंसकलिङ्गताया प्राप्ताया

**दैवे युगसहस्रे द्वे ब्राह्मः कल्पौ तु तौ नृणाम् ।**
**मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः ॥ २२ ॥**

(वि.) दैवे इति—दैवे[1] द्वे युगसहस्रे [2]ब्राह्मः अहोरात्रः स्यात् । ब्रह्मणोऽयं ब्राह्म । तौ नृणां स्थितिक्षयात्मकौ कल्पौ भवतः । कल्पयति नृणां [3]नाशं करोतीति कल्प. । 'कृपू [4]सामर्थ्ये' । दिव्यानां युगानामेकसप्ततिः मन्वन्तरं भवति । मनोरन्तरं मन्वन्तरम् ॥ २२ ॥

[1] दैवयुगसहस्र A, $B_2$  [2] ब्रह्मणः U.  [3] काशं A, $B_1$, $W_2$, अवकाश $B_2$.
[4] 'कल्प कल्पने' A, $D_2$, $K_5$

(पा.) दैवे—ब्राह्मः । [1]दैवयुगमित्युक्ते मनुष्यचतुर्युगम् । ते युगे द्वे सहस्रे चेत् ब्रह्मण. अहोरात्रो भवति । अत्र कल्पाभ्यां [2]दिवारात्रिविभाग ॥ कल्पौ—नृणाम् । स्थितिक्षयात्मकौ कल्पौ भवतः । तावित्यनेन बुद्धिस्थदिवारात्र्यो. परामर्श. ॥ मन्वन्तरं—एकसप्ततिः । चतुर्दशदलनस्य कल्पस्य एकैको [3]भागो मन्वन्तरं भवति । मानुषचतुर्युग दिव्यं युगम् । तेषामेकाधिका सप्ततिः ॥ २२ ॥

[1] दिव्य° $A_1$  [2] अहोरात्र° $B_3$, $B_1$  [3] विभागो $A_1$.

**संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि ।**
**अस्त्री पङ्कं पुमान् पाप्मा पापं किल्बिषकल्मषम् ॥ २३ ॥**
**कलुषं वृजिनैनोऽघमंहो दुरितदुष्कृतम् ।**
**स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः ॥ २४ ॥**

(वि.) संवर्त इति—संवर्तते क्षीयते जगदत्रेति संवर्तः । 'वृतु वर्तने' । [1]प्रलीयते जगदत्रेति प्रलयः । 'लीङ् श्लेषणे' । जगन्नाशः कल्प्यतेऽत्रेति कल्पः । 'कृपू[2] सामर्थ्ये' । क्षीयते जगदत्र क्षयः । 'क्षि क्षये' । कल्पस्यान्त. कल्पान्तः । संहारकालनामानि ॥ कम्पते [3]अस्मात् पङ्कः । [4]अक्षरविपर्यय. । 'कपि चलने' । सभामध्ये [5]पच्यते वा । 'पचि विस्तारे' । पच्यते व्यक्तीक्रियते वा पङ्कः । 'पचि व्यक्तीकरणे' । पतति येन नरके पाप्मा । 'पत्लृ गतौ' । पात्यस्मादिति वा पाप्मा । पापं च । 'पा रक्षणे' । कल्यते चित्रगुप्तेन गण्यते किल्बिषम् । कल्मषं कलुषं च । 'कल सख्याने' । कलयति नरके वा कलुषम् । 'कल क्षिल क्षेपे' । वर्ज्यते वृजिनम् । 'वृजी वर्जने' ।

नरकमेत्यनेनेति एन । 'इण् गतौ'। कर्तरिमेह्वत[7] इत्यघम्। 'अघि गत्याक्षेपे'[8]। अहते नरमनेनेति अह । 'अहि गतौ'। दुष्टमेतीति दुरितम्[9]। [10]दुष्क्रियत इति दुष्कृतम्। 'डुकृञ् करणे'। पापनामानि ॥ ध्रियत इति [11]धर्म । पुणति शुभं करोतीति पुण्यम्। 'पुण कर्मणि शुभे'। शुभेन [12]श्रीयते श्रेय । 'श्रिञ् सेवायाम्'। [13]सुष्ठु क्रियते स्म सुकृतम्। अभिलषित वर्षतीति वृष । 'वृष सेचने'। पुण्यनामानि ॥ -२-४॥

[1] प्रलयत, 'ली द्रवीकरणे' $B_1$ [2] 'कल्प कल्पतौ' A, $B_1$, T, $W_1$
[3] अस्मिन् $W_2$ [4] °विपर्याय A, W. [5] A adds विस्तार्यते [6] वृज्यते A
[7] अघो गमयति $B_2$ [8] 'अघि लघि गतौ' U [9] $D_1$ adds 'इण् गतौ'
[10] दुष्क्रियत्वात् $W_1$ [11] $D_1$, I, $W_1$ add 'धृ धारणे' [12] श्रयते $K_1$ [13] सु $K_1$

(पा.) संवर्त प्रलय । मन्वन्तरान्ते जातावान्तरप्रलयनामनी ॥ कल्प —इत्यपि। महाप्रलयनामानि ॥ 'महाप्रलयकल्पान्तौ युगान्तो भूतसंप्लव' इति वैजयन्ती (पृ २४, श्लो ९४)॥ अस्त्री—दुष्कृतम्। पापनामानि ॥ स्याद् धर्म—वृष । पुण्यनामानि ॥२३ ४॥

मुत् प्रीतिः प्रमदो हर्षः प्रमोदामोदसंमदाः ।
स्यादानन्दथुरानन्दः शर्मसातसुखानि च ॥ २५ ॥

(टि.) मुदिति—[1]मोदयतीति मुत्। [2]प्रमोदश्च । आमोदश्च । 'मुद हर्षे'। प्रीणातीति प्रीति । 'प्रीञ् [3]तर्पणे कान्तौ च'। [4]प्रमदयति हर्षयतीति प्रमद । 'मदी[5] हर्षे'। हृष्यतेऽनेनेति हर्ष । 'हृष तुष्टौ'। आनन्दयतीति आनन्दथु । आनन्दश्च । 'टुनदि समृद्धौ'। शृणाति दु खमिति शर्म। 'शृ हिंसायाम्'। स्यति दु ख सातम्। 'षोऽन्तकर्मणि'। श्यति दु ख शातमिति वा पाठ । 'शो तनूकरणे'। शातिर्वा। [6]शाम्यति दु खमनेनेति शान्तम्। 'शमु [7]उपशमे । अयमपि पाठ । शोभनानि खानि इन्द्रियाणि [8]अस्मिनिति सुखम्। संतोषनामानि ॥ २५ ॥

[1] $K_2$ omits 3 lines [2] मोदश्च $B_1$, $K_5$ $W_2$, Y [3] प्रीणने I, $K_1$
[4] प्रकर्षेण मदयति $D_1$ [5] 'मदी हर्षग्लपनयो' $K_5$ [6] शान्तमिति पाठे I [7] उपरमे $W_1$, I, उपशमने $K_5$ $W_1$ [8] अनेन T

(पा.) मुत् प्रीति —सुखानि च । शर्मसाहचर्यात् शातम्। 'शित[1] शात च निशिते कृशे शात च शर्मणि' इति विश्वप्रकाशिका (पृ ५७, श्लो ९)। सुखसाहचर्यात् सातम्। 'सूति साततता[2] तु सा' इति देवीशतकम्। एतानि सुखनामानि ॥ २५ ॥

[1] निशिते शितं कृशे शात $A_1$ [2] $B_1$ adds च [3] पृतिसाततो (श्लो॰ ९२)

श्वःश्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्।
भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम्॥ २६॥
शस्तं चाथ त्रिषु द्रव्ये पापं पुण्यं सुखादि च।

(वि.) श्वःश्रेयसमिति—श्वः आगामि श्रेयोऽत्र श्वःश्रेयसम्। [1]अरिष्टं शिनोति तनूकरोतीति शिवम्। 'शिञ् [2]निशाने'। भन्दते [3]भद्रम्। 'भदि कल्याणे'। कल्यं नीरुजत्वमणति कल्याणम्। 'अण [4]शब्दे'। [5]मङ्गति सुखं लातीति मङ्गलम्। 'मगि गतौ'। 'ला दाने'। शोभते शुभम्। [6]'शुभ दीप्तौ'। भवतीति भावुकम्[7]। प्रशस्तो भवोऽत्र भविकम्। भवनार्हं [8]भव्यम्। कुत्सितं श्यतीति कुशलम्। कुशान् लातीति[9] वा। 'शो तनूकरणे'। क्षिणोति [10]क्लेशमिति क्षेमम्। 'क्षिणु हिंसायाम्'। शस्यते स्मेति[11] शस्तम्। 'शंसु स्तुतौ'। शुभनामानि॥ पापपुण्यसुखादिशब्दाः द्रव्ये गुणिनि त्रिषु वर्तन्ते॥ २६॥

[1] अनिष्टं A. [2] निशातने A, $B_1$, T, $W_1$. [3] भं बन्धं दत्ते $B_1$. [4] गतौ A, $B_1$, T. [5] मङ्क A, $B_1$, T; मङ्कतीति मङ्गं $D_1$. [6] 'शुभ शुम्भ शोभने' I, U, $W_1$. [7] $D_1$ adds 'भू सत्तायाम्'. [8] भवितुं योग्यम् $B_2$. [9] 'ला आदाने' $D_1$. [10] अशुभ $W_1$. [11] अस्मिन् $K_1$.

(पा.) श्वःश्रेयसं—भव्यम्। शुभनामानि॥ कुशलं—शस्तं च। क्षेमनामानि॥ अथ—सुखादि च। पापपुण्यशब्दाः सुखादिशब्दाश्च द्रव्ये त्रिलिङ्गा भवन्ति। 'पापा ऋतुमती कन्या पापो राजाप्यरक्षकः'। पापग्रहणमर्थपरमिति[1] कतिचित् कथयन्ति। दुष्कृतोऽयं व्यापारः। कल्मषोऽयममेध्याहारः[2]। पुण्यं तीर्थमिदम्। पुण्या नदी। पुण्योऽयमाश्रमः। 'सुखं कामिकुलं द्रव्यात् सुखो वासः सहाम्बया'। सुखादय. स्वार्थप्रधानाश्चेन्निजलिङ्गा एव। दारिद्र्येऽपि धनित्वेऽपि वश. परिजनः सुखम्॥ २६॥

[1] °प्रधानं $A_1$. [2] °आहरः $A_1$.

मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ॥ २७॥
प्रशस्तवाचकान्यमून्ययः शुभावहो विधिः।
दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः॥ २८॥

(वि.) मतल्लिकेति—मतल्लिका, मचर्चिका, प्रकाण्डम् अस्त्री, उद्धः, तल्लजः, अमूनि प्रशस्तवाचकानि[1]। अश्वमतल्लिका प्रशस्ताश्व इत्यर्थः[2]। प्रशस्तः पुरुषः पुरुष-

तल्लज । शुभमेत्यनेन [3]अय । शुभावहविधिनाम ॥ देवस्येद दैवम् । शुभाशुभ दिशतीति दिष्टम् । 'दिश अतिसर्जने'। [4]भगस्य ऐश्वर्यस्येद भागम् । भागमेव भागधेयम् । भजनीय [5]भाग्यम् । 'भज सेवायाम्'। नियम्यतेऽनया पुरुष इति नियति. । [6]'यम उपरमे'। विधीयते प्रेर्यतेऽनेन विधि [7]। अय पुमान् । [8]शुभाशुभफलनिमित्तदैवनामानि[9] ॥ २७–८ ॥

[1] निरस्तावयवान्येतानि $W_1$ [2] ब्राह्मणमचर्चिका प्रशस्तो ब्राह्मण । गोप्रकाण्ड प्रशस्ता गौ $B_1$, $K_5$, $W_2$, Y, गजोद्ध प्रशस्तो गज इत्यर्थ । पुरुषतल्लज इति नित्यसमास $W_1$, कुमारीतल्लज प्रशस्ता कुमारीत्यादि $W_2$ [3] I, $W_1$ add 'इण् गतौ'. [4] भजति एश्वर्यमनेन भग $B_1$, $K_5$, Y [5] भागोऽत्रास्तीति वा $B_1$, $K_5$, U, Y [6] 'यम उपशमने $D_1$ [7] $D_1$, I add 'डुधाञ् धारणपोषणयो' [8] °फलप्रद° $B_2$ [9] °देवनिमित्ताना $W_2$

(पा.) मतल्लिका—अमूनि । मतल्लिकादीनि पदानि प्रशस्तवाचकानि[1] भवन्ति । यस्य कस्यचिद्विशेषणानि सन्त्यपि आविष्टलिङ्गान्येव । अश्वो मतल्लिका अश्वमतल्लिका । प्रशस्ताश्व इत्यर्थ । गोप्रकाण्डम् । पुरुषतल्लज । प्रशस्तपुरुष इत्यर्थ । पुरुषमतल्लिका इत्यादि । प्रकाण्डमस्त्री । 'प्रकाण्डोऽस्त्री पुमानुद्ध' इति [2]त्रिकाण्डशेष ॥ अय —विधि । शुभावहदैवम् अय इत्युच्यते[3] ॥ दैव —विधि । दैवनामानि ॥ 'भविष्यं भवितव्यं च'। एते च । भागधेयशब्दव्युत्पत्त्या भागशब्दसिद्धि ॥ २७–८ ॥

[1] °नामानि $B_3$ [2] मुद्रितग्रन्थे न दृश्यते [3] $A_1$ adds तद्विपरीत अनय । तदुभयात्मकोऽय नय

**हेतुर्ना कारणं बीजं निदानं त्वादिकारणम् ।**
**क्षेत्रज्ञ आत्मा पुरुषः प्रधानं प्रकृतिः स्त्रियाम् ॥ २९ ॥**

(वि.) हेतुरिति—हिनोति वर्धते[1] हेतु [2]। 'हि गतौ वृद्धौ च'। कार्यतेऽनेन कारणम्[3] । बीज्यतेऽनेन[4] बीजम् । 'बीज रोहणे'। निमित्तनामानि ॥ [5]निदीयते निदानम् । 'दाण् दाने'। [6]मूलनिमित्तनाम ॥ क्षीयत इति क्षेत्रम् । 'क्षि निवासगत्यो' 'क्षि क्षये' वा धातु । क्षेत्र शरीर जानातीति क्षेत्रज्ञ । 'ज्ञा अवबोधने'। अत्ति स्वकृत शुभाशुभम्[7] आत्मा । 'अद भक्षणे'। अतति शरीरेषु [8]सवसतीति वा । 'अत सातत्यगमने'। पुरि देहे सीदति[9] तिष्ठतीति पुरुष । 'पद्लृ विशरणगत्यवसादनेषु'। देहादिक पिपर्तीति वा । 'पॄ पालनपूरणयो'। अहम्प्रत्ययस्य विषयिणो जीवात्मनो[10] नामानि ॥ प्रधत्ते [11]सर्व प्रधानम्[12] । पृथक् क्रियते [13]आत्मन इति वा । प्रारम्भ [14] क्रियतेऽनया प्रकृति । प्रकृतिनाम ॥ २९ ॥

[1] $B_2$ adds अनेनेति [2] अय पुल्लिङ्ग $D_1$, I [3] $D_1$ adds 'डुकृञ् करणे' [4] $B_1$, $K_5$ add साध्य प्राप्यते, विन्यते $D_1$ [5] नितरा दीयते $B_2$ [6] एनत्तु मूल कारणनाम $D_2$ I आदिकारण° $D_1$ [7] A adds कर्मे [8] समनति $K_5$ [9] शेते वसतीति वा $W_1$, Y, शरीरे for देहे in $B_1$ [10] क्षेत्रज्ञस्य $D_2$ [11] सत्य A, $B_1$, T [12] 'डुधाञ् धारणपोषणयो' A [13] आत्मा I, $W_1$ [14] प्रारम्भा क्रियन्ते A, $B_1$, T, $B_2$ Y add 'डुकृञ् करणे'

(पा.) हेतुर्ना—बीजम् । कारणनामानि ॥ निदान त्वादिकारणम् । आदिकारण निदान स्यात् ॥ क्षेत्रज्ञ —पुरुष । आत्मतत्त्वनामानि ॥ प्रधान—स्त्रियाम् । प्रकृतितत्त्वनामानि ॥ २९ ॥

**विशेषः कालिकोऽवस्था गुणाः सत्त्वं रजस्तमः ।**
**जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः ॥ ३० ॥**

(नि.) विशेष इति—[1]अविकृतौ तिष्ठतीत्यवस्था । 'ष्ठा गतिनिवृत्तौ' । कालकृतयौवनादिविशेषनाम ॥ सतो भाव सत्त्वम् । प्रकाशज्ञानहेतु । [2]रागात्मनि दु खहेतुत्वात् रज । ताम्यत्यनेन तम । 'तमु ग्लानौ' । गुणाभिधानप्रकृतिधर्मनामानि ॥ जन्यतेऽनेन जनु । सान्तोऽयम्[3] । जनन च । जन्म च । जनिश्च[4] । 'जनी प्रादुर्भावे' । [5]उत्पद्यते इत्युत्पत्ति । 'पदॢ गतौ' । उद्भवतीत्युद्भव । 'भू सत्तायाम्' । जन्मनामानि ॥ ३० ॥

[1] अवधिकृतौ Y [2] रागात्मापि $B_2$ [3] सान्तमिद पदम् $B_2$ [4] जनिशब्द स्त्रीलिङ्गे $B_2$ [5] उत्पद्यते $K_2$

(पा.) विशेष कालिकोऽवस्था । कालकृतविशेषोऽवस्था स्यात् । बाल्यजरादि ॥ गुणा —तम । सत्त्वरजस्तमासि प्रकृतिगुणा इत्युच्यन्ते ॥ जनु —उद्भव । जन्मनामानि । जनिशब्दोऽर्धर्चादिपाठादुत्पत्तिलिङ्गभागुद्भवलिङ्गभाक् च भवति । उभयत्रोदाहरणम्—

'कर्मादिना जनिरिय च न युक्तरूपा' ।
'तस्या वा जनिरस्तु मातरवमा जीवस्य मा जीवतो
भूयाद्वा जननि किमम्ब जनिना जन्तोर्वृथा जन्मन' ।

इति । अनुत्तम्—'ससारस्त्वाजव जव (?)' । ससारनामानि ॥ ३० ॥

प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः ।
जातिर्जातं च सामान्यं व्यक्तिस्तु पृथगात्मता ॥ ३१ ॥
चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मनः ॥

इति कालवर्गः

(वि.) प्राणीति—प्राणोऽस्यास्तीति प्राणी । चेततीति चेतन । 'चिती सञ्ज्ञाने' । जन्मास्यास्तीति जन्मी । जायते जन्तु । जन्युश्च । 'जनी प्रादुर्भावे' । शरीरमस्यास्तीति शरीरी । प्राणिनामानि ॥ जायते जाति । जात च । 'जनी प्रादुर्भावे' । समानस्य भाव सामान्यम् । जातिनामानि ॥ व्यज्यत इति व्यक्ति । पृथगात्मनो भाव पृथगात्मता । व्यक्तिनामनी ॥ चेतयतेऽनेन चित्तम् । चेतश्च । 'चिती सञ्ज्ञाने' । 'चिचिन्तायाम्' । [1]विषये ह्रियते हृदयम् । [2]हृच्च । 'हृञ् हरणे' । [3]शोभनोऽन्तो यस्य स्वान्तम् । स्वनतीति वा स्वान्तम् । 'स्वन शब्दे' । मन एव मानसम् । [4]मन्यतेऽनेन मन । 'मन ज्ञाने' । मनोनामानि ॥ ३१ ॥

इति श्रीलिङ्गयसूरिविरचितायाममरकोशपदविवृतौ कालवर्ग

[1] विषयेषु $K_2$ [2] विषये ह्रियत हृत् Y [3] शोभनमन्त $K_1$, $K_2$ $K_3$, W, [4] मन्यते मन A, $B_1$, T

(पा.) प्राणी—शरीरिण । प्राणिनामानि ॥ जाति—सामान्यम् । जातिनामानि ॥ व्यक्तिस्तु पृथगात्मता । व्यक्तिनामनी ॥ चित्त—मन । अन्त करणनामानि ॥ 'स्वान्तमाख्यान्ति चित्त चेतोऽन्त करण मन ' इति धनञ्जय ॥ ३१ ॥

इति श्रीवत्स[1]नृसिंहसूरिसुतमल्लिनाथसूरिविरचितेऽमरपदपारिजाते कालवर्ग

[1] नरसिंह' $A_1$

---

५. धीवर्गः

बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः ।
प्रेक्षोपलब्धिश्चित् संवित् प्रतिपज्ज्ञप्तिचेतनाः ॥ १ ॥

**धीर्धारणावती मेधा संकल्पः कर्म मानसम् ।**
**(अवधानं समाधानं प्रणिधानं तथैव च ।)**

(वि.) बुद्धिरिति—बुध्यतेऽनया बुद्धि । 'बुध अवगमने'। मन्यते मनीषा। 'मन ज्ञाने'। [1]मनस ईषावत् लाङ्गलदण्डवत् सन्धाह्या। धृष्णोतीति धिषणा। 'ञिधृषा प्रागल्भ्ये'। ध्यायतेऽनया धी । 'ध्यै चिन्तायाम्'। प्रज्ञायतेऽनया प्रज्ञा। 'ज्ञा अवबोधने'। शेय मोह मुष्णातीति शेमुषी। 'मुष स्तेये'। मन्यतेऽनयेति[2] मति । 'मन ज्ञाने'। [3]प्रेक्षते यया प्रेक्षा। 'ईक्ष दर्शने'। उपलभ्यतेऽनयेति[4] उपलब्धि । 'डुलभष् प्राप्तौ'। चेतन्त्यनयेति [5]चित्। 'चिती संज्ञाने'। अनया सम्यग्वेत्तीति संवित्। 'विद ज्ञाने'। प्रतिपद्यतेऽनया प्रतिपत्। 'पद्लृ गतौ'। ज्ञायतेऽनया ज्ञप्ति। 'ज्ञा अवबोधने'। चेतयतेऽनया चेतना। बुद्धिनामानि॥ मेधते सर्वमनुभूतमस्यामिति मेधा। 'मेधृ संगमे'। [6]स्मृतिमद्बुद्धिनाम॥ सम्यक् [7]कल्प्यतेऽनेनेति [8]संकल्प। '[9]कृपू सामर्थ्ये'। मानसव्यापारनाम॥ १॥

[1] मनस ईषा $D_2$ $K_1$, $K_2$ [2] A, $B_1$, T omit अनया [3] प्रेक्ष्यते $B_1$, $W_2$ [4] यया $B_2$ $D_2$, I, $K_1$, $K_2$, $W_1$ [5] चेतयते यया $B_2$, $D_2$, $K_1$, Y [6] अतिबुद्धिनाम $B_1$, $W_2$ [7] कल्प्यते $D_1$, $D_2$ $W_2$ कल्पते A, $B_1$, T [8] इदमहं कुर्यामिति मनसो व्यापार संकल्प $D_1$ [9] 'कल्प कल्पने' A, T, $W_1$

(पा.) बुद्धिर्मनीषा—शेमुषी। तालव्यादि । मति —चेतना। बुद्धिनामानि। 'प्रतिभोपलभा पण्डा'। एतानि च॥ धी —मेधा। धारणगुणयुक्ता धीर्मेधा स्यात्।

'षोढा धीस्तत्त्वधी पण्डा मेधा धीर्धारणक्षमा।
ऊहापोहक्षमा चार्वी गृहीतिर्ग्रहणक्षमा॥
शुश्रूषा बहुला श्रौती श्रवणज्ञा तु चत्वरी॥'

इति षड्विधबुद्धीनां मध्ये एका॥ संकल्प कर्म मानसम्। मानसव्यापार संकल्प॥ १॥

**चित्ताभोगो मनस्कारश्चर्चा संख्या विचारणा॥ २॥**
**(विमर्शो भावना चैव वासना च निगद्यते ।)**
**अध्याहारस्तर्क ऊहो विचिकित्सा तु संशयः ।**
**संदेहद्वापरौ चाथ समौ निर्णयनिश्चयौ॥ ३॥**

(वि.) चित्ताभोग इति—चित्तस्य आभोगः [1]परिपूर्णता चित्ताभोगः। मनसि करोतीति मनस्कारः। मनःपरिपूर्णतानाम॥ चर्च्यतेऽनया चर्चा। 'चर्च अध्ययने'। [2]सङ्ख्यायतेऽनयेति सङ्ख्या। 'ख्या प्रकथने'। विचार्यतेऽनया विचारणा[3]। परामर्शनामानि॥ अध्याहरतीति अध्याहारः। 'हृञ् हरणे'। [4]तरन्त्यनेन संशयविपर्ययाविति तर्कः। 'तॄ प्लवनतरणयोः'। ऊह्यते अनेनेति ऊहः। 'ऊह वितर्के'। युक्तिप्रज्ञानामानि॥ विचिकित्सतीति[5] विचिकित्सा। 'कित निवासे रोगापनयने च'। [6]उभयकोटौ संशेते इति संशयः। 'शीङ् स्वप्ने'। संदेग्धि[7] सम्यक् चयापीति संदेहः। 'दिह उपचये'। स्थाणुर्वा पुरुषो वेति द्वौ पक्षौ परौ [8]प्रधानभूतावस्मिन्निति द्वापरः। संदेहनामानि॥ पुरुषः संदेहाभाव[9] नितरां [10]नयतीति निर्णयः। 'णीञ् प्रापणे'। निश्चिनोतीति निश्चयः। 'चिञ् चयने'। [11]इदमित्थमिति बुद्धिनामनी॥ २-३॥

[1] °पूर्णता $K_2$  [2] सम्यक् ख्यायते $B_2$  [3] Y adds 'विचिर् पृथग्भावे'  [4] तरति $K_1$ $K_2$ $W_1$  [5] विविधं स्थापयितुमिच्छति $B_2$  [6] उभयो रूपयो $B_1$  [7] संदिग्धे $W_2$  [8] प्रसक्तौ $B_2$  [9] °संदेहभाव $K_1$  [10] निर्णयति A  [11] निश्चितबुद्धिनामानि $B_1$

(पा.) चित्ताभोगो मनस्कारः। चित्ताभोगश्चित्तयत्नः। 'आभोगो यत्नपूर्णता' इति वैजयन्ती (पृ २३९, श्लो ७)। स मनस्कारः स्यात्। स मनस्कारः मनसि कारमिस्युभयथा [1]कथयन्ति॥ चर्चा—विचारणा। मीमांसानामानि॥ 'मीमांसा स्याद् विचारणा' इति हलायुधः (अ मा १ १०)॥ अध्याहारः—ऊहः। [2]तर्कनामानि॥ विचिकित्सा—द्वापरौ च। संशयनामानि। 'वितर्को विशयः शङ्का'। एतानि च॥ अथ—निश्चयौ। निश्चयनामनी॥ 'निर्धारणा परिच्छित्तिः'। एते च॥ २-३॥

[1] वदन्ति $B_3$  [2] तर्कस्य $A_1$

**मिथ्यादृष्टिर्नास्तिकता व्यापादो द्रोहचिन्तनम्।**
**समौ सिद्धान्तराद्धान्तौ भ्रान्तिर्मिथ्यामतिर्भ्रमः॥ ४॥**

(वि.) मिथ्येति—मिथ्या चासौ दृष्टिश्च मिथ्यादृष्टिः। नास्ति परलोक इति मतिर्यस्य स नास्तिकः। तस्य भावो नास्तिकता। परलोकाभावबुद्धिनामनी॥ व्यापाद्यतेऽनेनेति [1]व्यापादः। 'पद गतौ'। द्रोहस्य चिन्तनं द्रोहचिन्तनम्। जिघांसाचिन्तानामनी॥ सिद्धः अन्तो निश्चयोऽत्र सिद्धान्तः। राद्धः[2] अन्तो यस्य राद्धान्तः[4]। निर्णयविशेषनामनी॥ भ्राम्यतेऽनयेति भ्रान्तिः। भ्रमश्च। 'भ्रमु चलने'। 'भ्रमु अनवस्थाने' इति वा धातुः। मिथ्या चासौ मतिश्च मिथ्यामतिः। [5]अतस्मिन् तद्बुद्धिनामानि॥ ४॥

[1] विशेषेण आपद् क्रियतेऽस्मिन्निति $B_2$ [2] $W_1$ adds सिद्ध . [3] $K_3$ adds निश्चय [4] $B_2$ adds 'राघ सेसिद्धी' [5] भ्रमनामानि $B_2$, °तदिति बुद्धि° $W_2$

(पा.) मिथ्यादृष्टिर्नास्तिकता । नास्तिक्यनामनी ॥ व्यापादो द्रोहचिन्तनम् । [1]द्रोहचिन्तानाम ॥ समौ—राद्धान्तौ । स्थिरपक्षनामनी ॥ भ्रान्ति—भ्रम । [2]अयथार्थज्ञाननामानि ॥ 'सकेतस्तु समय '। देवदत्तडित्थादिव्यवहारनामनी । 'अथाप्रतिपत्तिर्विहस्तता '। इतिकर्तव्यतावैकल्यनामनी ।

> 'स्नाता तिष्ठति मण्डलाधिपसुता वारोऽङ्गराजस्वसु-
> र्द्यूते रात्रिरियं जिता कमलया देवी प्रसाद्याद्य[3] च ।
> इत्यन्त पुरसुन्दरीपरिजनैर्विज्ञाय विज्ञापिते
> देवेनाप्रतिपत्तिमूढमनसा द्वित्रा स्थिता नाडिका ॥' *

इति ॥ ४ ॥

[1] व्यापाद इत्युच्यत $A_1$ [2] रज्जौ सर्पग्रह , सर्पे रज्जुबुद्धि इत्यादिनाम $A_1$ [3] अधुना $B_3$

* Quoted in *alamkara* works with कुन्तलेश्वर for मण्डलाधिप

**संविदागूः प्रतिज्ञानं नियमाश्रवसंश्रवाः ।**
**अङ्गीकाराभ्युपगमप्रतिश्रवसमाधयः ॥ ५ ॥**

(वि.) सविदिति—सविद्यतेऽनया सवित् । 'विद ज्ञाने'। [1]आगमन सवेदनम् आगू । ऊकारान्त । आगुरते वा आगू । 'गुरी उद्यमने'। रेफान्त स्त्रीलिङ्ग । प्रतिज्ञायतेऽनेन [2]प्रतिज्ञानम् । नियम्यते [3]नियम । 'यम उपरमे'। [4]आशृणोतीत्याश्रव । [5]सश्रवश्च । प्रतिश्रवश्च । 'श्रु श्रवणे'। [6]अङ्गीकरणमङ्गीकार । अभ्युपगमनम् [7]अभ्युपगम । समाधीयते [8]समाधि । 'डुधाञ् धारणपोषणयो '। सप्रतिपत्तिनामानि[9] ॥ ५ ॥

[1] आगम A, $B_1$, T, आगत $D_1$ प्रतिज्ञानिर्वर्तनपर्यन्त या क्रिया $B_2$ [2] यस्मिन् प्रतिजानाति तत् $B_2$ $W_1$ adds 'ज्ञा अवबोधने' [3] यस्मिन् नितरा यम्यतेऽनेन इतरव्यापार इति $B_2$ [4] $B_2$ adds समन्तात्. [5] संशृणोतीति Y [6] अङ्गीकरोति यस्मिन् विषये, 'डुकृञ् करणे' $B_2$ [7] यस्मिन् विषयेऽभ्युपगम्यते ॥ , 'गम्लृ गतौ', प्रतिशृणोतीति प्रतिश्रव , धातु पूर्ववत् $B_2$ [8] यस्मिन् तत्रत्यधर्मे $B_2$ [9] संमति° $B_2$.

(पा.) सविदागू.। आगूरिति [1]पक्षे रेफान्तस्त्रीलिङ्ग, ऊकारान्तो वा॥ प्रतिज्ञानम्। पुनर्ज्ञाननामानि॥ नियम—समाधय। अङ्गीकारनामानि॥ ५॥

[1] A, adds अत्र संवित् आगू सविदागूरिति विन्यस्यन्ति

**मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः।**
**मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम्॥ ६॥**
**मोक्षेऽपवर्गोऽथाज्ञानमविद्याहंमतिः स्त्रियाम्।**

(नि.) मोक्ष इति—ज्ञायतेऽनेन ज्ञानम्। 'ज्ञा अवबोधने'। मोक्षबुद्धिनाम॥ [1]विरूप ज्ञान विज्ञानम्। [2]शिल्पशास्त्रादिबुद्धिनाम॥ आत्मन पाशाभ्या [3]मुक्तत्वं मुक्ति। आत्मानं [4]पाशेभ्यो मोचयतीति वा। 'मुच्लृ मोक्षणे'। केवलावस्था[5] कैवल्यम्। निर्वाति [6]निष्प्रपञ्च गच्छत्यस्मिन्निति निर्वाणम्। निर्वान्ति सर्वाणि कर्माणि अत्रेति वा। 'वा गतिगन्धनयो'। अतिशयेन प्रशस्य [7]श्रेय। निश्चित श्रेयोऽत्र निश्रेयसम्। नास्ति मृत मरणमस्मिन्निति अमृतम्। आत्मान पाशेभ्यो मोचयतीति मोक्ष। [8]मोक्षते वा अस्मान् मोक्ष। 'मोक्ष निरसने'। पाशेभ्योऽपवर्जनम्[9] अपवर्ग। 'वृजी वर्जने'। मोक्षनामानि॥ विरुद्ध ज्ञानम्[10] अज्ञानम्। विरुद्धा[11] विद्या अविद्या। अहमित्यव्ययम्। अहमिति मति अहमति। अनात्मनि देहादावहबुद्धिनामानि[12]॥ ६॥

[1] विज्ञायतेऽनेन D₂ I, K₁, W₁, विशेषेण ज्ञायते B₂ Y　[2] शिल्पि° A, D₁. [3] मोचन W₁　[4] पापेभ्यो D₁, I　[5] केवलावस्थाया यो भाव B₂　[6] नि स्पृहो यो गच्छति W₂　[7] प्रशस्यतेतरा W₂, Y　[8] मोक्ष्यतेऽस्मिन् B₁, K₅　[9] अपवर्ज्यते B₂ I, K₅ °वर्जित A, B₁, D₁　[10] W₂ adds अस्मिन्निति　[11] विरुध्यतेऽनया B₁ [12] अहमिति Y

(पा.) मोक्षे धीर्ज्ञानम्। मोक्षविषया धी बुद्धिर्ज्ञानं स्यात्॥ अन्यत्र—शास्त्रयो। तदतिरिक्तकलाशास्त्रविषया[1] बुद्धिर्विज्ञानं स्यात्॥ मुक्ति—अपवर्ग। मोक्षनामानि॥ अथाज्ञानम्—स्त्रियाम्। विषयेन्द्रियादौ आत्मबुद्धिनामानि॥ ६॥

[1] °कलाविषया A₂

**रूपं शब्दो गन्धरसस्पर्शाश्च विषया अमी॥ ७॥**
**गोचरा इन्द्रियार्थाश्च हृषीकं विषयीन्द्रियम्।**
**कर्मेन्द्रियं तु पाय्वादि मनोनेत्रादि धीन्द्रियम्॥ ८॥**

(वि.) रूपमिति—रूप्यते चक्षुषा निरूप्यते रूपम्। 'रूप 'रूपक्रियायाम्'। [2]शप ददातीति शब्द। 'शप आक्रोशे'। ग गमन धयतीति गन्ध। 'धेट् पाने'। गन्ध्यतेऽनेनेति वा। 'गन्ध अर्दने'। [3]रस्यतेऽनेनेति रस। 'रस आस्वादने'। स्पृश्यते स्पर्श। 'स्पृश संस्पर्शने'। अमी पञ्च विषयगोचरेन्द्रियार्थनामानो भवन्ति ॥ [4]विसिन्वन्ति बध्नन्ति स्वानुभवाय पुरुष विषया। 'षिञ् बन्धने'। गाव इन्द्रियाणि चरन्त्यत्र गोचरा। 'चर गतिभक्षणयो'। [5]इन्द्रियैरर्थ्यन्त इति इन्द्रियार्था। 'अर्थ उपयाच्ञायाम्'। हृष्यतीति हृषीकम्। 'हृष तुष्टौ'। विषयोऽस्यास्तीति विषयि। [6]इन्द्रस्य आत्मनो लिङ्गम् इन्द्रियम्। इन्द्रियनामानि ॥ कर्मण साधनम् इन्द्रियं कर्मेन्द्रियम्। पायुवाक्पाणिपादोपस्थनामानि ॥ धिय साधनमिन्द्रिय धीन्द्रियम्[7]। [8]नेत्रघ्राणरसनत्वक्श्रोत्रपञ्चकस्य नामानि ॥ मनस्तूभयात्मकम् ॥ ७–८ ॥

[1] निरूपणे $K_2$ Y [2] श सुख पातीति शप्, त A, शप सुखकारण श्रवणादिक ददातीति श०द $B_3$ $D_1$, I add 'दा दाने' [3] °रसोऽनेन $D_2$, I [4] विषिण्वन्ति $D_2$ I, T, $W_2$ [5] $K_2$ adds यन्ति [6] $W_1$ adds तनो [7] मनोनेत्रादि $W_2$ [8] °रसना° Y

(पा.) रूप—इन्द्रियार्थाश्च। [1]रूपादीना पञ्चाना नामानि ॥ हृषीक—इन्द्रियम्। इन्द्रियसामान्यनामानि। पूर्वापरसाहचर्याद् विषयिशब्दो नपुसक।

> 'विषयी राज्ञि कन्दर्प विषयस्थजने च[2] ना।
> अर्थवद्विषयोपेत इन्द्रिये तु नपुसकम् ॥'

इति वैजयन्ती (पृ २८३, श्लो ७५ ६) ॥ कर्मेन्द्रिय—धीन्द्रियम्। पायूपस्थपाणिपादवाच[3] पञ्च कर्मेन्द्रियाणि। [4]नेत्रश्रोत्रजिह्वाघ्राणत्वच पञ्च बुद्धीन्द्रियाणि। काकाक्षिन्यायान्मन कर्मेन्द्रिय बुद्धीन्द्रिय च भवति ॥ ७–८ ॥

[1] रूपादय पञ्च विषयशब्दवाच्या $A_1$ [2] अपि वा $A_1$, $B_4$ [3] वाचा $A_1$ [4] चक्षु° $B_3$

**तुवरस्तु कषायोऽस्त्री मधुरो लवणः कटुः।**
**तिक्तोऽम्लश्च रसाः पुंसि तद्वत्सु षडमी त्रिषु ॥ ९ ॥**

(वि.) तुवर इति—[1]तौति [2]हृदयमिति तुवर। 'तु गतिवृद्धिहिंसासु[3]'। कषति पित्तमिति कषाय। 'कष हिंसायाम्'। खदिरादिरसनामनी[4] ॥ मधु माधुर्यम् अस्यास्तीति [5]मधुर। इक्ष्वादिरसनाम ॥ लुनाति [6]वात लवण। 'लूञ् छेदने'। सैन्धवादिरसनाम ॥

कटति गिमिविपादि गच्छत्यनेन कटु । 'कटी गतौ'। शुण्ठ्यादिरसनाम ॥ [7]श्लेष्माणं तेजयतीति तिक्तः । 'तिज [8]निशाने'। निम्बादिरसनाम ॥ वातममति रुजतीत्यम्ल । अम्ल इति वा पाठ । 'अम रोगे'। अम्यते [9]मुखशब्दहेतुर्भवतीति अम्ल । 'अवि शब्दे'। जम्बीरादिरसनाम ॥ अमी षड् गुणेषु पुंसि, तद्वत्सु[10] विशेष्येषु त्रिषु वर्तन्ते ॥ ९ ॥

[1] तपतीति A	[2] रसनेन्द्रिय U	[3] 'तु वृद्धिहिंसयो' A, $B_1$, T
[4] U, $W_2$ add °जय°	[5] मञ्जाति वात A, $B_1$	[6] पातु $B_1$	[7] श्लेष्मादि $B_1$
[8] निशातने $I_1$, $K_1$, Y	[9] तल्लक्षणेन वाताधिक्यवशात् आक्रोशादिशब्द करोतीति शास्त्रप्रसिद्धि $B_2$	[10] $W_2$ adds गुणेषु

(पा.) तुवरस्तु—रसा । अत्राद्ये द्वे अपक्वदाडिमादिरसनामनी । 'वोगरुपेरु'॥ मधुर इक्ष्वादिरसनाम । 'तीपिपेरु'॥ लवण सैन्धवादिरसनाम । 'उप्पुपेरु'॥ कटु शुण्ठ्यादिरसनाम । 'कारमुपेरु'॥ तिक्तो निम्बादिरसनाम । 'चेदुपेरु'॥ आम्ल । अम्ल इति वा पाठ । [1]जम्बीरादिरसनाम । 'पुलुसु'॥ एते रसशब्दवाच्या पुंसि ॥ तद्वत्सु षड्मी त्रिषु । षड्मी इत्यनेन कषायशब्द विना रसवत्सु निलिङ्गा । तुवरा हरीतकी । मधुर क्षीरम् । इत्यादि ॥ ९ ॥

[1] चिञ्चादि° $B_3$ $B_4$

**विमर्दोत्थे परिमलो गन्धे जनमनोहरे ।**
**आमोदः सोऽतिनिर्हारी वाच्यलिङ्गत्वमा गुणात् ॥ १० ॥**

(नि.) विमर्दोत्थ इति—सुरभिमाल्यगन्धादिसमर्दादुत्पन्ने[1] जनमनोहरे गन्धे परिमल स्यात् । [2]परिमलत इति परिमल । 'मल मल्ल धारणे'। आ समन्तात् मोदयती त्यामोद । 'मुद हर्ष'। दूरव्यापि[4]मनोहारिपरिमलनाम ॥ वाच्यलिङ्गत्वमा गुणात् । गुणवाचिशुक्लशब्दपर्यन्त वाच्यलिङ्गता [5]भवति ॥ १० ॥

[1] °उत्पन्ने $W_2$	[2] परित मलत इति $B_2$	[3] मोदतेऽनेन A, $B_1$ T
[4] °मनोहर° D $W_2$	[5] स्यात् $D_2$

(पा.) विमर्दोत्थे—जनमनोहरे । माल्यसमर्दोत्पन्नमनोज्ञगन्धनाम[1] ॥ आमोद सोऽतिनिर्हारी । [2]दूरव्यापिपरिमलनाम ॥ 'आमोदो वापि पद्मस्य'॥ वाच्यलिङ्गत्वमा गुणात् । गुणवचनशुक्लशब्दावधि इत पर वक्ष्यमाणा शब्दा वाच्यलिङ्गा भवन्ति ॥ १० ॥

[1] गन्धे च परिमलशब्दो वर्तते। परिमलो मल्यजस्य $A_1$ [2] $A_1$ adds अतिनिर्हारी गन्ध आमोद स्यात्

**समाकर्षी तु निर्हारी सुरभिर्घ्राणतर्पणः।**
**इष्टगन्धः सुगन्धिः स्यादामोदी मुखवासनः ॥ ११ ॥**
**पूतिगन्धिस्तु दुर्गन्धो विस्रं स्यादामगन्धि यत्।**

(वि.) समाकर्षीति—[1]समाकर्षति चित्तमाकर्षतीति समाकर्षी। 'कृष विलेखने'। निर्हरति आकर्षत्यवश्यं चित्तमिति निर्हारी[2]। सम्यगाकर्षणशीलकर्पूरादि-गन्धद्रव्यनाम ॥ [3]तर्पयितुं सुष्ठु रभते आरभते सुरभिः। 'रभ राभस्ये'। [4]घ्राणतर्पण गन्धद्रव्यनाम ॥ शोभनो गन्धो यस्य सुगन्धि। अपेक्षितगन्धवद्वस्तुनाम ॥ आमोदो ऽस्यास्तीति आमोदी। मुखं वासयतीति मुखवासन। मुखवासनयोग्ययक्षकर्दमादेर्नाम[5] ॥ दुर्गन्धोऽस्यास्तीति दुर्गन्धि। [6]पूतिगन्धोऽस्यास्तीति पूतिगन्धि। दुर्गन्ध इति वा पाठः। दुष्टगन्धिनामानि ॥ विस्यति[7] विस्रम्। 'विस उत्सर्गे'। आमगन्धिनो नाम ॥ ११ ॥

[1] समाकर्षुं शीलमस्य $B_2$ [2] 'हृञ् हरणे' $D_1$ [3] कर्षयितुं $K_1$ $W_3$ [4] घ्राणं घ्राणेन्द्रियं तर्पयतीति घ्राणतर्पणं। इष्टो गन्धो यस्य स इष्टगन्ध $B_2$ [5] °कर्पूरादि द्रव्यजनितगुलिकादिनाम $B_2$ [6] पूति गन्ध U [7] उत्सृजति $B_1$

(पा.) समाकर्षी—तर्पण। [1]गन्धद्रव्यनामानि ॥ सुरभ्यादयो गन्धविशेष-वाचकाश्च भवन्ति। यथा—

'नो जिघ्रासति चम्पकेषु सुरभिं नो चन्दने चन्द्रिका
नोशीरे मुखवासनं हिमरुचौ नो वासनं पङ्कजे।
नो वा गन्धिकमुत्पले विचकिले नो लिप्सते मङ्गल
दायं दायमपावृणोति हि शकृद्विसार्थिनी मक्षिका ॥'

इति ॥ इष्टगन्ध—मुखवासन। अभिलषितगन्धवन्नामानि। 'गन्धस्येदुत्पूतिसुसुरभिभ्यः' (५ ४ १.५) इत्येकवचनग्रहणात् शोभना गन्धा अस्य सुगन्धो वायुरिति भवति ॥ पूतिगन्धस्तु दुर्गन्ध। यद्दुष्टगन्धवत् तन्नामनी। दुर्गन्धि इति तु लघुवाच्यधर्मे। [2]तथा च शृङ्गारप्रकाशिका (पृ ३१० ८१) 'द्विविधो वाच्यधर्मः। लघुर्गुरुश्चेति। तत्र बहुव्रीहिणा लघु। कर्मधारयान्मत्वर्थीयेन गुरु। तयोरादिमो[3] यथा—

यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
[4]स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ॥

इति (मेघ १. १)। अन्तिमो यथा—

आ कैलासाद् विसकिसलयच्छेदपाथेयवन्त
[4]सपत्स्यन्ते नभसि भवतो राजहंसा सहाया ॥

इति (मेघ १. ११)। विस्रं स्यादामगन्धि यत्। यन्मत्स्यादिगन्धवत्तन्नाम[5] ॥ ११ ॥

[1] यो गन्धो घ्राणतर्पणं करोति तन्नामानि A₁ [2] असिद्धार्थे A₁ [3] आद्यो B₃
[4] Pada omitted in B₃ [5] A₁ adds °सदृशगन्ध°

**शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः ॥ १२ ॥**
**अवदातः सितो गौरो वलक्षो धवलोऽर्जुनः ।**
**हरिणः पाण्डुरः पाण्डुरीषत्पाण्डुस्तु धूसरः ॥ १३ ॥**

(दा.) शुक्लेति—शोकति गच्छति मनोऽस्मिन्निति शुक्ल । 'शुक गतौ'। शुक्रेति वा पाठ । शोभत इति शुभ्र । 'शुभ[1] दीप्तौ'। शोचति [2]शुच्यतीति वा शुचि । 'शुच शोके'। धातूनामनेकार्थत्वात्[3]। श्वेतते श्वेत । 'श्विता वर्णे'। श्वयति मनोऽस्मिन्निति वा। 'टुओश्वि गतिवृद्ध्यो'। चित्त [4]विशतीति विशद । 'विश प्रवेशने'। श्यायते जनमनासि गच्छतीति श्येत । 'श्यैङ् गतौ'। पण्यते स्तूयते पाण्डर । 'पण व्यवहारे स्तुतौ च'। पण्डते मनोऽस्मिन्निति वा। 'पडि गतौ'। पाण्डु । पाण्डुरश्च । अवदायते अवदात । 'दैप् शोधने'। सिनोतीति मन सित । 'षिञ् बन्धने'। गुरते मनोऽस्मिन् [5]उद्युङ्क्ते गौर । 'गुरी उद्यमने'। अवलक्ष्यत इति [6]वलक्ष । 'लक्ष दर्शनाङ्कनयो'। वलति प्राणित्यनेन[7] वलम । 'वल प्राणने'। वले रक्षो वा [8]वलक्ष । रेफलोप । धूयते मलोऽनेति धवल । 'धूञ् कम्पने'। अर्ज्यते सर्वैरित्यर्जुन । 'अर्ज सर्ज अर्जने'। मनो हरतीति हरिण । 'हृञ् हरणे'। एतानि क्षीरशङ्खादिसवर्णनामानि ॥ धुनोति धुरूपतया चित्त [9]धूसर । 'धूञ् कम्पने'। अव्यक्तधवलनाम ॥ १२—१३ ॥

[1] शुभ शोभने' I, Y [2] शुध्यति B₁, D₂ [3] B₂ adds एव व्याख्यात
[4] विशदयति W₂, वीना पक्षिणा श सुख ददातीति वा 'दाण् दाने', विशन्त प्रवेष्टुकाम दाति खण्डयतीति वा विशद, 'दोऽवखण्डने', धातूनामनेकार्थत्वात् खण्डनार्थपदस्य क्लेशपरत्वम् B₂
[5] उद्यमयतीति B₂ [6] व वरुण जल वा लक्ष्यति द्रव्यत्वेन करोतीति वलक्ष । तस्य गुणत्वात्। गुणाश्रय द्रव्यमिति हि द्रव्यलक्षणम् B₂ [7] सत्त्वगुणेन, तद्बल रक्षतीति वा B₂
[8] ववयोरभेद A, K₂ [9] यो धूयते च सृज्यते न ■ धूसर, ईषत् स्वल्प पाण्डु ईषत्पाण्डु, ईषद्धवलनामानि B₂

(पा.) शुक्लशुभ्र—पाण्डु । वलक्ष इति वा। धवलनामानि ॥ ईषत्पाण्डुस्तु धूसर । [1]किंचिद्धवलनाम ॥ १२–१३ ॥

[1] अल्प° $A_1$

**कृष्णे नीलासितश्यामकालश्यामलमेचकाः ।**
**पीतो गौरो हरिद्राभः पालाशो हरितो हरित् ॥ १४ ॥**

(वि.) कृष्ण इति—[1]कृषति चित्तमाकर्षतीति कृष्ण । 'कृष विलेखने'। नीलवर्णत्वान्नील । 'नील वर्णे'। सितादन्योऽसित । श्यायते श्याम । 'श्यैङ् गतौ वृद्धौ च'। [2]कलयति प्रेरयतीति काल । 'कल किल क्षेपे'। [3]श्यामद्रव्यमनास्तीति श्यामल । [4]मचति वर्णान्तरेण मिश्रीभवितुमर्हतीति मेचक ।'मच [5]मुचि कल्कने'। मयूरकण्ठादिवर्णनाम ॥ पिबति चित्त पीत । 'पा पाने'। गुरतीति गौर । 'गुरी [6]उद्यमे'। [7]हरिद्राया इव आभा यस्य स हरिद्राभ । हरिद्रादिवर्णनामानि । पलाशवर्णस्याय [8]पालाश । हरति मनोऽत्रेति हरित । हरिच्च। पलाशादिवर्णनामानि ॥ १४ ॥

[1] कर्षति $B_2$, $D_1$, $K_5$, U, $W_2$ [2] कालयति I, $K_5$, $W_2$, Y [3] श्याम Y
[4] मेचयति मिश्रीभवति $B_2$, $D_1$, $W_2$ Y [5] 'मच कल शिलिसंशयो ' $B_2$, I, $W_2$, मच मुचि° Y [6] उन्नमने I [7] हरिद्राभा इव आभा $B_2$, $K_5$ [8] पलाशस्य वर्ण. इव वर्ण पालाश $B_2$ U

(पा.) कृष्णे—मेचका । कृष्णवर्णनामानि । 'कल्माषश्च सितेतर '। एते द्वे च ॥ पीतो—हरिद्राभ । हरिद्रावर्णनामानि ॥ पालाशो—हरित् । पलाशपत्रसदृशवर्णनामानि ॥ १४ ॥

**लोहितो रोहितो रक्तः शोणः कोकनदच्छविः ।**
**अव्यक्तरागस्त्वरुणः श्वेतरक्तस्तु पाटलः ॥ १५ ॥**
**श्यावः स्यात् कपिशो धूम्रधूमलौ कृष्णलोहिते ।**

(वि.) लोहित इति—[1]रोहति प्रादुर्भवति सध्यादौ रोहित । लोहितश्च । 'रुह बीजजन्मनि प्रादुर्भावे च'। [2]रज्यते रक्त । 'रञ्ज रागे'। शोणतीति शोण । 'शोणृ वर्णगत्यो '। कोकनदस्य रक्तोत्पलस्येव [3]छविर्यस्य स कोकनदच्छवि । [4]रक्तोत्पलवर्णनामानि ॥ आसा द्रव्यादियर्ति शीघ्र गच्छतीत्यरुण [5]। 'ऋ गतौ'। अव्यक्त-

रागवर्णनाम । [6]पाटलपुष्पवर्णत्वात् पाटल । श्वेतमिश्ररक्तवर्णनाम ॥ श्यायते आगच्छतीति श्याव । श्यावो वा । श्यामश्च[7] । कपिवर्णयोगात् कपिश [8] । वानरवर्णनाम ॥ धूमवर्णं रातीति धूम्र । 'रा दाने'। [9]धूमल । 'ला दाने'। [10]कृष्णमिश्रितलोहितवर्णनाम ॥ १५ ॥

[1] रोहयति प्रादुर्भावयति B₁, W₂　　[2] B₂ adds रूप्यत इति　　[3] छविरिव छवि B₁, D₁, U adds वर्णो　　[4] रक्तोत्पलादि° U　　[5] अर्णोति शीघ्र गच्छति, 'ऋणु गतौ B₁　　[6] पाटलि° D₀　　[7] 'श्यैङ् गतौ' I　　[8] कपी श्वेत वा । 'शीङ् स्वप्ने' इति धातु B₁　　[9] धूमवर्णं लातीति धूमल B₂, W₂, Y　　[10] °मिश्र° W₁, Y

(पा.) लोहितो—रक्त । रक्तवर्णनामानि । 'ताम्रो निरक्तो माञ्जिष्ठ'। एतानि च । शोण कोकनदच्छवि । रक्तोत्पलच्छवी[1] रक्तवर्ण शोण इत्युच्यते ॥ अव्यक्तरागस्त्वरुण । अव्यक्तराग [2] रक्तवर्णोऽरुण स्यात् ॥ श्वेतरक्तस्तु पाटल । श्वेतमिश्ररक्तवर्ण पाटल स्यात्[3] ॥ श्याव स्यात् कपिश । हरिद्रावर्णाधिकरक्तवर्णनामनी । 'वानरवर्णनामनी वा ॥ अनुक्तम्—'पीतरक्तस्तु पिञ्जर'। रक्तवर्णाधिकहरिद्रावर्ण पिञ्जर इत्युच्यते[5] ॥ धूम्र—लोहिते । कृष्णवर्णाधिकरक्तवर्णनामानि ॥ अनुक्तम्—'रक्तकृष्णस्तु जोनल'। रक्तवर्णाधिककृष्णवर्ण जोनल इत्युच्यते ॥ १५ ॥

[1] °द्युति B₃　　[2] B₃ omits राग　　[3] इत्युच्यते B₃　　[4] कपि° B₃
[5] स्यात B₃

**कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ ॥ १६ ॥**
**चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे ।**
**गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति ॥ १७ ॥**

इति धीवर्गः

(वि.) कडार इति—कडति [1]प्रकर्षेण लक्ष्यत इति कडार । 'कड [2]लक्षणे'। कपिवर्णं लातीति कपिल । [3]पिङ्क्ते पिङ्ग । 'पिजि वर्णे'। पिशतीति पिशङ्ग । 'पिश [4]अवयवे'। कुत्सित द्रावयतीति कद्रु । 'द्रा[5] कुत्सायां गतौ'। [6]पिङ्गवर्णं लातीति पिङ्गल [7]। गोरोचनादिवर्णनाम । चीयन्ते वर्णा अत्रेति चित्रम्[8]। 'चिञ् चयने'। नानावर्णा कीर्यन्तेऽत्रेति किर्मीर । 'कॄ विक्षेपे'। कलयति [9]काङ्क्षतीति कल्माष । [10]कलतिरनेकार्थ । शवति नानावर्णान् शबल । 'शव गतौ'। एति नानावर्णत्वम् एत ।

'इण् गतौ'। कीर्यन्ते नानावर्णा अत्रेति कर्बुर । नानावर्णद्रव्यनामानि[11] ॥ गुणे[12] शुक्लादय पुसि गुणिलिङ्गास्तु तद्वति । त्रिषु इत्यर्थ ॥ १६–१७ ॥

इति श्रीलिङ्गयसूरिविरचितायाममरकोशपदविवृतौ धीवर्गविवृति

[1] कडति प्रतिक्षण भिन्नवर्णमिव लक्ष्यते $B_2$ [2] 'कड बन्धने मदे च' A [3] पिञ्जयति मिलति $W_1$, Y, पिङ्गति $B_1$, $D_1$, U 'पिङ्ग मिलने' $K_5$ U [4] गतौ $W_2$, Y. [5] 'द्रु गतौ' Y [6] पिङ्ग लाति $W_1$ [7] 'ला दाने' $D_1$. [8] चीयन्त इति चिता नानावर्णा तेऽस्मिन्निति $B_2$ [9] $B_2$, $K_5$ U, Y add अनेकवर्णान्, °वर्णैन $K_1$, $K_2$ [10] कलि कामधेनु $B_2$ [11] $W_2$, Y omit द्रव्य [12] शुक्लादय शब्दा गुणमात्रे वर्तमाना पुसि, पटस्य शुक्ल, गुणवद्वर्तमाना अभिधेयलिङ्गा, शुक्ल पट, शुक्ला शाटी, शुक्ल वस्त्रम् $W_1$

(पा.) कडार —पिङ्गलौ । कपिलवर्णनामानि ॥ चित्र—कर्बुरे । तिलतण्डुल न्यायेन दृश्यमानमिश्रवर्णनामानि ॥ गुणे—तद्वति । शुक्लादिशब्दा गुणे पुलिङ्गा भवन्ति । गुणिनि तु त्रिलिङ्गा भवन्ति । अत्र रोहितादिशब्दाना स्त्रीत्वे रूपभेदोऽस्ति ।

'रोहिणी रोहिता रक्ता लोहिनी लोहिता च सा ।
लोहितिका लोहिनिका रागात् कोपादिनापि वा ॥
शोणी शोणा च पिङ्गा स्यात् पिशङ्गी हरिणी तु या ।
हरितैनी तथैता च श्येनी श्येता सिता च सा ॥
नीलैव वस्त्रे वा नाम्नि नीली प्राणिनि चौषधौ ।
शबली चैव कल्माषी कल्माषेत्यर्शआद्यचि ॥' १६–१७ ॥

इति [1]श्रीवत्सनृसिंहसूरिसुतमल्लिनाथसूरिविरचितेऽमरपदपारिजाते धीवर्ग

[1] नरसिंह° $A_1$

---

## ६. वाग्वर्गः

ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती ।
व्याहार उक्तिर्लपितं भाषितं वचनं वचः ॥ १ ॥

(वि.) ब्राह्मीति—ब्रह्मण इय ब्राह्मी। [1]विश्वानि [2]भूतानि भ्रियन्तेऽनया भारती। 'भृञ् भरणे'। भरतस्य ब्रह्मण इय वा। भरतस्य आदित्यस्य [3]प्रभा वा। [4]भाष्यते भाषा। 'भाष व्यक्तायां वाचि'। गृणाति अस्खलितम् उच्चारयति गीः। 'गॄ शब्दे'। गीयते स्तूयते वा। 'गै शब्दे'। उच्यत इति वाक्। 'वच परिभाषणे'। वण्यते स्तूयते वाणी। 'वण शब्दे'। सर प्रसरण सर्वत्रास्तीति सरस्वती। सरस्वतीनामानि॥ [5]व्याह्रियते उच्यते व्याहार। 'हृञ् हरणे'। उच्यते उक्ति। 'वच परिभाषणे'। लप्यते लपितम्। 'लप व्यक्तायां वाचि'। भाष्यते भाषितम्। 'भाष व्यक्तायां वाचि'। उच्यत इति वचनम्। वचश्च[6]। एतानि वचननामानि॥ १॥

[1] B₁, K₁, Y omit. [2] भुवनानि W₂ [3] प्रभा कान्तिर्वा भारती, वाक् तेजोमयीति श्रुतिनिर्णीतत्वात् B₂ [4] स्तूयत A, T, श्रूयते K₂, Y [5] व्याहरति B₁, W₂, Y
[6] B₂ W₁ add 'वच परिभाषणे'

(पा.) ब्राह्मी—सरस्वती। [1]सरस्वतीदेवीनामानि॥ इकारान्तवाणिशब्द आकारान्तवाचाशब्दोऽप्यस्ति[2]। तत्र प्रथमो यथा—'एका [3]वाणिरलङ्करोति पुरुषम्' (नी ■ १५) इति। अन्तिमो यथा—'कुठारदण्ड कुलमृत्युरेषा वाचा समीचीनसुवीरधन्वा!' इति। व्याहार—वच। वचननामानि। सरस्वतीपर्याय च [4]पठति।

'[5]कवेरपार्था मधुरा न भारती कथेव वर्णान्तमुपैति भारती।'

इति राघवपाण्डवीये (द्विस १ ५)।

'सन्त क्षतानि जनयन्तु यथेष्टमस्यामाभाति तैरधिकमेव सरस्वती मे।
दन्तक्षत प्रियतमैरनुभूतिकाले किं मण्डनाय न भवेद् वरसुन्दरीणाम्॥'

इत्यादि॥ १॥

[1] वाग्देवता° B₂ [2] शब्दश्च B₂, B₄ [3] वाण्येका, वागेका इति मुद्रितग्रन्थे
[4] भवति A₁ [5] कले A₁, B₄

अपभ्रंशोऽपशब्दः स्याच्छास्त्रे शब्दस्तु वाचकः।
तिङ्सुबन्तचयो वाक्यं क्रिया वा कारकान्विता॥ २॥

(वि.) अपभ्रंश इति—वाचम् अपभ्रंशयतीति अपभ्रंश[1]। 'भ्रंशु अध [2]पतने' शब्दादपभ्रष्टोऽपशब्द। [3]शब्दशास्त्राकथितशब्दनामानि॥ शब्दयत्यवगमयत्यर्थमिति शब्द। 'शब्द आविष्कारे'। [4]वचोयोग्यो वाचक। शब्दशास्त्रोक्तशब्दनाम॥ तिङा चय सुपा चय कारकान्विता क्रिया वा वाक्यं भवति। अर्थबोधाय वक्तव्यं वाक्यम्।

तिङन्तानां चयो यथा—पचति[5] भवतीत्यादि। सुबन्तचयो यथा—[6]ज्ञानेन मौनमित्यादि। क्रिया [7]यथा—गां [8]जलं फलमानयेत्यादि ॥ २ ॥

[1] संस्कृतात् अपभ्रंशयति वा $B_1$, $D_1$, I, $K_5$, $W_2$, अपभ्रश्यते $W_1$ [2] हिंसाया I, $K_5$. [3] 'शास्त्रात् पतितशब्द° $B_2$, शपयति अवगमयति अर्थं शब्दः, 'शप गतौ' I, $Pt_1$, $Pt_2$. [4] वचसो योग्यः $B_2$, वाचो° $K_5$, वस्तु° $W_2$ [5] भवति एधते पचतीत्यादि $K_5$, Y, भाति भवति $K_1$ [6] ज्ञान Y [7] $B_2$, $W_1$ add कारकान्विता. [8] गामानय, जलमानयेत्यादि $B_2$, $D_1$, $K_5$, U, Y.

(पा.) अपभ्रंशो—वाचक। शास्त्रे गाविगोणीत्याद्यपशब्दोऽपभ्रंशः स्यात्। गौरित्यादिर्वाचकः शब्दो भवति। तिङ्—वाक्यम्। [1]एकार्थोपरि तिङन्तसुबन्तसमुदायो वाक्यम्। यथा—

'कतिचन जृम्भन्ते दिशि कतिचन विकसन्ति काननाभोगे।
कतिचन नृत्यन्ति गिरौ तथापि भवितव्यमेव भवितव्यम् ॥'
'भ्रेमुर्ववल्गुर्ननृतुर्जजक्षुर्जगुः समुत्पुप्लुविरे निषेदुः।
आस्फोटयांचक्रुरभिप्रणेदू रेजुर्ननन्दुर्विययुः समीयुः [2] ॥' (भट्टि. १३. २८)
'[3]कियत्प्रमाणमुदकं जानुदघ्नं नराधिप।
तथापीयमवस्था ते न हि सर्वे भवादृशः ॥' (भो. प्र. पृ. ४०, श्लो. १८५)

इत्यादि ॥ क्रिया वा कारकान्विता। कारकसंबद्धक्रियापि वाक्यं भवति। यथा—

'ततः कुमुदनाथेन कामिनीगण्डपाण्डुना।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलंकृता ॥' (म. भार. ७. १५९. ४२)
'मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा।
वाहिनी जलधरः कुलिशो वा स्वस्ति तेऽस्तु लतया सह वृक्ष ॥'

अत्र बाधिष्ट इति क्रियाध्याहर्तव्या।

'छायासंतपिताध्वन्यः फलैः पोषितनीडजः।
हन्त वृक्षो महानेष समिदर्थं विभिद्यते ॥'

अत्र जाल्मेनेति कारकमध्याहार्यम् ॥ २ ॥

[1] एकार्थपद $B_2$. [2] $B_2$ adds इति भट्टिकाव्ये [3] कियन्मात्रं जलं विप्र इति मुद्रितग्रन्थे

**श्रुतिः स्त्री वेद आम्नायस्त्रयी धर्मस्तु तद्विधिः ।**
**स्त्रियामृक् सामयजुषी इति वेदास्त्रयस्त्रयी ॥ ३ ॥**
**शिक्षेत्यादि श्रुतेरङ्गमोंकारप्रणवौ समौ ।**

(वि.) श्रुतिरिति—श्रूयेते धर्माधर्मावनयेति श्रुति । 'श्रु श्रवणे' । [1]धर्माधर्मौ वेदयतीति वेद [2]। 'विद ज्ञाने' । आम्नायते[3] पारपर्येण आम्नाय । 'म्ना अभ्यासे' । ऋग्यजु सामरूपा त्रयोऽवयवा[4] यस्या त्रयी । वेदनामानि[5] ॥ धारयति जगन्तीति धर्म [6] । वेदोक्तविधिनाम ॥ ऋच्यते स्तूयते ऋक् । 'ऋच स्तुतौ' । पाप[7] स्यतीति साम । 'षोऽन्तकर्मणि' । इज्यतेऽनेन यजु । 'यज देवपूजासगतिकरणयजनदानेषु' । इति त्रयो वेदा । तेषा[8] समाहार त्रयी । [9]वेदत्रयसमूहनाम ॥ [10]शिक्ष्यतेऽनया [11]वर्णादि शिक्षा । 'शिक्ष विद्योपादाने' । आदिशब्देन [12]अङ्गान्युच्यन्ते ।

'शिक्षा व्याकरण कल्पो निरुक्त ज्योतिषा [13]गति ।
[14]छन्दोविचितिरित्येतै षडङ्गो वेद उच्यते ॥'

इति श्रुत्यङ्गनामानि ॥ ओमित्यक्षरम् ओंकार । [15]प्रणूयते स्तूयतेऽनेनेति प्रणव । 'णु स्तुतौ' । [16]वेदप्रणवनाम ॥ ३ ॥

[1] धर्मादि $D_1$ [2] श्रुतित्रय वेद $D_1$, विदन्ति धर्मादिकमनेन A [3] उपदिश्यतेऽनेन धर्मादि $D_1$, अभ्यस्यत $B_2$ [4] तथा समाहार त्रयी $B_2$ [5] वेदत्रयनाम $K_3$ [6] 'धृञ् धारणे' $D_1$ [7] पापानि I [8] इति त्रयाणा A, $B_1$, T [9] $W_2$ Y omit °त्रय° [10] शिक्षते $B_2$ [11] आदिवर्णादि A, $B_1$ T, $W_1$ [12] अङ्गयते (अङ्गति $K_5$) ज्ञायतेऽनेन अङ्ग $B_1$, $D_1$ Y 'अगि गतौ' I [13] ज्योतिष तथा A, $B_1$ T [14] छन्दसा लक्षण चैव $B_1$ I, $K_5$ $W_2$ Y [15] प्रकर्षेण नूयते $B_2$ [16] वेदनिष्ठ° $B_2$ °प्रणववचन° $D_1$

(पा.) श्रुति —त्रयी । वेदनामानि ॥ धर्मस्तु तद्विधि । वेदोक्तविधिर्धर्म स्यात् । स्त्रियाम्—त्रयी । त्रयाणा वेदाना [1]समाहारस्त्रयी । अत्र त्रयीति सामान्याकारेणोक्तम् । शिक्षे—अङ्गम् । शिक्षादीनि वेदाङ्गानि ।

'शिक्षा कल्पो व्याकरण निरुक्त ज्योतिष तथा' ।
छन्दसा विचितिश्चेति षडङ्गो वेद उच्यते' ॥

ओंकारप्रणवौ[3] समौ । प्रणवनामनी[4] ॥ ३ ॥

[1] समुदाय: $B_3$, $B_4$. [2] श्रुति: $A_1$. [3] $A_1$ adds प्रणमौ इति वा. [4] शिक्षादिपाठस्य प्रणवपूर्वकत्वात् शिक्षायनन्तरकथनम् $A_1$.

**इतिहासः पुरावृत्तमुदात्ताद्यास्त्रयः स्वराः ॥ ४ ॥**
**आन्वीक्षिकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयोः ।**

(त्रि.) इतिहास इति—[1]इतिह इति पारंपर्योपदेशः आस्तेऽस्मिन्निति इतिहासः । 'आस [2]उपवेशने'। [3]पुरावृत्तनृ[4]पादिचरित्र[5]ग्रन्थसंदर्भनाम ॥ उत् ऊर्ध्वमुन्नीयते[6] उदात्तः[7]। तद्विपरीतः अनुदात्तः। उदात्तानुदात्तयोः समाहारं[8] प्राप्तः स्वरितः। एते त्रयः स्वरा भवन्ति ॥ प्रत्यक्षागमाभ्याम् अवगन्तव्यस्य[9] वस्तुनोऽनु पश्चात् ईक्षणम् अन्वीक्षा,[10] सा प्रयोजनं यस्याः सा आन्वीक्षिकी। अक्षपादादिप्रणीततर्कशास्त्रनाम[11] ॥ [12]दण्डोऽनया नीयते दण्डनीतिः। 'णीञ् प्रापणे'। चाणक्यादिप्रणीतार्थशास्त्रनाम ॥ ४ ॥

[1] इतिहा A, $B_1$, T; इति हसति $B_2$; इतिह आसीत् $D_1$, $D_2$, I, $K_1$, $W_1$. [2] 'अस भुवि क्षेपे' $D_2$, I, $K_1$, $K_2$, $K_5$, Y. [3] पुरा पूर्वम् उत्पन्नं वृत्तं पुरावृत्तम् $B_2$. [4] °पृथ्व्यादिनृप° $K_5$. [5] °चरित° $W_2$. [6] आदीयते $D_1$, $K_1$, U, $W_1$, Y. [7] उदात्तः उच्चैर्गीतः आद्यः प्रथमो येषां ते उदात्ताद्याः $B_2$. [8] समाहारः $D_2$, $K_1$, $W_1$. [9] ईक्षितस्य $D_2$, $K_1$, U, $W_2$. [10] अन्वीक्षणं तत् A, $B_2$. [11] तर्कशास्त्रादिविद्या° $W_2$; °तर्कविद्या° $D_1$, I, $K_1$, $K_5$, Y. [12] दण्ड्यतेऽनेन ऊन इति $W_2$.

(पा.) इतिहासः पुरावृत्तम्। इतिहासनाम ॥ उदात्ताद्यास्त्रयः स्वराः। उदात्तनिहतस्वरिताः[1] स्वराः। आन्वीक्षिकी—शास्त्रयोः। तर्कविद्या वैशेषिकादिः, अर्थशास्त्रं कामन्दकादि। तयोर्यथाक्रमं आन्वीक्षिकीदण्डनीतिशब्दौ वर्तेते। अनुक्तम्— 'नामशास्त्रं[2] निघण्टुर्ना'। नामशास्त्रं निघण्टुरित्युच्यते[3] ॥ ४ ॥

[1] °विहत° $B_1$. [2] $A_1$ adds कामशास्त्रं. [3] नामशास्त्रनाम $B_3$.

**आख्यायिकोपलब्धार्था पुराणं पञ्चलक्षणम् ॥ ५ ॥**
**प्रबन्धकल्पना कथा प्रवल्हिका प्रहेलिका ।**

(त्रि.) आख्यायिकेति—आख्यायते वर्तमाननृपादिचरित[1]मित्याख्यायिका[2]। 'ख्या प्रकथने'। [3]हर्षचरितादिग्रन्थसंदर्भनाम ॥ पुरा भवं पुराणम्। पञ्चलक्षणयुक्तं ब्राह्मवैष्णवादिपुराणनाम ॥

'[4]सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं [5]चेति [6]पुराणं पञ्चलक्षणम् ॥'

[7]अनया कथ्यत इति कथा । 'कथ वाक्यप्रबन्धे' । रामायणादेर्नाम ॥ प्रवल्हते [8]प्राधान्यं भजते प्रवल्हिका । 'वल्ह प्राधान्ये' । प्रहेलयति द्रावयति सूचयति [9]भावार्थमिति प्रहेलिका । 'हिल [10]भावकरणे' । विरुद्धार्थवचोनामनी ॥ ५ ॥

[1] °चरितं $B_2$, $W_2$ [2] $P_3$ adds उपलब्धो ज्ञातोऽर्थो यस्याः सा उपलब्धार्था. [3] प्राचीनचरित्र° $B_2$, श्रीहर्ष° $K_5$, वर्तमानरूपचरित्र° A, T [4] पञ्चलक्षणान्युच्यन्ते $B_2$, $K_5$ omits [5] चैव $B_1$, $W_2$ [6] लक्षणाना च पञ्चकम् $B_2$ [7] $B_2$ adds प्रबन्धस्य कल्पना रचना [8] प्रधानं U, अप्राधान्य Y. [9] नानार्थमिति $D_1$, 'वल्ह परिभाषणहिंसाप्रदानेषु प्राधान्ये च' $B_2$ [10] हावकरणे A, $B_1$, T.

(पा.) आख्यायिकोपलब्धार्था । नायकाख्यातत्वयकोपलब्धार्थवती आख्यायिका । हर्षचरितादि ॥ पुराणं पञ्चलक्षणम् । सर्गप्रतिसर्गादिपञ्चलक्षणोपेतं पुराणम् ।

'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तरं तथा ।
वंशानुचरितं चेति पुराण पञ्चलक्षणम् ॥'

स्कन्दादि ॥ प्रबन्धकल्पना कथा । स्तोकसत्यबहुसत्ययुक्ता प्रबन्धकल्पना कथा स्यात् । कादम्बर्यादि ॥ प्रवह्लिका प्रहेलिका । गूढनिक्षिप्तार्थस्य कुतुकहेतोः कार्यविशेषस्य नामानि ।

'[1] अष्टौ श्लोकान् कुरुष्वेति पुनः पित्रा नियन्त्रितः ।
सप्त श्लोकाः कृतास्तेन पितुराज्ञा न लङ्घिता' ॥ ५ ॥

[1] अष्टिरिति वृत्तनाम

स्मृतिस्तु धर्मसंहिता समाहृतिस्तु संग्रहः ॥ ६ ॥
समस्या तु समासार्था किंवदन्ती जनश्रुतिः ।

(वि.) स्मृतिरिति—स्मर्यतेऽनया स्मृति । 'स्मृ आध्याने' । मन्वादिप्रणीतधर्मसंहितानाम[1] ॥ समाह्रियतेऽनयेति समाहृति. । संगृह्यते संक्षिप्यते[2] संग्रह । [3]संक्षिप्तग्रन्थसन्दर्भनाम ॥ समस्यते संक्षिप्यते समस्या । 'असु [4]क्षेपणे' । [5]कविपरीक्षार्थं दीयमानश्लोकशनाम ॥ [6]किं परस्पर वदन्त्यनेति किंवदन्ती । 'वद व्यक्तायां वाचि' । [7]जनै श्रूयते जनश्रुति. । 'श्रु श्रवणे' । लोकप्रवादनामनी ॥ ६ ॥

[1] $B_2$ adds धर्मेण सहिता   [2] अनेनेति $B_2$, 'ग्रह उपादाने' $B_2$, $D_1$   [3] $D_1$ omits सदर्म संक्षेपग्रन्थनाम $B_1$, $K_5$ $W_2$, Y   [4] क्षेप $W_1$   [5] कविता° $K_5$, श्लोकान्त° $W_1$, श्लोरान्तपाद° Y   [6] विमिति $W_1$, Y   [7] $W_1$ omits 3 lines

(पा.) स्मृतिस्तु धर्मसंहिता। स्मृतिनाम ॥ समाहृतिस्तु सग्रह । सग्रहग्रन्थनाम ॥ समस्या तु समस्यार्था । समस्यारूपार्थं प्रहेलिका निक्षिप्तार्थकौतुकवती समस्या । अथवा समस्या तु समासार्था समासशब्दवती समस्या। 'समस्या तु [1]समास स्यात्' इति वैजयन्ती (पृ ३४, श्लो ४०)।

'श्रीभोजेन जितोऽस्मीति चिन्ता चिन्तामणे त्यज।'
'जिता देवद्रुमा पञ्च न तु त्व पञ्चभि सह॥'

किंवदन्ती जनश्रुति । जनवादनामनी ॥ ६ ॥

[1] समासा $A_1$, $B_3$

**वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादथाह्वयः ॥ ७ ॥**
**आख्याह्वे अभिधानं च नामधेयं च नाम च ।**

(वि.) वार्तेति—नृपादिवृत्तिरत्रास्तीति[1] वार्ता। प्रवर्ततेऽनेनेति प्रवृत्ति । 'वृतु वर्तने'। वृत्तोऽनुवर्तनीयोऽन्त समाप्तिरस्येति वृत्तान्त । वृत्तस्यान्तो वा। उद्यते निगद्यते राजादिचरित्रमनेनेत्युदन्त । 'वद व्यक्तायां वाचि'। वार्तानामानि ॥ अनेन आह्वयन्तीत्याह्वय । 'ह्वेञ् स्पर्धायां शब्दे च'। आहूयतेऽनेनेति [2]वा। 'हु दानादानयो '। अनया आख्यायते आख्या। 'ख्या प्रकथने'। आहूयतेऽनया आह्वा। अनेनाभिधीयतेऽभिधानम्[3]। नामैव नामधेयम्। अनेन नमति नाम। 'णम प्रह्वत्वे शब्दे च'। सज्ञानामानि[4] ॥ ७ ॥

[1] अस्ता $D_2$ $K_1$, $K_2$   [2] आहूतिश्च A.   [3] 'डुधाञ् धारणपोषणयो' $B_2$
[4] Y omits 3 lines

(पा.) वार्ता—उदन्त स्यात्। वार्तानामानि। अनुक्तम्—'रथ्यावादस्तु कोहल '[1]। एते द्वे च। वीथीवार्तानामनी॥ अथाह्वय —नाम च। [2]सकेतितशब्दनामानि ॥ ७ ॥

[1] वाहल $A_1$   [2] $A_1$ adds देवदत्तादौ

**हूतिराकारणाह्वानं संहूतिर्बहुभिः कृता ॥ ८ ॥**
**विवादो व्यवहारः स्यादुपन्यासस्तु वाङ्मुखम् ।**

(वि.) हूतिरिति—अनया हूयते हूतिः । 'हु दानादानयोः' । अनया आकारयन्तीति आकारणा[1] । अनेनाह्वयन्तीत्याह्वानम् । 'ह्वेञ् स्पर्धायां शब्दे च' । अथवा हूतिः आकारणं च आह्वानं च । आकारणाह्वाने इति द्वन्द्वम् । एहीति [2]वचसो नामानि ॥ सम्यक् हूयते संहूतिः । बहुभि. कृतस्य एहीति वचसो नाम ॥ विविधो वादो विवादः[3] । व्यवहरत्यनेन व्यवहारः । 'हृञ् हरणे' । इदं मदीयमिदं मदीयमिति परस्परवादनाम[4] ॥ उपन्यस्यते उपन्यासः । 'असु क्षेपणे' । वाचो मुखं वाङ्मुखम् । वाक्यारम्भनाम ॥ ८ ॥

[1] 'डुकृञ् करणे' B₂  [2] वचन° D₁.  [3] 'वद व्यक्तायां वाचि' A.  [4] वचन° A; °निवाद° B₁, D₁

(पा.) हूतिः—आह्वानम् । इत एहीति वचसो नामानि ॥ समासाङ्गीकारपक्षे आकारणशब्दो नपुंसकः । 'आकारणमाह्वानम्' इति हलायुधः (अ. मा. १. १५४) । व्यासाङ्गीकारपक्षे आकारणाशब्दः स्त्रीलिङ्गः । 'हूतिराकारणा हावो[1] । [2]हक्कारामन्त्रणाह्वानम्' इति वैजयन्ती (पृ. २३, श्लो. ३०) । संहूतिर्बहुभिः कृता । बहुभिः कृतस्य एहीति वचसो नाम । 'बहुभिर्मुहुःकृता हक्का संहूतिरिति भण्यते' इति वा ॥ विवादो व्यवहारः स्यात् । विवादनाम ॥ उपन्यासस्तु वाङ्मुखम् । [3]'यरो ऽमि ऽन्वेति' ककारस्य विभाषा ङकारः । उपन्यासनाम ॥ ८ ॥

[1] हवः B₁.  [2] आमन्त्रणं ह्वानम् A₁.  [3] 'यरोऽनुनासिके—' (८. ५. ४५).

**उपोद्घात उदाहारः शपनं शपथः पुमान् ॥ ९ ॥**
**प्रश्नोऽनुयोगः पृच्छा च प्रतिवाक्योत्तरे समे ।**

(वि.) उपोद्घात इति—उपोद्धन्यते [1]उपोद्घातः । 'हन हिंसागत्योः' । उदाह्रियतेऽनेन उदाहारः[2] । प्रकृतार्थचिन्ताप्रन्थस्य नामनी ॥ उदाहरणनामनी इति केचित् । विचारविषयवाक्यस्येत्यन्ये ॥ शपति आक्रोशतीति शपनम् । 'शप [2]आक्रोशे' । शपति लम्भयति[1] विश्वसित्यनेनेति [3]शपथः । 'शप [4]लम्भने' । सत्यवचननामनी ॥ देवतापितृपात्रादिस्पर्शस्य वा ॥ [5]पृच्छतीति प्रश्नः । पृच्छा च । 'प्रच्छ ज्ञीप्सायाम्' । अनुयुज्यतेऽनुयोगः । 'युजिर् योगे' । कोऽसौ कुत्र' इत्येवंविधस्य वाक्यस्य नामानि ॥

[9]प्रतिविधानार्थं वाक्यं प्रतिवाक्यम्। उत्तरति चोद्यमनेनेति उत्तरम्। 'तॄ प्लवनतरणयोः'। असावत्रेत्यादिप्रत्युत्तरनामानि[10] ॥ ९ ॥

[1] उप समीपे उद्धन्यते $B_1$, $D_1$, I, $K_5$, Y. [2] 'हृञ् हरणे' $B_2$, $D_1$, I. [3] आक्रोशने $D_2$ [4] उपालम्भते $W_1$. [5] शपथशब्दः नपुंसकेऽपि A, $B_1$, T. [6] उपालम्भने $B_2$, $W_2$, Y. [7] पृच्छ्यते $K_5$, $W_2$. [8] I adds आगत.. [9] प्रतिदान वाक्यं $W_2$ [10] प्रश्नवाक्यस्योत्तरनामानि $B_2$, °अत्रागत° $K_3$, उत्तर° $K_2$, $K_5$

(पा.) उपोद्घात उदाहारः। प्रतिपाद्यमर्थं बुद्धौ संगृह्य तदर्थमर्थान्तरवर्णनम् उपोद्घातः ॥ शपनं शपथः पुमान्। सत्यवचननामनी। प्रश्नो—पृच्छा च। प्रश्ननामानि ॥ प्रतिवाक्योत्तरे समे। उत्तरनामनी ॥ ९ ॥

मिथ्याभियोगोऽभ्याख्यानमथ मिथ्याभिशंसनम् ॥ १० ॥
अभिशापः प्रणादस्तु शब्दः स्यादनुरागजः।

(वि.) मिथ्येति—अभि असत्यमारोप्याख्यानम् अभ्याख्यानम्[1]। अध्याख्यानमिति वा पाठः। अन्धो बधिर [2]इत्यादि [3]मिथ्याभियोगनाम ॥ मिथ्या असत्यमभिशस्यते मिथ्याभिशंसनम्[4]। 'शंसि [5]इच्छायाम्'। अभि आरोप्य शप्यते अभिशापः। 'शप आक्रोशे'। अविद्यमानपापारोपनामनी ॥ प्रणद्यतेऽनुरागेण प्रणादः। 'णद अव्यक्ते शब्दे'। अनुरागोत्पन्नमणितादिशब्दनाम ॥ १० ॥

[1] अभित आख्यान $B_3$ [2] इत्येवंप्रकारं I, $K_5$ [3] असत्याभियोग° $B_2$ [4] मिथ्या अभिशसति $K_5$, $W_2$, $B_2$ adds अस्मिन्निति [5] 'शंसु स्तुतौ' I, Y

(पा.) मिथ्याभियोगोऽभ्याख्यानम्। अध्याख्यानमिति वा। मृषा झकटकनामनी(?)। अथ—अभिशाप। मृषाभूतनिर्भर्त्सननामनी ॥ प्रणादस्तु—अनुरागज। अनुरागाज्जातध्वनिविशेषः प्रणादः स्यात् ॥ १० ॥

यशः कीर्तिः समाख्या च स्तवः स्तोत्रं स्तुतिर्नुतिः ॥ ११ ॥
आम्रेडितं द्विस्त्रिरुक्तमुच्चैर्घुष्टं तु घोषणा।

(वि.) यश इति—अश्नुते व्याप्नोति देशान्तरेषु यशः। सान्त। 'अशू व्याप्तौ'। देशान्तरं यातीति वा। 'या प्रापणे'। कीर्त्यते [1]शब्द्यते [2]कीर्तिः। 'कॄत संशब्दने'। समन्तात् आख्यायते समाख्या। 'ख्या प्रकथने'। यशोनामानि ॥ [3]समाख्येति

वा पाठः ॥ स्तूयतेऽनेन स्तवः । स्तोत्रं । स्तुतिश्च । 'ष्टुञ् स्तुतौ' । नूयतेऽनेन नुतिः । 'णु स्तुतौ' । प्रशंसानामानि ॥ आम्रेड्यतेऽसकृदुच्यते आम्रेडितम् । 'म्रेडृ उन्मादे' । असकृद्वापितनाम ॥ घुष्यत इति घोषणा। 'घुषिर् शब्दे[4]' । आज्ञापयितुं सर्वजन-बोधनार्थं [5]पटहादावुच्चैःकृतशब्दनाम ॥ ११ ॥

[1] शब्दायते A, B₁, T. [2] इयर्तीति वा कीर्तिः, 'ऋ गतौ' B₁, D₁, K₅, W₂, Y. [3] समचेति वा पाठः, समन्तात् शायते, 'ज्ञा अवबोधने' B₂, D₂, Y. [4] विशब्दने A, D₁, K₁, K₂. [5] A omits आदौ.

(पा.) यशः—समाख्या च। समाख्या तुल्यलक्षणमिति हलायुधानुसारी पाठः। 'यशोऽभिख्यासमाख्यास्तुल्यलक्षणाः' इति हलायुधः (अ. मा. १. १५३)। यशः कीर्तिः समाज्ञा[1] चेत्ययं वैजयन्त्यनुसारिपाठः[2]। 'समाज्ञा च यशः कीर्तिः' इति वैजयन्ती (पृ. ३४, श्लो. ३६)। 'कीर्तिः ख्यातिः समाज्ञा च' इति रभसकोशः। कीर्तिनामानि ॥ स्तवः—नुतिः। स्तोत्रनामानि ॥ 'ईडा श्लाघा प्रशंसा च वर्णनं च विकत्थनम्'। एतानि च॥ आम्रेडितं द्विस्त्रिरुक्तम्। द्विस्त्रिरुदीरणमाम्रेडितं भवति। '[3]एतदेव यथावाचमाम्रेडयति वासवः' (म. भार. ३. १२४. १३) ॥ उच्चैः—घोषणा। उच्चैःशब्दः घोषणा स्यात् ॥ ११ ॥

[1] समज्ञा इति मुद्रितग्रन्थे. [2] °पाठेन समाज्ञा च B₃ [3] 'एतदेव यदा वाक्य-माम्रेडयति देवराट्' Apte's Dict. p 347.

काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः ॥ १२ ॥
अवर्णाक्षेपनिर्वादपरिवादापवादवत् ।
उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे ॥ १३ ॥

(वि.) काकुरिति—कायतीति काकुः । 'कै[1] शब्दे' । शोकभीत्यादिकृतध्वनि-विकारनाम ॥ वर्ण्यते वर्णः । विरुद्धो वर्णः अवर्णः । 'वर्ण वर्णक्रियाविस्तारगुणवचनेषु' । 'वर्ण स्तुतौ' इति वा धातुः । आक्षिप्यते आक्षेपः । 'क्षिप प्रेरणे' । निकृष्टो वादः [2]निर्वादः । [3]परिवादः । [4]अपवादः । 'वद व्यक्तायां वाचि' । [5]उपक्रोशतीत्युपक्रोशः । 'क्रुश आह्वाने रोदने च' । [6]जुगुप्सते जुगुप्सा । 'गुप गोपने[7]' । कुत्स्यते कुत्सा । 'कुत्स [8]निन्दने' । निन्दतीति [9]निन्दा । 'णिदि कुत्सायाम्' । [10]गर्हतीति गर्हणम् । गर्हा च । 'गर्ह कुत्सायाम्' । निन्दानामानि ॥ १२–१३ ॥

[1] 'कै गै र शब्दे' A B₁, T, Y [2] निष्क्रान्तो वादात् D₁, I. [3] परीवादः K₅, U, परिवदन D₁, I, K₅, W₂, परिवादन B₁, परिवदतीति B₂ [4] अपवदन D₁, I [5] उपक्रोशन B₂ D₁, K₅ W₂ [6] जुगुप्सन I, K₅, W₂ [7] निन्दाया A, B₁, T. [8] निन्दाया I, W₂ [9] निन्द्यतेऽनया B₂ [10] गर्ह्यतेऽनेनेति B₂

(पा.) काकु —ध्वने । [1]शोकभयादिकृतध्वनिविकार' काकुः स्यात् । अवर्णा—अपवादवत् । [2]अत्र परिवादशब्दो दीर्घकारो ह्रस्वेकारश्च भवति । यथा—'मा भूत् परीवादनवावतार' (रघु ५. २४) इति[3] । अन्यत्तु स्फुटम् । उपक्रोशो—गर्हणे[4] । निन्दानामानि ॥ १२–१३ ॥

[1] °आदिभि A₁ [2] अत्र परीवादोऽपि B₃, B₄ [3] B₄ adds रघुवंशे. [4] गर्हणा B₃, गर्हण A₁

**पारुष्यमतिवादः स्याद्भर्त्सनं त्वपकारगीः ।**
**यः सनिन्द उपालम्भस्तत्र स्यात् परिभाषणम् ॥ १४ ॥**

(वि.) पारुष्यमिति—स्पष्टम् । उपालभ्यते उपालम्भ । 'डुलभष् प्राप्तौ' । इद [1]निन्दापरिभाषणनाम । य स निन्दतीति वा पाठ । अत्र परिभाषणशब्दो भवति । परित सनिन्द [2]भाष्यते परिभाषणम् । 'भाष व्यक्तायां वाचि' । [3]निन्दासहितपरिभाषणनाम ॥ १४ ॥

[1] मन्द मैव वादीरिति सनिन्दपदवाक्य(परिहास U) नाम B₂, K₅ [2] भाषते U [3] निन्दादिना W₁, निन्दाये B₂

(पा.) पारुष्यं—परिभाषणम् । परिहासोक्त्या मर्मस्पृग्भाषणमुपालम्भ । 'उत्प्रास[1] स्यादुपालम्भ. परिवाग्भाषणीति[2] च' इति वैजयन्ती (पृ ३३, श्लो. ३५) । निन्दासहितो य [3]परिहासस्तत्र परिभाषणशब्दो वर्तते । निन्दासहितपरिहासनाम ॥ १४ ॥

[1] उत्प्राश A₁ [2] °भाषिणीति B₃, B₄ [3] उपालम्भ B₃

**तत्र त्वाक्षारणा यः स्यादाक्रोशो मैथुनं प्रति ।**
**स्यादाभाषणमालापः प्रलापोऽनर्थकं वचः ॥ १५ ॥**
**अनुलापो मुहुर्भाषा विलापः परिदेवनम् ।**

(वि.) तत्रेति—आ क्षरति परितो [1]व्याप्नोतीति आक्षारणा। 'क्षर सचलने'। मैथुनमुद्दिश्याक्रोशनाम[2]॥ आभाष्यते [3]सम्यग् भाष्यते आभाषणम्। आलपतीत्यालाप। 'लप व्यक्तायां वाचि'। सुखेन[4] स्थितमिति प्रियवचननाम॥ प्रलपतीति प्रलाप। निष्प्रयोजनवचननाम॥ अनुलपतीत्यनुलाप। [5]मुहुर्वचननाम॥ विलपतीति विलाप। [6]परिदेवते परिदेवनम्। 'देवृ देवने'॥ अनुशोचननामानि॥ १५॥

[1] प्राप्नोति W₂   [2] क्रोश° K₅ W₁   [3] अनेनेति B₂ D₁ I add 'भाष व्यक्तायां वाचि   [4] सुजनस्थितिमतो A, B₁, T   [5] B₂ adds मुहुर्भाष्यत इति मुहुर्भाषा बहुवचननाम U   [6] परित दीव्यति B₂ T W₂

(पा.) तत्र—प्रति। आक्रोश इति भर्त्सनानि। 'शाप[1] आक्रोश आक्षेप क्षारणा स्याद् निरूक्षणम्' इति हलायुध (अ मा १ १४९)। मैथुनमुद्दिश्य यद्भर्त्सन तव भार्यां तव मातरमित्यादि, तत्र आक्षारणाशब्दो [2]वर्तते। स्यात्—आलाप। सभाषण नामनी॥ '[3]सभाषणमाभाषणमालाप कुरुधुक्किका' इति वैजयन्ती (प्र ३२, श्लो १३)। प्रलापोऽनर्थक वच। अर्थशून्योन्मत्तादिवचन प्रलप स्यात्॥ अनुलापो मुहुर्भाषा। [4]असकृदेकार्थवचनमनुलाप स्यात्॥ विलाप परिदेवनम्। दु खेन वचन विलाप स्यात्॥ १५॥

[1] शापाधिक्षेप B₃   [2] स्यात् II   [3] सभाषण त्वाभाषण B₁   [4] निद्रादिमध्येऽसकृदुक्तवचन यत् तन्नाम A₁

विप्रलापो विरोधोक्तिः सलापो भाषणं मिथः॥ १६॥
सुप्रलापः सुवचनमपलापस्तु निह्नवः।
(चोद्यमाक्षेपाभियोगौ शापाक्रोशौ दुरेषणा।
अस्त्री चाटु चटु श्लाघा प्रेम्णा मिथ्याविकत्थनम्॥)

(नि.) विप्रलाप इति—[1]विप्रलपतीति विप्रलाप। [2]पुरुषाणा मिथोविरोधवचननाम॥ [3]सलपतीति सलाप। [4]मिथोऽविरोधोक्तिनाम॥ [5]सुप्रलपतीति सुप्रलाप सुवचननाम॥ अपलपतीत्यपलाप। 'लप व्यक्तायां वाचि'। निह्नुते निह्नव। 'ह्नुङ् अपनयने'। [6]निह्नववचननामनी॥ १६॥

[1] विरोधेन° B₂   [2] पक्षाणां K₂, K₃   [3] सम्यक् B₂ सम्यक् W₁   [4] मिथोभाषण° B₂ K₂ W₂   [5] सुष्ठु B₂   [6] निह्नुति° K₄

(पा.) विप्रलापो विरोधोक्तिः। परस्परविरोधोक्तिर्विप्रलापः स्यात्॥ सलापो भाषणं मिथः। परस्परभाषणं सलापः स्यात्। द्वयोरन्यतरस्यालाप., द्वयोरपि सलाप इति [1]विशेषः॥ सुप्रलापः सुवचनम्। सुवचननाम॥ अपलापस्तु निह्नव। निह्नववचननाम॥ अनुक्तम्—'काका वर्णनमुल्लाप'। काका [2]कथितवचनमुल्लापः स्यात्॥ 'प्रियवाक् चाटुरस्त्रियाम्'। प्रियवचनं चाटु स्यात्॥ १६॥

[1] भेदः $A_1$ [2] वर्णित° $B_3$

**संदेशवाग् वाचिकं स्याद् वाग्भेदास्तु त्रिपूत्तरे॥ १७॥**
**रुशती वागकल्याणी स्यात् कल्या तु शुभात्मिका।**

(वि.) सदेशवागिति—वाचोऽस्मिन् सन्तीति वाचिकम्। सदेशवचननाम॥ उत्तरे वाग्भेदास्त्रिपु[1] वर्तन्ते। [2]रुशति कल्याणमिति रुशती। 'रुश हिंसायाम्'। उपतीति पाठे[3] 'उप प्लुप दाहे'। अमङ्गलोक्तिनाम॥ [4]कलयितुमर्हतीति कल्या। 'कल गतौ सख्याने च'। कलासु [5]क्रियासु साधुरिति वा। शुभवचननाम॥ १७॥

[1] $B_2$ adds लिङ्गेपु [2] रोषति जिघासति कल्याणमिति रुषती। 'रुष हिंसायां' $B_2$.
[3] तत्पक्षे उपति कल्याण $B_2$ [4] कलयति अकल्यातुमर्हति $K_3$, U. [5] क्रीडासु $W_2$

(पा.) सदेशवाग्वाचिकं स्यात्। सदेशवचननाम॥ वाग्भेदास्तु त्रिपूत्तरे। [1]उपरि वक्ष्यमाणा वाग्भेदा वागादिशब्दप्रयोगे त्रिषु वर्तन्ते। [2]विशेष्यानुसारी तूक्तलिङ्गाः[3]। रुशती वागकल्याणी। अकल्याणी वाग् रुशती स्यात्। रुशती वाक्। रुशन् व्याहारः। रुशद् भाषितम्। रुशतीं न ब्रूयात् कल्यामेव वदेत्। उपती वागकल्याणीति पाठादुपत्यपि भवति॥ स्यात् कल्या [illegible] शुभात्मिका। शोभना[4] वाक् कल्या [5]भवति॥ १७॥

[1] $B_3$ omits [2] °गम्यत्वे $A_1$ [3] $B_4$ adds एव [4] शोभनात्मिका $A_1$.
[5] स्यात् $B_3$

**अत्यर्थमधुरं सान्त्वं संगतं हृदयंगमम्॥ १८॥**
**निष्ठुरं परुषं ग्राम्यमश्लीलं सूनृतं प्रिये।**

(वि.) अत्यर्थमधुरमिति—सान्त्व्यते [1]प्रयत्नेन सान्त्वम्। 'षान्त्व सामप्रयोगे'। अतिमधुरवचननाम॥ हृदयं गम्यतेऽनेन हृदयंगमम्। 'गम्लृ[2] गतौ'। [3]सयन्धार्य-

वचननाम ॥ [4]दुष्टहेतुत्वान्निशितमिव [5]तिष्ठतीति निष्ठुरम् । 'ष्ठा गतिनिवृत्तौ' । परुषवचननाम ॥ [6]न विद्यते श्रीरत्र [7]अश्लीलम् । [8]असभ्यवचननाम ॥ शोभमानम् ऋत मत्रास्तीति [9]सूनृतम् । प्रियसत्यवचननाम ॥ १८ ॥

[1] प्रयतनेन I, $K_2$ $K_3$, प्रयत्यतेऽनेन U [2] 'गम्ल सृप्ल' ' $D_1$, I, $K_1$, U [3] सगतवचन° $K_3$ [4] दु स° $D_2$, $K_1$ [5] अवतिष्ठते A, $B_1$, T [6] $D_1$, I, $K_3$ add ग्रामे भव ग्राम्यम् , अत्र गीर्यते ग्राम्यवार्ता मैथुनादिवार्ता, 'गॄ निगरणे' $B_3$ [7] अश्लील $W_1$, Y, रल्योरैक्य $W_1$, अश्रीर $K_3$, U [8] ग्राम्य° $D_1$, I, Y, असत्य° $W_2$ [9] सुष्ठु ऊन्यते सून, 'ऊन परिहाणे', सून च तत् ऋत च $K_3$, $W_2$ Y, प्रीयते प्रियम् $W_2$

(पा.) अत्यर्थमधुर सान्त्वम् । [1]अतिमधुरवचन सान्त्वमित्युच्यते ॥ सगत हृदयगमम् । ग्राह्यवचननाम ॥ निष्ठुर परुषम् । कर्कशवचननामनी ॥ ग्राम्यमश्लीलम् । असभ्यवचननामनी ॥ 'कुत्सित फल्गु काहलम्' । एतानि च[2] । 'अश्लील काहल फल्गु' इति धनजय ॥ सूनृत प्रिये सत्ये । प्रियसत्यवचन सूनृत स्यात् ॥ १८ ॥

[1] मधुर $B_3$ [2] $A_2$ adds असभ्यवचनपर्याय एव

**सत्येऽथ संकुलक्लिष्टे परस्परपराहृते ॥ १९ ॥**
**लुप्तवर्णपदं ग्रस्तं निरस्तं त्वरितोदितम् ।**

(वि.) सत्य इति—[1]सकुल्यते सकुलम् । 'कुल सस्त्याने बन्धुषु च' । क्लिश्यते क्लिष्टम्[2] । 'क्लिशू विबाधने' । अन्ध पश्यति अकर करोतीत्येवमादिवचननामनी[3] ॥ ग्रस्यते ग्रस्तम् । 'ग्रसु ग्लसु अदने' । [4]लुप्ताक्षरस्य लुप्तपदस्य वा नाम ॥ निरस्यते निरस्तम् । 'असु क्षेपणे' । त्वरितोदितनाम ॥ १९ ॥

[1] सकु° $D_2$ [2] क्लिष्टमिति वा पाठ , म्लेच्छतीति म्लिष्ट, 'म्लेच्छ अव्यक्ते शब्दे' $D_2$ [3] °परस्पराहतवचो° Y [4] $K_3$ omits 5 lines

(पा.) अथ—पराहते । वृद्धोऽह मे[1] पिता बाल इत्यादिव्याहतवचने सकुलक्लिष्टशब्दौ वर्तेते ॥ लुप्तवर्णपद ग्रस्तम् । लुप्तवर्ण पद लुप्तपद वाक्य च ग्रस्त स्यात् ॥ निरस्त त्वरितोदितम् । द्रुतोच्चारितवचन निरस्त भवति ॥ १९ ॥

[1] मत्पिता $B_3$

**अम्बूकृतं सनिष्ठीवमबद्धं स्यादनर्थकम् ॥ २० ॥**
**अनक्षरमवाच्यं स्यादाहतं तु मृषार्थकम् ।**

(वि.) अम्बूकृतमिति—[1]निष्ठीवसंपर्कात् अम्बूक्रियते अम्बूकृतम् । निष्ठीवसहितवचननाम[2] । 'ष्ठिवु निरसने' ॥ यत्रार्थसंबन्धो नास्ति तदबद्धम्[3] । '[4]बन्ध बन्धने' । संबन्धशून्यवचननाम ॥ न सन्त्यक्षराणि यत्र अनक्षरम् । [5]अवाच्यवचननाम ॥ आहन्यत इत्याहतम्[6] । मिथ्यार्थवचननाम ॥ २० ॥

[1] °संपर्कवशात् A; निष्ठीवनात् हेतोरुत्पन्नमम्बु लाला, तेन सह कृतम् अम्बूकृतं, समानकालोत्पन्नमित्यर्थः $B_2$. [2] $B_2$ adds निष्ठीवेन सहितं सनिष्ठीवम्. [3] $K_5$ adds बध्यत इति बद्ध, बद्धं न भवतीत्यबद्धं. [4] 'बन्ध संयमने' I, $K_1$, Y. [5] अनक्षरवचननाम $K_5$. [6] A adds 'हन हिंसागत्योः'.

(पा.) अम्बूकृतं सनिष्ठीवम् । लालासहितं निष्ठीवनिर्यद्बिन्दुसहितं च वचनमम्बूकृतमित्युच्यते ॥ अबद्धं स्यादनर्थकम् । समुदायार्थशून्यं दशदाडिमादिवाक्यमबद्धं स्यात् ॥ अनक्षरमवाच्यं स्यात् । हस्तनेत्रादिव्यञ्जितवचनमनक्षरमित्युच्यते[1] ॥ आहतं तु मृषार्थकम् । एष [2]वन्ध्यासुतो याति—इत्यादिवचनमाहतं स्यात् ॥ २० ॥

[1] स्यात् $B_3$ [2] वन्ध्यासुतः पश्यति $B_3$

**(सोल्लुण्ठनं तु सोत्प्रासं मणितं रतिकूजितम् ।**
**श्राव्यं हृद्यं मनोहारि विस्पष्टं प्रकटोदितम् ॥)**
**अथ म्लिष्टमविस्पष्टं वितथं त्वनृतं वचः ॥ २१ ॥**
**सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति ।**

इति वाग्वर्गः

(वि.) अथेति—म्लेच्छतीति म्लिष्टम् । 'म्लेच्छ अव्यक्ते शब्दे' । क्लिष्टमिति पाठे क्लिश्यत इति क्लिष्टम् । 'क्लिशू विबाधने' । [1]अस्पष्टवचननाम ॥ विगता[2] तथा सत्यमत्रेति वितथम् । अनृतवचननाम ॥ सति धर्मे साधु सत्यम् । तथा सत्यमत्रास्तीति तथ्यम् । सद्भिरर्यते[3] ऋतम् । 'ऋ गतौ' । समञ्चतीति सम्यक् । 'अञ्चु गतौ याचने च' । सत्यवचननामानि ॥ अमूनि तद्वति गुणिनि त्रिषु वर्तन्ते ॥ २१ ॥

इति श्रीलिङ्गयसूरिविरचितायाममरकोशपदविवृतौ वाग्वर्गः

[1] अविस्पष्ट° I, $K_3$ [2] विरता $K_2$, $K_6$ [3] रूयते, 'रु शब्दे' $K_1$, $K_2$
[4] 'रु शब्दे', अर्यते उपदिश्यत $B_1$, U, आद्रियत $D_1$

(पा.) अथ म्लिष्टमविस्पष्टम् । अस्पष्टबालकिरातादिवचन म्लिष्ट स्यात् ॥ अनुक्तम्—'गद्गद गलमूलस्थम्' । गलमूलस्थवचन गद्गद भवति ॥ 'तुम्बक स्पृष्टनासिकम्' । नासिका स्पृष्टोद्गच्छद्वचन [1]तुम्बकमित्युच्यते । वितथ—वच । असत्यवचननामनी ॥ आहतमसद्भूतार्थकथनम्[2] । असत्य [3]सद्भूतापलाप ॥ सोल्लुण्ठन तु सोऽत्प्रासम् । उत्क्रोशवचननामनी ॥ मणित रतिकूजितम् । रतिकालगलरवनामनी ॥ सत्य—सम्यक् । सत्यवचननामानि ॥ अमूनि त्रिषु तद्वति । [4]सत्यादिशब्दा सत्यवत्यर्थे त्रिलिङ्गा भवन्ति । सत्यो देवदत्त । सत्या यज्ञदत्ता । सत्य कलत्रमित्यादि ॥ २१ ॥

इति [5]श्रीवत्सनृसिंहसूरिसुतमल्लिनाथसूरिविरचितेऽमरपदपारिजाते वाग्वर्ग

[1] तुम्बुक $A_1$ [2] $B_3$ omits कथन [3] आलाप $A_1$ [4] °आदीनि $B_3$
[5] नरसिंह° $A_1$

---

## ७. शब्दादिवर्गः

शब्दे निनादनिनदध्वनिध्वानरवस्वनाः ।
स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः ॥ १ ॥
आरवारावसंरावविरावा अथ मर्मरः ।
स्वनिते वस्त्रपर्णानां भूषणानां तु शिञ्जितम् ॥ २ ॥

(वि.) शब्द इति—शब्द्यते इति [1]शब्द । 'शब्द शब्दक्रियायाम्' । निनदतीति निनाद । निनदश्च । 'णद अव्यक्ते शब्दे' । ध्वनतीति ध्वनि । ध्वानश्च । 'ध्वन शब्दे' । 'रूयते रव । आरव । आराव । सराव । विरावश्च । 'रु शब्दे' । स्वनतीति स्वन । स्वानश्च । 'स्वन शब्दे' । निर्घुष्यते[5] निर्घोष । 'घुषिर् विशब्दने' । नितरा ह्रादते निर्ह्राद । 'ह्राद अव्यक्ते शब्दे' । नदतीति नाद । 'णद अव्यक्ते शब्दे' । निस्वाननिस्वनशब्दौ स्वानशब्दवद्बोध्यौ[6] । समुद्रघोषादिशब्दनामानि ॥ [7]मर्मरध्वनिर-

त्रातीति मर्मरः। वस्त्रपर्णस्वननाम ॥ [8]शिङ्क्ते शिञ्जितम्। 'शिजि अव्यक्ते शब्दे'। भूषणध्वनिनाम ॥ १–२ ॥

[1] शब्दयति $D_1$; शब्द उक्तः $Pt_1$, $Pt_2$. [2] ध्वन्यते $K_3$; ध्वननं $Pt_1$, $Pt_2$. [3] ध्वनश्च $W_1$. [4] रौति $Pt_1$, $Pt_2$. [5] निर्घोषति $Pt_1$, $Pt_2$. [6] ज्ञेयौ $W_2$; विज्ञेयौ $B_2$; नितरां स्वनतीति $Pt_1$, $Pt_2$. [7] वस्त्रादिध्वनिः मर्मरध्वनिः अत्रास्तीति $B_2$. [8] शिञ्जतीति $Pt_1$, $Pt_2$.

(पा.) शब्दे—विरावाः। [1]रावशब्दोऽपि साधितः। पृथु भाषार्थ(?) इति चुरादिपाठाद् रौतेर्भाषार्थत्वात् णिच्[2]। प्रयोगश्च[3]। 'समाविशद्वीपणरावगह्वरम्' इति। अव्यक्तशब्दनामानि ॥ अथ मर्मरः—पर्णानाम्। वस्त्रपर्णानां रावः मर्मरः स्यात् ॥ भूषणानां च शिञ्जितम्। भूषणध्वनिः शिञ्जितं स्यात्। 'शिञ्जापरशुशिशिरपिशुनशिखाश्रेणयः'[4] इत्यूष्मभेदपाठात् तालव्यादिः। शिञ्जेव[5] शिञ्जानम्। 'शिञ्जानमञ्जुमञ्जीरविरञ्जितपदाम्बुजाम्' इति प्रयोगश्च ॥ १–२ ॥

[1] $A_1$ adds लक्ष्यलक्षणदुर्घट°. [2] $A_1$ adds अत एव राव इति. [3] $A_1$ adds सप्तकुमारिकापादनकार°. [4] $A_1$ adds ऽयेनः. [5] $B_3$ omits the three words.

**निक्वाणो निक्वणः क्वाणः क्वणः क्वणनमित्यपि ।**
**वीणायाः क्वणिते प्रादेः प्रक्वाणप्रक्वणादयः ॥ ३ ॥**

(वि.) निक्वाण इति—[1]निक्वणतीति निक्वाणः। निक्वणः। क्वाणः। क्वणः। क्वणनम्। एतानि [2]वीणादिवाद्यस्वननामानि ॥ वीणायाः क्वणिते [3]प्रादेः [4]प्रक्वाणः, प्रक्वणादयः। प्राद्युपसर्गे क्वणतिधातुजाः प्रक्वाणप्रक्वणादयः वीणायाः क्वणिते[5] वर्तन्ते। निक्वाणादयस्तु वीणादिसर्ववाद्यध्वनौ वर्तन्त इत्यर्थः। 'क्वण क्वण शब्दे' ॥ ३ ॥

[1] *नितरां क्वणति* $Pt_1$, $Pt_2$. [2] *°सर्ववाद्य°* I, $K_1$, $K_3$, U. [3] *प्राद्युपसर्गे* $D_2$, $K_3$, $W_1$. [4] प्रकर्षेण क्वणति $Pt_1$, $Pt_2$. [5] एव U.

(पा.) निक्वाणो—क्वणनमित्यपि। वीणादिध्वनिनामानि ॥ वीणायाः—प्रक्वणादयः। वीणामात्रध्वनिनामानि[1] ॥ अनुक्तम्—'मार्जना मुरजध्वानः'। [2]मुरजध्वनिर्मार्जना स्यात् ॥ 'गुण्डिलो मर्दलध्वानः'। मर्दलध्वनिर्गुण्डिलः स्यात् ॥ ३ ॥

[1] $A_1$ adds कल्याणनिक्वणवीणाकल्क्वाणः। वेणुं . . . [2] °जन्य° $A_1$.

**कोलाहलः कलकलस्तिरश्चां वाशितं रुतम् ।**
**स्त्री प्रतिश्रुत् प्रतिध्वाने गीतं गानमिमे समे ॥ ४ ॥**

## इति शब्दादिवर्गः

(वि.) कोलाहल इति—कोलान् वराहानाहलतीति[1] कोलाहल । 'हल विलेखने'। कल्यते [2]शब्द्यते कलकल[3]। 'कल शब्दसङ्ख्यानयो'। 'कल किल क्षेपे' इति वा धातु । अव्यक्तनानावचनमहाध्वनिचयनामनी[4] ॥ वाश्यते इति वाशितम् । 'वाशृ शब्दे'। मृगपक्षिरवनाम ॥ प्रतिश्रूयते प्रतिश्रुत् । 'श्रु श्रवणे'। [5]प्रतिध्वाननाम ॥ गीयते गीतम् । गान च । 'कै [6]गै रै शब्दे'। गीतध्वनिनामानि ॥ ४ ॥

इत्यमरकोशपदविवृतौ शब्दादिवर्गः

[1] आहरति Y   [2] $Pt_1$, $Pt_2$ add अव्यक्त   [3] वीप्सायां(अभीक्ष्णे° $W_2$ Y) द्विर्भाव $B_9$ $K_5$   [4] °निचय° $B_1$ $D_1$   [5] प्रतिध्वनतीति, 'ध्वन शब्दे' $B_2$ प्रतिध्वनन $Pt_1$ $Pt_2$   [6] $B_2$ adds गै गाने'

(पा.) कोलाहल कलकल । बहुध्वनिनामनी ॥ तिरश्चां वाशित रुतम् । मृगपक्षिणां ध्वनिर्वाशित[1] स्यात् । 'शिव वा शशवाशितम्' इति चर्पिणाभ्युदय-प्रयोगात् (१८ ९२) तालव्यमध्य । 'वासित भावित रुते' इति रुद्राभिधानाद् दन्त्यमध्यश्च भवति ॥ अनुक्तम्—'गवा तु रम्भित हुम्भा'। गवां ध्वनिनामनी ॥ 'बुक्कन भषित शुन'। शुनकध्वनिनामनी ॥ स्त्री—प्रतिध्वाने । गुहादिप्रतिबिम्बितध्वनिनामनी ॥ गीत—समे । गीतनामनी । इमे समे इत्यनेन रागगीत्यादिक गीतं प्रावेशिक्यादिध्रुवारूप [2]मन्द्रकादिरूप गानमिति विशेषपक्ष विहाय 'गीत गान च गेय च [3]गीतिर्गान्धर्वमित्यपि' इति सामान्यपक्षमवलम्ब्योक्तम् ॥ ४ ॥

इति [4]श्रीवत्सनृसिंहसूरिसुतमल्लिनाथविरचितेऽमरपदपारिजाते शब्दादिवर्गः

[1] $A_1$ adds रुत च   [2] मद्रक° $A_1$   [3] रीति $A_1$   [4] °नरसिंह° $A_1$

---

## ८. नाट्यवर्गः

**निषादर्षभगान्धारषड्जमध्यमधैवताः ।**
**पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः ॥ १ ॥**

(वि.) निषाद इति—निषीदन्त्यत्र स्वरा इति निषाद । 'षद्लृ विशरणगत्यवसादनेषु'। [1]ऋषभस्वरसवादित्वात् ऋषभ । गा वाच धारयतीति गान्धार । गन्ध गृह्णातीति गान्ध घ्राणेन्द्रियम्। तस्मिन् इयर्तीति वा गान्धार । 'ऋ गतौ'। षट्सु [2]नासाकण्ठोरस्तालुजिह्वादन्तस्थानेषु जायत इति षड्ज । 'जनी प्रादुर्भावे'। [3]मध्य मातीति मध्यम । 'मा माने वर्तने[4] च'। मोक्ष धावतीति धैवत । 'धावु गतिशुद्ध्यो'। धीर्हेत् तद्वत्सु नाभ्यादिस्थानेषु भवो वा धैवत[5]। पिक्के पञ्च्यते पञ्चम । 'पचि विस्तारवचने'। पञ्चसु[6] स्थानेषु मातीति वा। 'मा माने वर्तने च'। एतानि सप्त [7]तन्त्रीकण्ठोत्थितस्वरनामानि ॥ स्वय राजते स्वर । 'राजृ दीप्तौ'। श्रुतिस्थाने [8]स्वहृदय रञ्जयतीति वा। 'रञ्ज रागे'॥

> '*षड्ज मयूरा ब्रुवते [9]गावस्त्वृषभभाषिण ।
> अजाविक तु गान्धार पिक [10] कूजति पञ्चमम्।
> धैवत ह्रेषते[11] वाजी निषाद बृहते[12] गज ॥'

इति ॥ १ ॥

[1] वृषभ° $D_2$ [2] उदर° $K_1$ [3] मध्ये $B_2$ $D_1$ [4] वर्तमाने च $W_1$
[5] दैवत इति वा पाठ तत्पक्षे दिवि सुखप्राप्तिस्थाने भव $B_2$ [6] पञ्चस्थानेषु $B_1$
[7] °कण्ठोत्त° A, $B_1$, T [8] सहृदय $D_2$ स्व हृदय $W_1$ [9] गावो ऋषभ° $D_2$
[10] क्रौञ्च क्वणति मध्यम $B_2$ $D_1$, $W_1$ Y पुष्पसाधारणे काले पिक कूजति पञ्चमम् $D_2$, I, $K_1$ U [11] भाषते $B_1$ $W_2$ [12] ब्रुवत गजा $B_1$ $W_2$

* षड्ज रौति मयूरस्तु—Narada Apte s Dict , p 1583

(पा.) निषाद—स्वरा । तन्त्रीकण्ठयोरुभयोर्जायमाना निषादादय सप्त स्वरशब्दवाच्या । तत्स्वरूपे नारद —

> 'षड्ज मयूरो वदति गावो [1]रम्भन्ति चर्षभम् ।
> अजाविकौ तु गान्धार क्रौञ्चो नदति मध्यमम् ॥

पुष्पसाधारणे काले कोकिलो रौति पञ्चमम् ।
अश्वस्तु धैवतं रौति निषादं रौति कुञ्जरः ॥' (स. म. १. १. १३-१४)

इति ॥ १ ॥

[1] नर्दन्ति $B_4$, रम्भत्यृ° $A_1$ चातको ऋषभं तथा, अजो विरौति इति मुद्रितग्रन्थे

**काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे ।**
**कलो मन्द्रस्तु गम्भीरे तारोऽत्युच्चैस्त्रयस्त्रिषु ॥ २ ॥**
**(नृणामुरसि मध्यस्थो द्वाविंशतिविधो ध्वनिः ।**
**स मन्द्रः कण्ठमध्यस्थस्तारः शिरसि गीयते ॥)**

(नि.) काकलीति—कु[1] सूक्ष्मः स चासौ कलश्च[2] काकली । सूक्ष्मकलनाम ॥ कं सुखं लातीति कलः । 'ला दाने' । कलयतीति वा । 'कल शब्दे' । अव्यक्तमधुरध्वनिनाम ॥ [3]मन्दते शनैः [4]निःसरतीति मन्द्रः । 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु' । गम्भीरध्वनिनाम ॥ तारयति सदेहं[5] तारः । 'तॄ प्लवनतरणयोः' । अत्युच्चध्वनिनाम ॥ त्रयस्त्रिषु । [6]कलमन्द्रतारास्त्रिषु वर्तन्ते, विशेष्यनिघ्ना इत्यर्थः ॥ २ ॥

[1] कुत्सितश्चासौ कलश्च काकलः सोऽस्त्यस्तीति $B_2$ काकलि A T, U [2] कलि $K_1$
[3] मन्यते $D_6$ I U, $W_2$ [4] निरस्यति $D_2$ [5] सदेहे $W_1$, संदेहात् A स्थानेभ्य स्वरमिति $Pt_2$ [6] I adds त्रय

(पा.) काकली—सूक्ष्मे । [1]कलसूक्ष्मध्वनिः काकली स्यात् । ध्वनौ—कलः । मधुरास्फुटध्वनिः कलः स्यात् । मन्द्रस्तु गम्भीरे । गम्भीरध्वनिः मन्द्रः स्यात् । तारोऽत्युच्चैः । अत्युच्चध्वनिः तारः स्यात् ॥ त्रयस्त्रिषु । एते त्रयः त्रिष्विति वाच्यलिङ्गाः । [2]कला रतिः, मन्द्रा रतिः इत्यादि ॥ २ ॥

[1] सूक्ष्मकण्ठध्वनि $B_3$ [2] कला मन्द्रा तारा रतिरित्यादि $B_3$

**समन्वितलयस्त्वेकतालो वीणा तु वल्लकी ।**
**विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी ॥ ३ ॥**

(नि.) समेति—[1]समन्वितोऽनुगतो लयः श्रुत्यादिर्येन समन्वितलयः । एकः समः तालो मानमस्य एकतालः । एकतान इति वा पाठः । तालाद्यन्वितलयनाम ॥ वेति

प्रजायते स्वरोऽस्यामिति वीणा । 'वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु' । वण्यत इति वा वीणा । 'वण शब्दे' । वल्लन्ते स्वरा अस्यामिति [2]वल्लरी । 'वल्ल सचलने' । विविधं [3]पञ्च्यते स्वरा अत्रेति विपञ्ची । 'पचि व्यक्तीकरणे' । वीणानामानि ॥ परितो [4]वदति स्वरानिति परिवादिनी । 'वद व्यक्तायां वाचि' । सप्ततन्त्रीयुक्तवीणानाम ॥ ३ ॥

[1] सम्यगन्वित $Pt_2$,

> नृणामुरसि मन्द्रस्तु द्वाविंशतिविधो ध्वनिः ।
> स एव कण्ठे मध्यः स्यात् तारः शिरसि गीयते ॥ $B_1$, $D_1$

[2] वल्लकी सौत्र साऽस्या अस्तीति वल्लकी इति वा । अयमेव द्व्यार्थ $B_2$, $D_1$, $K_2$, वलि सौत्रो धातुः द्व्यार्थः Y [3] पञ्चते A, T, $W_1$ [4] वादयत्यवश्य सप्तस्वरान् $B_1$, $D_1$, I

(पा.) समन्वितलयस्त्वेकतालः । अनुगतद्रुतादिमानगीतादिवस्तु एकतालः स्यात् । [1]एकतान इति कतिचित्[2] । वीणा तु वल्लकी विपञ्ची । वीणानामानि ॥ सा तु— परिवादिनी । सप्तभिः [3]तन्त्रीभिः प्रोता वीणा परिवादिनीत्युच्यते ।

> 'तन्त्र्यश्चेत् सप्त सप्ताख्या चतुर्दश चतुर्दशी ।
> एकादशैकादशी [4]भिदैव वीणा त्रयोदशी ॥' इति ।

परिवादिनी बहुविधा । [5]सप्ततन्त्री परिवादिनीति कथिता ॥ ३ ॥

[1] एकतानमिति $A_2$ [2] $A_2$ adds कथयन्ति [3] तन्त्रिभिः $B_3$ [4] चेद्वेव $A_1$
[5] $B_3$ adds तन

**ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् ।**
**वंशादिकं तु सुषिरं कांस्यतालादिकं घनम् ॥ ४ ॥**

(वि.) ततमिति—तन्यते ततम्[1] । [2]तन्त्रीजननात्ततम् । वीणादिवाद्यनाम ॥ चर्मणा आनह्यत इत्यानद्धम् । 'णह [3]बन्धने' । मुरजादिवाद्यनाम ॥ सुषि रन्ध्रमस्यास्तीति सुषिरम् । [4]शुषिरं वा । [5]वंशादिवाद्यनाम ॥ हन्यत इति घनम् । 'हन हिंसागत्योः' । [6]तालादिकांस्यवाद्यनाम ॥ ४ ॥

[1] $B_1$, $D_1$, $K_5$ add 'तनु विस्तारे' [2] °जनित $B_2$ [3] आबन्धने $W_2$
[4] तालव्यादेव इति प्राञ्चः $B_2$, $D_1$, तालव्यमिति $B_1$, $K_5$, $W_2$ adds आहुः [5] °रन्ध्रवाद्य° $B_2$ [6] तालास्यादि° $W_2$

(पा.) तत—वाद्यम्। वीणादिवाद्य तत स्यात्॥ आनद्ध मुरजादिकम्। मुरजादिवाद्यमानद्ध स्यात्॥ वशादिक तु सुषिरम्। वशादिवाद्य सुषिर स्यात्॥ कास्य—घनम्। [1]कास्य तालादिक वाद्य घन स्यात्॥ [2]केचन मुरजादिवाद्यमपि घनमिति वदन्ति। कास्य तालादिवाद्य ततमिति च[3] कथयन्ति॥ ४॥

[1] B₃ adds कास्यविशार [2] केचित् B₃ B₄ [3] B₃ adds केचित्

**चतुर्विधमिद वाद्य वादित्रातोद्यनामकम्।**
**मृदङ्गा मुरजा भेदास्त्वङ्क्यालिङ्ग्योर्ध्वकास्त्रयः॥ ५॥**

(वि.) चतुर्विधमिति—वाद्यत इति [1]वाद्यम्। वादित्र च[2]। आ समन्तात् तोद्यत इत्यातोद्यम्। 'तुद व्यथने'। [4]ततादिचतुर्विधवाद्यनामानि॥ मृद्यत इति मृदङ्ग। मृत् मृत्स्ना अङ्गे यस्येति वा। 'मृद मर्दने'। मुरतीति मुर। 'मुर सवेष्टने'। मुर चर्मपट्टिकासवेष्टनम्। तस्माज्जातो मुरज। मृदङ्गनामनी॥ अङ्के भव अङ्क्य। [5]अङ्कोपरि निधाय वाद्यत वा। हरीतक्याकृतिमृदङ्गनाम॥ आलिङ्ग्यते आलिङ्ग्य वाद्यत इत्यालिङ्ग्य। गोमुखाकृतिमृदङ्गनाम॥ अङ्की आलिङ्गी इति वा पदच्छेद। तदा राद्यत्या ततो भवतीति विग्रह। [6]ऊर्ध्वीकृत्य वाद्यत इत्यूर्ध्वक। यवमध्याकृतिमृदङ्ग नाम॥ ५॥

[1] वादयन्ति घनमिति Pt₂ [2] वद व्यक्तायां वाचि D₁ I [3] आतुद्यत इति B₁ D₂ Pt₂ [4] तत्त्वादि A B₁ T₁ W₁ यदाह भरत —

तत चैवावनद्ध च घन सुषिरमेव च।
चतुर्विध तु विज्ञेयमातोद्य लक्षणान्वितम्॥ इति (ना शा २८ १) B₁ D₁ I

[5] अङ्क उपनिधाय D₁ [6] ऊर्ध्वस्थ सन् वाद्यते Pt₂

(पा.) चतुर्विधमिद—नामकम्। इद चतुर्विध वाद्यम्। वादित्रमातोद्यमिति च नामद्वयवद् भवति। वादित्रशब्दो वाद्यध्वनावपि वर्तते। 'तूर्योऽस्त्री वाद्यनिर्घोष[1] वादित्र वादन च तत्' इति वैजयन्ती (पृ १४७, श्लो १३६)। मृदङ्गा मुरजा। मुरजनामनी॥ वक्ष्यमाणभेदापेक्षया बहुवचनम्। भेदा—त्रय। अङ्क्य, आलिङ्ग्य, ऊर्ध्वक इत्येते त्रयो मुरजभेदा। 'पूर्व पूर्वो महानेषामेतत्[2] पुष्करमण्डले' इति वैजयन्त्या (पृ १४६, श्लो १३०) परिमाणभेदोऽभ्यधायि।

'हरीतस्याकृतिस्त्वङ्क्यो यवमध्यस्तथोर्ध्वक ।
आलिङ्गयश्चैव गोपुच्छ[3] आकृत्या सप्रकीर्तित ॥'

इति [4]सुभूतिटीकायामाकृतिभेद [5] कथित ॥ ५ ॥

[1] °निर्घोषो $A_1$, $B_3$ [2] वादने मूर्च्छनानने $A_1$, $B_1$ [3] पुच्छस्य $B_3$
[4] सुबोधिनी° $A_1$ [5] °भेदात् भेद $A_1$

**स्याद्यशःपटहो ढक्का भेरी स्त्री दुन्दुभिः पुमान् ।**
**आनकः पटहोऽस्त्री स्यात् कोणो वीणादिवादनम् ॥ ६ ॥**

(वि.) स्यादिति—[1]यशोनिमित्त पटह यश पटह । ढगिति [2]व्यक्त कायतीति ढक्का । 'कै शब्दे' । यात्रादौ [3]वाद्यमानयश पटहनाम ॥ बिभेति अस्या [4] परसैन्यमिति[5] भेरी । 'ञिभी भये' । दुन्दु इति शब्द भाषते दुन्दुभि । शत्रुहृदय [6]भिद्यत इति वा । भेरीनामानि ॥ आ समन्तात् नदतीत्यानक । 'णद अव्यक्ते शब्दे' । अनेन स्वपक्ष आ समन्तात् अनिति[7] वा । 'अन प्राणने' । पटवत् हन्यते पटह । पणव इति पाठे पण्यते स्तूयते पणव । 'पण व्यवहारे स्तुतौ च' । परसेनाभीत्यर्थवाद्यनामानि ॥ अनेन क्कुणति वीणादिवाद्यमिति कोण । 'क्कुण शब्दोपकरणयो' । वीणादिवादनदण्डनाम ॥ ६ ॥

[1] यशसे $D_1$ $W_1$, यशसि A, $B_1$, T, यशोऽर्थ $Pt_2$, पटु यथा तथा हन्यते, 'हन हिंसागत्यो' $B_2$, U [2] अव्यक्त $D_1$, I, $K_1$, $W_1$, वादयति $K_2$ [3] हन्यमान° $B_1$, $D_1$, $K_1$, $W_1$ [4] रवात् $B_2$, $D_2$, रवेण $K_3$, $W_2$ [5] °सेना $B_2$, $K_3$, U, $W_1$
[6] द्यतीति वा, 'दोऽवखण्डने' $B_2$, $D_1$ [7] $B_2$ adds प्राणिति

(पा.) स्यात्—ढक्का । सामन्तढक्कानामनी । भेरी—पुमान् । भेरीनामनी । आनक —स्यात् । अस्त्रीशब्द उभयविशेषणम् । 'पटहस्त्वानकोऽस्त्रियाम्[1]' इति वैजयन्ती (पृ १४६, श्लो. १३४) । पटहनामनी ॥ अनुक्तम्—'वशस्तु वेणुर्मुरली' । [2]मुरलीनामानि ॥ 'शृङ्ग खुरमुख समे' । शृङ्गनामनी । आन्ध्रभाषया 'बूरगोम्मु' ॥ 'काहली तु धुहाला स्यात्' । काहलीनामनी ॥ 'ढेङ्गुरा जयघण्टिका' । आन्ध्रभाषया 'जायट[3] पेर' । 'ताली द्वयो कास्यताल पुमान् स्त्री तालपत्रिका' । तालनामानि ॥ कोणो वीणादिवादनम् । वीणादिवादनसाधननाम ॥ ६ ॥

[1] अस्त्रियौ इति मुद्रितग्रन्थे [2] वेणु° $A_1$ [3] 'जायटपेर्रु' $A_1$

**वीणादण्डः प्रवालः स्यात् ककुभस्तु प्रसेवकः ।**
**कोलम्बकस्तु कायोऽस्या उपनाहो निबन्धनम् ॥ ७ ॥**

(वि.) वीणादण्ड इति—प्रवलन्ते सर्वे [1]स्वरा अत्रेति प्रवाल । 'वल सवरणे [2]सञ्चरणे च'। [3]प्रचाल इति वा पाठ । 'चल कम्पने'। वीणादण्डनाम ॥ स्वालम्बनाय दण्ड [4]कङ्कते आकाङ्क्षतीति ककुभ । 'ककि लौल्ये'। प्रकर्षेण सेव्यते प्रसेवक । 'पेवृ सेवने'। दण्डा[5]लम्बनायालाबूमूलनिक्षिप्तसदृशाकार[6]सारदारुनाम[7] ॥ [8]कुल्यते सम्यक् स्त्यायतेऽनेन शब्द कोलम्बक । 'कुल सस्त्याने बन्धुषु च'। के शिरसि तन्त्रीरवलम्ब्यते इति वा कोलम्बक । 'लवि शब्देऽवस्रसने च'। वीणाया दण्डादिसर्वपरिकरनिष्पन्न [9]मूर्तिनाम ॥ उपनह्यन्ते तन्त्र्योऽनेन उपनाह । 'णह बन्धने'। निबध्यन्ते[10] तन्त्र्योऽनेन निबन्धनम् । 'बन्ध बन्धने'। तन्त्रीबन्धस्थाननामनी ॥ ७ ॥

[1] स्वना $B_1$ $D_1$, $W_2$ [2] सचलने $D_2$ $K_5$ T [3] प्रवार U [4] कन्ते $K_5$ U, $W_1$ [5] °अनलम्बनाय $K_5$ U [6] °स्वर° U [7] °साधनविशेषपर्वनाम $B_2$, $W_2$ [8] कोलति $W_2$ [9] °शरीर° $W_1$ [10] सबध्यन्ते $B_2$

(पा.) वीणादण्ड प्रवाल स्यात् । वीणादण्डनाम ॥ ककुभस्तु प्रसेवक । दण्डानलम्बनायालाबूमूलनिक्षिप्तसदृशाकारसारदारुनामनी । भाषया 'घैसण' ॥ कोलम्बकस्तु कायोऽस्या । वीणाया दण्डादिसर्वपरिकरनिष्पन्नमूर्ति कोलम्बक स्यात् । उपनाहो निबन्धनम् । तन्त्रीनिबन्धनस्थाननामनी । भाषया 'करिभे' ॥ अनुक्तम्—'वीणागुणे स्त्रिया तन्त्री'। वीणागुणनाम । 'अवितृस्तृतन्त्रिभ्य ई' (उ ३. १५८) इति ई प्रत्ययान्तत्वात् सुलोपो नास्ति । तन्त्री तन्त्र्यौ तन्त्र्य । हे तन्त्री इत्यादि । अत्र विशेष । लक्ष्मीप्रभृतीनाम् 'अम्बार्थनद्योर्ह्रस्व' (७ ३ १०७) इति ह्रस्वत्व केचन नेच्छन्ति । प्रयोगास्तु बहवो दृश्यन्ते ।

'हे लक्ष्मि स्यादलिन्द्राणामपि सस्पृहा मे वपु ।
तन्त्री कर्णामृत कूज तन्त्री सश्रय चक्षुपी ॥
वातप्रमीर्वसाटव्या तरीस्तर्पय चातकम् ।
. . . . . . धत्तत्र स्तनाशुकम् ॥'

इत्यादि ॥ ७ ॥

**वाद्यप्रभेदा डमरुमड्डुडिण्डिमझर्झराः ।**
**मर्दलः पणवोऽन्ये च नर्तकीलासिके समे ॥ ८ ॥**

(वि.) वाद्यप्रभेदा इति—डमिति [1]शब्दमियर्ति डमरुः। 'ऋ गतौ'। मड्डु इति [2]उच्चारणात् मड्डुः। डिंडिमिति शब्दं करोतीति डिण्डिमः[3]। झर्झशब्दं करोतीति [4]झर्झरः। मृद्यत इति [5]मर्दलः। 'मृद क्षोदे'। [6]पणाज्जायते पणवः। पण्यते स्तूयते ऽनेनेति वा। 'पण व्यवहारे स्तुतौ च'। एते च अन्ये च वाद्यप्रभेदाः॥ नृत्यतीति नर्तकी। 'नृती गात्रविक्षेपे'। [7]लसति क्रीडति रङ्गभूमाविति लासिका। 'लस श्लेषण-क्रीडनयोः'॥ [8]नृत्तकारिणीनामनी॥ ८॥

[1] $K_5$ adds अव्यक्त. [2] उच्चारणत्वात् $B_1$. [3] मिनोति प्रक्षिपतीति $Pt_2$ [4] झर्झते भाषते, झर्झेति शब्दं रातीति $Pt_2$ [5] मद्दलः $W_1$ [6] पणायते U, $W_2$ [7] लस्यति $D_1$ [8] नृत्य° $K_5$, $W_1$, नर्तनकरीणा A, $B_1$, T.

(पा.) वाद्यप्रभेदाः—अन्ये च। डमर्वादयश्चान्ये[1] घण्टानिःसाणादयश्च[2] वाद्यभेदाः। नर्तकी—समे। नृत्तकारिणीनामनी॥ अनुक्तम्—'रङ्गः स्यान्नर्तनस्थानम्'। नर्तनस्थलं[3] रङ्गः स्यात्॥ 'सूत्रधारस्तु सूचकः'। सूत्रधारनाम॥ ८॥

[1] $A_1$ adds अन्यशब्दग्रहीत° [2] निःसान $B_1$ [3] °स्थानं $B_3$

**विलम्बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात्।**
**तालः कालक्रियामानं लयः साम्यमथास्त्रियाम्॥ ९॥**
**ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने।**

(वि.) विलम्बितमिति—[1]विलम्बितं द्रुतं मध्यम् इति लयविशेषाः क्रमात् तत्त्वम् ओघः घनमित्युच्यन्ते। तलन्ति गीतवाद्यनृत्तानि तिष्ठन्त्यत्र तालः। 'तल प्रतिष्ठायाम्'। [2]मध्यकालक्रियायाः परिच्छेदकनाम॥ लीयतेऽत्रेति लयः। 'लीङ् श्लेषणे'। [3]न्यूनाधिकरहिततालसाम्यनाम[4]॥ तण्डुना शिवेनोपदिष्टं ताण्डवम्। उद्धत-प्रयोगनर्तननाम। नट्यते नटनम्। 'नट नृत्तौ'। नटस्य कर्म नाट्यम्। [5]नटनर्तननाम॥ लसतीति लास्यम्। 'लस श्लेषणक्रीडनयोः'। सुकुमारप्रयोगनर्तननाम॥ नृत्यतीति नृत्यम्। 'नृती गात्रविक्षेपे'। नर्तननामानि[6]॥ ९॥

[1] $Pt_2$ adds विलम्बन्ते करपदादयोऽत्रेति विलम्बितम्। प्रत्येकं गतिविशेषत्वात्। 'लबि लम्बने'। द्रवन्ति त्वरन्ते करचरणादयोऽत्रेति द्रुतम्। 'द्रु गतौ'। विलम्बितद्रुतयोर्मध्ये भवत्वान्म ध्यम् [2] मेयायाः गानक्रियायाः $K_5$, $W_2$, एता पर्याया इत्येके। नाट्येऽपि विलम्बितादि-

लयानुसारेण क्रमात् तत्त्वाद्या वाद्यप्रभेदप्रकारा $B_2$ $D_1$ $K_5$ कालक्रियाया मान परिमाणमिति कालक्रियामानम् $B_2$ [3] °आधिक्य° $W_2$ [4] °सामान्य° $K_2$ [5] °नृत्त° $B_2$, $D_2$, $W_2$
[6] गात्रविक्षेपणनृत्त° $B_2$, $W_2$

(पा.) विलम्बित—क्रमात्। विलम्बितादिमानानि[1] तत्त्वादिसञ्ज्ञानि भवन्ति। ताल कालक्रियामानम्। कालस्याङ्गुलिकरक्रियया[2] कृत मान ताल स्यात्। लय साम्यम्। सर्वाभिनयसाम्य लय स्यात्। अथाक्षज—नर्तने। [3]नटनर्तननामानि। अक्षजशब्दस्थानेऽस्त्रियामिति, नृत्यशब्दस्थाने नृत्तमिति च पठन्ति[4] ॥ ९ ॥

[1] आदीनि $B_2$ $B_2$ omits मानानि [2] अङ्गुल्यादिचेष्टया $B_2$ [3] नटननामानि $A_1$
[4] $B_1$ adds केचित्

**तौर्यत्रिक नृत्यगीतवाद्यं नाट्यमिदं त्रयम् ॥ १० ॥**
**भ्रकुंसश्च भ्रुकुंसश्च भ्रूकुसश्चेति नर्तकः ।**
**स्त्रीवेषधारी पुरुषो नाट्योक्तौ गणिकाज्जुका ॥ ११ ॥**

(वि.) तौर्यत्रिकमिति—तूर्याणा त्रिक तौर्यत्रिकम्[1]। तूर्याणा सम्बन्धि तौर्यम्। तच्च त्रिक च तौर्यत्रिकम्। [2]नटकर्म नाट्यम्। समुदितनृत्तगीतवाद्यनाम ॥ भ्रुवा कुंसयतीति [3]भ्रकुस। भ्रुकुंसश्च[1]। भ्रकुसश्च। 'कुसि भाषायाम्'। स्त्रीवेषधारिनर्तक पुरुषनामानि ॥ नाट्योक्तौ नटव्यवहारे नामान्यतः। अर्जतीत्यज्जुका। 'अर्ज अर्जने'। नाट्योक्तौ गणिकानाम ॥ १०—११ ॥

[1] तूर्ये मुरजादि तत्र भव शब्द तौर्य त्रयोऽवयवा अस्येति त्रिकम्। तौर्येण त्रिक $W_1$, $Pt_2$ [2] नटस्य° I, $W_1$ नृत्त गीत वाद्यम् एतत्त्रयसमुदितनटनमनेति $B_2$
[3] चेष्टादिक भ्रियतऽनेति भ्रू, तदिङ्गितसूचकचलनविशेष। तेन कु भूमि तत्रत्यजन सादयति गमयतीति, आहत्य भ्रकुस इत्यर्थो जायत $B_2$ [4] भ्रुकुसश्च A

(पा.) तौर्यत्रिक—त्रयम्। नृत्तगीतवाद्यानि त्रीणि तौर्यत्रिकम्। इद[1] त्रय नाट्य स्यात्। तत प्रेक्षणार्थ स्याच्चेत् सगीत भवति। '[2]सगीत प्रेक्षणार्थेऽस्मिन्' इति वैजयन्ती (पृ १४१, श्लो ७२)। भ्रकुसश्च—पुरुष। भ्रकुसादय [3]षडपि स्त्रीवेषधारिनर्तकपुरुषनामानि। भ्रकुसशब्दो रुशब्दादिश्च [4]ऊकारादिश्च भवति। 'स भ्रूकुसो भ्रुकुसश्च भ्रूकुसश्च भ्रुकुसज्जत्' इति वैजयन्ती (पृ १४१, श्लो ६७)। अनुक्तम्—'पात्राण्यधिकृता नाट्ये'। नाट्ये नियुक्तास्ते पात्राणीत्युच्यन्ते। 'तेषा वेषस्तु भूमिका'।

तेषा वेषो भूमिका स्यात् ॥ नाम्न्योक्तौ । अङ्गहारावधि अधिकारवचनम् । तस्मादित पर वक्ष्यमाणा शब्दा नाट्यविषया । व्यवस्थिताधिकारविषयत्वाद्[5] देवकुमारादिशब्दा इतरविषयाश्च भवन्ति । गणिकाज्जुका[6] । लञ्जिका [6]अज्जुका स्यात् ॥ १०–११ ॥

[1] A₁ omits इद त्रय [2] सगीतकमिति मुद्रितपुस्तके [3] B₃, B₄ omit
[4]श्रवणादि° A₁ [5] A₁ omits विषय [6] अर्जुका A₁

**भगिनीपतिरावुत्तो भावो विद्वानथावुकः ।**
**जनको युवराजस्तु कुमारो भर्तृदारकः ॥ १२ ॥**

(वि.) भगिनीपतिरिति—अवति भगिनीमिति आवुत्त । 'अव रक्षणे' । भगिनीपतिनाम ॥ भावयतीति भाव । [1]विदूषकनाम ॥ अवतीति आवुक । 'अव रक्षणे' । जनकनाम ॥ कुत्सित मारयतीति कुमार । 'मृङ् प्राणत्यागे' । युवा चासौ राजा च युवराज । कुमारयतीति वा कुमार । 'कुमार क्रीडायाम्' । प्रेष्यादीन् बिभर्तीति भर्ता । तस्य दारक भर्तृदारक । पोष्यान् दारानिव बिभर्तीति वा । 'डुभृञ् धारण-पोषणयो' । युवराजनामनी ॥ १२ ॥

[1] विदुषा W₂, विदुष D₁ I, K₃

(पा.) भगिनीपतिरावुत्त । ज्येष्ठकनिष्ठभगिन्यो पति आवुत्त स्यात् । अनुक्तम्—'पतिरार्योऽप्यार्यपुत्र' । पतिरार्य आर्यपुत्रश्च स्यात् ॥ भावो विद्वान् । तत्र विद्वान् भाव स्यात् ॥ अथावुको जनक । पिता आवुक स्यात् ॥ युवराज —भर्तृदारक । युवराजश्च कुमारश्च भर्तृदारक स्यात् ॥ अनुक्तम्—'गोस्वामिनो राजसुता[1]' । अन्यराजपुत्रा गोस्वामिन इत्युच्यन्ते ॥ १२ ॥

[1] राजपुत्रा B₄

**राजा भट्टारको देवस्तत्सुता भर्तृदारिका ।**
**देवी कृताभिषेकायामितरासु तु भट्टिनी ॥ १३ ॥**

(वि.) राजेति—भटन्ति उद्धत मापन्ते भट्टा । 'भट परिभाषणे' । भट्टान् शत्रून् अरति पीडयतीति [1]भट्टारक । 'अर पीडने' । दीव्यतीति देव । 'दिवु क्रीडादौ' ।

भर्तृदारिकाशब्द भर्तृदारकशब्दवत् । राजपुत्रीनाम ॥ दीव्यतीति देवी । [2]अभिषिक्तराज पत्नीनाम ॥ भटति उद्धत भाषते [3]भट्टिनी । अकृताभिषेकराजभार्यानाम ॥ १३ ॥

[1] भटा सेवका तैर्युद्धमुत्तारयति 'तॄ प्लवनतरणयो ' $Pt_2$ [2] कृताभिषेक° $W_2$
[3] $D_1$, Y omit ▮ pages 'भट परिभाषणे' $W_2$

(पा.) राजा—देव । नृप भट्टारको [1]देवश्च स्यात् । नामान्ते प्रयुक्ता अप्येते पूज्यमपि कथयन्ति । 'पाद' इति नामान्ते देवो भट्टारको वापि' इति हलायुध (अ मा १ १८५) । तत्सुता भर्तृदारिका । राजसुता[2] भर्तृदारिका स्यात् ॥ देवी कृताभिषेकायाम् । महिषीनाम ॥ इतरासु तु भट्टिनी । अन्या राजपत्न्य [3] भट्टिन्य स्यु ॥ १३ ॥

[1] $A_1$ omits [2] राजपुत्री $B_1$ [3] °भार्या $B_1$

## अब्रह्मण्यमवध्योक्तौ राजश्यालस्तु राष्ट्रियः ।
## अम्बा माताथ बाला स्याद् वासूरार्यस्तु मारिषः ॥ १४ ॥

(वि.) अब्रह्मण्यमिति—ब्राह्मणोऽवध्य इत्युक्ति [1]अब्रह्मण्यम् । ब्रह्मणो हित ब्रह्मण्य, शान्तता, तदविद्यमानमत्रेति वा । अवध्योक्तिनाम ॥ राज्ञ श्याल [2] राजश्याल । राष्ट्री राज्ञी तस्या भ्राता राष्ट्रिय । राजपत्नीभ्रातृनाम ॥ अम्ब्यते शब्द्यते [3]बालैरित्यम्बा । 'अबि शब्दे' । मातृनाम ॥ वसति मातु समीप इति वासू । 'वस निवासे' । बालानाम ॥ मायामियर्ति गच्छतीति मारिष [4] । 'ऋ गतौ' । [5]आर्यनाम ॥ १४ ॥

[1] ब्रह्मणि साधु न भवतीति, अवध्यवाक्ये इत्यर्थ $D_1$, I, $K_2$ अवध्यवाक्यमित्यन्ये ? [2] श्याल ? [3] बाले A $B_1$, T [4] मारयति पापानिति मारिष । मर्षणात् सहनाद्वा $Pt_2$
[5] आरात् पापकर्मभ्यो यातीत्यार्य , अरणीय अभिगम्यो वा $Pt_2$

(पा.) अब्रह्मण्यमवध्योक्तौ । अवध्योऽस्मीत्युक्तिरवध्योक्ति । [1]तस्यामाक्रोशनेऽपि अब्रह्मण्यशब्द स्यात् ॥ राज्ञ —राष्ट्रिय । राज्ञ पत्नीभ्राता राष्ट्रिय स्यात् । अम्बा माता । जननी अम्बा स्यात् । 'अम्ब सरस्वति त्रिभिय तव माता विष्णुवल्लभा 'देवी' । अथ—वासू । बालिका वासूरित्युच्यते । 'वासु देवालय गत्वा सोम शङ्करमर्चय' आर्यस्तु मारिष । आर्यनाम । मार्षोऽपि भवति । 'आर्यो मारिषमार्षकौ'' इति वैजयन्ती (पृ १४४, श्लो १०६) । अनुक्तम्—'क्षपणाद्या भदन्ता स्यु ' । क्षपणसौगतादयो भदन्ता इत्युच्यन्ते ॥ १४ ॥

[1] $A_1$ omits तस्यां [2] देवि ? [3] °मार्षकौ $A_1$, $B_1$

अत्तिका भगिनी ज्येष्ठा निष्ठानिर्वहणे समे ।
हण्डे हञ्जे हलाह्वानं नीचां चेटीं सखीं प्रति ॥ १५ ॥

(वि.) <u>अत्तिकेति</u>—अत्ति[1] भ्रातृभार्यां वचनैरिति अत्तिका। 'अद भक्षणे'। ज्येष्ठभगिनीनाम ॥ नियतं[2] स्थानं निष्ठा। निःशेषेण[3] वहनं प्रस्तुतकथायाः समाप्तिः निर्वहणम्। समे इति समानार्थे। नाटकस्य [4]निर्वहणाख्यपञ्चमसन्धिनामनी ॥ हण्डे इति नीचां प्रति, हञ्जे इति चेटीं प्रति, हला इति सखीं प्रति आह्वानम्। एते त्रयः सम्बोधनार्थे अव्ययाः ॥ नाट्योक्तयः[5] समाप्ताः ॥ १५ ॥

[1] अत्ति क्षपयति (परुषवचनैः $K_3$) $B_2$ [2] अत्र तिष्ठन्ति, 'ष्ठा गतिनिवृत्तौ' $B_2$
[3] नितरां वहतीति $B_2$ [4] 'मुख प्रतिमुख गर्भ सावमर्शोपसंहृति' U [5] नाट्योक्तविधि समाप्त $B_2$ I

(पा.) <u>अत्तिका—ज्येष्ठा</u>। ज्येष्ठभगिनी अत्तिका स्यात्। अनुक्तम्—'कनिष्ठा तु चलावुसा'। कनिष्ठा[1] स्वसा चलावुसा स्यात्। <u>निष्ठा—समे</u>। प्रस्तुतकथासंहारः निष्ठा च निर्वहणं च स्यात्। <u>हण्डे—सखीं प्रति</u>। नीचाह्वाने हण्डेशब्दः प्रवर्तते। चेटिकाह्वाने हञ्जेशब्दः। सख्याह्वाने हलाशब्दः[2]। 'हला सौन्दले'। [3]हलिलेशब्दोऽप्यस्ति। 'हलिले[3] जनमध्ये याचितवत्यसि'। हण्डे हञ्जे हलेति शब्दास्त्रयः संबोधनार्थका इति <u>[4]प्राकृतसञ्जीविन्याम</u>व्ययपरिच्छेदे कथितत्वादव्ययाः ॥ १५ ॥

[1] $A_1$ omits [2] $B_3$ adds प्रवर्तते [3] हरिले $B_3$ [4] °सञ्जीवन्या $B_3$

अङ्गहारोऽङ्गविक्षेपो व्यञ्जकाभिनयौ समौ ।
निर्वृत्ते त्वङ्गसत्त्वाभ्यां द्वे त्रिष्वाङ्गिकसात्त्विके ॥ १६ ॥

(वि.) <u>अङ्गहार इति</u>—अङ्गानां हारोऽन्यत्रानयनम् अङ्गहारः[1]। अङ्गानां विक्षेपोऽङ्गविक्षेपः। स्थानात् स्थानान्तरानयनरूपक्रियानामनी ॥ व्यनक्त्यर्थं व्यञ्जकः[2]। 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु'। आभिमुख्येन नीयतेऽनेनार्थं अभिनयः। 'णीञ् प्रापणे'। वाचिकाङ्गिकसात्त्विकाहार्यभावसूचकनामनी ॥ अङ्गेन निर्वृत्तम् आङ्गिकम्। सत्त्वेन निर्वृत्तं सात्त्विकम्। सत्त्वोत्कटे[3] मनसि पुनर्निर्वृत्ताभिनयनामनी ॥ १६ ॥

[1] 'हृञ् हरणे' $B_2$ स्थानात् स्थानान्तरं नयनं $Pt_2$ [2] $K_2$ omits 4 lines. [3] सत्त्वोत्कृष्टे A, $B_1$, T

(पा.) अङ्गहारोऽङ्गविक्षेपः। अवयवविक्षेपोऽङ्गहारः [1]स्यात्। व्यञ्जक—समौ। सूच्यार्थसूचननामनी॥

'निर्वृत्ते त्वङ्गसत्त्वाभ्यां द्वे त्रिष्वाङ्गिकसात्त्विके।
व्यञ्जकोऽभिनयो यस्तु सूच्यार्थोऽभिनयस्य च॥'

इत्यनेन सूच्यार्थश्चाभिनयः। अङ्गनिर्वृत्तं स्यादाङ्गिकम्। सत्त्वनिर्वृत्तं स्यात् सात्त्विकम्। द्विशब्दग्रहणेन वाचिकाहार्ययोर्गुणत्वं सूच्यते॥ १६॥

[1] इत्युच्यते $B_4$.

**शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः।**
**बीभत्सरौद्रौ च रसाः शृङ्गारः शुचिरुज्ज्वलः॥ १७॥**

(वि.) शृङ्गारेति—शृङ्गारो वीरः करुणा अद्भुतः हास्यं भयानकः बीभत्सः रौद्रः चकारात् शान्तश्च[1]। एते शृङ्गारादयो नव रसा भवन्ति। सामाजिकजनेन[2] रस्यन्त इति रसाः। 'रस आस्वादने'। [3]शृङ्गं युवादिकमियर्तीति[4] शृङ्गारः। 'ऋ गतौ'। [5]जुगुप्सादिरहितत्वात् शुचिः। उज्ज्वलति प्रकाशते उज्ज्वलः। 'ज्वल दीप्तौ'। शृङ्गाररसनामानि॥ १७॥

[1] शान्तिश्च A, T, $W_1$, वात्सल्यं दशमः $Pt_2$. [2] सामाजिकेन A, $B_1$, T. [3] के ते रसा इत्याकाङ्क्षाया क्रमेण प्रतिपादयति $B_2$ [4] शृङ्ग श्रेष्ठं $B_1$, Y, प्राधान्यं $Pt_2$. [5] परिशुद्धत्वात् $Pt_2$

(पा.) शृङ्गार—रसाः। शृङ्गारादयोऽष्टौ रसशब्दवाच्याः। चशब्दो मतान्तरबोधनार्थः[1]।

'शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।
बीभत्साद्भुतशान्ताश्च नव नाट्यरसाः स्मृताः॥'
'शृङ्गारवीरौ बीभत्सरौद्रौ हास्यं भयानकम्।
करुणाद्भुतशान्ताश्च वात्सल्यं च रसा दश॥'

इति। द्वादशरसा इति केचित्। शृङ्गार—उज्ज्वलः। शृङ्गाररसनामानि॥ १७॥

[1] °प्रबोधन° $A_1$.

**उत्साहवर्धनो वीरः कारुण्यं करुणा घृणा ।**
**कृपा दयानुकम्पा स्यादनुक्रोशोऽप्यथो हसः ॥ १८ ॥**
**हासो हास्यं च बीभत्सं विकृतं त्रिष्विदं द्वयम् ।**

(वि.) उत्साहेति—उत्साहं वर्धयतीति उत्साहवर्धनः । 'वृधु वृद्धौ' । [1]विरुद्धान् राति हन्तीति वीरः । 'रा दाने छेदने च' । विद्विष्टान् ईरयतीति वा । 'ईर [2]क्षेपे' । वीरयतीति वा वीरः । 'शूर वीर विक्रान्तौ' । वीररसनाम ॥ कुर्वन्त्यात्मानमदीनमनयेति करुणा । 'डुकृञ् करणे' । [3]कुरुं क्लेशं न सहत इति वा । करुणैव कारुण्यम् । [4]घृण्यन्तेऽनुगृह्यन्तेऽनयेति घृणा । 'घृणि ग्रहणे' 'घृणु दीप्तौ' इति वा धातुः । [5]कल्पयते कृपा । '[6]कृप कृपायाम्' । दयन्ते[7] रक्षन्त्यनया दया । 'दय दानगतिहिंसारक्षणेषु' । अनुकम्पन्तेऽनयेत्यनुकम्पा । 'कपि [8]चलने' । अनुक्रोशन्त्यनेनेत्यनुक्रोशः । 'क्रुश आह्वाने रोदने च' । [9]करुणारसनामानि ॥ हासयति [10]जनानिति हसः, हासः, हास्यं च । 'हस हसने' । हास्यरसनामानि ॥ [11]बीभत्सा निन्दा, सा अत्रास्तीति बीभत्सम् । सद्विरुद्धत्वात् विकृतम् । बीभत्सरसनामनी ॥ [12]इदं द्वयं तद्वति त्रिषु ॥१८॥

[1] विद्विषान् W$_2$; विद्विषः Y. [2] प्रेरणे A, B$_1$, T. [3] करुं क्लेशं नयति B$_3$. [4] घृणन्ते B$_3$ [5] कृपयन्ते U, W$_1$, Pt$_2$. [6] कृप K$_8$, Y, Pt$_2$. [7] रक्ष्यन्ते A, B$_1$, T. [8] किंचिच्चलने Pt$_2$. [9] कारुण्य° A, T, W$_1$. [10] सर्वान् B$_1$. [11] Pt$_2$ adds वध बन्धन इत्यस्य निन्दायां सन्. [12] बीभत्सविकृतशब्दौ तद्धेतुशोणितमांसादियाचित्वे त्रिषु लिङ्गेषु वर्तेते Pt$_2$.

(पा.) उत्साह—वीरः । वीररसनाम ॥ '[1]शुच्युज्ज्वलौ तु शृङ्गारो वीर उत्साहवर्धनः' इति व्याडिः । कारुण्यं—अनुक्रोशः । करुणारसनामानि ॥ 'करुणो रस' इति पुंस्त्वमपि । अथो हस—हास्यं च । हास्यरसनामानि ॥ चशब्दो रूपान्तरसमुच्चयार्थः । 'हसिका [2]तु हसो हासो हसनं हास्यघर्घरे' इति । बीभत्सं विकृतम् । बीभत्सनामनी ॥ त्रिष्विदं द्वयम् । इमे द्वे त्रिष्वित्यनेन त्रिलिङ्गे[3] । बीभत्सो रोगः । विकृतो रोग इत्यादि ॥ १८ ॥

[1] शुचिः A$_1$ [2] हसित for तु हसो B$_2$. [3] B$_1$ adds भवतः.

**विस्मयोऽद्भुतमाश्चर्यं चित्रमप्यथ भैरवम् ॥ १९ ॥**
**दारुणं भीषणं भीष्मं घोरं भीमं भयानकम् ।**

**भयंकरं प्रतिभयं रौद्रं तूग्रममी त्रिषु ॥ २० ॥**

**चतुर्दश दरस्त्रासो भीतिर्भीः साध्वसं भयम् ।**

(नि). विस्मय इति—[1]विस्मापयतीति विस्मय । 'ष्मिङ् ईषद्धसने' । अत् आश्चर्यार्थेऽव्ययम् । तस्मात् भव [2]अद्भुतम् । आचरणीय आश्चर्यमिति साधु । 'चर गतिभक्षणयो ' । चित्रयतीति[3] चित्रम् । 'चित्र [4]चित्रीकरणे' । अद्भुतरसनामानि ॥ भीरोरिद त्रासकरत्वाद् भैरवम् । बिभेत्यस्मात् अधीर इति वा भैरवम् । दारयति चित्तमिति दारुणम् । 'दृ [5]विदारणे' । बिभेत्यस्मादिति भीषणम्[6] । भीष्मम् । भीमम् । भयानक च । 'ञिभी भये' । घुरतीति घोरम्[7] । 'घुर भीमार्थशब्दयो ' । भय करोतीति भयकरम् । 'डुकृञ् करणे' । भय प्रति गतं [8]प्रतिभयम् । भयानकरस-नामानि ॥ रुत् [9]रोग, ता राति ददातीति रुद्र । तस्य कर्म रौद्रम्[10] । उग्रत्वात् उग्रम् । रौद्ररसनामानि ॥ अमी अद्भुताद्या उग्रान्ता शब्दा चतुर्दश त्रिषु लिङ्गेषु वर्तन्ते । [11]दरति बिभेत्यस्मादिति दर । 'दृ भये' । त्रस्यत्यस्मादिति [12] त्रास । 'त्रसी उद्वेगे' । बिभेत्यस्या इति भीति । भीश्च । भय च । 'ञिभी भये' । साधूनस्यति बाधत इति साध्वसम् । '[13]असु क्षेपणे' । भयनामानि ॥ १९–२० ॥

[1] विशेषेण स्मा° B₂ [2] भवतीति भूत, तत्र भवतीत्यद्भुतम्, आसमन्तात् चर्यत इत्याश्चर्यम् B₂ आ चरण K₅ Y [3] I, U, W₂ add अकस्मात् [4] 'चित्रिङ् आश्चर्ये' K₂ [5] 'दृ अवखण्डने' B₂ 'दॄ भये' A, T, W₁ [6] भीषयते B₂ D₁, I [7] घुरति यत तद्घोरम् A, B₁, T [8] प्रतिबिभेत्यस्मात् B₂ [9] रोद D₁ [10] I adds 'रा दाने' [11] दीर्यतेऽस्मात् Pt₂ [12] त्रसन Pt₂ [13] 'असु निरसने' इति वा धातु B₂

(पा.) विस्मयो—चित्रमपि । अद्भुतरसनामानि ॥ अथ—प्रतिभयम् । भयान-करसनामानि ॥ रौद्र तूग्रम् । रौद्ररसनामनी ॥ अमी—चतुर्दश । धर्मिधर्मवचना [1]अद्भुतादिशब्दा नियतत्रिलिङ्गा [2]भवन्ति । अद्भुतकरी विद्या अद्भुता । धर्मवचना भैरवादयो नियतत्रिलिङ्गा । भैरवोऽहि, दारुणोऽहि, इत्यादि ॥ दरत्रासौ—भयम् । भयनामानि । भयरस साध्वसरस इति रसत्वोपचाराद् रसानन्तरकथनम् ॥ १९–२० ॥

[1] अद्भुतादय B₃ [2] B₃ omits

**विकारो मानसो भावोऽनुभावो भावबोधकः ॥ २१ ॥**

**गर्वोऽभिमानोऽहंकारो मानश्चित्तसमुन्नतिः ।**

**(दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मदः ।)**

(वि.) विकार इति—भावयति करोति रसान् भावः। 'भू [1]सत्तायाम्'। मनसोऽयं मानसः। मनोविकारो भाव इत्युच्यते।

'हर्षोन्मादश्रमाशङ्का निर्वेदो जडता धृतिः।
[2]ग्लानिश्चिन्तामतिव्रीडा दैन्यं गर्वः स्मृतिर्मदः[3]॥
गर्होपस्मारसुप्तानि चापलालस्यमुग्रता।
अमर्षत्रासतर्काश्च निद्रौत्सुक्यं [4]मृतिस्तथा॥
आवेगो व्याधिरीर्ष्या च विषादश्च विकत्थनम्।
अवबोध इति प्रोक्ता भावाः संचारिणो बुधैः॥'

मनोविकारनाम॥ अनु पश्चादर्थं भावयति प्रकाशयतीति अनुभावः। 'भुवोऽवकल्कने'। मनोविकारज्ञापकहेतुनाम[5]।

'वागङ्गाभिनयेनेह यस्मादर्थोऽनुभूयते[6]।
शाखाङ्गोपाङ्गसहितः सोऽनुभावस्ततः स्मृतः॥'

इति। 'भ्रूभङ्गकटाक्षाद्या अनुभावा इति स्मृताः' इति च। [7]गर्वत्यनेनेति गर्वः। 'कर्व खर्व गर्व दर्पे'। आत्मानं [8]ज्यायांसमभिमनुते अभिमानः। 'मनु अवबोधने'। अहमेव ज्यायानिति करोतीत्यहंकारः। [9]आत्मानं मानयतीति मानः। 'मान पूजायाम्'। चित्तस्य समुन्नतिः चित्तसमुन्नतिः। अहमेव ज्यायानिति मनननामानि॥ २१॥

[1] 'भुव अवकल्कने' A, B₁, T. [2] ध्यान° B₂. [3] क्षयः B₂. [4] धृतिः A. [5] पुलकादिनाम B₂, D₁. [6] अनुभाव्यते K₂, K₃, U. [7] गर्वन्ति B₁. [8] अहमेव मानयति Pt₂. [9] A, W₁ add एव.

(पा.) विकारो—भावबोधकः। मनसो विकारो भावः स्यात्। स च [1]स्थायिसंचारिभेदेन द्विविधो भवति। स च प्रकाशमानः सन् अनुभावः। अत्र[2] भयप्रभृतयः स्थायिनः। गर्वप्रभृतयः संचारिणः। अनादरप्रभृतयोऽनुभावाः। सात्त्विकभावानामनुभावविशेषत्वादनभिधानम्[3]। ते च घर्मप्रलयादयः। गर्वो—समुन्नतिः। गर्वनामानि॥ गर्विशब्दोऽप्यस्ति। '[4]गर्विः स्त्री चास्मिता गर्वः' इति वैजयन्ती (पृ. ९७, श्लो. १६९)। 'स्मयोऽवलेप उत्सेको दर्पः शौण्डीर्यमित्यपि'। एतानि च॥ २१॥

[1] स्थायी A₁. [2] A₁ adds ते के इत्युच्यमाने. [3] °धानत्वम् A₁. [4] गर्वः स्त्री गर्विरस्मिता B₂, B₃; मुद्रितग्रन्थे च.

**अनादरः परिभवः परीभावस्तिरस्क्रिया ॥ २२ ॥**

**रीढावमाननावज्ञावहेलनमसूक्षणम् ।**

**मन्दाक्ष ह्रीस्त्रपा व्रीडा लज्जा सापत्रपान्यतः ॥ २३ ॥**

(वि.) अनादर इति—नाद्रियतेऽनादर[1]। 'दृङ् आदरे'। [2]परिभूयते परिभव परीभावश्च। 'भू सत्तायाम्'। तिरस्करोतीति तिरस्क्रिया[3]। 'डुकृञ् करणे'। रिहति हिनस्तीति[4] रीढा। '[5]रिह हिंसायाम्'। अवमानयतीत्यवमानना[6]। 'मान पूजायाम्'। अवज्ञायतेऽनया अवज्ञा। 'ज्ञा अवबोधने'। अवहेलयतीति अवहेलनम्। 'हेडृ अनादरे'। असून् क्षिणोतीति [7]असुक्षणम्। 'क्षिणु हिंसायाम्'। [8]असूक्षणमिति वा पाठ। 'सूक्ष आदरे'। तिरस्क्रियानामानि ॥ मन्दम् अक्षि यत्रेति मन्दाक्षम्। मन्दम् अक्षम् [9]इन्द्रियमत्रेति वा। जिहेत्यनयेति[10] ह्री। 'ह्री लज्जायाम्'। त्रपत इति त्रपा। 'त्रपूष लज्जायाम्'। [11]व्रीडयतीति व्रीडा। 'व्रीड चोदने लज्जाया च'। [12]व्रीडाशब्दो द्वयो। लज्जते इति लज्जा। 'ओ लस्जी व्रीडने'। लज्जानामानि ॥ अपत्रपत [13]इत्यपत्रपा। परादागतह्रीनाम ॥ २२–३ ॥

[1] आदर सत्कार स न भवतीति Pt.  [2] परिभावयति $B_2$  [3] तिरस्करण $Pt_2$
[4] करयति $B_2$ $D_2$ I $W_1$  [5] 'रिह कत्थनयुद्धनिन्दाहिंसादानेषु A $B_1$ T, $W_1$ $Pt_2$  [6] मानन पूजा तद्विरोधिनी $Pt_2$  [7] असुक्षणम् अनादर $Pt_2$
[8] असूक्षण इति च पाठ I $W_1$  [9] वाग्यत्र $Pt_2$  [10] $Pt_2$ omits अनया
[11] व्रीन्यति $Pt_3$  [12] व्रीडशब्द पुलिङ्गोऽप्यस्ति $Pt_3$  [13] निकृष्टा त्रपा Pt

(पा.) अनादर —असूक्षणम्। अनादरनामानि ॥ हलायुधाभिधानेऽनादरापक्षे भिन्नार्थके।

'अत्याकार परिभवो [1]निराकार पराभव ।
अनादरश्चाभिभवस्तिरस्कारश्च कथ्यते ॥ (अ मा ४ १९)
[2]हेला ॥ दवहेला चावज्ञा रीढा विमानना' ॥ (अ मा ४ ३०)

इति ॥ मन्दाक्ष—लज्जा। लज्जानामानि ॥ व्रीडा दोऽप्यस्ति।

'पथि पथिकवधूभि सादर पृच्छ्यमाना
कुवलयदलनील कोऽयम यें तवेति।
स्मितविकसितगण्डं व्रीलविभ्रान्तनेत्र
मुखमवनमयन्ती स्पष्टमाचष्ट सीता ॥'

इति प्रसन्नराघवे[3] ॥ सापत्रपान्यत । परसकाशाज्जाता लज्जा अपत्रपा स्यात् ॥ २२–३ ॥

[1] निकारश्चेति मुद्रितग्रन्थे [2] 'हेला स्यादवहेलं रीढावज्ञावलीढा च' इति मुद्रितपुस्तके [3] अयं श्लोकः मुद्रितग्रन्थे न दृश्यते, उपलभ्यते च हनुमन्नाटके (३ १५), $A_1$ adds निवासोपरिव्रीलनं लज्जा.

क्षान्तिस्तितिक्षाभिध्या तु परस्वविषये स्पृहा ।
अक्षान्तिरीर्ष्यासूया तु दोषारोपो गुणेष्वपि ॥ २४ ॥

(वि.) क्षान्तिरिति—क्षम्यत इति [1]क्षान्तिः । 'क्षमूष् सहने' । तितिक्षते तितिक्षा । '[2]तिज निशाने' । निशानं सहनम् । मर्षणनामानि ॥ [3]अभिध्यायते अभिध्या । 'ध्यै चिन्तायाम्' । [4]परद्रव्यलिप्सानाम ॥ न क्षान्तिरक्षान्तिः । ईर्ष्यतीति [5]ईर्ष्या । 'ईर्ष्य ईर्ष्यायाम्' । अक्षमानाम ॥ असूयतीति असूया । गुणेषु [6]दोषारोपनाम ॥ २४ ॥

[1] तितिक्षा च A [2] 'तिज क्षमायाम्' $W_2$ [3] अपहरणे ग्रहणे ध्यानमभिध्या $Pt_2$ [4] ईप्सा $W_1$ [5] ईर्ष्यतीति ईर्ष्या । ईर्ष्य अमर्षार्थः । सा अनेति वा $B_2$ [6] रोषाद्यारोपण° $D_2$

(पा.) क्षान्तिस्तितिक्षा । मर्षणनामनी ॥ अभिध्या—स्पृहा । परद्रव्यविषय स्पृहा अभिध्या स्यात् । विषये स्पृहेति वा पाठः । अक्षान्तिरीर्ष्या । [1]परोन्नत्यासहननामनी ॥ असूया—अपि । गुणेषु दोषारोपणमसूया स्यात् ॥ २४ ॥

[1] परोन्नत्यां° $B_3$

वैरं विरोधो विद्वेषो मन्युशोकौ तु शुक् स्त्रियाम् ।
पश्चात्तापोऽनुतापश्च विप्रतीसार इत्यपि ॥ २५ ॥

(वि.) वैरमिति—वीरस्य कर्म वैरम् । विरुणद्धीति विरोधः[1] । 'रुधिर् आवरणे' । विद्वेष्टीति विद्वेषः[2] । 'द्विष अप्रीतौ' । वैरनामानि ॥ विरुद्धलक्षणया मन्यतेऽनेनेति मन्युः । 'मन ज्ञाने' । [3]शोचयत्यनेन शोकः । 'शुच शोके' । शुक् च । शोकनामानि ॥ पश्चात्तपतीति[4] पश्चात्तापः । अनुतापश्च । 'तप संतापे' । विरुद्धं [5]प्रतिसरतीति विप्रतीसारः । 'सृ गतौ' । पश्चात्तापनामानि ॥ २५ ॥

[1] विरोधेन रोधः $Pt_2$ [2] विद्विष्यते A, विरोधो द्वेषः $Pt_2$ [3] शोचयति $D_1$, U; शोचनं $Pt_2$ [4] तापयति $Pt_2$ [5] प्रतिसरणं $Pt_2$, विप्रतिसारः $D_2$, $K_2$

(पा.) वैर—विद्वेष । वैरनामानि ॥ अनुक्तम्—'कलहोऽस्त्री झकटक'। कलहनामनी ॥ 'दोर्मध्य तु [1]करेकरम्'। मुष्टिप्रहारनामनी ॥ मन्यु—स्त्रियाम् । शोकनामानि ॥ पश्चात्तापो—इत्यपि । पश्चात्तापनामानि । 'प्रष्ठमासादन पश्चाद् गत स्यार्थस्य चिन्तनम्'। गतार्थचिन्तन प्रष्ठमासान्न स्यात् ॥ २५ ॥

[1] करेङ्कम् A₁

**कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ ।**
**शुचौ तु चरिते शीलमुन्मादश्चित्तविभ्रमः ॥ २६ ॥**

(वि.) कोप इति—[1]कुप्यतीति कोप । 'कुप क्रोधे'। क्रुध्यतीति क्रोध । 'क्रुध कोपे'। न मृष्यत्यनेन अमर्ष । 'मृष सहने'। रुष्यत[3] अनेनेति रोष । 'रुष हिंसायाम्'। रुट् च । प्रतिहन्तीति प्रतिघ । 'हन हिंसागत्यो'। क्रुध्यतीति 'क्रुत्'। 'क्रुध कोपे'। कोपनामानि ॥ [5]शीलतीति शीलम् । 'शील समाधौ'। शुचिचरितनाम ॥ उन्माद्यतेऽनेनेति उन्माद । '[6]मदी हर्षग्लपनयो'। चित्तस्य विभ्रम चित्तविभ्रम । [7]भूताद्यावेशागतचित्तविभ्रमनाम[8] ॥ २६ ॥

[1] कुप्यत्यनेन A B₁ T [2] न मर्षणममर्ष Pt₂ [3] रुष्यति B₁ [4] क्रुध्यत्यनया A B₁ T [5] शीलयतीति D₂ [6] मदो हर्षे B₁ [7] °आवशात् I [8] °भ्रमण° B₂ K₅

(पा.) कोप—स्त्रियाम् । कोपनामानि ॥ रुपाक्रुधाशब्दावपि [1]स्त । 'रुपारुट्-क्रुत्क्रुधा' स्त्रियाम्[3]' इति वैजयन्ती (पृ ९८, श्लो १८३) । शुचौ—शीलम् । 'आचा रश्चरित वृत्त चरित्र चरण च तत्' इति 'वैजयन्ती (पृ ९२, श्लो ११५) । [5]सदाचार शील स्यात् । उन्माद —विभ्रम । चित्तभ्रमणमुन्माद स्यात् । अनुक्तम्—'तन्द्रा शौर्सान्यमालस्यम्'। आलस्यनामानि ॥ 'विस्मृति प्रस्मृति समे'। [6]विस्मृतिनामनी ॥२६॥

[1] B₃ omits [2] क्रुधा B₁ [3] स्त्रिय B₃ मुद्रितग्रन्थे च [4] आचारो वृत्तचारित्रचरित्रचरणानि च इति मुद्रितग्रन्थ [5] शुद्धाचार A₁ [6] विस्मरण° B₃

**प्रेमा ना प्रियता हार्दं प्रेम स्नेहोऽथ दोहदम् ।**
**इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः ॥ २७ ॥**
**कामोऽभिलाषस्तर्षश्च सोऽत्यर्थं लालसा द्वयोः ।**

(वि.) प्रेमेति—प्रियस्य भाव प्रेमा। [1]प्रेम च। प्रियता च। हृद कर्म [2]हार्दम्। स्निह्यत इति [3]स्नेह । 'ष्णिह प्रीतौ'। स्नेहनामानि॥ दोग्धीति दोह तं ददातीति दोहदम्[4]। 'दुह प्रपूरणे'। इच्छति ययेति इच्छा[5]। 'इषु इच्छायाम्'। [6]काङ्क्षति काङ्क्षा। 'काक्षि काङ्क्षायाम्'। स्पृहयतीति[7] स्पृहा। 'स्पृह ईप्सायाम्'। ईहन ईहा। 'ईह चेष्टायाम्'। तृष्यतीति तृट्। तर्षश्च। 'ञितृषा पिपासायाम्'। [8]वाञ्छतीति वाञ्छा। 'वाछि इच्छायाम्'। लब्धुमिच्छा लिप्सा। 'डुलभष् प्राप्तौ'। मनो रथो यस्य स मनोरथ[9]। [10]काम्यते काम। 'कमु कान्तौ'। [11]अभिलषति अभिलाष। 'लष कान्तौ'। इच्छानामानि॥ तर्षण [12]तर्ष। 'तृष पिपासायाम्'। स एवाधिकश्चेत् लालसा। अतिशयेन लस्यते लालसा। 'लस श्लेषणक्रीडनयो'। भृशतराभिलाषनाम॥२७॥

[1] प्रेम नपुंसकम् $B_2$ $D_1$ adds 'प्रीञ् तर्पणे का ती च [2] हृदये भव $Pt_2$
[3] स्निह्यत्यनेन A, $B_1$, T [4] दोहमार्य गर्भिण्यादेर्ददाति I, $K_5$, $W_2$ [5] एषणमिच्छा $Pt_2$
[6] काङ्क्षण $Pt_2$ [7] स्पृहण $Pt_2$ [8] वाञ्छन $Pt_2$ [9] आत्मकत्वेन मनसो रथ इव स्थितत्वात् $Pt_2$ मन एव रथ $D_1$ [10] कमन U, $W_1$ [11] अभिलषण $Pt_2$
[12] A, $B_1$, T omit

(पा.) प्रेमा—स्नेह । स्नेहनामानि॥ पुलिङ्गप्रेमशब्दस्तद्धितान्त । नपुंसकलिङ्ग प्रेमशब्द कृत्प्रत्ययान्त[1]। तस्मात्—'स्नेहोऽस्त्री प्रेम सौहार्दमजीर्यं हार्दसौहृदे' [2]इत्यन्यसमीरिता समाहोक्तिरपि युक्ता। अथ दोहदम्—तर्षश्च। तृष्णानामानि॥ स महान् लालसा द्वयो । अत्यर्थमिति वा पाठ । अतितृष्णानाम॥ २७॥

[1] कृदन्त नपुंसकलिङ्ग $B_3$ [2] अन्यसंगृहीता $B_3$

**उपाधिर्ना धर्मचिन्ता पुंस्याधिर्मानसी व्यथा॥ २८॥**
**स्याच्चिन्ता स्मृतिराध्यानमुत्कण्ठोत्कलिके समे।**
**उत्साहो व्यवसायः स्यात् स वीर्यमतिशक्तिभाक्॥ २९॥**

(वि.) उपाधिरिति—उप समीपे आधीयते धर्मोऽनेति [1]उपाधि । धर्मचिन्ताया नाम॥ आधीयते दैन्यमनेन आधि । 'डुधाञ् धारणपोषणयो'। मनोव्यथानाम॥ चिन्त्यते चिन्ता[2]। 'चिति स्मृत्याम्'। दारिद्र्यादिना वितर्कनाम॥ स्मर्यत इति [3]स्मृति । 'स्मृ आध्याने'। विस्मृतस्मरणनाम॥ आ समन्तात् ध्यायते आध्यानम्। 'ध्यै चिन्तायाम्'। उत्कण्ठात्मकस्मरणनाम॥ केचित् त्रय एकार्था इति [4]वदन्ति। उत्कण्ठ्यते[5] उत्कण्ठा। 'कठि शोके'। उत्कल्यते उत्कलिका। 'कल सख्याने'। औत्सु-

(पा.) कौतूहल—कुतूहलम् । अननुभूताभीष्टाभिलाषनामानि ॥ स्त्रीणा—भावजा । स्मितकटाक्षसवृत्त्यादयो विलासा । भर्त्सनादयो बिब्बोका । वचनभूषणादिवृत्तयो[1] विभ्रमा । सुकुमारक्रमो ललितम् । धाष्ट्याचरण हेला । प्रियगतिवचनाद्यनुकरण लीला । इतिशब्देन मोट्टायितकुट्टमितादीना ग्रहणम् । तत्र मोट्टायित कर्णकण्डूयनगात्रभङ्गादि । कुट्टमितमोष्ठग्रहणसुखे दु खाभिनय । किलकिञ्चित क्रोधाश्रुहर्षभीत्यादिसाकर्यं विकृतमुखभाषणम् । विच्छित्तिमाल्यभूषणादिनिरास विक्षेप । असकलप्रतिकर्म मौग्ध्यम्[3] । स्त्रीणा शृङ्गारभावादुत्पन्नविलासादिचेष्टा हावशब्दवाच्या ॥ ३१ ॥

[1] °विषया A₁ [2] किलिकिञ्चित A₁ [3] A₁, B₁ add मुक्ता कस्य कदा पलानीत्यादिवाक्प्रयोगश्च

**द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च ॥ ३२ ॥**
**व्याजोऽपदेशो लक्ष्यं च क्रीडा खेला च कूर्दनम् ।**
**घर्मो निदाघः स्वेदः स्यात् प्रलयो नष्टचेष्टता ॥ ३३ ॥**

(वि.) द्रवेति—द्रवति हृदयमनेनेति द्रव । 'द्रु गतौ' । केलति चित्त केलि [1] । 'केलृ चलने' । किलतीति वा । 'किल श्वैत्ये क्रीडाया च' । परिहसतीति परीहास । 'हसे हसने' । क्रीडतीति क्रीडा । 'क्रीड़ृ विहारे' । ललन लीला । 'लीङ् श्लेषणे' । खेलेति वा पाठ । खेलतीति खेला । 'खेलृ चलने' । [3]नृणाति रत्यतिशय प्रापयतीति नर्म । 'नॄ नये' । प्रियाणा प्रियाभि सह [5]क्रियमाणरतिपरिहासनाम ॥ [6]व्यजति क्षपयतीति व्याज । 'अज गतिक्षेपणयो' । अपदिश्यतेऽतद्रूपेणानेनेति अपदेश । 'दिश अतिसर्जने' । लक्ष्यतेऽनेनेति लक्ष्यम् । 'लक्ष दर्शनाङ्कनयो' । मिषनामानि ॥ [7]क्रीडतीति क्रीडा । 'क्रीड़ृ विहारे' । खेलतीति खेला । 'खेलृ चलने' । कूर्दत इति कूर्दनम्[8] । 'कुर्द क्रीडायाम्' । विहारनामानि ॥ [9]अङ्ग जिघर्तीति घर्म । 'घृ क्षरणदीप्त्यो' । नितरा दहतीति निदाघ । 'दह भस्मीकरणे' । निदाघकाले जातो वा निदाघ । स्विद्यतऽनेनाङ्गमिति स्वेद । 'ष्विदा गात्रप्रक्षरणे' । स्वेदनामानि ॥ [10]प्रलीयते क्रिया अत्रेति प्रलय । 'लीङ् श्लेषणे' । [11]नष्टचेष्टतानाम ॥ ३२–३ ॥

[1] क्रि द्वयो D₂, W₂, 'कल्ट चलने', 'केलृ क्रीडायाम्', 'कल्ट चलनक्रीडनयो' इति धातुत्रयम् A [2] विहरणे B₁, D₂, K₅, W₂ [3] नृणा B₁ [4] प्रीणने A, K₁ [5] B₁, D₁, W₂ omit रति [6] व्यज्यत क्षिप्यते Pt₂ [7] क्रीडन Pt₂ [8] कुर्दनमिति केचित् पठन्ति B₂, K₅ [9] Pt₂ omits अङ्ग [10] A adds प्रकर्षण [11] °चेष्टित° K₅

[1] कुत्सितपट इव आच्छादकः कपटः $B_2$; विशेषेण अजति क्षपयति $B_2$; व्यज्यतेऽनेनेति $Pt_2$. [2] A, $B_1$, T add अनेन. [3] दम्भने $Pt_2$; हिंसायाम् A, $B_1$, $W_1$. [4] $B_2$, $D_1$, $K_5$, $W_2$ add स्फटिकस्येव सिन्दूर. [5] नकारान्तनपुंसकलिङ्गम् $D_1$. [6] करोतीति, 'डुकृञ् करणे' A, कृणातीति कृतिः, निकृष्टा कृतिः I. [7] तस्य $D_1$, I. [8] आत्मानात्मक° $K_3$. [9] प्रकृष्टो मदः $Pt_2$. [10] चिन्ताकुल(ता $W_2$) नामानि $B_1$, T.

(पा.) कपटो—कैतवे। कपटनामानि ॥ 'मिषं निभं छलं दण्डाजिनं गजनिमीलनम्'। एतानि पञ्च च। कुसृतिः—शाठ्यम्। शाठ्यनामानि[1]। प्रमादोऽनवधानता। अनवधाननामनी ॥ ३० ॥

[1] $A_1$ adds भाषया 'दग्निर'.

**कौतूहलं कौतुकं च कुतुकं च कुतूहलम्।**
**स्त्रीणां विलासबिब्बोकविभ्रमा ललितं तथा ॥ ३१ ॥**
**हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः।**

(वि.) कौतूहलमिति—एते शब्दा रूढाः[1]। [2]कुत्सितं पापं तूलयतीति कौतूहलम्। कुतूहलं च। 'तूल निष्कर्षे'। कुत्सितं तोजयतीति कुतुकम्। 'तुज हिंसाबलादाननिकेतेषु'। कुतुकमेव कौतुकम्। [3]अननुभूताभीष्टाभिलापनामानि ॥ विलसति येनेति [4]विलासः। 'लस श्लेषणक्रीडनयोः'। प्रिये आगते सति प्रियाया [5]अङ्गेषु यो विक्षेपो जायते तस्य नाम ॥ विशेषेण [6]बुकति गर्वतीति बिब्बोकः[7]। 'बुक्क गर्वे'। प्रिये आगते सति प्रियाया गर्वादनादरनाम ॥ विशेषेण भ्रमतीति विभ्रमः। 'भ्रमु अनवस्थाने'। शृङ्गाराधिक्यात् चित्तवृत्त्यनवस्थाननाम ॥ ललतीति ललितम्। 'लल विलासे'। [8]स्वपरिकल्पितसुकुमारत्वाद्यङ्गचेष्टितनाम ॥ हिलतीति हेला। हेडते वा। 'हिल भावकरणे' 'हेडृ अनादरे' इति वा धातुः। [9]शृङ्गारक्रीडानाम ॥ ललनं लीला। 'लीङ् श्लेषणे'। [10]मनोमधुरवागङ्गचेष्टितैः प्रियानुकरणनाम ॥ स्त्रीणां शृङ्गारभावजाः क्रिया अमी हावा उच्यन्ते। हूयन्ते कामिनः एभिरिति हावाः। 'हु दानादनयोः' ॥ ३१ ॥

[1] $B_1$, $D_1$, I, $K_5$, $W_2$ add the line. [2] $W_1$, $Pt_2$ add. [3] I, U, $W_1$ omit अभीष्ट°. [4] विक्षेपेण लसने $Pt_2$. [5] अङ्गे A; अङ्गैः $W_1$. [6] बुक्कति $B_1$, I. [7] बिब्बोः गतिविशेषस्य ओकः स्थान, वकारयोरभेदः, बिब्बोको 'वा गतिगन्धनयोरिति' धातुः $Pt_2$. [8] सुरत° A, T, स्वरति° $K_3$, U. [9] °क्रीडि° $B_2$, $D_1$, $K_1$, $K_4$, Y. [10] मधुरतर° A, T, $W_1$.

(पा.) कौतूहल—कुतूहलम् । अननुभूताभीष्टाभिलापनामानि ॥ स्त्रीणा—भावजा । स्मितकटाक्षसभृत्यादयो विलासा । भर्त्सनादयो बिब्बोका । वचनभूषणादिवृत्तयो[1] विभ्रमा । सुकुमारक्रमो ललितम् । धाष्ट्याचरण हेला । प्रियगतिवचनाद्यनुकरण लीला । इतिशब्देन मोट्टायितकुट्टमितादीना ग्रहणम् । तत्र मोट्टायित कर्णकण्डूयनगात्रभङ्गादि । कुट्टमितमोष्ठग्रहणसुखे दु खाभिनय । किलकिञ्चित क्रोधाश्रुहर्षभीत्यादिसाकर्य विकृतमुग्धभाषणम् । विच्छित्तिमाल्यभूषणादिनिरास विक्षेप । असकलप्रतिकर्म मौग्ध्यम्[3] । स्त्रीणा शृङ्गारभावादुत्पन्नविलासादिचेष्टा हावशब्दवाच्या ॥ ३१ ॥

[1] °विषया A₁ [2] किलिकिञ्चित A₁ [3] A₁, B₁ add मुक्ता कस्य कदा फलानीत्यादिवाक्यप्रयोगश्च

**द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च ॥ ३२ ॥**
**व्याजोऽपदेशो लक्ष्यं च क्रीडा खेला च कूर्दनम् ।**
**घर्मो निदाघः स्वेदः स्यात् प्रलयो नष्टचेष्टता ॥ ३३ ॥**

(वि.) द्रवेति—द्रवति हृदयमनेनेति द्रव । 'द्रु गतौ' । केलति चित्त केलि[1] । 'केलृ चलने' । किलतीति वा । 'किल श्वैत्ये क्रीडाया च' । परिहसतीति परीहास । 'हसे हसने' । क्रीडतीति क्रीडा । 'क्रीड् विहारे' । ललन लीला । 'लीङ् श्लेषणे' । खेलेति वा पाठ । खेलतीति खेला । 'खेलृ चलने' । [3]नृणाति रत्यतिशय प्रापयतीति नर्म । 'नृ नये' । प्रियाणा प्रियाभि सह क्रियमाणरतिपरिहासनाम ॥ [6]व्यजति क्षपयतीति व्याज । 'अज गतिक्षेपणयो' । अपदिश्यतेऽन्यद्रूपेणानेनेति अपदेश । 'दिश अतिसर्जने' । लक्ष्यतेऽनेनेति लक्ष्यम् । 'लक्ष दर्शनाङ्कनयो' । मिषनामानि ॥ [7]क्रीडतीति क्रीडा । 'क्रीड विहारे' । खेलतीति खेला । 'खेलृ चलने' । कूर्दत इति कूर्दनम्[8] । 'कुर्द क्रीडायाम्' । विहारनामानि ॥ [9]अङ्ग जिघर्तीति घर्म । 'घृ क्षरणदीप्त्यो' । नितरा दहतीति निदाघ । 'दह भस्मीकरणे' । निदाघकाले जातो वा निदाघ । स्विद्यतेऽनेनाङ्गमिति स्वेद । 'ष्विदा गात्रप्रक्षरणे' । स्वेदनामानि ॥ [10]प्रलीयते क्रिया अत्रेति प्रलय । 'लीङ् श्लेषणे' । [11]नष्टचेष्टतानाम ॥ ३२–३ ॥

[1] कलि द्रयो D₂, W₂, 'केलृ चलने', 'कलृ क्रीडायाम्', 'कलृ वल्लनक्रीडनयो' इति धातुत्रयम् A [2] विहरणे B₁, D₂, K₅, W₂ [3] नृणा B₁ [4] प्रीणने A, K₁ [5] B₁, D₁, W₂ omit रति [6] व्यज्यते क्षिप्यते Pt₂ [7] क्रीडन Pt₂ [8] कुर्दनमिति क्वचित् पठन्ति B₂, K₅ [9] Pt₂ omits अङ्ग [10] A adds प्रकर्षेण [11] °चेष्टित° K₅

(पा.) द्रवकेलि—नर्म च। कान्तै कान्ताभि सह [1]कृतपरिहासभर्त्सनताडनादिनामानि[2]। व्याजो—लक्ष च। 'लक्ष सख्या व्याजलक्ष्ये' इति रुद्राभिधानात् लक्ष मूर्धन्यान्तम्। विषमनामानि। अत्र कपटपर्यायमपि[3] प्रपञ्चयन्ति।

'सरागमुर्व्या मृगनाभिदम्भादपारकर्पूरपदेन कीर्त्या।
[4]रत्यापि दन्तच्छदरुक्छलेन स एकहेल सुभगोऽनगूढ [5]' ॥

इति धर्मशर्माभ्युदय। क्रीडा—कूर्दनम्। कूर्दनमिति च कश्चित् पाठ। 'उपधाया [6]च' (८ २ ७८) इति दीर्घत्वमत्र कैश्चिन्नेष्यत इति रक्षितवचनात् कुर्दनमित्यप्यस्ति। विहारनामानि॥ घर्मो—स्वेद स्यात्। स्वेदनामानि॥ प्रलयो नष्टचेष्टता। नष्टचेष्टतेति निष्पन्दस्थिति। सा प्रलय स्यात्। अनुक्तम्—'कालिका तु विवर्णता'। वैवर्ण्यं कालिका स्यात्॥ ३२–३॥

[1] °परिहसन° $B_3$ [2] $A_1$ adds मायया सरसाद्गु' [3] °पर्यांशान् $B_3$
[4] श्रिया $B_3$ [5] उपगूढ $A_1$, $B_1$ [6] 'वॊरुपधाया दीर्घ इक' (८ २ ७६) $B_3$

**अवहित्थाकारगुप्तिः समौ संवेगसंभ्रमौ।**
**स्यादाच्छुरितकं हासः सोत्प्रासः स मनाक् स्मितम्॥ ३४॥**
**मध्यमः स्याद् विहसितं रोमाञ्चो रोमहर्षणम्।**

(नि.) अवहित्थेति—अवहीयते गोप्यते आकारोऽनेति अवहित्था[1]। 'ओहाक् त्यागे'। आकारगुप्तिनाम॥ संविज्यते[2] संवेग। 'ओ विजी भयचलनयो'। [3]संभ्रम त्यनेनेति संभ्रम। 'भ्रमु अनवस्थाने'। संभ्रमनामनी॥ आ समन्तात् 'छुरतीति आच्छुरितकम्। 'छुर छेदने'। उत्प्रास्यते उत्क्षिप्यतेऽनेनेति उत्प्रास। तेन सह वर्तत इति सोत्प्रास। सोत्प्रासो हास आ[4]च्छुरितकमित्युच्यते। सामर्षहासनाम॥ स हास मनाक् ईषच्चेत् स्मितमित्युच्यते। स्मीयते स्मितम्। 'ष्मिङ् ईषद्धसने'। ईषद्धासनाम॥ विहस्यते [5]विहसितम्। 'हस हसने'। मध्यमहासनाम॥ रोमाणि अञ्चतीति [6]रोमाञ्च। 'अञ्चु गतिपूजनयो'। रोमाणि हृष्यन्त्यनेन रोमहर्षणम्। 'हृष तुष्टौ'। पुलकोद्गमनामनी[7]॥ ३४॥

[1] अवहित्थमित्येके $D_1$, I [2] $Pt_2$ adds अनेनेति [3] संभ्रम्यते $Pt_2$, संभ्रमयति $B_1$
[4] छुरयति U [5] स्मितादिहसितयोर्मध्यम $Pt_2$ [6] रोम्णामञ्चन $Pt_2$ [7] $B_2$ $D_1$, I add पुलको रोमविक्रिया

(पा.) अवहित्थाकारगुप्तिः । लज्जाभयादिहेतुकाकारगोपनमवहित्था स्यात् । अवहित्थमप्यस्ति[1] । 'न पुमानवहित्था स्यादक्षी गृहजालिकाप्यस्याम्' इति वैजयन्ती (पृ १४३, श्लो ८६) । समौ—सम्भ्रमौ । इष्टदर्शनादिभ्यो भूततारतम्यविरहनामनी ॥ स्यात्—सोत्प्रासः । परिहासवचनसहितहास्यमाच्छुरितकः स्यात् ॥ स मनाक् स्मितम् । स हासो मनाक् चेत् स्मितं भवति । मनाक्शब्देनादृष्टदन्तत्वलक्षणम् । 'स्मितं त्वदृष्टदशने हासो वक्रोष्ठिका न ना' इति वैजयन्ती (पृ १४२, श्लो ८३) । मध्यमः—विहसितम् । स्मितं मध्यमं चेद् विहसितम् । अनुक्तम्—'अट्टहासो महत्तरः' । स हासो महान्[3] चेत् अट्टहासः स्यात् । रोमाञ्चो—हर्षणम् । पुलकोद्गमनामनी ॥ क्वचित् स्पष्टलिङ्गस्यापि साहचर्यमपेक्ष्यम् ।

'भयाद् यदेवोद्गतमङ्गनानां देवासुराणां प्रधनोत्सुकानाम् ।
तदेव हर्षश्च तयोर्जयेन रोमाञ्चमस्याप्युपकारि जातम् ॥'

इति राघवपाण्डवीयम् (द्विस ६ ४८) ॥ ३४ ॥

[1] $A_1$ adds आकारगोपनायामवहित्थिकाप्यवकुण्ठिकापि स्त्री　[2] हस $B_3$　[3] $A_1$ adds स्यात्

**क्रन्दितं रुदितं क्रुष्टं जृम्भस्तु त्रिपु जृम्भणम् ॥ ३५ ॥**
**विप्रलम्भो विसंवादो रिङ्खणं स्खलनं समे ।**
**स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि ॥ ३६ ॥**

(वि.) क्रन्दितमिति—[1]क्रन्द्यतेऽनेन क्रन्दितम् । 'क्रदि आह्वाने रोदने च' । [2]रोदित्यनेन रुदितम् । 'रुदिर् अश्रुविमोचने' । [3]क्रोशत्यनेन क्रुष्टम् । 'क्रुश आह्वाने रोदने च' । रुदितनामानि ॥ जृम्भन्तेऽनेनेति जृम्भः । जृम्भणं च । '[4]जृभि गात्रविनामे' । [5]निद्रावसाने आरम्भे वा मुखविकासविशेषनामनी ॥ विप्रलभ्यतेऽनेन विप्रलम्भः । 'डुलभष् प्राप्तौ' । [6]विसंवदतीति विसंवादः । 'वद व्यक्तायां वाचि' । अङ्गीकृतापह्नवनामनी ॥ रिङ्खतीति रिङ्खणम् । 'रिखि गतौ' । रिङ्गणमिति वा पाठः । 'रिगि गतौ' । [7]स्खलतीति स्खलनम् । 'स्खल सञ्चलने' । [8]स्वधर्माच्चलननामनी ॥ [9]नियतं द्रान्तीन्द्रियाण्यत्रेति निद्रा । 'द्रा कुत्सायां गतौ' । [9]शेते शयनम् । 'शीङ् स्वप्ने' । स्वपितीति स्वापः । स्वप्नः । 'ञिष्वप् शये' । [10]संविशत्यत्रेति संवेशः । 'विश प्रवेशने' । निद्रानामानि ॥ ३५–६ ॥

[1] क्रन्दति $B_1$, $D_1$ [2] रुद्यते $B_2$, $W_2$ [3] क्रुश्यते $W_2$, A omits अनेन. [4] जृभ जृभि A, $B_1$, T, $Pt_2$ [5] निशावसाने $B_1$, $W_2$ [6] विसंवदन $Pt_2$ [7] स्खलित $D_2$, $Pt_2$ [8] गोत्रस्खलन° A, $B_1$, T, $W_1$ [9] शेरते प्राणिनोऽनेनेति $B_2$, शेते यत्र I [10] संविशति $W_1$

(पा.) क्रन्दित—क्रुष्टम् । [1]रुदितनामानि ॥ जृम्भस्तु—जृम्भणम् । अङ्गभङ्गनामानि ॥ 'निद्रावसानप्रारम्भयोर्मुखविकासविशेषनामनी' इति लिङ्गभट्टीयम् । जृम्भो नियतस्त्रीलिङ्गश्चेत् मुखविकासनाम । 'जृम्भणं तु त्रयी जृम्भा मुखभेदस्तु जृम्भिका' इति वैजयन्ती (पृ. १४३, श्लो ८८) । विप्रलम्भो विसंवादः । फलविप्रतिपत्तिनामनी ॥ रिङ्खण—समे । अङ्गीकृतत्यागनामनी । स्यान्निद्रा—संवेश इत्यपि । निद्रानामानि ॥ स्वप्नशब्दोऽवस्थात्रयमध्यावस्थायामपि स्यात् । 'निद्रा गुडाका सुप्तिश्च[2] स्वप्नस्त्वेषात्र दर्शनम्' इति वैजयन्ती (पृ ९९, श्लो १९७) ॥ ३५–६ ॥

[1] रोदन° $B_2$ [2] सुप्त चेति मुद्रितपुस्तक

**तन्द्री प्रमीला भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियाम् ।**
**अदृष्टिः स्यादसौम्येऽक्षिण संसिद्धिप्रकृती त्विमे ॥ ३७ ॥**
**स्वरूपं च स्वभावश्च निसर्गश्चाथ वेपथुः ।**
**कम्पोऽथ क्षण उद्धर्षो मह उद्धव उत्सवः ॥ ३८ ॥**

## इति नाट्यवर्गः

(वि.) तन्द्रीति—[1]ततम् इन्द्रियाणां विस्तारं द्रातीति तन्द्री । तन्द्रा । तन्द्रिश्च । 'द्रा कुत्सायां गतौ' । प्रमीलन्ति [2]इन्द्रियाण्यत्र प्रमीला । '[3]मील निमेषणे' । महाश्रमोपजनितेन्द्रियोपरतिनामनी ॥ भ्रुवो कुटिः कुटिलता भ्रकुटिः, भ्रुकुटिः, भ्रूकुटिश्च । 'कुट [5]कौटिल्ये' । भ्रुवो कुटिलतानाम ॥ असौम्या दृष्टिः अदृष्टिः । [6]विरुद्धदर्शननाम ॥ संसिध्यतीति संसिद्धिः[7] । 'षिधु संराद्धौ[8]' । प्रकर्षेण क्रियते [9]प्रकृतिः । 'डुकृञ् करणे' । स्वस्य रूपं स्वरूपम् । [10]स्वमात्मानं भावयतीति स्वभावः । 'भुवोऽवकल्कने' । निसृज्यते निसर्गः । 'सृज विसर्गे' । स्वभावनामानि ॥ [11]वेपते वेपथुः । 'टुवेपृ कम्पने' । [12]कम्पते कम्पः । 'कपि चलने' । कम्पनामनी ॥ अशुभं क्षणोति हिनस्तीति क्षणः । 'क्षणु हिंसायाम्' । उत्कृष्टः हर्षः उद्धर्षः । महते जनैरिति महः । 'मह पूजायाम्' । उत् उद्धतं हूयन्ते जना अत्रेति उद्धवः । उत् उद्धतं जनान्

सुनतीति उत्सव । 'षू प्रेरणे'। उत्सूते सुखमिति वा। 'षूङ् प्राणिगर्भविमोचने'। उत्सवनामानि ॥ ३७-८ ॥

इत्यमरकोशपदविवृतौ नाट्यवर्ग

[1] त तत $B_1$, Y, अत्यन्तमिन्द्रियाणि श्रान्त्यश्चेति $Pt_2$　[2] नयनानि A, $B_1$, T.　[3] 'मील निमीलने' A, $B_1$, T　[4] °उत्पन्न° $B_2$　[5] कापट्ये $W_2$　[6] °दृष्टि° $D_1$, I　[7] सम्यक् सिद्धि $Pt_2$, सम्यक् सिध्यति $B_3$　[8] गत्या $D_2$, J, $K_1$, $K_2$, U, $Pt_2$　[9] प्रकृष्ट करोतीति $Pt_2$　[10] स्वस्य भाव $Pt_2$　[11] वेपन $Pt_2$　[12] कम्पन $Pt_2$

(पा.) तन्द्री प्रमीला । [1]निद्राभरजनितेन्द्रियविकारनामनी[2] ॥ 'विभज्य नक्त दिवमस्ततन्द्रिणा' (किरा १ ९) इति केचिद्[3] ह्रस्वान्तस्तन्द्रिरिति । 'तन्त्री कर्णामृत कूज तन्द्री सश्रय चक्षुषो' इति केषाञ्चिद्दीर्घान्त । भ्रकुटि —स्त्रियाम्। भ्रूकौटिल्य-नामानि । भ्रुकुटिशब्दो रुवर्णादि ऊवर्णादिश्च भवति[4]। 'भ्रुकुटिर्भ्रूकुटि रित्यपि[5]। भ्रकुटिर्भ्रूकुटि सारी काली तीरतरङ्गिका। रेचित त्वेकया भ्रुवा' इति वैजयन्ती। (पृ. १४३, श्लो ९१-२) एकभ्रुवो भेदो रेचित स्यात् ॥ अदृष्टि — अक्ष्णि । रोषादि-भिनिवृत्तदृष्टि अदृष्टि स्यात् । ससिद्धि—निसर्गश्च । स्वभावनामानि ॥ चशब्दा रूपभावसर्गसमुच्चयार्थो । अथ—कम्प । कम्पनामनी ॥ अथ क्षण—उत्सव. । उत्सव-नामानि ॥ अत्र महशब्दोऽकारान्त । यथा—'स स्वयवरमहाय महेन्द्रान्' इति नैषधे (५ १)। अनुक्तम्—'पूर्णानक पूर्णपात्र वस्त्राद्याकृष्टमुत्सवे'। उत्सवे आकृष्ट-वस्त्रादिनामनी॥ 'उत्सवार्थं तु यत् तूर्यं तत्र स्यात् प्रियवादिका'। उत्सवार्थतूर्यं प्रियवादिका स्यात्। मङ्गलवाद्यनाम ॥ ३७-८ ॥

इति [6]श्रीवत्सनृसिंहसूरिसुतमल्लिनाथसूरिविरचितेऽमरपदपारिजाते नाट्यवर्ग

[1] °इन्द्रियोपरति° $A_1$　[2] $B_1$ adds भाषया 'कुनिकिपाग्गु'　[3] $B_1$ adds मात्रविप्रयोगात्　[4] $B_3$ adds अनुक्तम्—भ्रकुटि सारी काली तीरतरङ्गिका.　[5] रित्यादि° $A_1$　[6] °नरसिंह° $A_1$

## ९. पातालवर्गः

अधोभुवनपातालं बलिसद्म रसातलम् ।
नागलोकोऽथ कुहरं सुषिरं विवरं बिलम् ॥ १ ॥
छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा सुषिः ।
गर्तावटौ भुवि श्वभ्रे सरन्ध्रे सुषिरं त्रिषु ॥ २ ॥

(वि.) अधोभुवनमिति—[1]अधःस्थितं भुवनम् अधोभुवनम् । पतन्त्यस्मिन् पापादिति पातालम् । 'पत्लृ गतौ' । बलेः सद्म बलिसद्म । रसाया भूमेः तलमधोभागः रसातलम् । नागानां लोकः नागलोकः । [2]पातालस्लोकनामानि ॥ प्राण्यादिकं कुत्सितं कृत्वा हरतीति कुहरम् । 'हृञ् हरणे' । तमसा[3] कुहयते[4] विस्मापयतीति वा । 'कुह विस्मापने' । सुष्ठु स्यति [5]गतिमिति सुषिरम् । 'षोऽन्तकर्मणि' । विव्रियते विवरम् । 'वृञ् वरणे' । बिल्यते बिलम् । 'बिल भेदने' । छिद्यते छिद्रम् । 'छिदिर् द्वैधीकरणे' । निर्व्यथन्तेऽस्मात् निर्व्यथनम् । 'व्यथ भयसचलनयोः' । रौति [6]स्वगतप्राणिमुखेन शब्दायत इति रोकम् । रोचते प्रकाशते वा । 'रु शब्दे' 'रुच दीप्तौ अभिप्रीतौ च' । गतिं [7]रन्धयतीति रन्ध्रम् । 'रध हिंसासंराध्योः' । रणति वायुनेति वा । 'रण शब्दे' । शुभं परिहृत्य अभ्रति वर्तत[8] इति श्वभ्रम् । 'अभ्र गतौ' । शोभनमभ्रमाकाशमस्मिन्निति वा । उप्यते [9]क्षिप्यते [10]पर्णादिकमस्यां वपा । 'डुवप् बीजसन्ताने' । प्रमादपतितान् सुष्ठु स्यति सुषिः । 'षोऽन्तकर्मणि' । बिलनामानि ॥ गिरति सर्पादिकमिति गर्तः । 'गॄ निगरणे' । अवति सर्पादिकमित्यवटः[11] । 'अव रक्षणे' । [12]श्वभ्रनामानि ॥ सुषिरमा-स्तीति सुषिरम्[13] । सरन्ध्रवेण्वादिनाम ॥ १–२ ॥

[1] Half folio missing in I [2] नाग° A, B₁ [3] तमसि W₂ [4] °कुहम् आश्चर्यमित्यर्थः । तद् रातीति कुहरं 'रा दाने' B₂ [5] B₂, K₂, omit गतिम् [6] अत्र प्राणीति B₂ [7] A₁ adds हिंसयति [8] वर्धते W₂ [9] निक्षिप्यत I, K₃ [10] तृणादिक Pt₂ [11] अव्यतेऽत्र वातादिति वा B₂, D₁, K₂, K₃, U [12] भूश्वभ्र° B₁, D₁ U, W₁ [13] सुषिरशब्दो रन्ध्रवद्वस्तुवाचकत्वे त्रिलिङ्ग Pt₂

(पा.) अधोभुवन—नागलोक । पातालनामानि ॥ रसेति तलमिति व्यस्तमपि तन्नाम । 'रसातलं तलं नागलोको दैत्यक्षयो रसा' इति वैजयन्ती (पृ. १४८, श्लो १) । अथ कुहर—बिलम् । 'छिद्रे छिद्रान्विते वाद्ये सुषिरं सुषिरो नडः' इति वैजयन्ती-

पाठाद् ( पृ २६४, श्लो ९०) दन्त्यादिरेव सुषिरशब्द । छिद्र—सुषि । 'कलशकुलिश-शुभ्रश्वभ्रकाश्मीरशिल्पम्' इति श्वभ्रशब्दस्य तालव्यादित्वम्[1] । बिलनामानि ॥ गर्तावटौ—श्वभ्रे । श्वभ्रनामनी ॥ सरन्ध्रे—त्रिषु । रन्ध्रवद् द्रव्य सुषिर [2]त्रिलिङ्ग स्यात् ॥ २ ॥

[1] $\lambda_1$ adds ऊष्मभेद　　[2] $B_3$ adds भवति तत्

**अन्धकारोऽस्त्रियां ध्वान्त तमिस्र तिमिर तमः ।**
**ध्वान्ते गाढेऽन्धतमस क्षीणेऽवतमस तमः ॥ ३ ॥**
**विष्वक् सतमसम्**

## इति पातालवर्गः

(नि.) अन्धकार इति—[1]अन्ध करोतीति अन्धकार । 'डुकृञ् करणे' । ध्वनन्त्यत्र [2]मार्गमपश्य त इति ध्वान्तम् । 'ध्वन शब्दे' । तमयति लोक तम । 'तमु ग्लानौ' । तम एव तमिस्रम् । तिम्यत्यनुष्णत्वादिति तिमिरम् । 'तिम आर्द्रीभावे' । तमिस्रशब्द स्त्रीनपुसकयो । अन्धकारनामानि ॥ गाढ तम अन्धतमसम् । अन्धयति जनाना दृष्टिमिति वा [4]अन्धतमसम् । 'अन्ध दृष्ट्युपघाते' । गाढध्वान्तनाम ॥ अवक्षीण तम अवतमसम् । क्षीणध्वान्तनाम ॥ विष्वक् समन्तात् तम सतमसम् । [5]सर्वत स्थित-तमोनाम ॥ ३ ॥

इति पातालवर्ग

[1] अ धत्त् A I $W_1$ तिम्यति क्लमिद्धदयानीति वा $W_1$　　[2] ध्यान \ T　　[3] अनुपलब्धत्वात् \ $B_1$ T,　　[4] अन्ध करोतीत्यन्धम् । अ धं च तत् तमश्च $I_{t2}$　　[5] सर्वत्र° $B_1$ $D_1$

(पा.) अन्धकारो—तम । प्रज्ञादिपाठात् [1]तामिस्रमपि स्यात् । 'स्मररागमया यपुस्तमिस्रा' इति माघप्रयोगात् (शिशु ६ ७०) तमिस्रा च भवति । अन्धकार-नामानि ॥ 'कालिकज्जलभूच्छायतम वा स्यात् तमि स्त्रियाम्' । एतानि च ॥ ध्वान्ते—अन्धतमसम् । अतिसान्द्रतिमिरनाम ॥ शाकटायनवृत्तौ 'यन्युपसर्गस्य च' (२ २ ८८) इति दीर्घविधानसूत्रे [2]अन्धातमसमित्युदाहृतम् । 'तद् धातमस प्रादुर्गाढ तिमिर-

मित्यपि' इति हारावली। क्षीणेऽवतमसम्। अल्प तमोऽवतमस स्यात्। क्षीणतमसो नाम॥ तम—सतमसम्। सर्वत प्रसृततमोनाम॥ अनुक्तम्—'रुपीडोऽस्त्री रुहेलि-स्त्री रुघेटिरपि धूमिका'। धूमिकानामानि[3] ॥ २ ॥

इति पातालवर्ग

[1] तामिस्र B₃ [2] बहुलवचनात् क्वचिदयञ्यप्यनुपसर्गस्यापि दीर्घ। अन्धातमसम्। अन्धतमसम्, पृ २३० [3] $A_1$ adds भाषया 'मोञ्जु पेल्लु'

---

## १०. भोगिवर्गः

नागाः काद्रवेयास्तदीश्वरः।
शेषोऽनन्तो वासुकिस्तु सर्पराजोऽथ गोनसे ॥ १ ॥
तिलित्सः स्यादजगरे शयुर्वाहस इत्युभौ।

(वि.) नागा इति—पद्भ्या नाङ्गन्ति गच्छन्तीति [1]नागा। 'अगि गतौ'। कद्रोरपत्यानि पुमास काद्रवेया[2]। देवयोनिसर्पनामनी॥ शेते हरिरस्मिन्निति शेप। अन्तकालेऽपि शिष्यत इति वा। 'शिप असर्वोपयोगे'। न विद्यतेऽन्तो यस्य स अनन्त। देवयोनिसर्पेश्वरनामनी[3]॥ वसति पाताल इति वासुकि। 'वस निवासे'। वसुकस्यापत्य वा। सर्पाणा राजा सर्पराज। देवयोनिसर्पराजनामनी[4]॥ गोरिव [5]नासा यस्य स गोनस। तिलति स्निह्यतीति तिलित्स[6]। 'तिल स्नेहने'। तिलिङ्ग इति पाठे 'तिल गतौ'। अज [7]मेप गिरतीति अजगर। 'गॄ निगरणे'। अजो नित्यो गरो विप यस्येति वा। शेते अत्यर्थमिति शयु। 'शीङ् स्वप्ने'। वाह [8]गमन स्यतीति वाहस[9]। 'पोऽन्तकर्मणि'। [10]वाहयति प्राणिन आत्मनश नयतीति वा[11]। 'पेनुपालु पेरु'॥ १॥

[1] अगन्ति गच्छन्ति अगा, अगा न भवन्तीति नागा, 'अगि गतौ' $B_2$ [2] तदीश्वरा के? काद्रवेया इम ज्ञेया शेषवासुकितक्षका A [3] शेषादिनामनी $D_1$ [4] वासुकिनामनी $D_1$ [5] नासिका A, $B_1$, T [6] तिलिप्स इति वा पाठ A [7] छाग $Pt_2$ [8] गति $D_1$, $K_3$ [9] $B_2$ adds समापयति [10] वहति $B_1$, T [11] 'वह प्रापणे', अतिस्थूलसर्पनामनी $B_2$, $K_5$, $W_2$

(पा.) नागा । वक्ष्यमाणनाम । काद्रवेयास्तदीश्वरा । तन्नायका काद्रवेया स्यु । शेषवासुकिप्रभृतय [1]कद्रुपुत्रा ।

> 'काद्रवेया इमे ज्ञेया शेषवासुकितक्षका ।
> ऐरावतो महापद्म कम्बलाश्वतरावुभौ ॥
> एलापुत्रश्च गर्गश्च कर्कोटकधनंजयौ ।
> महानीलमहाकण्ठौ धृतराष्ट्रबलाहकौ ॥
> दुर्मुख खररोमा च मणिरित्येवमादय ॥'

इति ॥ शेषोऽनन्त । शेषनामनी । वासुकिस्तु सर्पराज । वासुकिनाम ॥ अथ गोनसे—स्यात् । गोनासशब्दोऽप्यस्ति । 'भवेत् तिलित्सो[2] गोनास ' इति हलायुध (अ मा ३. २०)। भाषया 'मण्डलमुन्नु'। 'चिलिम[3]'। कर्णाटभाषया मण्डलनाम ॥ अजगरे—इत्युभौ । अजगरनामनी । 'पेनुपामु[4]' ॥ १ ॥

[1] कद्रू° B₁ [2] तिलिप्सो A₁, B₁ [3] 'कोडचलव' B₂ [4] '°भाबु B₃

**अलगर्दो जलव्यालः समौ राजिलडुण्डुभौ ॥ २ ॥**
**मालुधानो मातुलाहिर्निर्मुक्तो मुक्तकञ्चुकः ।**

(वि.) अलगर्द इति—अल गिरति भेकानिति अलगर्द । 'गॄ निगरणे'। अरश्चासौ गर्दश्चेत्यरगर्द । रलयोरभेदात्। अलिगर्द इति वा पाठ । अलिनद्रवतीति अलिगर्द । 'गर्द शब्दे'। जले व्याल जलव्याल । जलस्थसर्पनामनी । 'नीरुकट्टुपामुपेरु' ॥ राजिं रेखा लातीति राजिल[1]। 'ला दाने आदाने च'। डुण्डतीति डुण्डुभ । 'डुडि मज्जने'। डुण्डु इति भेकशब्दानुकरेण भाषते वा। निर्विषमुखसर्पनामनी ॥ मालुरोषधि धान स्थानमस्य [2]मालुधान । मातुले धत्तूरे वर्तमानोऽहि [3]मातुलाहि । अवान्तरसर्पभेदनामनी ॥ निर्मुक्त कञ्चुको येन निर्मुक्त[4]। 'मुच्लृ मोक्षणे'। मुक्तकञ्चुकसर्पनाम ॥ २ ॥

[1] राजिभि सपत्नीविभि लायत गृह्यत इति B₂ राजि रेखास्मिन्नस्तीति Pt. [2] मालुभिर्धीयते पोष्यत इति, 'डुधाञ् धारणपोषणयो' Pt₂ [3] मातुल्य नाम ओषधि तस्या स्थित अहि Pt₂ [4] कञ्चुकेन मुक्त Pt₂.

(पा.) अलगर्दो जलव्याल । नीरसर्पनामनी ॥ भाषया 'नीरुकट्टिपामु'। अजगर्द इति क्वचित् पाठ । अलिगर्द इत्येव। अलगर्द इति कर्चिदिति सुभूतिटीकाया

त्रेधा विकल्पित पाठ[1]। समौ—डुण्डुभौ। क्षीराकारनिर्विषद्विमुखसर्पनामनी। 'राजिल [2]क्षीरकश्चाथ' इति वैजयन्ती (पृ १४९, श्लो २०)। मालुधानो मातुलाहि । धत्तूरवृत्तिसर्पनामेति केचित्। 'मुरुटपासु[3]'। 'पोष्यमाणवनविनालमालुधाननकुलकिशाजालिकादिभिरटविकुटुम्बिना गृहैरुदित वनग्राम ददर्श' इति हर्षचरिताभ्युदय । अनुक्तम्—'अहिरिणी तु द्विमुखी'। द्विमुखसर्पनाम। 'रेण्डुतललविषगलपासु'॥ 'सर्पराजस्तु सर्पभुक'। सर्पभक्षकसर्पनाम॥ निर्मुक्तो—कञ्चुक । परित्यक्तकञ्चुकसर्पनाम ॥ २॥

[1] विकल्पितम् $B_3$ [2] क्षिलिक $A_1$ [3] $A_1$ adds 'रक्तवेनुपोडानुन्नु'

**सर्पः पृदाकुर्भुजगो भुजंगोऽहिर्भुजगमः ॥ ३ ॥**
**आशीविषो विषधरश्चक्री व्यालः सरीसृपः ।**
**कुण्डली गूढपाच्चक्षुःश्रवाः काकोदरः फणी ॥ ४ ॥**
**दर्वीकरो दीर्घपृष्ठो दन्दशूको बिलेशयः ।**
**उरगः पन्नगो भोगी जिह्मगः पवनाशनः ॥ ५ ॥**
**(लेलिहानो द्विरसनो गोकर्णः कञ्चुकी तथा ।**
**कुम्भीनसः फणधरो हरिर्भोगधरस्तथा ।**
**अहेः शरीर भोगः स्यादाशीरप्यहिदंष्ट्रिका ॥)**

(वि.) सर्प इति—सर्पतीति सर्प । 'सृप्लृ गतौ'। पर्दत इति पृदाकु । 'पर्द कुत्सिते शब्दे'। आलुग्रहणार्थं कु भुव म्रियते [1]गच्छति वा पृदाकु । परनिपात । 'प्रद व्यायामे'। भुज कुटिल गच्छतीति भुजग । भुजग । भुजगमश्च। 'गम्लृ गतौ'। भुजतीति भुज । 'भुज कौटिल्ये'। भुज सर्पदेह, तेन गच्छतीति वा। अहत इत्यहि । 'अहि गतौ'। आशिषि दंष्ट्रायां विषमस्येति आशीविष । विषस्य धर विषधर [2]। चक्र मण्डलाकारोऽस्यास्तीति चक्री। शिरसि चक्रयोगाद्वा। दृष्ट [3]व्याडवीति व्याल । डलयोरभेदात्। 'अड उद्यमने'। कुटिल सर्पतीति सरीसृप । 'सृप्लृ गतौ'। कुण्डलाकार वपुरस्येति [4]कुण्डली। [5]गूढा पादा यस्य स गूढपात्। चक्षुषी श्रवसी यस्य चक्षु श्रवा[6]। काकस्येवोदर यस्य काकोदर[7]। काको विषविशेष उदरे यस्येति वा। फणोऽस्यास्तीति फणी। दर्वी फणेव करो यस्य दर्वीकर। दर्व्या फणया [8]दृणोति हिंसयतीति वा दर्वीकर[9]। 'कृञ् हिंसायाम्'। दीर्घं पृष्ठमस्येति दीर्घपृष्ठ । कुत्सित दशतीति [10]दन्दशूक । 'दश दशने'। बिल शेत इति बिलेशय । 'शीङ् स्वप्ने'।

उरसा गच्छतीति उरग । 'गम्लृ गतौ'। पद्भ्या न गच्छतीति पन्नग । पन्न पतित यथा तथा गच्छतीति वा। भोग सर्पशरीर। तदस्यास्तीति भोगी। जिह्म कुटिल गच्छतीति जिह्मग । पवनोऽशन यस्य स पवनाशन । सर्पनामानि ॥ ३—५ ॥

[1] ॰याय॰छति $K_3$　[2] $D_1$, I add 'धृ धारणे'　[3] विशेषेण आडति $B_2$
[4] कुण्डल्योगात् A, $B_1$　[5] गूढौ पादौ $W_2$　[6] चक्षुर्भ्या शृणोतीति वा $Pt_2$
[7] का ईषत् अक कुटिलगतिकम् उदरमस्येति वा $Pt_2$　[8] कृणाति, 'कृ हिंसायाम् $K_3$
[9] दर्व्याकारत्वात् फणा दर्वी सैव प्रहरणादौ करोऽस्येति $Pt_2$　[10] दन्तशूक इति वा पाठ । दन्त एव शूक तीक्ष्णकण्टक यस्य $B_2$

(पा.) सर्प —पवनाशन । अनुक्तम्—'कुम्भीनस पुण्डरीका लेलिहानश्च कञ्चुकी। गोनर्णो नाकुलश्चा च' इत्येतानि च। सर्पजातिनामानि ॥

'पड्विंशतिर्मण्डलिनस्तथा [1]दर्विकराभिधा ।
त्रयोदश च राजीला[2] वैरस्ताभिधास्त्रय ।
निर्विपा द्वादशेत्येवमशीति सर्पजातय '॥ ५—६ ॥

[1] दर्वाकर॰ $B_1$　[2] राजावा $A_1$

**त्रिष्वाहेयं विषास्थ्यादि स्फटायां तु फणा द्वयोः ।**
**समौ कञ्चुकनिर्मोकौ क्ष्वेडस्तु गरलं विषम् ॥ ६ ॥**

(वि.) त्रिष्विति—अहौ सप भवम् आहेयम्। विषास्थ्यादिनाम ॥ स्फटतीति स्फटा। 'स्फट विकसने'। स्फुटति विशीर्यतेऽनया आहत इति स्फुटा वा। 'स्फुट विशरणे'। [1]फणत्यनया फणा। 'फण गतौ'। [2]दर्विनामनी ॥ कञ्चुक इव तिष्ठतीति कञ्चुक । कञ्च्यते बध्यत[3] इति कञ्चुक । 'कचि दीप्तिबन्धनयो '। निर्मुच्यत इति निर्मोक । 'मुच्लृ मोक्षणे'। सर्पकञ्चुकनामनी ॥ क्ष्वेडत इति क्ष्वेड । 'ञिक्ष्विदा स्नेहनमोचनयो '। अन्त निगीर्यत इति गरलम्। गिरति जीवमिति वा। 'गॄ निगरणे'। देह वेवेष्टीति विषम्। 'विष्लृ व्याप्तौ'। [4]विषशब्द पुसि क्लीबे वा। विषनामानि ॥ ६ ॥

[1] गच्छति $B_2$　[2] दर्व्याकारफण॰ $B_2$　[3] $B_1$, $Pt_2$ add अनेन　[4] पुसि क्लीब चेत्यस्य पूर्वेण विषशब्देनान्वयात् विषशब्द पुलिङ्गोऽपीति क्वचित् $Pt_2$

(पा.) निपु—विपारथ्यादि । अहेर्विपारथ्यादि आहेयं स्यात् । तच्च त्रिलिङ्गम् । स्फटाया—द्वयो । फणानामनी । 'फटा [1]दर्वि खदेरुश्च' । एतानि त्रीणि च ॥ समौ—निर्मोकौ । सर्पकञ्चुकनामनी ॥ 'सर्पाम्बरो निर्ल्वयनी[2]' । एते द्वे च । क्ष्वेडस्तु—विषम् । विषनामानि ॥ ६ ॥

[1] दर्वी B₁ [2] निर्लयनी A₁

पुंसि क्लीबे च काकोलकालकूटहलाहलाः ।
सौराष्ट्रिकः शौक्लिकेयो ब्रह्मपुत्रः प्रदीपनः ॥ ७ ॥
दारदो वत्सनाभश्च विषभेदा अमी नव ।
विषवैद्यो जाङ्गलिकः व्यालग्राह्यहितुण्डिकः ॥ ८ ॥

## इति भोगिवर्गः

(वि.) पुसीति—काकवत् [1]मेचक काकोल । का ईपत् कोलति सस्त्यायतीति वा । 'कुल सस्त्यान' । कालवर्णस्य कूट [2]कालकूट । काल यममपि कूटयतीति वा । 'कूट परिदाहे' । हलति विलिखति जठर न हलति च [3]हलाहल । 'हल विलेखने' । सुराष्ट्रदेशे भव सौराष्ट्रिक । शुक्लदेशे भव शौक्लिकेय । ब्रह्मण पुत्र ब्रह्मपुत्र[4] । [5]प्रदीपयतीति [6]प्रदीपन । 'दीपी दीप्तौ' । दरददेशे भव दारद । दरदे नागविशेषे भवो वा । वत्सस्येव नाभिरस्य वत्सनाभ । [7]अमूनि विषभेदनामानि ॥ जाङ्गल विषविद्या । जाङ्गुलिर्जाङ्गुली वा । ता वेत्तीति जाङ्गलिक, जाङ्गुलिको वा । [8]विषवैद्यनाम ॥ अहितुण्डेन[9] जीवतीति अहितुण्डिक । [10]व्यालग्राहिपुरुषनाम ॥ ७–८ ॥

इति अमरकोशपदविवृतौ भोगिवर्ग

[1] कृष्णवर्णत्वात् Pt₂ [2] इदम् अहि-ऊरपत्यरीकृष्णक्ष्मरचरपुरादिपृत्तरतः Pt₂ [3] इद हिमवत्पर्वतकिष्किन्धाकोङ्कणदेशदक्षिणसि-न्ध्वादिषु भवति Pt₂ [4] एव रक्तवर्णो मलयाद्रिभव Pt₂ [5] प्रकर्षेण दीपयति B₂ [6] एव रक्तवर्णोऽयमद्रिभव Pt₂ [7] अमी नव विषभेदा, वत्सनाभानि W₂ [8] विषविद्या वेत्ति विषवैद्य Pt₂, [9] अहि-मुखेन B₁ आहितुण्डिको वा W₂ [10] व्याल सर्प गृह्णातीति A

(पा.) पुंसि—नव । काकोलादयो नव विषभेदा । समानसामर्थ्यात् पुंसि क्लीबे चेति विशेषविधि काकोलादिषु त्रिष्वपि । काकोल, काकोलम् । कालकूट,

कालकूटम्। हलाहलः, हलाहलम्। 'हालाहलं विषमिवापगुणं तदेव' इति प्रयोगाद् हालाहलः। हालाहलम्। 'हृदये हालहलं महद्विषम्' इति प्रयोगाद् हालहलमित्यपि। अनुक्तम्—'गरस्तु कृतकं विषम्'। कृत्रिमविषं गरः स्यात्॥ विषवैद्यो जाङ्गुलिकः। गारुडविद्याभिज्ञनामनी। जाङ्गुलि जाङ्गुलं वा वेत्तीति [1]व्युत्पत्तिद्वारेण। जाङ्गुलिर्विषमन्त्रः। जाङ्गुलो विषतन्त्रः॥ व्यालग्राह्यहितुण्डिकः[2]। 'व्यालग्राहोऽहितुण्डिकः' इति रत्नकोशनाममालिके। व्यालग्राहिपुरुषनामनी॥ ७–८॥

इति [3]श्रीवत्सनृसिंहसूरिसुतमल्लिनाथसूरिविरचितेऽमरपदपारिजाते पातालभोगिवर्गः

[1] व्युत्पादन° A₁. [2] आहितुण्डिकः B₃. [3] °नरसिंह° A₁.

---

## ११. नरकवर्गः

स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्।
तद्भेदास्तपनावीचिमहारौरवरौरवाः॥ १॥
संहारः कालसूत्रं चेत्याद्याः सत्त्वास्तु नारकाः।
प्रेता वैतरणी सिन्धुः स्यादलक्ष्मीस्तु निर्ऋतिः॥ २॥

(वि.) स्यान्नारक इति—नारं नरसमूहं कायत्यस्मिन्निति नारकः। [1]नरकश्च। 'कै शब्दे'। निर्गतोऽयः[2] दैवमस्मादिति निरयः। दुष्टा गतिरिति दुर्गतिः। नरकनामानि॥ [3]तप्यन्ते पापिनोऽत्र तपनः। 'तप सन्तापे'। अव्यन्ते रक्ष्यन्तेऽस्माद् अवीचिः। नास्ति वीचिः सुखस्य स्वल्पोऽप्यत्रेति वा। 'अव रक्षणे'। अव्यन्ते खाद्यन्तेऽस्मिन्निति वा। स्त्रीपुंसयोः। रुः दुःखं, तस्य रवोऽत्रेति रौरवः। महांश्चासौ रौरवश्च [4]महारौरवः। संह्रियन्ते पापिनोऽस्मिन्निति संहारः। 'हृञ् हरणे'। संघात इति वा पाठे 'हन हिंसागत्योः'। कालानि अयोमयानि सूत्राण्यस्मिन्निति कालसूत्रम्। [5]एवमादीनि नरकभेदनामानि॥ आद्यशब्देन तामिस्रान्धतामिस्रासिपत्रवनादयः उच्यन्ते। [6]सत्त्वाः प्राणिनः। नरके [7]विद्यमानाः नारकाः। प्रकर्षेण नरकमिताः [8]प्रेताः। 'इण् गतौ'। नरकसंबन्धिप्राणिनाम॥ विगतं तरणं यत्र वितरणम्। वितरणे नरके[9] भवा वैतरणी। विगता तरणिः नौरत्रेति [10]वितरणिः। वितरणिरेव वैतरणी। विगतः तरणिः सूर्योऽत्रेति

वितरणिः पातालः, तस्मिन् भवा वा। नरकसिन्धुनाम ॥ न लक्ष्यते अलक्ष्मीः। 'लक्ष दर्शनाङ्कनयोः'। लक्ष्मीर्न भवतीति वा। [11]ऋतेः सन्मार्गात् निष्क्रान्ता निर्ऋतिः। अभाग्यनामानि ॥ १–२ ॥

[1] नृणाति प्राप्यति पापिनः स्वरूमीषं $Pt_2$ [2] अयः शुभावहो विधिः $Pt_2$ [3] तापयति $Pt_2$ [4] महान् रौद्रः रवः अनेति $Pt_2$ [5] इत्यादिस्वनामप्रसिद्धनरकनामानि $D_2$. [6] $K_3$, $W_2$ add सीदन्तीति. [7] मता: $Pt_2$. [8] क्षुत्पिपासादिभिः भृशं प्राप्ता वा $Pt_2$. [9] नरकलोके $D_2$, I, $K_3$. [10] वितरणेन गोदानादिना तीर्यत इति $Pt_2$. [11] $B_1$ adds नितराम्.

(पा.) स्यान्नारकस्तु—वेत्याद्याः। [1]नरकविशेषनामानि ॥ तपनादिसंघातशब्दान्ताः[2] पुंलिङ्गाः। अवीचिशब्दः केषांचित् स्त्रीलिङ्गः। 'विशेषाः स्युरवीचिः स्त्री महारौरवरौरवौ' इति वैजयन्ती[3] (पृ. १२, श्लो. ३७)। सत्त्वास्तु—प्रेताः। नरकभयजन्तवः प्रेताः स्युः। '[4]नारका जन्तवः प्रेता यात्याश्चैवातिवाहिकाः' इति हलायुधः (अ. मा. ३ ३)। वैतरणी सिन्धुः। नारकशब्दस्यात्रापि सवन्धः। नारकनदी वैतरणी स्यात्। स्यादलक्ष्मीस्तु नैर्ऋती। अलक्ष्मीनामनी ॥ 'निर्ऋतिः कालकण्ठिके' इति रभसः। 'अलक्ष्मीर्निर्ऋतिर्ज्येष्ठा' इति वैजयन्ती (पृ. १२, श्लो. ४२)। अत्र प्रज्ञादिपाठात् नैर्ऋतीति पठितम् ॥ १–२ ॥

[1] $B_3$ adds °दुर्गतिः स्त्रियाम्। नरकसामान्यनामानि. [2] $A_1$ adds सर्वे. [3] मुद्रितपुस्तके तु 'अवीच्यन्ता रौरवाद्याः शायशो नरका नरि' इति दृश्यते. [4] नरके $A_1$, $B_1$.

**चिष्टिराजूः कारणा तु यातना तीव्रवेदना।**
**पीडा बाधा व्यथा दुःखमामनस्यं प्रसूतिजम् ॥ ३ ॥**
**स्यात् कष्टं कृच्छ्रमाभीलं त्रिष्वेषां भेद्यगामि यत्।**

## इति नरकवर्गः

(नि.) विष्टिरिति—विशति नरकमनया विष्टिः। 'विश प्रवेशने'। आजन्तं यया नरकम् [1]आजूः। आ समन्तात् अज्यते या। 'अज गतिक्षेपणयोः'। नरके हठात् प्रक्षेपनामनी ॥ कृणातीति कारणा। 'कॄ हिंसायाम्'। यान्ति [2]नाशमनयेति यातना। 'या प्रापणे'। यातयतीति वा। '[3]यत निराकारोपस्कारयोः'। तीव्रवेदनानाम ॥ पीड्यतेऽनयेति पीडा। 'पीड अवगाहने'। बाध्यते यया बाधा। 'बाधृ

विलोडने'। [4]व्यथ्यन्तेऽनयेति व्यथा। 'व्यथ भयसचलनयो'। दुष्टानि खानीन्द्रियाण्यस्मिन्निति दुःखम्। दुःखसामान्यनामानि ॥ अमनसो [5]भवम् आमनस्यम्। मानसे साधु मानस्य, तन्न भवतीत्यामनस्यम्। [6]प्रसूतेर्जातं प्रसूतिजम्। दुःखविशेषनामानि ॥ [7]कषति हिंसयतीति कष्टम्। 'कष हिंसायाम्'। [8]कृणत्ति वेष्टयतीति कृच्छ्रम्। 'कृती वेष्टने'। आ समन्तात् भियं लातीति आभीलम्। 'ला दाने'। शरीरपीडानामानि[9] ॥ [10]पीडाद्याभीलान्तानि नामानि दुःखवाचकानीति केचित्। त्रिष्वेषा भेद्यगामि यत्। एषां [11]शब्दानां दुःखादीनां मध्ये यद् भेद्यगामि विशेष्यगामि तत् त्रिषु, कष्टा सेवा, कष्टो भृत्यभावः, कष्टं व्याकरणमिति ॥ ३ ॥

इत्यमरकोशपदविवृतौ नरकवर्गः

[1] D₂, K₂ add 'जू गतौ' [2] नाशनम् D₂ [3] 'यती प्रयत्ने' Pt₂.
[4] त्रिद्य-त Pt₂ [5] भाव B₂ [6] K₃, U add आधे [7] कविष्यति W₁.
[8] कृणाति W₁, कृन्तति W₂, Pt₂, 'कृती छेदने' Pt₃ [9] K₅ omits 3 lines.
[10] पानादीनि D K₁ [11] एषां मध्ये यद् द्रव्यगामि तत् त्रिषु B₁, D₁.

(पा.) विष्टिराजू। कर्मनरकनामनी। भाषया 'वेट्टु'। स्त्रीलिङ्गमध्यपाठात् स्त्रीलिङ्गौ। 'त्रिषु कर्मकरे विष्टिस्त्वाजूर्वेतनकर्मसु' इति रुद्रः ॥ कारणा—तीव्रवेदना। अत्यन्तदुःखनामानि ॥ पीडा—दुःखम्। दुःखनामानि ॥ बाधा बाधाधेति चात्र रूपद्वयं समाम्नम्। 'बाधा दुःखनिषेधयो' इति वैजयन्ती (पृ २२२, श्लो २५)। 'आबाधा वेदना दुःखम्' इति हलायुधः (अ मा ३ ४)। अत्रापि दुःख दुष्खमिति रूपद्वयस्य समानता। 'कान्तो नयनानन्दो बाले दुःखेन भवति [1]सदा' इति रुद्रटालंकारे (५ २८) विन्दुन्युतकरूनाद्विसर्गश्रुति। 'पुष्पभूषणविपाणघोषणादुष्यदुष्कृतवरीषु' पुष्करम्' इति ऊष्मभेदपाठात् पकारश्रुति। आमनस्य प्रसूतिजम्। [3]प्रसवसजातदुःखमामनस्यं स्यात्। स्यात् कष्ट—आभीलम्। कष्टनामानि ॥ त्रिष्वेषा—यत्। कष्टादयस्त्रयो यदा भेद्यगामिनस्तदा त्रिलिङ्गा। कष्टा सेवा। कष्टः प्रसवः। कष्टं विषभक्षणम्। [4]अन्यथा नपुंसकलिङ्गा एव। कष्टेनातिक्रान्तो नरकः[5] ॥ ३ ॥

इति [6]श्रीवत्सनृसिंहसूरिसुतमहिनाथसूरिविरचितेऽमरपदपारिजाते नरकवर्गः

[1] 'कान्तो नयनानन्दी बालेन्दुः खे न भवति सदा' इति मुद्रितग्रन्थे [2] °पुरीष° A₁.
[3] B₃ omits सजात [4] भेद्यगामिनो नो चेत् A₁ [5] पन्था B₁ [6] °नरसिंह° A₁

## १२. वारिवर्गः

**समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः ।**
**उदन्वानुदधिः सिन्धुः सरस्वान् सागरोऽर्णवः ॥ १ ॥**
**रत्नाकरो जलनिधिर्यादःपतिरपांपतिः ।**

(वि.) समुद्र इति—[1]सम्यगुनत्ति समुद्रः । 'उन्दी क्लेदने' । समन्तात् मुदं [2]रातीति वा । 'रा दाने' । मुद्रया मर्यादया सहित इति वा । आपो धीयन्ते अत्रेति अब्धिः । 'डुधाञ् धारणपोषणयोः' । मर्यादया कुं भुवं न पृणातीति अकूपारः । 'पृ पालनपूरणयोः' । अकुत्सितं पारमस्येति वा । पारमावृणोतीति पारावारः । 'वृञ् वरणे' । [3]पारमपारमस्य दुस्तरत्वादिति वा पारापारः । सरितां पतिः सरित्पतिः । उदकमस्यस्मिन्निति उदन्वान् । [4]उदकानि धीयन्तेऽस्मिन्निति उदधिः । 'डुधाञ् धारणपोषणयोः' । स्यन्दते जलमत्र सिन्धुः । 'स्यन्दू [5]प्रस्रवणे' । सरांस्यत्र सन्तीति सरस्वान् । [6]सगरपुत्रैः खातः सागरः । अर्णांसि जलानि सन्त्यस्मिन्निति अर्णवः । रत्नानाम् आकरः रत्नाकरः । जलानां निधिः जलनिधिः । जलानि नितरां धीयन्तेऽस्मिन्निति वा । 'डुधाञ् धारणपोषणयोः' । यादसां जलजन्तूनां[7] पतिः यादःपतिः । अपां जलानां पतिः अपांपतिः । अप्पतिर्वा । समुद्रनामानि ॥ १ ॥

[1] Pt₂ adds चन्द्रोदयात् . [2] लाति A. [3] अस्य पारस्य दुस्तरत्वात् B₁. [4] उदकानि यत्र उदकानि, स्थाने कमन्यः B₂ [5] प्रस्रवणे B₂. [6] सगरैः पुत्रैः A, B₁. [7] A, B₁, T omit.

(पा.) [1]समुद्रो—पारावारः । आवारपारकूपारावपि तत्पर्यायौ । 'आवारपारः कूपारो रत्नमीनाभिधाय्यः' इति धनंजयः । सरित्पतिः—अर्णवः । 'अर्णवो सागर' (वा. ५. २. १०९) इति मन्त्रोपः । रत्नाकरो—अपांपतिः । समुद्रनामानि ॥ अनुक्त— [2]ऊर्मिमाली पयोराशिः महीरवान [3]सलिलाकरः । एतानि च ॥ १ ॥

[1] A₁ adds महार्णवं च संग्रहकारमम् । यदा निखनताना दुतान-दन्दाजकम् ॥ अभिनुत्याय्वेवं नदः. [3] सलिलाकरः B₂.

**तस्य प्रभेदाः क्षीरोदो लवणोदस्तथापरे ॥ २ ॥**
**आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम् ।**

**पयः कीलालममृतं जीवनं भुवनं वनम् ॥ ३ ॥**

**कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम् ।**

**अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम् ॥ ४ ॥**

**मेघपुष्पं घनरसस्त्रिषु द्वे आप्यमम्मयम् ।**

(वि.) तस्येति—[1]क्षीरमुदकं यस्य क्षीरोद । [2]लवणमुदक यस्य लवणोद । तथा अपरे। के ते ? दध्युद, घृतोद, सुरोद, इक्षूद, स्वादूद ।समुद्रविशेषनामानि॥ इन्द्रेण आप्यन्ते[3] आप । 'आप्लृ व्याप्तौ'। वहुप्रदेश [4]वृणोतीति वा । वारि च। 'वृञ् वरणे'। वाश्शब्दो रेफान्त स्त्रीलिङ्गश्च पूर्वसाहचर्यात्। सरतीति सलिलम्[5] । 'सृ गतौ'। काम्यते तृषितैरिति कमलम्। 'कमु कान्तौ'। जलति जडीभवतीति जलम्। 'जल [6]घातने'। पयत इति पय । 'पय गतौ'। पीयत इति वा। 'पा पाने'। कीलान् ज्वालान् अलति वारयतीति कीलालम्। 'अल भूषणपर्याप्तिशक्तिवारणेषु'। न म्रियन्तेऽनेनेत्यमृतम्। 'मृङ् प्राणत्यागे'। अनेन न मृतमिति वा । जीवन्ति येनेति जीवनम्। 'जीव प्राणधारणे'। भवति सर्वमस्मादिति भुवनम्। 'भू सत्तायाम्'। वन्यते याच्यत इति वनम्[7]। 'वनु याचने'। क सुख वध्यतेऽत्र कबन्धम्। 'बन्ध बन्धने'। क [8]सुख बध्नातीति वा। कमन्धमिति पाठे कम् अन्धमिति नामद्वयम्। तृषितै काम्यत इति कम्। 'कमु कान्तौ'। अनन्त्यनेनेत्यन्धम्। 'अन प्राणने'। उनत्तीत्युदकम्। 'उन्दी क्लेदने'। पीयते पाथ । 'पीङ् पाने'। पातीति वा। 'पा रक्षणे'। [9]पुष्णातीति पुष्करम्। 'पुष पुष्टौ'। सर्वतो मुख यस्य तत् सर्वतोमुखम्। अमति गच्छतीत्यम्भ । 'अम गत्यादिषु'। मुखम् अम्भते वा अनेनेत्यम्भ । 'अभि शब्दे'। ऋणोतीत्यर्ण । ऋच्छतीति वा। 'ऋ[10] गतौ'। तौतीति तोयम्। 'तु' आवरणार्थे'। तायते पालयतीति वा तोयम्। 'तायृ सन्तानपालनयो'। पीयत इति पानीयम्[11]। पातव्यमिति वा। 'पा पाने'। नीयते नीरम्। 'णीञ् प्रापणे'। क्षीयते क्षीरम्। 'क्षि निवासगत्यो'। 'क्षि क्षये' इति वा धातु । घस्यते वा। 'घस्लृ अदने'। अम्ब्यते मुखमनेन अम्बु। 'अबि रबि लबि शब्दे'। श सुख वृणोतीति शम्बरम्। 'वृञ् वरणे'। सम्बरमिति पाठे सवृणोतीति सवरम्। वबयोरभेद[12]। मेघस्य पुष्प मेघपुष्पम्। घनस्य रसो घनरस । एतानि जलनामानि॥ अपा विकार आप्यम्। अम्मय च। जलविकारनामनी ॥ २४ ॥

[1] क्षीरमिव $Pt_2$ [2] लवणमिव $Pt_2$ [3] आप्नुवन्ति $Pt_2$ [4] अपवारयति निम्नोन्नतमिति $Pt_2$ [5] सलतीति, 'षल गतौ' $Pt_2$ [6] 'जल घने' $Pt_2$ [7] वनतीति

वा, 'वन समक्तौ' $Pt_2$ [8] शरीर $Pt_2$ [9] पोषयति $Pt_2$ [10] ऋशु गतौ, 'ऋ गतिप्रापणयो' $D_2$ I [11] पातु योग्यमिति वा $Pt_2$ [12] $K_1$, $W_2$ add

(पा.) तस्य प्रभेदा—अपरे । क्षीरोद इति[1] क्षीरसमुद्र । 'मन्थोदधिस्तु क्षीराब्धि क्षीरोद कलशोदधि' इति वैजयन्ती (पृ ३६, श्लो. ११) । लवणोद इति क्षारसमुद्र । 'लावणो लवणोद स्यात्' इति वैजयन्ती[2] (पृ ३५, श्लो १०) । अपरशब्देनोच्यमाना दध्युदकघृतोदकमद्योदकेक्षुरसोदकस्वादूदका पञ्च समुद्रभेदा । आप —वा । रेफान्तनपुसक[3] । वारि—घनरसम्[4] । 'घनरसमम्भ क्षीर घृतममृत जीवन वन भुवनम्' इति रत्नकोशपाठात् घनरसशब्द नपुसक । 'वार्त पुसि स्त्रियो भूम्न्यापो घनरस पुमान्' इति वैजयन्तीपाठात् (पृ १५४, श्लो ३) पुलिङ्ग । उदकनामानि ॥ अनुक्तम्—'स्यात् कित्रिम क्षारजलम्' । लवणोदक कित्रिम स्यात् । 'स्वादुतोय तु शीतलम्' । स्वादूदकनाम ॥ त्रिषु—अम्मयम् । अब्विकारनामनी ॥२-४॥

[1] $B_2$ omits [2] $A_1$ adds वण्टोक्तौ क्षीरोदलवणोदौ [3] नपुसक $B_3$, 'वान्त $B_4$ [4] $B_3$ adds 'कुपीट काण्डमक्षी स्याज्जीवनीय कुश विषम्'

भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु ॥ ५ ॥
महत्सूल्लोलकल्लोलौ स्यादावर्तोऽम्भसां भ्रमः ।

(वि.) भङ्ग इति—भज्यते[1] भङ्ग । 'भञ्जो आमर्दने' । तरतीति तरङ्ग । 'तॄ प्लवनतरणयो' । ऊर्वतीति ऊर्मि । 'उर्वी हिंसायाम्' । ऋच्छतीति वा । 'ऋ गतौ' । स्त्रीपुसयो । वेति[2] वृद्धि गच्छतीति वीचि । 'वी गत्यादिषु' । वीचि स्त्रियाम् । तरङ्गनामानि ॥ उत् ऊर्ध्व लोडति[3] उल्लोल । 'लोड्[4] उन्मादे' । कल्लते शब्दायते कल्लोल[5] । 'कल्ल अव्यक्त शब्दे' । कम् ऊर्ध्व लोलतीति कल्लोल । महातरङ्गनामनी ॥ आवर्तते चक्रवद् भ्राम्यतीति[6] आवर्त । 'वृतु वर्तने' । अम्भोभ्रमणनाम ॥ ५ ॥

[1] $Pt_2$ adds स्वयमव [2] वाति, 'वा गतिगन्धनयो' $Pt_2$ [3] लोड्यते $K_1$, $Pt_2$ [4] 'लुड विलोडने' $K_1$, $K_2$ [5] वल्यते जम्भनेन, 'कल क्षिप' $Pt_2$ [6] भ्रमति $D_1$

(पा.) भङ्गस्तरङ्ग—वीचि । तरङ्गनामानि ॥ ऊर्मिरित्युम्भिस्तथौ । वीचिनियत-स्त्री । अथोर्मिषु—कल्लोलौ । महावीचिवाचकोर्मिषु उल्लोलकल्लोलौ स्याताम् ।

'[1]वीचिर्भङ्गस्तरङ्ग स्यात् तन्महत्त्वे च कथ्यते ।
ऊर्मिरुत्कलिकोल्लोल. कल्लोलो लहरी तथा ॥'

इति हलायुधः (अ. मा. ३. ३१) । 'कल्लोललीला मुरवैरिवाहा' इति प्रयोग.[2] चन्द्रकाव्ये । स्यादावर्तो—भ्रमः । अम्भोभ्रमणमावर्त. स्यात ॥ ५ ॥

[1] वीचीति मुद्रितग्रन्थे [2] $A_1$ omits

**पृषन्ति विन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम् ॥ ६ ॥**
**चक्राणि पुटभेदाः स्युर्भ्रमाश्च जलनिर्गमाः ।**

(वि.) प्रपन्तीति—पर्षन्तीति[1] पृषन्ति । 'पृषु [2]सेचनहिंसाक्लेशनेषु'। तकारान्त-नपुसकलिङ्ग । विन्दतीति विन्दु । 'विदि अवयवे'। पर्षन्ति सिञ्चन्तीति पृषता. । विगता प्रुट् दाहोऽस्या विप्रुट्[3] । विन्दुनामानि ॥ चक्राकार एपामस्तीति चक्राणि । चक्राणीति पाठे चङ्कनात्[4] चक्राणि । 'चकि कौटिल्ये गतौ च'। जलशिरोरूप पुट भित्त्वा निर्यान्तीति पुटभेदा.[5] । 'भिदिर् विदारणे'। भ्रमन्ति जलान्येभिरिति भ्रमा. । 'भ्रमु चलने'। जलानि निर्गच्छन्त्येभ्य[6] इति जलनिर्गमा. । 'गम्लृ गतौ'। जलनिर्गम[7]-नामनी ॥ ६ ॥

[1] $Pt_2$ adds सिञ्चन्तीति [2] 'पृष सेचने' A, $B_1$, T, $W_1$, $Pt_2$ [3] विशेषेण प्रोक्षयति विप्रुट्, 'उक्ष सेचने' $B_2$ [4] पङ्कसवन्धात् चक्रीभवन्तीति चक्राणि $B_2$, चकत्वात् चक्राणि $Pt_2$ [5] पुट सश्लिष्ट भिन्दतीति I, $Pt_2$ [6] अस्मिन् A, $B_1$, T, अस्मात् $W_2$ [7] जलपथनाम $D_1$, $K_1$, $K_5$, U, निर्गमस्थान° $W_1$

(पा.) पृषन्ति—विप्रुष स्त्रिय. । जलविन्दुनामानि ॥ बहुत्वमत्राविवक्षितम्[1] । 'विप्रुट् स्त्री पृषतो विन्दु स्तोको द्रप्स. पृषन्न पुम्' इति वैजयन्ती (पृ. २५, श्लो. ८) । [2]चक्राणि पुटभेदा स्यु । वेण्याकारजलकौटिल्यनामनी ॥ भ्रमा—निर्गमा । नीरनिर्गम-नामनी । जलागमनपथनामेति केचित् । 'निहगड्डु' ॥ ६ ॥

[1] $A_1$ adds शब्दस्वभावस्तु [2] चक्राणीति पा. $B_2$

**कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु ॥ ७ ॥**
**पारावारे परार्वाची तीरे पात्रं तदन्तरम् ।**

(वि.) कूलमिति—[1]कूलयतीति कूलम्। 'कूल आवरणे'। रुध्यत इति [2]रोध, रुणद्धि जलमिति वा। 'रुधिर् आवरणे'। सकारान्तनपुंसकलिङ्ग, अकारान्तोऽपि। तरन्त्यस्मादिति तीरम्[3]। 'तॄ प्लवनतरणयो'। [4]प्रतीर च। तटतीति तटम्। 'तट उच्छ्राये'। तीरनामानि ॥ पर चार्वाक् च परार्वाची, ते तीरे पारावारे इत्युच्यते। पार्यते उत्तारणकर्म समाप्यतेऽत्र पारम्। 'पार कर्मसमाप्तौ'। परतीरनाम ॥ न विद्यते वा उदकमत्र कदाचिदपीति अवारम्। अर्वाक्तीरनाम[5]॥ [6]पीयत इति पात्रम्। 'पीङ् पाने'। उभयतीरमध्यप्रवाहस्वरूपनाम ॥ ७ ॥

[1] कूल्यते A, D₁, T कूलति K₅, W₁, Y, Pt₂ [2] ह धे वारीति B₁, K₅ [3] तरन्त्यनेनेति, तीरयति सरित्तरणकर्मात्रेति वा, 'तीर कर्मसमाप्तौ' Pt₂ [4] तीरमेव प्रतीरम् Pt₂. [5] सिकतामयतटनाम K₅ [6] K₅ omits 5 lines, [पिबत्यस्मात्, 'पा पाने' A

(पा.) कूल—तट त्रिषु। त्रिष्विति तटमात्रविशेषणम्। 'कूल तीर प्रपातश्च प्रान्ते कच्छतटी[1] त्रयी' इति वैजयन्ती (पृ. १५६, श्लो ३२)। तीरनामानि ॥ पारावारे—तदन्तरम्। पर तीर पार [2]स्यात्। अर्वाक्तीरमवार स्यात्। तयोर्मध्य पात्र स्यात् ॥ ७ ॥

[1] तट A₁, B₁ [2] B₁ add परतीरनाम

## द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम् ॥ ८ ॥
## तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्।

(वि.) द्वीप इति—[1]वारिणोऽन्त वारिमध्ये यत्तट तस्मिन् द्वीपान्तरीपशब्दौ वर्तते। द्विधा गता आपोऽस्मिन्निति द्वीप। [2]अन्तर्गता आपोऽत्रेति अन्तरीपम्। अन्तरीप चास्त्रिया वर्तते। उदकमध्यस्थतटनामनी[3]॥ [5]तोये क्षीणे सति उत्थित [4]द्वय तत् पुलिनमित्युच्यते। [6]पुलतीति पुलिनम्। 'पुल महत्त्वे'। तोयोत्थितद्वीपनाम ॥ सिकता अत्र सन्तीति [7]सैकतम्। सिकतामयतटनाम ॥ ८ ॥

[1] Pt₂ adds the line [2] द्विरिषा A, B₁, पीयन्त इति वा आप, ता द्विधा अत्रेति द्वीप B₁ [3] अन्तमन्त मध्यमन्तरीप Pt₂ [4] Y omits 'स' [5] Pt₂ adds. [6] पुल महत्त्वमस्यास्तीति Pt₂ [7] Pt₂ adds सिकतामय च

(पा.) द्वीपो—तटम् । द्वीपमस्त्री । अन्तरीप नपुंसकम् । एते द्वे जलमध्यतटनामनी[1] ॥ तोयोत्थित—पुलिनम् । तोयोत्थितद्वीपनाम । सैकत सिकतामयम् । सिकतामयतटनाम । [2] 'यिनुकदिच्च' ॥ ८ ॥

[1] °मध्यगत° $A_1$ [2] 'इनुकदिन्न' $B_3$

**निषद्वरस्तु जम्बालः पङ्कोऽस्त्री शादकर्दमौ ॥ ९ ॥**
**जलोच्छ्वासाः परीवाहाः कूपकास्तु विदारकाः ।**

(वि.) निषद्वर इति—निषीदन्ति वराहादयोऽत्रेति निषद्वर । 'षद्लृ विशरणगत्यवसादनेषु' । निषीदन्त्यस्मिन्निति निषत्, तां वृणोतीति वा । 'वृञ् वरणे' । जमति गतिं भक्षयतीति जम्बाल । 'चमु छमु जमु अदने' । पच्यन्ते[1] गन्तृणा पदान्यत्रेति पङ्क । [2]'पचि व्यक्तीकरणे' । [3]शीयते पादोऽत्र शाद । 'शद्लृ शातने' । कर्दतीति कर्दम । 'कर्द कुत्सिते शब्दे' । कृणोति हिंसयतीति वा । 'कृञ् हिंसायाम्' । पङ्कनामानि ॥ प्रवृद्ध जलमुच्छ्वसितीति यैर्मार्गै ते जलोच्छ्वासा[4] । 'श्वस प्राणने' । परितो जल वहन्तीति परीवाहा[5] । तटाकान्ते प्रवृद्धजलनिर्गमाय कृतमार्गनाम ॥ स्वल्पा कूपा कूपका[6] । विदार्यन्ते[7] विदारका । 'दॄ विदारणे' । शुष्कनद्यादौ[8] जललाभाय क्रियमाणगर्तनाम ॥ ९ ॥

[1] पच्यन्त $A$, $B_1$, $T$, $Pt_2$ [2] 'पचि विस्तारे' $Pt_2$, $I$, $K_2$, $K_3$, $U$, $Y$ add व्यज्यन्त [3] शीयन्ते पादा $B_1$, $T$, शीयेते पादौ $K_2$, $W_1$ [4] जलस्य उच्छ्वासा इव $Pt_2$ [5] $K_1$ adds 'वह प्रापणे' [6] अल्पार्थे कप्रत्यय $B_2$ [7] $B_2$ adds खन्यन्त [8] शुष्कसरस्यादेर्जलार्थं $B_2$

(पा.) निषद्वरस्तु—कर्दमौ । पङ्कनामानि ॥ जलोच्छ्वासा परीवाहा । तटाकान्ते प्रवृद्धजलनिर्गमाय कृतमार्गनामनी । 'चरुवुमरव' । 'पूरोत्पीडे तटाकस्य परिवाह प्रतिक्रिया' इत्युत्तररामचरिते[1] (३ २९) । कूपकास्तु विदारका । शुष्कनद्यादौ [2]जललाभाय क्रियमाणगर्तनामनी । भाषया 'चलमलु' । अनुक्तम्—'अवतारो घट्टस्तीर्थम्' । [3]जलावतरणनामानि । 'निङ्गिरेवु' ॥ ९ ॥

[1] Wrongly attributed to वैजयन्ती in $A_1$, $B_3$ [2] नीर° $A_1$ [3] जलप्रवेशयोग्यदेशनामनी $B_3$

**नाव्यं त्रिलिङ्गं नौतार्ये स्त्रियां नौस्तरणिस्तरिः ॥ १० ॥**
**उडुपं तु प्लवः कोलः स्रोतोऽम्बुसरणं स्वतः ।**

(वि.) नाव्यमिति—नावा तार्य [1]नाव्यम् । नौतार्यजलनाम ॥ नुद्यते इति नौ । 'णुद् प्रेरणे' । नयतीति वा । 'णीञ् प्रापणे' । तरत्यनया नदीं [2]तरणि । तरिश्च । 'तॄ प्लवनतरणयो' । तरणी तरिरिति वा [3]पाठ । नौनामानि ॥ ऊर्ध्वमुप्यते उडुपम् । 'डुवप् बीजतन्तुसंताने' । उडव आप वाभ्यो रक्षति पातीत्युडुपम् । 'पा रक्षणे' । प्लवन्तेऽनेनेति प्लव । '[4]प्लुङ् गतौ जलोपरि सर्पणे च' । कोलति सस्त्यायतीति कोल । 'कुल सस्त्याने बन्धुषु च' । [5]तृणप्लवनामानि ॥ स्वत [6]स्रवतीति स्रोत । 'स्रु गतौ' । अकृत्रिमाम्बुसरणनाम ॥ १० ॥

[1] नौतार्य $K_2$ [2] तार्यतेऽनया नदी तरी च $W_2$ [3] तरणी तरीति $B_1$
[4] 'प्लव गतौ' $W_2$, $Pt_2$ [5] $W_1$ omits तृण , सिन्धुतरणार्थ दारवप्लवनामानि $B$.
[6] सरतीति $B_2$ $W_2$, $Pt_2$, 'सृ गतौ' $Pt_2$, $W_2$

(पा.) नाव्य—नौताय । नावा [1]तर्तुं योग्य नाव्य स्यात् । स्त्रिया—तरि । नावो नामानि ॥ स्त्रियामिति जातिविशेषणम् । इय नौरिय तरणि , इय तरिरियमङ्गिनी ॥ अनुक्तम्—'यानपात्र प्रवहण बोहित्थ च [2]वहित्रकम्' । यानपात्रनामानि ॥ उडुप—कोल । तृणप्लवनामानि । 'तेप्प' ॥ अनुक्तम्—'तरण्डश्चर्मपात्रादि' । जलतरणाय कल्पितवर्तुलचर्मपात्रादिस्तरण्ड स्यात् । 'आरोहोऽसौ तरण्डक' इति वैजयन्ती (पृ १५५, श्लो १६) । स्रोतो—स्वत । स्वतोऽम्बुसरण प्रवाह । तत् स्रोत स्यात् । 'ओघ प्रवाहो वेणी च धारा स्रोतो रय स्मृत' इति हलायुध (अ मा ३ ८५) ॥ १० ॥

[1] तरितु $B_3$, $B_1$ [2] वहित्रवत् $A_2$, $B_1$ [3] $B_2$ omits तृण°

**आतरस्तरपण्यं स्याद् द्रोणी काष्ठाम्बुवाहिनी ॥ ११ ॥**
**सांयात्रिकः पोतवणिक् कर्णधारस्तु नाविकः ।**

(वि.) आतर इति—[1]आतरन्त्यनेनेति आतर । 'तॄ प्लवनतरणयो' । आवाप इति वा पाठ । आ समन्तादुप्यते आवाप । 'डुवप् बीजसंताने' । तरस्य तरणस्य पण्यं मूल्य तरपण्यम् । नदीतरणाय नाविकदेयमूल्यनामनी ॥ द्रवत्यस्या जलमिति द्रोणी । 'द्रु गतौ' । काष्ठपाषाणादिनिर्मिताम्बुवाहिनीनाम ॥ समुदिताना यात्रा सयात्रा द्वीपान्तर गमनम् । सा प्रयोजनमस्य सांयात्रिक[2] । पोते [3]वणिक् पोतवणिक् । वहित्रवणिङ्नाम ॥

कर्णम् अरित्र धारयतीति कर्णधार । 'धृञ् धारणे'। नावा [5]तरतीति नाविक । 'तॄ प्लवनतरणयो'। [6]नौतारयितृनामनी ॥ ११ ॥

[1] आ समन्तात् तरति $B_2$ [2] आ समन्तात् अवाप्यते, 'आप्लृ व्याप्तौ' $B_2$ [3] 'वहित्रमुत्त्वमुपेरु' $K_3$ [4] प्लूयतेऽनेनेति पोत यान, तत्र भव वणिक् पोतवणिक् $B_2$ $Pt_2$ [5] तारयतीति A, $B_2$, T [6] नौतरणकर्तृनामनी $B_2$

(पा.) आतरस्तरपण्य स्यात्। तरपण्य तरणमूल्यम् तदातर स्यात्। द्रोणी काष्ठाम्बुवाहिनी। द्रोणीनामनी ॥ 'दोनि'। काष्ठाम्बुवाहिनीति करिकलभसदृशप्रयोग। 'द्रोणी स्यादम्बुवाहिन्या [1]द्रवभाण्डे गिरिप्लवे' इति वैजयन्ती (प्र २२१, श्लो १८)। सायात्रिक पोतवणिक्। सायात्रिक इति वहित्रव्यवहारिणो नाम। वहित्रमिति पाषाणादि(?)निर्मितयानपात्रविशेष। तरिव्यवहारी' च भवति। '[3]तरीषु तत्रत्यमफल्गुभाण्ड सायात्रिकानावपतोऽभ्यनन्दत्' इति माघप्रयोगात् (शिशु ३ ७६)। कर्णधारस्तु नाविक। तरणितारयितृनामनी ॥ ११ ॥

[1] द्रव्य° $B_3$ [2] व्यवहारिणोऽपि $B_3$ [3] तरिषु $A_1$

**नियामकाः पोतवाहाः कूपको गुणवृक्षकः ॥ १२ ॥**
**नौकादण्डः क्षेपणी स्यादरित्रं केनिपातकः ।**

(वि.) नियामका इति—नियच्छन्ति पोत नियामका। 'यम उपरमे'। पोत [1]वहन्तीति पोतवाहा। 'वह प्रापणे'। पोतवाहनामनी ॥ [2]कूपप्रतिकृतित्वात् कूपक। गुणेन रज्ज्वा बद्धो वृक्ष[3] गुणवृक्षक। [4]पोतमध्यस्थपताकास्तम्भनामनी ॥ नौकाया प्रेरणदण्डो नौकादण्ड। क्षिप्यते नौरनयेति क्षेपणी, क्षेपणिर्वा। 'क्षिप प्रेरणे'। [5]नौप्रेरणदण्डनामनी ॥ ऋच्छति नौरनेनेत्यरित्रम्। 'ऋ गतिप्रापणयो'। के जले नावो निपात्यन्तेऽनेनेति केनिपातक। 'पत्लृ गतौ'। नौप्रवर्तकदर्वीनामनी ॥ १२ ॥

[1] वाहयन्ति $B_1$, $D_1$, I [2] कूपवत्स्वरूपार्थं निर्मितो य स्वविशेष सोऽपि कूप एव, तत्प्रतिकृतित्वात् कूपक साम्ये कप्रत्यय $B_2$ कायतीति कूपक, 'कै शब्दे' $Pt_2$ [3] वृक्षक A, $B_1$ T [4] °पताकाबन्धन° $B_2$ [5] इतस्तत प्रेरण° B

(पा.) नियामका पोतवाहा। वहित्रतारयितृनामनी ॥ कूपको गुणवृक्षक। गुणेन बद्धपोतमध्यगतस्तम्भनामनी ॥ नौकादण्ड क्षेपणी स्यात्। नौकाप्रेरकदण्ड क्षेपणी स्यात्। अरित्र केनिपातक। [1]नौदर्वीनामनी ॥ १२ ॥

[1] °दर्वी° $B_3$

**अभ्रिः स्त्री काष्ठकुद्दालः सेकपात्रं तु सेचनम् ॥ १३ ॥**
**यानपात्रं तु पोतोऽब्धिभवे त्रिषु समुद्रियम् ।**
**क्लीबेऽर्धनावं नावोऽर्धेऽतीतनौकेऽतिनु त्रिषु ॥ १४ ॥**

(वि.) अभ्रिरिति—अभ्रयति पोते लवणादिकं पातयतीति अभ्रि । 'अभ्र गतौ'। काष्ठनिर्मितं कुद्दालं काष्ठकुद्दालं । [1]लवणादिखननकाष्ठकुद्दालनामनी ॥ [2]सेकाय पात्रं सेकपात्रम् । सिच्यतेऽनेन नौकाजलमिति सेचनम् । 'षिच क्षरणे'। पोतरन्ध्रप्रविष्टजलस्य वहिः सेचनाय नियोजितदारुपात्रनामनी ॥ यानाय[3] पात्रं यानपात्रम् । पूयते कालक्रमेणेति पोतः । 'पूयी विशरणे'। वहित्रनामनी ॥ समुद्रे भवं समुद्रियम् । [4]त्रिषु । कथं ? समुद्रिया आपः, समुद्रियं लवणं, [5]समुद्रियस्तरङ्ग इत्यादि । अब्धिभवमुक्तादिनाम[6] ॥ नावोऽर्धम् अर्धनावम् । नावोऽर्धनाम ॥ अतीता नौर्येन अतिनु । नावमतिक्रान्तमिति वा । अतीतनौकजलादिनाम ॥ १३–१४ ॥

[1] दृढदारुनिर्मितखन्धीकरणसाधनविशेषः, कुम् उद्दालयतीति कुद्दालः, 'दल विशरणे' $B_2$
[2] सेकः सेचनं तस्य पात्रं $Pt_2$, सेकाय‌ान्तःस्थजलानां निर्मितं पात्रं $B_2$ [3] $B_2$ adds निर्मितं [4] तत् त्रिषु वर्तते $D_1$ [5] समुद्रियो मुक्तामणिः $Pt_2$ [6] Y adds °वस्तु°

(पा.) अभ्रि—काष्ठकुद्दाल । दारुमयकुद्दालोऽभ्रिः स्यात् । अभ्रिपुरन्ध्रिशौरिशरारितन्द्रिवल्लरिवलिगालिशष्कुलिहलिधूलिसन्द्या[1] ह्रस्वान्ता दीर्घान्ताश्च भवन्तीत्यरुणदत्तलिङ्गानुशासने[2] सम्यक् प्रतिपादितम् ॥ सेकपात्र—सेचनम् । जलसेकयोग्यं सेचनं स्यात् । 'पोतरन्ध्रप्रविष्टजलस्य वहिः सेचनाय निर्मितदारुपात्रनाम' इति वदन्ति । तदसत् । 'चर्मपात्रं तु चोकाणं' इति वामनलिङ्गानुशासनवचनात् । यानपात्र तु पोत । वहित्रनामनी ॥ अब्धिभवे—समुद्रियम् । अब्धौ समुद्रे भवं समुद्रियं स्यात् । तच्च त्रिलिङ्गम् । क्लीबे—अर्ध । नावोऽर्धेऽर्धनावं स्यात् । अर्धनावमर्धनावीति हि स्त्रीनपुंसकयोर्दृश्यत इति शाकटायनः (२. १ १६७) ॥ अतीतनौके—त्रिषु । नावमतिक्रान्तमतिनु स्यात् । 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (१. २. ४७) इति ह्रस्वः[3] । 'स्त्रीपुंसयोस्तु अतिनौः' ॥ १३–१४ ॥

[1] $A_1$ adds °आलि° [2] °शासनकारेण $A_1$ [3] इति ह्रस्वत्वं नपुंसकविषयम् $A_1$.

**त्रिष्वगाधात् प्रसन्नोऽच्छः कलुषोऽनच्छ आविलः ।**
**निम्नं गभीरं गम्भीरमुत्तानं तद्विपर्यये ॥ १५ ॥**

**अगाधमतलस्पर्शे कैवर्ते दाशधीवरौ ।**

(वि.) त्रिष्विति—वक्ष्यमाणागाधपर्यन्ता[1] शब्दा त्रिषु वर्तन्ते। प्रसीदतीति प्रसन्न । 'षद्लृ विशरणगत्यवसादनेषु'। न [2]छाद्यते दृष्टिरित्यच्छ । 'छद अपवारणे'। निर्मलनामनी ॥ क जल लुनातीति कलुषम । 'लूञ् छेदने'। क लुपति हिनस्तीति वा। 'लुप हिंसायम्'। [3]न अच्छ अनच्छ । [4]आविलतीत्याविल । 'विल संवरणे'। अनिर्मलनामानि ॥ खननाय नितरा [5]मनतीति निम्न । 'म्ना अभ्यासे'। [6]गमनेन भिय रातीति गभीर गम्भीर च। 'रा दाने'। गा भुव भियमीरयतीति वा। 'ईर प्रेरणे'। अत्यर्थनिम्ननामानि ॥ उत ऊर्ध्वं तन्यते उत्तानम्। 'तनु विस्तारे'। निम्नविपर्ययनाम॥ न गाधम् अगाधम्। नास्ति गाध प्रतिष्ठा अस्येति वा। 'गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च'। न विद्यते [7]तलस्पर्शोऽस्य अतलस्पर्श । अगाधनामनी ॥ के जले वर्तन्ते इति केवर्ता मत्स्यादय, तेषामय हन्ता कैवर्त । 'वृतु वर्तने'। विक्रयेण मत्स्यान् दाशति[8] दाश । 'दाशृ दाने'। दाश्नोति मत्स्यानिति वा। 'दाशृ हिंसायाम्'। धत्ते मत्स्यानिति धीवर । 'डुधाञ् धारणपोषणयो'। ध्यायति मत्स्यानिति वा। 'ध्यै चिन्तायाम'। जालिकनामानि ॥ १५ ॥

[1] °पर्यन्त I  [2] न छ्यति दृष्टिम् अच्छ, 'छो छेदने' $Pt_2$  [3] अच्छो न मनतीति $B_2$  [4] आ समन्तात् विलतीति (विल्यते $Pt_2$), 'विल छेदने' बवयोरभेद I, Y  [5] म्नायते $W_1$, Y, $Pt_2$  [6] गमने $Pt_2$  [7] अध स्पर्श $Pt_2$  [8] $Pt_2$ adds इति, 'दोऽवखण्डने'

(पा.) त्रिष्वागाधात्। अगाधशब्दावधि ते त्रिलिङ्गा त्रिष्विति पुनर्ग्रहणात्। प्रसन्नोऽच्छ । [1]निर्मलनामनी। 'तेट'। कलुषो—आविल । [2]अनिर्मलनामानि। 'कलुट'। निम्न—गम्भीरम्। अत्यर्थनिम्ननामानि ॥ उत्तान तद्विपर्यये। निम्नविपर्यय-नाम ॥ अगाधमतलस्पर्श । तलस्पर्शविहीननाम ॥ कैवर्त—धीवरौ। जालिकनामानि ॥ 'शाल[3] . दाशपुरीशे'—इत्यूष्मभेदपाठात तालव्य । 'कैवर्तभृत्ययोर्दासो दासी यापा च चेटिका' इति रुद्राभिधानकोशपाठाद् दन्त्य ॥ १५ ॥

[1] नैर्मल्य° $A_1$  [2] अनैर्मल्य° $A_1$  [3] $B_1$ adds दाश इत्यत्र, gap in $A_1$ $B_1$

**आनायः पुंसि जालं स्याच्छणसूत्रं पवित्रकम् ॥ १६ ॥**
**मत्स्यधानी कुवेणी स्याद् बडिशं मत्स्यवेधनम् ।**

(वि.) आनाय इति—आनीयन्ते मत्स्या अनेनेति आनायः। 'णीञ् प्रापणे'। जालवत् गवाक्षवत् तिष्ठतीति जालम्। जले क्षिप्यत इति वा। जालनामनी॥ शणमयं सूत्रं शणसूत्रम्। निमज्जनेन जलं पुनातीति पवित्रकम्। निर्मलत्वेन वा। 'पूञ् पवने'। जालरज्जुनामनी॥ मत्स्या धीयन्तेऽत्रेति [1]मत्स्यधानी। कुत्सितं वेणन्ते मत्स्या अत्र कुवेणी। 'वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु'। मत्स्यकरण्डिकानामनी[2]॥ बलिनो मत्स्यान् श्यतीति बडिशम्[3]। 'शो तनूकरणे'। मत्स्या विध्यन्ते येन तत् मत्स्यवेधनम्। 'व्यध[4] ताडने'। [5]मत्स्यगलग्राहकसामिषवक्रायोमययन्त्रनामनी॥ १६॥

[1] मत्स्याधानी A, B₁, T, 'डुधाञ् धारणपोषणयोः' A. [2] °करण्डक° D₂. [3] वलिशं W₁; डलयोरैक्यात् I. [4] 'विध विधाने' W₁. [5] °वक्राकार° A.

(पा.) आनायः—जालं स्यात्। जालनामनी। 'बल'। शणसूत्रं पवित्रकम्। जालादिरज्जुनामनी। 'सन्नपुत्रादु'। मत्स्यधानी—स्यात्। मीनकरण्डिकानामनी। 'मीनबुद्धि'। बडिशं मत्स्यबन्धनम्। मत्स्यग्राहकायोयन्त्रनामनी। 'गालम्'।

> 'अजानन् दाहात्म्यं पततु शलभस्तीव्रदहने
> स मीनोऽप्यज्ञानाद् बडिशयुतमश्नातु पिशितम्।'

इति भर्तृहरिः (वै. श. १८)।

> '[1]बडिशक्रोडपाटलम्।
> तारकं रसनं नीडमेते टावन्तकाः स्त्रियाम्'॥

इति त्रिकाण्डशेषपाठाद् (पृ. ३८, श्लो. १०४७-८) बडिशेत्यपि स्यात्॥ १६॥

[1] बडिशं तारकं नीडमेते टावन्तकाः स्त्रियाम् A₁, B₃.

**पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः॥ १७॥**
**विसारः शकली चाथ गडकः शकलार्भकः।**

(वि.) पृथुरोमेति—पृथूनि रोमाणि [1]मुखदेशे यस्य सः पृथुरोमा। बालमत्स्यान् [2]झषतीति झषः। 'झष हिंसायाम्'। माद्यति मांसजिघृक्षया मुह्यतीति मत्स्यः। 'मदि[3] हर्षग्लपनयोः'। मीयते धीवरेण मीनः। 'मीञ् हिंसायाम्'। [4]मिनोति क्षिपति जलमिति वा। 'डुमिञ् प्रक्षेपणे'। [5]विसरतीति विसारी। 'सृ गतौ'। विसारी[6] एव वैसारिणः। अण्डाज्जायत इत्यण्डजः। 'जनी प्रादुर्भावे'। विविधं सरतीति विसारः[7]। शकलं

शल्यमस्यास्तीति शकली । शकुलीति वा पाठः । शकुल इति वा । शक्यते ग्रहीतुं शकुलः । 'शक्ल शक्तौ' । मत्स्यनामानि ॥ [8]गर्दति पुच्छाच्छोटनात् गडकः[9] । 'गड सेचने' । [10]शकुलार्भकनाम ॥ १७ ॥

[1] A, B1, T add पक्षा　[2] Pt2 adds हिनस्ति　[3] 'मदि हर्षे' Pt2
[4] मीनाति B1, W2, Y, 'मीञ् हिंसायाम्' I　[5] K5, W2, Y add मांसजिघृक्षया
[6] विसारिण सम्बन्धी A, B1　[7] 'सृ गतौ' I　[8] गण्डति A, T　[9] गण्टक B1, T　[10] शकुलार्भक° A, D1

(पा.) पृथुरोमा—मत्स्य । मच्छोऽप्यत्रेति सुभूतिवचनान्मच्छोऽप्यस्ति । मीनो वैसारिणोऽण्डज । विसार्येव वैसारिण इति [1]व्युत्पत्ति । विसार शकली च । 'शकली शल्की च विज्ञेय' इति हलायुधपाठात् (अ मा ३ ३५) शल्कीत्यपि स्यात्[2] । मीननामानि ॥ 'षडक्षीणोऽप्सुचकम आत्माशी जलपिप्पल[3]' । एतानि च । [4]अथ गडक शकुलार्भक । अधिकपुच्छमीननामनी । भाषया 'कुच्चुलमीनु' ॥ १७ ॥

[1] व्युत्पत्त्या A1　[2] भवति B3　[3] °पिप्पक A1, B3　[4] गण्डोल A1

**सहस्रदंष्ट्रः पाठीन उलूपी शिशुकः समौ ॥ १८ ॥**
**नडमीनश्चिलिचिमः प्रोष्ठी तु शफरी द्वयोः ।**

(नि.) सहस्रदंष्ट्र इति—[1]बहुदंष्ट्रत्वात् सहस्रदंष्ट्र । [2]भक्ष्यतया शास्त्रेषु पठ्यत इति पाठीन । 'पठ व्यक्तायां वाचि' । पाठयति स्वजातीयविरुद्धमिति वा । पाटीन इति पाठे पाटयतीति । 'पट[3] भेदने' । बहुदंष्ट्रमत्स्यनामनी ॥ उत् ऊर्ध्वं लुम्पति भ्रमतीति उलूपी । 'लुप्लृ छेदने' । उ सविस्मयं लुप्यति [4]पङ्कजादिकमिति वा । 'लुप विमोहने' । शिशुरिव[5] शिशुक । शिशुवच्चपलमत्स्यनामनी ॥ [6]नडाख्यतृणे मीन नडमीन । चीयते लीयते चिलिचिम । 'चिञ् चयने' । 'लीङ् श्लेषणे' । तृणसंचारिमत्स्यनामनी ॥ प्रोषति पित्तादिकमिति प्रोष्ठी । 'उष प्लुष दाहे' । शफान्[7] गतिसाधनान्यवान् रिणाति पीडयतीति शफरी । 'री गतिरेषणयो' । [8]पित्तघ्नमत्स्यनामनी ॥ १८ ॥

[1] सहस्र दंष्ट्रा यस्य Pt2　[2] भक्षतया W1　[3] 'पट ग्रथने' D2　[4] पङ्कादिक B2, 'लुप लोपे' A, B1, T　[5] शिशुवत् गच्छतीति B1　[6] नलाख्ये तृणे वर्तते मीन. B1, ɣ　[7] शफ पित्तविकार. B2　[8] पित्तरुग्मीननाम W2, उत्प्लवनशीलमत्स्यनाम ɣ

(पा.) सहस्रदंष्ट्रः पाठीनः । बहुदंष्ट्रमीननामनी । 'वेडिशमीनु' । उलूपी—समौ । शिशुवच्चपलमत्स्यनामनी । 'ससियलु' ॥ नडमीनश्चिलिचिमः । वृश्चिकाकारमत्स्यनामनी । 'तेलुमीनु' । प्रोष्ठी—द्वयोः । पिच्चटमीननामनी[1] ॥ १८ ॥

[1] °मत्स्य° $B_3$

**क्षुद्राण्डमत्स्यसंघातः पोताधानमथो झषाः ॥ १९ ॥**
**रोहितो मद्गुरः शालो राजीवः शकुलस्तिमिः ।**
**तिमिंगिलादयश्चाथ यादांसि जलजन्तवः ॥ २० ॥**

(वि.) क्षुद्रेति—क्षुद्राणामपरिमितपरिमाणानां मत्स्यानामण्डाज्जाता, तेषां मत्स्यानां सघातः क्षुद्राण्डमत्स्यसघातः । पोता मत्स्यपोता आधीयन्तेऽस्मिन्निति पोताधानम् । 'डुधाञ् धारणपोषणयोः' । मत्स्यपोतसमूहनामनी ॥ [1]रोहितवर्णत्वात् रोहितः । [2]जले मज्जतीति मद्गुरः । 'टुमस्जो शुद्धौ' । शलति शीघ्रं गच्छतीति शालः । 'शल चल आशुगमने' । राज्य.[3] रेखा अस्य सन्तीति राजीवः । शक्नोति गन्तुं शकुलः । 'शक्लृ शक्तौ' । [4]तिम्यतीति तिमिः । 'तिम आर्द्रीभावे' । तिमि गिलतीति तिमिंगिलः । 'गॄ निगरणे' । एवमादीनि [5]झषभेदनामानि ॥ यान्तीति यादांसि । 'या प्रापणे' । यतन्ते हन्तुं मत्स्यानिति वा । 'यती प्रयत्ने' । जले विद्यमाना जन्तवः जलजन्तवः । क्रूरजलजन्तुनाम ॥ १९–२० ॥

[1] रक्तत्वात् A, $B_1$, T. [2] $B_1$, T omit, 'मस्ज मज्जने' A, T, $W_1$ [3] राजयः I. [4] $B_2$ adds आर्द्रीक्रियते. [5] जलजन्तुनामानि $K_3$, एते सप्त प्रत्येकं मत्स्यभेदाः । आदिशब्देन तिमिंगिलादयोऽपि । यतन्ते बालमत्स्यान् हन्तुं यत्न (प्रयत्नं U) कुर्वन्तीति वा यादांसि । 'यती प्रयत्ने' $W_1$.

(पा.) क्षुद्राण्ड—पोताधानम् । मत्स्यसमूहनामानि ॥ अथो झषः—तिमिंगिलादयश्च । 'मकरो मत्स्यवद् झषः' इति वैजयन्ती (पृ. १५२, श्लो. ५१) । [1]झषादयः पृथक्पृथक्मत्स्याः । अथ यादांसि जलजन्तवः । क्रूरजलजन्तवो यादांसीत्युच्यन्ते । 'अन्तर्जलचरं [2]सत्त्वं क्रूरं यादोऽभिधीयते' इति हलायुधः (अ. मा. ३. ३४) ॥१९-२०॥

[1] मकरादयः $A_1$. [2] सर्वं $A_1$.

**तद्भेदाः शिशुमारोद्रशङ्कवो मकरादयः ।**
**स्यात् कुलीरः कर्कटकः कूर्मे कमठकच्छपौ ॥ २१ ॥**

(वि.) तद्भेदा इति—शिशून् मारयतीति शिशुमारः । 'मृङ् प्राणत्यागे' । मायां उनत्तीत्युद्रः । 'उन्दी क्लेदने' । शङ्कतेऽस्मात् लोक शङ्कुः । 'शकि शङ्कायाम्' । मायां करोतीति मकरः । 'डुकृञ् करणे' । प्राणिकवलने मुखं किरतीति वा । 'कॄ विक्षेपे' । आदिशब्देन जलहस्तिग्राहादयः । [1]एवमादीनि यादोभेदनामानि ॥ कौ भूमौ लीयत इति कुलीरः । 'लीङ् श्लेषणे' । [2]कुली. [3]परलोकाय ईरयतीति वा । 'ईर् प्रेरणे' । कृणाति जननीं कर्कटकः । 'कृ हिंसायाम्' । कर्कटनामनी ॥ कुत्सितः ऊर्मिः वेगोऽस्य कूर्मः । कं जलम् ऊर्वति प्राणिभक्षणायेति वा । 'उर्वी हिंसायाम्' । के जले मठतीति कमठः । 'मठ मदनिवासयोः' । यज्ञार्थं काम्यत इति वा । 'कमु कान्तौ' । कच्छेन पुच्छेन पिबतीति कच्छपः । 'पा पाने' । कच्छमनूपदेशं पाति क्षुद्रजन्तुभक्षणेनेति वा । 'पा रक्षणे' । कूर्मनामानि ॥ २१ ॥

[1] मकरादीनि $W_1$     [2] $W_1$ adds मातृ.     [3] कुवर्तनाय $D_2$, केवर्तनाय $K_1$

(पा.) तद्भेदा.—मकरादयः ।

'शङ्कुः कच्छपसस्थानः शिशुमारोऽम्बुमर्कटः ।
उद्रः स्याज्जलमार्जार आलभ्यश्चाम्बुसूकर ॥'

शिशुमारादयश्च पूर्वोक्तमकरादयश्च यादोभेदा । स्यात्—कर्कटकः । कुलीरनामनी । आन्ध्रभाषया '[1]यंद्रिकाय' । 'पृष्ठचक्षुर्द्विधागतिः' । एते द्वे च । कूर्मे—कच्छपौ । कूर्मनामानि । 'पञ्चगूढश्चतुर्गतिः' । एते द्वे च ॥ २१ ॥

[1] 'यद्रिपीत' $B_2$

**ग्राहोऽवहारो नक्रस्तु कुम्भीरोऽथ महीलता ।**
**गण्डूपदः किंचुलको निहाका गोधिका समे ॥ २२ ॥**
**रक्तपा तु जलूकायां स्त्रियां भूम्नि जलौकसः ।**

(वि.) ग्राह इति—गृह्णाति न मुञ्चति प्राणिन इति ग्राहः । 'ग्रह उपादाने' । अवहरतीत्यवहारः । 'हृञ् हरणे' । अवराह इति वा पाठः । तत्पक्षे [1]अवरहयति

स्थलभूमिमिति अवराह । 'रह त्यागे' । [2]तुरङ्गमास्यमत्स्यनामनी ॥ न क्रामति अतिदूरमिति नक्र[3] । 'क्रमु पादविक्षेपे' । कुम्भिनो गजानीरयतीति कुम्भीर । 'ईर क्षेपे' । [4]गजादिकर्षनक्रनामनी ॥ मह्या लतेव तिष्ठतीति [5]महीलता । गण्डू[6] शरीरग्रन्थय, त एव [7]पदान्यस्य गण्डूपद । [8]मृदादि किंचित् लुञ्चित्वा [9]चुलति अपनयतीति किंचुलुक । '[10]चुल सवरणे समुच्छ्राये च' । लताकारपाटलवणक्रमिनामानि[11] ॥ निजहाति [12]जल निहाका । 'ओहाक् त्यागे' । गुध्यतीति गोधिका । 'गुध परिवेष्टने' । [13]जलचरप्राणिविशेषनामनी ॥ रक्त पिबतीति रक्तपा[14] । 'पा पाने' । जलम् ओक स्थान यस्या [15]जलूका । जलौकसश्च । जलूकानामानि ॥ २२ ॥

[1] अपरहयतीति अपराह $D_2$ $K_5$ U [2] तुरङ्गमाकर्षणमत्स्य° $B_1$ U [3] न कम्यते B T [4] गजाकर्षक्रम स्य° $B_1$ $D_1$ $K_5$ $W_2$ [5] महीं लुनातीति वा । 'लूञ् छेदने A $B_1$ T [6] गण्डव $B_1$ T [7] पादा Y [8] मृद $W_1$ [9] चोलयति $D_1$ $W_2$ [10] 'चुल अपनयने $K_2$ U $W_1$ [11] 'यरलु' $K_5$ [12] स्थल $Pt_2$ बल A $B_1$ $W_1$ [13] जलचरगोधिका° Y [14] रक्तपो वा I [15] $B_1$ $W_2$ add जलौका जलम् ओका येषा ते जलौकस

(पा.) ग्राहोऽवहार[1] । घोटकमुखमीननामनी इति वदन्ति । तदसत् । उदकचर मण्डलिसर्पनामनी । 'तन्तुनागस्तथा तन्तुर्नागो वरुणपाशक' । [2]एतानि च ॥ नक्रस्तु कुम्भीर । नक्रनामनी । 'मोसलि' । गजाकर्षणमत्स्यनामनी इति केचित् । तदज्ञान विजृम्भितम् । 'गोमुखस्तालुजिह्वश्च' । एते द्वे[3] च ॥ अथ महीलता—किंचुलुक । लताकारपाटलवर्णक्रमिनामानि । 'यटलु' । निहाका—समे । गोधिकानामनी । 'नीरुडुसु' । रक्तपा तु—जलौकस । जलूकानामानि । 'जलौक स्याज्जलूकायां जलौका जलजन्तुके' । इति तारपालवचनात् जलौकापि स्यात् । 'जळ्ग' ॥ २२ ॥

[1] अवराह $A_1$ [2] $A_1$ adds चत्वारि [3] $B_2$ omits द्वे

**मुक्तास्फोटः स्त्रियां शुक्तिः शङ्खः स्यात् कम्बुरस्त्रियौ ॥२३॥**
**क्षुद्रशङ्खाः शङ्खनखाः शम्बूका जलशुक्तयः ।**

(टि.) मुक्तास्फोट इति—मुक्ता [1]स्फुटन्ति यत मुक्तास्फोट । 'स्फुट विकसने' । मुक्ता यत शोचन्तीति शुक्ति । 'शुच गतौ' । शुक्तिनामनी ॥ [3]शं सुख खनति जनयतीति शङ्ख । 'खनु [4]अवदारणे' । [5]शमयति दुःख जनानामिति वा ।

'शमु उपशमे[6]'। काम्यते [7]मङ्गलार्थिनेति कम्बु । 'कमु कान्तौ'। शङ्खनामनी ॥ क्षुद्राश्च ते शङ्खाश्च क्षुद्रशङ्खा । शङ्खा नखा इव शङ्खनखा । शङ्खवन्न विद्यते खम् [8]अवकाशोऽस्येति वा । [9]नद्यादौ विद्यमानक्षुद्रशङ्खनामनी ॥ श[10] वान्तीति शम्बूका । 'वा गतिगन्धनयो'। शाम्यति दुःखमिति वा । जले विद्यमाना शुक्तय जलशुक्तय । जलशुक्तिनामनी ॥ २३ ॥

[1] स्फोटयन्ति $B_1$, T [2] असात् $Pt_2$ [3] $W_1$ omits two lines [4] $K_2$ adds जननार्थे च [5] शाम्यनि I, $Pt_2$ [6] परनिपात Y [7] शुमार्थिभिरिति $Pt_2$ [8] आगाश $D_2$ Y [9] समुद्रादौ Y सिन्ध्वादौ $B_1$ [10] श सुख $B_1$, $D_1$, $W_2$

(पा.) मुक्तास्फोट —शुक्ति । शुक्तिनामनी ॥ शङ्ख —अस्त्रियाम् । शङ्खनामनी । अस्त्रीशब्द उभयविशेषणम् । 'शङ्खो निधौ ललाटास्थि कम्बौ न स्त्री' इति [1]नानार्थशास्त्रे (३ ३ १८) स्वयमेव वक्ष्यति । अनुक्तम्—'शम्फा' तु शङ्खनिस्वान'। शङ्खध्वनि शम्फा स्यात् । 'शङ्खपात्र तु [3]पाटली'। शङ्खपात्र पाटली स्यात् । क्षुद्रशङ्खा —जलशुक्तय । जलशुक्तिनामानि । 'नक्तगुह्लु'। शम्बूकशब्द शङ्खशब्दसाहचर्यात् पुलिङ्ग । 'शम्बूक' शम्बुको ज्ञेय शाम्बूकोऽपि च पण्डित' इति तारपाल । जलशुक्तिसाहचर्यात् स्त्रीलिङ्गोऽपि ।

'सिन्धोरुर्वै पवनवलनादुच्छलद्भिस्तरङ्गै
स्तीर नीतो हतविधिवशाद् दक्षिणावर्तशङ्ख ।
दग्ध किं वा भवति मनसीवेति सदह्निनीभि
शम्बूकाभि सह परिचयान्नीयते पामरीभि ॥'[4]

इति ॥ २३ ॥

[1] नानार्थेषु $B_3$ [2] शम्भा $A_1$ [3] पाटलि $A_1$ [4] सुभाषितरत्नकोशे ११९८

## भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः ॥ २४ ॥
## शिली गण्डूपदी भेकी वर्षाभ्वी कमठी डुलिः ।

(वि.) भेक इति—बिभेति [1]सर्पात् भेक । 'ञिभी भये'। मण्डति शोभते तटादावी मण्डूक । 'मडि भूषायाम्[3]'। वर्षासु भवतीति वर्षाभू । 'भू सत्तायाम्'। शलति [4]उत्प्लुत्य गच्छतीति शालूर । 'शल गतौ'। प्लवत प्लव । 'प्लुङ् गतौ जलोपरि सर्पण च'। [5]शब्दै कर्णौ दृणातीति दर्दुर । 'दॄ विदारणे'। भेकनामानि ॥ शिनोति श्यतीति वा शिली[6]। 'शिञ् निशाने'। 'शो तनूकरणे'। शिलति मृदमिति वा ।

'शिल उञ्छे'। गण्डूपदस्य स्त्री गण्डूपदी। भेकस्य स्त्री भेकी। वर्षाभ्वाः स्त्री वर्षाभ्वी। कमठस्य स्त्री कमठी। [8]डोलयति जलमिति डुलिः। 'डुल उत्क्षेपणे'। कमठजातिस्त्रीनामनी ॥ २४ ॥

[1] सर्वस्मात् $B_2$. [2] A, $B_1$, T add किङ्किणीजालवत्. [3] व्याली च $K_1$, $K_2$. [4] प्लवैः $B_2$, $D_1$, $K_5$, $W_3$, प्लवनैः U. [5] शब्देन कर्णान् Y. [6] शिलतीति शिली, 'शिल गतौ' $Pt_2$. [7] मृदुरिति I; मृदयति $K_5$; मृदं भक्षयति $W_1$. [8] डोलति, 'डुल उपतापे' 'डुल चलने' वा धातुः $B_2$.

(पा.) भेके—दर्दुराः। मण्डूकनामानि। 'स्यात् केन्दुकः प्रावृषिजः स्त्री तु कूपेपिशाचिका'। [1]एते च। शिली गण्डूपदी। गण्डूपदस्त्रीनामनी ॥ भेकी वर्षाभ्वी। भेकस्त्रीनामनी। 'वर्षाभ्वश्च' इति यणादेशः। 'दृन्पुनःकरवर्षाभिर्भुवः' इति शाकटायनशास्त्रे (१. २. ३९) करभूशब्दस्यापि यणादेशः॥ कमठी डुलिः। कमठस्त्रीनामनी ॥ २४ ॥

[1] एतानि त्रीणि च $B_3$.

## मद्गुरस्य प्रिया शृङ्गी दुर्नामा दीर्घकोशिका ॥ २५ ॥
## जलाशयो जलाधारस्तत्रागाधजलो ह्रदः।

(वि.) मद्गुरस्येति—शृणातीति शृङ्गी। 'शॄ हिंसायाम्'। [1]मद्गुरमत्स्यभार्यानाम ॥ दुष्टं [2]नाम यस्या दुर्नामा। 'णमु प्रह्वत्वे शब्दे च'। आकारान्तः। दीर्घकोशतुल्याकारत्वात् दीर्घकोशिका। [3]हस्तिजलूकानामनी॥ जलमाशेतेऽत्र जलाशयः। 'शीङ् स्वप्ने'। जलस्याधारो जलाधारः। साधारणजलस्थाननामनी ॥ कल्लोलैरव्यक्तं ह्रादतेऽत्रेति [4]ह्रदः। 'ह्राद अव्यक्ते शब्दे'। अगाधं जलं यत्र सः अगाधजलः। [5]अगाधजलाशयनाम ॥ २५ ॥

[1] $Pt_2$ adds जलान्तर्मकरस्य. [2] $W_1$, $W_2$ add नमन. [3] A adds नकाकार°. [4] ह्रियतेऽत्र ह्रदः, 'ह्नन् हरणे' $B_2$. [5] अगाधजल° $K_5$

(पा.) मद्गुरस्य—शृङ्गी। मद्गुरस्य स्त्री शृङ्गी स्यात्। सर्पशफरीनाम। 'पामुमीनु'। 'शृङ्गी तु सर्पशफरी' इति वैजयन्ती (पृ. १५१, श्लो. ४४)॥ दुर्नामा दीर्घकोशिका। गजजलूकानामनी। 'गेरुनिप्प'। सुभूतिटीकायामस्य डीप्डाप्प्रतिषेधाभ्यां त्रैरूप्यं [1]दर्शितं दुर्नाम्नी दुर्नामा दुर्नामानमिति ॥ जलाशयो जलाधारः। साधा-

रणजलस्थाननामनी ॥ तत्र—ह्रद । [2]तत्रागाधजलो जलाशयो ह्रद स्यात् । 'द्रह-संस्कृतेऽपि' इति त्रैविक्रमवचनाद् द्रहोऽपि ह्रदनाम ॥ २५ ॥

[1] शब्दिनाम् A₁ [2] तनु B₃

**आहावस्तु निपानं स्यादुपकूपजलाशये ॥ २६ ॥**
**पुंस्येवान्धुः प्रहिः कूप उदपान तु पुंसि वा ।**

(वि.) आहाव इति—आहूयन्ते [1]गावोऽत्र आहाव । 'ह्वेञ् स्पर्धायां शब्दे च' । [2]नियत पिबन्ति जल पशवोऽत्रेति निपानम् । 'पा पाने' । [3]कूपसमीपबद्धशिलामय-जलद्रोणिनामनी[4] ॥ अनन्ति जना अनेनेत्यन्धु । 'अन प्राणने' । प्रजहाति[5] जलमिति प्रहि । 'ओहाक् त्यागे' । प्रह्रियते जलमस्मादिति वा । 'हृञ् हरणे' । कुत्सिता[6] आपोऽत्र [7]सन्तीति कूप । [8]उदक पीयतेऽत्र उदपानम्[9] । कूपनामानि ॥ २६ ॥

[1] पद्मार Pt₂ आहूयन्तेऽस्मिन् आप इति, 'हु दानादानयो' B₁, T [2] नितरां B₂ [3] °शिलादिमय° W₁ [4] °प्रणाली° B₁ [5] B₁ adds अजस्र ददाति W₁ [6] कोर्वा Pt₂, B₂ adds उद्धरणीकृता [7] तिष्ठन्ति D₂ I, K₂ [8] उदानि पीयन्ते A [9] W₁ adds 'पा पाने'

(पा.) आहावस्तु—जलाशये । पशुपानार्थं [1]शिलादार्वादिकृतकूपसमीपस्थ[2]-जलाशये आहावनिपानशब्दौ स्याताम् । पुंस्येव—पुंसि वा । कूपनामानि ॥ अन्धुप्रभृत-यस्त्रय पुलिङ्गा । उदपानशब्द एक एव विकल्पितपुलिङ्ग ॥ २६ ॥

[1] ° दारुमया A₁ [2] B₃ omits °स्थ°

**नेमिस्त्रिकास्य पीनाहो मुखबन्धनमस्य यत् ॥ २७ ॥**
**पुष्करिण्यां तु खातं स्यादखातं देवखातकम् ।**

(नि.) नेमिरिति—नीयते [1]जलघटोऽनेनेति नेमि । 'णीञ् प्रापणे' । त्रयाणा दारूणा समूह[2] त्रिका । त्रयोऽवयवा अस्या इति वा । अगाधकूपात् जलाकर्षार्थं[3] यूपोपरिनिर्मितत्रिदारुयन्त्रनामनी[4] ॥ पिनह्यत इष्टकाभिरिति पीनाह । 'णह बन्धने' । पीनाह[5] इति वा पाठ । तथापि णह[6] एव धातु । कूपमुखे इष्टकादिभिर्बन्धन नाम ॥ 'पुष्करमुदकम् अस्त्यस्यामिति पुष्करिणी । खन्यत इति खातम् । 'खनु

अवदारणे'। कृत्रिमजलाशयनामनी ॥ न खन्यत इत्यखातम्। देवैः खन्यत इति देवखातकम्। अकृत्रिमजलाशयनामनी ॥ २७ ॥

[1] $B_1$, T add जलान्तिक, जलसमीप $B_2$ [2] समाहार $B_1$ $D_1$ [3] °आवर्पणार्थ $D_2$ I $K_5$ U [4] °दारुत्रय° Y [5] दृष्टिकादार्वादिभिर्विशेषेण नह्यत $B_2$ [6] स एव $K_3$ [7] पुष्कराणि $B_2$

(पा.) नेमिस्त्रिकास्य। कूपस्य नेमिस्त्रिका स्यात्। 'त्रिका कूपस्य नेमी स्त्री पृष्ठवंशाधरे त्रिकम्' इति रभसकोशे। [1]वंशत्रयेण रज्जुधारणार्थं [2]कूपोपरिकल्पिततोरण यन्त्रनामनी। 'गिरक'॥ पीनाहो—यत्। शिलादिकल्पितकूपमुखबन्धननाम। 'वावियो नरिकट्टु'॥ पुष्करिण्या—स्यात्। कृत्रिमजलाशयनाम॥ अखात देवखातक। 'अखातो देवखातके' इति पुरकाण्डे अमरदत्त। देवनिर्मितजलाशयनाम॥ 'दोने'॥ २७॥

[1] वंश° $A_1$ [2] $A_1$ omits कूपोपरि° [3] °दाह° $A_1$

**पद्माकरस्तटाकोऽस्त्री कासारः सरसी सरः ॥ २८ ॥**
**वेशन्तः पल्वलं चाल्पसरो वापी तु दीर्घिका ।**

(वि.) पद्माकर इति—पद्मानामाकरः पद्माकरः। तटानि अकति कुटिलं यथा भवति तथा प्राप्नोतीति तटाकः। 'अक अग कुटिलायां गतौ'। प्रवाहेण तटानि ताडयतीति वा तडागः। 'तड आघाते'। पद्माकरनामनी॥ कम् उदकमासरत्यत्रेति [1]कासारः। 'सृ गतौ'। नड्वलाम्बुत्वात् [2]कासनं कुत्सनमियर्तीति वा। 'ऋ गतौ'। कासत इति वा। 'कासृ शब्दे'। सरति प्रवहतीति [3]सरसी। सरश्च। सान्तोऽयम्। 'सृ गतौ'। नद्वलवर्तिमहाजलाशयनामानि॥ विशन्ति महिषादयोऽस्मिन्निति वेशन्तः। 'विश प्रवेशने'। पलन्ति[4] महिषादयोऽत्रेति पल्वलम्। 'पल गतौ'। अल्पं च तत् सरश्च अल्पसरः। अल्पसरोनामानि॥ उप्यते पद्मादिकमस्यामिति [5]वापी। 'डुवपू [6]बीजतन्तुसताने'। दीर्घैव[7] दीर्घिका। दीर्घचतुरश्रतया खातजलाशयनामनी॥ २८॥

[1] कुत्सितमासरतीति वा $B_2$ [2] कास A [3] स्त्रीलिङ्ग $B_2$ [4] $K_1$ adds गच्छन्ति [5] वारि यस्यतेऽत्र वापी पा पाने $W_1$ [6] $Pt_2$ A $B_1$ T omit त तु° [7] दैर्घ्यात् $D_2$ दीर्घैव $W_2$

(पा.) पद्माकर—अस्त्री। तडाग इति क्वचित् पाठः। 'पथि पथिकव्रजा दत्तरागस्तडागः' इति धर्मशर्माभ्युदये[1]॥ कासार—सरः। सरोनामनी। पद्माकर

शब्दो[2] रूढो यौगिकश्च[3]। तेन[4] पद्मशून्यमपि सरः पद्माकरः स्यात्॥ वेशन्तः—चाल्पसरः। अल्पसरोनामानि॥ वापी—दीर्घिका। दीर्घचतुरश्रतया निखातजलाशयनामनी। 'केल्याकूलि'॥ २८॥

[1] °भ्युदये $B_3$　[2] $A_1$, $B_1$ add गन्धादिशब्दवत्.　[3] $A_1$, $B_1$ add भवति.
[4] तस्मात् $A_1$.

खेयं तु परिखाधारस्त्वम्भसां यत्र धारणम्॥ २९॥
स्यादालवालमावालमावापोऽथ नदी सरित्।
तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी॥ ३०॥
स्रोतस्विनी द्वीपवती स्रवन्ती निम्नगापगा।
(कूलंकषा निर्झरिणी रोधोवक्रा सरस्वती)

(वि.) खेयमिति—खन्यत इति खेयम्। 'खनु अवदारणे'। परितः खन्यत इति परिखा। दुर्गवेष्टनखनिकानामनी॥ [1]आध्रियन्त [2]आपोऽत्र आधारः। 'धृञ् धारणे'। [3]अम्भोधारणगर्तनाम॥ आलूयते खन्यतेऽत्रेति आलवालम्। 'लूञ् छेदने'। आवलतेऽम्भोऽत्रेति आवालम्। 'वल संवरणे [4]संचरणे च'। आ समन्तादुप्यन्तेऽम्भां[5]स्यत्रेति आवापः। 'डुवप् बीजतन्तुसंताने'। [6]सेकार्थं तरु परितः [7]कृतजलाधारनामानि॥ नदति जलवेगेनेति नदी। 'णद अव्यक्ते शब्दे'। सरतीति सरित्। 'सृ गतौ'। तरङ्गा अस्याः सन्तीति तरङ्गिणी। शैवलमस्यामस्तीति शैवलिनी। [8]तटमस्या अस्तीति तटिनी। ह्रादोऽव्यक्तशब्दोऽस्यामस्तीति [9]ह्रादिनी। ह्रादुनीति वा पाठः। धुनोति [10]पापमिति धुनी। 'धूञ् कम्पने'। स्रोतोऽस्यामस्तीति स्रोतस्विनी। [11]द्वीपानि सन्त्यस्यामिति द्वीपवती। स्रवति गिरिभ्य इति स्रवन्ती। 'स्रु [12]गतौ'। निम्नं गच्छतीति निम्नगा। 'गम्लृ गतौ'। अपां वेगः [13]आपम्। तेन गच्छतीत्यापगा। अपां समूहः आपम्। तेन गच्छतीति वा। नदीनामानि॥ २९–३०॥

[1] आधीयन्ते $W_2$　[2] जलं $Pt_2$　[3] अम्बु° $W_2$　[4] 'वल संचलने' $B_1$, T, $Pt_2$
[5] आपः $B_2$.　[6] सेचनार्थं $B_1$, $D_1$　[7] °सेतु° $B_2$　[8] तटावस्था स्त $D_2$, $K_1$, $K_2$, $W_1$.　[9] ह्रदिनी $B_1$, $W_2$　[10] आप. $W_2$, धुनोति पातेन $Pt_2$　[11] द्वीपाः $B_1$, $W_2$, Y　[12] 'स्रु स्रवणे' A, $B_1$, $Pt_2$　[13] आप A, $B_1$, T

(पा.) खेय—परिखा। साल्पपरिवेष्टनखातिकानामनी। 'अगडिते'। खातिकेति प्रौढप्रयोगः। 'यज्जेतुमेतामिव खातिकाम्भश्छायाच्छलात् भ्राम्यति नागलोकम्'। इति

धर्मशर्माभ्युदय (१. ६२) ॥ आधार —धारणम् । यस्मिन् कस्मिन् [1]देशे शाल्यादिसस्यसवर्धनायोदकं[2] प्रतिवद्ध स आधार स्यात्। 'सेतु' 'कत्तुव'॥ स्यादालवालम्—आवाप । वृक्षलतादेर्जलसेचनार्थं निवद्धसेतुनामानि[3]। 'चेट्ल पादुकुचेसिन कुदुरु'। आधारशब्दोऽत्रापि सपद्यते। 'आधारवन्धप्रमुखै प्रयत्नै सवर्धिताना सुतनिर्विशेषम्' इति रघुवशे (५ ६)। अथ नदी—आपगा। आप [4]'समुद्र गच्छतीत्यापगेति व्युत्पत्त्या आपशब्द समुद्रपर्याय। नदीनामानि॥ अनुक्तम्—

'कूलंकषा निर्झरिणी रोधोवक्रा पयस्विनी।
स्रोतोवहा च ह्रदिनी॥'

एतानि च॥ २९–३०॥

[1] °चित् प्रदेशे $A_1$ [2] संवर्धनार्थ $A_1$ [3] °देश° $B_3$, $B_4$ [4] $A_1$ omits

**गङ्गा विष्णुपदी जह्नुतनया सुरनिम्नगा॥ ३१॥**
**भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि।**

(चि.) गङ्गेति—[1]हरशिरस गा भुव गता गङ्गा। हरिचरणात् भूमि गता वा। विष्णुपदोत्था [2]विष्णुपदी। [3]जह्नोस्तनया जह्नुतनया। जाह्नवी च। सुराणा निम्नगा[4] सुरनिम्नगा। भगीरथस्यापत्य, तस्येयमिति वा भागीरथी[5]। त्रयाणा पथा समाहारस्त्रिपथम्। तेन गच्छतीति त्रिपथगा[6]। त्रीणि स्रोतासि यस्या सा त्रिस्रोता। भीष्म [7]सूयते भीष्मसू। 'षूङ् प्राणिप्रसवे'। [8]गङ्गानामानि॥ ३१॥

[1] हरोत्तमाङ्गात् $B_1$, $D_1$, U, Y, $W_2$, हरशीर्षाङ्गं गता $D_2$ हरिचरणात् गा भूमिं $Pt_2$ [2] विष्णो पदमस्या अस्तीति $B_2$, विष्णुपदे तिष्ठति U [3] राजर्षे $B_2$ [4] $D_2$ $K_1$ add नदी. [5] भगीरथेन राज्ञा भूलोकमवतारितेति $Pt_2$, भगीरथेन आनीता $K_3$ [6] स्वर्गमर्त्यपातालमार्गेषु त्रिषु गच्छतीति $Pt_2$ [7] सूते $D_2$ $K_1$, $K_3$, $Pt_2$ [8] भागीरथीनामानि $D_1$, $K_3$, U, $W_1$

(पा.) गङ्गा—भीष्मसूरपि। गङ्गानामानि। 'धर्मद्रवी हैमवती त्रिमार्गा हरशेखरा'। [1]एतानि च॥ ३१॥

[1] $A_1$ adds चत्वारि

**कालिन्दी सूर्यतनया यमुना शमनस्वसा॥ ३२॥**
**रेवा तु नर्मदा सोमोद्भवा मेखलकन्यका।**

(वि.) कालिन्दीति—कलिन्दपर्वतोद्भवा[1] कालिन्दी। सूर्यस्य तनया सूर्यतनया। यमेन [2]यमलजा यमुना। शमनस्य यमस्य स्वसा शमनस्वसा। यमुनानामानि॥ रेवते [3]विन्ध्याद्रौ रेवा। 'रेवृ गतौ'। नर्म केलि ददातीति नर्मदा[4]। 'डुदाञ् दाने'। सोम[5] उद्भवो यस्याः सा सोमोद्भवा। [6]सोमवंशजेन पुरूरवसा भुवं प्रत्यवतारिता वा। मेखलाद्रेः[7] कन्यका, उद्भवत्वात्, मेखलकन्यका। नर्मदानामानि॥ ३२॥

[1] °पर्वताज्जाता $Pt_2$ [2] सह जाता $Pt_2$ [3] विन्ध्यसमीपे $D_1$ [4] नर्म विलास (केलि $D_2$, $K_3$, U) पुरूरवसे ददाति $B_1$. [5] सोमात् $D_2$, U. [6] $Pt_2$ adds the line. [7] मेकलोऽद्रिः तस्य कन्यका $W_2$

(पा.) कालिन्दी—शमनस्वसा। यमुनानामानि॥ रेवा तु—मेखलकन्यका। नर्मदानामानि॥ ३२॥

**करतोया सदानीरा बाहुदा सैतवाहिनी॥ ३३॥**
**शतद्रुस्तु शुतुद्रिः स्याद् विपाशा तु विपाट् स्त्रियाम्।**

(वि.) करतोयेति—[1]ईश्वरस्य करतोयाज्जाता [2]करतोया। सदा नीरमस्यामिति सदानीरा। गौरीप्रदाने [3]शर्वकरजलजातनदीनामनी॥ [4]बाहुबलं ददातीति बाहुदा। बहुदेन कार्तवीर्येणावतारितत्वाद् वा। सितमम्बु वहतीति सितवाहिनी। सितवाहिन्येव सैतवाहिनी[5]। कार्तवीर्यावतारितनदीनामनी॥ पुत्रशोकार्ते शिलां बध्वा प्रविष्टे वसिष्ठे दृष्ट्वा भयात् शतधा द्रवतीति शतद्रुः। शु शोभनं यथा पापं तुदतीति [6]शुतुद्रिः। 'तुद व्यथने'। पुत्रशोकाकुलवसिष्ठप्रविष्टनदीनामनी[7]॥ विगता: पाशा यत्र विपाशा। विपाट् च। विपाशानदीनामनी॥ ३३॥

[1] $D_1$, $W_2$ add गौरीविवाह(विहार $B_1$, U, Y) समये [2] $K_3$ omits 3 lines. [3] ईश्वर° $B_2$, $K_5$. [4] बाहुजल ददाति $D_1$, बहुबल $B_1$ [5] सितवाहिनीति वा पाठ. $B_1$, शीतवाहिनीति पाठे शीतम् अम्बु वहतीति शीतवाहिनी $K_5$ [6] शुतुद्रुः $D_2$, शितद्रुः A [7] वसिष्ठमृतिभयात् $D_2$, I.

(पा.) करतोया सदानीरा। करतोयाख्यनदीनामनी॥ बाहुदा सैतवाहिनी। प्रज्ञादित्वादण्[1] (५. ४. ३८)। बाहुदाख्यनदीनामनी॥ शतद्रुस्तु शुतुद्रिः स्यात् शतद्रुनदीनामनी॥ विपाशा तु—स्त्रियाम्। विपाशाख्यनदीनामनी॥ ३३॥

[1] 'प्रज्ञादिभ्यश्च' इति स्वार्थेऽण्प्रत्ययः $B_2$.

**शोणो हिरण्यवाहः स्यात् कुल्याल्पा कृत्रिमा सरित् ॥३४॥**
**शरावती वेत्रवती चन्द्रभागा सरस्वती ।**
**कावेरी सरितोऽन्याश्च संभेदः सिन्धुसगमः ॥ ३५ ॥**

(वि.) शोण इति—शोणतीति शोण । 'शोणृ वर्णगत्यो ' । हिरण्य वहतीति हिरण्यवाह । 'वह प्रापणे'। [1]शोणनदनामनी ॥ कुल्यते कुल्या[2]। 'कुल सस्त्याने बन्धुषु च'। नदीमातृकक्षेत्रसेकाय अल्पकृत्रिमसरिन्नाम ॥ [3]शरा तृणविशेषा अत्र सन्तीति शरावती। वेत्रा[4] वेणुवलया सन्त्यस्यामिति वेत्रवती। चन्द्रभागाभ्या गिरिभ्या जाता चन्द्रभागा। चन्द्रेण[5] भागतो न्यस्ता वा । सरास्यत्र सन्तीति सरस्वती। [6]सरासि प्रवहतीति वा। कवेराद्रेर्जाता कावेरी[7]। कवेरस्य राज्ञोऽपत्य स्त्रीति वा। एतानि प्रत्येक नदीविशेषनामानि ॥ अन्याश्च कृष्णवेण्यादय सरित सन्ति। ग्रन्थकारेणात्र ग्रन्थविस्तर-भयान्नोक्ता ॥ सभिद्यन्ते सगच्छन्ते [8]सरितोऽत्र परस्परमिति सभेद । 'भिदिर विदारणे'। सिन्ध्नो सगम सिन्धुसगम । अनेकसिन्धुसगमनाम ॥ ३४—५ ॥

[1] शोणदत्तनदीनाम $W_1$  [2] कोलति सस्त्यायतीति $Pt_2$  [3] शराख्य तृणविशेष $Pt_2$
[4] वेत्रा वेणव $B_1$, $K_5$ U, वेत्रयोगात् $Pt_2$  [5] चन्द्र इति गिरिविशेषनाम A, चन्द्रस्य भागोंऽश अस्या $W_1$  [6] सरति, 'सृ गतौ' $D_2$, U, $W_1$  [7] कवेराज्जाता Y
[8] नद्य $Pt_2$

(पा.) शोणो—स्यात्। [1]शोणनदीनामनी ॥ कुल्या—सरित्। कृतकाल्पनदी कुल्या स्यात्। 'फालुव'॥ शरावती वेत्रवती चन्द्रभागा। अस्य सुभूतिटीकाया चातूरूप्यमभिहितम्। चन्द्रभागा, चन्द्रभागी, चान्द्रभागा, चान्द्रभागीति ॥ सरस्वती—अन्याश्च। शरावत्यादय पञ्च। तुङ्गभद्रा गोदावरी कृष्णवेण्यादयोऽन्याश्च नद्य[2] ॥ सभेद सिन्धुसगम । नदीसगमनाम ॥ ३४—५ ॥

[1] °नद° $A_1$  [2] $B_3$, $B_4$ add स्यु

**द्वयोः प्रणाली पयसः पदव्यां त्रिषु तूत्तरौ ।**
**देविकायां सरय्वां च भवे दाविकसारवौ ॥ ३६ ॥**
**सौगन्धिकं तु कह्लारं हल्लकं रक्तसंध्यकम् ।**

(वि.) द्वयोरिति—[1]प्रणलत्यम्भोऽनया प्रणाली। 'णल गतौ'। प्रणाल इति वा पाठ । प्रासादादौ निर्मितजलमार्गनाम ॥ उत्तरे पदे त्रिषु वर्तेते। देविकाया भव

[2]दाविक । सरय्वा भव [3]सारव । देविकासरयूद्भववस्तुन[4] क्रमेण नामनी ॥ शोभन[5] गन्ध प्रयोजनमस्य सौगन्धिकम् । के जले ह्लादते कह्लारम् । '[6]ह्लादी सुखेऽव्यक्ते शब्दे च' । [7]ईषद्रक्तवर्णपरिमलबहुलोत्पलनामनी ॥ [8]हल्लति भ्रमरोऽत्रेति हल्लकम् । 'हल्ल भ्रमणे' । रक्तं [9]सध्यावत् रक्तसध्यकम् । रक्तोत्पलनामनी ॥ ३६ ॥

[1] $W_1$ adds गच्छतीति　[2] दाविक $D_2$, $W_1$　[3] सारवम् $B_1$, T　[4] °वस्तूना A
[5] $K_3$ adds पुष्पेषु, सुगन्धि A, $B_1$, T, सुगन्ध $K_3$, $K_5$ $W_1$, $Pt_2$　[6] 'ह्लाद आह्लादने' $B_2$, $K_3$　[7] °पर्ण° $W_1$　[8] $K_5$ adds भ्रमति　[9] सध्यावत् रक्तवर्णत्वात् $B_1$, $K_5$, $W_2$

(पा.) द्वयो—पदव्याम् । [1]हर्म्यादे [2]प्रजहत्सलिलवर्त्मनाम । द्वयोरित्यने-नाल्पानल्पविभागाल्लिङ्गविभाग प्रणाली प्रणाल इति ॥ त्रिषु—दाविकसारवे । [3]देविका-नदीविशेषे भव दाविक स्यात् । [4]सरयूनदीविशेषे भव सारव स्यात् । तदुभय त्रिलिङ्गम् ॥ अनुक्तम्—'समुद्रिय स्यादप्य च समुद्रेऽप्सु भवे क्रमात्' । [5]समुद्रे भव समुद्रियम् । अप्सु भवमप्यम् ॥ त्रिषु तूत्तरे इत्यनेन त्रिलिङ्गौ ॥ सौगन्धिक—रक्तसध्यकम् । अल्परक्तपरिमलाधिकोत्पलनामानि ॥ भाषया 'चंगलुव' ॥ ३६ ॥

[1] हर्म्यादौ $A_1$　[2] प्रविशत्° $A_1$, $B_3$　[3] देविकायां नद्या $B_3$　[4] सरय्वा नद्या $B_3$　[5] समुद्रेभवाप्सुभवयोरर्थयो समुद्रियाप्यशब्दौ वर्तेत $A_1$

**स्यादुत्पलं कुवलयमथ नीलाम्बुजन्म च ॥ ३७ ॥**
**इन्दीवरं च नीलेऽस्मिन् सिते कुमुदकैरवे ।**

(वि.) स्यादिति—[1]उद् ऊर्ध्वं पलति गच्छतीति उत्पलम् । 'पल गतौ' । [2]कौ वलत इति कुवलयम् । 'वल[3] सवरणे' । कुत्सितो वलयो पत्रसवेष्टनमत्रेति वा । उत्पलमात्रनामनी ॥ अम्बुनि जन्मास्येति अम्बुजन्म । नील च तदम्बुजन्म च । इन्दतीति इन्दी लक्ष्मी । 'इदि परमैश्वर्ये' । तया व्रियत इति [4]इन्दीवरम् । 'वृञ् वरणे' । पुष्पेषु इन्दतीति वा । [5]नीलोत्पलनामनी ॥ कौ भूमौ मोदत इति कुमुदम् । 'मुद हर्षे' । के जले [6]रौतीति केरव हस । तस्येद प्रियमिति कैरवम् । सितोत्पलनामनी ॥ ३७ ॥

[1] उत्पलतीति $B_1$, T　[2] $B_1$ adds भुवि　[3] 'वल सचलने' $B_1$, T　[4] इन्द्रि-याणि वृणोति आह्लादकत्वेनाच्छादयतीति वा $W_1$　[5] नीलाम्बुजन्मेति स्वरोऽर्थ. I, U
[6] रवोऽस्य I, रवोऽस्य $B_1$

(पा.) स्यादुत्पल कुवलयम्। उत्पलमात्रनामनी। 'कलुव'॥'कुवेल कुवल च तत्'। एते द्वे च॥ अथ नीलाम्बुजन्म—नीलेऽसिन्। नीलोत्पलनामनी॥ 'दोलाभमपि [1]कन्दोट्टम्'। एते द्वे च॥ सिते—कैरवे। सितोत्पलनामनी॥ अनुत्तम—'रक्तेऽस्मिन् [2]रक्तमण्डलम्'। अतिरक्तोत्पलनाम॥ ३७॥

[1] कन्दोट्ट $B_3$ [2] रक्तकुण्डलम् $B_4$

**शालूकमेषां कन्दः स्याद् वारिपर्णी तु कुम्भिका ॥ ३८ ॥**
**जलनीली तु शैवालं शैवलोऽथ कुमुद्वती ।**
**कुमुदिन्यां नलिन्यां तु बिसिनीपद्मिनीमुखाः ॥ ३९ ॥**

(वि.) शालूकमिति—शलत इति शालूकम्। 'शल चलनसवरणे'। उत्पलादिकन्दनाम॥ वारि पिपर्ति आच्छादयतीति वारिपर्णी। 'पृ पालनपूरणयो'। वारिणि पर्णान्यस्या इति वा। वारि कुम्भयतीति कुम्भिका[1]। 'कुभि आच्छादने'। [2]कुम्भिक इति वा पाठ। [3]जलोपरिस्थितलतारूपशाकनामनी[4]॥ जले [5]नीली जलनीली। जले शेते शैवालम्। शैवल च। 'शीङ् स्वप्ने'। [6]शैवलनामानि॥ कुमुदान्यस्या सन्तीति कुमुद्वती। कुमुदिनी च। कुमुद्वद्दीर्घिकानामनी॥ नलमस्यामस्तीति नलिनी। बिसमस्यामस्तीति बिसिनी। एव पद्मिन्यादीनि कुमुदिनीवत्[7]॥ ३८–९॥

[1] $W_1$, $Pt_2$ add केन जलेन उम्भत इति कुम्भिका 'उभ पूरणे' [2] वारिपर्णस्तु कुम्भिक इति वा पाठ A, $B_1$, T [3] जले पर्यस्तस्वल्पशैवालनामानि $W_1$ [4] °वलयरूप° $B_2$, T [5] नीलिका $D_2$ [6] शैवाल I, U, $W_1$ [7] $K_1$ ends here

(पा.) शालूकम्—कन्द स्यात्। सौगन्धिकादीना कन्द शालूक स्यात्।' वारिपर्णी—कुम्भिका। तोये पर्यस्तलतारूपशैवलनामनी। 'अन्तर्वञ्जलि'॥ जलनीली—शैवल। शैवालनामानि। शेवालमित्यप्यस्ति। 'शेवालमपि[1] शैवाल जलशूकश्च नीलिका' इति हलायुध (अ मा ३ ६१)। शिफालमिति [2]शैवलविशेष। 'शिफाल[3] शैवल यद्धि चूर्णाभ लोहित जले' इति वैजयन्ती (पृ १५२, श्लो ४९)॥ अथ—कुमुदिन्याम्। कुमुदस्तम्बनाम॥ नलिन्या—पद्मिनीमुखा। पद्मस्तम्बनामानि। पद्मवत्सरोनामान्यपि भवन्ति। 'बिसिनीपद्मिनीत्याद्या पद्मस्तम्बे सरस्यपि' इति वैजयन्ती (पृ १५२, श्लो ४३)॥ ३८–९॥

[1] 'शेवाल शैवल प्रोक्त जल्यूक च नीलिका' इति मुद्रितग्रन्थे. [2] नीलिका° $B_3$
[3] शैवाल चाथ शीवोल चूर्णाम लोहित जले' इति मुद्रितपुस्तके

**वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् ।**
**सहस्रपत्रं कमलं शतपत्रं कुशेशयम् ॥ ४० ॥**
**पङ्केरुहं तामरसं सारसं सरसीरुहम् ।**
**बिसप्रसूनराजीवपुष्कराम्भोरुहाणि च ॥ ४१ ॥**

(वि.) वा पुसीति—पद्यतेऽत्र लक्ष्मीरिति पद्मम्[1]। 'पद्लृ गतौ'। नल्यते [2]बध्यते चन्द्रेणेति नलिनम्। 'णल बन्धने'[3]। अरान् केसरान् विन्दतीति अरविन्दम्। 'विद्लृ लाभे'। महच्च तदुत्पल च महोत्पलम्। सहस्र पत्राणि यस्य तत् सहस्रपत्रम्। केन जलेन[4] मल्यत इति कमलम्। 'मल[5] धारणे'। शत पत्राणि यस्य तत् शतपत्रम्। कुशे जले शेत इति कुशेशयम् 'शीङ् स्वप्ने'। पङ्के रोहतीति पङ्केरुहम्। 'रुह बीजजन्मनि प्रादुर्भावे च'। ताम्यति रसति चेति तामरसम्[6]। 'तमु ग्लानौ', 'रस आस्वादने'। ताम्यद्भिः रस्यत इति वा। सरसि भव सारसम्। सरस्या रोहतीति सरसीरुहम्। बिसस्य प्रसून बिसप्रसूनम्[7]। राज्योऽस्य सन्तीति राजीवम्[8]। पुष्णातीति पुष्करम्। 'पुष पुष्टौ'। [9]अम्भसि रोहतीति अम्भोरुहम्। पद्मनामानि ॥ ४०–१ ॥

[1] पद्यत लक्ष्म्या सेव्यत, 'पद्लृ सेवायाम्' $B_1$, $D_1$, $K_5$ U, 'पद गतौ' $W_1$
[2] भिद्यते $D_1$, I, $K_5$ खिद्यते A $B_1$ T [3] 'णल गन्धने, गन्धन भेद A $B_1$, T
[4] वारिणा I, क जलमलति भूषयतीति, 'अल भूषणे' $Pt_2$ [5] 'मल मल्ल धारणे' $B_1$, T
[6] ताम प्रपर्वो रसोऽस्य $Pt_2$ [7] बिस प्रसूनमस्य A, $B_1$ [8] कसरराजियोगात् $Pt_2$
[9] शेष स्पष्टम् A, T

(पा.) वा पुसि—अम्भोरुहाणि च। पद्मनामानि। 'सरसिजमप्सुजमब्ज सरोजमिन्दीवर बिसजम्'। एतानि च ॥ ४०–१ ॥

**पुण्डरीकं सिताम्भोजमथ रक्तसरोरुहे ।**
**रक्तोत्पलं कोकनदं नालो नालमथास्त्रियाम् ॥ ४२ ॥**
**मृणाल बिसमब्जादिकदम्बे षण्डमस्त्रियाम् ।**

(वि.) पुण्डरीकमिति—पुणति मङ्गलत्वात् पुण्डरीकम्। 'पुण कर्मणि शुभे'। सितं च तदम्भोजं च सिताम्भोजम्। सितपद्मनामनी[1] ॥ रक्तं च तत् सरोरुहं च रक्तसरोरुहम्। रक्तं च तदुत्पलं च रक्तोत्पलम्। कोकाः [2]चक्रवाका नदन्त्यस्मिन्निति [3]कोकनदम्। रक्तपद्मस्य रक्तोत्पलस्य च नामानि ॥ नल्यते बध्यते पुष्पेणेति नालः। नालं च[4]। 'णल बन्धने[5]'। पद्मादिदण्डाकारवृन्तनामनी ॥ मृण्यते भक्ष्यत इति मृणालम्। '[6]मृण तर्पणे', 'मृण हिंसायां' इति वा धातुः। विस्यन्ते उत्सृज्यन्ते तन्तवोऽत्र भक्षणसमय इति बिसम्। 'बिस उत्सर्गे'। [7]पद्मकन्दोपरिस्थितभक्ष्यनामनी ॥ भ्रमरेभ्यो रसं सनोतीति पण्डः। 'षणु दाने'। अब्जादिसमूहनाम ॥ ४२ ॥

[1] सितपुण्डरीकनाम U. [2] चक्राः K₃. [3] B₁, D₁ add 'णद अव्यक्ते शब्दे'. [4] नाला इति स्त्रीलिङ्गत्वमपि W₂. [5] 'नल गन्धने' A, T. [6] 'मृण तर्पणे' D₂, K₅, U. [7] B₁, D₂, K₅, W₂ add तन्तूनामुत्सृष्टत्वात्.

(पा.) पुण्डरीकं सिताम्भोजम्। सितारविन्दनामनी[1] ॥ अथ—कोकनदम्। शोणाम्बुजनामानि ॥ 'कन्दादं खरदण्डं च बिसखण्डं च तद्भवेत्'। इत्येतानि च ॥ नालो नलम्। कमलनालो नलमित्युच्यते।

'[2]स्तनतापशून्यमवनम्रनलं बिसपत्रमत्र कुसुमास्तरणे।
किमुतोज्झितान्यमनसा [3]विगुणी सुरयोषिता विरहवल्लरिका[4] ॥'

इति राघवपाण्डवीये (द्विसं. १२. १८) ॥ अथास्त्रियां—बिसम्। [5]तामरसमूलनामनी। 'तामेरपेल्लु' ॥ अब्जादिकदम्बे—अस्त्रियाम्। अब्जादिकदम्बं[6] पण्डः स्यात्। अब्जपण्डः, कुमुदपण्डः। 'पण्डः स्याद्विटूचरेऽब्जादिकदम्बे पण्डमस्त्रियाम्' इति रुद्राभिधानकोशान्मूर्धन्यादिः[7]। 'शडि रुजायां संघाते च'। शण्डत इति शण्डः। पद्मशण्डः—इति धातुप्रदीपात् तालव्यादिः ॥ ४२ ॥

[1] अम्भोरुह° B₁. [2] सून for शून्य in the printed text. [3] विगुणा in the printed text. [4] °वल्लिका in the printed text. [5] पद्म° B₃, B₄. [6] समूहः A₁, B₃ [7] A₁ omits कोशात्.

**करहाटः शिफा कन्दः किञ्जल्कः केसरोऽस्त्रियाम् ॥ ४३ ॥**
**संवर्तिका नवदलं बीजकोशो वराटकः।**

## इति वारिवर्गः

(वि.) करहाट इति—क जलम् उपरिवर्तनाद् रहयन्तीति करहा पद्मादय । 'रह त्यागे'। तानि प्रतिदिनम् अभिवृत्त्याटतीति करहाट । 'अट पट गतौ'। कर घ्नन्तीति करहा मीना, तैरत्यते प्राप्यत इति वा। शिनोति क्ष्मा शिफा। 'शिञ् निशातने'। कन्दति भक्षणार्थं मत्स्यादिरिति कन्द[1]। 'कदि आह्वाने रोदने च'। पद्मादिमूलनामानि ॥ किंचित् जलति जडीभवतीति किञ्जल्क । 'जल घातने[2]'। के जले सरतीति केसर । 'सृ गतौ'। केसरनामनी ॥ सवर्तयति वेष्टयतीति सवर्तिका। 'वृतु वर्तने'। नवोत्पन्न दल नवदलम्। [3]नवदलनामनी ॥ बीजाना पद्माक्षाणा कोश आकरो बीजकोश । वर श्रेष्ठ पद्ममटतीति वराटक । 'अट पट गतौ'। बीजकोश-नामनी ॥ ४३ ॥

इति अमरकोशपदविवृतौ[4] वारिवर्ग

[1] क घ्नते क द $B_1$ $B_2$ $K_5$ [2] जप-येB$_1$, B$_2$, घात्ये T [3] T $W_1$ add पद्मादीना
[4] वारिवर्गनामलिङ्गविवेचनम् I

(पा.) करहाट—कन्द । [1]पद्मादिमूलनामानि । 'दानिगह'। किञ्जल्क.—अस्त्रियाम् । केसरनामनी । अब्जादिकदम्बे पण्डमस्त्रियामिति विशेपविधिरब्ज मानविपय । 'अभूदलिविलासिनीलुलितकेसर केसरम्' इति प्रपञ्चयन्ति ॥ सवर्तिका नवदलम् । पद्मनूतनदल सवर्तिका स्यात् ॥ बीजकोशो वराटक । पद्मबीजकोशो वराटक स्यात् ॥ ४३ ॥

इति वारिवर्ग

[1]A$_1$ adds ग्रन्थि° after पद्मादि

काण्डसमाप्तिः

**उक्तं स्वर्व्योमदिक्कालधीवाक्छब्दादि नाट्यकम् ।**
**पातालभोगिनरकं वारि चैषां च सगतम् ॥ ४४ ॥**
**इत्यमरसिंहकृतौ नामलिङ्गानुशासने ।**
**स्वरादिकाण्डः प्रथमः साङ्ग एव समर्थितः ॥ ४५ ॥**

इति श्रीमदमरसिंहकृते नामलिङ्गानुशासने प्रथमकाण्डः

(वि.) अथ काण्डसमाप्ति चिकीर्षु अमरसूरि एतत्काण्डोक्तवर्गान् सक्षेपेणाह—उक्तमिति । स्व स्वर्ग व्योम आकाश दिशश्च कालश्च वाचश्च शब्दादिश्च । आदिना रसगन्धादि गृह्यते । [1]नाट्यक तत्सम्बन्धि गीतवाद्यादिकमुच्यते । पाताल-भोगिनरक वारि च । द्वन्द्वैकवद्भाव । उक्तमित्यनेनान्वय । एषा [2]यत्सगत स्वग देवतादि, दिशि दिग्गजादि, काले उपरागादि, धीसगत विचारादि, वाचि श्रुत्यादि, शब्दे उदात्तादि, नाम्ने अकुसादि, पाताले कुहरादि, भोगिनि कञ्चुकादि, नरके पीडाबाधादि, वारिणि नौकापद्मोत्पलादि, एतत् सर्वमुक्तमस्मिन् काण्डे इत्यर्थ ॥ ४४–५ ॥

इति वगलभट्टोपाध्यायसूरिसुतलिङ्गयसूरिविरचितायाममरकोशपदविवृतौ प्रथमकाण्ड समाप्त

[1] सनाट्यक नाट्यवर्गेण सहित $K_5$ U [2] प्रसक्त्या सगत देवासुरसुधादिक $D_2$ I $K_1$

(पा.) उक्त—समर्थित ॥ ४४–५ ॥

इति [1]श्रीवत्सनृसिहसूरिसुतमल्लिनाथसूरिविरचितेऽमरपदपारिजाते प्रथमकाण्ड

[2]श्रीवत्सान्वयमान्येन मल्लिनाथेन निर्मिते ।
व्याख्यानेऽमरसिहस्य प्रथम काण्ड उम्भित ॥
चकोरैरत्यन्त परिदलितशालीनकिरण
अकुण्ठद्राहुग्रद्विपशिखिशिरश्शोपिततनु ।
पुराराते भूषा कुवलयविकासेन किमभू-
न्ममाप्येप ग्रन्थो भवति जगदानन्दजनक ॥

[1] °नरसिंह° $A_1$ [2] verses in $A_1$

# द्वितीयकाण्डः

## वर्गभेदाः

वर्गाः पृथ्वीपुरक्ष्माभृद्वनौषधिमृगादिभिः ।
नृब्रह्मक्षत्रविट्शूद्रैः साङ्गोपाङ्गैरिहोदिताः ॥ १ ॥

(धि.) एव प्रथमकाण्ड परिसमाप्य द्वितीयकाण्डे वक्ष्यमाणवर्गान् सग्रहेण वक्ति वर्गा पृथ्वीतिश्लोकेन। पृथ्वी च पुर च क्ष्माभृच्च वनौषधिश्च मृगादिश्च, तैरिह काण्डे पृथ्वीप्रभृतिभि नृब्रह्मक्षत्रविट्शूद्रै साङ्गोपाङ्गै, अङ्गप्रत्यङ्गसहितै वर्गा [1]उदिता वक्तुमुपक्रा ता ॥ १ ॥

[1] उदिता आरब्धा $F_2$, अथ भौमादिद्वितीयकाण्डमारभते F।

## १. भूमिवर्गः

भूर्भूमिरचलानन्ता रसा विश्वंभरा स्थिरा ।
धरा धरित्री धरणिः क्षोणिर्ज्या काश्यपी क्षितिः ॥ २ ॥
सर्वंसहा वसुमती वसुधोर्वी वसुंधरा ।
गोत्रा कुः पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही ॥ ३ ॥
(*विपुला गह्वरी धात्री गौरिला कुम्भिनी क्षमा ।
भूतधात्री रत्नगर्भा जगती सागराम्बरा ॥)

(नि.) भूरिति—[1]भवति सर्वमस्यामिति भू । 'भू सत्तायाम्'। ऊकारान्तोऽय स्त्रीलिङ्ग । अन्यय तु रेफान्त । अस्यामिदम् अभूदिति [2]भूमि । न चलतीत्यचला । 'चल [3]कम्पने'। न विद्यतेऽन्तो यस्या सा अनन्ता। रस्यते आस्वाद्यत इति 'रसा। 'रस आस्वादने'। रसतीति वा। 'रस शब्दे'। रसा अत्र सन्तीति वा। विश्व

बिभर्तीति विश्वंभरा। 'डुभृञ् [5]धारणपोषणयो'। [6]स्थिरत्वात् स्थिरा। तिष्ठति सर्वमस्यामिति वा। 'ष्ठा गतिनिवृत्तौ'। ध्रियते [7]नृपैरिति धरा। धरति विश्वमिति वा। 'धृञ् धारणे'। [8]धरित्री धरणिश्च। क्षौतीति क्षोणि। क्षोणी च। 'टुक्षु शब्दे'। जिनाति सर्वमस्यामिति ज्या। 'ज्या वयोहानौ'। जिनाति[9] सर्वान् पार्थिवानिति वा। कश्यपस्येयं काश्यपी। क्षियन्ति निवसन्ति सर्वेऽस्यामिति क्षिति। 'क्षि निवासगत्योः'। सर्वं भारं सहत इति सर्वंसहा। 'षह मर्षणे'। वसु धनमस्यामस्तीति वसुमती। वसु [10]दधातीति वसुधा। 'डुधाञ् धारणपोषणयो'। [11]ऊर्णूयते पर्वतैरित्युर्वी। 'ऊर्णुञ् आच्छादने'। उरुत्वात् विस्तीर्णत्वाद्वा। वसु धारयतीति वसुंधरा। 'धृ धारणे'। गोत्रा शैला[12] सन्त्यस्यामिति गोत्रा। तृणादिना [1] गवादीन् त्रायत इति वा। 'त्रैङ्[14] पालने'। [15]कौति ध्वनतीति कु। 'कु शब्दे'। पृथुत्वात् पृथिवी। पृथ्वी च। पृथुना[16] वैन्येन सत्कृता वा। प्रथते वा। 'प्रथ प्रख्याने'। क्षमते भारं क्ष्मा। 'क्षमूष् सहने'। क्ष्मायते [17]विधूनयते नृपनाशायेति वा। 'क्ष्मायी विधूनने'। [18]अव्यते नृपैरित्यवनिः। स्वयमवति प्रजा इति वा। 'अव रक्षणे'। मधुकैटभदैत्यमेदोयोगात् मेदिनी[19]। 'ञिमिदा स्नेहने'। महत इति मही। 'मह पूजायाम्'। महिर्वा। अत्र भूम्यवनिक्षितिक्षोणिमहिधरणिशब्दा कृदिकारान्ता। भूनामानि॥ २–३॥

* Additional verse in $B_1$ $F_2$

[1] भवन्ति अस्याम् $K_5$  [2] $K_5$ adds 'भुव कित्' इत्यौणादिको मिप्रत्यय (उ ४ ४५)  [3] 'चल सचलने' $W_2$  [4] रसयुक्तत्वात् $F_2$  [5] 'भृञ् भरणे' $B_1$, $K_6$ $Pt_2$  [6] तिष्ठति सदा $Pt_2$  [7] शैले $W_2$  [8] धरतीति धरित्री $F_2$  [9] जिनाति सर्वं $B_1$, $K_5$ जिनाति परिभवति बाधादिति $K_6$ U  [10] धन धत्त $B_1$, $K_5$  [11] ऊर्णूयते आस्तीर्यते $W_2$  [12] पर्वता $F_2$, $Pt_2$  [13] गा $B_1$ $W_2$, $Pt_2$  [14] 'त्रा रक्षणे' $F_1$, $K_6$  [15] कायति, 'कै शब्दे' $B_2$, $Pt_2$ काले प्रतिध्वनिं करोति $F_2$  [16] पृथुचक्रवर्तिना $Pt_3$  [17] विधुनुते $h_2$  [18] अवति प्रजा $B_1$ $K_5$ $Pt_2$  [19] मधुकैटभयो मेदसा परिपूतत्वात् $F_2$ परिप्लुतत्वात् $Pt_2$

(पा.) भूर्भूमि —मही। भूमिनामानि। 'महि सर्वंसहा मही' इति [1]वैजयन्तीपाठात् (पृ ३५, श्लो ३) महिशब्दोऽप्यस्ति। अनुक्तम्—

'रत्नगर्भा [2]घनश्रोणिरुर्वरा सागराम्बरा।
दुर्धरा[3] गह्वरी धात्री भूतधात्र्यब्धिमेखला॥
रत्नसूः कुम्भिनी विश्वा [4]धारिणी गौर्गरिस्तनी॥

एतानि च॥ २–३॥

[1] 'देमा सर्वंसहा मही' इत्येव मुद्रितग्रन्थे  [2] घनश्रोणी $B_2$  [3] दुधरा $B_3$  [4] धरणी $B_2$

**मृन्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका ।**
**उर्वरा सर्वसस्याढ्या स्यादूषः क्षारमृत्तिका ॥ ४ ॥**

(वि.) मृदिति—मृद्यते [1]कुलालादिभिरिति मृत् । [2]मृत्तिका च । 'मृद क्षोदे' । मृन्नामनी ॥ प्रशस्ता [3]मृत् मृत्सा मृत्स्ना च । [4]श्रेष्ठमृन्नामनी ॥ उर्वति क्षुध हिनस्तीत्युर्वरा[5] । 'उर्वी हिंसायाम्' । सर्वसस्य[6]सपन्नभूनाम ॥ ऊषति बीजमित्यूष । 'ऊष रुजायाम्' । क्षारा च मृत्तिका च क्षारमृत्तिका । क्षारमृत्तिकानामनी ॥ ४ ॥

[1] कुलालादिना $W_2$ [2] 'मृदस्तिकन्' (५ ४ ३९) इति स्वार्थे मृत्तिका $B_1$, $K_5$, मृद्-शब्द दन्तान्त. स्त्रीलिङ्ग $F_2$ [3] प्रशस्ता मृत्तिका $K_3$, 'सस्नौ प्रशसायाम्' (५ ४ ४०) $B_1$, $K_5$ [4] प्रशस्त° $W_2$ [5] $Pt_2$ adds उरुं महान्त वृणोति तदर्हत्वात्. [6] °सस्याढ्य° $F_2$, °सपन्नाढ्य° $h_5$, सपादक° $W_2$

(पा.) मृन्मृत्तिका । मृदो नामनी ॥ प्रशस्ता—मृत्तिका । प्रशस्तमृत्तिकानामनी ॥ उर्वरा—आढ्या । सर्वसस्योत्पादकमृदो[1] नाम । स्यादूष—मृत्तिका । क्षारमृत्तिकानाम[2] ॥ ४ ॥

[1] °मृदुर्वरा स्यात् $A_1$ [2] °ऊष स्यात् $A_1$

**ऊषवानूषरो द्वावप्यन्यलिङ्गौ स्थलं स्थली ।**
**समानौ मरुधन्वानौ द्वे खिलाप्रहते समे ॥ ५ ॥**

(वि.) ऊषवानिति—ऊषोऽस्यास्तीत्यूषवान् । ऊषरश्च । द्वावप्यन्यलिङ्गौ । ऊषरक्षेत्रनामनी ॥ स्थलतीति[1] स्थलम् । [2]स्थली च । 'ष्ठल स्थाने' । अकृत्रिमोन्नतदेशनामनी ॥ [3]तृषया म्रियन्तेऽत्रेति मरु । 'मृङ् प्राणत्यागे' । धन्वन्ति तृषयात्रेति धन्वा । 'धवि [4]गतौ' । [5]निर्जलदेशनामनी ॥ लाङ्गलेन न लिखितमिति खिलम् । 'लिख अक्षरविन्यासे' । खं लातीति वा । 'ला दाने' । [6]हलादिना न प्रहन्यत इत्यप्रहतम् । 'हन हिंसागत्यो' । इमौ शब्दौ विशेष्यनिघ्नौ । [7]अकृष्टदेशनामनी ॥ ५ ॥

[1] $B_1$, $F_2$, $K_5$ add चिरात् तिष्ठति. [2] स्थल स्थला इति वा पाठ $J_2$ $h_6$, जानपदेत्यादिना (४ १ ४२) ङीप् $K_5$ [3] तृष्णया $F_1$, $F_2$ [4] 'धन्व मरणे' $B_1$, $h_6$ [5] °प्रदेश° $F_2$, $J_2$ [6] लाङ्गलादिना $h_6$, $Pt_2$ [7] अप्रतिहतदेश° $h_6$, °क्षेत्र° $B_1$.

(पा.) ऊपवान्—अन्यलिङ्गौ। [1]क्षारमृत्तिकावत्प्रदेशनामनी। विशेषणं विवक्षितं चेत् तौ द्वावप्यन्यलिङ्गौ। तदविवक्षितं चेत् नपुंसकावेव॥ 'वपुंकस्य किमपः कृतोन्नतेरम्बुदस्य परिहार्यमूपरम्'। इति शिशुपालवधे (१४. ४६)। स्थलं स्थली। भूतलनामनी॥ समानौ—धन्वानौ। [2]निर्जलप्रदेशनामनी॥ द्वे—समे। [3]अकृष्टभूतलनामनी। 'पाङ्कुनेल'॥ ५॥

[1] वनप्रदेश° $A_1$. [2] निर्जलोन्नत° $A_1$ [3] $A_1$ adds इलेन.

**त्रिष्वथो जगती लोको विष्टपं भुवनं जगत्।**
**लोकोऽयं भारतं वर्षं शरावत्यास्तु योऽवधेः॥ ६॥**
**देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तरः।**

(वि.) त्रिष्वथो इति—जंगम्यते[1] भृशं गच्छतीति जगती। जगच्च। गम्यते जनैरिति वा। 'गम्लृ गतौ'। लोक्यते सर्वमस्मिन्निति लोकः। 'लोकृ दर्शने'। विशन्त्यस्मिन्निति [2]विष्टपम्। 'विश प्रवेशने'। सर्वमस्मिन्[3] भवतीति भुवनम्। लोकनामानि॥ भरतस्य राज्ञ इदं [4]भारतम्। वृष्यते सिच्यते मेघैरिति वर्षम्। 'वृषु सेचने'। हिमवत्सेतुमध्यदेशनाम[5]॥ प्राचा[6] सहितो दक्षिणो देशः प्राच्यः। शरावतीनद्यवधिभूतपूर्वदक्षिणदेशनाम॥ उदीच्या सहितः पश्चिमो देशः उदीच्यः। उदीच्यां भवः उदीच्यः। पश्चिमेन सहितः उत्तरो देशः पश्चिमोत्तरः। शरावतीनद्यवधिभूतपश्चिमोत्तरदेशनामनी॥ ६॥

[1] जं भृशं गम्यते जनैरत्र $B_1$, $K_6$, $B_1$, $K_5$ add प्रलयकाले. [2] विष्टपतीति, 'ष्टप स्तप प्रतिघाते' $B_1$, $K_3$ [3] अस्मात् $K_6$, $F_2$ adds 'भू सत्तायाम्'. [4] जम्बूद्वीपस्य नवांशः भरतस्य क्षत्रियस्येद $B_1$, $K_5$ [5] °नामनी $B_1$, $K_6$, $W_2$ [6] प्राच्या $K_6$

(पा.) त्रिषु। अत्र त्रिष्वित्यनेन खिलशब्दानुपदोक्ताप्रहतशब्द एव[1] परामृश्यते। खिलं नपुंसकमेव। '[2]खिलमप्रहता भूमिः' इति हलायुधः (अ. मा. २. ३)। अनुक्तम्—'नारङ्गः स्फुटिता भूमिः'। स्फुटितभूमिर्नारङ्गः स्यात्। 'विटिकेनेल'। 'जन्तुप्राया कचङ्गला'। जन्तुभूयिष्ठा भूमिः कचङ्गला स्यात्। अथो जगती—विष्टपम्। 'विष्टपलोकौ नरौ' इति रत्नकोशमतात् पुंलिङ्गश्च। भुवनं जगत्। लोकसामान्यनामनी॥ लोको—वर्षम्। असौ लोको भारतं च वर्षं च स्यात्। इदमा प्रत्यक्षजम्बूद्वीपः[3] परामृश्यते।

'स्याद् व्यासभाषिते ग्रन्थे जम्बूद्वीपे च भारतम् ।'
'पुनपुंसकयोर्वर्षं जम्बूद्वीपाब्दवृष्टिषु ।'

इत्युभयत्र रुद्र । अथवा [4]हिमाद्रेर्दक्षिणभूतजम्बूद्वीपैकखण्ड परामृश्यते । 'नाभीद भारत वर्षं हिमाद्रेस्तच्च दक्षिणम्' इति वैजयन्ती (प्र -५ श्लो ५)। शरावत्या — पश्चिमोत्तर । शरावत्याख्या नदी [5]ऐशानदिश सकाशात् [6]निर्ऋतिदिश प्रत्यागत्य पश्चिमसमुद्र प्रविष्टा । तन्मर्यादि अङ्गवङ्गादिबहुभेदभिन्न प्रागदक्षिणदेश प्राच्य' स्यात् । तदवधि गान्धारशूरसेनादिबहुभेदभिन्न पश्चिमोत्तरदेश उदीच्य स्यात् ॥ ६ ॥

1 °श०दस्यैव $B_3$ 2 'लिलमग्रहत स्थानम्' इति मुद्रितपुस्तके 3 °द्वीपपरामर्श $B_3$
4 °दक्षिणभव $A_1$ 5 ईशान° B. 6 नैर्ऋतीं दिश $B_3$

**प्रत्यन्तो म्लेच्छदेशः स्यान्मध्यदेशस्तु मध्यमः ॥ ७ ॥**
**आर्यावर्तः पुण्यभूमिर्मध्य विन्ध्यहिमालयोः ।**
**नीवृज्जनपदो देशविषयौ तूपवर्तनम् ॥ ८ ॥**

(वि.) प्रत्यन्त इति—म्लेच्छाना देश म्लेच्छदेश । प्रतिगतोऽन्त प्रत्यन्त । [1]शरावत्यन्तप्रतिगतशिष्टाचाररहितदेशनाम ॥ मध्यश्चासौ देशश्च मध्यदेश । मध्ये भव मध्यम । हिमवद्विन्ध्यविनशनप्रयागमध्यगतदेशनामनी' ॥ आर्या[3] वर्तन्तेऽत्रेति आर्यावर्त [4]। पुण्या भूमि पुण्यभूमि । हिमवद्विन्ध्यमध्यदेशनामनी ॥ नितरा वर्तन्ते जना अत्रेति नीवृत् । 'वृतु वर्तने' । [5]नियमेन वर्तन्त इति वा । जनपदशब्दसाहचर्यात् नीवृच्छब्द पुलिङ्ग । जना पद्यन्तेऽत्रेति जनपद [6]। 'पद्लृ गतौ' । प्रसिद्धराष्ट्रनामनी ॥ दिश्यत इति देश । 'दिश अतिसर्जने' । विशेषेण सिनोति बध्नाति' प्रीतिमिति विषय । 'षिञ् बन्धने' । उपयोगवशात् वर्तन्तेऽत्रेत्युपवर्तनम् । विंशत्रिंशद्ग्रामात्मकस्थाननामानि ॥ ७–८ ॥

1 °नप्रन्त° $h_6$,

'हिमवद्विन्ध्ययोर्मध्यं यत् प्राग् विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेश प्रकीर्तित ॥'

इति मनु (२ २१) $B_1$, $Pt_2$ 2 °विन्ध्यनग° $h_6$ 3 $B_1$ adds आ समन्तात् 4 'वृतु वर्तने',

'आ समुद्रात्तु वै पूर्वादा समुद्राच्च पश्चिमात् ।
तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधा ॥'

इति मनु (२ २२) $B_1$, $Pt_2$ 5 नियत वर्तन्ते $B_1$, $h_5$, $W_2$, $F_2$ adds तकारान्त .
6 जने पद्यत इति वा $D_2$, $h_2$, O, जनाना पदं $F_2$, पुस्त्वं लोकात् $B_1$ 7 धृतिमिति $h_2$.

(पा.) प्रत्यन्तो—स्यात्। भारतवर्षान्तस्थितदेशनाम। मध्यदेश—मध्यम। भारतवर्षस्य मध्यमदेशनाम। आर्यावर्तो ब्रह्मवेदि—हिमालयो। [1]पूर्वपश्चिमसमुद्राय तयोर्विन्ध्याचलहिमाचलयोर्मध्यम्[2] आर्यावर्तश्च ब्रह्मवेदिश्चेत्युच्यते। अनुक्तम्—'विन्ध्यात्तु दक्षिणो देशो दक्षिणापथसंज्ञित'। विन्ध्याचलात् सेतुपर्यन्त[3] दक्षिणापथ स्यात्। नीवृत्—उपवर्तनम्। देशनामानि। अत्र[4] तुशब्दो [5]निरर्थक। 'नीवृज्जनपदो देशस्तद्भेदा पुंसि भूम्नि च' इति वैजयन्ती (पृ ३६, श्लो २१)। 'राष्ट्र जनपदो निर्गो जनान्तो विषय स्मृत' इति धनजय॥ ७–८॥

[1] °युतयो $A_1$ [2] $B_3$ omits °अचल° [3] °पर्यन्तदक्षिणदेश $A_1$ [4] अत्रत्य° $A_1$ [5] अनर्थक $A_1$

**त्रिष्वा गोष्ठान्नडप्राये नड्वान् नड्वल इत्यपि।**
**कुमुद्वान् कुमुदप्राये वेतस्वान् बहुवेतसे॥ ९॥**

(वि.) त्रिष्विति—आ गोष्ठात् गोष्ठशब्दपर्यन्त [1]त्रिषु। नडा सन्त्यत्रेति नड्वान्। नड्वलश्च[2]। नडतृणप्रायदेशनामनी॥ कुमुदान्यत्र सन्तीति कुमुद्वान्। कुमुदानि प्राय अत्र। कुमुदप्रायदेशनाम॥ वेतसा सन्त्यत्र वेतस्वान्। बहव वेतसा[3] सन्त्यत्र। बहुवेतस देशनाम॥ ९॥

[1] $F_2$ adds लिङ्गेषु वर्तन्ते [2] $F_2$ $Pt_2$ add नडप्रचुरो देश नडप्राय बाहुल्येन नडोऽस्त्यस्मिन्निति $F_2$ $Pt_2$ [3] $K_2$ $K_6$ add वृक्षा

(पा.) त्रिष्वा गोष्ठात्। गोष्ठशब्दात् प्राग्भूतशब्दास्त्रिलिङ्गा। उत्तराधिकारस्य बाधितविषयत्वात् कच्छादय शब्दा उक्तलिङ्गा एव। नडप्राये—इत्यपि। नडतृणप्रायदेशे[1] नड्वान् नड्वलश्चेत्येतौ वर्तेते। कुमुद्वान् कुमुदप्राये। कुमुदप्रायदेशनाम। वेतस्वान् बहुवेतसे। [2]बहुलनिचुलदेशनाम॥ ९॥

[1] °प्रायदेशनामनी $B_3$ [2] $A_1$ adds °वृक्ष°

**शाद्वलः शादहरिते सजम्बाले तु पङ्किलः।**
**जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः॥ १०॥**

(वि.) शाद्वल इति—[1]शादो बालतृणमस्मिन्नस्तीति[2] शाद्वल। शाड्वलो वा। [3]शादहरितदेशनाम॥ 'पङ्कोऽस्यास्तीति पङ्किल। जम्बालेन पङ्केन सह वर्तत इति

सजम्बाल । [5]कर्दमसहितदेशनाम ॥ अनुगता आपोऽत्रेत्यनूपम् । [6]जलप्रायघट्टादि[7]-स्थलनाम ॥ कषन्ति आपो य देश स [8]कच्छ । कष्यते जलैरिति वा । 'कष हिंसायाम्' । [9]जलप्रायदेशनाम ॥ १० ॥

[1] $B_1$ omits 3 lines [2] अस्यास्तीति $K_2$ [3] बालतृण° for शाद° $K_5$
[4] अस्मिन् $K_5$ [5] जम्बाल° $K_5$, सजम्बाल° $J_2$ [6] जलप्रचुरं स्थान जलप्रायम् $F_2$
[7] $K_5$, $W_2$ omit घट्ट [8] क पानीय छ्यतीति, 'छो छेदने' $Pt_2$ [9] $J_2$ adds तथाविध°

(पा.) शाद्वल —हरिते । बालतृणहरितदेशनाम । सजम्बाले—पङ्किल । जम्बालाविलदेशनाम । जलप्रायम्—तथाविध । बहुलजलदेशोऽनूप स्यात् । कच्छ इति च स्यात् । 'पुंस्येवाम्बु प्रहि कूप' (१. ८२. २७) इत्यत्रैवकार क्वचिदनित्यत्वबोधनार्थ । पुंसि च कच्छमनूप [1]

[1] Break in all MSS up to verse 18

**स्त्री शर्करा शर्करिलः शार्करः शर्करावति ।**
**देश एवादिमावेवमुन्नेयाः सिकतावति ॥ ११ ॥**

(वि.) स्त्रीति—शृणातीति शर्करा । सा अस्त्यत्रेति शर्करा । 'शृ हिंसायाम्' । शर्करा अस्मिन् सन्तीति शर्करिल । शर्करावद्देशस्यैव नामनी ॥ शर्करास्मिन्नास्तीति शार्कर । शर्करावांश्च । [1]शर्करावद्भूमिनामनी ॥ एव [2]सिकतावति देशे । [3]आदिमौ द्वौ शब्दौ अपरौ च इति चत्वार शब्दा उन्नेया । [4]कथम् । सिक्ता सिकतिल इति द्वौ तद्द्देश एव । सैकत सिकतावान् इत्युत्तरौ शब्दौ सिकतास्मिन्नस्तीति ॥ ११ ॥

[1] घट्टादि° for भूमि° $B_1$, $F_1$, $J_2$ [2] शर्करादिशब्देषु आदिमौ शर्कराशर्करिलशब्दौ शर्करावति देश एव वर्तेते । इतरौ द्वौ देशे अन्यत्र च । यथा शार्करो देश , शार्करमोदनमित्यादि । एव सिकतावत्यपि ऊह्या $F_2$, $W_2$, $Pt_2$ [3] सिक्ता अस्य अस्तीति सिकतावान् , अस्मिन् सिकतावति । सिन्ध्वादौ देशे $F_2$ [4] $K_2$ omits

**देशो नद्यम्बुवृष्टयम्बुसंपन्नव्रीहिपालितः ।**
**स्यान्नदीमातृको देवमातृकश्च यथाक्रमम् ॥ १२ ॥**

(वि.) देश इति—नदी मातेव[1] यस्य नदीमातृक । नद्यम्बुसंपन्नव्रीहिपालित[2]-देशनाम ॥ देवो मातेव[3] यस्य देवमातृक । वृष्ट्यम्बुसंपन्नव्रीहिपालितदेशनाम[4] ॥ १२ ॥

[1] Pt₂ omits इव [2] °पालित° $B_1$, $F_1$, $W_2$ [3] $Pt_2$ omits इव [4] पालितो देश $F_2$

**सुराज्ञि देशे राजन्वान् स्यात् ततोऽन्यत्र राजवान्।**
**गोष्ठं गोस्थानकं तत्तु गौष्ठीनं भूतपूर्वकम् ॥ १३ ॥**

(वि.) सुराज्ञीति—शोभनो राजा यस्मिन्[1] स राजन्वान्। सुराजदेशनाम॥ राजा अत्रास्तीति राजवान्। राजवद्देशनाम॥ गावोऽत्र[2] तिष्ठन्तीति गोष्ठम्। 'ष्ठा गतिनिवृत्तौ'। गोस्थाननाम॥ [3]गावो यत्र प्रागासन् तत् गौष्ठीनम्। पुरातनगोस्थान-नाम॥ १३॥

[1] यस्य $Pt_2$, सुराजा, तस्मिन् सुराज्ञि $F_2$ [2] अस्मिन् $F_2$ [3] $F_1$ adds गवा स्थान गोस्थान [4] पूर्वं भूत भूतपूर्वं, भूतपूर्वक पुरातन तत् गोस्थान $F_2$, भूतपूर्वं गोष्ठ $J_2$

**पर्यन्तभूः परिसरः सेतुरालौ स्त्रियां पुमान्।**
**वामलूरुश्च नाकुश्च वल्मीक पुंनपुंसकम् ॥ १४ ॥**

(वि.) पर्यन्तभूरिति—पर्यन्ते उपान्ते भू पर्यन्तभू। परित सरन्त्यत्रेति परिसर। 'सृ गतौ'। ग्रामादिसमीपभूनामनी[1]॥ सिन्वन्ति बध्नन्ति मृत्पाषाणादिभिरिति सेतु। 'षिञ् बन्धने'। अल्यते निवार्यते [2]प्रवाहोऽनयेति आलि। आली च। 'अल भूषणपर्याप्तिवारणेषु'। स्त्रियाम्[3] आलि सेतु पुमान्। सेतुनामनी॥ वामै प्राणिभि लूयत इति वामलूरु। वामलूर इति वा पाठ[4]। 'लूञ् छेदने'। प्राणिन [5]प्रवेशे नमन्त्यत्रेति नाकु[6]। 'णमु प्रह्वत्वे शब्दे च'। वलन्ते[7] प्राणिनोऽत्रेति वल्मीकम्। पुनपुंसके[8]। 'वल [9]सचरने'। वल्मीकनामानि॥ १४॥

[1] °भूमि° $D_2$ $J_2$, $K_3$ $K_6$ [2] जल $Pt_2$ [3] $F_1$ adds वर्तमानायाम् [4] वामैर्भोगिभिर्लूयत इति $B_1$, $K_6$ [5] प्रविश्य $B_1$, $K_5$ [6] अकु अभूमि आधारो न भवतीति $B_1$, $K_5$ [7] वल्ते संवृणातीति $F_2$ [8] पुलिङ्गनपुंसकलिङ्गी $F_2$ [9] 'वल्ल संवरणे सचरणे च' $B_1$, $Pt_2$

**अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः।**
**सरणिः पद्धतिः पद्या वर्तन्येकपदीति च ॥ १५ ॥**

(वि.) अयनमिति—अयन्तेऽनेनेति अयनम् । 'अय पय गतौ' । वर्तन्तेऽनेनेति [1]वर्त्म । 'वृतु वर्तने' । [2]मृगयन्ते गवेषयन्त्यनेनेति मार्ग । 'मृग अन्वेषणे' । अद्यते भक्ष्यते पथिकैरत्रेत्यध्वा[3] । 'अद भक्षणे' । [4]पथन्त्यनेन पन्था । 'पथे गतौ' । नकारान्त । पतन्त्यत्रेति वा । 'पत्लृ गतौ' । पद्यन्तेऽनयेति[5] पदवी । 'पद गतौ' । सरन्त्यनयेति सृति । 'सृ गतौ' । सरणिश्च । [6]पद्भ्या हन्यत इति पद्धति । 'हन हिंसागत्यो' । पदमत्र न्दृश्यते [7]पद्या । 'दृशिर प्रेक्षणे' । वर्तन्तेऽनया वर्तनी[8] । एके कतिपये पादा लक्ष्यन्तेऽत्रेति एकपदी । मार्गनामानि ॥ १५ ॥

[1] नकारान्त $F_2$ [2] मार्गयन्ति $B_1$, $F_2$ $K_5$ $K_6$ 'मार्ग अन्वषणे' $F_2$, $K_5$ मृज्यते पथिकरदैर्निस्तृणीक्रियत इति $F_2$ $Pt_2$ 'मृजूष् शुद्धौ $Pt_2$ [3] अर्द (य $K_5$) न्त्यत्र-त्यध्वा, 'अर्द गतौ' $B_1$, $F_1$, $K_6$ नकारान्त $F_2$ [4] प-थयन्ति, पथि गतौ' $Pt_2$ [5] अस्यामिति $F_2$ [6] पादाभ्या $Pt_2$ [7] तृणकण्टकादिरहितत्वात् पादाय हिता $Pt_2$
[8] $F_1$ adds 'वृतु वर्तने'

**अतिपन्थाः सुपन्थाश्च सत्पथश्चार्चितेऽध्वनि ।**
**व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः ॥ १६ ॥**

(वि.) अतिपन्था इति—[1]अतिपूज्य पन्था अतिपन्था । सुपूज्य[2] पन्था सुपन्था । सश्चासौ पन्थाश्च सत्पथ । अर्चिताध्वनामानि ॥ विरुद्धोऽध्वा व्यध्व । [3]दुष्टोऽध्वा दुरध्व । विरुद्ध पन्था विपथ[4] । कुत्सितोऽध्वा कदध्वा । कुत्सित पन्था कापथ । कुत्सितमार्गनामानि[5] ॥ १६ ॥

[1] अतिश्रेष्ठ $Pt_2$ [2] सुशोभन $F_2$, $Pt_2$ [3] दुष्टाध्वा $K_2$ [4] विपथ कापथ च द्वारमाहु $F_2$ [5] °मार्गाभास° $W_2$

**अपन्थास्त्वपथं तुल्ये शृङ्गाटकचतुष्पथे ।**
**प्रान्तर दूरशून्योऽध्वा कान्तार वर्त्म दुर्गमम् ॥ १७ ॥**

(वि.) अपन्था इति—पन्था न भवतीत्यपन्था । अपथ च । मार्गाभासनामनी ॥ शृङ्गयन्नानादिगाश्रितैर्मार्गैरटतीति [1]शृङ्गाटकम् । शृङ्गैरुत्सर्वजनोऽटतीति वा । '[2]अट गतौ' । चतुर्णां पथा समाहार चतुष्पथम्[3] । चतुष्पथनामनी ॥ प्रकृष्ट ग्रामयोरन्तर व्यवधान यत्रेति प्रान्तरम् । प्रगता ग्रामादयोऽन्तरेऽस्मिन्निति वा । [4]दूरशून्याध्वनाम ॥ कस्य जलस्यान्तर समीपमृच्छतीति जनोऽत्र कान्तारम्[5] । 'ऋ गतौ' । [6]दुर्गमवर्त्मनाम ॥ १७ ॥

[1] शृङ्गाकारैर्मार्गैरटतीति वा $F_2$ [2] 'अट पट गतौ' $K_6$, $Pt_2$ [3] चत्वार पन्थान, यस्य तत् F. [4] $F_2$ adds दूरश्चासौ शून्यश्च [5] काश्चिन्न तारयतीति $F_2$, $Pt_2$ [6] $F_2$, $Pt_2$ add दुष्टो गमो यस्य तत् दुर्गमम्, दुर्गवर्त्म° $B_1$, $K_5$

गव्यूतिः स्त्री क्रोशयुगं नल्वः किष्कुचतुःशतम् ।
घण्टापथः संसरणं तत् पुरस्योपनिष्करम् ॥ १८ ॥
([1]द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी ।
दिवस्पृथिव्यौ गङ्गा तु रुमा स्याल्लवणाकरः ॥)

इति श्रीमदमरसिंहकृते नामलिङ्गानुशासने भूमिवर्गः

(वि). गव्यूतिरिति—गवो क्रोशयोर्यूति युग्म गव्यूति । क्रोशयोर्युग युग्मम् । क्रोशयुगनाम ॥ नल्यते वध्यतेऽनेनेति नल्व । 'णल बन्धने'। किष्कूणा हस्ताना चतु शतम् । चतु शतहस्तप्रमाणवर्त्मनाम ॥ [2]घण्टावता गजाना पन्था घण्टापथ । सम्यक् सरन्त्यनेनेति [3]ससरणम् । 'सृ गतौ' । राजमार्गनामनी ॥ उप समीपे निष्कीर्यते सैन्यमत्रेत्युपनिष्करम्[4] । 'कॄ विक्षेपे' । पुरराजमार्गनाम ॥ १८ ॥

इति श्रीलिङ्गयसूरिविरचितायाम् अमरकोशपदविवृतौ भूमिवर्ग

[1] Additional verse in $K_2$ [2] घण्टोपलक्षिताना $Pt_2$ [3] संभूय (सहता $Pt_2$) सरन्त्यत्र $F_2$ [4] $F_2$ adds तत् ससरण पुरस्य सबन्धि चेत्

(पा.) हस्ताना चतु शत चेत् नल्व स्यात् । घण्टापथ ससरणम् । राजमार्ग नामनी । 'राजमार्ग ससरण श्रीघण्टाभ्या पथ पर' इति वैजयन्ती (पृ १६०, श्लो १६) । तत् पुरस्योपनिष्करम् । तदेव पुराभिमुख चेदुपनिष्कर स्यात् । द्यावापृथिव्यौ—पृथिव्यौ । आकाशभूम्योर्नामानि । गङ्गा—लवणाकर । लवणभूनामनी ॥ १८ ॥

इति [1]श्रीवत्सनृसिंहसूरिसुतमल्लिनाथसूरिविरचितेऽमरपदपारिजाते भूमिवर्ग

[1] °नरसिंह° $A_1$

---

## २. पुरवर्गः

**पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम् ।**
**स्थानीयं निगमोऽन्यत्तु यन्मूलनगरात् पुरम् ॥ १ ॥**
**तच्छाखानगरं वेशो वेश्याजनसमाश्रयः ।**

(वि.) पूरिति—पूर्यते जनैरिति पूः । 'पॄ पालनपूरणयोः' । रेफान्तस्त्रीलिङ्गः । [1]पुरी च । क्रीडार्थं नगा वृक्षाः पर्वता वा सन्त्यत्रेति नगरी । [2]पुरीनगर्यौ विकल्पेन स्त्रियौ । पत्तनसाहचर्यात्[3] नपुंसकेऽपि । पतन्ति जना अत्रेति पत्तनम् । 'पत्लृ गतौ' । पट्टणमिति पाठे पटन्ति गच्छन्ति जना अत्रेति पट्टणम् । '[5]पट गतौ' । पुटमगारं भिद्यतेऽत्रेति पुटभेदनम् । 'भिदिर् विदारणे' । पुटा [6]घृतवटादयो जनसमर्दादस्मिन् भिद्यन्त इति वा । तिष्ठन्त्यस्मिन्निति स्थानीयम् । अकुतोभयत्वात् स्थानाय वासाय हितम् इति वा । 'ष्ठा गतिनिवृत्तौ' । नियतं गच्छति जनोऽत्रेति निगमः [7] । प्रधानपुरनामानि ॥ वृक्षस्य शाखा यथा तथा प्रधाननगरस्याङ्गं शाखानगरम्[8] । प्रधानपुरादन्यपुरनाम ॥ विशन्ति कामुका अत्रेति वेशः । 'विश प्रवेशने' । वेश्याजनस्य समाश्रयो वासस्थानम् । [9]गणिकासमूहस्थाननाम ॥ १ ॥

[1] पूर्यते जनैरिति $F_2$ [2] क्रीडार्था $K_5$ [3] पुरीनगरीशब्दौ $F_2$ [4] साम्यात् $F_1$
[5] अट पट गतौ' $B_1$, $J_2$, $K_5$ [6] पुटा मृद्घटादय $W_2$ [7] $B_1$ $F_1$ add 'गम्लृ गतौ'
[8] मूलनगरस्य वृक्षप्रायस्य शाखावद्वर्तत्वात् शाखानगरम् $F_2$ [9] वेश्याजन° $F_2$

(पा.) पूः । रेफान्तः स्त्रीलिङ्गश्च । पुरीनगर्यौ वा । पाक्षिकस्त्रीलिङ्गौ । 'पीठ क्रोड रसन तुम्ब नगर च मन्दिरापुर्यौ' इत्यरुणदत्तलिङ्गानुशासनात् पक्षे नपुंसकलिङ्गौ । [1]पट्टणं—निगम । नगरनामानि । 'पट्टणं[2] पुटभेदनम् । पत्तनं च' इति वैजयन्तीपाठात् (पृ १५९, श्लो ३४) पत्तनशब्दोऽप्यस्ति । अन्यत्तु—शाखानगरम् । मूलनगरादन्यन्नगरं[3] यत्तच्छाखानगरं स्यात् । अनुक्तम्—'स्कन्धावारो[4] राजधानी दुर्गं च कटकोऽस्त्रियाम्' । राज्ञः प्रधाननगरीनामानि[5] ॥ वेशो—समाश्रय । वेश्याजनाश्रयो वेशः स्यात् । अनुक्तम्—'वेण्ठा विटजनाश्रयः' । विटजनाश्रयः वेण्ठा स्यात् ॥ १ ॥

[1] पट्टन $B_3$ [2] पट्टनमिति मुद्रितम् मे [3] पुर $B_3$ [4] स्कन्धावारो $A_1$, $B_3$
[5] °नगर° $B_3$

**आपणस्तु निषद्यायां विपणिः पण्यवीथिका ॥ २ ॥**

**रथ्या प्रतोली विशिखा स्याच्चयो वप्रमस्त्रियाम्।**
**प्राकारो वरणः सालः प्राचीनं प्रान्ततो वृतिः॥ ३॥**

(वि.) आपण इति—आ[1] समन्तात् पणन्ते व्यवहरन्त्यस्मिन्निति' आपण। 'पण व्यवहारे स्तुतौ च'। विपणिश्च[3]। निषीदन्ति [4]वणिजोऽत्रेति निषद्या। 'षद्लृ विशरणगत्यवसादनेषु'। पण्यस्य वीथिका पण्यवीथिका[5]। हट्टनामानि॥ रथाय हिता रथ्या। प्रतोल्यते जनैरिति [6]प्रतोली। 'तुल उन्माने'। [7]मुण्डितशिरोवत् समभूमित्वाद् विशिखा। विशीयन्ते प्रकाश्यन्त इति वा। 'शीङ् स्वप्ने'। विपूर्वकत्वात् प्रकाशार्थकत्वम्। [8]रथहितमार्गनामानि॥ चीयते पाषाणादिभिरिति चय। 'चिञ् चयने'। उप्यते [9]प्राकारोऽत्रेति वप्र। 'डुवप् बीजसन्ताने'। प्राकाराधारभूतमृदादेर्नामनी॥ [10]प्रकर्षेण क्रियत इति प्राकार। 'डुकृञ् करणे'। वृणोति सम्यगिति [11]वरण। व्रियते वेष्ट्यते ऽनेनेति वा। 'वृञ् वरणे'। स्यति पर्यन्तं करोतीति साल। 'षोऽन्तकर्मणि'। स्यति गमनमिति वा। प्राकारनामानि॥ [12]प्रागास इति प्राचीनम्[13]। प्राक् चीयत इति वा। 'चिञ् चयने'। प्राचीरमिति वा पाठ। प्राक् ईर्यत इति प्राचीरम्। 'ईर क्षेपे'। ग्रामवृतिनामनी॥ २–३॥

[1] आपणन्ते $K_6$ $W_2$ [2] अत्रेति $W_2$ [3] पणश्च $D_2$ $F_1$ विपण तेऽत्र $F_2$ [4] वणिजा $F_2$ [5] पण्याना विक्रतुमानीताना वीथि $Pt_2$ [6] प्रतोल्यन्ति जना अस्यामिति $Pt_2$ [7] मुण्डितसाम्यात् $K_6$ $W_1$ [8] रथस्य मार्ग° $F_1$ [9] प्राकाराधारो $W_2$ [10] प्रक्रियते $K_6$ $W_2$ [11] *Gap of 2 pages in I* [12] प्रागास्त $K_6$ [13] $Pt_2$ adds प्रागञ्चतीति वा अञ्चु गतिपूजनयो

(पा.) आपणस्तु निषद्यायाम्। आपणनामनी। 'अङ्गडि'। विपणि — वीथिका। आपणवीथिनामनी[1]। रथ्या—विशिखा। वीथिनामानि। अनुक्तम्— 'उपरथ्या तु दर्शिनी"'। ग्रामस्य [3]पुरतो गवाद्यागमनगमनाभ्यां कृतमार्गनामनी। भाषया 'पशुवुल अदुरु'॥ स्याच्चयो—अस्त्रियाम्। प्राकाराधारार्थं मृच्छिलाभ्यां बद्धसेतुनामनी। भाषया 'आडुवलि'। 'वप्रं स्याद् धूलिकुट्टिमम्' इति धनंजय[4]॥ प्राकारो—साल। प्राकारनामानि। 'कोट'। देहलीदीपन्यायाद् वप्रमपि। 'वप्रं [5]सालं प्राकारमाहुररर [6]कवाटं च' इति हलायुध (अ मा २ १३२)॥ अनुक्तम्—'कपिशीर्षं तु सालाग्रम्'। सालाग्रनाम। भाषया 'कोटकोम्म'॥ प्राचीनं—वृति। सालावृतिनाम॥ अनुक्तम्—'आवेष्टको वृतिर्वाटी'। कण्टकशाखावरणनामानि। 'मुलकंचे'॥ २–३॥

[1] वीथिका° $B_3$ [2] दर्शनी $B_1$ [3] पुरस्तात् $B_3$ [4] $A_1$ adds वप्रमस्त्रियाम् [5] शालमिति मुद्रितग्रन्थे [6] कपाटं $B_1$, मुद्रितग्रन्थे च

**भित्तिः स्त्री कुड्यमेडूकं यदन्तर्न्यस्तकीकसम् ।**
**गृहं गेहोदवसिते वेश्म सद्म निकेतनम् ॥ ४ ॥**
**निशान्तवस्त्यसदनं भवनागारमन्दिरम् ।**
**गृहाः पुंसि च भूम्न्येव निकाय्यनिलयालयाः ॥ ५ ॥**

(वि.) भित्तिरिति—भिद्यत इति भित्ति । स्त्रियाम् । 'भिदिर् विदारणे'। कुड्या साधु कुड्यम् । कुड्यत इति वा । 'कुडि सघाते'। [1]मृन्मयावरणनामनी ॥ इल्यते क्षिप्यतेऽस्थि अन्तरिति एडूकम् । 'इल स्वप्नक्षेपणयो'। सास्थिभित्तिनाम ॥ [2]गृह्णाति सर्वमिति गृहम् । 'ग्रह उपादाने'। गाह्यत इति गेहम् । 'गाहू विलोडने'। वल्कलादिना उद् ऊर्ध्वमवसीयत इत्युदवसितम् । उदवसीयते बध्यते वशादिभिरिति वा । 'षिञ् बन्धने'। विशन्त्यस्मिन्निति वेश्म । 'विश प्रवेशने'। सीदन्ति तिष्ठन्त्यत्रेति सद्म । 'षद्लृ विशरणगत्यवसादनेषु'। [3]निकेतयन्ति निवसन्त्यस्मिन्निति निकेतनम् । 'कित [4]निवासे'। निकेत्यते स्थीयतेऽस्मिन्निति वा । नितरां शाम्यति [5]दु खमत्रेति निशान्तम् । 'शमु उपशमे'। अवश्य निशायामम्यते गम्यत इति वा । 'अम गत्यादिषु'। [6]वस्तु साधु वस्त्यम् । 'वस निवासे'। अवस्त्यमिति पाठे अवस्त्यायते सघीभवतीत्यवस्त्यम्[7] । 'स्त्यै शब्दसघातयो'। सीदन्त्यत्र सदनम् । 'षद्लृ विशरणादौ'। भवन्ति [8]बाला अत्रेति भवनम् । 'भू सत्तायाम्'। अगा वृक्षा ईर्यन्त नीयन्ते स्वनिर्माण[9] इत्यगारम् । 'ईर प्रेरणे'। अगान् वृक्षान् स्तम्भभूतानियर्तीति वा । 'ऋ गतौ'। मन्दन्ते [10]मोदन्तेऽत्रेति मन्दिरम् । 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु'। मन्द्यन्ते सुप्यन्तेऽत्रेति वा । गृहशब्द पुसि भूम्न्येव[11] । गृह्णन्ति प्रविष्टानिति गृहा । 'ग्रह उपादाने'। चात् क्लीबमपि । गृहाणि । निचीयते द्रव्यमत्रेति निकाय्य । 'चिञ् चयने'। निलीयन्ते आलीयन्ते जना अत्रेति निलय । आलयश्च । 'लीङ् श्लेषणे'। गृहनामानि ॥ ४–५ ॥

[1] मृण्मय° $D_2$, $K_5$ $K_6$ [2] गृह्यते पुरुषेणार्जित धनमिति $Pt_2$, $F_2$ omits 5 pages [3] निरेतन्ति $F_2$ [4] रोगापनयने च $W_2$ [5] दु खानि $W_2$ [6] वस्तो $J_2$ [7] अपस्त्यायते सघीभवतीति अपस्त्यम् $J_2$ [8] बाला $B_1$, भवन्त्यस्मिन् पुत्रादय $F_2$ [9] स्वनिर्माणाय $B_1$ [10] मोद प्राप्नुवन्ति $W_2$ [11] गृहा भूम्नि पुस्येवेति नियमो नास्ति $K_6$, $W_2$

(पा.) भित्ति—कुड्यम् । कुड्यनामनी ॥ एडूकं—कीकसम् । अन्तर्गतास्थि-कुड्यनाम । 'भेत्तिनकोड[1]'। एडुकमित्यप्यस्ति । 'एडुकमन्तर्गतास्थिकुड्य स्यात्' इति

रत्नकोश ॥ गृह—उदवसितम् । गेहोदवसितशब्दयोर्गृहशब्देन[2] सामानाधिकरण्य लिङ्गान्तरसभावनार्थम् । 'न नोदवसित न स्त्री गेह पुभूम्नि वा गृहम्' इति वैजयन्ती (पृ १६०, श्लो १९)। वेश्म—सदनम्। वस्तमित्यन्त स्थादिपाठे 'वस्त वस्त्य निकेतनम्' इति वैजयन्ती (पृ १६०, श्लो १७)। पवर्गादिपाठे 'सपद्गुणातिशयपस्त्य रुच [3]तवेति' इति धर्मशर्माभ्युदयपद्मचित्रम् (१९ ९९)। भवनागारमन्दिरम्—आलया । गृहनामानि ॥ ४–५ ॥

[1] °गाड $B_3$ [2] °शब्दसामाना° $A_1$ [3] तवेति इति मुद्रितग्रन्थे.

**वासः कुटी द्वयोः शाला सभा संजवनं त्विदम् ।**
**चतुःशालं मुनीनां तु पर्णशालोटजोऽस्त्रियाम् ॥ ६ ॥**

(वि.) वास इति—[1]वसन्त्यस्मिन्निति वास । 'वस निवासे'। कुटति कुटिलीभवतीति कुटी। 'कुट कौटिल्ये'। कुम्यन्ते पशवो [2]वध्यन्तेऽस्मिन्निति वा। कुटी द्वयो । शलन्त्यस्यामिति शाला। 'शल[3] गतौ'। [4]शाल्यते वा। 'शाल श्लाघायाम्'। [5]सह भान्त्यस्यामिति सभा। 'भा दीप्तौ'। सभागृहनामानि ॥ सजवन्ते[6] सगच्छन्ते चतस्र शाला अत्रेति सजवनम्। [7]सवहनमिति पाठ सवहन्ति मिलन्त्यत्रेति। गत्यर्थो धातुरत्र। चतस्र शाला समाहृता अत्रेति चतु शालम्[8]। चतु शालगृहनामनी ॥ पर्णै [9]कृता शाला पर्णशाला। उटैस्तृणपर्णर्जायत[10] इति उटज । 'जनी प्रादुर्भावे'। मुनिसदननामनी ॥ ६ ॥

[1] $W_1$ adds विशेषेण [2] सगच्छन्ते $K_6$ [3] 'शल चल आशुगमने' $K_2$, $K_6$ [4] शालते $K_6$, $W_2$ [5] $F_2$ adds पुत्रादिभि [6] $F_2$, $Pt_2$ add मिथ [7] सहननमिति पाठे सहन्ति मिलन्त्यत्रेति। 'हन हिंसागत्यो'। गत्यर्थो धातुरत्र $B_1$, $J_2$, $K_5$ [8] चतसृणा शालाना समाहार $Pt_2$ [9] पर्णै शालत इति $F_2$ [10] $K_6$ omits पर्णै

(पा.) वास—सभा। गृहनामानि। अनुक्तम्—'निवासावसथावासा वास्तस्त्री निर्वृत कुलम्'। एतानि षट् च। सजवन—चतु शालम्। चतु शालगृहनामनी। 'तोट्टिल्लु'॥ मुनीना—अस्त्रियाम्। आश्रमनामनी। 'आश्रमे तु पर्णशालोटजमस्त्रियाम्'[1] इति वैजयन्ती (पृ १६१, श्लो २६)॥ ६॥

[1] '°उटजोऽस्त्रियाम्' इति मुद्रितग्रन्थ

**चैत्यमायतनं तुल्ये वाजिशाला तु मन्दुरा ।**
**आवेशनं शिल्पिशाला प्रपा पानीयशालिका ॥ ७ ॥**

(वि.) चेत्यमिति—मृदादिना[1] चीयत[2] इति चैत्यम् । 'चिञ् चयने' । [3]आयतन्तेऽस्मिन्नित्यायतनम् । 'यती प्रयत्ने' । [4]मुन्यालयनामनी ॥ वाजिना[5] शाला वाजिशाला । मन्दन्तेऽत्राश्वा[6] इति मन्दुरा । 'मदि स्तुत्यादौ' । वाजिशालानाम ॥ आविशन्त्यत्र कर्मकारा[7] इत्यावेशनम् । शिल्पिना शाला । [8]शिल्पिशालानाम ॥ प्रपिबन्त्युदकमस्यामिति[9] प्रपा । 'पा पाने' । पानीयस्य जलस्य शाला । पानीयशालानाम ॥ ७ ॥

[1] पाषाणादिना $F_2$ $Pt_2$　[2] चय्यत $K_2$　अत्र for अस्मिन् $K_8$, $W_2$
[4] मुनेरालय° $K_5$　[5] $F_2$ adds अश्वाना　[6] वाजन $F_2$　[7] कमकारयितार $B_1$, $K_5$ $Pt_2$, $W_2$　[8] शिल्पशाला $K_5$ $W_2$　[9] $K_2$ adds प्रजा .

(पा.) चैत्यम्—तुल्ये । देवसदननामनी । तुल्ये इत्यनेनार्थान्तरेऽपि तुल्यत्वम् ।

'चैत्य देवकुले बुद्धबिम्बेऽप्युद्देशपादपे[1] ।
देवसद्मन्यायतन सद्ममात्रेऽपि तद्विदु ॥'

इति । वाजिशाला—मन्दुरा । [2]हयशालाया मन्दुरा स्यात् । अनुक्तम्—'चतुर हस्तिना शाला' । [3]गजालयश्चतुर स्यात् । 'शाला सधानिनी गवाम्' । गवा शाला सधानिनी स्यात् । आवेशन शिल्पिशाला । कुलालपाकपुटी च कारोरव्यासवश्च पल्याणकारकचकिश्च नापितखरकुटिश्च चित्रकारजालिनी च पाटसालिकतन्तुवायगर्तिकादिक च सर्वमावेशन स्यात् ॥ प्रपा पानीयशालिका । पानीयशालानाम ॥ अनुक्तम्—'सत्रशाला शुभस्थली' । सत्रशालानामनी[4] ॥ ७ ॥

[1] उद्दय° $B_3$　[2] हयलाय $B_3$　[3] गजलाय $A_1$, $B_3$　[4] °शालिका° $A_1$

**मठश्छात्रादिनिलयो गञ्जा तु मदिरागृहम् ।**
**गर्भागार वासगृहमरिष्ट सूतिकागृहम् ॥ ८ ॥**
**(कुट्टिमोऽस्त्री निबद्धा भूश्चन्द्रशाला शिरोगृहम्)**

(वि.) मठ इति—[1]मठन्त्यत्रेति मठ । 'मठ मदनिवासयो' । [2]शिष्यापत्यादि निवासनाम ॥ गञ्जन्ति [3]शब्दायन्ते मत्ता अस्यामिति गञ्जा । 'गजि शब्दे' । मदिराया मद्यस्य सधानगृह मदिरागृहम् । सुरागृहनामनी ॥ [4]गर्भेऽन्त अगारम् गर्भागारम् ।

वासाय[5] गृह वासगृहम् । गृहान्तर्गृहनामनी[6] । [7]कृतरक्षत्वाद् ग्रहैर्न रिष्यत इत्यरिष्टम् । 'रिप हिंसायाम्' । सूतिकाया अभिनवसूतिकाया गृहम् । सूतिकागृहनामनी ॥ ८ ॥

[1] मठ्य ते छात्रादिभिरिति $F_2$ $Pt_2$  [2] छात्रोऽन्तेवासी आदिर्येषा ते परिव्राजक्षपणकादय तेषा निलय $Pt_2$  [3] स्वैरमाल्पन्ति $F_2$  [4] निर्वातत्वात् गर्भ इव $Pt_2$  [5] वासस्य शयनस्य $Pt_2$  [6] गृहान्तरित° $W_2$  [7] $Pt_2$ adds मन्त्रादिना

(पा.) मठ—निलय । अन्तेवास्याश्रयो मठ स्यात् ॥ गञ्जा—मदिरागृहम् । सुराविक्रेतृगृह गञ्जा स्यात् । [1]स गञ्जाशब्द पुलिङ्गश्चेत् भाण्डागारनामापि स्यात् । 'भाण्डागारे पुमान् गञ्ज स्त्री तु खन्या सुरागृहे' इति वैजयन्ती (प्र २३२, श्लो २६) ॥ गर्भागारम् । कोष्ठगृहनाम । 'गर्भागारोऽपवरक' इति वैजयन्ती (प्र १६३, श्लो ५८) । वासगृहम् । सज्जिकागृहनाम । 'उशन्ति शयनस्थान वासागार विशारदा' इति हलायुध (अ मा २ १४०) । अरिष्ट सूतिकागृहम् । प्रसूतिगृहनाम ॥ ८ ॥

[1] $B_3$ omits  [2] अपवरक गर्भगृहम् $A_1$ $B_3$

**वातायन गवाक्षोऽथ मण्डपोऽस्त्री जनाश्रयः ।**
**हर्म्यादि धनिनां वासः प्रासादो देवभूभुजाम् ॥ ९ ॥**

(वि.) वातायनमिति—वातस्यायन[1] वातायनम् । गौश्चक्षुरक्ष्यत इति गवाक्ष[2] । 'अक्षू व्याप्तौ' । गोचक्षुरिव वर्तुलाकारत्वाद्वा । जालकनामनी ॥ मण्ड्यते जनैरिति मण्डप । 'मडि भूषायाम्' । जनानामाश्रय जनाश्रय । सर्वजनाश्रयशालानाम ॥ मनो हरतीति हर्म्यम् । 'हृञ् हरणे' । धनिकगृहनाम ॥ [3]प्रसीदन्त्यस्मिन्निति प्रासाद । 'पद्लृ विशरणगत्यवसादनेषु' । प्रमुदिता सीद त्यस्मिन्निति वा । देवनृपगृहनाम ॥ ९ ॥

[1] $F_2$, $Pt_2$ add मार्ग  $F_2$ adds अयत यात्यनेनेत्ययनम्  अय पय गतौ  [2] गवा किरणानामक्षो व्यापारोऽत्रेति वा $F_2$ $Pt_2$  [3] $F_2$ adds देवादय

(पा.) वातायन—स्यात् । जालकनामनी । 'दीर्घोश्च कणगच्छिद्र तद्गवाक्षमिति स्मृतम्' इति मयमतप्रयोगान्नपुसकम् । 'विलोलनत्रभ्रमरैर्गवाक्षा सहस्रपत्रावरणा इवासन्' इति रघुवशप्रयोगात् (७ ११, कु स ७ ६२) पुलिङ्ग । गवाक्षनामानि ॥ अनुक्तम्—'कुट्टिमोऽस्त्री निबद्धा भू' । पाषाणादिनिबद्धभूमिनाम ॥ 'चन्द्रशाला शिरोगृहम्' । गृहोपरि गृहनामनी । मण्टपोऽस्त्री जनाश्रय । [1]मण्टपनामनी ॥ हर्म्यादि—

वासः। धनिकानां निवासः हर्म्यादिसंज्ञकः स्यात्। आदिशब्दः पर्यायवचनः। 'हर्म्यं च मालिका'। प्रासादो देवभूभुजाम्। देवनृपवासः[2] प्रासादसंज्ञः स्यात्॥ ९॥

[1] जनाश्रयशालानाम $B_2$ [2] °आवासः $B_2$

**सौधोऽस्त्री राजसदनमुपकार्योपकारिका।**
**स्वस्तिकः सर्वतोभद्रो नन्द्यावर्तादयोऽपि च॥ १०॥**
**विच्छन्दकः प्रभेदा हि भवन्तीश्वरसद्मनाम्।**

(वि.) सौध इति—[1]सुधायोगात् सौधः। राज्ञः सदनं राजसदनम्। [2]राजभवननाम॥ उप समीपे क्रियत इत्युपकार्या[3]। प्रयाणे[4] उपकरोतीति उपकारिका। पटकृतराजवेश्मनामनी॥ स्वस्ति शुभं कायतीति स्वस्तिकः। 'कै शब्दे'। सर्वतो भद्रमस्येति सर्वतोभद्रः। नन्दिमानन्दम् आवर्तयतीति नन्द्यावर्तः[5]। आदिग्रहणाद् रुचकवर्धमानादि गृह्यते। विशिष्टं छन्दोऽस्य विच्छन्दकः। [6]एते ईश्वरसद्मनां विच्छन्दकप्रभेदाः रचनाविशेषा भवन्ति। रचनाविशेषयुक्तनृपगृहाणां नामानि॥ १०॥

[1] सुधालिप्तत्वात् $F_2$ $K_6$ adds अस्त्रियां [2] राजसदन° $K_6$ $W_2$ [3] पटादिभिरुपक्रियते $F_2$ [4] प्रयाणाय $W_2$ $Pt_2$ [5] नन्दमानन्दमावर्तयतीति $Pt_2$ $W_2$, $Pt_2$ add वृतु वर्तने [6] एतानि ईश्वरसद्मनामानि $W_2$

(पा.) सौधो—राजसदनम्। राजगृहनामनी॥ उपकार्योपकारिका। [1]पटादिकृतराजगृहस्थाननामनी। 'गृहस्थानं मतं राज्ञामुपकार्योपकारिका' इति हलायुधः (अ. मा. १३५)॥ स्वस्तिक—सद्मनाम्। स्वस्तिकसर्वतोभद्रनन्द्यावर्तरुचकवर्धमाना राजगृहरचनाविशेषाः। तत्स्वरूपं [4]तु—

'अपरान्तगतोऽलिन्दः प्रागन्तगतौ तदुत्थितौ चान्यौ।
तदवधिविधृतश्चान्यः प्राग्द्वारं स्वस्तिकं शुभदम्॥
अप्रतिषिद्धालिन्दं समन्ततो वास्तु सर्वतोभद्रम्।
नृपविबुधसमूहानां कार्यं द्वारैश्चतुर्भिरपि॥
नन्द्यावर्तमलिन्दैः शालाकुड्यात् प्रदक्षिणान्त्यगतैः।
द्वारं पश्चिममस्मिन् विहाय शेषाणि कार्याणि॥
प्राक्पश्चिमावलिन्दावन्त्यगतौ तदवधि स्थितौ शेषौ।
रुचके द्वारं न शुभं पूर्वोत्तरतोऽन्यानि शस्तानि॥

द्वारालिन्दोऽन्त्यगतः प्रदक्षिणोऽन्यस्ततश्चान्यः ।
रुद्धश्च वर्धमानो द्वारं तु न दक्षिण कार्यम् ॥'[5]

इति ॥ १० ॥

[1] A₁ omits पटादिकृत°. [2] B₃ omits स्थान°. [3] स्मृतं B₁; मुद्रितग्रन्थे च.
[4] निरूप्यते A₁. [5] बृहत्संहिता ५२. ३१-५

**स्त्र्यगारं भूभुजामन्तःपुरं स्यादवरोधनम् ॥ ११ ॥**
**शुद्धान्तश्चावरोधश्च स्यादट्टः क्षौममस्त्रियाम् ।**
**प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके ॥ १२ ॥**

(वि.) स्त्र्यगारमिति—स्त्रीणामगारं स्त्र्यगारम् । अन्तः पूर्यत इत्यन्तःपुरम् । 'पृ पालनपूरणयोः' । अन्तरभ्यन्तरे पुरं गृहमिति वा । अवरुध्यन्ते [1]राज्ञः स्त्रियोऽत्रेत्यवरोधनम् । 'रुधिर् आवरणे' । अवरोधश्च । [2]शुद्धाः सुरक्षिता अन्तिकाः समीपवर्तिनोऽत्रेति शुद्धान्तः । [3]राजस्त्रीणामगारनामानि ॥ अट्टन्ते हिंसन्ति [4]योधा अत्र स्थित्वेत्यट्टः । 'अट्ट [5]अतिक्रमणहिंसनयोः' । योधा अत्र क्षुयन्तीति क्षौमम् । 'टुक्षु शब्दे' । प्राकाराग्रस्थितरणगृहनामनी ॥ प्रहन्यते घटादिरनेनेति प्रघाणः । प्रघणश्च[6] । 'हन हिंसागत्योः' । अल्यते [7]भूष्यत इत्यलिन्दः । आलिन्द इति वा पदच्छेदः । 'अल [8]भूषणपर्याप्तिशक्तिवारणेषु' । [9]बहिर्द्वारोल्पगृहनामनी ॥ ११–१२ ॥

[1] राजस्त्रियः J₂, K₂, K₅, K₆, W₂. [2] शुद्धाः परिशुद्धाः रक्षका अन्ते पुरसमीपेऽस्येति F₂, Pt₂. [3] B₁, I, K₂, K₃, K₅ add नृपस्त्रीणां च नामानि. [4] F₂ adds परबलमिति. [5] अतिक्रम° W₂, Pt₂. [6] प्रविशद्भिर्जनैर्हन्यत इति वा Pt₂. [7] अलक्रियते F₂ [8] F₂, W₂ omit शक्ति. [9] °द्वारे W₂.

(पा.) स्त्र्यगारं—अवरोधश्च । [1]राजस्त्रीगृहनामानि । तात्स्थ्यात् तद्व्यपदेश इति [2]राजस्त्रीनामान्यपि[3] ।

'कलत्रवन्तमात्मानमवरोधे महत्यपि ।
तया मेने मनस्विन्या लक्ष्म्या च वसुधाधिपः' ॥

इति रघुवंशे (१. ३२) । स्यादट्टः—अस्त्रियाम् । अट्टनामनी । 'अट्टुग' ॥ 'कोद्रङ्गस्तु तमङ्गः स्यात्[4]' । तमङ्गनामनी । भाषया 'तमगम्' ॥ प्रघाण—प्रकोष्ठके । द्वारपार्श्वाल्पगृहनामानि ॥ अलिन्द इति ह्रस्वादिः । आलिन्द इति दीर्घादिश्च भवति । ह्रस्वादेरुदाहरणम् 'प्रघाणः प्रघणोऽलिन्दः' इति रत्नकोशः । दीर्घादेः—'गृहैकदेश आलिन्दः

प्रघाणः प्रघणस्तथा' इत्यमरमाला ॥ अनुक्तम्—'सर्वेशिनी मुखे शाला'। मुखशालानाम। भाषया 'मोगसाल[5]' ॥ ११-१२ ॥

[1] वरारोहा° $A_1$. [2] मस्तकाचिनी° $A_1$ [3] $A_1$ adds भवति. [4] $B_3$ adds 'कोदङ्गस्तु तमङ्गकः' इति वैजयन्ती [5] $A_1$ adds 'चन्द्रशाला शिरोगृहम्'। पृथुगृहोपरि गृहनाम.

**गृहावग्रहणी देहल्यङ्गणं चत्वराजिरे।**
**अधस्ताद्दारुणि शिला नासा दारूपरि स्थितम् ॥ १३ ॥**

(वि.) गृहावग्रहणीति—गृह गृहद्वारशाखा अवगृह्यतेऽनयेति गृहावग्रहणी। 'ग्रह उपादाने'। दिह्यते [1]पङ्कादिनेति देहली। 'दिह उपचये'। द्वारमूले तिर्यक्स्थितपूज्यदारुनामनी ॥ अङ्गन्त्यनेनेत्यङ्गणम्। अङ्गनं वा। 'अगि गतौ'। [2]चतन्ते याचका अत्र स्थित्वेति चत्वरम्। 'चते याचने'। अजन्ति क्षिपन्ति [3]धान्यादिकमत्रेति अजिरम्। 'अज गतिक्षेपणयोः'। गृहस्य पुरःप्रदेशनामानि ॥ अक्ष्यते शाल्यत इति शिला। 'शाल्ह श्लाघायाम्'। देहल्यधःस्थितपूज्यह्रस्वदारुनाम ॥ गृहस्य नासिकेव तिष्ठतीति नासा। द्वारोपरि तिर्यक्स्थितपूज्यदारुनाम[4] ॥ १३ ॥

[1] सुधादिना $Pt_2$, देह प्रवेशेन लातीति वा 'ला आदाने' $F_2$, $Pt_2$ [2] $Pt_2$ adds अत्र स्थित्वा चत्यते याचकैरिति वा [3] $F_2$ adds आतपसंबन्धात् [4] पूज्यस्य दारुणो $B_1$, $I$, $K_2$, $K_3$.

(पा.) गृहावग्रहणी देहलि[1]। द्वारमूले तिर्यक्प्रसारितपूज्यदारुनामनी। 'कडप' ॥ अनुक्तम्—'उत्तराङ्गं तु तत्तिर्यग्द्वारस्योपरि दारु यत्'। द्वारोपरि तिर्यक्प्रसारितदारु उत्तराङ्ग स्यात्[2] ॥ अङ्गण—अजिरे। प्राङ्गणभूनामानि। [3]अङ्गत्यस्मिन्नित्यङ्गणम्। पृषोदरादित्वाण्णत्वमिति सुभूतिटीका। अङ्गनमिति च कतिचन[4] कथयन्ति ॥ अधस्तात्—स्थितम्। सन्धिकर्मोचितकाष्ठयोरधस्तनकाष्ठं शिला स्यात्। उपरितनकाष्ठं नासा स्यात् ॥ १३ ॥

[1] देहली $B_3$ [2] $A_1$ adds उत्तरासनं च, उत्तरङ्गं $B_3$ [3] $B_3$ omits the line [4] कतिचित् $B_3$

**प्रच्छन्नमन्तर्द्वारं स्यात् पक्षद्वारं तु पक्षकः।**
**वलीकनीध्रे पटलप्रान्तेऽथ पटलं छदिः ॥ १४ ॥**

(वि.) प्रच्छन्नमिति—प्रच्छाद्यत इति प्रच्छन्नम्। 'छद अपवारणे'। अन्त स्थित द्वारम् अन्तर्द्वारम्। गृहान्तर्गतद्वारनामनी॥ [1]पक्षे पार्श्वे क्रियत इति पक्षक [2]। पार्श्वकृतद्वारनामनी॥ वलति सवृणोति [3]भित्ते बहि प्रदेशमिति वलीकम्। 'वल सवरणे'। [4]कुड्यादेर्नितरा बहिर्म्रियत[5] इति नीव्रम्[6]। 'वृञ् वरणे'। जल बहिर्नीयत इति वा। 'णीञ् प्रापणे'। पटलस्य प्रान्त पटलप्रान्त। छदिप प्रान्तनामानि॥ पट पटकार्यं [7]लातीति पटलम्। 'ला दाने'। छाद्यतेऽनेनेति छदि। 'छद अपवारणे'। [8]सान्तोऽय नपुसकलिङ्ग। छदिषो नामनी॥ आन्ध्रभाषाया 'कप्पु'॥ १४॥

[1] $F_2$, $Pt_2$ add रहस्य  [2] रहस्य पक्षयो स्थित द्वार पक्षद्वारम् F. पक्षे पार्श्वे द्वार $Pt_2$  [3] कुड्यभिति $Pt_3$  [4] कुन्या $W_2$  [5] $Pt_2$ add अनेनेति  [6] नीध्रमिति वा पाठ $K_6$ $W_2$  [7] $F_2$ adds आदत्त  [8] सकारान्त $K_2$

(पा.) प्रच्छन्नम्—स्यात्। अन्तर्द्वारनाम[1]। भाषया 'लोनि वाकिलि'। पक्षद्वार—पक्षक। पक्षद्वारनाम। नपुसकोऽप्यस्ति। '[2]पक्षक तु पक्षद्वार खडक्किका' इति वैजयन्ती (पृ १६२, श्लो ४२)। वलीक—प्रान्ते। पटलप्रान्तनामानि॥ 'चारुनीव्रो वलिक [3] पटलप्रान्त इत्यपि' इति पुरकाण्डे गोपालित। अथ पटल छदि। अपवारणनामनी। आन्ध्रभाषाया 'कप्पु'। पटलशब्दसाहचर्याच्छदि शब्दो नपुसक [4]॥ १४॥

[1] प्रच्छन्न स्यात् $A_1$  [2] $B_3$ adds 'पक्षशाला तु पक्षक' इति वैजयन्ती (पृ १६०, श्लो २४)  [3] वलीक $B_3$  [4] $B_3$ adds °लिङ्ग

**गोपानसी तु वलभी छादनेऽवक्रदारुणि।**
**कपोतपालिकायां तु विटङ्कं पुंनपुंसकम्॥ १५॥**

(वि.) गोपानसीति—गोपायतीति [1]गोपानसी। 'गुपू रक्षणे'। वलतीति[2] [3]वलभी। 'वल सवरणे'। [4]पटलोपस्थितस्यावक्रस्य दारुणो नामनी। वक्रदारुणीति वा [5]पदच्छेद। तदा पटलप्रान्ते शिखेव स्थितस्य वक्रदारुणो नामनी॥ कपोतान् पालयतीति कपोतपालिका। 'पाल रक्षणे'। विशिष्य[6] टङ्क्यतेऽत्रेति विटङ्कम्। 'टकि बन्धने'। पुनपुसके। चक्रदार्वध पक्षिविश्रमाय [7]क्षिप्तस्य दारुणो नामनी॥ १५॥

[1] गोपायतीति गोपा, नासव नासा, गोपा चासौ नासा च $Pt_2$, 'गुपू गोपने' $K_3$ $K_6$  [2] $D_2$, $Pt_2$ add संवृणोति  [3] वल्भि $B_1$, $D_2$ I, $K_2$ $K_3$  [4] °उपरि' $K_6$  [5] पदविभाग $K_2$  [6] विशिष्ट $K_2$, I, $W_2$  [7] विक्षिप्तस्य $K_2$

(पा.) गोपानसी—वक्रदारुणि । [1]वलभिच्छादनवक्रदारु गोपानसी स्यात् । 'गोप्पुलु' । कपोतपालिकायां—पुनपुंसकम् । [2]कपोतादिपक्षिणामावासार्थं[3] निर्मितकाष्ठ [4] विशेषनाम ॥ १५ ॥

[1] वल्भी° B₃ [2] A₁ adds गृहासक्त° [3] कपोतादीनाम् for पक्षिणाम् B₃ [4] °दारु° B₁

**स्त्री द्वार्द्वार प्रतीहारः स्याद् वितर्दिस्तु वेदिका ।**
**तोरणोऽस्त्री बहिर्द्वारं पुरद्वार तु गोपुरम् ॥ १६ ॥**

(वि.) स्त्रीति—द्वार्यते [1]जनोऽनेनेति द्वा । रेफान्तस्त्रीलिङ्ग । द्वार च । 'द्वृ [2]संवरणे' । प्रतिह्रियते नूतनो जनोऽनेनेति प्रतीहार[3] । 'हृञ् हरणे' । गृहद्वारनामानि ॥ विगता तर्दि श्रमोऽनेनेति वितर्दि । 'तर्द हिंसायाम्' । श्रम वितर्दयतीति वा । पथिकैर्विद्यते लभ्यत इति वेदिका । 'विद्लृ लाभे' । विदन्त्यस्यामिति वा । 'विद ज्ञाने' । वेदिकानामनी ॥ मङ्गलार्थं बन्धून् [4]त्वरयतीति तोरणम् । 'तुर त्वरणे' । द्वाराद्बहि बहिर्द्वारम् । द्वाराद्बहिर्वन्दनमालाबन्धनाय[5] रचितस्तम्भद्वयनाम । गोप्यते [6]पौरैरिति गोपुरम् । 'गुपू रक्षणे' । पुरद्वारनाम ॥ १६ ॥

F₂ adds नूतनो वार्यते नूतनपुरुषोऽत्र Pt₂ [2] वरणे K₈ वारणे W₂ [3] प्रतिहार K₈ W₂ [4] त्वरिता भव त्वम् त्वम Pt₂ [5] मण्डनमाला° W₂ [6] पुरस्थैरिति F₂ द्वारै Pt₂

(पा.) स्त्री—प्रतीहार । द्वारनामानि ॥ स्यात्—वेदिका । वेदिकानामनी ॥ तोरणो बहिर्द्वारम् । [1]बाह्यद्वार तोरण स्यात् । 'तलयाकिलि' । तदग्रे मङ्गलार्थमाबद्ध " स्रग्विशेषोऽपि तोरण स्यात् । 'बुधैर्वन्दनमाला तु तोरण परिकीर्तितम्[3]' इति हलायुध (अ मा २ १४६) । पुरद्वार—गोपुरम् । नगरद्वार गोपुर स्यात् । 'ऊरुवाकिलि' ॥ १६ ॥

[1] बहिर्द्वारनाम B₃ [2] निबद्ध° B₁ [3] °कीर्त्यते A₁, मुद्रितग्रन्थे च

**कूट पूर्द्वारि यद्धस्तिनखस्तस्मिन्नथ त्रिपु ।**
**कपाटमरर तुल्ये तद्विष्कम्भोऽर्गल न ना ॥ १७ ॥**

(वि ) कूटमिति—हस्तिनो [1]नखमिव तिष्ठतीति हस्तिनख । पूर्द्वारमृत्कूटनाम ॥ [2]क शिर. पाटयतीति कपाटम्[3] । क वात वटति वेष्टयतीति कवाट वा । 'पट भेदने'

'वट वेष्टने'। इयर्ति यातायातप्रकारेणेति अररम्। 'ऋ गतौ'। द्वारपिधाननामनी॥ तत् कपाट विष्कभ्नातीति विष्कम्भ। 'स्कम्भु[4] रोधनस्तम्भनयो'। [5]अरेण कर्षणेन गलतीत्यर्गलम्। 'गल अदने स्रवणे च'। कवाटानुद्घाटनाय निर्मितदारुयन्त्र-नामनी॥ १७॥

[1] नख इव $W_2$ [2] $Pt_2$ adds प्रविशता [3] कैर्वाते पाटयति भापत इति वा। 'पट शब्दे' $F_2$, $Pt_2$ [4] 'ष्टम्भि स्कभि प्रतिबन्धने' $K_3$ $K_5$ [5] अरणे कर्षणे $F_2$ न गलतीत्यर्गलम् $J_2$ $K_3$, $K_5$, परेण $K_5$

(पा.) कूट—तस्मिन्। पुरद्वारेऽश्मनिभमृत्कूटो हस्तिनख स्यात्। 'शनैरनीयन्त रयात् पतन्तो रथा क्षिति हस्तिनखादखेदैः' इति माघ (शिशु ३ ६८)। 'बकदारम्'। कवाटम्—तुल्ये। द्वारपिधाननामनी॥ त्रिलिङ्ग कवाट। कपाट, कवाटी, कपाटम्। [1]पवर्गमध्य इति रभसकोशकारेणाभ्यधायि। कपाट कपाटीति। अरर नपुंसकमेव। 'अथ त्रयी कपाटोऽपि कपाटोऽप्यरर न पुम्' इति वैजयन्ती[2] (पृ० १६२, श्लो ४६)। अररीत्यपचयविवक्षाया स्त्री। पुलिङ्गोऽररिशब्दोऽप्यस्ति।

'अप्यन्वेष्ट रतिगृहगुहा गन्धवाहेन कार्ये
प्रेर्यन्तेऽमी परमररयो हर्म्यवातायनानाम्'।

इति चन्द्रकाव्यम्। अनुक्तम्—'घर्घरो द्वितलादीनामधोद्वारकवाटिका'। द्वितलत्रितलादि-गृहद्वारकवाटिका घर्घर स्यात्। तद्विष्कम्भो—न ना। कवाटधारकलोहदण्डादिकमर्गल स्यात्[3]। 'द्वारयन्त्र तु तालकम्' इत्यर्गलपर्यायश्च पृथक्। 'तलपुघडिय'। 'वितण्डस्त्वर्गला त्रयी' इत्ययस्तालकपर्यायोऽपि पृथक्। 'वीगेमु'॥ १७॥

[1] पकारमध्यम $B_9$ [2] 'अथ त्रय्यी कवाटोऽपि कुवाटोऽप्यरर न पुम्' इति मुद्रितग्रन्थे [3] दारुदण्डमय यत्कवाटधारकम् $A_1$

**आरोहणं स्यात् सोपानं निश्रेणिस्त्वधिरोहिणी।**
**संमार्जनी शोधनी स्यात् संकरोऽवकरस्तथा॥ १८॥**

(नि.) आरोहणमिति—आरोहन्त्यनेनेत्यारोहणम्। 'रुह बीजजन्मनि प्रादुर्भावे च'। सह उपानमन्त्यनेनेति सोपानम्। 'णम प्रह्वत्वे शब्दे'। सोपाननामनी॥ [1]निश्रयन्ति ऊर्ध्वतलमनयेति निश्रेणि। 'श्रिञ् सेवायाम्'। अधिरोहत्यनयेति अधिरोहिणी[2]। दारुनिर्मितसोपाननामनी॥ समार्ज्यतेऽनयेति[3] समार्जनी। 'मृजूप शुद्धौ'। [4]शोधयत्यनयेति शोधनी। 'शुध शौचे'। अङ्गणादौ [5]रज समूहनिराकरणसाधन [6]

नामनी ॥ तृणादिना सह [7]कीर्यत इति सकर । [8]अवकरश्च । 'कृ विक्षेपे' । तया समार्जन्या एकत्र क्षिप्तरजोनामनी ॥ १८ ॥

[1] निश्चयेन श्रयन्ति उन्नतस्थलमनयेति $F_2$ $Pt_2$ [2] अधिरोहणी $D_2$ [3] $F_2$ adds गृहादिक, समृज्यतेऽनया $Pt_2$ [4] शुध्यतेऽनया $F_2$, $Pt_2$ [5] $K_2$, $K_3$, $K_5$ add कीर्ण° [6] अपनयन° $K_5$ [7] सकीर्यते अवकीर्यते $Pt_2$ [8] अवक्षिप्यत धूल्यादिकमिति $F_2$

(पा.) आरोहण—सोपानम् । सोपाननामनी ॥ निश्रेणि—अधिरोहिणी । अट्टाद्यारोहणार्थं वंशादिनिर्मितयन्त्रनामनी । 'निच्चेन' ॥ समार्जनी—स्यात् । गृहाद् [1]रजस्तृणाद्यपनयनाय [2]निर्मितकामज्जकादिसंदोहनामनी । '[3]पारक' । सकरो—क्षिप्ते । [4]समार्जन्यपनीततृणराशिनामनी । 'कनवुकुप्प' । 'समार्जनी वर्धनी तन्मलेऽवकर-सकरौ' इति वैजयन्तीपाठात् (पृ १६३, श्लो ५९) सकरशब्दोऽवन्त । 'सकारोऽम्नि-चटत्कारे समार्जन्यवमार्जिते[5]' इति विश्वप्रकाशिकापाठात् (पृ १३९, श्लो १५९) सकारो घवन्त । अनुक्तम्—'गोमुत्र तूपवेशनम्[7]' । गृहाद्युपलेपननामनी । 'चिल्लु-ललुकुट[8]' ॥ १८ ॥

[1] रज कण° $A_1$ [2] कामलजकादि° $A_1$ [3] 'चापुड' $B_3$ [4] °अवमर्जित° $A_1$ [5] शोधनीति मुद्रितग्रन्थे [6] 'शङ्करोऽग्निचटत्कारे सम्मार्जन्यवगुञ्जिते' इति मुद्रितग्रन्थे [7] उपलपनम् $B_3$ [8] 'अनुकुट' $B_3$

क्षिप्ते मुख निःसरणं संनिवेशो निकर्षणम् ।
समौ संवसथग्रामौ वेश्मभूर्वास्तुरस्त्रियाम् ॥ १९ ॥

(वि.) क्षिप्त इति—[1]गृहस्य मुखप्रायत्वान् मुखम् । [2]गृहान्नि सरन्त्यनेनेति निःसरणम् । 'सृ गतौ' । गृहादिपुरोदेशनामनी ॥ [3]समन्तात् निविशन्तेऽत्र संनिवेश । 'विश प्रवेशने' । निवृत्त कर्षणमत्रेति निकर्षणम् । 'कृष विलेखने' । पुरादेर्बहि-र्विहरणभूनामनी[4] ॥ सम्यग् वसन्त्यत्रेति संवसथ । 'वस निवासे' । ग्रस्यते[5] भुज्यत इति ग्राम । 'ग्रसु[6] अदने' । पुरादन्यकतिपयगृहसमूहनामनी ॥ वसन्त्यत्र गृहिण इति [8]वास्तु । वेश्मनो भूर्वेश्मभू । वेश्मस्थानभूनामनी ॥ १९ ॥

[1] $D_2$ omits 3 lines [2] नि सार्यतेऽत्रेति $K_6$ [3] संनिविशन्ते $W_2$ [4] °भूमि° $B_1$ [5] $K_6$ adds नियते, नियुज्यते $B_1$, $J_2$, $K_2$, $K_3$, $K_5$ [6] 'ग्रसु ग्लसु अदन' $F_2$, $K_2$, $K_6$ [7] रक्षित्र $F_2$ [8] वास्तु $K_2$ $F_1$, I add 'वस निवासे'

(पा.) मुखं नि सरणम्। [1]गेहादिपुरोभागनामनी ॥ सन्निवेशो निकर्षणम्। गृहाद्यपरभागनामनी। 'इंट्टुवेनक'। समौ—ग्रामौ। ग्रामनामनी। तत्र परिवसथादि-[2] शब्दा अपि सन्ति। 'ग्राम पर्युपसंनिभ्यः प्रतेश्च वसथः पर' इति वैजयन्ती (पृ. १५९, श्लो. २) ॥ वेश्मभूः—अस्त्रियाम्। गृहभूमिर्वास्तु स्यात्। वेश्मशब्द उपलक्षणम्। 'ग्रामादि-भूमिर्वास्त्वस्त्री' इति वैजयन्ती (पृ. १५९, श्लो. १०) ॥ १९ ॥

[1] गृहादि° B₂. [2] °आदयोऽपि B₂

## ग्रामान्तमुपशल्यं स्यात् सीमसीमे स्त्रियामुभे।
## घोष आभीरपल्ली स्यात् पक्कणः शबरालयः॥ २० ॥

## इति पुरवर्गः

(वि.) ग्रामान्तमिति—'ग्रामस्यान्तं[2] ग्रामान्तम्। उपगतः शल्यः कीलको यत्र चिह्नार्थं प्रक्षेपात् उपशल्यम्। 'शल[3] चलनसंवरणयोः'। ग्रामसमीपप्रदेशनामनी॥ सीयते वध्यत इति सीमा। [4]नान्तः। सीमा आकारान्तस्त्रीलिङ्गश्च। 'षिञ् बन्धने'। ग्रामान्तनामनी॥ घोषन्ति गावोऽत्रेति घोषः। '[5]घुषिर् अविशब्दने'। आभीराणां गोपानां पल्ली[6] ग्रामः आभीरपल्ली। गोपालग्रामनामनी॥ पच्यते कदन्नमत्र पक्कणः। 'डुपचष् पाके'। शबन्ति भ्रमन्तीति शबराः। 'शब भ्रमणे'। तेषामालयः शबरालयः। शबरालयनामनी ॥ २० ॥

इति श्रीलिङ्गयसूरिविरचितायाममरकोशपदविवृतौ पुरवर्गः

[1] W₂ omits 3 lines. [2] F₂ adds समीप. [3] 'शल गतौ' F₂; K₂ adds समीपभ्रमणे साधु वा. [4] प्रथमो नकारान्तः द्वितीयस्तु आकारान्तः F₂. [5] 'घुष शुद्धौ' F₂. [6] घृतादिक्रियार्थं जनैः पल्यते गम्यत इति पल्ली J₂, पलन्ति दध्यादिक्रयार्थं अत्रेति, 'पल गतौ' F₂.

(पा.) ग्रामान्तम्—स्यात्। ग्रामान्तनाम॥ अनुक्तम्—'प्रान्तरं ग्रामयोर्मध्यम्'। ग्रामद्वयमध्यं प्रान्तरं स्यात्॥ सीमसीमे—उभे। सीमनामनी। 'द्वयचक्रमसिसुसन्नन्तम्' (३. ५. २४) इति विशेषविधिरबाधितः। 'सीमभिः सस्यसंपन्नैः' इति। 'मर्यादावधि

राघाट [1]। एतानि त्रीणि च ॥ घोष —स्यात्। वल्लवपल्लीनाम[1]। पक्कण शबरालय। किरातालय पक्कण स्यात् ॥ २० ॥

इति [2]श्रीवत्सनृसिंहसूरिसुतमल्लिनाथसूरिविरचितेऽमरपदपारिजाते पुरवर्ग

[1] घोष स्यात् $A_1$  [2] °नरसिंह° $A_1$

---

## ३. शैलवर्गः

**महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः ।**
**अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः ॥ १ ॥**

(वि.) महीध्र इति—महीं [1]धारयतीति महीध्र । 'धृञ् धारणे' [2]। शिखराण्यस्य सन्तीति शिखरी। क्ष्मा बिभर्तीति क्ष्माभृत्। 'डुभृञ् [3]भरणपोषणयो '। हर्तुमशक्य अहार्य । 'हृञ् हरणे'। धरति [4]भुवमिति धर । 'धृञ् [5]धारणे'। पर्वाणि सन्धयोऽस्य सन्तीति पर्वत । नराणामुपजीवनीयत्वाद्[6] अद्यत इत्यद्रि । 'अद भक्षणे'। गा भुव त्रायत इति गोत्र । 'त्रैङ [7]पालने'। कालेन गीर्यत इति गिरि । 'गॄ निगरणे'। ग्रस्यते कालेनेति ग्रावा। 'ग्रसु[8] अदने'। न चलतीत्यचल । 'चल कम्पने'। शिला अत्र सन्तीति शैल । शिलानामुच्चयो राशि शिलोच्चय । पर्वतनामानि ॥ १ ॥

[1] शीलभूतो $Pt_2$ धरतीति $W_2$, $Pt_2$  [2] धरणे $Pt_2$  [3] धारण° $F_2$ $W_2$ 'भृञ् भरणे' $F_2$.  [4] धरामिति $K_6$ धारयति $F_2$ $W_2$ adds धराधरश्च  [5] धरणे $K_6$, $Pt_2$  [6] उपजीव्यत्वात् $K_6$ जीव° $F_1$ $K_2$  [7] त्रा रक्षणे $K_6$  [8] 'ग्रसु ग्लसु अदने' $K_6$, $W_2$.

(पा.) महीध्रे—शिलोच्चया । पर्वतनामानि। 'कुलकीलो भूधर [1]कुण्ड कुण्डिर [2] सानुमानपि'। एतानि पञ्च च ॥ १ ॥

[1] कुड्ड $A_1$  [2] कुड्दर $A_1$

**लोकालोकश्चक्रवालस्त्रिकूटस्त्रिककुत् समौ ।**
**अस्तस्तु चरमक्ष्माभृदुदयः पूर्वपर्वतः ॥ २ ॥**

(वि.) लोकालोक इति—एकस्मिन् भागे लोक्यते, एकस्मिन् भागे न लोक्यत इति [1]लोकालोक । 'लोकृ दर्शने'। चक्राकारेण वलते संवृणोतीति चक्रवाल । 'वल संवरणे'। [2]भुवनमावेष्ट्य स्थितस्य[3] गिरेर्नामनी ॥ त्रय कूटा शिखराण्यस्येति त्रिकूट । अत एव त्रिककुन्[4] । त्रिकूटपर्वतनामनी ॥ [5]सूर्यादिरस्यते अत्रेत्यस्त । 'असु क्षेपणे'। अस्तमनुपलब्धि ग्रहनक्षत्राणां करोतीति वा । चरम पश्चिम स चासौ क्ष्माभृच्च चरमक्ष्माभृत् । चरमगिरिनामनी ॥ सूर्यादयोऽत्र [6]उदयन्त इत्युदय । 'अय पय गतौ'। पूर्वश्चासौ पर्वतश्च पूर्वपर्वत । [7]उदयगिरिनामनी ॥ २ ॥

[1] अस्याभ्यन्तर सूर्यकिरणै प्रकाश्यते न बाह्यमिति प्रकाशाप्रकाशतया लोक्यत न लोक्यत इति $J_2$ $K_3$ $Pt_2$ [2] भुवनम् $B_1$ [3] स्थितगिरे $K_8$ $W_2$ [4] तिस्र (त्रय $Pt_2$) ककुदो यस्य $F_2$ [5] सूर्यादीनस्यत्यत्र $W_2$ सूर्यादिर्नश्यत्यत्र $K_6$ [6] उदयन्ति $K_6$ उद्यन्ति ग्रहा सूर्यादयोऽस्मात् $B_1$ $K_5$ $Pt_2$ [7] पूर्वपर्वतनाम $B_1$, $K_5$

(पा.) लोकालोकश्चक्रवाल । लोकालोकपर्वतनाम ॥ त्रिकूट —समौ । त्रिकूटपर्वतनामनी ॥ अस्त —क्ष्माभृत् । [1]अस्तपर्वतनाम । उदय —पर्वत । [2]पूर्वपर्वतनाम । अनुक्तम्—'मलयश्चन्दनाद्रि स्यात्'। मलयपर्वतनाम ॥ 'मन्थशैलस्तु मन्दर'। मन्दरगिरिनाम । अस्तपर्वतमेव मन्दरपर्वत इति कतिचित् कथयन्ति । 'मन्दरोऽपरशैलोऽस्त' इति धनपालनिघण्टु ॥ २ ॥

[1] चरम° $B_3$ [2] उदय° $A_1$

**हिमवान् निषधो विन्ध्यो माल्यवान् पारियात्रकः ।**
**गन्धमादनमन्ये च हेमकूटादयो नगाः ॥ ३ ॥**

(वि.) हिमवानिति—हिममस्यास्तीति हिमवान् । निषीदन्ति [1]सुरा अत्रेति निषध । 'षद्लृ विशरणगत्यवसादनेषु'[2] । अगस्त्येन विद्धत्वात् विन्ध्य । 'व्यध ताडने'। [3]सूर्यपथं विध्यतीति वा । स[3] एव धातु । [4]माल्याकारतास्यास्तीति माल्यवान् । परितो यात्रा गमनमस्यास्तीति पारियात्रक । गन्धेन [6]माद्यतीति गन्धमादन । 'मदी हर्षग्लपनयो'। [7]अस्त्रियाम् । हेममयानि कूटान्यस्य[5] हेमकूट । अन्ये च हेमकूटादयो गिरय सन्ति । एतेषामुक्तान्येव नामानि प्रशस्तानि ॥ ३ ॥

[1] गन्धर्वादय $K_5$, $K_6$ $W_2$ [2] °षदॢ $F_2$, $Pt_2$ [3] $B_1$, $D_2$ omit [4] माल्याकारत्वात् $K_6$ $W_2$ माल्य for माल्यवान् $K_2$ [5] अत्र for अस्य $K_1$ [6] मदयति $J_2$ $K_2$ $W_2$, $Pt_2$ add हर्षयति [7] अयं पुंलिङ्गेऽपि $F_2$ $Pt_2$

(पा.) हिमवान्—गन्धमादनम् । 'अस्त्री कुलाचले ना तु मत्तेभे गन्धमादनम्' इति भागुरिमतान्नपुंसकम् । अन्ये च—नगा । [1]हिमवदादयः पृथक्[2] पर्वताः ॥ ३ ॥

[1] हेमकूटादयः $B_3$. [2] पृथक् पृथक् $A_1$.

**पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत् ।**
**कूटोऽस्त्री शिखरं शृङ्गं प्रपातस्तु तटो भृगुः ॥ ४ ॥**

(वि.) पाषाणेति—वस्तूनि पिनष्टि चूर्णयतीति पाषाण. । 'पिष्लृ सञ्चूर्णने' । प्रस्तृणाति आच्छादयति [1]भुवमिति प्रस्तरः । 'स्तृञ् आच्छादने' । [2]आतपादिभिस्तप्तः सन् [3]जलं गिरतीति ग्रावा । नान्त. । 'गॄ निगरणे' । उपलाति भिनत्ति वस्तूनीति उपलः । 'ला [4]आदाने' । अश्नुते व्याप्नोति [5]भुवमित्यश्मा । 'अशू व्याप्तौ' । वस्त्रादिकमश्नातीति वा । 'अश भोजने' । शिनोति तनूकरोत्यायुधमिति[6] शिला । 'शिञ् निशातने' । द्रून् वृक्षान् सादयतीति नाशयतीति दृषत् । 'षद्लृ विशरणगत्यवसादनेषु' । दृणातीति वा । 'दॄ विदारणे' । शिलादृषदौ स्त्रियौ । पाषाणनामानि ॥ कूट्यते दह्यते [7]रविणेति कूटः । 'कूट दाहे' । अयमस्त्री । [8]शिखा अग्रशिलात्रास्तीति शिखरम् । शृङ्गवदौन्नत्यगुणयोगात्[9] शृङ्गम् । शृणातीति[10] वा । 'शॄ हिंसायाम्' । शिखरनामानि[11] ॥ अस्मात् प्रपततीति प्रपात. । 'पत्लृ गतौ' । तटत्युच्छ्रायं प्राप्नोतीति तट. । 'तट उच्छ्राये' । भृज्यते सूर्याग्नितेजसा पच्यत इति भृगुः । 'भ्रस्ज पाके' । शिखराधस्तटनामानि ॥ प्रपातस्त्वतटो भृगुरिति पाठे [12]अतटः प्रपात. [13]सतटदेशो भृगुरित्युच्यते ॥ ४ ॥

[1] महीम् $K_5$, भुवनम् $D_2$, $F_1$ [2] आतपाभितप्तत्वात् $J_2$, $K_3$, $W_2$ [3] पतितं सलिलं $F_1$, I. [4] दानादानसण्टनेषु $F_1$, $J_2$. [5] भुवनम् $K_6$. [6] क्षुरादिकम् $F_2$. [7] सूर्यकिरणेन $F_2$ [8] शिखेव $Pt_2$ [9] गुणात् $B_1$, $F_1$, गुणत्वात् $J_2$ [10] $F_2$, $Pt_2$ add हिनस्ति. [11] शृङ्गनामानि $J_2$ [12] न विद्यते तटं यस्य अतटः $B_1$, $K_5$. [13] सतटदेश. $B_1$, $K_5$

(पा.) पाषाण—दृषत् । 'कषाय. कूष्माण्डो महिषवृषभव्योषदृषद.' इत्यूष्मभेदपाठान्मूर्धन्यः । 'शरच्छरद्दृशत्त्रिंशच्चत्वारिंशच्च विंशति.' इत्यरुणदत्तलिङ्गानुशासनपाठात् तालव्यमध्य । तदा च दृशद् दृषदित्युभयथापि[1] पाठ. साधुः । शिलानामानि ॥ कूटोऽस्त्री—शृङ्गम् । गिरिशिखरनामानि ॥ प्रपातस्तु—भृगु । [2]सचाराचर्हशिखराधस्तलनामानि । भाषया 'चरि' ॥ ४ ॥

[1] उभयत्र $A_1$. [2] आसारप्रसारानर्हकूटाधोदेशनामानि $A_1$.

**कटकोऽस्त्री नितम्बोऽद्रेः स्नुः प्रस्थः सानुरस्त्रियाम् ।**
**उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः ॥ ५ ॥**

(वि.) कटक इति—कटत्याकाशमावृणोतीति कटकः । 'कटे वर्षावरणयोः' । पर्वतस्य नितम्बप्रायत्वात् नितम्बः । अद्रिनितम्बनाम ॥ स्नौति जलमिति [1]स्नुः । 'ष्णु प्रस्रवणे' । [2]प्रतिष्ठन्तेऽस्मिन् समभूभागत्वात् प्रस्थः । 'ष्ठा गतिनिवृत्तौ' । सनोति सुखं ददाति उपवेशन[4] इति सानुः । अस्त्रियाम् । 'षणु दाने' । फलकाकारावस्थित-महाशिलानामानि ॥ उनत्ति [5]जलसम्पर्केणेत्युत्सः । 'उन्दी क्लेदने' । आपः प्रस्रवन्त्यस्मात् शैलासध्यादाविति प्रस्रवणम् । 'स्रु गतौ' । पर्वतान्ताद् बहिर्निर्गतात्प्रस्यन्दितनीर-नामनी[6] ॥ वारिणः प्रवाहः वारिप्रवाहः । निर्झर्यते [7]कालेन स्वल्पो[8] भवतीति निर्झरः । झरश्च[9] । 'झॄष् वयोहानौ' । प्रवाहवत्प्रस्रवणनामानि ॥ ५ ॥

[1] Pt₂ adds स्नातीति, 'ष्णा शौचे'. [2] प्रतिष्ठते स्थावरादिरत्रेति K₆. [3] अवकाशं F₂. [4] उपवेशेन I. [5] अम्भसा Pt₂. [6] पर्वतान्ताद् बहिर्निर्गतस्य जलस्य नाम B₁, K₆. [7] काले K₇. [8] स्वल्पीभवति K₆. [9] निर्झरा झरा इति वा पाठः K₅, K₆.

(पा.) कटको—अद्रेः । अद्रिनितम्बप्रदेशनाम । स्नु—अस्त्रियाम् । स्नुर्वप्रः सानुरस्त्रियाम् इति पाठान्तरम् । [1]तदधोगतविशालफलकशिलानामानि[2] ।

'आमेखलं संचरतां घनानां छायामधःसानुगतां निषेव्य ।
उद्वेजिता वृष्टिभिराश्रयन्ते शृङ्गाणि यस्यातपवन्ति सिद्धाः ॥'

इति कालिदासः (कु. स. १. ५) । स्नुशब्दः प्रस्थवप्रशब्दसाहचर्यात् पुंलिङ्गः । वप्रशब्दः सानुशब्दसाहचर्यात् पुंनपुंसकः । 'स्नुः पुमानस्त्रियां वप्रः' इति जयकोशः । उत्स. प्रस्रवणम् । प्रस्यन्दननामनी । '[3]निल्लुगारुंट' । वारिप्रवाहो—झरः । 'झारी झरी झलश्चापि' । पलानि च । झरीत्युपचयविवक्षायां स्त्रीलिङ्गः । 'झरीदरीपरीरम्भदरी-सुमसरीसृपम्' इति । [4]निपत्य प्रवहदुदकनामानि ॥ अनुक्तम्—'नदी चेद्योजनातिगा' । योजनमतिक्रान्ता झरी नदीत्युच्यते ॥ ५ ॥

[1] B₃ omits °गत°. [2] °तलनामानि B₃. [3] 'ऊंट' B₃. [4] B₃ omits निपत्य and adds गिरि°.

**दरी तु कन्दरो वा स्त्री देवखातबिले गुहा ।**
**गह्वरं गण्डशैलास्तु च्युताः स्थूलोपला गिरेः ॥ ६ ॥**
**(दन्तकास्तु बहिस्तिर्यक्प्रदेशान्निर्गता गिरेः)**

(वि.) दरीति—दीर्यते दरी । 'दॄ विदारणे' । कं कुत्सितं दृणातीति [1]कन्दरः । केन जलेन दीर्यत इति वा । [2]भित्तिवद्ध्रासमानपर्वतपार्श्वनामनी ॥ देवैः खन्यत इति देवखातम् । 'खनु अवदारणे' । बिल्यत इति बिलम् । 'बिल भेदने' । देवखातं च तद्बिलं च देवखातबिलम् । तस्मिन् गुहागह्वरशब्दौ वर्तेते । [3]गूहत्यन्धकारमिति गुहा । 'गुहू संवरणे' । सिंहादिभिर्गाह्यत इति गह्वरम्[4] । 'गाहू विलोडने' । [5]पर्वतान्तराकृत्रिमविवरनामनी ॥ गण्डा इव शैला गण्डशैलाः । गण्डाः [6]स्थूलाः शैला वा । भूकम्पादिना गिरेश्च्युतस्थूलोपलनाम ॥ ६ ॥

[1] कन्दरा वा $B_1$, $K_5$ [2] कन्दर° $B_1$, $K_5$ [3] गुह्यत $F_2$ [4] गतिं ह्वरतीति 'ह्वृ कौटिल्ये' $Pt_2$ [5] दरीगह्वरनामनी $B_1$, I, $K_5$ देवखातबिलशब्दौ गुहापर्यायाविति क्वचित् I, $K_5$ [6] गुरव $F_1$, $K_6$, गिरेः च्युताः स्थूलोपलाः गण्डाकाराश्च ते शैलाकाराश्च गण्डशैलाः $F_2$

(पा.) दरी—द्वा स्त्री । गिरिनारट्टनामनी । भाषया [1]'पर्वतसुयोक्कशिशु' । द्वय—गह्वरम् । [2]गुहानामानि ॥ षडपि पर्याया[3] इति केचित् । 'दरी गुहा कन्दरोऽस्त्री' इति वैजयन्ती (पृ ४१, श्लो ६) । गण्डशैला —गिरेः । गिरेश्च्युताः पृथुलोपलाः[5] गण्डशैलाः स्युः । अनुक्तम्—'दन्तास्तून्नतपाषाणाः' । उच्चोपलनाम[6] । भाषया 'दक्कनि-निलुपुराल्लु' ॥ ६ ॥

[1] 'लोय' $B_3$ [2] गुहानिशातनामानि $A_1$ [3] एकार्थकाः $A_1$ [4] दरीगह्° $B_3$ [5] पृथूपला $B_3$ [6] °ला दन्ताः स्युः $A_1$

खनिः स्त्रियामाकरः स्यात् पादाः प्रत्यन्तपर्वताः ।
उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका ॥ ७ ॥
धातुर्मनःशिलाद्यद्रेर्गैरिकं तु विशेषतः ।
निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे ॥ ८ ॥

## इति शैलवर्गः

(वि.) खनिरिति—खन्यते [1]रत्नादिकमनेति खनिः । 'खनु अवदारणे' । स्त्रियाम् ॥ आकीर्यन्ते [2]धातवोऽनेनेत्याकरः । 'कॄ विक्षेपे' । लोहादिधातुखननस्थाननामनी ॥ [3]पादा इव तिष्ठन्तीति पादाः । प्रत्यन्ते समीपे पर्वताः प्रत्यन्तपर्वताः । समीपस्थक्षुद्रपर्वत-

नामनी ॥ उप समीपे भूरुपत्यका । अद्रेरासन्नभूमिनाम ॥ अद्रेरधिभू ऊर्ध्वभूरधित्यका । अद्रेरूर्ध्वभूनाम ॥ धत्ते मिथो व्यावर्तक धर्ममिति धातु । 'डुधाञ् धारणपोषणयो '। मन शिलादिनाम ॥ गिरौ[4] भव गैरिकम् । [5] धातुविशेषनाम ॥

'सुवर्णरौप्यताम्राश्महरितालमन शिला ।
[6]गैरिकाञ्जनकास्यादिलोहसीसा सहिङ्गुला ।
गन्धकोऽभ्रकमित्याद्या धातवो गिरिसभवा ॥'

पक्षिणोऽत्र स्थित्वा निकूजन्तीति निकुञ्ज[7] । कुञ्जश्च । 'कूज अव्यक्ते शब्दे' । उभौ शब्दौ वा क्लीबे । गृहवद्वासमानलतापिहितप्रदेशनामनी ॥ ७–८ ॥

इति श्रीलिङ्गयसूरिविरचितायाममरकोशपदविवृतौ शैलवर्ग

[1] सुवर्णादिकम् $K_4$, $W_2$ [2] लोहादय $F_2$, $Pt_2$ [3] अद्र पादा इव अधस्ताद्धारणाच्च पद्यन्त इति पादा, 'पद्लृ गतौ' $F_2$ [4] गिरे $K_6$, $W_2$ गिरौ भवतीति $B_1$. [5] विशेषधातुर्गैरिकमित्युच्यते $F_2$ [6] °कासीस° $F_2$ [7] निम्नप्रदेशो निकुञ्जश्च $F_2$, काद्यजनि कुञ्ज, 'जनी प्रादुर्भावे' $Pt_2$, कुञ्जन्ति $K_6$

(पा.) खनि —आकर स्यात् । रत्नाद्युत्पत्तिस्थाननामनी[1] । भाषया 'गनि' । खानिशब्दोऽप्यस्ति । 'आकरश्च खनि खानि ' इति व्यालि । अनुक्तम्—'रुमा तु लवणाकर ' । लवणखनी रुमा स्यात् । पादा प्रत्यन्तपर्वता । [3]अध स्थितस्वल्पपर्वता पादा स्यु । उपत्यका—भूमि । गिरेरासन्ना भूमिरुपत्यका स्यात् । ऊर्ध्वमधित्यका । ऊर्ध्वभूमिरधित्यका स्यात् । धातु —अद्रे । 'हरिताल मन शिलादिशिलाविकारा[5] सर्वेऽपि सामान्यतो धातव एव[6] । गैरिक—विशेषत । गैरिक विशेषतो धातुरित्युच्यते । 'गैरिक[7] स्वर्णरेतोऽश्मिपु विशेषत ' इति वैजयन्ती (प्र. ४१, श्लो ९१) । निकुञ्ज—पिहितोदरे । लतादिभि पिहितोदरस्य [8]प्रदेशस्य नामनी । 'पादारेल्लु' ॥ ५–८ ॥

इति [9]श्रीवत्सनृसिंहसूरिसुतमल्लिनाथसुधीविरचितेऽमरपदपारिजाते शैलवर्ग

[1] खनि स्यात् $A_1$ [2] $B_3$ adds इति वैजयन्ती [3] प्रान्त° $B_3$ [4] $B_3$ adds अद्रे सचन्धि [5] °अश्म° $B_3$ [6] इत्युच्यन्त $B_3$ [7] 'गैरिक पीतधातु स्यात्' इति मुद्रितग्रन्थे [8] $A_1$ adds पर्वत° [9] °नरसिंह° $A_1$

---

## ४. वनौषधिवर्गः

**[1]अटव्यरण्यं विपिनं गहनं काननं वनम् ।**
**महारण्यमरण्यानी गृहारामास्तु निष्कुटाः ॥ १ ॥**

(वि.) अटवीति—अटन्त्यस्यां [2]वनेचरा[3] इत्यटवी । '[4]अट गतौ' । इयर्ति भ्राम्यति दुर्गमार्गत्वादत्रेत्यरण्यम् । 'ऋ गतौ' । वेपन्तेऽत्र भयादिति विपिनम् । 'टु-वेपृ कम्पने' । गाह्यतेऽवगाह्यतेऽत्रेति गहनम् । 'गाहू विलोडने[5]' । अरण्यनामानि ॥ कन्यते गम्यते वानरादिभिरिति काननम् । 'कनी दीप्तिकान्तिगतिषु' । कं जलमननं प्राणनमस्येति वा । 'अन प्राणने' । फलवत्त्वाद् वन्यते सेव्यत इति वनम् । 'वन षण संभक्तौ' । बहुवृक्षलतादिप्रदेशमात्रनामनी ॥ एतानि षड् अरण्यस्यैव नामानीति केचित्[6] । महदरण्यं[7] महारण्यम् । अरण्यानी च । गृहे आरामा गृहारामाः । कुटाद् गृहान्निष्क्रान्तो निष्कुटः । गृहवननामनी ॥ १ ॥

[1] $F_2$, $J_2$ add इत परमटवीवर्ग आरभ्यते [2] $Pt_2$ adds मृगयार्थं [3] मृगादयः $F_2$, अटन्तीत्यस्यां पश्वादयः, वयः पक्षिणः अत्रेति $F_2$ [4] 'अट पट गतौ' $K_6$, $Pt_2$
[5] विगाहने $D_2$ [6] $W_2$ omits rest of this Varga [7] $K_4$ adds अत्रास्तीति

(पा.) चूलीस्थलीमिलल्लोलकलानिधिकलाङ्कुरैः ।
विकासयन्निव पायात् कवित्वाकुमुदाटवीम् ॥

अटवी—वनम् । [1]अटवीनामानि । '[2]नाटिका मलयं कक्ष्यम्' । एतानि च ॥ महारण्यमरण्यानी । महारण्यनामनी ॥ अनुक्तम्—'शुष्काटवी तु कक्षः स्यात्' । शुष्काराण्याटवीनाम[4] ॥ 'प्रस्तरस्तु तृणाटवी[5]' । तृणारण्यनामनी ॥ गृहारामस्तु निष्कुटः । [6]गृहकाननानामनी ॥ १ ॥

[1] अटवि° $A_1$ [2] नाटिका $A_1$ [3] °अटविस्तु $A_1$ [4] °राण्याटवि° $A_1$
[5] तृणाटवि $A_1$ [6] गह° $A_1$

**आरामः स्यादुपवनं कृत्रिमं वनमेव यत् ।**
**अमात्यगणिकागेहोपवने वृक्षवाटिका ॥ २ ॥**

(वि.) आराम इति—आ समन्ताद् रमन्तेऽत्रेत्यारामः । 'रमु क्रीडायाम्' । [1]पुरस्य उप समीपे वनम् उपवनम् । पुरस्य बाह्योद्याननामनी ॥ वृक्षा वटन्ते वेष्ट्यन्तेऽत्रेति

वृक्षवाटिका[3]। 'वट [4]वेष्टने परिभाषणे च'। पुष्पवाटिकेति वा पाठः। धनिनां वेश्यानां च [5]गृहोपवननाम ॥ २ ॥

[1] आरमन्ति $Pt_2$. [2] वनस्य $B_1$, $J_2$, $K_6$. [3] वटतीति वाटिका, वृक्षाणां वाटिका $F_2$, $Pt_2$. [4] परिवेष्टने $K_6$. [5] गृहवन° $J_2$, $K_6$.

(पा.) आरामः—वनमेव यत्। यत् कृत्रिमं वनं तदेवोपवनमारामश्च स्यात्। स्यादुपवनम् इति पाठान्तरम्। 'कृत्रिमं वनमारामोऽपवनोपवने अपि' इति वैजयन्ती (पृ. ४५, श्लो. २)। वनमित्यपि भवति। 'नन्दनं वनमारामः' इति धनंजयः। अमात्य—वृक्षवाटिका। [1]अमात्यगणिकाग्रहणं [2]वैभवोपलक्षणार्थम्। 'किराटगृहवृक्षवाटिकासु' इति वासवदत्ता। [3]पुष्पवाटिकेति पाठान्तरम्। '[4]पुष्पवाटी त्वमात्यादेः' इति वैजयन्ती (पृ. ४५, श्लो. ४)। पुर्ष्पवाटिकेत्यत्र सस्य पाक्षिको रेफादेशः॥ २॥

[1] अमात्यानां गणिकानां च $A_1$. [2] धनिको° $B_3$. [3] पुर्ष्पवाटिका $A_1$, $B_3$. [4] पुर्ष्पवाटी $A_1$, $B_3$, मुद्रितपुस्तके पुष्पवाटीत्येव.

**पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम्।**
**स्यादेतदेव प्रमदवनमन्तःपुरोचितम् ॥ ३ ॥**

(वि.) पुमानिति—आक्रीडन्ते जना अत्रेत्याक्रीडः[1]। 'क्रीडृ [2]विहारे'। उद्यान्ति[3] उद्योगं [4]कुर्वन्तेऽत्रेति [5]उद्यानम्। 'या प्रापणे'। सर्वसाधारणराजवननामनी॥ प्रमदानां वनं प्रमदवनम्। प्रमदावनमिति वा। [6]राजस्त्रीविनोदवननाम॥ ३॥

[1] आक्रीड्यते राजादिभिः $K_6$. [2] विहरणे $K_6$ [3] उद्यतन्ते, 'यती प्रयत्ने' $F_2$, $K_6$. [4] कुर्वन्ति $J_2$. [5] उद्यानवननाम $K_6$. [6] राजस्त्रीणां विनोदार्थम् I, $J_2$

(पा.) पुमानाक्रीडः—वनम्। राजसाधारणोपवननामनी[1]। स्यादेतदेव—पुरोचितम्। अन्तःपुरोचितमेतदेव वनं प्रमदवनं स्यात्। ह्रस्वतृतीयः। 'प्रमदावनोपकण्ठनलिनीषु लताभवनेषु भूभुजः' इति दीर्घतृतीयश्च भवति। '[2]चारकर्मणि निष्णातः प्रविष्टः प्रमदावनम्' इति॥ ३॥

[1] $B_3$ omits उप. [2] चार° $A_1$.

**वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः।**
**वन्या वनसमूहे स्यादङ्कुरोऽभिनवोद्भिदि ॥ ४ ॥**

(चि.) वीथीति—वियन्ति गच्छन्त्यनयेति वीथी। 'वी गतिप्राप्तिप्रजनकान्त्यसनखादनेषु'। विथ्यतेऽत्रेति वा। 'विथृ याचने'। अलति भूषयति वनादिकमिति आलि। 'अल [1]भूषणपर्याप्तिवारणेषु'। आवलते सवृणोतीति आवलि। 'वल संवरणे संचरणे च'। पञ्च्यते वृक्षगणेनेति पङ्क्ति। 'पचि व्यक्तीकरणे'। श्रीयते[2] स्वशोभयेति श्रेणि। 'श्रिञ् सेवायाम्'। वृक्षादिवीथिनामानि॥ अक्षररेखावल्लिरिव्यन्त इति लेखा। 'लिख अक्षरविन्यासे'। राजन्त इति राजय। 'राजृ दीप्तौ'। अतिसंनिकृष्टवीथिनामनी॥ वनानां समूहो वन्या। वनसमूहनाम॥ अङ्क्यते बीजं भित्त्वा दृश्यते[3] इत्यङ्कुर। 'अकि लक्षणे'। उद्भिद्यते[4] बीजमनेनेति उद्भित्। 'भिदिर् विदारणे'। प्रत्यग्रप्ररोहनाम॥ ४॥

[1] भूषणशक्ति° $K_8$ [2] श्रयत शोभामिति $B_1$, $K_8$ [3] लक्ष्यते $F_2$ $Pt_2$
[4] उद्भिनत्ति भुवं बीजं च $F_2$ $Pt_2$

(पा.) वीथी—श्रेणि। पङ्क्तिनामानि। 'धोरणि पद्धति पालि'। एतानि च। [1]सान्तरालवृक्षादीनां पङ्क्तेर्नामानि॥ लेखास्तु राजय। [2]निरन्तरालतृणादीनां श्रेणिनामनी॥ वन्या—स्यात्। वनसमूहनाम॥ अङ्कुरोऽभिनवोद्भिदि। नवोद्भिद्यङ्कुर स्यात्। 'अङ्किल प्ररोहोऽप्यनेनेति' [4]सुभूतिटीकावचनात् प्राकृतरूपस्यापि ग्रहणम्। 'अङ्कुरोऽङ्कूरमस्त्रियाम्' इति वैजयन्तीपाठात्तु[5] (पृ ४०, श्लो १०) [6]अङ्कूरोऽपि स्यात्। 'मोलक'॥ ४॥

[1] विरल° $B_3$ [2] निरन्तरतत्पङ्क्तिनामनी $B_3$ [3] अभिनव° $B_3$ [4] टीकाकार° $A_1$ [5] वचनात् $B_3$ [6] 'स्यादङ्कुरोऽङ्कूरमस्त्रियौ' इति मुद्रितग्रन्थे

**वृक्षो महीरुहः शाखी विटपी पादपस्तरुः।**
**अनोकहः कुटः शालः पलाशी द्रुद्रुमागमाः॥ ५॥**

(चि.) वृक्ष इति—वृश्च्यते छिद्यते कुठारादिनेति वृक्ष। 'ओव्रश्चू छेदने'। [1]वृक्षत इति वा। 'वृक्ष वरणे'। वृणोतीति वा वृक्ष। 'वृञ् वरणे'। मह्या रोहतीति महीरुह। 'रुह बीजजन्मनि प्रादुर्भावे च'। शाखा अस्य सन्तीति [2]शाखी। विटपा अस्य सन्तीति विटपी। पादैर्मूलैरुदकं पिबतीति पादप। 'पा पाने'। तरन्त्यातपमनेनेति तरु। 'तॄ प्लवनतरणयो'। अनस शकटस्य अकं [3]गतिं हन्तीति अनोकह। 'हन हिंसागत्यो'। कुटति शाखादिना वक्रीभवतीति कुट। 'कुट कौटिल्ये'। शाल्यते पुष्पफलादिनेति शाल।

**वन्ध्योऽफलोऽवकेशी च फलवान् फलिनः फली ।**
**प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः ॥ ७ ॥**
**फुल्लश्चैते विकसिते स्युरवन्ध्यादयस्त्रिषु ।**

(वि.) वन्ध्य इति—स्वगतवैगुण्येन [1]फलानि [2]वध्नातीति वन्ध्य । 'वन्ध [3]बन्धने' । न [4]सन्ति फलान्यस्य अफल । अवक शून्यमीष्टे पालयतीत्यवकेशी । 'ईश ऐश्वर्य' । निष्फलवृक्षनामानि ॥ फलानि सन्तीति फलवान् । फलिनश्च । फली च । फलाढ्यवृक्षादिनामानि ॥ प्रफुल्लति उत्फुल्लति सफुल्लतीति प्रफुल्ल उत्फुल्ल सफुल्लश्च । 'फुल्ल विकसने' । प्रफलतीति वा प्रफुल्ल । 'ञिफला विशरणे' । विगत आकोच सकोचो यस्य स व्याकोच । 'कुच संकोचने' । व्याकोश इति पाठे व्यावृत्त कोश सकोचोऽस्मादिति व्याकोश । विगत कचो मुकुलावस्था[5] अस्य विकच । '[6]कचि दीप्तिबन्धनयो' । स्फुटति विकसतीति स्फुट । 'स्फुट विकसने'[7] । विकसितवृक्षादिनामानि ॥ अवन्ध्यादय फुल्लान्ता शब्दास्त्रिषु लिङ्गेषु वर्तन्ते ॥ ७ ॥

[1] फलनिष्पत्तिं $K_8$ [2] प्रतिबध्नाति $F_1$ $J_2$ $K_2$ $K_3$ [3] 'बधि सयमने' $K_6$ $F_1$, I add वनयोरभेद [4] न विद्यते $F_2$ $K_6$ [5] बन्धन $F_2$ [6] कच बन्धने' Pt [7] $F_2$ $Pt_2$ add फुल्लतीति फुल्ल 'फुल्ल विकसने'

(पा.) वन्ध्यो—अवकेशी च । वन्ध्यतरुनामानि ॥ फलवान्—फली । फलिततरुनामानि ॥ प्रफुल्लो—विकसिते । [1]पुष्पितपादपादिनामानि ॥ '[2]दलितोन्मिषितोन्निद्रा प्रफुल्लश्च विजृम्भित' । एतानि च ॥ स्यु—त्रिषु । एत त्रिलिङ्गा ॥ ७ ॥

[1] विकसित° B [2] उत्फुल्लोन्मिषितोन्निद्रा फुल्लो मालितस्मिता ' इति मुद्रितवैजयन्त्याम्

**स्थाणुर्वा ना ध्रुवः शङ्कुर्ह्रस्वशाखाशिफः क्षुपः ॥ ८ ॥**
**अप्रकाण्डे स्तम्बगुल्मौ वल्ली तु व्रततिर्लता ।**
**लता प्रतानिनी वीरुद् गुल्मिन्युलप इत्यपि ॥ ९ ॥**

(नि.) स्थाणुरिति—वायुना [1]विहतोऽपि तिष्ठतीति स्थाणु । 'ष्ठा गतिनिवृत्तौ' । चलनाभावाद् ध्रुवतीति ध्रुव । 'ध्रुव[2] गतिस्थैर्ययो' । शङ्कतेऽस्मात्[3] तस्करादिरिति शङ्कु । 'शकि शङ्कायाम्' । सर्वशाखाव्यपेतवृक्षमूलनामानि ॥ ह्रस्वा शाखा शिफा

यस्य स क्षुप इत्युच्यते। [5]दवाग्निना दह्यमान क्षौतीति क्षुप । 'टुक्षु शब्दे'। अल्पशाखावृक्षनाम ॥ न प्रकाण्डोऽस्य अप्रकाण्ड । स्कन्धेन विनापि तिष्ठतीति स्तम्ब । 'ष्ठा गतिनिवृत्तौ'। गुडति चोरादिभीतान्[6] गुल्म । 'गुड रक्षायाम्'। स्कन्धरहितवृक्षनाम्नी ॥ वलते वेष्टते यष्ट्यादिकमिति वल्ली। 'वल [7]सवरणे'। प्रकृष्टा ततिर्विस्तारोऽत्र[8] प्रतति । 'तनु विस्तारे'। प्रतनोतीति वा। पकारस्य वकारप्राप्ति । लाति वेष्टनाय यष्ट्यादिकमिति लता। 'ला आदाने'। लतानामानि ॥ प्रतानोऽस्त्यस्या प्रतानिनी लता वीरुत्। [9]विरोहतीति वीरुत्। 'रुह बीजजन्मनि प्रादुर्भावे च'। विरुणद्धीति वा। 'रुधिर् आवरणे'। [10]गुल्मो लतासमूहोऽस्या अस्तीति गुल्मिनी। उलत्यावृणोतीत्युलप । 'उल आवरणे'। उभ्यते गुल्मादिना मिश्रीभवतीति वा उलप । 'उभ पूरणे'। [11] मिथोऽत्यन्तसश्लेषलतासमूहनामानि ॥ ८–९ ॥

[1] निहत B₁ K₅ [2] स्थाणुशब्दो विकल्पेन पुलिङ्ग K₅, नपुसकलिङ्ग B₁ [3] 'क्षुर स्थैर्ये' F₂ K₃ K₅ K₆ [4] F₂ Pt₂ add पुरुधिया [5] दावाग्निना F₂, Pt₂. [6] °भीते K₆ [7] सवेष्टन K₃ [8] अस्या F₂, J₂ [9] विविध रोहति F₂, Pt₂ [10] B₁ omits 10 lines [11] अत्यन्तसश्लिष्ट° D₂, F₁

(पा.) <u>स्थाणुरस्त्री—शङ्कु</u> । भग्नसर्वशाखवृक्षनामानि[1] । '[2]मोटचद्दु' । <u>ह्रस्व—क्षुप</u> । "[3]वामनशाखाजटस्तरु क्षुप स्यात्। इव पर प्रसिद्धेनाप्रसिद्ध विबोधनीयमिति न्यायमनुसृत्य प्राय आन्ध्रभाषया नामानि व्याहराम । 'कुरुचकोम्मलु उडलुगलचेट्टु क्षुपमु'। छुप इत्यप्यस्ति। 'छुप क्षुप स्पर्शनयो' इति <u>विश्वप्रकाशिका</u> (पृ १०३, श्लो ३)। <u>अप्रकाण्डे—गुल्मौ</u> । [4]प्रकाण्डविरहितवृक्षादेर्नामनी । 'गोरिट्टमोदयनवि'। <u>वल्ली—लता</u>। लतानामानि ॥ <u>लता—इत्यपि</u> । [5]परस्परसश्लिष्टद्राक्षादेर्नामानि। लताग्रहणात् [6]परस्परसश्लिष्टकेतक्यादेर्नामानि न भवन्ति ॥ ८–९ ॥

[1] °द्रुम° B₃ [2] 'मोरड्डु' B₃ [3] वामनाना शाखाना A₁ [4] A₁ adds °नखरञ्जक° [5] A₁ adds °अत्यन्त° [6] तादृश° B₃

**नगाद्यारोह उच्छ्राय उत्सेधश्चोच्छ्रयश्च सः ।**
**अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः ॥१०॥**

(वि.) <u>नगाद्यारोह इति</u>—[1]उत् श्रयणमुच्छ्राय । उच्छ्रयश्च। 'श्रिञ् सेवायाम्'। उत्सेधयतीति उत्सेध । 'षिध गत्याम्'। वृक्षाद्युन्नतत्वनामानि॥ प्रकाम्यते फलरक्षणा[2]दिभिरिति प्रकाण्ड । 'कमु कान्तौ'। स्कन्द्यतेऽधिरुह्यत[3] इति स्कन्ध । 'स्कन्दिर् गतिशोषणयो'। मूलादारभ्य शाखान्तस्य तरोर्मध्यदेशनामनी ॥ १० ॥

[1] नगस्य वृक्षस्य, आरुह्यत इत्यारोहः $F_2$; उत् श्रयतीति $K_6$. [2] °रक्षणार्थिभिः $F_2$, $K_6$. [3] कयचिदारुह्यते $K_5$, $K_6$.

(पा.) नगाद्यारोह—उच्छ्रयश्च सः। वृक्षादीनामूर्ध्वमाननामानि। अस्त्री प्रकाण्ड—तरो.[1]। मूलप्रभृति शाखावधेर्वृक्षभागनामनी। तत्र मूलभागः प्रकाण्डः। शाखाभागः स्कन्धः। 'स्कन्धादधः प्रकाण्ड. स्यात् प्रधानः स्कन्ध उच्यते' इति हलायुधः (अ. मा. २. २७)॥ १०॥

[1] °अवधेः for अवधिः $A_1$.

**समे शाखालते स्कन्धशाखाशाले शिफाजटे।**
**शाखाशिफावरोहः स्यान्मूलाच्चाग्रं गता लता॥ ११॥**

(वि.) समे इति—शाखति दिशो व्याप्नोतीति शाखा। 'शाखृ व्याप्तौ'। [1]लतति दिशो व्याप्नोतीति लता। 'लति व्याप्तौ'। वृक्षशाखानामनी॥ स्कन्धस्य शाखा स्कन्धशाखा। स्कन्धात् निर्गता शाखेति वा। शालते शाला। 'शाडृ श्लाघायाम्'। स्कन्धशाखानामनी॥ शिनोति तनूकरोति वृक्षमूलमिति शिफा। 'शिञ् निशातने'। जटति [2]सघीभवतीति जटा। 'जट सघाते'। वृक्षमूलनामनी॥ अवरोहति लम्बत इत्यवरोह। 'रुह बीजजन्मनि प्रादुर्भावे च'। वृक्षशाखावलम्बिजटाया[3] वृक्षमूलादूर्ध्व-[4]सगतायाश्च शाखाया नाम॥ ११॥

[1] लाति वेष्टनार्थं यद्यादिकमिति $F_2$, $Pt_2$. [2] समूहीभवति $J_2$, $Pt_2$. [3] अवलम्बि° I, $J_2$, $K_1$, $K_5$. [4] मूलादग्रं गता शाखा लता $Pt_2$.

(पा.) समे—लते। शाखामात्रनामनी॥ स्कन्ध—शाले। प्रधानशाखानामनी। 'पेनुगोम्र'॥ शिफाजटे। पतन्त्याः शाखाया नामनी। 'पडुगोम्म[1]'। शाखा—स्यात्। [2]शाखातोऽधःप्रसृताया जटाया नाम॥ मूलात्—लता। मूलादारभ्याग्रं गता वल्ल्यप्यवरोह. स्यात्॥ ११॥

[1] 'पडुरोम्म' $B_2$ [2] शाखायाः पातोऽवरोहः स्यात् $A_1$

**शिरोऽग्रं शिखरं वा ना मूलं बुध्नोऽङ्घ्रिनामकः।**
**सारो मज्जा नरि त्वक् स्त्री वल्कं वल्कलमस्त्रियाम्॥१२॥**

'शाल श्लाघायाम्'। [4]साल इति पाठे सीयते भिद्यते[5] सालः[6]। 'पोऽन्तकर्मणि'। पलाशानि पर्णानि सन्त्यस्येति पलाशी। [7]दीर्यत इति द्रुः। [8]द्रुमश्च। 'दॄ विदारणे'। न गच्छतीत्यगमः। 'गम्लृ गतौ'। वृक्षसामान्यनामानि ॥ ५ ॥

[1] वृश्चतीति $F_2$. [2] शाखतीति वा, 'शाखृ व्याप्तौ' $F_2$. [3] गमनं $J_2$, $Pt_2$. [4] सल्यते गम्यते जनैरिति, 'षल गतौ' $F_2$, $Pt_2$. [5] छिद्यते $D_2$, $J_2$, $K_6$. [6] अयमपि पाठः $B_1$, $F_3$, I. [7] द्रूयते द्रुः, 'द्रु गतौ' $Pt_2$. [8] द्रुः वृक्षावयवोऽस्य $Pt_2$.

(पा.) वृक्षो—अगमाः। तरुनामानि। 'कुजो रूक्षोऽगच्छश्च[1]'। एतान्यपि च ॥ ५ ॥

[1] अगच्छंश्च $A_1$, नगच्छंश्च $B_3$

**वानस्पत्यः फलैः पुष्पात् तैरपुष्पाद् वनस्पतिः ।**
**ओषध्यः फलपाकान्ताः स्युरवन्ध्यः फलेग्रहिः ॥ ६ ॥**

(वि.) वानस्पत्य इति—वनस्य पतिः वनस्पतिः। पुष्पैर्विना [1]फलवद्वृक्षनाम ॥ वनस्पतौ भवः वानस्पत्यः। पुष्पवत्फलजनकवृक्षनाम ॥ वनस्पतिरुदुम्बरादिः। वानस्पत्यः चूतादिः ॥ ओषं दाहं [2]धयन्तीत्योषध्यः। 'धेट् पाने'। ओषो दाहो धीयतेऽत्रेति वा। 'डुधाञ् धारणपोषणयोः'। फलपाक एवान्तो यासां ताः फलपाकान्ताः। फलमुत्पाद्य पाकानन्तरं [3]विनश्वरप्ररोहनाम[4] ॥ व्रीह्यादिरोषधिः। न वन्ध्योऽवन्ध्यः। फलानि गृह्णातीति[5] फलेग्रहिः। 'ग्रह उपादाने'। अनिष्फलवृक्षादिनाम ॥ ६ ॥

[1] फलजनक° $F_2$, $J_2$. [2] $D_2$, $K_6$ add पिबति नाशयति. [3] विनाश° $K_3$. [4] $F_2$, $J_1$, $K_2$, $K_3$ add °मात्र°. [5] $F_2$ adds धारयति.

(पा.) वानस्पत्यः—पुष्पात्। [1]पुष्पफलितमाकन्दादिर्वानस्पत्यः स्यात्। तैः—वनस्पतिः। अपुष्पफलितपनसादिर्वनस्पतिः स्यात्। वृक्षमात्रमपि वनस्पतिर्भवति। '[2]सालो वनस्पतिरगो विटपी कुटश्च[2]' इति हलायुधः (अ. मा. २. २२)। ओषध्यः—पाकान्ताः। फलपाकनाशिन्यः कदल्यादय ओषध्यः स्युः। अत्र बहुवचनमतन्त्रम्। 'ओषधि. फलपाकान्ता' इति वैजयन्ती (पृ. ४५, श्लो. ६)। स्यात्—फलेग्रहिः। अवन्ध्यतरुनामनी ॥ स्युरवन्ध्यादयस्त्रिषु (श्लो. ८) इत्यनेन त्रिलिङ्गाः। अवन्ध्यो वृक्षः। अवन्ध्या लता ॥ ६ ॥

[1] पुष्पित° $A_1$. [2] सालो इति कुट इति च मुद्रितग्रन्थ.

**वन्ध्योऽफलोऽवकेशी च फलवान् फलिनः फली ।**
**प्रफुल्लोत्फुल्लसंफुल्लव्याकोशविकचस्फुटाः ॥ ७ ॥**
**फुल्लश्चैते विकसिते स्युरवन्ध्यादयस्त्रिषु ।**

(वि) वन्ध्य इति—स्वगतवैगुण्येन [1]फलानि [2]बध्नातीति वन्ध्य । 'वन्ध [3]बन्धने'। न [4]सन्ति फलान्यस्य अफल । अवक शून्यमीष्टे पालयतीत्यवकेशी । 'ईश ऐश्वर्ये'। निष्फलवृक्षनामानि ॥ फलानि सन्तीति फलवान्। फलिनश्च। फली च। फलाढ्यवृक्षादिनामानि ॥ प्रफुल्लति उत्फुल्लति संफुल्लतीति प्रफुल्ल उत्फुल्ल संफुल्लश्च। 'फुल्ल विकसने'। प्रफलतीति वा प्रफुल्ल। 'ञिफला विशरणे'। विगत आकोच संकोचो यस्य स व्याकोच। 'कुच संकोचने'। व्याकोश इति पाठे व्यावृत्त कोशः संकोचोऽस्मादिति व्याकोश। विगत कचो मुकुलावस्था[5] अस्य विकच। '[6]कचि दीप्तिबन्धनयो'। स्फुटति विकसतीति स्फुट। 'स्फुट विकसने'[7]। विकसितवृक्षादिनामानि ॥ अवन्ध्यादय फुल्लान्ता शब्दास्त्रिषु लिङ्गेषु वर्तन्ते ॥ ७ ॥

[1] फलनिष्पत्तिं $K_6$ [2] प्रतिबध्नाति $F_1$ $J_2$, $K_2$ $K_3$ [3] 'बधि संयमने' $K_6$ [4] न विद्यन्ते $F_2$, $K_6$ [5] बन्धन $F_2$ [6] 'कच बन्धने' $F_1$, I add वनयोरभेद $Pt_2$ [7] $F_2$ $Pt_2$ add फुल्लतीति फुल्ल 'फुल्ल विकसने'

(पा.) वन्ध्यो—अवकेशी च। वन्ध्यतरुनामानि ॥ फलवान्—फली। फलिततरुनामानि ॥ प्रफुल्लो—विकसिते। [1]पुष्पितपादपादिनामानि ॥ '[2]दलितोन्मिषितोन्निद्राः प्रफुल्लश्च विजृम्भित'। एतानि च ॥ स्यु—त्रिषु। एत त्रिलिङ्गा ॥ ७ ॥

[1] विकसित॰ B [2] 'उत्फुल्लोन्मिषितोन्निद्रा –बुद्धो मीलितस्मिता' इति मुद्रितवैजयन्त्याम

**स्थाणुर्वा ना ध्रुवः शङ्कुर्ह्रस्वशाखाशिफः क्षुपः ॥ ८ ॥**
**अप्रकाण्डे स्तम्बगुल्मौ वल्ली तु व्रततिर्लता ।**
**लता प्रतानिनी वीरुद् गुल्मिन्युलप इत्यपि ॥ ९ ॥**

(वि.) स्थाणुरिति—वायुना [1]विहतोऽपि तिष्ठतीति [2]स्थाणु। 'ष्ठा गतिनिवृत्तौ'। चलनाभावाद् ध्रुवतीति ध्रुव। 'ध्रुव[3] गतिस्थैर्ययो'। शङ्कतेऽस्मान्[4] तस्करादिकमिति शङ्कु। 'शकि शङ्कायाम्'। सर्वशाखाव्यपेतवृक्षमूलनामानि ॥ ह्रस्वा शाखा शिफाः

(वि.) शिरोऽग्रमिति—श्रीयत स्वाङ्ग शिर । 'श्रिञ् सेवायाम्' । अगतीत्यग्रम् । 'अग कुटिलाया गतौ' । शिखा अग्रशाखा अस्यास्तीति शिखरम् । वृक्षशिरोनामानि ॥ मूल्यतेऽनेनेति [1]मूलम् । 'मूल [2]प्रतिष्ठायाम्' । वध्यन्ते स्थिरीक्रियन्त उद्भिदादयोऽनेनेति बुध्न । 'वन्ध वन्धने' । अङ्घ्रेर्नाम पादपर्यायो यस्य अङ्घ्रिनामक । वृक्षादेरङ्घ्रि सन्निकभागनामानि ॥ कालान्तरेऽपि सरतीति सार । 'सृ गतौ' । मज्जति दारुणोऽन्तरिति मज्जा । '[4]टुमस्जो शुद्धौ' । नकारान्त । वृक्षान्त सारनामनी । [6]त्वच्यन्ते आव्रियन्त ऽनयेति त्वक् । 'त्वच सवरण' । वल्लते सवृणोतीति वल्कम् । वल्कल च । 'वल सवरणे' । वृक्षत्वचो नामानि ॥ २ ॥

[1] मूलतीति $F_2$, $Pt_2$ [2] मूल रोहण $P_1$ $K_6$ [3] नाला तत्मपि $F_2$
[4] मज निमज्जने $K_6$ [5] आकारा त स्त्रीलिङ्गोऽपि $F_2$ [6] त्वचति सवृणोति $Pt_2$
[7] वल्यते $K_5$

(पा.) शिरोऽग्र—पु ना । अग्रनामनी । 'कोन' । मूल—नामक । मूलनामानि । 'वेरु' । नामशब्द पादादिपर्यायग्रहणार्थ ॥ सारो—नरि । स्थिराशनामनी । 'चाव' । मज्जा नान्त ॥ त्वक—अस्त्रियाम् । तर्वादित्वक्नामनी ॥ अस्त्रीशब्दो वल्कलस्यापि विशेषणम् । '[1]वल्कलश्चोलकोऽस्त्रियाम्' इति वैजयन्ती (पृ ४६, श्लो ८३) ॥ १२ ॥

[1] वल्कल चोलकोऽस्त्रियाँ इति मुद्रितपुस्तके

**काष्ठ दार्विन्धन त्वेध इध्ममेधः समित् स्त्रियाम् ।**
**निष्कुहः कोटर वा ना वल्लरी मञ्जरी स्त्रियौ ॥ १३ ॥**

(वि.) काष्ठमिति—काशते [1]दीप्यणेति काष्ठम्[2] । 'काशृ दीप्तौ' । दीर्यते कुठारादिनेति दारु । 'दॄ विदारणे' । [3]भिन्नशाखानामनी ॥ इध्यतेऽग्निरनेनेति इन्धनम् । इध्म च । 'ञिइन्धी दीप्तौ' । एधतेऽग्निरनेनेति एध । सान्त [4] । अजन्तश्च, पुमानयम् । 'एध वृद्धौ' । समिध्यतेऽग्निरनयेति समित् । स्त्रियाम् । 'ञिइन्धी दीप्तौ' । अग्नि समिन्धनार्थकाष्ठनामानि ॥ निष्कुहयते [5]विस्मापयत्यत्यन्तविस्तृतत्वादिति निष्कुह । 'कुह विस्मापने' । कुटिलसुषिरत्वात् कुटतीति कोटरम् । 'कुट कौटिल्ये' । निष्कुटमिति वा पाठ । वृक्षगतविवरनामनी ॥ वल्लते सवृणोति शाखामिति वल्ली वल्लरिः[6] । मन्यते कोकिलादिभिर्बहुमन्यत इति मञ्जरी । मञ्जरिर्वा । 'मनु अवबोधने' । सकुड्मलनवा[7] विर्भूतवृक्षशाखानामनी ॥ १३ ॥

¹ अग्निना सम F₂, Pt₂　² कासत कुत्सयते स्वविकल स्थाणुमिति वा, 'कासृ कुत्सायाम्' D₂, J₂　³ छिन्न° F₂　⁴ नपुसकलिङ्ग, एधोऽयमकारान्त पुलिङ्ग B₁, F₁, K₅　⁵ अतिविस्तृत° B₁, K₅　⁶ F₂ adds 'वल वल्ल सवरणे'　⁷ प्रवालभूत° B₁, K₅

(पा.) काष्ठ दारु। शुष्कवृक्षनामनी। 'पुनपुसकयोर्दारुजीवातुस्थाणुशीधव'[1] इति त्रिकाण्डशेष (पृ ३७, श्लो १०३६) ॥ इन्धन—स्त्रियाम्। एध इति सान्तप्रथमा। द्वितीय एधोऽदन्त। समिदिति चान्त स्त्रियाम्। उदाहरणानि—'अनलायागरुचन्दनैधसे' (रघु० ८ ७१)। 'एधान् हुताशनवत स मुनिर्ययाचे' (रघु० ५ ८१)। द्वे समिधावाधायेति। 'वटचरुकु'। 'आलाज्य सर्पेण शुष्कम्'। एतानि च। [2]गरहादयो विशेषवचना। 'काष्ठेन्धन तु [3]गरह गोकरीपेन्धन बुधा' इति वैजयन्ती (पृ ९१, श्लो ९७)। निष्कुह—वा ना। तरुसुषिरनामनी। 'तोर'। निष्कुट इति कश्चित् पाठ। निष्कुप इति क्वचित्। निष्कूट इत्यपि। 'तरुनिष्कूटगतश्चकार चिन्ताम्' इति बालभारते। वल्ली—स्त्रियौ। सस्सिलयनवतरुशाखानामनी। 'चिगुरुनाम'॥ मञ्जाशब्दोऽपि। 'वल्लरिर्मञ्जरिर्मञ्जा'[4] इति वैजयन्ती (पृ ४६, श्लो २०)॥ ८३॥

¹ सीधव इति मुद्रितग्रन्थे, शीधव पादटिप्पण्या च　² गहरादय B₃　³ गह्वर B₃
⁴ 'मञ्जा मञ्जरिवल्लरी' इति मुद्रितपुस्तक

**पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्।**
**पल्लवोऽस्त्री किसलयं विस्तारो विटपोऽस्त्रियाम्॥ १४॥**

(वि.) पत्रमिति—पतति [1]वृक्षमकाशादिति पत्रम्। 'पत्लृ गतौ'। पल्यते भिद्यते[2] इति पलाशम्। 'पल छेदने'। पलाश्यते भक्ष्यते इति वा। परपूर्व 'अश भोजने' इति धातु। रलयोरभेद। [3]छाद्यते वृक्षोऽनेनेति छदनम्। छदश्च। 'छद अपवारणे'। दलति शीर्यते इति दलम्। 'दल विशरणे'। पिपर्ति वृक्ष पूरयतीति पर्णम्। 'पृ पालनपूरणयो'। वृक्षपर्णनामानि॥ पलति वायुवशाच्चलतीति पल्लव। 'पल गतौ'। अयमस्त्रियाम्। किञ्चित् सलतीति किसलयम्। 'षल गतौ'। नवस्तेनास्णतनमापनदलनामनी॥ विस्तीर्यते तरुरनेनेति विस्तार। 'स्तृञ् आच्छादने'। विटान् ग्रहच्युतान् पातीति [4]विटप। 'पा रक्षणे'। विटति आक्रोशयति वा। 'विट [5]आक्रोशे'। वृक्षविस्तारनामनी॥ १४॥

¹ वृक्षात् F₂, Pt₂　² छिद्यत B₁, अलन्दयते छिद्यत इति वा, 'लश छदने' F₂
³ छाद्यते J₂, K₅　⁴ वनति वेष्टयति वा 'वट वेष्टन' F₂, Pt₂　⁵ 'विट शब्दे' J₂, आक्रोशने B₁

(पा.) पत्र—छद पुमान्। पत्रनामानि। 'आकुलु'। पल्लवो—किसलयम्। पल्लवनामनी। 'चिगुरु'॥ किसलशब्दोऽपि। 'किसल स्यात् किसलय पुसि क्लीबे च पल्लवम्' इति [1]व्याडि। विस्तारो—अस्त्रियाम्। पल्लवितशाखानामनी॥ १४॥

[1] ०याळि $B_3$

**वृक्षादीनां फलं सस्यं वृन्तं प्रसवबन्धनम्।**
**आमे फले शलाटुः स्याच्छुष्के वानमुभे त्रिषु॥ १५॥**

(वि.) वृक्षादीनामिति—फलतीति फलम्। 'फल निष्पत्तौ'। सस्ति वृक्षमधिशेते सस्यम्। 'षस स्वप्ने'। वृक्षलतादिफलनामनी॥ [1]वृणोति स्वीकरोति पुष्पमिति वृन्तम्। 'वृञ्[2] वरणे'। प्रसूयत इति प्रसव। 'षु प्रसवैश्वर्ययो'। बध्यतेऽनेनेति बन्धनम्। 'बन्ध बन्धने'। प्रसवा पुष्पफलपत्राणि तेषा बन्धनम्। पुष्पादीना लतादिसम्बन्धघटकनालादियुक्तस्य नाम॥ शलति पुष्टिमापद्यत इति शलाटु[3]। 'शल [4]गतौ'। अपक्वफलनाम॥ वायति शुष्यतीति वानम्। 'वै ओवै शोषणे'। शुष्कफलनाम॥ उभे त्रिषु। उभे शलाटुवानननामनी त्रिषु लिङ्गेषु वर्तते॥ १५॥

[1] वृणीत $Pt_2$ [2] 'वृङ् समक्तौ' $K_8$, $Pt_3$ [3] शलति पुष्टिमापद्यते शल। शलश्चासौ अटुश्च शलाटु $T_2$ $Pt_2$ [4] 'शल चलनसवरणयो' $Pt_2$

(पा.) वृक्षादीना—सस्यम्। वृक्षादिफलनाम। 'ग्राम्यकविकथाबन्ध इव नीरसस्य-मनोहरो देश' इति नलदमयन्तीश्लेषाद् द्विदन्त्य। वृन्त—बन्धनम्। पुष्पफलबन्धन वृन्त स्यात्। 'ताडिमे'। प्रसवबन्धनमिति करिकलभवत्प्रयोग। 'प्रसव पिप्पल सस्य फल वृन्त तु बन्धनम्' इति वैजयन्ती (पृ ४६, श्लो २०)। आमे—स्यात्। अपक्वफलनाम। 'काय'।

'शार्दूलशम्बलपलाशशलाटुशाटी-
शुण्ठीशटीशरदशोकशुभप्रकाशा।'

इत्यूष्मभेदपाठात् तालव्यादि। शुष्के वानम्। शुष्कफलनाम। उभे त्रिषु। शलाटुवानशब्दौ द्वौ त्रिलिङ्गौ। शलाटवो मापा, वानाश्चणका॥ १५॥

**क्षारको जालकं क्लीबे कलिका कोरकः पुमान्।**
**स्याद् गुच्छकस्तु स्तबकः कुड्मलो मुकुलोऽस्त्रियाम्॥१६॥**

(वि.) क्षारक इति—क्षरति प्रसूत इति क्षारक । 'क्षर सचलने' । [1]समूहा-वस्थावत्त्वात् जलतीति जालकम् । 'जल घातने' । नवकलिकावृन्दस्य नामनी ॥ कल्यते प्रसूनमिति शब्द्यते कलिका । 'कल शब्दसख्यानयो' । कुर्यते शब्द्यते कोरक' । 'कुर शब्दे' । अत्यन्ताविकसितपुष्पनामनी ॥ अत्र कोरकशब्दोऽस्त्री[2] । [3]गूयते साधुरिति गुन्छक । 'गुड् शब्दे' । स्तूयत इति स्तबक । 'ष्टुञ् स्तुतौ' । विकसितपुष्पसघातस्य नामनी[4] ॥ कुटति कुटिलभावमीषद्व्रजति [5]कुट्मल । 'कुट कौटिल्ये' । मुञ्चति कलिकावस्थामिति मुकुल । 'मुच्लृ मोक्षणे' । [6]अयमस्त्रियाम् । ईषद्विकसितकलिका-नामनी ॥ १६ ॥

[1] समूहवत्त्वात् $K_6$ समूहावस्थासत्वात् $B_1$ [2] पुसि $F_2$ [3] गुर्यते, 'गुरी शब्दे' $F_2$ $K_6$ [4] $F_2$ adds

एकपरोहे पुष्पाणि पृथग् यत्र बहूनि च ।
पुष्पगुच्छस्य विज्ञेयो यथा स्यात् करवीरके ॥

[5] कुड्मल $K_2$ [6] $K_2$ adds मुकुल

(पा.) क्षारको—पुमान् । अत्यन्ताविकसितकुसुमनामानि । 'मुग्ग' । रूपभेद-सिद्धलिङ्ग विशेषविधिरनित्यज्ञापक । तेन—

'मरुदवनिरुहा रजो वधूभ्य
समुपहरन् विचकार कोरकाणि ।' (शिशु ७ ~६)

स्यात्—स्तबक । पुष्पगुच्छनामनी । 'पुष्पगुत्ति' । गुच्छक इति चकार-छकारसयोगी । 'गुच्छो गुलुच्छ स्तबक' इति वैजयन्ती (प्र ४६, श्लो २०) । 'स्तबको गुच्छको गुन्छ' इति हलायुध (अ मा २ ३३) । सुभूतिटीकाया 'गुप्सक (?) गुत्स' इति तकारसकारसयोग्युक्त । 'गुत्सो गुच्छो गुलुच्छक । [1]गुलुञ्छश्चार्धवासिते' इति शेषे । अर्धवासित इत्युत्तरान्वयि ॥ कुडमलो—अस्त्रियाम् । अर्धविकसितकोरकनामनी । 'अरविरिमोग' । क्वचित् कुड्मलस्थाने कारकावेकार्थौ । 'कोरकजालकलिकाकुडमल मुकुलानि तुल्यानि' इति हलायुध (अ मा २ ३१) ॥ १६ ॥

[1] 'गुलुञ्छ परिकीर्तित' इति हलायुध ।

स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम् ।
मकरन्दः पुष्परसः परागः सुमनोरजः ॥ १७ ॥

(वि.) स्त्रिय इति—सुष्ठु मन्यते जनैरिति सुमना। सान्तः स्त्रियाम्। 'मनु[1] अवबोधने'। पुष्यतीति पुष्पम्। 'पुष्प विकसने'। प्रसूयत[2] इति प्रसूनम्। 'षूङ् प्राणिप्रसवे'। कुस्यति [3]भ्रमरादिना संश्लिष्यतीति कुसुमम्। 'कुस [4]संश्लेषणे'। [5]सुनोतीति सुमम्। 'षु प्रसवैश्वर्ययो'। सममिति वा पाठः। पुष्पनामानि॥ मङ्क्यते मण्ड्यते पुष्पमनेनेति मकरन्दः। 'मकि मण्डने'। पुष्पाणां रसः पुष्परसः। पुष्परसनामनी॥ परागच्छति [6]वायुनेति परागः। सुमनसां रजः सुमनोरजः। पुष्परजोनामनी॥ १७॥

[1] मन ज्ञाने $F_2$ [2] प्रसूते $K_2$ [3] भ्रमरादिरिति $K_5$ [4] श्लेषणे $B_1$ $F_1$ $K_2$ $K_5$ [5] सवति $J_2$ [6] वायुवेगेन $F_1$ $J_2$ $K_2$, वायुवशेन $K_5$

(पा.) स्त्रियः—सुमम्। पुष्पनामानि। सुमनःशब्द एकवचनान्तोऽपि। 'पुष्पं सुमनाः कुसुमम्' इति नाममाला। पुष्पशब्दः पुलिङ्गोऽपि। 'पुष्पोऽस्त्री कुसुमं सुमम्' इति वैजयन्ती (पृ ४६, श्लो. १८)। प्रयोगश्च—

'आरामसीमनि यथा वियति प्रसन्ने
तारास्तथैव विलसन्ति कदम्बपुष्पाः।'

इति। 'प्रसूतमुद्गमं फुल्लं लतान्तं तरुजं तथा'। एतानि च॥ मकरन्दः पुष्परसः। पुष्परसनाम। 'मरन्दो मकरन्दोऽस्य [1]रसः' इति वैजयन्ती (पृ ४६, श्लो १९)। आसवमधूलिकादिपदान्यपि प्रपञ्चयन्ति—

'भ्रान्तः पलाशकुसुमासवसौरभज्ञः
प्राप्तोऽद्य मामिति वृथा न विधेहि गर्वम्।
जातेर्वियोगविधुरस्कुन्दाग्रबुद्धया
भृङ्गस्त्वदीयकुसुमानि परं विवेश॥'
'अहो मे सौभाग्यं मम च भवभूतेश्च [2]फणितं
तुलायामारोप्य प्रतिफलति तस्यां लघिमनि।
गिरां देवी सद्यः श्रुतिकलितकल्हारकलिका
मधूलीमाधुर्यं क्षिपति परिपूर्त्यं स्मितमुखी[3]॥'

इत्यादि॥ परागः सुमनोरजः। पुष्पधूलिनामनी। अनुक्तम्—'निर्यासः स्यात् द्रुमरसः स्वपुरो वेष्टको लशः'। तरुरसनामानि। 'वङ्क'॥ १७॥

[1] रस इति मुद्रितग्रन्थ [2] भणितं, धरायाम् इति च मुद्रितग्रन्थे [3] भगवती (भो प्र पृ ५६, श्लो २५३)

**द्विहीनं प्रसवे सर्वं हरीतक्यादयः स्त्रियाम्।**
**आश्वत्थवैणवप्लाक्षनैयग्रोधैङ्गुदं फले ॥ १८ ॥**
**बार्हतं च फले जम्ब्वा जम्बूः स्त्री जम्बु जाम्बवम्।**

(वि.) द्विहीनमिति—सर्वं वक्ष्यमाणं प्रसवे मूलपुष्पफलादौ वर्तमानं वृक्षलतौषधिजातं द्विहीनं स्त्रीपुलिङ्गहीनं भवति। नपुंसकमेवेत्यर्थः[1]। लुप्ततद्धितान्तं[2] च भवति। चम्पकस्य पुष्पं चम्पकम्। आम्रस्य फलम् आम्रम्। [3]द्विहीनस्यापवादमाह—हरीतक्यादयः स्त्रियामिति। हरीतकीकोशातकीकेतकीधात्र्यादयः फले प्रसवे वर्तमानाः प्रकृति[4] हरीतकीशब्दवत् स्त्रियां वर्तन्ते। कथम्? हरीतक्याः फलं हरीतकी। एवं कोशातकीत्यादि। लुप्ततद्धितान्तस्यापवादमाह—अश्वत्थेत्यादि। एते शब्दाः फले[5] प्रसवे वर्तमाना अलुप्ततद्धितान्ता भवन्ति। न तु चूतादिशब्दवत्। अश्वत्थस्य फलम् आश्वत्थम्। वेणोरिदं वैणवम्। प्लक्षस्य फलं प्लाक्षम्। न्यग्रोधस्य फलं नैयग्रोधम्। इङ्गुद्याः[7] फलम् ऐङ्गुदम्। बृहत्याः फलं बार्हतम्। जम्बूशब्दः फले वर्तमानः स्त्रीरूपत्वं[8]भजते। कथम्? जम्ब्वाः फलं जम्बूः। पक्षे जम्बु जाम्बवं च ॥ १८ ॥

[1] इति यावत् $J_2$ $Pt_2$ [2] लुप्ततद्धितं $K_8$ [3] $B_1$ om ts one page
[4] स्वप्रकृति $F_2$ [5] $F_2$ adds कोशातक्याः फलं कोशातकी [6] फलप्रसवे $D_2$ $F_1$
[7] इङ्गुदस्य $Pt_2$ [8] स्त्रीरूपं भवति F

(पा.) द्विहीनं—सर्वम्। वक्ष्यमाणशब्दजातं सर्वं पुष्पफलमूलादौ वर्तमानं सत् नपुंसकलिङ्गं भवति। चम्पकस्य पुष्पं चम्पकम्। कदम्बम्। करवीरम्। 'पुष्पमूलेषु बहुलम्' (वा ४ ३ १६६) इति बहुलवचनादुत्पन्नप्रत्ययस्य लुक् च। आम्रस्य फलमाम्रम्। दाडिमम्। तिन्दुकम्। 'फले लुक्' (४ ३ १६३) इति लुक्। हरीतक्यादयः स्त्रियाम्। हरीतक्यादयः फले वर्तमानाः स्त्रीलिङ्गाः। हरीतक्याः फलं हरीतकी। कोशातकी, द्राक्षा। 'हरीतक्यादिभ्यश्च' (४ ३ १६७) इति लुप्। 'लुपि युक्तवद्व्यक्तिवचने' (१ २ ५१) इति प्रकृतिलिङ्गता। आश्वत्थ—बार्हतं च। अश्वत्थादयः फले नपुंसकलिङ्गाः। अश्वत्थस्य फलमाश्वत्थमित्यादि। 'प्लक्षादिभ्योऽण्' (४ ३ १६४) इत्यनपवादकाण्विधानसामर्थ्यान्न लुक्। एवं वैणवादीनामपि। चकाराद् गणपठितशिग्र्वादेरपि। शैग्रवमित्यादि ॥ फले—जाम्बवम्। जम्बूफले जम्बू स्त्रीलिङ्गः। 'लुप् च' (४ ३ १६६) इति लुप्। जम्बुजाम्बवशब्दौ नपुंसकौ। 'जम्ब्वा वा' (४ ३ १६५) इति विभाषाण्। पक्षे 'ओरञ्' (४ २ ७१)। तस्य लुक् जम्बु। अणि जाम्बवम् ॥ १८ ॥

पुष्पे जातीप्रभृतयः स्वलिङ्गा व्रीहयः फले ॥ १९ ॥
विदार्याद्यास्तु मूलेऽपि पुष्पे क्लीबेऽपि पाटला ।

(वि.) पुष्प इति—[1]जातीमालती[2]यूथिकादय [3] पुष्पे प्रसवे वर्तमाना स्वलिङ्गा भवन्ति। कथम्? [4]जात्या पुष्प जाती। एव [5]माल्त्यादय । व्रीह्य फले। व्रीहिशब्द बहुवचनेन गोधूमादयो गृह्यन्ते। व्रीहियवगोधूमादय फले प्रसवे वर्तमाना स्वलिङ्गा प्रकृतिलिङ्गा भवन्ति । कथम्? व्रीहीणा फलानि व्रीहय । [6]एव गोधूमादय । विदारी [7]गान्धार्यंशुमत्याद्यो मूले वर्तमाना स्वलिङ्गा प्रकृतिलिङ्गा भवन्ति। अपिशब्दात् परेऽपि। कथम्? विदार्या फल मूल [8]वा विदारी। एव [9]गान्धार्यादि। पाटलशब्द पुष्पप्रसवे वर्तमान क्लीबेऽपि। अपिशब्दात् स्वलिङ्गश्च भवति। कथम्? पाटलाया पुष्प पाटल पाटला वा ॥ १९ ॥

[1] $J_2$, $K_2$ add पुष्पे जातिप्रभृतय स्वलिङ्गा [2] मल्लिका $F_1$, I, $K_5$, शेफालिका $F_2$
[3] प्रभृतय $F_1$ [4] जाते कुसुम जाति $Pt_3$ [5] मल्लिकाया कुसुम मल्लिका $Pt_2$
[6] मुद्गस्य फल मुद्ग, मापस्य फल माप $Pt_3$ [7] गन्धारी $Pt_2$ [8] $Pt_2$ adds कुसुम वा
[9] गन्धार्या फल मूल कुसुम वा गन्धारी $Pt_2$

(पा.) पुष्पे—स्वलिङ्गा । पुष्पे वर्तमाना जातिप्रभृतय प्रकृतिलिङ्गा । जातिर्मल्लिका यूथिका नवमालिका। 'पुष्पमूलेषु बहुलम्' (वा ४ ३ १६६) इति लुप्। व्रीहय फले। व्रीहय फले प्रकृतिलिङ्गा । माषा यवास्तिला मुद्गा । [1]लुक्प्रकरणे 'फलपाकशुषाम्' (वा ४ ३ १६६) [1]इति लुबुपसंख्यानात्[2] ॥ विदार्या—मूलेऽपि । विदार्याद्या मूले प्रकृतिलिङ्गा । विदारी, अंशुमती, शतावरी, बृहती, अपिशब्दात् पुष्पे यथादर्शन प्रकृतिलिङ्गता। बृहत्या पुष्पमपि बृहतीति ॥ पुष्पे—पाटला। पाटलाशब्द पुष्पे वर्तमानो नपुसकलिङ्ग प्रकृतिलिङ्गश्च भवति। पाटल, पाटला ॥१९॥

[1] 'लुप्प्रकरणे फलपाकशुषामुपसंख्यानम्' इति काशिकायाम् (पृ ३६२) [2] $A_1$ adds लुप्

बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः ॥ २० ॥
अश्वत्थेऽथ कपित्थे स्युर्दधित्थग्राहिमन्मथाः ।
तस्मिन् दधिफलः पुष्पफलदन्तशठावपि ॥ २१ ॥

(वि.) बोधिद्रुम इति—इह वृक्षलतौषधीना नामान्यान्ध्रभापयैव[1] वक्ष्याम । [2]बोधिसञ्ज्ञको द्रुम बोधिद्रुम । स्वल्पेऽपि वाते [3]चलानि दलानि यस्य चलदल । सेवितार[4] पातीति पिप्पल । 'पा रक्षणे'। कुञ्जरैरद्यत इति कुञ्जराशन । 'अश भोजने'। कुञ्जराणामशनमिति वा । अश्वरूपेणाग्निरस्मिन् तिष्ठतीति अश्वत्थ । अश्वत्थनामानि । 'राविचेट्टु'॥ कपीना प्रियत्वेन तिष्ठतीति कपित्थ । 'ष्ठा गतिनिवृत्तौ'। दधिवत्[5] फलम् तिष्ठतीति दधित्थ । [6]ग्राहिफलत्वात् ग्राही । 'ग्रह उपादाने'। नान्त । फले कपिमनो मथ्नातीति[7] मन्मथ । 'मन्थ विलोडने'। दधिवदम्ल ग्राहिफलमस्य दधिफल । पुष्पात्[8] फलमस्येति पुष्पफल । पुष्प्यति फलति चेति वा । 'पुष्प विकसने'। 'फल निष्पत्तौ'। आम्लत्वात् [9]दन्तान् शठतीति दन्तशठ । 'शठ कैतवे च'। चशब्दात् हिंसासङ्क्लेशनयो । कपित्थनामानि । 'वेलङ्गचेट्टु'[10] ॥ २०–१ ॥

[1] कर्णाटकभाषाया $J_2$ [2] बुध्यतेऽनेनेति बोधि, 'बुध अवगमने', बोधिश्चासौ द्रुमश्च $F_2$ $Pt_2$ [3] चलन्ति $D_2$ $K_6$ [4] मत्तान् $Pt_2$ [5] दधीव तिष्ठति $Pt_2$ दध्युपेतवत् $K_6$ [6] विष्टम्भत्वात् $Pt_2$ [7] $F_2$ $Pt_2$ add बध्नाति [8] पुष्पाण्येव फलानि $B_1$ [9] दन्तानां शा० $F_2$ $Pt_2$ [10] 'वेल्लमर' $J_2$

(पा.) बोधिद्रुम—अश्वत्थे। अश्वत्थनामानि। 'राविचेट्टु'। द्रुमशब्दो द्रुमाभिधानख्यापनाय। 'श्रीवृक्ष पिप्पलोऽश्वत्थो बुधैर्बोधिश्च कथ्यते' इति हलायुध (अ. मा. २ ४१)॥ अथ कपित्थे—दन्तशठावपि। कपित्थनामानि। 'वेलग'॥ २०–१॥

**उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः ।**
**कोविदारे चमरिकः कुद्दालो युगपत्रकः ॥ २२ ॥**

(वि.) उदुम्बर इति—उन्नतरवाद् उद्गतमम्बर [1]येनेत्युदुम्बर । उन्दनाद्वा । 'उन्दी क्लेदने'। जन्तव क्रिमय फले यस्य [2]जन्तुफल । [3]यूपादियज्ञाङ्गत्वात्[4] यज्ञाङ्ग । हेमवर्णं दुग्ध क्षीरमस्य हेमदुग्धक । उदुम्बरनामानि। 'अत्तिचेट्टु'॥ कु [5]भुव [6]विदारयतीति कोविदार । 'दॄ विदारणे'। चमरसदृशमञ्जरित्वात्[7] चमरिक । कु भुव [8]मूलैर्दालयतीति कुद्दाल । 'दल विशरणे'। युगानि पत्राणि यस्य युगपत्रक । कोविदारनामानि । '[9]काञ्चनपुचेट्टु ॥ २२ ॥

[1] अनेन $F_2$, $Pt_2$ [2] जन्तुयुक्त फलमस्येति $F_2$, $Pt_2$ [3] यूपादिरूपेण $J_2$, $Pt_2$ [4] $Pt_2$ adds उपकरणमिति [5] भूमिं $J_2$, $Pt_2$ [6] विदृणाति $J_2$ [7] मञ्जरी° $J_2$, $Pt_2$ [8] दलयति $K_6$, $Pt_2$, दलति $D_2$, $J_2$ [9] 'काबाल्मर' $J_2$

(पा.) उदुम्बरो—हेमदुग्धक । उदुम्बरनामानि । 'मेडि' । कोविदारे—युगपत्रक । कोविदारनामानि । 'काञ्चनमु' । 'कञ्चदार काञ्चनार' । एते च ॥ २२ ॥

**सप्तपर्णो विशालत्वक् शारदो विषमच्छदः ।**
**आरग्वधे राजवृक्षशम्याकचतुरङ्गुलाः ॥ २३ ॥**
**आरेवतव्याधिघातकृतमालसुवर्णकाः ।**

(वि.) सप्तपर्ण इति—[1]सप्त पर्णानि यस्य सप्तपर्ण । विशाला त्वक् यस्य विशालत्वक् । शरदि [2]पुष्पोद्गमात् शारद । शारदीति वा स्त्रीलिङ्ग । [3]विषमा छदा पत्राणि यस्य विषमच्छद । सप्तपर्णनामानि । 'एडाकुल यरटिचेट्टु' ॥ आरञ्जयन्तीति आरज फलाकारा मलास्तेषा वध छेदनमस्यास्तीति वा आरग्वध । राजा चासौ वृक्षश्च राजवृक्ष । रोगराज वृश्चति छिनत्तीति वा । 'ओव्रश्चू छेदने' । शमीमकत्यनु गच्छतीति [4]शम्याक । 'अक अग कुटिलाया गतौ' । चतुरङ्गुलपर्णपर्वत्वात् चतुरङ्गुल । आरेवते उत्प्लुत्य गच्छति रोगोऽनेनेति आरेवत । 'रेवृ प्लव गतौ' । आरेव रङ्ग इव रोगदेवता हन्तीति वा । व्याधिं हन्तीति[5] व्याधिघात । फलै कृता माला यस्य कृतमाल । सुवर्णाकाराणि पुष्पाणि यस्य सुवर्णक । सुवर्णकनामानि । 'रेलचेट्टु' ॥ २३ ॥

[1] प्रतिपर्वं सप्त पर्णानि $Pt_2$ [2] पुष्प्यतीति $F_2$ $Pt_2$ शारदीति वा पाठ $K_5$ $Pt_2$ [3] $Pt_2$ adds सप्तपर्णत्वात् [4] सम्यक् पाकोऽन सम्याक इति वा पाठ । श कल्याण पाकोऽस्येति वा $Pt_2$ [5] हन हिंसागत्यो ' $K_8$

(पा.) सप्तपर्णो—विषमच्छद । सप्तपर्णनामानि । 'येडाकुलरटु' । शारदीशब्दोऽपि । 'शारदी तोयपिप्पल्या सप्तपर्णे च शारदी' इति रुद्र । साकर्यं पुस्त्वख्यापनार्थम् ॥ 'शारद [1]सप्तपर्ण स्याद् बृहत्त्वक् मदनाशन' इति रत्नकोश । आरग्वध—सुवर्णक । आरग्वधनामानि । 'रेल चेट्टु' ॥ अरग्वधशब्दोऽपि । 'आरग्वधस्तु शम्याक कृतमूलोऽप्यरग्वध' इति रत्नमाला । अर्ग्वधशब्दोऽपि । 'अर्ग्वध तु व्याघात' इति वैजयन्ती (पृ ८९, श्लो ८८) ॥ २३ ॥

[1] सप्तपर्णस्त्वो बृहत्त्व $B_3$ [2] 'आरग्वध आरेवत शम्याक प्रग्रहोऽर्ग्वध' (पृ ८९, श्लो ८८) इति, 'आर्ग्वध तु व्याघातश्चतुरङ्गुल' इति च मुद्रितग्रन्थ

**स्युर्जम्बीरे दन्तशठजम्भजम्भीरजम्भलाः ॥ २४ ॥**
**वरुणे वरणः सेतुस्तिक्तशाकः कुमारकः ।**
**पुंनागे पुरुषस्तुङ्गः केसरो देववल्लभः ॥ २५ ॥**

(वि.) स्युरिति—जम्यते [1]भक्ष्यत इति जम्बीरः । 'जमु अदने' । दन्तान् शठति [2]हिंसयति आम्लत्वेनेति दन्तशठः । 'शठ हिंसासङ्क्लेशनकैतवेषु' । जम्भयति मोहयतीति जम्भः । जम्भीरः जम्भलश्च । 'जभी गात्रविनामे' । जम्भीरनामानि । 'निम्मिचेट्टु' ॥ वृणोति आवृणोतीति वरुण. । 'वृञ् वरणे' । वरणश्च । आवरण-कारित्वात् सेतु· । सिनोति व्याधिं हन्तीति वा । 'षिञ् बन्धने' । [3]तिक्तश्चासौ शाकश्च तिक्तशाकः । सदा तरुणत्वात् कुमारक. । वरणनामानि । 'उलिमिरि चेट्टु' ॥ पूजितः पुमान् पुनाग. । पुंनाग इव पुनागः । पुरुषवदुन्नतत्वात् पुरुषः । तुङ्गश्च । तुज्यत इति तुङ्गः । 'तुजि हिंसायाम्' । प्रशस्ताः केसरा. सन्त्यस्य केसरः । देवानां वल्लभः प्रियः देववल्लभः । पुंनागनामानि । 'सुरपोन्नचेट्टु' ॥ २४–५ ॥

[1] भुज्यते $B_1$, $K_8$ [2] हिनस्ति $K_6$, दन्ताना शठः अम्लत्वेन $F_2$, $Pt_2$ [3] तिक्तरसः शाकोऽस्य $Pt_2$.

(पा.) स्युर्जम्बीरे—जम्भलाः । [1]जम्बीरनामानि । [2]'निम्म' ॥ वरणे—कुमारक. । वरणवृक्षनामानि । 'उविमिरि चेट्टु' । 'मटमाविनपेरुन्तु' ॥ पुंनागे—देववल्लभः । पुंनागनामानि । 'पोन्नचेट्टु' । सुरपुंनाग इति तद्भेदः । 'नमेरुः सुरपुंनागः' । इति निघण्टुसर्वस्वः । 'सुरपोन्नचेट्टु' ॥ २४–५ ॥

[1] जम्भीर° $B_3$ [2] $B_3$ adds 'चेट्टु'.

**पारिभद्रे निम्बतरुर्मन्दारः पारिजातकः ।**
**तिनिशे स्यन्दनो नेमी रथद्रुरतिमुक्तकः ॥ २६ ॥**
**वञ्जुलश्चित्रकृच्चाथ द्वौ पीतनकपीतनौ ।**
**आम्रातके मधूके तु गुडपुष्पमधुद्रुमौ ॥ २७ ॥**
**वानप्रस्थमधुष्ठीलौ जलजेऽत्र मधूलकः ।**

(वि.) पारिभद्र इति—परितो भद्रमस्य पारिभद्रः । नयत्यारोग्यमिति निम्बः । 'णीञ् प्रापणे' । स चासौ तरुश्च निम्बतरुः । [1]मन्दाः सूक्ष्मा अराः कण्टका यस्य

मन्दार । मन्दारशब्दसाहचर्यात् पारिजातक । पारिण समुद्राज्जात पारिजातक । निम्बतरुनामानि । 'पारिजातवृक्षमु' ॥ [2]चिरजीवित्वादतिक्रान्ता निशा येन तिनिश । स्यन्दनोपयोगित्वात्[4] स्यन्दन । रथचक्रान्ते[5] नमतीति नेमि । 'णम प्रह्वत्वे शब्दे च'। नेमी वा । रथाय द्रुवृक्षो रथद्रु । अतिविस्तृतत्वाद् अतिमुक्तक । वन्यतेऽर्थ्यते[6] इति वञ्जुल । 'वनु याचने'। [7]लघुत्वेऽपि दार्ढ्यदैर्घ्याभ्यामाश्चर्यं करोतीति चित्रकृत् । 'डुकृञ् करणे'। अतिमुक्तकनामानि । 'नेम्मिचेट्टु'। पीतयति वस्त्रादिक रसेन पीतीकरोतीति पीतन । मिष्टे फले कपीना [8]प्रीति तनोतीति कपीतन । 'तनु विस्तारे'। आम्रमततीपदनुगच्छतीति आम्रातक । 'अत सातत्यगमने'। आम्लवत् कपिभिरद्यत इति वा आम्लातक । 'अद भक्षणे'। रलयोरभेद । आम्रातकनामानि । '[9]अम्बाल्पु चेट्टु'॥ मधुरसे उच्यते युज्यतऽत्रेति मधूक । 'उच समवाये'। गुडवन्मधुराणि पुष्पाणि यस्य गुडपुष्प । मधुप्रधानो द्रुमो मधुद्रुम[10]। वनप्रस्थे वनस्थले भवो वानप्रस्थ । मधु ष्ठीवतीति[11] मधुष्ठीव । 'ष्ठिवु निरसने'। मधुष्ठील इति पाठे मधु ष्ठीले गर्भेऽस्य मधुष्ठील[12]। मधु उल्त्यावृणोत्यत्रेति मधूलक । 'उल आवरण'। जलजमधूलकनाम । 'नीरिप्पचेट्टु'॥ २६–७॥

[1] म दानि सूक्ष्माणि भराणि कण्टकानि $J_2$ $Pt_2$ [2] चिरजीवित॰ $J_2$ [3] निशामतिक्रान्त $Pt_3$ [4] उभयोर्यदारुत्वात् $K_5$ $K_6$ [5] चक्रान्तेन $h_6$ [6] वधते $J_2$ $h_6$ [7] लघुदार्ढ्यात् $F_2$ $J_2$ $K_6$ [8] काम $K_5$ $K_4$ [9] 'सिन्न अम्बाल्मु $h_3$ [10] मधुरश्चासौ द्रुमश्च $F_2$ $J_2$ $h_6$ [11] $K_6$ $K_4$ add प्रस्रवतीति [12] 'इप्पचेट्टु $h_6$

(पा.) पारिभद्रे—पारिजातक । पारिभद्रनामानि । 'पारिजमु' ॥ तिनिशे—चित्रकृत् । तिनिशनामानि । 'तिनासमु'। 'मथुरादेशप्रसिद्धमु' ॥ अथ द्वौ—आम्रातके । आम्रातकनामानि । 'अम्बालमु'। 'अडे कोतिमामिडि'। 'कपिचूतोऽम्लवाटञ्च'। एते द्वे च । कपिभूप इति वा पाठ ॥ मधूके तु—मधुष्ठीलौ । मधूकनामानि । 'इप्प'॥ जलेऽत्र मधूलक जलजमधूकनाम । 'नीरिप्प'। 'मधूकोऽन्यो मधूलस्तु जलजो दीर्घपत्रक' इति वामनतन्त्रानुसारिपाठ । 'गिरिजेऽत्र मधूलक'। गिरिजमधूकनाम । 'गौरशालो मधूलोऽन्यो गिरिजस्त्वल्पपत्रक' इत्यरुणदत्ततन्त्रानुसारिपाठ ॥ २६–७॥

**पीलौ गुडफलः स्रंसी तस्मिंस्तु गिरिसम्भवे ॥ २८ ॥**
**अक्षोटकन्दरालौ द्वावङ्कोले तु निकोचकः ।**

(वि.) पीलाविति—पीयत माधुर्यात् पीलु । 'पा पाने'। गुडवन्मधुराणि फलानि यस्य गुडफल । स्रंसयति फलादिकमिति स्रंसी । 'स्रंसु अवस्रंसने'।

'[3]गोनुगुचेट्टु'॥ अश्नोति मूलैर्भुव[1] व्याप्नोतीति अक्षोटः। 'अक्षू व्याप्तौ'। [5]कन्दरस्थानम् अलति भूषयतीति कन्दराल। कर्पराल इति पाठे कल्पते रोग हन्तुमिति कर्पराल.[6]। 'कृपू सामर्थ्ये'। पर्वतपीलुनामनी। 'कोण्डगोन्गुचेट्टु'॥ अङ्क्यते कण्टकैरित्यङ्कोल। 'अकि लक्षणे'। अङ्कोट इति वा पाठ.। [7]निकुच्यते कण्टकत्वेनास्मान्निकोचक। 'कुच कौटिल्याल्पीभावयो.'। अङ्कोलनामनी। 'ऊडुगचेट्टु'॥ २८॥

[1] पीड्यत इति वा, 'पीड अवगाहने', डलयोरभेद• $K_5$, $K_6$ [2] मालादिकम् $J_2$, $K_6$ [3] $K_3$ adds 'चिन्न' [4] भुवनं $K_9$ [5] कन्दरान् सानूनि $Pt_2$ [6] कर्पररोग हन्तीति $K_2$. [7] निकुञ्चति $K_5$, $K_6$.

(पा.) पीलौ—स्रंसी। पीलुवृक्षनामनी। 'गोनुगुचेट्टु'॥ तस्मिंस्तु—आक्षोटकन्दरालौ द्वौ। अक्षोट इति वा। पर्वतोत्पन्नपीलुनामनी। 'कोण्डगोनुगुचेट्टु'। 'अक्रोढ' इति वणिक्प्रसिद्धः॥ अङ्कोले—निकोचक.। अङ्कोलनामनी। 'उडुग'। अङ्कोडे ऽपीति पाठे—'अथाङ्कोले निचोलोऽङ्कोडशोधनौ[1]' इति वैजयन्ती (पृ ४८, श्लो. ४१)॥ २८॥

[1] अङ्कोढ इति मुद्रितग्रन्थे

**पलाशे किंशुकः पर्णो वातपोथोऽथ वेतसे॥ २९॥**
**रथाभ्रपुष्पविदुलशीतवानीरवञ्जुलाः।**
**द्वौ परिव्याधविदुलौ नादेयी चाम्बुवेतसे॥ ३०॥**

(वि.) पलाश इति—पुण्यानि पलाशानि पर्णानि यस्य स पलाश.। स्वपुष्पै. पल मासमश्नातीव तिष्ठतीति वा। '[1]अश भोजने'। किंचिच्छुकवत्[2] शुकतुण्डसदृशपुष्पत्वात् किंशुकः। [3]पुण्यानि पर्णानि यस्य पर्णः। वातरोग पोथयतीति[4] वातपोथ। 'पुथ हिंसायाम्'। पलाशनामानि। 'मोदुगचेट्टु'॥ वेति[5] वृद्धिं गच्छतीति वेतस। 'वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु'। वितस्यते कालेनोपक्षीयत इति वा। 'तसु उपक्षये'। [6]रमन्तेऽस्मिन् पक्षिण इति रथ.। 'रमु क्रीडायाम्'। अभ्रवर्णानि पुष्पाण्यस्य अभ्रपुष्पः। [7]अभ्रसमये पुष्पमस्येति वा। विदोल्यते[8] वायुवेगेनेति विदुल। 'दुल उत्क्षेपे'। विडुल इति वा। 'डुल उत्क्षेपणे'। शीतवीर्यत्वात् शीत। दाहशमनत्वाद् [9]वन्यत इति वानीरः। वञ्जुलश्च। 'वन षण सभक्तौ'। वेतसनामानि। '[10]पुव्वचेट्टु'॥ परिविध्यतेऽम्भसेति[11] परिव्याध। विदोल्यतेऽम्भसीति विदुलः। नद्यां भवा नादेयी। जलजातवेतसनामानि। 'निरुपुव्वचेट्टु'॥ २९–३०॥

[1] 'अश भक्षणे' $K_5$ [2] नीलत्वात् $K_6$, $Pt_2$. [3] प्रशस्तानि $J_2$, $Pt_2$. [4] $F_1$, $K_2$, $K_5$ add नाशयति. [5] वेति अम्भोऽनुवर्तते $Pt_2$ [6] $F_1$ omits 2 pages. [7] $J_2$ adds वर्पासमये. [8] विद्रुत्यते $Pt_2$. [9] $K_5$ adds सेव्यते. [10] 'प्रब्वलिचेट्टु' $Pt_1$, $Pt_2$. [11] अम्भसि $K_6$.

(पा.) पलाशे—वातपोथः। पलाशद्रुमनामानि। 'मोदुग'। 'ब्रह्मवृक्षस्त्रिपत्रकः'। एते च॥ अथ वेतसे—वञ्जुलाः। वेतसनामानि। 'प्रब्बचेट्टु'॥ द्वौ परिव्याध—चाम्बुवेतसे। जलवेतसनामानि। 'नीरुप्रब्ब'॥ २९–३०॥

**सौभाञ्जने शिग्रुतीक्ष्णगन्धकाक्षीवमोचकाः।**
**रक्तोऽसौ मधुशिग्रुः स्यादरिष्टः फेनिलः समौ॥ ३१॥**

(वि.) सौभाञ्जन इति—[1]कटुत्वेन सुष्ठु मुखं भनक्तीति[2] सौभाञ्जनः। 'भञ्जो आमर्दने'। शोभामनक्तीति शोभाञ्जन इति वा पाठः। 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु'। शिनोति [3]शमयति कफादीनिति शिग्रुः। 'शीब्ज् निशातने'। तेजयति कफादीनिति तीक्ष्णः। 'तिज निशातने'। गन्धं करोतीति गन्धकः। तीक्ष्णो गन्धोऽस्यास्तीति तीक्ष्णगन्धक इति वा। मद्यादिवत् आक्षीवन्त्यनेनेति आक्षीवः[4]। 'क्षीबृ मदे'। [5]मुञ्चति [6]तीक्ष्णगन्धमिति मोचकः। 'मुच्लृ मोक्षणे'। शिग्रुनामानि। 'मुनगचेट्टु'॥ ३१॥

[1] तीव्रगन्धत्वेन $Pt_2$. [2] $K_6$ adds भेदयतीति. [3] हन्ति $K_3$, $K_6$. [4] मन्दो न भवतीति अक्षीवः $K_6$. [5] मोचयति $K_6$. [6] उग्रगन्धम् $Pt_2$

(पा.) शोभाञ्जने—मोचकाः। शोभाञ्जननामानि। 'मुनुग'। 'शोभाञ्जने तीक्ष्णगन्धशिग्रुकाक्षीवमोचकाः' इति पाठादक्षीवः। सौभाञ्जन इति पाठान्तरम्॥ रक्तोऽसौ—स्यात्। रक्तशिग्रुनाम। 'येर्रमुनुग'॥ अनुक्तम्—'अगस्त्ये शुकनासः स्यान्मार्जारो वङ्गसेनकः[1]'। अगस्त्यद्रुमनामानि। 'अगिशचेट्टु'॥ अरिष्टः फेनिलः समौ। अरिष्टवृक्षनामनी। 'कुट्कुट्टुचेट्टु'॥ ३१॥

[1] वंगसेनः $B_2$; वङ्गसेनक इति मुद्रितवैजयन्त्याम् (पृ. ५८, श्लो. १५६).

**विल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि।**
**प्लक्षो जटी पर्कटी स्यान्न्यग्रोधो बहुपाद् वटः॥ ३२॥**

(वि.) बिल्व इति—बिलति [1]कुष्ठरोगमिति, सेवकस्य पापं [2] हिनस्तीति वा बिल्वः । 'बिल भेदने' । शाण्डिल्यमुनिवत्[3] विप्रमान्यत्वात्[4] शाण्डिल्यः । शैलूषो[5] नट इव [6]रूपपरिवर्तनात्[7] शैलूषः[8] । मलते निष्कम्पाति मल्लमिति मालूरः । 'मल मल्ल धारणे' । मल्यते धार्यते देवैरिति वा । मा लक्ष्मीं लातीति वा मालूरः । 'ला दाने' । श्रीप्रदानि श्रीप्रियाणि वा फलानि यस्य सः श्रीफलः । बिल्वनामानि । '[9]मारेडु चेट्टु' ॥ प्लक्षति [10]कफादिदोषमिति प्लक्षः । 'प्लक्ष [11]भक्षणे' । प्लक्षति मूलैरधोगच्छतीति वा । जटा सन्त्यस्येति जटी । 'जट संघाते' । पृच्यते परस्परं ससृज्यत इति पर्कटी । 'पृची सम्पर्के' । नरदारा तोऽयम् । केचित् ङकारान्तस्त्रीलिङ्गमिच्छन्ति[12] । प्लक्षनामानि । 'जुव्वि चेट्टु' ॥ न्यक् तिर्यक् [1] रुणद्धीति न्यग्रोधः । 'रुधिर् आवरणे' । बहवः पादा मूलान्यस्य बहुपात् । वटति मूलैः स्वस्थानं वेष्टयतीति वटः । 'वट परिवेष्टने' । वटवृक्षनामानि । 'मर्रिचेट्टु[14]' ॥ ३२ ॥

[1] कफरोगम् $K_5$　[2] $K_2$, $K_3$ add बिलति　[3] ऋषि° $J_2$ $Pt_2$　[4] °मानित्वात् $K_5$　[5] शैलूषवत् $J_2$, $Pt_2$ इव $K_5$　[6] $K_5$ adds दुर्जरत्वादिना [7] विपरि° $K_5$　[8] शिलूषपुत्रवद्वा I, $K_2$, $K_3$ $K_5$　[9] 'बिल्वपत्र' $J_2$　[10] वस्त्रादि° $B_1$, $K_5$ [11] अदने $K_5$ क्षरणे $B_1$　[12] इति वदन्ति $B_1$ I $K_5$　[13] $F_2$, $Pt_2$ add मागमिति [14] आल्मर $J_2$

(पा.) बिल्वे—श्रीफलावपि । बिल्वनामानि । 'मारेडु' । प्लक्षो—पर्कटी स्यात् । प्लक्षवृक्षनामानि । 'गोजुचेट्टु' । 'प्लक्षे[1] तु पर्कटिजटी पलाशी गिरिलक्षण' इति वैजयन्तीपाठात् (पृ ४७, श्लो २८) जटिपर्कटिशब्दौ पुलिङ्गौ ॥ न्यग्रोधो—वट । वटवृक्षनामानि । 'मर्रिचेट्टु' ॥ ३२ ॥

[1] 'प्लक्षस्तु पर्कटिजटिकलपिगिरिलक्ष्मणा' इति मुद्रितग्रन्थे

**गालवः शाबरो लोध्रस्तिरीटस्तिल्वमार्जनौ ।**
**आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः ॥ ३३ ॥**

(वि.) गालव इति—गालयति स्रावयत्यक्षिरोगमिति[1] गालवः । 'गल स्रवणे' । गालवात्पि प्रभूत इति वा । शबरसंबन्धित्वात्[2] शाबरः । साबर इति पाठान्तरम्[3] । अतिसारं रुणद्धीति लोध्रः । रलयोरभेदः । 'रुधिर् आवरणे' । तिरयति पित्तादिरोगान् नाशयतीति तिरीटः । तीरयतीति वा । 'पार तीर कर्मसमाप्तौ' । तिल्वति स्निह्यत्यङ्गमनेनेति तिल्वः । 'तिल स्नेहने' । मार्जयति उद्वर्तयत्यङ्गमनेनेति मार्जनः । 'मृजूष् शुद्धौ अलंकारे च' । लोध्रनामानि । 'लेल्लोद्दुगु चेट्टु' ॥ षडपि लोध्रसामान्यनामानीति केचित् ।

आद्यौ श्वेतलोध्रस्य, इतरे रक्तलोध्रस्येत्यपरे ॥ अम्यते [4]भक्ष्यत इत्याम्रः । 'अम गत्यादिषु'। [5]चोतति स्रवति रसमिति चूतः । 'चुतिर्[6] क्षरणे'। रसम् अलति भूषयतीति रसालः । 'अल भूषणपर्याप्तिवारणेषु'। रसम् आलातीति वा । 'ला दाने'। आम्रनामानि । 'मामिडि चेट्टु'॥ सह कारयति मेलयति स्त्रीपुंसाविति सहकार । 'डुकृञ् करणे'। [7]अतिसुगन्धाम्रनाम ॥ 'तिय्यमामिडि चेट्टु'॥ ३३ ॥

[1] अस्थिरोगम् $K_3$. [2] $J_2$, $K_6$ add °वृक्ष°. [3] $B_1$, I, $K_2$ add श्वेतलोध्रनामनी. [4] अभिलष्यते $F_2$, $Pt_3$. [5] च्योतति $B_1$, $D_2$, I, $K_5$. [6] 'च्युतिर् क्षरणे' I, $J_2$. [7] $F_2$ adds अतिशयितं सौरममस्य.

(पा.) गालवः — मार्जनौ । लोध्रनामानि । 'लोद्दुगचेट्टु'॥ आम्रः—रसालः । चूतवृक्षनामानि । 'मामिडिचेट्टु'। 'वसन्तशाखी माकन्दः कामाङ्गो मदिरासखः'। एतानि च ॥ असौ —सौरभः । अत्यन्तसुरभिचूतः सहकारः स्यात् ॥ ३३ ॥

**कुम्भोलूखलकं क्लीबे कौशिको गुग्गुलुः पुरः ।**
**शेलुः श्लेष्मातकः शीत उद्दालो बहुवारकः ॥ ३४ ॥**

(वि.) कुम्भोलूखलकमिति—कुम्भोलूखलाकारात् वृक्षकोशान्निर्यातीति कुम्भोलूखलकम् । कुम्भोलूखलके क्लीबे इति केचित् द्विवचनान्ततया नामद्वयं दर्शयितुं [1]पठन्ति । वृक्षकोशे भवः कौशिकः । गुडति रक्षति वातरोगादिति गुग्गुलुः । 'गुड रक्षणे[2]'। पुरस्थमे सरति धूपवृक्षेष्विति पुरः । 'पुर अग्रगमने'। गुग्गुलुवृक्षनामानि । 'गुग्गिलपुचेट्टु'॥ शिलति उञ्छति केशकार्ष्ण्यं करोतीति शेलुः । 'शिल उञ्छे'। शिनोति [3]जिह्वामिति वा । 'शिञ् निशातने'। श्लेष्माणम् अतति [4]कटुत्वेनेति श्लेष्मातकः । 'अत सातत्यगमने'। विरुद्धलक्षणया [5]उष्णवीर्यत्वात् शीतः । उष्णवीर्यत्वादङ्गमुद्दालयतीत्युद्दालः । 'दल [6]विशरणे'। बहूनि स्रोतांसि कटुत्वेन वृणोतीति बहुवारकः । 'वृञ् वरणे'। उद्दालकनामानि । 'विरिगिचेट्टु'॥ ३४ ॥

[1] वदन्ति $B_1$ [2] 'गुड रक्षायाम्' $K_6$. [3] रोगान् $J_2$, $Pt_2$. [4] कटूष्णतया $K_3$. [5] शीतवीर्यत्वात् $Pt_2$. [6] विदारणे $Pt_2$.

(पा.) कुम्भोलूखलकं क्लीबे । सुभूतिटीकायां त्रिधा विभक्तं कुम्भोलूखलकं कुम्भम् उलूखलकमिति ॥ कौशिको—पुरः । गुग्गुलुद्रुमनामानि । 'गुग्गिलपुचेट्टु'। 'जटायुः कालनिर्यासो महिषाक्षः पलंकष.'। एतानि च ॥ शेलु.—बहुवारकः । श्लेष्मातकनामानि । 'विरिगचेट्टु'॥ ३४ ॥

राजादनं प्रियालः स्यात् सन्नकद्रुर्धनुष्पटः ।
गम्भारी सर्वतोभद्रा काश्मरी मधुपर्णिका ॥ ३५ ॥
श्रीपर्णी भद्रपर्णी च काश्मर्यश्चाप्यथ द्वयोः ।
कर्कन्धूर्बदरी घोण्टा कोली कुवलफेनिले ॥ ३६ ॥
सौवीरं बदरं कोलमथ स्यात् स्वादुकण्टकः ।
विकङ्कतः स्रुवावृक्षो ग्रन्थिलो व्याघ्रपादपि ॥ ३७ ॥

(वि.) राजादनमिति—[1]राजभिरद्यते मृष्टत्वादिति राजादनम्। 'अद भक्षणे'। प्रीयते हृदयं गच्छति अतिरसत्वादिति प्रियालः। 'प्रीङ् प्रीतौ'। पियाल इति पाठे पीयत इति। सन्नानि सूक्ष्माणि कद्रुवर्णानि बीजान्यस्येति सन्नकद्रुः। सन्नको[3] द्रु' स्कन्धोऽस्येति वा। धनुष इव पटो विस्तारोऽस्यास्तीति धनुष्पटः। नामद्वयं वा। [4]धनतीति धनुः। 'धन धान्ये'। उकारान्तः। पटवद्विस्तृतः पटः। प्रियालनामानि। 'मोरटिचेट्टु'॥ [5]सारतया मूलादिगमने भारोऽस्या अस्तीति गम्भारी। सर्वतो भद्रमस्या अस्तीति सर्वतोभद्रा। कृशयति तनूकरोति पित्तादिकमिति काश्मरी। 'कृश तनूकरणे'। मधूनि [6]स्वादूनि पर्णान्यस्या इति मधुपर्णिका। श्री पर्णान्यस्या इति श्रीपर्णी[7]। भद्रप्रदानि पर्णान्यस्या भद्रपर्णी। कृशयति तनूकरोति पित्तादिकमिति काश्मर्यः। 'कृश तनूकरणे'। कश्यते कर्म कुरुतेऽनेनेति वा काश्मर्यः। 'कशि गतिशासनयोः'। काश्मरीनामानि। 'गुम्मुडुचेट्टु'॥ कर्काणि लोहितानि[8] पर्णानि धत्त इति कर्कन्धूः। 'डुधाञ् धारणपोषणयोः'। वदति स्थिरा भवतीति बदरी। 'बद स्थैर्ये'। कोलति[9] निबिडावयवत्वात् कोली। 'कुल संस्त्याने'। घुणति वृत्ततया भ्रमतीति घोण्टा। 'घुण घूर्ण भ्रमणे'। बदरीनामानि। 'रेंगुचेट्टु'॥ कौ भुवि [10]वलते भ्रमतीति कुवलम्। 'वल[11] संवरणे सचरणे च'। फेनोऽस्यास्तीति फेनिलम्। सुवीरदेशे प्रचुरत्वात् सौवीरम्। बदर्याः फलं बदरम्। कोल्याः फलं कोलम्। घोण्टाशब्दो वृक्षफलयोर्वाचकः। बदरीफलनामानि। 'रेंगुपण्डु'॥ स्वादुफलत्वात् कण्टकवत्त्वाच्च स्वादुकण्टकः। विकङ्कते प्रसरतीति विकङ्कतः। 'ककि गतौ'। स्रुवा स्रुक् तदर्थं वृक्षः स्रुवावृक्षः। स्रुचावृक्ष इति वा पाठः। [12]ग्रन्थिलत्वात् ग्रन्थिलः। व्याघ्रस्य पादा इव पादा[13] मूलान्यस्य व्याघ्रपात्। विकङ्कतनामानि। 'पुल्लवेलगचेट्टु'॥ ३५—७॥

[1] राशमदनं $J_2$, $Pt_2$   [2] सारवत्त्वात् $B_1$, सारत्वात् I, $h_2$, $h_3$   [3] $K_6$ adds रर   [4] दधातीति $h_5$   [5] सारवत्त्वात् $F_2$, $Pt_2$   [6] मृष्टानि $K_6$, $h_6$, $h_5$ adds

पुष्पाणि [7] श्रीप्रदानि $Pt_2$ [8] लोहितवर्णानि $J_2$, $Pt_2$ adds फलानि च [9] कुत्यते $K_5$, $K_6$ [10] वलति $K_5$, $Pt_2$ [11] 'वल सचलने' $Pt_2$ [12] ग्रन्थिमत्त्वात् $K_5$, $K_6$ [13] पदानि $K_5$

(पा.) राजादन—धनु । उकारान्त । पट । [1]प्रियालद्रुमनामानि । पियालो ऽपि । 'मोरटिचेट्टु' ॥ अनुक्तम्—'तद्वीजे चारबीज स्यात्' । प्रियालबीजनाम । 'मोरटिविच्चु' ॥ गम्भारी—काश्मर्यश्चापि । गम्भारीवृक्षनामानि । 'पेग्गुम्मडुचेट्टु' ॥ अथ द्वयो —कोली । स्थूलबदरीनामानि । 'गङ्गरेगु' ॥ घोण्टा । बदरीनाम । 'रेगु' ॥ कुवलफेनिले—कोलम् । तत्फलनामानि । हरीतक्यादित्वाद्[?]घोण्टीति[2] । 'रेङ्गु-पण्डु' ॥ अथ स्यात् स्वादुकण्टक —स्रुवा वृक्ष । स्रुवावृक्ष इति वा । ग्रन्थिलो व्याघ्रपादपि । विकङ्कतवृक्षनामानि । 'मुलुवेलुम' ॥ ३५–७ ॥

[1] प्रियाल॰ $B_3$ [2] काशिकाया कौमुद्या च घोण्टीशब्दो हरीतक्यादिगणे न दृश्यते

**ऐरावतो नागरङ्गो नादेयी भूमिजम्बुका ।**
**तिन्दुकः स्फूर्जकः कालस्कन्धश्च शितिसारके ॥ ३८ ॥**

(वि ) ऐरावत इति—[1]इरावती विद्युत् सेव रक्तत्वाद् ऐरावत । नागस्य सिन्दूरस्येव रङ्गो रागोऽस्येति [2]नागरङ्ग । नागरङ्गनामनी । 'नारिङ्गचेट्टु' ॥ नद्या नदीतीरे भवा [3]नादेयी । भूमौ जम्यत इति [4]भूमिजम्बुका । 'जम अदने' । भूमौ जन्यत इति वा । 'जनी प्रादुर्भावे' । नादेयीनामनी । 'कान्निरेडु' ॥ चत्वार्यपि नागरङ्गस्यैव नामानीति केचित्[5] ॥ तिम्यति[6] आर्द्रीभवतीति तिन्दुक । 'तिमि आर्द्रीभावे' । तिन्दुकोऽस्त्री । स्फूर्जति दह्यमान [7]चिटिचिटा शब्द करोतीति स्फूर्जक । 'टुओस्फूर्जा वज्रनिर्घोषे' । कालो नील स्कन्धोऽस्य कालस्कन्ध । [8]शितिर्नील सारो मज्जास्येति शितिसारक । तिन्दुकनामानि । 'तुमिकिचेट्टु' ॥ ३८ ॥

[1] इरावत्या विद्युत इव $K_5$, $K_6$ [2] नागरूलीति नाग सदृश रङ्गोऽस्येति वा $K_6$ [3] नदीतीरे जायते (जाता $J_2$) इति $K_5$, $K_6$ [4] भूमौ जम्बू $Pt_2$. [5] $K_3$ adds वदन्ति [6] तिम्यत्वात् $K_3$ [7] चिटिचिटीति $K_1$, I [8] शिति . शितिसारक $K_6$

(पा.) ऐरावतो नागरङ्ग । नारङ्गनामनी । 'नारङ्गु' । 'नागरङ्गे तु नारङ्गो [1]नारङ्गस्त्वरासन' इति वैजयन्ती (पृ ४८, श्लो ३६) । नादेयी—जम्बुका । कर्क-जम्बूनामनी । 'काकिनेरडु' ।

'नादेयी नागरङ्गे स्याज्जयाया जलवेतसे ।
भूमिजम्ब्वा जवायां च ।'

इति विश्वप्रकाशवचनात् (पृ १९३, श्लो. १०५) [2]नारङ्गजातीयनामान्यपि । 'क्रित्तसि चेट्टुन्नु' ॥ तिन्दुक —शितिसारके । तिन्दुकवृक्षनामानि । 'तुम्पिकचेट्टु' ॥ ३८ ॥

[1] नार्यङ्ग इति मुद्रितग्रन्थे [2] नारङ्ग° $B_3$

काकेन्दुः कुलकः काकपीलुकः काकतिन्दुके ।
गोलीढो झाटलो घण्टापाटलिर्मोक्षमुष्ककौ ॥ ३९ ॥

(वि.) काकेन्दुरिति—काका इन्दन्त्यत्रेति काकेन्दुः । 'इदि परमैश्वर्ये' । कुत्सिते. काकादिभिर्लभ्यत इति कुलकः । [1]'लक आस्वादने' । काकैः पीयत इति काकपीलुक[2] । 'पा पाने' । काकैस्तिम्यत इति काकतिन्दुक । 'तिमि आर्द्रीभावे' । काकतिन्दुकनामानि । 'नल्तुमिकिचेट्टु' ॥ गोभिर्लिह्यत[3] इति गोलीढः । 'लिह आस्वादने' । झाट सघात लाति आदत्त इति झाटल । 'ला 'दाने' । पशुभक्षणार्थ हन्यत इति घण्टा । 'हन हिंसागत्यो' । पाट विस्तारं लातीति पाटलि । पाटला[5] वा । 'ला दाने' । मोक्षति सहते पश्वादिसमर्दमिति मोक्ष । 'मोक्ष सहने' । मुष्णाति [6]विषमिति मुष्कक । 'मुष स्तेये' । मुष्कर इति वा पाठ । गोलीढनामानि ॥ 'मोक्षपुचेट्टु' ॥३९॥

[1] लकि $Pt_2$. [2] काकवर्णानि पीतानि पुष्पाणि यस्य $J_2$, $K_5$ [3] $J_2$, $Pt_2$ add आस्वाद्यते, गोलिह इति वा $B_1$, $K_5$ [4] 'ला आदाने' $K_6$ [5] पाटलो वा I, $K_6$ [6] रोगान् $Pt_2$

(पा.) काकेन्दु —काकतिन्दुके । काकतिन्दुकनामानि । 'काक्कितुम्पिक' । गोलीढो—मुष्ककौ । मोक्षवृक्षनामानि । 'मोक्षपुचेट्टु' ।

'मुष्कको मोक्षको घण्टामूर्धको मुञ्जुकस्तथा ।
क्षारश्रेष्ठो गोलिहश्च द्विविधः श्वेतकृष्णकः ॥'

इति वैद्यकाद् गोलिहोऽपि ॥ ३९ ॥

तिलकः क्षुरकः श्रीमान् समौ पिचुलझावुकौ ।
श्रीपर्णिका कुमुदिका कुम्भी कैटर्यकट्फलौ ॥ ४० ॥

(वि.) तिलक इति—तिलाभानि पुष्पाण्यस्य तिलकः। क्षुरति [1]परुषत्वात् क्षुरकः। 'क्षुर [2]विलेखने'। श्रीः शोभास्यास्तीति श्रीमान्। तिलकनामानि। 'तिलकपुचेट्टु'॥ पिचुं तूलं लातीति पिचुल.। 'ला दाने'। झम्यत इति झावुकः। 'झमु अदने'। झावुकनामनी। 'सन्ननियाक्षुल्लुगलपकचेट्टु'॥ श्रीः पर्णेष्वस्याः श्रीपर्णिका। कुमुदवर्णत्वात् [3]कुमुदिका। कुम्भयति पर्णैराच्छादयतीति कुम्भी। '[4]कुभि आच्छादने'। कड्यते प्रकर्षेण लक्ष्यत इति कैडर्यः। 'कड मदे'। कटूनि[5] फलानि यस्य [6]कट्फलः। कुम्भीनामानि। 'देकुम्रानिचेट्टु'॥ ४० ॥

[1] निठुरत्वात् B₁, F₁, K₅.  [2] 'क्षुर दोप्तौ' K₃, K₆; 'ऐश्वर्यदीप्त्योः' Pt₂.
[3] कुं भुव मोदयतीति वा B₁, K₅.  [4] 'कुवि आच्छादने' J₂.  [5] कटुरसानि B₁, I, J₂; रसवन्ति K₆.  [6] कटुकफलः J₂.

(पा.) तिलकः—श्रीमान्। तिलकवृक्षनामानि। 'परुषः छन्नपुष्पकः'। एते च।

'यस्य शाखा वह्नियोगाद् दीपवद् दीप्यते चिरम्।
स वृक्षस्तिलको नाम यो वसन्ते हि पुष्प्यति॥'

इति। 'बोट्टुग'। अनुक्तम्—'मदनः स्यात् कुरवको मधुवृतश्च नागरः'। कुरवकनामानि। 'कोरविचेट्टु'॥ समौ—झावुकौ। झावुकवृक्षनामनी। 'सन्नपुटे सुलपके'॥ श्रीपर्णिका—कट्फली[1]। कुम्भीवृक्षनामानि। 'पिनगुम्मुडु'॥ ४० ॥

[1] कट्फले B₂.

क्रमुकः पट्टिकाख्यः स्यात् पट्टी लाक्षाप्रसादनः।
तूदस्तु यूपः क्रमुको ब्रह्मण्यो ब्रह्मदारु च ॥ ४१ ॥
तूलं च नीपप्रियककदम्बास्तु हलिप्रिये।

(टि.) क्रमुक इति—[1]क्रामतीति क्रमुकः। 'क्रमु पादविक्षेपे'। [2]पट्टिकेत्याख्या यस्य सः पट्टिकाख्यः। पट्टी व्रणबन्धनसामर्थ्यमस्यास्तीति पट्टी। लाक्षां प्रसादयतीति लाक्षाप्रसादनः[3]। 'षद्लृ विशरणगत्यवसादनेषु'। क्रमुकनामानि। 'एट्लोद्दुगुपेल्लु'॥ तुद्यते नृपीकर्तु[5] नश्यत इति तूदः। 'तुद व्यथने'। [6]यूपादृश्यत्वाद् यूपः। पूग[7] इति पाठे पुनातीति [8]पूगः। 'पूञ् पवने'। क्रामतीति क्रमुकः[9]। ब्रह्मणि वैदिके कर्मणि साधुः ब्रह्मण्यः। ब्राह्मण्य इति वा पाठः। ब्रह्मणे वैदिककर्मणे योग्य

दारु ब्रह्मदारु। [10]तूल्यतेऽस्मादग्निरिति तूलम्। 'तूल निष्कर्षे'। ब्रह्मदारुनामानि। [11]'गङ्गराविचेट्टु'॥ नयति प्राणिना सुखमिति नीपः। 'णीञ् प्रापणे'। प्रीणातीति प्रियकः। 'प्रीञ् तर्पणे'। कं [12]वात दमयति [13]शमयतीति कदम्बः। 'दमु [14]उपशमे'। हलिनो बलभद्रस्य प्रियः सुरादिपानाद् हलिप्रियः। कदम्बनामानि। '[15]कडपचेट्टु' ॥ ४१ ॥

[1] कामयति J₂. [2] पट्टिकेव F₂, K₆ [3] °प्रसादक. K₂ [4] पट्टिकालोध्र-नाम K₃, K₆. [5] यूपार्थ F₂, Pt₂. [6] यूपार्हत्वात् J₃, Pt₂. [7] इति वा पाठः, तदा F₁, J₂, K₃ [8] इति व्युत्पत्ति. F₁, I [9] F₁ adds 'क्रमु पादविक्षेपे' [10] तूलति K₅ [11] 'मङ्गलवल्ली' J₂ [12] कमुदक K₆, वर्क (वष्ट K₅) दमयति F₁, J₂. [13] उपशमयति J₂ [14] उपशमने B₁, F₁, I, J₂ [15] 'मुगलुगचेट्टु' K₃

(पा.) क्रमुक —लाक्षाप्रसादन। [1]क्रमुकनामानि। 'पट्टिकालोध्रमु'॥ तूदस्तु—तूलं च। अश्वत्थाकृतेर्वृक्षस्य नामानि। 'गङ्गरावि'॥ नीप—हलिप्रिये। कदम्बनामानि। 'कडिमि'॥ 'पुलक कर्णपूरश्च कादम्बर्यो हरीतकः'। एतानि च॥ अनुक्तम्—'अन्यो धूलीकदम्ब स्याद् वासन्तो वृत्तपुष्पक'। धूलीकदम्बनामानि। 'बट्टकडिमि' ॥ ४१ ॥

[1] पट्टिकालोध्रनामानि B₃

**वीरवृक्षोऽरुष्करोऽग्निमुखी भल्लातकी त्रिषु ॥ ४२ ॥**
**गर्दभाण्डे कंदरालकपीतनसुपार्श्वकाः।**
**प्लक्षश्च तिन्त्रिणी चिञ्चाम्लिकाथो पीतसालके ॥ ४३ ॥**
**सर्जकासनबन्धूकपुष्पप्रियकजीवकाः।**

(वि.) वीरवृक्ष इति—[1]दु:स्पर्शत्वाद् वीरा एव इमं वृक्षं स्पृशन्तीति वीरवृक्षः[2]। अरूंषि [3]व्रणानि करोतीत्यरुष्करः[4]। अग्निवन्मुखमस्यास्तीति अग्निमुखी। भल्लः शर इवाततीति भल्लातकी। 'अत सातत्यगमने'। [5]त्रिषु। अग्निमुखीनामानि। 'जिडिग्रानि-चेट्टु'॥ गर्दभ[6] इवाण्डं मूलमस्य गर्दभाण्ड.। कंदरमलतीति कंदराल[7]। 'अल भूषणादौ'। [8]कमुदकं पीतयति पीतवर्णं करोतीति कपीतन। शोभनौ [9]पार्श्वौ यस्य सः सुपार्श्वकः। प्रक्ष्यते भक्ष्यत इति प्लक्षः। 'प्लक्ष [10]भक्षणे'। प्लक्षनामानि। 'पच्चजुव्वि-चेट्टु'॥ तिम्यते मुखमत्यर्थमनयेति तिन्त्रिणी। 'तिम आर्द्रीभावे'। तिन्तिडीति वा पाठः। [11]चिञ्चिमायते मुखमाम्लत्वादनया चिञ्चा। [12]अम्लफलत्वाद् आम्लिका। तिन्त्रिणीनामानि। 'चिन्तचेट्टु'॥ पीतवर्णः सालः पीतसालकः। पीतवर्णः सारोऽस्येति

पीतसारक इति वा पाठ । सृजति निर्यासमिति सर्जक । 'सृज [13]विसर्ग' । अस्यति कुष्ठादीनीत्यसन । 'असु क्षेपणे' । बन्धूकस्येव रक्तानि पुष्पाणि यस्य बन्धूकपुष्प । [14]प्रीणातीति प्रियक । 'प्रीञ् तर्पणे[15] कान्तौ च' । कुष्ठरोगिण जीवयतीति जीवक । 'जीव प्राणधारणे' । वीजक इति वा पाठ । बन्धूकपुष्पनामानि । '[16]वेगिचेट्टु' ॥ ४२–३ ॥

[1] वीराणामुपस्पर्शायोग्य $J_2$, $Pt_2$ [2] $K_6$ adds 'स्पृश स्पर्शने [3] व्रणान् Pt [4] $F_1$ adds 'डुकृञ् करणे [5] $F_1$ adds अय [6] $F_1$ omits 3 pages [7] कन्दराश्रयो रातीति $h_5$ $h_6$ [8] जल $Pt_2$ [9] पार्श्वकी $K_5$ $h_6$ [10] अदने $h_5$ [11] चिमिचिमायते $K_5$ [12] °रसत्वात् $J_2$ $Pt_2$ [13] सजने $B_1$, $h_5$ [14] प्रीणयति $B_1$ I, $h_2$ [15] प्रीणने $K_6$ [16] वंगि $D_2$

(पा.) वीरवृक्षो—भल्लातकी त्रिषु । [1]भल्लातकीवृक्षनामानि । 'जीडिचेट्टु' ॥ गर्दभाण्डे—प्लक्ष । अश्वत्थानुकारिण प्लक्षस्य नामानि । '[2]कलजुव्वि' ॥ तिन्त्रिणी—आम्लिका । तिन्त्रिणीवृक्षनामानि ॥ 'तिन्तिडा तिन्तिडी' इत्येते च । 'चिन्तचट्टु' ॥ अथो पीतसारके—जीवका । असनवृक्षनामानि । 'वेङ्गिस' ।

'प्रियविमानितमानवतीरुषा
निरसनैरसनैरवृथार्थता ।' (शिशु ६ ४७)

इति माघप्रयोगाद् ह्रस्वादि । 'पीठेभस्कन्धयो स्त्रीवमासन ना तु जीवके'[3] इति रभसकोशपाठाद् दीर्घादि ॥ ४२–३ ॥

[1] भल्लातक° $B_3$ [2] 'पचजुव्वि' $B_3$ [3] नाम्रजीवक $B_3$

**साले तु सर्जकार्श्याश्वकर्णकाः सस्यसंवरः ॥ ४४ ॥**
**नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः ।**

(त्रि.) साल इति—स्यति कुष्ठरोगमिति साल । 'षोऽन्तकर्मणि' । सृजति निर्यासमिति सर्ज । 'सृज विसर्ग' । [1]कृशयति [2]कुष्ठरोगमिति कार्श्य । 'कृश तनूकरणे' । कार्ष्य इति वा पाठ । [3]अश्वकर्णाभानि पत्राण्यस्य अश्वकर्णक[4] । सस्य [5]वृक्षादिफल संवृणोतीति सस्यसंवर । 'वृञ् वरणे' । सालनामानि । 'मद्दिचेट्टु' ॥ नद्या भव सर्जो नदीसर्ज । वीरोऽर्जुनस्तन्नामकत्वाद्[6] वीरतरु । अत एव इन्द्रस्य प्रियो द्रुर्द्रुम इन्द्रद्रु । शाखाभि ककुभो[7] व्याप्नोतीति ककुभ । शौक्ल्याद् अर्जुन । इन्द्रप्रियत्वाद्वा । अर्जुनवृक्षनामानि । 'वेरुमद्दि' ॥ ४४ ॥

[1] कृशति $K_5$, $K_6$　[2] कुष्ठादीन् $Pt_2$　[3] अश्वकर्णाभपत्रत्वात् $J_2$, $K_5$, $K_6$
[4] °वर्णि $J_2$　[5] $Pt_2$ omits वृक्षादि　[6] सुशक्तत्वात् $K_5$, $K_6$　[7] $Pt_2$ adds दिश, क शीत कुश्नातीति वा ककुभ $Pt_2$

(पा.) साले तु—सस्यसवर । सालवृक्षनामानि । '[1]नल्लमद्दि' ॥ नदीसर्जो—अर्जुन । [2]नदीसर्जनामानि । 'येरुमद्दि' ॥ ४४ ॥

[1] 'मद्दिचेट्टु' $B_3$　[2] अर्जुनवृक्षनामानि $B_3$

**राजादनः फलाध्यक्षः क्षीरिकायामथ द्वयोः ॥ ४५ ॥**
**इङ्गुदी तापसतरुर्भूर्जे चर्मिमृदुत्वचौ ।**

(वि.) राजादन इति—राजभिरद्यते राजादन । 'अद भक्षणे' । अध्यक्षाणि श्रेष्ठानि फलान्यस्य[1] फलाध्यक्ष । क्षीरवन्मधुराणि फलान्यस्या क्षीरिका[2] । क्षीरिका नामानि । 'पालचेट्टु' ॥ इङ्गत्यूर्ध्वं गच्छतीति इङ्गुदी । इङ्गुदश्च । '[3]इगि लिगि गत्यर्था' । 'तापसाना तरु तापसतरु । इङ्गुदीनामनी । 'गारचेट्टु' ॥ भूरित्यव्ययम् । भूर्भूम्या जायत[5] इति भूर्ज । 'जनी प्रादुर्भावे' । [6]चर्माभपत्रयोगात् चर्मी । मृद्वी त्वगस्य मृदुत्वक् । भूर्जनामानि । '[7]भुजपत्रुचेट्टु' ॥ ४५ ॥

[1] $D_2$, $K_2$ add सन्तीति　[2] क्षीरयुक्तफलानीति वा $K_2$ 'पालेय मर' $J_2$
[3] 'इगि गतौ' $J_2$　[4] तपस्विजनोपयुज्यमानत्वात् $Pt_2$　[5] जात $J_2$　[6] चर्मा-कार° $Pt_2$　[7] 'भूजपत्रमुपेरु' $B_1$, $K_2$

(पा.) राजादन—क्षीरिकायाम् । क्षीरिकावृक्षनामानि । 'पालचेट्टु' ॥ अथ द्वयो—तापसतरु । [1]इङ्गुदवरुनामनी । 'गारचेट्टु' ॥ भूर्ज—मृदुत्वचौ । [2]भुजपत्र-नामानि । 'भुजपत्रवृक्षमु' । 'भूर्जपत्रे भुजो भूर्जो मृदुत्वक् [3]चर्मिचर्मिकौ' इति वैजयन्ती (पृ ४८, श्लो ४५) ॥ ४५ ॥

[1] इङ्गुदी° $B_3$　[2] भूर्जपत्र° $B_3$　[3] चमकावपि $B_3$

**पिच्छिला पूरणी मोचा स्थिरायुः शाल्मलिर्द्वयोः ॥ ४६ ॥**
**पिच्छा तु शाल्मलीवेष्टे रोचनः कूटशाल्मलिः ।**
**चिरबिल्वो नक्तमालः करजश्च करञ्जके ॥ ४७ ॥**

(वि.) पिच्छिलेति—पिच्छा निर्यासोऽस्या अस्तीति पिच्छिला। पूरयति तूलेन फलानीति पूरणी। 'पूरी आप्यायने'। मुञ्चति रसमिति मोचा। 'मुच्लृ मोक्षणे'। स्थिरमायुर्यस्य [1]कालसहत्वात् स्थिरायु। चिरमायुर्यस्य चिरायुरिति वा पाठ। [2]शालते विटपैरिति शाल्मलि। शाल्मली वा। 'शालृ श्लाघायाम्'। शाल्मलीनामानि। '[3]बूरुगुचेट्टु'॥ पराङ्मुखिसङ्गत्वात् पिच्छा। शाल्मलीं वेष्टयतीति शाल्मलीवेष्ट। शाल्मलिनिर्यासनाम। '[4]बूरुगुबंक'॥ रोचते सूक्ष्मतयेति रोचन। 'रुच दीप्तौ'। कूटा कुत्सिता चासौ शाल्मलिश्च कूटशाल्मलि। '[5]कोण्ड बूरुगु'॥ चिरिणोति चिरी। 'चिरि जूरि दाश हिंसायाम्'। चिरिण हिंस्ररोग विलति भिनत्तीति चिरिविल्व। 'विल भेदने'। नक्तमलति मण्डयतीति नक्तमाल। 'अल भूषणादौ'। नक्त रात्रौ भूतानां मालयत्वात्[6] नक्तमाल। क जल रञ्जयतीति करज। करञ्जकश्च। 'रञ्ज रागे'। करञ्जवृक्षनामानि। '[7]कानुगुचेट्टु॥ ४६–७॥

[1] स्थिरत्वात् $J_2$ [2] शाल्यते $Pt_2$ [3] बूरद मर' $J_2$ [4] 'बुरदवीयल' $J_2$
[5] 'पिनबूरुगु' $K_2$, $K_5$, 'चिक्रुर' $J_2$ [6] आश्रयत्वात् I, $K_2$ $Pt_2$ भूताश्रयत्वादलं भूतघोऽस्मिन्निति $J_2$ [7] 'हलिगिनमर $J_2$

(पा.) पिच्छिला—शाल्मलिर्द्वयो। 'शालते शाल्मलि शलति शल्मलि' इति सुभूतिटीकायां दीर्घादिर्ह्रस्वादिश्च व्युत्पादित। शाल्मलिवृक्षनामानि। '[1]भूरुग'॥ पिच्छा—शाल्मलेवेष्टे। शाल्मलिनिर्यासनाम। 'बूरुगवक'॥ रोचन—शाल्मलि। ह्रस्वशाल्मलिनामनी। 'कोण्डबूरुङ्ग'॥ चिरविल्वो—करञ्जे। करञ्जनामानि। 'कानुग'॥४६–७॥

[1] 'बूरुगुचेट्टु' $B_3$

**प्रकीर्यः पूतिकरजः पूतिकः कलिमारकः।**
**करञ्जभेदाः षड्ग्रन्थो मर्कट्यङ्गारवल्लरी॥ ४८॥**

(वि.) प्रकीर्य इति—प्रकीर्यते फलहस्थान इति प्रकीर्य। 'कॄ विक्षेपे'। पूतिगन्धि करज पूतिकरज। पूतिकश्च[1]। कले* फलहस्य मारक नाशक कलिमारक। कलि करोतीति कलिकारक इति वा पाठ। पूतिकरञ्जनामानि। 'नेमलियडुगु नेट्टु'॥ षड् ग्रन्थयो यस्य षड्ग्रन्थ। 'आरुग्नुपुलुगलकानुग'॥ मर्कटवत्[2] पाटयतीति मर्कटी। 'कोन्तियन्नेकानुग'॥ अङ्गारवर्णा वल्लर्योऽस्या सन्तीति अङ्गारवल्लरी। 'निप्पुवन्नगल पुगुतुलु गलकानुग'॥ एत करञ्जभेदा॥४८॥

[1] दुर्गन्धत्वात् पूतिक $J_2$, $Pt_2$ [2] करहसस्य $K_2$ [3] मर्कटवर्णत्वात् $K_5$, $Pt_2$
[4] 'रक्तपुष्पदहलिगिडु' $J_2$

(पा.) प्रकीर्य —कलिमारक । पूतीकोऽपि । 'गौर प्रकीर्ण पूतीक सुमनामृतपत्रक ' इति शेष । 'पूतीकपत्रगजचिर्भटचव्यवह्वान्' इति धन्वन्तरिश्च । पूतिकरजनामानि । 'नेमिलिचेट्टु' ॥ करञ्जभेदा —अङ्गारवल्ली । षड्ग्रन्थादय करञ्जभेदा भवन्ति ॥ षड्ग्रन्थ 'गण्टुलकानुग' ॥ मर्कटी 'तीङ्गेकानुग' ॥ अङ्गारवल्ली 'निप्पुलपन्नेगुलुलकानुग' ॥ ४८ ॥

**रोही रोहितकः प्लीहशत्रुर्दाडिमपुष्पकः ।**
**गायत्री बालतनयः खदिरो दन्तधावनः ॥ ४९ ॥**

(नि.) रोहीति—[1]भिन्नप्ररूढोऽपि रोहतीति रोही । नकारान्त । रोहितकश्च । रोहिरिति इकारान्त इति केचित् । 'रुह बीजजन्मनि प्रादुर्भावे च' । प्लीहाख्यरोगशत्रु [2] प्लीहशत्रु । दाडिमस्येव [3]पुष्पाण्यस्य दाडिमपुष्पक । रोहितकनामानि । 'मुल्लुमोदुग' ॥ गायन्त वैद्यं त्रायत इति गायत्री । 'त्रैङ् पालने[4]' । इयमीकारान्त [5] । [6]बाल सूक्ष्म तनय पत्राख्यप्रसवो यस्य बालतनय । खदति स्थिरतर[7] भवतीति खदिर । 'खद [8]स्थैर्ये' । दन्तान् [9]धावन्त्यनेनेति दन्तधावन । 'धावु गतिशुद्धयो ' । खदिरनामानि । [10]'चन्द्रचेट्टु' ॥ ४९ ॥

[1] छिन्न° $B_1$, I, $K_2$, छिन्नोऽपि प्ररूढो $Pt_2$ [2] °आख्यस्य रोगस्य $B_1$, $K_5$ $Pt_2$
[3] पुष्प $J_2$, $K_2$, $K_5$ [4] रक्षण $K_2$, $K_4$ [5] तदीकारान्त $J_2$ [6] बाला सूक्ष्मा पत्रात्मकास्तनया यस्य $Pt_2$, पत्रात्मकप्रसव $J_2$ [7] स्थिरीभवति $Pt_2$ [8] $K_5$ adds हिंसाया च [9] धावयन्ति $B_1$, I, $J_2$, $K_5$, $Pt_2$ [10] 'मद्यदमर' $J_2$

(पा.) रोही—दाडिमपुष्पक । रोहिर्नान्त इकारान्तश्च । 'ढ्रलोप—' (६. ३. १११) इति दीर्घ । रोहितवृक्षनामानि । स च मगधविषयप्रसिद्ध । कण्टकपलाश इति केचित् । तदज्ञानविलसितमेव ॥ गायत्री—दन्तधावन । खदिरतरुनामानि । 'चड्रचेट्टु' । 'गायत्री खदिरे स्त्री स्याच्छन्दस्यपि षडक्षर ' इत्यभिधानप्रसिद्धया स्त्रीलिङ्ग । 'पारिजातजपानिम्बवह्निगायत्रिणा पृथक्' इति वैद्यकप्रसिद्धया नान्तपुलिङ्गोऽपि ॥ ४९ ॥

**अरिमेदो विट्खदिरे कदरः खदिरे सिते ।**
**सोमवल्कोऽप्यथ व्याघ्रपुच्छगन्धर्वहस्तकौ ॥ ५० ॥**

एरण्ड उरुबूकश्च रुचकश्चित्रकश्च सः।
चञ्चुः पञ्चाङ्गुलो मण्डवर्धमानव्यडम्बकाः ॥ ५१ ॥

(वि.) अरिमेद इति—[1]अरिर्दुःसहो मेदोऽस्य[2] अरिमेदः। अयमकारान्तः। विडगन्धी[3] खदिरो विट्खदिरः। 'दुर्गन्धमुगुलंचन्द्रचेट्टु'॥ कुत्सितं गन्धं दृणातीति कद्वरः। 'दॄ विदारणे'। सोमवत् चन्द्रवत् वल्कं वल्कलमस्य सोमवल्कः। श्वेतखदिर-नामनी। 'वेलिचन्द्रचेट्टु'॥ व्याघ्रपुच्छाकारशाखायोगाद् व्याघ्रपुच्छः। गन्धर्वस्य [4]भूतविशेषस्य हस्त इव स्थूलपत्राण्यस्य गन्धर्वहस्तकः। [5]ईरयति वातं नाशयतीति एरण्डः। 'ईर[6] क्षेपे'। उरु भृशं वातं वाति नाशयतीति उरुबूकः। 'वा गति-गन्धनयोः'। ववयोरभेदः। रोचते [7]पर्णैरिति रुचकः। 'रुच दीप्तौ'। चित्रवर्णत्वात् चित्रकः। चञ्चति[8] वायुना चञ्चुः। 'चञ्चु गतौ'। पञ्चाङ्गुलयोऽवयवाः[9] पत्रात्मके हस्तेऽस्येति पञ्चाङ्गुलः। मण्डयति स्वप्रदेशमिति मण्डः। 'मडि [10]भूषायाम्'। आमण्ड इति वा पाठः। यत्र क्वापि वर्धत इति वर्धमानः। 'वृधु वृद्धौ'। व्यडति [11]रोगिणमुद्धरतीति व्यडम्बकः। 'अड उद्यमने'। एरण्डनामानि। 'आमुदमुचेट्टु' ॥ ५०–१ ॥

[1] अरिः शत्रुरिव $J_2$, $Pt_2$. [2] स्रावः $Pt_2$. [3] विड्गन्धः $K_2$, $K_3$. [4] $Pt_2$ adds मृगविशेषस्य. [5] $J_2$ adds आ समन्तात्. [6] 'ईर प्रेरणे' $K_6$. [7] पर्णैः $K_6$. [8] चलति पत्रभरेण $K_5$, $K_6$. [9] अङ्गुल्य इव पत्राणि $K_6$, पर्णानि $F_1$. [10] व्याप्तौ च $D_2$, हर्षे च $K_5$. [11] रोग हन्तुं $Pt_2$.

(पा.) अरिमेदो विट्खदिरे। दुर्गन्धखदिरनामनी। 'तुम्म'॥ कदरः—सोम-वल्कोऽपि। श्वेतसारखदिरनामानि॥ 'उण्डुचेट्टु'॥ अथ व्याघ्रपुच्छ—व्यडम्बका.। एरण्टनामानि। 'आमुदमुचेट्टु' ॥ ५०–१ ॥

अल्पा शमी शमीरः स्याच्छमी सक्तुफला शिवा।
पिण्डीतको मरुवकः श्वसनः करहाटकः ॥ ५२ ॥
शल्यश्च मदने शक्रपादपः पारिभद्रकः।
भद्रदारु द्रुकिलिमं पीतदारु च दारु च ॥ ५३ ॥
पूतिकाष्ठं च सप्त स्युर्देवदारुणि

(नि.) अल्पा इति—अल्पा शमी शमीरः । 'चित्रदैनजम्मि' ॥ [1]शमयति दोषानिति शमी । 'शमु उपशमे' । सक्तुवत् स्वादूनि [2]फलान्यस्य सक्तुफला । [3]दोषशमनात् शिवा । शमीनामानि । '[4]जम्मिचेट्टु' ॥ स्वल्पं पिण्डीभावम् इतः प्राप्तः पिण्डीतकः । 'इण् गतौ' । [5]विषपुष्पत्वात् म्रियन्तेऽनेन[6] मरुवकः । 'मृङ् प्राणत्यागे' । श्वसन्त्य[7]नेकरोगहरत्वात् श्वसनः । 'श्वस प्राणने' । दुःस्पर्शत्वेन[8] करं हन्तीति करहाटकः । 'हन हिंसागत्योः' । [9]शल्यं कण्टकमस्यास्तीति [10]शल्यः । मदयतीति मदनः । 'मदी हर्षग्लपनयोः' । मरुवकनामानि । 'मङ्गचेट्टु' ॥ शक्रस्य प्रियः पादपः शक्रपादपः । पारिं निष्ठां प्राप्तः भद्रमस्य पारिभद्रकः । भद्रं च तद्दारु च भद्रदारु । द्वौ स्कन्धे किलिमनिर्यासोऽस्य द्रुकिलिमम्[11] । पीतवर्णं च तद्दारु च पीतदारु । पूतिदार्विति पाठे पूतिगन्धि काष्ठं पूतिकाष्ठं,[12] पूतिकाष्ठं च तद्दारु च पूतिदारु । एतौ शब्दौ विरुद्धलक्षणया [13]निष्पन्नौ । दीर्यत इति दारु । 'दॄ विदारणे' । देवानां दारु देवदारु । अयं पुंल्लिङ्गेऽपि । देवदारुनामानि । 'देवदारुवृक्षमु' ॥ ५२–३ ॥

[1] शाम्यति $J_2$　[2] स्वादुफलत्वात् $K_3$ $K_6$　[3] विहीनत्वात् $B_1$ $K_5$　[4] 'वनिय मर $J_2$　[5] विषपुष्पात् $K_5$ पुष्पवत्त्वात् $B_1$　[6] स्वादनेन $B_1$　[7] अनेन $F_1$, $K_3$ $K_6$　[8] दुःस्पर्शत्वात् $Pt_2$　[9] $B_1$, $K_3$ add स्वल्पं　[10] शल्यकण्टकः $D_2$　[11] द्रुकीलिममिति वा पाठः $K_6$　[12] पूति दुर्गन्धं काष्ठमस्येति $Pt_2$　[13] व्युत्पन्नौ $F_1$ I $K_3$, $K_6$

(पा.) अल्पा शमी—स्यात् । अल्पशमीवृक्षनाम । 'नेलजम्मि[1]' ॥ शमी—शिवा । शमीवृक्षनामनी । 'जम्मिचेट्टु' ॥ पिण्डीतको—श्वसनः करहाटकः । श्वसन इति केचित् ॥ शल्यश्च मदने । मदनवृक्षनामानि । 'मङ्गचेट्टु' ॥ शक्रपादपः—देवदारुणि । देवदारुद्रुमनामानि । 'देवदारुचेट्टु' ॥ ५२–३ ॥

[1] $B_3$ adds °चेट्टु

अथ द्वयोः ।

पाटलिः पाटलामोघा काला स्थाली फलेरुहा ॥ ५४ ॥
कृष्णवृन्ता कुबेराक्षी श्यामा तु महिलाह्वया ।
लता गोवन्दनी गुन्द्रा प्रियङ्गुः फलिनी फली ॥ ५५ ॥
विष्वक्सेना गन्धफली कारम्भा प्रियकश्च सः ।

(वि.) अथेति—[1]पाटलवर्णपुष्पत्वात् पाटलि । पाटला च । उपयोगिपुष्पत्वाद् अमोघा । मोघा इत्यपि पाठ । [2]कृष्णवृन्तत्वात् काला[3] । [4]रसाधारकुम्भत्वात् स्थाली । काचस्थालीति पाठे काचवर्णा स्थाली वृन्तमस्या अस्तीति काचस्थाली । कालस्थालीति पाठे [5]कालवर्णस्थालीत्वात् कालस्थाली । काचस्थालीति [6]पाठे सा च स्थालीति पदच्छेद । साङ्कुरफलत्वात् फले रोहतीति फलेरुहा । कृष्ण वृन्तमस्या अस्तीति कृष्णवृन्ता । यक्षाक्षितुल्यपुष्पत्वात् कुबेराक्षी । पाटलाया नामानि । '[7]कलिगोटट्टुचेट्टु' ॥ श्याम वर्णत्वात् श्यामा । महिलाया स्त्रिया [8]आह्वय नाम यस्या सा महिलाह्वया । स्त्रिया[9] यानि नामानि तान्यस्या वर्तन्त[10] इत्यर्थ । लतारूपत्वात् लता । गवि भूमौ वन्द्यते[11] स्तूयत इति गोवन्दनी । 'वदि अभिवादनस्तुत्यो' । गुद्यते क्रीड्यतेऽनयेति गुन्द्रा । 'गुद क्रीडायाम्' । प्रीणाति रोगहरणेन प्रियङ्गु । 'प्रीञ् [12]तर्पणे कान्तौ च' । फलयोगात् फलिनी । फलति विशीर्यत इति वा । फली च । 'ञिफला विशरणे' । विष्वक् सिनोति बध्नातीति[13] विष्वक्सेना । गन्धानि स्थूलानि फलान्यस्या गन्धफली । गन्धप्रधान फलमस्या इति वा । किंचित्[14] रम्भा कारम्भा । प्रिय एव[15] प्रियक । प्रियङ्गुनामानि । 'प्रेंकणपुचेट्टु' ॥ ५४–५ ॥

[1] आताम्रपुष्पत्वात् $K_5$ $K_6$ [2] काल° $Pt_2$ [3] काल $K_3$ [4] पुष्परसाधारत्वात् $K_5$ $K_6$ [5] काला कृष्णा स्थाली यस्या $B_1$ $K_5$ [6] इति वा पाठ तदा $F_1$ [7] 'ह्वादकायमर' $J_2$ [8] आह्वा $F_1$ I $J_2$ [9] स्त्रिया $F_1$ स्त्रीणा $K_5$ [10] सन्ति $B_1$, $F_1$ $K_3$ [11] वन्दत $K_5$ $K_6$ [12] प्रीणने $K_6$ [13] $B_1$ $D_2$ $K_2$ $K_5$ add सर्वत [14] किंचिद्रम्भाकारत्वात् $B_1$ $K_5$ इषद्रम्भाकारा $Pt_3$ [15] प्रिय इव $K_5$ $K_6$

(पा.) अथ द्वयो पाटलि—अमोघा । 'अमोघा पाटलीनं स्त्री' इति वैजयन्ती (प्र ५२, श्लो ९०) । 'मोघा स्त्री पाटलीवृक्षे मोघस्त्रिषु निरर्थक ' इति रुद्र ॥ काचस्थाली—कुबेराक्षी । पाटलातरुनामानि । 'कालिगोटटु' ॥ श्यामा तु—फली । 'प्रियके तु प्रियङ्ग्वाख्या[1]' इति वैजयन्ती (प्र ५०, श्लो ६६) ॥ विष्वक्सेना—प्रियका च सा । प्रियङ्गुवृक्षनामानि । 'प्रेंकणमुत्तु[2]' ॥ ५४–५ ॥

[1] प्रियङ्गु पीततण्डुला' इत्यपि मुद्रितग्रन्थे (प्र १२७, श्लो ५५) [2] $B_2$ adds 'सनमु'

मण्डूकपर्णपत्त्रोर्णनटकट्वङ्गटुण्टुकाः ॥ ५६ ॥
स्योनाकशुकनासर्क्षदीर्घवृन्तकुटन्नटाः ।
शोणकश्चारलौ तिष्यफला त्वामलकी त्रिषु ॥ ५७ ॥

**अमृता च वयस्था च त्रिलिङ्गस्तु विभीतकः ।**
**नाक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः ॥ ५८ ॥**

(वि.) मण्डूकपर्णेति—मण्डूका इव पर्णान्यस्य [1]मण्डूकपर्ण । पत्त्रैपूर्णो यस्य पत्त्रोर्ण । नटति वातेनेति नट । 'नट नृत्तौ' । [2]कटून्यङ्गान्यस्येति कट्वङ्ग । शिखाभि[3] टुटु इति शब्द कायतीति टुण्टुक । 'कै शब्दे' । डुण्डुक इति वा पाठ । स्योन सुखमक्तीति स्योनाक । 'अक अग कुटिलाया गतौ' । श्योनाक इति पाठे श्यायत इति श्योनाक । 'श्यैङ् गतौ' । [4]शुकनासाकाराणि पुष्पाण्यस्य शुकनास । ऋक्ष्णोति हिनस्तीति ऋक्ष । 'ऋक्ष हिसायाम्' । दीर्घं वृन्तमस्य दीर्घवृन्त । कुटन्[6] वक्री भवन्[7] नटतीति कुटन्नट । 'नट नृत्तौ' । शोणतीति शोणक । 'शोणृ वर्णगत्यो' । शोनक इति [8]पाठे शवति व्याप्नोति सर्वत शाखाभिरिति शोनक । 'शव गतौ' । इयर्ति [9]पित्तादिकमपसरतीत्यरालु । 'ऋ गतौ' । शोणकनामानि । 'पेद्दमानु' ॥ तिष्यनक्षत्र यद्[10] भास्वर फलमस्या इति तिष्यफला[11] । आमलते गुणानामलकी । 'मल मल्ल धारणे' । [12]अमलफलयोगाद्वा । रसायनत्वादमृता । [13] वयसि तिष्ठत्यस्या भक्षणेनेति वयस्था । वयो यौवनं तिष्ठति स्थिरीभवत्यनयेति वा । 'ष्ठा गतिनिवृत्तौ' । आमलकी नामानि । [14] 'उसिरिकचेट्टु' ॥ विभेत्यस्माद् रोग इति विभीतक । 'ञिभी भये' । अक्ष्णोति फलैरिति [15]अक्ष । 'अक्षू व्याप्तौ' । तुष्यति स्वल्पवारिणेति तुष । 'तुष तुष्टौ' । कर्षमानाणि फलान्यस्येति कर्षफल । भूतानामावासो[16] भूतावास । कलेराश्रयो द्रुम कलिद्रुम[17] । विभीतकनामानि । 'दाण्डचेट्टु' ॥ ५६–८ ॥

[1] मण्डूकाकाराणि पर्णानि $J_2$ $Pt_2$ [2] स्कन्धा $B_1$ $F_1$ $J_2$ $K_5$ [3] शिखाद्यादिभि $h_5$ $h_6$ [4] शुकनासेव $F_2$ $Pt_2$ [5] अक्षि° $B_1$ $F_1$ I $K_3$ अक्षिरोगान् $D_2$, $h_6$ [6] कुट वक्रीभाव $F_1$ I $K_3$ वक्राकार $J_2$ [7] $K_6$ adds स्यन्दते स्पन्दति $F_2$ [8] वा पाठ, तदा $B_1$ $F_1$, I $J_2$ [9] अवसादयति $K_5$ [10] तिष्यवच्छुभफलत्वात् $F_2$ $Pt_2$ तिष्यनक्षत्रयुक्त काले फल करोतीति वा $Pt_2$ [11] तिष्यफली $h_5$ $h_6$ [12] आमल° $K_6$ [13] नववयसि $J_2$ [14] नेल्लियमर $J_2$ [15] ना अक्ष इति पदच्छेद $F_2$. [16] आवास स्यात् $h_3$ [17] कलिपुरुषस्य प्रिय $h_3$

(पा.) मण्डूकपर्ण—शोणकश्चारलौ । 'मूलपुष्पो नटोदङ्कभक्षकट्वङ्ग आरलु' इत्यभिधानाद्दीर्घादि । 'मयूरजङ्घोऽरलुक [1]प्रियचेतु कुटन्नट' इत्यभिधानात् ह्रस्वादि । अरलुद्रुमनामानि । 'पेनुमालु । दुदिल्मुन्नु' ॥ तिष्यफला—वयस्था च । आमलकनामानि । 'उसिरिकचेट्टु' । अनुक्तम्—'माकन्दी [illegible] फल तस्या' । तत्फलनाम ।

'उशिरिक्काय' ॥ त्रिलिङ्ग—विभीतक । नाक्ष । [2]स्वग्रहण नियमार्थम् ॥ तुप—कलिद्रुम । विभीतकतरुनामानि । 'ताडिचेट्टु' ॥ ५६–८ ॥

[1] प्रियजीव इति मुद्रितधन्वन्तरिनिघण्टुग्रन्थे [2] नाक्ष इत्यत्र 'ना' इति पुल्लिङ्गग्रहण नियमार्थम्

**अभया त्वव्यथा पथ्या कायस्था पूतनामृता ।**
**हरीतकी हैमवती रेचकी श्रेयसी शिवा ॥ ५९ ॥**

(वि.) अभयेति—नास्ति [1]भयमस्या सकाशाद् अभया । न [2]व्यथयति रोगहरत्वाद् अव्यथा । 'व्यथ भयसचलनयो'। निरामये पथि साध्वी पथ्या । कायस्तिष्ठत्यनयेति कायस्था । काये [3]शरीरे आरोग्यकरी तिष्ठतीति वा । वयस्थेति पाठे व्युत्पत्ति पूर्वोक्ता । पूतयति[4] पुरुष पूत करोतीति पूतना । 'पूञ् पवने'। रसायनत्वात् नास्ति मृतिर्मरणमस्या इत्यमृता । हरति रोगानिति हरीतकी । 'हृञ् हरणे'। हिमवति गिरौ प्रचुरा हैमवती । रेचयति विरेचन करोतीति रेचकी । 'रिचिर् विरेचने[5]'। श्रेय करोतीति श्रेयसी । दोपशमनात्[6] शिवा । हरीतकीनामानि । '[7]करकचेट्टु' ॥ ५९ ॥

[1] रोगभय यस्या $Pt_2$ [2] नास्ति रोगव्यथास्या $F_2$, $Pt_2$ [3] देहे $B_1$, $J_2$, $k_5$
[4] पुनाति देह $J_2$, $Pt_2$ [5] 'रिचिर् पृथग्भावे' $Pt_2$, चेतकीति पाठे चेतयति चेतकी । 'चिती सज्ञाने' $F_2$ [6] रोग° $J_2$ [7] 'अल्लिमर' $J_2$

(पा.) अभया—वयस्था । कायस्थेत्यपि ॥ पूतना—शिवा । हरीतकीनामानि । 'करक्चेट्टु' ॥ ५९ ॥

**पीतद्रुः सरलः पूतिकाष्ठ चाथ द्रुमोत्पलः ।**
**कर्णिकारः परिव्याधे लकुचो लिकुचो दहुः ॥ ६० ॥**

(वि.) पीतद्रुरिति—पीतवर्णो द्रुर्द्रुम[1] पीतद्रु । सरति विस्तर प्राप्नोतीति सरल । सरलसन्नत्वाद्वा । पूतिगन्धि काष्ठ[2] पूतिकाष्ठम् । सरलनामानि । 'सरलपुचेट्टु' ॥ अस्य द्रुमस्योत्पलानीव पुष्पाणि सन्तीति द्रुमोत्पल । 'कर्णिकारभूषणम् इयर्तीति कर्णिकार । 'ऋ गतौ'। वायुना परिविध्यत[3] इति परिव्याध । 'व्यध ताडने'। कर्णिकारनामानि । 'कोण्डगोगु' ॥ लक्यते आस्वाद्यत इति लकुच । लिकुचश्च । 'लकि आस्वादने'। अग्निना दह्यत इति दहु[4] । 'दह भस्मीकरणे'। 'कम्मरेगु ॥ ६० ॥

1 K₂, K₃ add वृक्ष . 2 °काष्ठत्वात् K₅ 3 'सरल्मर' J₂ 4 कर्णिका कर्णभूषण B₁, K₅ 5 परिविध्यति K₅, K₆ 6 दहति, तोहति वा डहु । डदयोरभेद । 'तुहिर् अर्दने' Pt₂

(पा.) पीतद्रु—पूतिका च। सरलनामानि। 'अदुगचेट्टु'॥ अथ द्रुमोत्पल—परिव्याध। कर्णिकारनामानि। 'कोंडगोंड्डु'॥ लकुचो—डहु। गजजम्बीरनामानि। 'गजनिम्म'॥ अनुक्रम्—'शाक क्रकचपत्र स्यात् पृथक्छदहरीतकौ'। शाकवृक्षनामानि। 'तेंकुचेट्टु'॥ ६०॥

पनसः कण्टकिफलो निचुलो हिज्जलोऽम्बुजः।
काकोदुम्बरिका फल्गुर्मलपूर्जघनेफला॥ ६१॥

(वि.) पनस इति—पन्यते स्तूयते[1] इति पनस। 'पन स्तुतौ'। पणस इति पाठ पण्यते [2]व्यवह्रियते पणस। 'पण व्यवहारे स्तुतौ च'। कण्टकितानि[3] फलान्यस्य कण्टकिफल। 'पनस चेट्टु'॥ निचोल्यते[4] जलेनेति निचुल। 'चुल [5]समुच्छ्राये'। हिज्ज जलमस्य हिज्जल। अम्बुनि जायत इत्यम्बुज। 'जनी प्रादुर्भावे'। निचुलनामानि। 'एरगन्नेरु'॥ काकप्रिया च सा [6]उदुम्बरकल्पा च काकोदुम्बरिका। नि सारत्वात् [7]फलतीति फल्गु। 'ञिफला विशरणे'। मलान् श्वित्रादिकात् पुनातीति मलपू। 'पूञ् पवने'। मल यावयते[8] कुत्सयतीति मलयूरिति वा पाठ। 'यु जुगुप्सायाम्'। जघन स्कन्धे फलानि यस्या सा जघनेफला। 'कुक्कमेडिचेट्टु॥ ६१॥

1 B₁, G, K₂ add स्वादुतया 2 पण्यत इति व्युत्पत्ति K₂ K₃ 3 कण्टकवन्ति G, कण्टकयुक्तानि Pt₂ 4 निचुल्यते K₅ 5 चुल निमज्जने' K₃, K₆ 6 उदुम्बरी G, Pt₂, 'ब्रह्ममेडिचेट्टु' K₃ 7 फल्वती K₆ 8 यापयति K₅, K₆

(पा.) पनस कण्टकिफल। पनसवृक्षनामनी। 'पनसचेट्टु'। पवर्गद्वितीयादिरिति कश्चित्। पणस इति टवर्गमध्यम इति केचित्॥ निचुलो—जघनेफला। काकोदुम्बरनामानि। 'ब्रह्ममेडि[1]'॥ ६१॥

1 ब्रह्ममेडिचेट्टु B₂

अरिष्टः सर्वतोभद्रहिङ्गुनिर्यासमालकाः।
पिचुमन्दश्च निम्बेऽथ पिच्छिलागुरु शिंशुपा॥ ६२ ॥

(वि.) अरिष्ट इति—न रिष्यते [1]कुष्ठरोगग्रस्तोऽनेनेति अरिष्ट । 'रिष हिसायाम्'। सर्वतो भद्रमस्य[2] सर्वतोभद्र । हिङ्गुवन्निर्यासोऽस्येति हिङ्गुनिर्यास [3]। [4]मल्यते काकैर्वेष्ट्यत इति मालक । 'मल [5]धारणे'। पिचु कुष्ठ मन्दयतीति पिचुमन्द [6]। 'मदि हर्षग्लपनयो '। आरोग्य नयतीति निम्ब । 'णीञ् प्रापणे'। निम्बनामानि । 'वेपचेट्टु'॥ पिच्छास्या अस्तीति पिच्छिला। न गुरु अगुरु[7]। रोग शिनोति [8]तनूकरोतीति शिशुपा। 'शीञ् निशातने'। शिंशपेति वा पाठ । शिशुपानामानि। 'डरुगुडुग्रानि'॥ ६२ ॥

[1] रोगिजन $G$, $Pt_2$ [2] $K_3$ adds अस्तीति [3] हिङ्गुनो निर्यास इव निर्यास $G$, $Pt_2$ [4] माल्यते $K_6$ मल्ते काकसमूह $Pt_2$ [5] 'मल मल्ल धारण' $K_3$, $K_6$ $Pt_2$ [6] पिचु मृद्नातीति पिचुमर्द इति वा पाठ , 'मृद क्षोदे' $G$, $Pt_2$ [7] न गुरु अगुरु $K_3$ $K_6$ [8] नाशयति $B_1$, $K_2$ $K_3$, $K_6$

(पा.) अरिष्ट —निम्बे। निम्बनामानि। 'वेंपचेट्टु'। अनुक्तम्—'फाल्शाकस्तु कैडर्य '। कैडर्यनामनी। 'करिवेंपचेट्टु'॥ अथ पिच्छिलागुरु। नपुसकम्। 'अगुरु द्वौ शिंशपायां जोङ्गके लघुनि त्रिषु' इति रुद्र । 'शिंशपा'॥ ६२ ॥

**कपिला भस्मगर्भा सा शिरीषस्तु कपीतनः ।**
**भण्डिलोऽप्यथ चाम्पेयश्चम्पको हेमपुष्पकः ॥ ६३ ॥**

(वि.) कपिलेति—काम्यत इति कपिला। 'कमु कान्तौ'। [1]भस्मतुल्या मज्जा गर्भे अस्या अस्तीति भस्मगर्भा। हस्तिगर्भेति पाठे हस्तितुल्यो गर्भो मज्जा अस्या अस्तीति हस्तिगर्भा । कपिलानामनी । 'कपुगलयरुगुडु चेट्टु'॥ पिच्छिलादीनि[2] भस्मगर्भान्तानि [3]पदानि शिंशुपाया नामानीति कश्चित्[4]॥ शीर्यते मृदुपुष्पत्वादिति[5] शिरीष । 'शॄ हिंसायाम्'। कपीन्[6] तनोतीति कपीतन । 'तनु विस्तारे'। भण्ड्यते[7] परिभाष्यत शुकैरिति भण्डिल[8]। 'भडि परिभाषणे'। शिरीषनामानि । 'दिरिसेनपुचेट्टु'॥ [9]चम्पादेशे भव चाम्पेय । चम्यते षट्पदैरिति चम्पक। 'चमु[10] अदने'। हेमवर्ण [11]पुष्पमस्येति हेमपुष्पक । चम्पकनामानि। 'सपंगचेट्टु'॥ ६३ ॥

[1] भस्मतुल्यो गर्भो मज्जा $G$, $K_3$ [2] पिच्छिलादि $G$, $K_6$ [3] $K_3$ adds एत [4] $K_3$ adds वृत्तान्ति [5] शीकुमार्यात् $G$, $Pt_2$ [6] वर्षि $K_3$, $K_6$ [7] भण्ड्यते मण्डित , 'मडि कल्याण' $Pt_2$. [8] मण्डिर $B_1$, $K_2$, $K_3$, $K_6$ [9] चम्पादेश्य' $G$, $Pt_2$ चम्पादेशे $B_1$ [10] चमु छमु ज्मु $K_6$ [11] 'वर्णपुष्पत्वात् $K_3$, $K_6$.

(पा.) कपिला—सा । [1]शिशपावृक्षनामानि । 'पिच्छिला च महाश्यामा कृष्णसारस्तथागरु' इति शेषे । 'यिरुगुडुचेट्टु' । शिरीषस्तु—भण्डिलोऽपि । ह्रस्वमध्य । 'अथ भण्डिले कपीतन शिरीषश्च' इति वैजयन्ती (पृ ५१, श्लो ७२) । शिरीषनामानि । '[2]दिरिशिनचेट्टु' ॥ अथ चाम्पेय—हेमपुष्पक[3] । चम्पकनामानि । 'सपेङ्गचेट्टु' । 'पञ्चपञ्चश्च सुरभि' । एते च ॥ ६३ ॥

[1] शिशुपा° $B_3$ [2] 'दिरिशेन°' $B_3$ [3] हिम° $B_3$

**एतस्य कलिका गन्धफली स्यादथ केसरे ।**
**वकुलो वञ्जुलोऽशोके समौ करकदाडिमौ ॥ ६४ ॥**

(वि.) एतस्येति—गन्ध एव फलमस्या इति गन्धफली । चम्पककलिकानाम । 'सपेंगमोग्गुपेरु' ॥ के शिरसि सरति गन्धसारत्वात् केसर । 'सृ गतौ' । (कविभि) उच्यते रोगानत्तीति[1] वकुल । 'वच परिभाषणे' । वकुलनामनी । 'पोगडचेट्टु' ॥ [2]वन्यते याच्यते कर्णपूरायेति वञ्जुल । 'वनु याच्ने' । अश्नुते व्याप्नोतीत्यशोक । 'अशू व्याप्तौ' । शोकनाशकत्वाद्वा । अशोकनामनी । '[3]अशोक्वृक्षमु' ॥ करोति दोषाभावमिति करक । 'डुकृञ् करणे' । किरति बीजानीति वा । 'कृ विक्षेपे' । दल्यते पक्वावस्थायामिति दाडिम । 'दल विशरणे' । दाडिमनामनी । '[4]दानिम्मचेट्टु' ॥६४॥

[1] नुदतीति $B_1$, $D_2$ $K_6$, अपनुदति $K_5$ [2] वण्यत G, $K_2$ [3] 'अशोकपुचेट्टु G, $Pt_2$ [4] दाडिम्बमु $K_2$ दाडिमचेट्टु $K_3$

(पा.) एतस्य—स्यात् । एतत्कोरकनाम । 'सपेङ्गमुग्ग' ॥ अथ—वकुल । केसरवृक्षनामनी । 'पोगड[2]' । 'केसर[3] सिहपूर्वश्च भव्यपूर्वश्च लम्पट' । एते च ॥ वञ्जुलोऽशोके । अशोकनामनी । 'अशोकमु' ॥ 'कङ्केलि कर्णपूरक' । एते च ॥ समौ—दाडिमौ । दाडिमद्रुमनामनी । 'दानिम्म' । 'स्वाद्वम्लो रक्तबीजश्च कुट्टिम फलषाडव[4]' । एतानि च ॥ ६४ ॥

[1] वकुल $B_3$ [2] $B_3$ adds °चेट्टु [3] 'केसरे वकुलो मयलालस सिहकेसर' इति वैजयन्त्याम् [4] °षाडव इति त्रिकाण्डशेषे (पृ ११, श्लो २३७)

**चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः ।**
**जया जयन्ती तर्कारी नादेयी वैजयन्तिका ॥ ६५ ॥**

(वि.) चाम्पेय इति—चम्पाख्यदेशे भवः[1] चाम्पेयः। के शिरसि सरतीति केसरः। 'सृ गतौ'। नागप्रियाणि केसरवन्ति पुष्पाण्यस्य नागकेसरः[2]। काञ्चनस्य स्वर्णस्याह्वयो यस्य काञ्चनाह्वयः[3]। नागकेसरनामानि। 'नागकेसरम्'॥ जयति [4]शोषादिरोगानिति जया। जयन्ती च। तर्कं [4]शोषादिविनाशहेतुभावम् [5]इयर्तीति तर्कारी। 'ऋ गतौ'। नद्यां भवा नादेयी। विजयते[6] शोभादिकमनयेति वैजयन्तिका[7]। जयन्तीनामानि। 'तक्किलिचेट्टु'॥ ६५॥

[1] भवत्वात् $Pt_2$. [2] नागो हस्ती तन्नाम केसरोऽस्येति वा $Pt_2$. [3] काञ्चनस्य सर्वाणि नामानि अस्येति $D_2$, $K_5$, $K_6$. [4] शोभादि° $B_1$, I. [5] $K_5$, $K_6$ add प्राप्नोति. [6] विजयत इति $K_5$, $K_6$. [7] 'जि जये' G, $J_2$.

(पा.) चाम्पेयः—काञ्चनाह्वयः। नागकेसरनामानि। 'नागकेसरम्'॥ जया—वैजयन्तिका। तर्कारीनामानि। 'तक्कोलचेट्टु'॥ ६५॥

**श्रीपर्णमग्निमन्थः स्यात् कणिका गणिकारिका।**
**जयाथ कुटजः शक्रो वत्सको गिरिमल्लिका॥ ६६॥**

(वि.) श्रीपर्णमिति—श्रीः शोभा पर्णेष्वस्य श्रीपर्णम्। [1]अग्निं मथ्नात्यस्मिन्निति अग्निमन्थः[2]। 'मन्थ विलोडने'। कणाः सन्त्यस्यामिति [3]कणिका। गणिकावत् [4]क्षुद्रकमियर्ति गच्छतीति गणिकारिका। जयति रोगानिति जया। 'जि जये'। अग्निमन्थस्य नामानि। 'कृरनेल्लिचेट्टु'॥ कुटिलो जायत इति कुटजः। 'जनी प्रादुर्भावे'। शक्रवृक्षत्वात् शक्रः। वस्ते त्वचमिति वत्सकः। 'वस आच्छादने'। गिरौ मल्लिकावत् तिष्ठतीति गिरिमल्लिका। कुटजनामानि। [5]'कोडिसेचेट्टु॥ ६६॥

[1] मथ्नन्ति $J_2$ [2] $B_1$ omits 16 lines. [3] वर्णिका $K_2$. [4] मोहनता $Pt_2$. [5] 'कोडसिगे' $J_2$.

(पा.) श्रीपर्णं—जया। अग्निमन्थवृक्षनामानि। 'नेल्लिचेट्टु'। अथ कुटजः—गिरिमल्लिका। कुटजनामानि। 'कोडिश'॥ ६६॥

**एतस्यैव कलिङ्गेन्द्रयवभद्रयवं फले।**
**कृष्णपाकफलाविग्नसुषेणाः करमर्दके॥ ६७॥**

(वि.) एतस्येति—[1]कलिङ्गदेशे जात कलिङ्गम्। इन्द्रवृक्षफलत्वाद् यवबीजाकृतित्वाच्च इन्द्रयवम्। दीपनादिकल्याणकारित्वाद्[2] भद्रयवम्। भद्रयवनामानि। '[3]कोडिसेपण्डु'॥ कृष्ण पाके फलमस्य कृष्णपाकफल[4]। आविजतेऽस्मादिति आविग्न। 'ओविजी भयचलनयो'। उद्विग्न इति पाठे उद्विजन्ते जना पित्तकरेऽस्मिन्निति उद्विग्न। सुपेणात्यर्कपिमुखाभफलत्वात्[5] सुपेण। करेण [6]मृद्यते करमर्दक। 'मृद मर्दने'। करमर्दकनामानि। '[7]करिवे चेट्टु'॥ ६७॥

[1] कलिङ्गफलत्वात् $K_5$ $K_6$　[2] G $Pt_2$ add यवाकृतित्वाच　[3] 'कोडरीगनपील $J_2$　[4] कृष्णवर्णपाक फलमस्य $Pt_2$　[5] °मुखाभत्वात $J_2$ मुखाकृतित्वात् $Pt_2$　[6] मन्यत $J_2$, $Pt_2$　[7] वोरिग $K_6$

(पा.) एतस्यैव—फले। एतत्फलनामानि। 'कोडिशकाय'। 'कुटजस्य फले क्लीव कलिङ्गेन्द्रयव स्मृतम्' इति रत्नकोशपाठात् समासाभिप्रेतम्। 'कलिङ्ग तु यवे ना तु दशपक्षिविशेषयो' इति वैजयन्तीपाठाद् (पृ २५९, श्लो ३३) व्यासाभिप्रेत कलिङ्गम् इन्द्रयवमिति॥ अनुक्तम्—'दोषग्राहस्तु कतक'। कतकनाम। 'इण्डुपुचेट्टु'॥ 'जम्बू स्त्री सुरभिच्छद'। जम्बूनाम। 'नेरेडु'॥ कृष्णपाकफला—करमर्दके। करमर्दकनामानि। 'कलिवेचेट्टुन्नु वॊकचेट्टुन्नु'। शब्दार्णवे कृष्णपाकफलशब्दा बहुधा विकल्पिता —

'कृष्ण पाक फलो विग्न सुपेण करमर्दक।
कृष्णपाकफल कृष्णफलपाको ननालक॥
कृष्णपाकफलादिश्च पाककृष्ण फलादिक।
कृष्णपाक पाककृष्ण फलकृष्णो वरालक॥
पाककृष्णफल पाकफलकृष्ण कराम्बुक।
फलपाक पाकफलो बोल कृष्णफलो वश॥'

इति॥ ६७॥

**कालस्कन्धस्तमालः स्यात् तापिच्छोऽप्यथ सिन्दुकः।**
**सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि॥ ६८॥**

(वि.) कालस्कन्ध इति—कालवर्ण स्कन्धोऽस्य कालस्कन्ध। [1]तम्यते तापिभिरिति तमाल। 'तमु [2]काङ्क्षायाम्'। तापिन छादयतीति तापिच्छ। 'छद अपवारणे'। तमालनामानि। 'तमालमु'॥ स्यन्दते [4]कटुरक्तरसमिति [5]सिन्दुक।

'स्यन्दू प्रस्रवणे'। सिन्दु स्यन्दन त्वगादिना वृणोतीति सिन्दुवार । 'वृञ् वरणे'। इन्द्रस्य सुरस प्रिय इति इन्द्रसुरस । गुडतीति गुड । 'गुड वेष्टने'। [6]गुडाद्वेष्टनान्निष्क्रान्ता निर्गुण्डी। इन्द्रस्य प्रिया इन्द्राणिका। सिन्दुवारनामानि। '[7]वाविलिचेट्टु' ॥ ६८ ॥

[1] ताम्यतीति $Pt_2$ [2] 'तमु ग्लानौ' $Pt_2$ [3] तापिन G, $Pt_2$ [4] तिक° $D_1$, G, I, $K_2$ [5] सि धुक $K_6$, स्यन्दते रसं $Pt_2$ [6] गुड्वत् G [7] 'लाकगड' $J_2$

(पा.) कालस्कन्ध—तापिच्छोऽपि। तमालतरुनामानि। 'चीकटिचट्टु'॥ अथ [1]सिन्दुके—इन्द्राणिकेत्यपि। सिन्दुकनामानि। 'वाविलिचेट्टु' ॥ ६८ ॥

[1] सिन्धुके $B_3$, सिन्धुवार $B_3$ [2] सिन्धुक° $B_3$

**वेणी गरागरी देवताडो जीमूत इत्यपि ।**
**श्रीहस्तिनी तु भूरुण्डी तृणशूल्यं तु मल्लिका ॥ ६९ ॥**
**भूपदी शीतभीरुश्च सैवास्फोटा वनोद्भवा ।**

(नि.) वेणीति—[1]वेणीवत् तिष्ठतीति वेणी। गर मूषिकविषम् आगिरतीति गरागरी। 'गॄ निगरणे'। खरागरी, खरा, गरीति वा पाठ । ताडयन्ति वर्णं ताडा अङ्कुरा । 'तड आघाते'। अङ्कुरा उद्भिदस्तेषु मुख्यत्वात् देवताड । देवमिन्द्रियं ताडयतीति वा। [2]जीमूत इवाह्लादकत्वात् जीमूत । देवतालनामानि। 'देवताडि चेल्लु'॥ [3]शोभान्वितहस्तिवर्णाभपत्रयोगात्[4] श्रीहस्तिनी। भुवि रोहतीति भूरुण्डी। 'रुह् बीजजन्मनि प्रादुर्भावे च'। 'गुरुगुचेट्टु'॥ तृणशूले घातगुल्मे साधु तृणशूल्यम्। तृणशून्यं, तृणशून्या, तृणशूल्या इति पाठा । मल्यते मूर्ध्नि मल्लिका। 'मल मल्ल धारणे'। भुवि पद यस्या सा भूपदी। शीताद् [5]भीरुरिति शीतभीरु । 'ञिभी भये'। मल्लिकानामानि। '[6]मल्लेचेट्टु'॥ [7]आस्फोटति ईषद्विकसतीति आस्फोटा। 'स्फुट विकसने'। आस्फोतति वा पाठ । '[8]अडविमल्लेपेरु' ॥ ६९ ॥

[1] वेणीर $J_2$ $Pt_2$ [2] जीमूतवत् $Pt_2$ [3] शोभाकार° $h_3$, $h_4$ [4] रुपाकार° $J_2$ [5] निभेतीति G, $h_2$, $h_3$, $h_5$, $Pt_2$ adds ग्रीष्मजत्वात् [6] 'मोल्ल' $J_2$ [7] स्फुट्सुटतीति $h_1$, $h_4$ [8] 'अटवीमोल्ले' $J_2$

(पा.) वेणी—जीमूत इत्यपि। देवताल्नामानि। 'डापरदङ्गि'। अनुगम्—'अजभक्षस्तु गोमद्धो वर्बुरश्च युगाक्षर.'। वर्बुरनामानि। 'चोन्यचेट्टु'। 'कारस्त्रो

महाकोल किपाक कालकूटक'। किपाकद्रुमनामानि। 'काजीरवृक्षमु'॥ श्रीहस्तिनी—भूरुण्डी। श्रीहस्तिनीनामनी। 'गुरुगुचेटडु'॥ [1]तृणशूल्य तु। सुभूतिटीकाया तृणशूल्या तृणशून्या वेति रूपान्तरसत्ता स्त्रीलिङ्गता चोक्ता। मल्लिका—शीतभीरुश्च। मल्लिकानामानि। 'मल्ले'। 'मदयन्ती विचक्लि'। एते च॥ सैव—वनोद्भवा। 'अडविमल्ले'। '[2]काकमल्या वनोद्भवा' इति वैजयन्ती (पृ ६०, श्लो १८४)॥ ६९॥

[1] तृणशून्य $B_3$  [2] काकमाल्याम् इति मुद्रितग्रन्थ

**शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा॥ ७०॥**
**सितासौ श्वेतसुरसा भूतवेश्यथ मागधी।**
**गणिका यूथिकाम्बष्ठा सा पीता हेमपुष्पिका॥ ७१॥**

(वि.) शेफालिकेति—शेरत इति शेफा निद्राणा अलयोऽत्रेति शेफालिका। सुष्ठु वहत्यामोद सुवहा। 'वह प्रापणे'। गुडाद्वेष्टनान्निष्क्रान्ता [1]निर्गुण्डी। नीलपुष्पत्वात् नीलिका। शेफालिकानामानि। '[2]नल्लवाविलि'॥ श्वेत शोभनो[3] रसो यस्या सा श्वेतसुरसा। भूतानि विशत्याच्छादयतीति भूतवेशी। '[4]विश आच्छादने'। श्वेतशेफालिकानामनी। 'तेल्लवाविलि'॥ [5]मगधदेशप्रचुरा मागधी। गणिकावच्चित्ताकर्षणाद्[6] गणिका। यूथो [7]जालकमस्या अस्तीति यूथिका। भ्रमरैरम्ब्यते शब्द्यत इत्यम्बष्ठा। 'अबि शब्दे'। अम्बो भ्रमराणा ध्वनि, सोऽत्र तिष्ठतीति वा। 'ष्ठा गतिनिवृत्तौ'। [8]यूथिकानामानि। 'अडविमोल्ल'॥ हेमवर्णानि पुष्पाणि यस्या हेमपुष्पिका। पीतपुष्पयूथिका नाम। 'पच्चपूवुलमोल्लपेरु'॥ ७०—१॥

[1] $Pt_2$ adds 'गुड वेष्टने'  [2] 'नल्लनिपुष्पुल्लाविलि' $K_3$  [3] शोभनश्च G
[4] 'विश प्रवेशने' $B_1$, $K_2$  [5] °देशे $J_2$, $Pt_2$ प्रचुरत्वात् $J_3$  [6] कर्षणात् $Pt_2$
[7] जालमस्या इति $Pt_2$  [8] एतानि मालतीकलिकस्य नामानि $J_2$

(पा.) शेफालिका—नीलिका च सा। नीलपुष्पनिर्गुण्डीनामानि। 'नल्लवाविलि'॥ सितासौ—भूतवेशी। श्वेतपुष्पनिर्गुण्डीनामानि। 'तेल्लवाविलि'॥ अथ मागधी—अम्बष्ठा। 'मुल्ल'। सा—हेमपुष्पिका। सा यूथिका पीतपुष्पा चेत् हेमपुष्पिका। 'पच्चपुप्पुलमुल्ल'॥ ७०—१॥

**अतिमुक्तः पुण्ड्रकः स्याद् वासन्ती माधवी लता ।**
**सुमना मालती जातिः सप्तला नवमालिका ॥ ७२ ॥**

(वि.) अतिमुक्त इति—[1]वैराग्यसपत्त्या मुक्तानप्यतिक्रामत्यभिभवतीति अतिमुक्तः । पुण्ड्रदेशे भव. पुण्ड्रकः । वसन्तमासे[2] भवा वासन्ती । मधौ वसन्ते[3] भवा माधवी । लात्यादत्ते [4]शाखिकाञ्चित्तमिति लता । 'ला आदाने' । वासन्तीनामानि । 'पूवुल्गुरुविदपेल्लु' ॥ सुष्ठु मन्यते जनैरिति सुमनाः । सान्तोऽयम् । 'मन [5]अवबोधने' । मालां कुर्वन्त्यनयेति मालती । मल्यते आमोदैरिति वा । 'मल मल्ल धारणे' । जायते [6]प्रीतिरनयेति जातिः[7] । 'जनी प्रादुर्भावे' । जातिनामानि । 'जाजिचेट्टु' ॥ सप्त [8]इन्द्रियाणि लात्यादत्ते सुगन्धित्वात् सप्तला । 'ला आदाने' । नूयत इति नवा । 'णु स्तुतौ' । नवा चासौ [9]मालिका च नवमालिका । नवा स्तुत्या माला अस्या इति वा । नवमालिकानामनी ॥ '[10]विरजाजिचेट्टु' ॥ ७२ ॥

[1] अतिक्रान्तो मुक्तान् विरक्तानिति $Pt_2$ [2] °काले $J_2$, वसन्ते पुष्यतीति $Pt_2$. [3] चैत्रे पुष्यतीति $Pt_2$ [4] जनमनांसि $Pt_2$ [5] 'मन ज्ञाने' $F_2$, $Pt_2$. [6] सुरसम् $Pt_2$ [7] जाती इति वा पाठः G, I. [8] $Pt_2$ adds मनोरुद्धयन्तानि. [9] मल्लिका $J_2$. [10] 'इरवन्तिगे' $J_2$

(पा.) अतिमुक्तः—माधवी लता । माधवीनामानि । 'पूवुलगुरिविंद' ॥ सुमना—जातिः । जातिनामनी । 'जाजि' ॥ सप्तला नवमालिका । 'विरुवाविलि विरवाजिन्नि' । 'वनमाली च नेपाली . . . शेखरीत्यपि (?)' इति शेषे ॥ ७२ ॥

**माघ्यं कुन्दं रक्तकस्तु बन्धूको बन्धुजीवकः ।**
**सहा कुमारी तरणिरम्लानस्तु महासहा ॥ ७३ ॥**

(वि.) माघ्यमिति—[1]माघमासे भवं माघ्यम् । कुं भुवमुद्भेदनकाले[2] द्यति खण्डयतीति कुन्दम् । 'दो अवखण्डने' । कुन्दनामनी । '[3]मोल्लचेट्टु' ॥ रक्तपुष्पशालित्वाद्[4] रक्तकः । सुकुमारत्वाच्चित्तं बध्नातीति बन्धूकः । 'बन्ध बन्धने' । न्धून् जीवयतीति बन्धुजीवक.[5] । बन्धुः जीवना यूनामिति वा । बन्धूकनामानि । मङ्किनचेट्टु' ॥ [6]सहते परिमलमिति सहा । 'षह मर्षणे' । कु[7] भूमिस्थं मारयति नाशयतीति कुमारी । 'मृङ् प्राणत्यागे' । तरन्त्यनया [8]दोषजानि दु.खानीति तरणिः । तॄ प्लवनतरणयोः' । [9]कुमारीनामानि । 'पिन्नगोरिंट' ॥ म्लानिर्न विद्यतेऽस्मिन्नित्य-

म्लान[10]। महतीं पीडा समर्द सहते महासहा। महती च सा सहा चेति वा। महासहानामनी। 'पेद्दगोरिंट' ॥ ७३ ॥

[1] माघे मासे $K_5$, $Pt_2$ [2] उद्भदेन $B_1$, उद्भवकाले $Pt_2$ [3] 'मोह्ले' $J_2$
[4] °पुष्पतया $F_2$, $J_2$ $Pt_2$ [5] जीवाना बन्धु $J_2$ [6] $B_1$, $K_5$ add मुखेऽन्यह
[7] कुस्थ $K_5$ $K_6$ कुत्सितान् रोगान् मारयतीति वा $Pt_2$, $K_5$ adds प्राणिजात [8] त्रिदोष° $B_1$, $D_2$, G, रोगजनितदुःख $Pt_2$ [9] 'केय्योरते' $J_2$ [10] आशु अम्लान पुष्पमस्य $Pt_2$

(पा.) माघ्य कुन्दम्। कुन्दनाम। 'कुन्द उासो स्मृत माघ्यो दलकोशो दलाढक' इति पुनपुंसकयोर्माालि। 'तोंटमुल्ल'। रक्तकस्तु—बन्धुजीवक। बन्धुजीवनामानि। 'मकेन'। सहा—तरणि। सहानामानि। 'चामन्ति'॥ अम्लानस्तु महासहा। महासहानामनी। 'अनल्यमैनरेकुलुगलचामन्ति। अदे गोझगि'। 'कुब्जिका भद्रतरणि बृहत्पत्रातिकेसरा। महासहा' इति धन्वन्तरि ॥ ७३ ॥

**तत्र शोणे कुरवकस्तत्र पीते कुरण्टकः।**
**नीली झिण्टी द्वयोर्बाणा दासी चार्तगलश्च सा ॥ ७४ ॥**

(वि.) तत्रेति—तत्र अम्लाने। कौ भुवि रूयते साधुरिति कुरवक। 'रु शब्दे'। कुरवकनाम। '[1]एर्रपूवुलगोरिंट'॥ कौ भूमौ रम्यते कुरण्टक। 'रमु क्रीडायाम्'। कुरण्टकनाम। '[2]पचपूवुलगोरिंट'॥ तत्र नीलपुष्पत्वात् नीली। झिमिति शब्द करोति शुष्कदशायामिति झिण्टी। वणति शुष्कदशायामिति वाणा। 'वण शब्दे'। दस्यते क्षीयते कालेनेति[3] दासी। 'दसु उपक्षये'। आर्त क्षीण सन् गलतीति आर्तगल। '[4]गल अदने स्रवणे च'। नीलझिण्टिकानामानि। 'नल्लपूवुलगोरिंट[5]'॥ ७४ ॥

[1] 'कयपनगोरटे' $J_2$ [2] 'पचनोगोरटे' $J_2$ [3] कालेन गच्छति $K_5$, $K_6$
[4] 'गल अवस्रसने' $F_2$, $Pt_2$ [5] 'निरियगोरटे' $J_2$

(पा.) तत्र—कुरवक। शोणसहानाम। 'येर्रचामन्ति'॥ तत्र—कुरण्टक। पीतसहानाम। 'पचशामन्ति'॥ नीले—चार्तगलस्तथा। नीलझिण्टीनामानि। 'नल्लगोरिंट'॥ ७४ ॥

**सैरेयकस्तु झिण्टी स्यात् तस्मिन् कुरवकोऽरुणे।**
**पीता कुरण्टको झिण्टी तस्मिन् सहचरी द्वयोः ॥ ७५ ॥**

(वि.) सैरेयक इति—सिराख्या वृक्षा यस्मिन् सन्तीति सैरः, सैरदेशे भवः सैरेयकः। शुष्के सति झिमिति [1]शब्दं करोतीति झिण्टी। सैरेयकनामनी। 'मुळुगोरिंट'॥ कुरवकशब्दश्चोक्तः[2]। कुरण्टक उक्तः[3]। भ्रमरीभिः सह भ्रमराश्चरन्त्यस्यामिति [3]सहचरी। 'चर गतौ'। '[4]पच्चपुव्वुलगोरिंट'॥ ७५॥

[1] रटति, 'रट परिभाषणे' B₁, K₃, 'सिन्न मुळुगोरिंट' B₁. [2] श्लो. ७४. [3] तस्मिन्नेव कुरण्टके सहचरीशब्दो वर्तते B₁, J₂. [4] 'मुल्लु गोरटे' J₂.

(पा.) सैरेयकस्तु—स्यात्। श्वेतझिण्टीनाम। 'तेल्लगोरंट'॥ तस्मिन्—अरुणे। 'येर्रगोरंट'। पीते—द्वयोः। पीतझिण्टीनामानि। 'पच्चगोरंट'। अनुक्तम्—'किंकराटः किंकरातो वर्णपुष्पो मिलात्तकः'। 'वन्नेचेट्टु'॥ ७५॥

**उड्डपुष्पं जपा पुष्पं वज्रपुष्पं तिलस्य यत्।**
**प्रतिहासशतप्रासचण्डातहयमारकाः॥ ७६॥**
**करवीरे करीरे तु क्रकरग्रन्थिलावुभौ।**

(वि.) उड्डपुष्पमिति—उड्डदेशे भवं पुष्पं उड्डपुष्पम्। ओड्रपुष्पमिति वा पाठः। जपतीव तिष्ठति जलमध्ये जपा। 'जप जल्प[1] व्यक्तायां वाचि'। जपानामनी। '[2]वासानिचेट्टु'॥ विरुद्धलक्षणया वज्रवत् कठिनं पुष्पं वज्रपुष्पम्[3]। 'नुव्वु [4]पूवुपेरु'॥ विकसितैः पुष्पैः प्रतिहसतीव तिष्ठतीति प्रतिहासः। 'हसे हसने'। शतं प्रासा[5] इव तीक्ष्णाः[6] कुड्मला अस्येति शतप्रासः। चण्डं तीक्ष्णमततीति[7] चण्डातः। 'अत सातत्यगमने'। [8]कक्षासादृश्यशाखात्वाद् हयान् मारयतीति हयमारकः। 'मृङ् प्राणत्यागे'। करवीरवत् खड्गवत् मारकत्वात् रसपानेन करवीरः। करवीरनामानि। 'गन्नेरु[9]'॥ करिणं समीपगतम् ईरयति तीक्ष्णकण्टकैरिति करीरः। 'ईर क्षेपे'। तीक्ष्णत्वात् क्रेति शब्दं करोति क्रकरः[10]। 'डुकृञ् करणे'। ग्रन्थिमत्त्वात् ग्रन्थिलः[11]। करीरनामानि। 'वेणुतुरुचेट्टु[12]'॥ ७६॥

[1] J₂, Pt₂ omit जल्प. [2] 'दासिवाण' J₂ [3] वज्रमिव विदारकं Pt₂. [4] 'कासेप्पुष्प' J₂. [5] K₅, K₆ add कुन्ताः. [6] तीक्ष्णानि कुड्मलानि Pt₂. [7] K₅, K₆ add तुदति; व्याप्नोति J₂. [8] हयमारककक्षा° J₂. [9] 'कणिगलु' J₂. [10] कृणातीति K₅, K₆. [11] ग्रन्थयः सन्त्यस्य Pt₂. [12] 'वेन्दे' J₂.

(पा.) [1]ओड्रपुष्पं जपा। जपानामनी। 'दासनमु'। 'जपायामोड्रपुष्पं[2] स्यादत्र पद्मादयोऽपि च' इति वैजयन्ती (पृ. ६१, श्लो. १९५)। रुद्रपुष्पं जपेति क्वचित्पाठ.। '[3]रुद्रपुष्पमभिधीयते जपा' इति हलायुधः (अ. मा. २. ५२)। पुष्पं—तिलस्य यत। तिलस्य पुष्पं यत तद्वत्रपुष्पं स्यात्। 'नुवुपुव्वु'॥ प्रतिहास—करवीरे। करवीरनामानि। 'गन्नरु'॥ अनुक्तम्—' तारावतस्तु दगरो नन्द्यावर्तो नभोङ्गणः'। 'नन्दिवर्धनमु'॥ करीरे—ग्रन्थिलावुभौ। करीरतरुनामानि। 'वेणुतुरु'॥ ७६॥

[1] ओड्रपुष्पं for उड्रपुष्प in $B_3$. [2] रुद्रपुष्पम् इत्येव मुद्रितग्रन्थे. [3] ओड्रपुष्पमिति मुद्रितपुस्तके.

**उन्मत्तः कितवो धूर्तो धुत्तूरः कनकाह्वयः ॥ ७७ ॥**
**मातुलो मदनश्चास्य फले मातुलपुत्रकः ।**
**फलपूरो बीजपूरो रुचको मातुलङ्गके ॥ ७८ ॥**

(वि.) उन्मत्त इति—उन्मादयतीत्युन्मत्त.। 'मदी हर्षग्लपनयोः'। अत एव कितवः। [1]धूर्वत्युन्मादकरणेनेति धूर्तः। '[2]उर्वी तुर्वी धुर्वी हिंसायाम्'। वातादिदोषान्[3] धुवतीति[4] धुत्तूरः। 'धू विधूनने'। काञ्चनस्याह्वयो नाम यस्य काञ्चनाह्वयः। कनकाह्वय इति वा पाठः। [5]उन्मादकद्रव्येषु मा नास्ति तुला साम्यमस्येति मातुलः। मदयतीति मदनः। 'मदी हर्षग्लपनयोः'। धुत्तूरनामानि। 'उम्मेत्तपेरु'॥ मातुलस्य पुत्र.[6] फलं मातुलपुत्रकः। 'उम्मेत्तकाय'॥ फलैः पूर्यत इति फलपूरः। 'पॄ पालनपूरणयोः'। बीजैः पूर्यत[7] इति बीजपूरः। रोचते स्वफलं नरेभ्य इति रुचकः। 'रुच[8] दीप्तावभिप्रीतौ च'। रुच्यवस्तुष्वनेन मा तुल्यं[9] गच्छतीति मातुलङ्गकः। मातुलङ्गकनामानि। '[10]मादीफलमुचेट्टु'॥ ७७–८॥

[1] उन्मादेन हिनस्तीति $F_2$, $Pt_2$. [2] 'धुर्वी हिंसायाम्' $F_2$, $Pt_2$ [3] °रोगान् $J_1$, $Pt_3$. [4] धवति G, $K_2$, $K_3$ [5] उन्मादकृत्सु $K_5$, $K_6$. [6] पुत्रक: $K_8$ [7] परिपूर्यते $J_1$, $K_2$. [8] 'रुच स्तुतौ' $K_2$, $K_5$, $K_6$ [9] G, $K_3$ add साम्यं. [10] 'मादिफलं' $D_2$; 'मादले' $J_2$.

(पा.) उन्मत्तः—धुत्तूरः[1]। तुर्तूरः दुस्तूर इति च क्वचित्पाठः। काञ्चनाह्वयः—मदनश्च। उन्मत्तद्रुमनामानि। 'उम्मेत्तचेट्टु'॥ अस्य—मातुलपुत्रकः। तत्फलनाम।

'उम्मेत्तकाय'। अनुक्तम्—'त्रिपुरो मदमत्त. स्यात्'। 'वगिचेट्टु'॥ फलपूरो—मातुलुङ्गके। मातुलुङ्गकनामानि। 'मादिफलमुचेट्टु'॥ ७७–८॥

[1] दुत्तूर B.

**समीरणो मरुवकः प्रस्थपुष्पः फणिज्झकः।**
**जंबीरोऽप्यथ पर्णासे कठिंजरकुठेरकौ॥ ७९॥**

(वि.) समीरण इति—समीरयति प्रकाशयत्यामोदमिति समीरण। 'ईर क्षेपे'। [1]मरुदेशे वाति नर्तत इति मरुवक। 'वा गतिगन्धनयो'। प्रस्थे[2] सानौ स्थितोऽपि पुष्प्यतीति प्रस्थपुष्प। 'पुष्प विकसने'। तीक्ष्णत्वेन फणाभपत्रत्वात् फणिज्झक[3]। फणिज्झकशब्दो देश्य। [4]जम्यते भक्ष्यत इति जबीर। 'जमु अदने'। जबीरनामानि। 'मरुवमु'॥ [5]पुराणानि पर्णान्यस्यति क्षिपतीति पर्णास। 'असु क्षेपणे'। कठिन मुद्गशष्कुल्यादिक जरयति जीर्णं करोतीति कठिजर। '[6]जॄष् वयोहानौ'। कुण्ठति मशकादिगति प्रतिबध्नातीति कुठेरक। 'कुठि [7]प्रतिघाते'। कठिजरनामानि। 'नल्लगगेर'॥ ७९॥

[1] मरौ देशे $J_2$, $K_3$, $Pt_2$ [2] प्रस्थेऽपि $K_5$ [3] तीक्ष्णत्वेन फणीव आर्जक फणिर्जक $Pt_2$ [4] जक्ष्यते, 'जक्ष भक्षहसनयो' $K_5$ $K_6$ [5] पुराणपर्णानि $D_2$ [6] 'जॄष् झॄष् वयोहानौ' $K_5$, $K_6$ [7] 'कुठ बन्धने' $K_6$

(पा.) समीरणो—जम्बीरोऽपि। मरुवकनामानि। 'मरुवमु'॥ अथ पर्णासे—कुठेरकौ। पर्णासनामानि। 'नल्लगगेर'॥ ७९॥

**सितेऽर्जकोऽत्र पाठी तु चित्रको वह्निसञ्ज्ञकः।**
**अर्काह्ववसुकास्फोटगणरूपविकीरणाः॥ ८०॥**
**मन्दारश्चार्कपर्णोऽत्र शुक्लेऽलर्कप्रतापसौ।**

(वि.) सित इति—अर्जयति [1]नवपत्रादीन् अर्जक। 'अर्ज [2]अर्जने'। श्वेत-पर्णासनाम। 'तेल्लगगेर'॥ वह्निपर्याये[3] पाठोऽस्यास्तीति पाठी। चेतन्तीति चितो जन्तवस्तान् त्रायते व्याधित इति चित्रक[4]। 'त्रैङ् पालने'। [5]वह्निसञ्ज्ञा नामास्यास्तीति[6] वह्निसञ्ज्ञक। चित्रकनामानि। 'चित्रमूलमु'॥ [7]अर्कस्याह्वा नामास्यास्तीति अर्काह्व। वसत्यस्मिन् तेज इति वसुक। 'वस निवासे'। आस्फुटतीत्यास्फोट। 'स्फुट

विकसने'। [8]आस्फोत इति वा पाठः। कालक्रमेण गणरूपाणि बहुरूपाण्यस्य गणरूपः। पुष्पाणि विकिरतीति विकीरणः। 'कॄ विक्षेपे'। मन्दान् [9]क्षुद्रव्याधीनौषधत्वेन इयर्तीति मन्दारः। 'ऋ गतौ'। अर्कवर्णपर्णत्वाद् अर्कपर्णः। मन्दारनामानि। 'जिल्लेडुचेट्टु[10]'॥ अलति भूषयतीत्यल्[11]। अल् चासौ अर्कश्च अलर्कः। 'अल भूषणादौ'। प्रकृष्टास्तापसा [12]अनेनेति प्रतापसः। अलर्कनामनी। 'तेल्लपूव्वुलजिल्लेडु'॥ ८०॥

[1] आरोग्य $Pt_3$ [2] 'अर्ज षर्ज अर्जने' $K_5$ $K_6$ [3] °पर्यायेण $K_6$, पर्याय-पाठ $K_2$, पश्यत इति $K_5$ [4] चित्रकार्यत्वात् चित्रक $K_5$ [5] बहु अग्र $B_1$, $K_6$ [6] $Pt_3$ adds दीपनत्वात् [7] $B_1$, $K_6$ add सूर्यस्य [8] आस्फुट इति वा पाठ $K_6$ [9] $K_6$ adds अन्यादि° [10] 'चेक्क' $J_2$ [11] अल अलश्चासौ $Pt_2$ [12] $K_5$, $K_6$ add योगिनो भवन्ति

(पा.) सितेऽर्कोऽत्र। श्वेतपर्णासनाम। 'तेल्लगोर'॥ अनुक्तम्—'दमनं तु ब्रह्मजटा'। 'दवनमु'॥ 'तुलसी भारती समे[1]'। 'तुलसी'॥ पाठी—वह्निसंज्ञकः। चित्रमूलनामानि। 'चित्रमूलमु'। 'चित्रको दहनव्यालपाठिसौरारुणोऽग्निकः' इति तन्त्रान्तरपाठात् पाठी इत्यन्ते॥ अर्काह्व—अर्कपर्ण। स्फोटस्फोटस्फोता इत्यमरमाला। अर्कवृक्षनामानि। 'जिल्लेडु'॥ अत्र शुक्ले—प्रतापसौ। अलर्कनामनी। 'तेल्लजिल्लेडु' ॥ ८०॥

[1] शिवा इति वैजयन्त्याम् (पृ ५४ श्लो ११९)

**शिवमल्ली पाशुपत एकाष्ठीलो बको वसुः ॥ ८१ ॥**
**वन्दा वृक्षादनी वृक्षरुहा जीवन्तिकेत्यपि ।**

(वि.) शिवमल्लीति—शिवेन[1] मल्ल्यत इति शिवमल्ली। 'मल मल्ल धारणे'। पशुपतेरयं प्रियः पाशुपतः। एकोऽष्ठीलो मज्जास्यास्तीति एकाष्ठीलः। गन्धानुमेयसूक्ष्मा-शैर्वाति गच्छतीति [3]बकः। 'वा गतिगन्धनयोः'। वस्ते भूमिमाच्छादयतीति वसुः। 'वस आच्छादने'। बकपुष्पनामानि। 'बकपुष्पमु[4]'॥ वन्द्यते स्तूयते औषधत्वेनेति [5]वन्दा। 'वदि अभिवादनस्तुत्योः'। वृक्षमत्ति पीडयतीति वृक्षादनी। 'अद भक्षणे'। वृक्षे रोहतीति वृक्षरुहा। 'रुह बीजजन्मनि प्रादुर्भावे च'। जीवयतीति जीवन्तिका[6]। 'जीव प्राणधारणे'। जीवन्तिकानामानि। '[7]बदनिकपेरु'॥ ८१॥

[1] शिवस्य मल्लिकेव $K_5$ $K_6$ [2] $D_2$ G add मुख्य [3] बकयोरभेद G, I [4] 'बकुलपुष्प' $J_2$ [5] व वा $J_2$ [6] जीवन्त्यनया $K_5$, $K_6$ जीवतीति $B_1$ [7] 'मरुद वन्दनिके' $J_2$

(पा.) शिवमल्ली—बुक्र । वक इति वा । वसु । वकपुष्पनामानि । 'वकपुष्पमन्नचेट्टु'। वन्दा—जीवन्तिकेत्यपि । वृक्षोपरिप्ररूढविजातीयोद्भिन्नामानि । 'वदनिक' ॥ ८१ ॥

**वत्सादनी छिन्नरुहा गुडूची तन्त्रिकामृता ॥ ८२ ॥**
**जीवन्तिका सोमवल्ली विशल्या मधुपर्ण्यपि ।**

(वि.) वत्सादनीति—वत्सानां बालानामदनीयत्वाद्[1] वत्सादनी । 'अद भक्षणे'। [2]छिन्नापि रोहतीति छिन्नरुहा । 'रुह बीजजन्मनि प्रादुर्भावे च'। ज्वरितान्[3] गुडति रक्षतीति गुडूची । 'गुड रक्षायाम्'। तन्त्रयत्यायुरिति[4] तन्त्रिका । 'तन्त्रि कुटुम्बधारणे'। रसायनत्वादमृता[5] । जीवयति रोगिणमिति जीवन्तिका । 'जीव प्राणधारणे'। [6]सोमस्यांशभूता वल्ली सोमवल्ली । विगत शल्यमस्या इति विशल्या । मधुराणि [7]पर्णान्यस्या इति मधुपर्णी । गुडूचीनामानि । 'तिप्पतीगे' ॥ ८२ ॥

[1] अदनं (भवतीति $D_2$, $J_2$, $K_3$) $Pt_2$ [2] छिन्ने स्थानेऽपि $K_6$, छिन्नस्थाने $B_1$, $K_5$ [3] ज्वरितादीन् $K_5$ [4] ज्वरितान् $K_6$, धारयति पोषयति $B_1$, $D_2$ [5] न म्रियत इत्यमृता $Pt_2$ [6] अंशे भूता $B_1$ [7] $K_5$ adds पत्राणि

(पा.) वत्सादनी—मधुपर्ण्यपि । गुडूचीनामानि । 'तिप्पतीङ्गे' ॥ ८२ ॥

**मूर्वा देवी मधुरसा मोरटा तेजनी स्रवा ॥ ८३ ॥**
**मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि ।**

(वि.) मूर्वेति—मूर्वति [1]वेष्टयति यष्ट्यादिकमिति मूर्वा । 'मुर्वी बन्धने'। दीव्यतीति देवी । 'दिवु क्रीडादौ'। [2]मधुरसोऽस्या अस्तीति मधुरसा । मुरति वेष्टयति मोरटा । 'मुर संवेष्टने'। तेजयत्यग्निमिति [3]तेजनी । 'तिज निशातने[4]'। स्रवति रसमिति स्रवा । 'स्रु [5]प्रस्रवणे'। [2]मधु[6] लातीति मधूलिका । 'ला दाने'। [2]मधुन. श्रेणि. पङ्क्तिरस्या इति मधुश्रेणी । गोकर्णाभपत्रत्वाद् गोकर्णी । पीलोरिव पर्णान्यस्या पीलुपर्णी । मूर्वानामानि ॥ 'चागचेट्टु' ॥ ८३ ॥

[1] वेष्टते $Pt_2$ [2] $K_5$, $K_6$ add विरुद्धलक्षणया, मधु रस. $B_1$ [3] तेजिनी $K_5$ [4] निशाने $J_2$ [5] 'स्रु गतौ' $F_2$, 'स्रु स्रवणे' $D_2$, $K_6$ [6] माधुर्यान्वयात् $B_1$, I, $K_3$, $K_5$

(पा.) मूर्वा—पीलुपर्ण्यपि। यत्प्रभवत्वेन धनुर्गुणो मौर्वीत्युच्यते तस्यो-द्भिद्विशेषस्य नामानि। 'चांग' ॥ ८३ ॥

**पाठाम्बष्ठा विद्धकर्णी स्थापनी श्रेयसी शिवा ॥ ८४ ॥**
**एकाष्ठीला पापचेली प्राचीना वनतिक्तका।**

(वि.) पाठेति—बहुषु[1] योगेषु पठ्यत इति पाठा। 'पठ व्यक्तायां वाचि'। अम्बे शब्दे तिष्ठतीति अम्बष्ठा[2]। 'ष्ठा गतिनिवृत्तौ'। [3]वैद्यकर्णावनया विद्धाविति विद्धकर्णी। वस्तौ कर्मणि स्थापनीयत्वात् [4]स्थापनी। [5]श्रेय:साधनत्वात् श्रेयसी। [6]दोषशमनात् शिवा। एकोऽष्ठीलो मज्जाख्या अस्तीति एकाष्ठीला। पापं चलयतीति [7]पापचेली। 'चल सचलने'। [8]प्राच्यां भवा प्राचीना। [9]वनजा च तिक्तरसा च वनतिक्तका। पाठानामानि। 'अगुरुसोंटि' ॥ ८४ ॥

[1] बहु° $B_1$, $Pt_2$ [2] अम्बेर तिष्ठतीति वा $Pt_2$ [3] $Pt_2$ adds शास्त्रेषु श्रूयमाण-त्वात्. [4] वस्तिकर्मणि $B_1$, जनान् स्थापयतीति, 'ष्ठा गतिनिवृत्तौ' $Pt_2$. [5] श्रेयस्करत्वात् $F_2$, $Pt_2$ [6] विद° $B_1$. [7] वृकीनामत्वात् $J_2$, वृजिन° $K_5$ [8] प्राचि प्रायश $K_5$, $K_6$. [9] वने I, $Pt_2$.

(पा.) पाठाम्बष्ठा—वनतिक्तका। पाठाया नामानि। 'पाट', 'इदे चिरियोदि' ॥ ८४ ॥

**कटुः कटुंवराशोकरोहिणी कटुरोहिणी ॥ ८५ ॥**
**मत्स्यपित्ता कृष्णभेदी चक्राङ्गी शकुलादनी।**

(वि.) कटुरिति—कटुरसोऽस्या अस्तीति कटुः। कटत्यावृणोति रोगमिति वा। 'कटे वर्षावरणयोः'। कटत्यावृणोति बलाख्यरोगमिति कटुंवरा। 'वृञ् वरणे'। कटुभरेति पाठे कटुं बिभर्तीति कटुंभरा। कटंभरेत्यपि पाठः। रोगजशोकं[1] हन्ति रोपयति[2] चाङ्गमिति अशोकरोहिणी। अशोका रोहणीति पदद्वयं वा। तत्पक्षे न विद्यते शोकोऽस्या अशोका। रोहति व्याप्नोत्यङ्गानीति रोहिणी। 'रुह बीजजन्मनि प्रादुर्भावे च'। [3]कटुश्चासौ रोहिणी[4] च कटुरोहिणी। मत्स्यानां पित्तं जीवनमिति मत्स्यपित्ता। कृष्णो भेदः छेदोऽस्याः कृष्णभेदी[5]। चक्रवदङ्गमस्या अस्तीति चक्राङ्गी। [6]चक्राङ्गीति वा पाठः। शकुलानां मत्स्यानामदनमिति शकुलादनी। कटुरोहिणीनामानि। 'कटुकरो-हिणीपेरु' ॥ ८५ ॥

[1] रोगजं शोकं $J_2$; राजशोकं $B_1$. [2] रोहति $K_6$. [3] कटुरसा $K_5$, $K_6$. [4] रोहति च $B_1$. [5] भेदे छेदने कृष्णवर्णोऽस्याः $K_5$, $K_6$. [6] वक्रमङ्गमस्याः $F_2$, $Pt_2$.

(पा.) कटुः—रोहिणी ।

'अशोका कटुरोहिण्यामशोको वञ्जुलद्रुमे ।
रोहिणी कटुरोहिण्यां भभेदे रोहिता गवोः[1] ॥'

इति रभसकोशादशोका रोहिणीति पदद्वयमपि । कटुरोहिणी । कटुकरोहिण्यपि ॥ मत्स्यपित्ता—शकुलादनी । शकुलादिनीति वा । कटुरोहिणीनामानि । 'कटुकरोहिणी-पेरु' ॥ ८५ ॥

[1] 'तद्भेदे लोहितागवोः' इति टीकासर्वस्वे (पृ. १३९), 'भभित्कटंभराम्नोभवह्नेषु लोहितागवो.' इति मेदिनीति भानुजोदीक्षितः (पृ. १७९).

**आत्मगुप्ताजहाव्यण्डा कण्डूरा प्रावृषायणी ॥ ८६ ॥**
**ऋष्यप्रोक्ता शूकशिम्बिः कपिकच्छुश्च मर्कटी ।**

(वि.) आत्मगुप्तेति—आत्मा गुप्यतेऽस्या[1] आत्मगुप्ता । '[2]गुपू रक्षणे' । न जहाति शूकान् अजहा[3] । 'ओहाक् त्यागे' । जडेति वा पाठे जडयतीति जडा । 'जल अपवारणे' । कन्दूकरणाय व्यडति वर्धते[4] इति व्यण्डा । 'अड उद्यमने' । अव्यण्डेति वा पाठः । कण्डूं रातीति कण्डूरा । 'रा दाने' । प्रायेण प्रावृषि भवा प्रावृषायणी । ऋष्यैर्मृगैः प्रोक्ता दर्शिता ऋष्यप्रोक्ता । ऋष्यप्रोक्तेति वा पाठः । शूकप्रधाना [5]शिम्बिः शूकशिम्बिः । कपीन्[6] कपति [7]हिनस्तीति कपिकच्छूः । 'कप हिंसायाम्' । [8]मर्कटरोमवर्ण-फलत्वात् मर्कटी । मर्कटीनामानि । '[9]दुरदगोडिचेट्टु' ॥ ८६ ॥

[1] अनया $K_5$. [2] 'गुप गोपने' $K_3$, $K_5$. [3] जिहीते जिहा $K_6$. [4] उद्गच्छति $B_1$, $Pt_2$ [5] शिम्बी शूकशिम्बी $K_5$, $K_6$. [6] कपिं $K_3$. [7] हिंसति $K_5$, $K_6$. [8] °रोमाभफलत्वात् $F_2$, $Pt_2$. [9] 'तुरुचे' $J_2$.

(पा.) आत्मगुप्ता—अव्यण्डा । अकारपूर्वाविमौ शब्दौ । तथा चाहेन्दुः । 'अव्यण्डा[1] वृषपती शस्यादजहा शूकशिम्बिका' इति । 'स्वयंगुप्ता जहा जटा' इत्युक्तत्वात् जटेति पाठश्च ॥ कण्डूरा—मर्कटी । आत्मगुप्तानामानि । 'दूलगोंडि' ॥८६॥

[1] 'अव्यण्डा वृषभो गुप्ता' इतीन्दुरिति भानुजीदीक्षितः (पृ. १८०, श्लो. ८६).

**चित्रोपचित्रा न्यग्रोधी द्रवन्ती शंवरी वृषा ॥ ८७ ॥**
**प्रत्यक्श्रेणी सुतश्रेणी रण्डा मूषिकपर्ण्यपि ।**

(वि.) चित्रेति—[1]चित्रवर्णपर्णत्वात् चित्रा । उपचित्रा[2] च । न्यक् तिर्यक् [3]रुणद्धीति न्यग्रोधी । 'रुधिर् आवरणे' । द्रवति [4]विसरतीति द्रवन्ती । 'द्रु गतौ' । श सुखं वृणोतीति शवरी । 'वृञ् वरणे' । आरोग्यकामिना [5]काम वर्षतीति वृषा । 'वृष सेचने' । प्रत्यक् प्रतीची श्रेणी [6]पर्णावलिरस्या इति प्रत्यक्श्रेणी । सुताना पर्णादीना श्रेणिरस्या इति सुतश्रेणी । [7]रम्यते पक्षिभिरिति रण्डा । 'रमु क्रीडायाम्' । मूषिककर्णाभपत्रत्वात् मूषिकपर्णी । मूषिकपर्णीनामानि । 'एलुकचेविचेट्टु' ॥ ८७ ॥

[1]नानावर्णत्वात् $F_2$, $Pt_2$ [2]साक्षाद्चित्रत्वात् $K_5$, $K_6$ [3]रोहतीति $K_5$, $K_6$, I adds 'रुह बीजजन्मनि प्रादुर्भावे च' [4]विगलति $J_2$, $Pt_2$ [5]सुखं $Pt_2$
[6]पर्णादिप्रसवाना $K_5$ $K_6$ [7]रमयति $Pt_2$

(पा.) चित्रोपचित्रा—मूषकपर्ण्यपि । मूषकपर्णीनामानि । 'येलुकजीडि' ॥ ८७ ॥

**अपामार्गः शैखरिको धामार्गवमयूरकौ ॥ ८८ ॥**
**प्रत्यक्पर्णी कीशवल्ली किणिही खरमञ्जरी ।**

(वि.) अपामार्ग इति—अपकृष्ट आ समन्तात् मार्गोऽस्येति अपामार्ग । शिखरे भवतीति शैखरिक । धाम स्थानमर्जयतीति धामार्गव [1] । 'अर्ज अर्जने' । धान्नोऽर्गो धामार्ग । धामार्ग यातीति वा । मयूरचूडाप्रतिकृतिरयान्[2] मयूरक । प्रत्यञ्चि[3] पर्णान्यस्या सन्तीति प्रत्यक्पर्णी । कीशस्य कपे रोमाभा वल्ल्योऽस्या सन्तीति कीशवल्ली । कीशपर्णीति वा पाठ । किणिनो दद्रुरोगिण औषधत्वेन जिहीते यातीति किणिही । 'ओहाङ् गतौ' । खरास्तीक्ष्णा मञ्जर्योऽस्या सन्तीति खरमञ्जरी । अपामार्गनामानि । 'उत्तरेणि चेट्टु' ॥ ८८ ॥

[1]अथवा अधमे मार्गेऽतिवाति गच्छतीति $K_5$, $K_6$ [2]मयूरचूडाकृतिप्रकृतित्वात् $D_2$
[3]प्रत्यक् निमुख $Pt_2$

(पा.) अपामार्ग—किणिही । दीर्घतृतीय । खरमञ्जरी । अपामार्गनामानि । 'उत्तरेणि' ॥ ८८ ॥

**हञ्जिका ब्राह्मणी पद्मा भार्गी ब्राह्मणयष्टिका ॥ ८९ ॥**
**अङ्गारवल्ली बालेयशाकवर्बरवन्दकाः ।**

(वि.) हञ्जिकेति—हन्ति [1]यक्ष्माणमिति हञ्जिका । 'हन हिंसागत्योः' । भञ्जिकेति पाठे भनक्ति रोगं भञ्जिका । 'भञ्जो आमर्दने' । [2]ब्राह्मणीवत् पवित्रत्वाद् ब्राह्मणी । [3]पद्माभपुष्पत्वात् पद्मा । भृज्जति कफादिकं नाशयतीति भार्गी । 'भ्रस्ज पाके' । [4]ब्राह्मणरीतित्वाद् ब्राह्मणयष्टिका । अङ्गाराभा[5] वल्ल्योऽस्या अङ्गारवल्ली, लौहित्यात् । बालेयस्य गर्दभस्य [6]शाको बालेयशाकः । शाखाभिः वृणोतीति[7] बर्बरः । 'वृञ् वरणे' । [8]वैद्यैर्वन्द्यते स्तूयत इति वन्दकः । 'वदि अभिवादनस्तुत्योः' । वर्धक इति वा पाठः । भार्गीनामानि ॥ '[9]गंडुवारंगि' ॥ ८९ ॥

[1] रोग $Pt_2$. [2] ब्राह्मणवत् $Pt_2$. [3] °पुष्पवत्त्वात् $K_5$. [4] ब्राह्मणयष्टिरिव $F_2$. [5] अङ्गाराकारवल्ली अस्याः $K_5$, $K_6$ [6] G, $Pt_2$ add भोज्यः [7] $K_4$ adds व्याप्नोति; वबयोरभेदः G. [8] वैद्येन $K_5$, $K_6$ [9] 'मञ्जि' $J_2$.

(पा.) हञ्जिका । भञ्जिकापि ।

'भार्ङ्गी गर्दभशाकश्च भृगुजा च सुवर्चला ।
ब्रह्मरीतिः शुक्रमाता कासघ्नी भञ्जिका तथा ॥'

इति वैद्यके । ब्राह्मणी—वन्दकाः । भार्ङ्गीनामानि । 'भारंगि' ॥ ८९ ॥

**मञ्जिष्ठा विकसा जिङ्गी समङ्गा कालमेषिका ॥ ९० ॥**
**मण्डूकपर्णी भण्डीरी भण्डी योजनवल्ल्यपि ।**

(वि.) मञ्जिष्ठेति—मञ्जुनि मनोज्ञे[1] वर्णे तिष्ठतीति मञ्जिष्ठा[2] । विकसति दूरं प्रसरतीति विकसा । 'कस गतौ' । जिङ्गति [3]सर्वतः प्रसरतीति जिङ्गी । 'जिगि गतौ' । समन्तादङ्गतीति[4] समङ्गा । 'अगि गतौ' । [5]काले मिष्यते शब्द्यते कालमेषिका । कालमेशिकेति वा पाठः । '[6]मिष मिश शब्दे' । मण्डूका इव पर्णान्यस्या मण्डूकपर्णी । [7]भण्ड्यते भण्डीरी । [8]भण्डी । 'भडि परिभाषणे' । दीर्घवल्लीत्वात् योजनवल्ली । मञ्जिष्ठानामानि ॥ 'मञ्जिष्ठचेट्टु[9]' ॥ ९० ॥

[1] $K_5$, $K_6$ add लोहिते. [2] G, I add 'ष्ठा गति निवृत्तौ.' [3] G adds परंतात्. [4] अगति $D_2$, G, $K_2$. [5] कास्य $B_1$; कालेति $K_6$. [6] 'मिश शब्दे

रोपकृत रन्धने गतौ च $F_2$, 'मिष स्पर्धायाम्' G [7] मण्डत $Pt_2$ [8] माण्डी $K_5$, $K_6$, $Pt_2$ [9] G, I add पेह

(पा.) मञ्जिष्ठा—योजनवल्ल्यपि। योजनफल्ल्यपीति केचित्। मञ्जिष्ठानामानि। 'मञ्जिष्ठि'॥ ९०॥

**यासो यवासो दुःस्पर्शो धन्वयासः कुनाशकः॥ ९१॥**
**रोदनी कच्छुरानन्ता समुद्रान्ता दुरालभा।**

(वि.) यास इति—याति लतावत् प्रसरतीति यास । 'या प्रापणे'। यौतीति यवास । 'यु गतौ' 'यु मिश्रणे अमिश्रणे च' इति वा धातु । कण्टकाचितत्वात् दु खेन स्पृश्यत इति [1]दु स्पर्श । 'स्पृश[2] स्पर्शने'। धन्वनि मरुदेशे यासो धन्वयास । कु भुव [3]कण्टकत्वेन नाशयतीति कुनाशक । 'णश अदर्शने'। स्पृशन्त रोदयतीति रोदनी। 'रुदिर अश्रुविमोचने'। कच्छुरोग रातीति कच्छुरा। 'रा दाने'। [4]अतिदूरव्यापिनीत्वाद् अनन्ता। समुद्रान्ता च। दु खेन [5]आलभ्यत इति दुरालभा। 'डुलभष् प्राप्तौ'। धन्वयासनामानि। '[6]तीण्टकसिण्डपेरु'॥ ९१॥

[1] कण्टकित्वाद् दु स्पर्श $K_5$ $K_6$ [2] 'स्पृश सस्पर्शे' $K_6$ संस्पर्शने $D_2$ [3] कण्टकित्वेन $J_2$ $K_6$ [4] $B_1$, G I omit अति दीर्घमूलतया $J_2$ $Pt_2$ [5] लभ्यत स्पृश्यत इति $Pt_2$ [6] 'रोगटिदूलबोकल्तगड $K_6$, रेगडुदूलपेह' G $K_2$ $K_5$

(पा.) यासो—दुरालभा। दुरालभानामानि। 'तींटक्सवेंद'। 'रेगडिदूल'॥ ९१॥

**पृश्निपर्णी पृथक्पर्णी चित्रपर्ण्यङ्घ्रिपर्णिका॥ ९२॥**
**क्रोष्टुविन्ना सिंहपुच्छी कलशी धावनी गुहा।**

(वि.) पृश्निपर्णीति—पृश्नीन्यल्पानि पर्णान्यस्या पृश्निपर्णी। [1]पृथक् भिन्नानि पर्णान्यस्या पृथक्पर्णी। [2]चित्राणि पर्णान्यस्या चित्रपर्णी[3]। अङ्घ्रेर्मूलादारभ्य पर्णान्यस्या अङ्घ्रिपर्णिका[4]। अङ्घ्रिवल्लिकेति वा पाठ । क्रोष्टुभिर्विन्ना [5]दत्तेवाभाति तत्पुच्छसाम्यात्[5] क्रोष्टुविन्ना। 'विद विचारणे'। सिंहस्येव पुच्छ शाखा अस्या सिंहपुच्छी। रसाधारत्वात् कलशसाम्य किंचिदस्तीति कलशी। धावति प्रसरतीति धावनी। धावनिरिति वा पाठ । 'धावु गतिशुद्धयो'। गूहति रसमिति गुहा। 'गुहू संवरणे'। सिंहपुच्छीनामानि। 'नक्कतोकपोनचेट्टु'॥ ९२॥

[1] विविक्तपर्णत्वात् $F_2$, $K_5$, $K_6$ [2] चित्ररूपाणि $Pt_2$ [3] चित्रपर्णिका $D_2$
[4] $K_5$, $Pt_2$ add 'कालपोत्रपेल्लु [5] आदर्शेव $Pt_2$ [6] तत्पुच्छनाशात् $K_5$, $K_6$
[7] सिंहपुच्छाकृतिमञ्जरीत्वात् $Pt_2$

(पा.) पृश्निपर्णी—गुहा । पृश्निपर्णीनामानि । 'नक्तोंकपोत्र' ॥ ९२ ॥

**निदिग्धिकास्पृशी व्याघ्री बृहती कण्टकारिका ॥ ९३ ॥**
**प्रचोदनी कुली क्षुद्रा दुःस्पर्शा राष्ट्रिकेत्यपि ।**

(वि.) निदिग्धिकेति—निदिह्यतेऽङ्गोपाङ्गैरुपचीयत इति निदिग्धिका । 'दिह उपचये' । कण्टकित्वान्न स्पृश्यतेऽस्पृशी । 'स्पृश [1]स्पर्शने' । स्पृशीति वा पाठ । अत एव व्याघ्रीव तिष्ठतीति [2]व्याघ्री । कण्टकैर्बृहतीति[3] बृहती । 'बृह वृद्धौ[4]' । कण्टकानियर्तीति कण्टकारिका । 'ऋ गतौ' । [5]रुचिरत्वेन भोजन [6]प्रचोदयतीति प्रचोदनी । 'चुद प्रेरणे' । कोलति [8]सान्द्रीभवतीति कुली । 'कुल सस्त्याने बन्धुषु च' । [9]वार्ताकीमपेक्ष्य [10]ह्रस्वत्वात् क्षुद्रा । दु खेन स्पृश्यते कण्टकित्वात् दु स्पर्शा । राष्ट्रे भवा राष्ट्रिका । कण्टकारिकानामानि । '[11]वाकुडुचेट्टु' ॥ ९३ ॥

[1] सस्पर्शने $K_5$, $K_6$ [2] ॰व्याघ्रनखरसमानकण्टकत्वात् $Pt_2$ [3] बृहत इति $K_6$
[4] 'बृह बृहि वृद्धौ' $K_5$, $K_6$ [5] रुचिकरत्वेन $K_2$, $K_4$, $K_6$, कण्टकैश्चोदयति प्ररयतीति $Pt_2$ [6] $B_1$, $J_8$, $K_2$ add मति [7] 'चुद सचोदने' $F_2$ [8] सार्द्र $J_8$, $K_6$, सद्मीभवति $Pt_2$ [9] वार्ताकादिक $Pt_2$ [10] क्षुद्रत्वात् $Pt_2$ [11] 'गिरिगुल्ल' $J_3$

(पा.) निदिग्धिका—राष्ट्रिकेत्यपि । निदिग्धिकानामानि । 'वाकुडु' ॥ ९३ ॥

**नीली काला क्लीतकिका ग्रामीणा मधुपर्णिका ॥ ९४ ॥**
**रञ्जनी श्रीफली तुत्था द्रोणी डोला च नीलिनी ।**

(वि.) नीलीति—नीलवर्णत्वान्नीली । काला च । [1]क्लीतक विनिमयोऽस्या अस्तीति क्लीतकिका[2] । ग्रामे [3]भवतीति ग्रामीणा । [4]मधूनि मधुराणि पर्णान्यस्या मधुपर्णिका । रञ्जयति [5]पटादिकं नीलीकरोतीति रञ्जनी । 'रञ्ज रागे' । [6]रम्यफलत्वात् श्रीफली । फलनिष्पत्तिसमये तुद्यते पीड्यते तुत्था । 'तुद व्यथने' । अस्पृश्यतया द्विजोऽत्र द्रवतीति [7]द्रोणी । 'द्रु गतौ' । तूणीति वा पाठ । 'तुण सकोचने' । 'तूण प्रपूरणे' इति वा धातु । डोल्यते वायुनेति डोला । 'डुल उत्क्षेपे' । दोलति वा पाठ । नीलवर्णोऽस्या अस्तीति नीलिनी । नीलीनामानि । 'नीलिचेट्टु' ॥ ९४ ॥

[1] क्रीतक $K_6$ [2] $Pt_2$ adds 'डुक्रीञ् द्रव्यविनिमये' [3] भवा F. $Pt_2$ [4] मधुमासे $Pt_2$ [5] वस्त्रादिक $Pt_2$ [6] फलवतीत्वात् $K_2$ [7] द्रवन्ति जना अस्या अस्पृश्यत्वात् $Pt_2$

(पा.) नीली—क्लीतकिका। क्लीतकीति पाठान्तरम्। ग्रामीणा। ह्रस्वमध्येति केचित्। मधुपर्णिका—नीलिनी। द्रोणी दोरेति वा। द्रोणी तूणी चेति केचित्। नीलीनामानि। 'नीलिचेट्टु' ॥ ९४ ॥

**अवल्गुजः सोमराजी सुवल्ली सोमवल्लिका ॥ ९५ ॥**
**कालमेषी कृष्णफली वाकुची पूतिफल्यपि।**

(वि.) अवल्गुज इति—[1]पूतिगन्धित्वाद् अवल्गोररम्याद् बीजाज्जात[2] अवल्गुज[3]। सोमेनाह्लादेन राजत इति सोमराजी। 'राजृ दीप्तौ'। शोभना वल्ल्योऽस्या सन्तीति सुवल्ली। सोमा आह्लादका[4] वल्ल्योऽस्या इति सोमवल्लिका। कालवर्णेन मिष्यते [5]कृष्णफलेन शब्द्यत इति कालमेषी। 'मिष[6] शब्दे'। कृष्णवर्णानि फलान्यस्या कृष्णफली। वाति क्रिमीन् हन्ति [7]कुष्ठादिरोगान् सकोचयतीति वाकुची। 'वा गति गन्धनयो'। 'कुच[8] सकोचने' इति च धातु। पूति गन्ध फलेऽस्या इति पूतिफली। वाकुचीनामानि ॥ 'वाकुगच्चपेरु' ॥ ९५ ॥

[1] असाम्यात् $K_6$ पूतिबीजत्वात् D. $K_6$ [2] जायत इति $K_5$ $K_6$ [3] G adds 'जनी प्रादुर्भावे' [4] आह्लादकारिणी वल्ली $Pt_2$ [5] कृष्णफलीति G $J_2$ फलेति $B_1$, $K_2$ $Pt_2$ [6] 'मिष मिश शब्दे' $K_6$ [7] वात $Pt_2$ [8] 'कुच शब्दे तारे' $Pt_2$

(पा.) अवल्गुज—पूतिवल्ल्यपि। वाकुचीनामानि। 'वावजि' 'वाकुगच' ॥ ९५ ॥

**कृष्णोपकुल्या वैदेही मागधी चपला कणा ॥ ९६ ॥**
**ऊषणा पिप्पली शौण्डी कोलाथ करिपिप्पली।**
**कपिवल्ली कोलवल्ली श्रेयसी वसिरः पुमान् ॥ ९७ ॥**

(वि.) कृष्णेति—कृष्णवर्णत्वात् कृष्णा। कर्षति रोगानिति वा। 'कृष विलेखने'। [1]उपगोलति सस्त्यायत इति उपकुल्या। 'कुल सस्त्याने बन्धुषु च'। [2]विदेहाख्य-

देशे भवा वैदेही। [3]मगधदेशे भवा मागधी[4]। चपल उष्णो रस तद्योगाच्चपला[5]। कणा सन्त्यस्या कणा। [6]रोगानूषतीति ऊषणा। 'ऊष [7]रुजायाम्'। पिपर्ति पालयतीति पिप्पली। 'पृ पालनपूरणयो'। [8]रोगापनोदने शक्तित्वात् शौण्डी। [9]कोलति सस्त्यायतीति कोला। 'कुल सस्त्याने'। पिप्पलीनामानि। 'पिप्पलिपेरु'॥ [10]करिण पिप्पली करिपिप्पली। [11]मर्कटरोमाभावयवयोगात् कपिवल्ली। कोलवद् वराहवत् स्थूला वल्ली यस्या कोलवल्ली। श्रेयस्करत्वात् श्रेयसी। वस्यते [12]रोमभिराच्छाद्यत इति वसिर। 'वस आच्छादने'। वशिर इति वा पाठ। गजपिप्पलीनामानि। 'गजपिप्पलिपेल्लु'[13]॥ ९६–७॥

[1] उपगता कुल्या ज मभूमित्वेनानयेति $Pt_2$ [2] विदेहदेशे $F_2$, $Pt_2$ [3] मगधाख्य° $J_1$ [4] मागधी च *only in* $K_2$ [5] चपला कणा अस्या सन्तीति G, $K_5$, $K_6$ [6] $B_1$ *omits* two lines [7] 'ऊष दाहे' G [8] $K_6$ adds त्रिदोष° [9] कुल्यते $K_5$ $K_6$ [10] करियोग्या $Pt_2$ [11] कपि° $Pt_2$ [12] लोमभि $B_1$, $K_6$ [13] 'गजहृपिप्पली' $J_1$

(पा.) <u>कृष्णा—कोला</u>। पिप्पलीनामानि। 'पिप्पलि'॥ <u>अथ करिपिप्पली—वशिर पुमान्</u>। श्रेयसी तु शिरं पुमानिति पाठान्तरम्। 'काण्डी[1] वशिरकाण्डीरा[2] गृहाकाण्डा[3] शिर पुमान्' इति <u>वैजयन्ती</u> (पृ १२९, श्लो ७८)। 'गजपिप्पलि'॥९६–७॥

[1] 'काण्डी वशीरकाण्डीरी गृहकाण्ड शिर पुमान्' इति मुद्रितग्रन्थे [2] काण्डीरा $B_1$ [3] गृहकाण्डा $B_3$

**चव्यं तु चविकं कोकचिञ्चीगुञ्जे तु कृष्णला।**
**पलंकषा त्विक्षुगन्धा श्वदंष्ट्रा स्वादुकण्टक॥ ९८॥**
**गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि।**

(वि.) <u>चव्यमिति</u>—चर्व्यत इति चव्यम्[1]। चविकं च। चविका च। 'चर्व अदने'। चव्यनामनी। 'चव्यमुपेल्लु'॥ कोकवर्णाश्चिञ्चा प्रान्ता अस्या इति कोकचिञ्ची। काकचिञ्चीति वा पाठ। गुञ्जत्यदशाया[2] गुञ्जतीति गुञ्जा। 'गुजि अव्यक्ते शब्दे'। कृष्णवर्णं प्रान्ते लातीति कृष्णला। 'ला आदाने'। गुञ्जानामानि। 'पूसलगुरिवेंदपेरु'॥ पलं मांसं कण्टकमुखेन कषतीति पलंकषा। 'कष हिंसायाम्'। इक्षोर्गन्ध इव गन्धोऽस्या अस्तीति इक्षुगन्धा[4]। शुनो दंष्ट्रेव हिंस्रत्वात् श्वदंष्ट्रा[5]। स्वादव कण्टका अस्य [6]स्वादुकण्टक। गवां चरणेषु कण्टको गोकण्टक[7]। गवि [8]भूमौ क्षुर इव पाददु-खहेतुत्वाद् गोक्षुरक। वने शृङ्गमिव [9]दुःखहेतुत्वादटति प्रतिपन्थं इति वनशृङ्गाट[10]। 'अट[11] गतौ'। गोक्षुरनामानि। 'पल्लेरुचट्टु'॥ ९८॥

[1] पृषोदरादि $B_1$. [2] शुष्कदलायां $B_1$. [3] कृष्णं वर्णं $J_2$. [4] इक्षुगन्धी $J_2$. [5] शुन इव दंष्ट्रा कण्टकात्मा $Pt_2$. [6] मृदुकण्टकत्वात् G, I, $K_5$, $Pt_2$. [7] गवां कण्टको बाधकः $Pt_2$; गोषु G, I. [8] भुवि G, I, $K_3$, $Pt_2$. [9] दुःखकरत्वमटतीति $Pt_2$. [10] वनशृङ्गाटकः $B_1$, $D_2$, $K_5$, $K_6$. [11] 'अट पट गतौ' $K_5$, $K_6$.

(पा.) चव्यं तु चविका। 'चव्यमु'॥ [1]काकविम्बीगुञ्जे तु कृष्णला। शेषे—

'वर्तन्तेऽस्यां रक्तिका च ताम्रिका कृष्णरक्तिका।
चूडामा कपिलक्रोडा काकसाह्वा परा नव॥
काकशब्दा पीलुपाठ्यौ चिञ्चीणन्यदनी नखी।
जङ्घा रक्ता च दक्षा च॥'

रक्तगुञ्जानामानि। 'येर्रगुरिज'॥ शेषे—'सा शुक्ला चेन्मधुस्रवा'। 'तेल्लगुरिज'॥ पलंकषा—वनशृङ्गाट इत्यपि। पलंकषानामानि। 'पल्लेरु'॥ ९८॥

[1]Reading found in $B_3$.

## विश्वा विषा प्रतिविषातिविषोपविषारुणा ॥ ९९ ॥
## शृङ्गी महौषधं चाथ क्षीरावी दुग्धिका समे।

(वि.) विश्वेति—विशति [1]रोगिणामुदरमिति विश्वा। 'विश प्रवेशने'। कटुत्वेन शरीरं वेवेष्टीति विषा। 'विष्लृ व्याप्तौ'। विषस्य प्रति [2]प्रतिकारः प्रतिविषा[3]। विषमतिक्रान्ता अतिविषा। उपगता विषम् उपविषा। अपविषेति पाठे अपगतं विषमस्या अपविषा। विरुद्धलक्षणया अरुणकन्दत्वाद् अरुणा,[4] श्वेतकन्देत्यर्थः। शृङ्गयुक्तत्वात् शृङ्गी। महच्च तदौषधं च महौषधम्। अतिविषानामानि। 'अतिवस[5]'॥ क्षीरमवतीति[6] क्षीरावी। दुग्धमस्या इति दुग्धिका। दुग्धिकानामनी। '[7]चिरुपालचेट्टु'॥ ९९॥

[1] रोगिणो हृदये $F_2$, $Pt_2$ [2] प्रतीकारः $J_2$. [3] वीतिविषा G. [4] अरुणवर्णत्वात् $Pt_2$ [5] 'सिन्न अतिवसपेरु' $K_3$. [6] $K_5$, $K_6$ add रक्षतीति ; 'अव रक्षणे' G, $J_2$, $K_2$, $K_5$ [7] 'करीवेल्लियगिड' $J_2$.

(पा.) विश्वा—महौषधं च। अतिविषानामानि। 'अतिवस'। अथ क्षीरावी—समे। क्षीरिणीलतायां नामनी। क्षीरकाकोलीति गौडाः। 'पिल्लपाल'। अष्टवर्गौषधम्।

'जीवकर्षभकर्द्धिवृद्धिमेधामहामेधाः।
काकोलीक्षीरावीकाकोलीत्यष्टको वर्गः'॥ ९९॥

**शतमूली बहुसुताभीरुरिन्दीवरी वरी ॥ १०० ॥**
**ऋश्यप्रोक्ताभीरुपत्रीनारायण्यः शतावरी ।**
**अहेरुरथ पीतद्रुकालेयकहरिद्रवः ॥ १०१ ॥**
**दार्वी पचंपचा दारुहरिद्रा पर्जनीत्यपि ।**

(वि.) शतमूलीति—शत बहूनि मूलान्यस्या सन्तीति शतमूली। बहव सुता मूलान्यस्या इति बहुसुता। न भीरु अभीरु, स्थिरपत्रत्वात्। [1]उत्पलाभपत्रत्वाद् इन्दीवरी। भुव मूलैर्वृणोतीति वरी। 'वृञ् वरणे'। ऋश्यैर्मृगै प्रोक्ता [2]आश्रिता ऋश्यप्रोक्ता। ऋष्यप्रोक्तेति वा पाठ। अभीरूणि [3]कम्पशून्यानि पत्राण्यस्या सन्तीति अभीरुपत्री। [4]नारायणाज्जाता नारायणी। शतमूलैरावृणोति भुवमिति शतावरी। 'वृञ् वरणे'। न हिनोतीति अहेरु[5]। 'हि गतौ'। आहेरुरिति वा पाठो ग्राह्य। शतावरीनामानि। 'पिल्लिपिचर पेल्लु'॥ पीतो द्रु स्कन्धोऽस्येति पीतद्रु। [6]निरुढलक्षणया कालवर्णोऽस्येति कालेयक। पीतवर्ण इत्यर्थ। कालयति दोपानिति कालीयक इति वा पाठ। 'कल क्लि क्षेपे'। हरिश्चासौ द्रुश्च हरिद्रु। [7]दारुसनन्धिनी दार्वी। अत्यर्थं रोगान् पचतीति पचपचा। 'डुपचष् पाके'। [8]दारोर्हरिद्रा दारुहरिद्रा। क्षुद्रादिरोगेभ्य पिपर्तीति पर्जनी। 'पृ पालनपूरणयो'। पर्जनीनामानि। 'मानिपसुपु पेल्लु' ॥ १००—१ ॥

[1] पुष्पत्वात् $h_5$, $h_6$ [2] दर्शिता $F_2$, $h_5$, $h_6$ [3] दृढत्वेन भयरहितानि $Pt_3$
[4] विष्णुना सहजातत्वात् $h_6$, सहजत्वात् $h_5$, सहभावत्वात् $B_1$ [5] विरुद्धलक्षणया अहितत्वाद् अहेरु $h_6$ अहेतुत्वात् $G$, $J_2$ [6] $h_5$ omits 3 lines [7] दारु $h_5$, $h_6$
[8] दारुसंबन्धिनी $Pt_2$

(पा.) शतमूली—[1]वृष्यप्रोक्ता। ऋष्यप्रोक्ता वा। ऋश्यप्रोक्तेति तन्त्रान्तरम्। भीरुपत्रीनारायण्य। उन्द्वाद्बहुवचनम्। शतावरी। आहेरु[1]। अहेरुर्वा। शतावरीनामानि।

> 'आहेरु शतवीर्या स्यादभीरु शतमूलिका।
> महस्रवार्याभीरुश्च।'

इति प्रतापाभिधानादभीरुरपि। 'पिल्लीचर' ॥ अथ पीतद्रु—पर्जनीत्यपि। दारुहरिद्रानामानि। 'मानुपनुपु' ॥ १००—१ ॥

[1] Reading adopted in $B_1$

**वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका ॥ १०२ ॥**
**शुक्ला हैमवती वैद्यमातृसिंह्यौ तु वाशिका ।**
**वृषोऽटरूषः सिंहास्यो वासको वाजिदन्तकः ॥ १०३ ॥**

(वि.) वचेति—अनया वक्तीति वचा[1]। 'वच परिभाषणे'। उग्रो हु सह्रो गन्धोऽस्या इत्युग्रगन्धा। षड् ग्रन्थय पर्वाण्यस्या षड्ग्रन्था। गोरिव लोमान्यस्या गोलोमी। शत बहूनि पर्वाण्यस्या [2]शतपर्विका। वचानामानि। 'वसपेल्लु'॥ शुक्लवर्णत्वात्[3] शुक्ला। हिमवति भवा हैमवती। श्वेतमूलवचानाम। 'तेल्ल [4]वस पेरु'॥ वचादि शतपर्विकान्तानि पञ्च नामानि सामान्यवचाया एवेति केचित्॥ वैद्यानां मातेव [5]हितकारित्वाद् वैद्यमाता। हिनस्ति कासादिरोगानिति सिंही। 'हिसि हिंसायम्'। ज्वरितादिभिर्वाश्यते स्तूयत इति वाशिका। 'वाश्ट शब्दे'। उश्यते काम्यते वैद्यैरिति वा। 'वश कान्तौ'। [6]तिक्त रस वर्षतीति वृष। 'वृषु सेचने'। अटतो[7] व्याप्तस्य रोगस्य रोषति अटरूष।'रुष हिंसायाम्'। [8]सिंहमुखाभपुष्पत्वात् सिंहास्य। वासयतीति [9]वासिक। वस्ते आच्छादयतीति वा। वाजिदन्ता इव केसराण्यस्य वाजिदन्तक[10]। वाशिकानामानि। 'अड्डसरमु'॥ १०२–३॥

[1] वस पेरु $K_5$ $K_6$ 'वज $J_2$ [2] 'नल्लवसपेरु' $K_5$ $K_6$ [3] पर्वत्वात् $K_5$
[4] 'विळियवजे $J_2$ [5] रोगभेदीति $K_6$ [6] मधु वर्षतीति $Pt_2$ [7] अटान् व्याप्तान् रोगान् $Pt_2$ [8] सिंहास्याकारपुष्पत्वात् $Pt_2$ [9] वाशिकाशब्दवद् वाशिक (वासिक $D_2$) शब्दव्युत्पत्ति $K_5$ $K_6$ [10] वाजिदन्ताकारकेसरत्वात् $Pt_2$

(पा.) वचोग्रगन्धा—शतपर्विका। वचानामानि। 'वस'॥ शुक्ला हैमवती। 'तेल्लवस'॥ वैद्यमातृसिंह्यौ—वृषा। स्त्रीलिङ्ग। वैद्यके पुलिङ्गश्च दृश्यते॥ अटरूष। दीर्घादिरपि[1]। सिंहास्यो—वाजिदन्तक। वाशानामानि। 'अडसरमु'॥ १०२–३॥

[1] $B_3$ adds आटरूष इति

**आस्फोटा गिरिकर्णी स्याद् विष्णुक्रान्तापराजिता ।**
**इक्षुगन्धा तु काण्डेक्षुकोकिलाक्षेक्षुरक्षुराः ॥ १०४ ॥**

(वि.) आस्फोटेति—[1]आस्फोटयति पित्तादीनित्यास्फोटा। 'स्फुट भेदने'। गिरे[2] कर्णसादृश्याद् गिरिकर्णी। विष्णुना समाक्रान्ता विष्णुक्रान्ता[3]। विष्णोरिव क्रान्तिरस्या इति वा। अत एव भूतव्रातेनाप्रतिहता [4]अपराजिता। विष्णुक्रान्तानामानि।

'विष्णुक्रान्तम्'॥ इक्षोरिव [5]गन्धोऽस्या इति इक्षुगन्धा। काण्डे इक्षोरिव ग्रन्थयोऽस्य सन्तीति काण्डेक्षुः[6]। कोकिलस्य अक्षिणी इव पुष्पाण्यस्य कोकिलाक्षः[7]। इक्षुगन्धं [8]राति ददातीति इक्षुरः। 'रा दाने'। पारुष्यात् क्षुर इव क्षुरः। क्षुरतीति क्षुरः। 'क्षुर विलेखने'। इक्षुर एव क्षुरः। इकारलोपः। पिधानशब्दवत्[9]। कोकिलाक्षनामानि। '[10]गोलिमिढि'॥ १०४॥

[1] आस्फोटति, 'स्फुट विकसने' Pt₂. [2] सूक्ष्मगिरिवत् सूक्ष्माभ्मवत् कर्णौ (वर्णिका J₂) ऽस्याः K₅, K₆. [3] रक्षाहेतुत्वाद् विष्णुना कान्ता Pt₂. [4] अपराजिता भूतैः Pt₂. [5] गन्ध इव गन्धः F₂, Pt₂. [6] काण्डेन इक्षुरिव Pt₂. [7] कोकिलाक्षाभपुष्पत्वात् K₅, K₆. [8] दिक्षु राति करोति K₅. [9] D₂, K₆ add द्रष्टव्यः. [10] 'सिप्र गोलिमिदिचेट्टु' K₃.

(पा.) आस्फोटा—स्यात्। शेषे—'शीपलाश्वखुरी च सा। सुण्डा च' गिरिकर्णिकानामानि। 'दिंटेन'॥

'... अत्र सितायां तु श्वेतसारा गवादनी।
चारणी फटुनी सूर्याश्वक्षुद्राश्वखुरा तथा॥
श्वेतपुष्पी च'।

श्वेतगिरिकर्णिकानामानि। 'तेल्लदिटेन'॥ 'नीला तु नीलपुष्प्यतिमेचका। वनिता स्थूलपुष्पी च'। नीलगिरिकर्णिकानामानि। 'नल्लदिटेन'॥ वैजयन्त्याम् (पृ. ५६, श्लो. १३३-४)—'अपराजिता। [1]विष्णुक्रान्तापरास्फोटाश्वखुरी शीतलान्न[2]तु' इत्युक्तः स्याद् विष्णुक्रान्तापराजिताशब्दौ गिरिकर्णिकायामपि॥ विष्णुक्रान्तापराजिता। विष्णुक्रान्तानामनी। 'विष्णुकान्त'। 'विष्णुकान्ता तु सुमुखी भयघ्नी स्यान्महारसा'। एतानि च॥ इक्षुगन्धा—काण्डेक्षा। काण्डेक्षुरिति वा। कोकिलाक्षा—क्षुरः। इक्षुगन्धानामानि। 'मुल्लिगोलिमिडि'। 'गोजाकर्णी फेनदुग्धा लूताघ्नः पयस्विनी' इति क्षीरेक्षुगन्धापर्यायोऽपि पृथक्। 'पाल्गोलिमिडि'॥ १०४॥

[1] वरास्फोटा B₃; परास्फोटेति मुद्रितग्रन्थे. [2] तथा B₃.

**शालेयः स्याच्छीतशिवा छत्रा मधुरिका मिसिः।**
**मिश्रेयोऽप्यथ सिंहुण्डो वज्रद्रुः स्नुक्स्नुही गुडा॥ १०५॥**
**समन्तदुग्धाथो वेल्लममोघा चित्रतण्डुला।**
**तण्डुलश्च कृमिघ्नश्च विडङ्गं पुंनपुंसकम्॥ १०६॥**

(वि.) शालेय इति—शाल्यते श्लाघ्यते शाकाय भवतीति शालेयः। 'शाल श्लाघायाम्'। स्वपुष्पैः शालया गृहेणेवाच्छादितत्वात् इति वा। शीतवीर्यत्वात् शिवा भद्रा [1]शीतशिवा। छत्राकृतिरस्या पुष्पेष्विति [2]छत्रा। [3]स्वादुत्वात् मधुरिका। मस्यति परिणमति तिक्तत्वेनेति [4]मिसि.। 'मसी परिणामे'। दु रामिश्रितं श्रेयोऽस्यास्तीति मिश्रेय। पुष्पैर्मिश्र्यते[5] सम्श्लिष्यत इति वा। 'मिश्र सम्पर्के'। मधुरिकानामानि। 'सदापपेरु'॥ सिंहतुण्डाभशाखत्वात्[6] सिहुण्ड.। तकारलोपः। वज्र इव[7] प्लीहादिरोगान् द्रुणातीति वज्रद्रु.। 'द्रू विदारणे[8]'। वज्र इव द्रु. स्कन्धोऽस्येति वा। [9]स्नुह्यति क्षीरमिति स्नुक्। स्नुही च। 'ष्णुह उद्गिरणे'। गुडति प्लीहादिरोगेभ्यो गुडा। 'गुड रक्षायाम्'। समन्ताद् दुग्धं क्षीरमस्या इति समन्तदुग्धा। [10]सिहुण्डनामानि। 'जेमुडुपेरु'॥ वेल्लति लघुत्वादिति वेल्लम्। 'वेल्ल[11]चलने'। [12]उपयोगिबीजत्वाद् अमोघा। चित्रास्तण्डुला. सूक्ष्मबीजान्यस्या. चित्रतण्डुला। तण्डुलाः सन्त्यस्येति तण्डुल। कृमीन् हन्तीति कृमिघ्नः। 'हन हिंसागत्यो.'। विडति गुल्मादिग्रन्थीनिति विडङ्गम्[13]। 'विड भेदने'। विडङ्गनामानि। 'वायुविलङ्गमु पेरु'॥ १०५–६॥

— [1] शितवीर्येण, शितशिवा $K_5$, $K_6$　[2] छादयति भुवनं $Pt_2$, छत्राकृतित्वात् $J_2$　[3] मधुररसयोगात् $Pt_2$　[4] मसि $B_1$, $J_2$　[5] मिश्यते, 'मिश्र शब्दे रोपकृते च' $K_5$, $K_6$　[6] शाखात्वात् $K_9$　[7] वज्रमिव भेदकत्वात् $F_2$, $Pt_2$　[8] 'द्रु गतिहिंसा-कौटिल्येषु' $K_6$　[9] स्नौति, 'ष्णु प्रस्रवणे' $K_5$, $K_6$　[10] 'गुडुकलि' $J_2$.　[11] सचलने $Pt_2$　[12] उपयोग° $J_2$, सुप्रयोजनत्वात् $F_2$, $Pt_2$　[13] रोग $J_2$, $Pt_2$

(पा.) शालेय —मिसि। 'तालपर्णी शीतशिवा छत्रेति' प्रतापवचनात् स्त्रियां च। 'तालपर्णी मिसिः पुमान्' इति वचनात् मिसि पुलिङ्ग.॥ मिश्रेयोऽपि। 'वन्याया शतपुष्पायां मिश्रेया तालपत्रिका' इति प्रतापवचनात् स्त्रियामपि। वन्यशतपुष्पानामानि। 'अडवि सदाप'। अथ सिंहुण्ड.—

> 'प्रायो जनाः सन्ति वनेचराद्या [1] गोपादय. प्राकृतनामतज्ज्ञा.[2]।
> प्रयोजनार्था वचनप्रवृत्तिर्यतस्तत [3] प्राकृतमित्यदोष ॥'

इति धन्वन्तरिवचनात् (ध. नि. १. ८) प्राकृतग्रहणम्। '[4]सिहुण्ड. सिन्धुरप्यस्याम्' इति वैजयन्त्यामपि (पृ. ५३, श्लो. ९८) प्राकृतग्रहणमेव कृतम्॥ वज्रद्रु—समन्तदुग्धा। सिंहुण्डनामानि। 'अकुचमुडु'। अनुक्तम्—'निष्पत्रिका तु गण्डीरो वज्रिका च त्रिकण्टकः'। कण्टकयवीस्नुहीनामानि। 'मुलुचमुडु'॥ अथो—पुनपुसकम्। विडङ्ग-नामानि। 'विडङ्गमु'॥ २०५–६॥

[1] °स्ते B₂ [2] °संज्ञः B₃. [3] यस्मात् B₃. [4] 'सिहुण्ड:' इति मुद्रितग्रन्थे, सीहुण्ड इति पाठः क्षीरस्वामिटीकायाम् (पृ. १०७).

**वला वाट्यालको घण्टारवा तु शणपुष्पिका ।**
**मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च ॥ १०७ ॥**

(वि.) <u>वलेति</u>—वलन्त्यनया [1]वला। 'वल प्राणने'। वटति [2]वेष्टयति समीपदेशमिति वाट्यालकः। 'वट वेष्टने परिभाषणे च[3]'। वलानामनी। 'चिट्टामुदपुचेट्टु'॥ घण्टेव रौतीति[4] घण्टारवा। 'रु शब्दे'। शणस्येव पुष्पाण्यस्याः शणपुष्पिका। शणपुष्पिकानामनी। 'गिलकचेट्टु'॥ मृद्यत इति मृद्वीका। 'मृद क्षोदे'। मृदुत्वयोगाद्वा। गोस्तनाभफलत्वाद् गोस्तनी। द्राति द्रावयति दाहादिकमिति द्राक्षा। 'द्रा कुत्सायां गतौ' 'द्रु गतौ'। [5]स्वादुत्वात् स्वाद्वी। अत एव [6]मधुरसा च। द्राक्षानामानि। '[7]द्राक्षपेल्लु'॥ १०७॥

[1] वलति I, J₂, K₆, वलत्यसमा K₁. [2] K₂ adds गुल्मादिस्थलं. [3] 'वट परिवेष्टने' K₆. [4] D₂, I, J₂ add घुण्टदशायाः; °दलाया B₁, K₂; घण्टाया रवो अस्या इति Pt₂. [5] स्वादुत्वयोगात् J₃, K₃, K₆. [6] मधुरसयोगात् Pt₂. [7] 'द्राक्षेयगिडु' J₃.

(पा.) <u>वला वाट्यालकः</u>। वलानामनी। 'मुत्तुवपुलगमु'। अनुक्तम्—'वाट्यपुष्पामतिवला'। 'अतिवल'। 'वाट्यायन्यां महाबला'। 'महाबल'॥ <u>घण्टारवा—शणपुष्पिका</u>। घण्टारवानामनी। 'गिलगिष'॥ <u>मृद्वीका</u>। ह्रस्वमध्येति च कथयन्ति। 'मृद्वीका किङ्किणीकादेर्मृद्विका सौकुमार्यतः' इति। <u>गोस्तनी—मधुरसेति च</u>। द्राक्षानामानि। 'द्राक्षतीगे'। 'हारहूरा प्रियाला च कृष्णा स्वादुरसा गुडा'। एतानि च ॥ १०७॥

**सर्वानुभूतिः सरला त्रिपुटा त्रिवृता त्रिवृत् ।**
**त्रिभण्डी रेचनी श्यामापालिन्यौ तु सुषेणिका ॥ १०८ ॥**
**काला मसूरविदलार्धचन्द्रा कालमेषिका ।**

(वि.) <u>सर्वानुभूतिरिति</u>—[1]कषायमधुररसत्वात् सर्वैरनुभूयत इति सर्वानुभूतिः। 'भू सत्तायाम्'। रेचनीत्वात् सरतीति सरला। 'सृ गतौ'। त्रयः पुटा अस्या इति त्रिपुटा[2]। त्रिभिः पुटैस्त्रिधा वा आच्छादन इति त्रिवृता। 'वृञ् वरणे'। [3]त्रि

इति वा, 'वृतु [4]वरणे'। त्रिवृत्[5]। कफहरत्वपित्तहरत्वरेचकत्वगुणैस्त्रिभिः प्रवृत्तिनिमित्तैर्भण्ड्यते[6] शब्द्यत इति त्रिभण्डी। 'भडि [7]परिभाषणे'। रेचयति विरेचयति रेचनी। 'रिचिर् [8]विरेचने'। रेचनहेतुत्वाद्वा। रोचनीति वा पाठः। [9]रुचिकरत्वात् रोचनी। रेचनीनामानि। 'तेल्लतिगडपेल्लु'॥ [10]श्यामवर्णत्वात् श्यामा। क्रिम्यादिरोगेभ्यः पालयतीति पालिन्दी। 'पाल रक्षणे'। पालिनीति वा पाठ। सुष्ठु सिनोति क्रिमीन् हन्तीति सुषेणिका। 'षिञ् बन्धने'। [11]कालवर्णत्वात् काला। [12]मसूराणि सृष्टानि विदलान्यस्या इति मसूरविदला। [13]अर्धचन्द्रा[14]कारदलत्वाद् अर्धचन्द्रा। [15]कालेति नाम्ना मिष्यते शब्द्यत इति कालमेषिका। '[16]मिष स्पर्धायाम्'। श्यामानामानि। 'नल्लतेगडपेल्लु'॥ १०८॥

[1] मधुरतिक्तादीनां सर्वरसानामनुभूतिरत्रेति $Pt_2$　　[2] पुटत्रयशालिनीत्वात् $D_2$, $J_2$, $K_5$
[3] वर्त्यते $J_2$.　　[4] आच्छादने $K_5$, $K_6$　　[5] कफहरणपित्तहरणरेचनत्वरूपाणां त्रयाणां गुणानां वृत्तिर्वर्तनमत्रेति $Pt_2$　　[6] उद्घाष्यते $K_6$　　[7] कल्याणे $K_5$, $K_6$　　[8] पृथग्भावे $Pt_2$
[9] रुचिरत्वात् $B_1$, $K_5$　　[10] कृष्ण° $Pt_2$　　[11] कृष्णत्वात् I, $K_2$, कृष्णवर्णत्वात् $K_5$, $K_6$.
[12] मसूर इव विदला $Pt_2$, मयूरविदलेति वा पाठः $Pt_2$　　[13] $Pt_2$ adds कथचित्.
[14] सदृश for आकार $F_2$, $Pt_2$　　[15] कालेन वर्णेन $F_2$, $Pt_2$　　[16] 'मिष मिश्र शब्दे' $K_6$.

(पा.) सर्वानुभूतिः—रेचनी। श्वेतत्रिवृतानामानि। 'तेल्लतेगड'॥ श्यामा—कालमेषिका। नीलत्रिवृतानामानि। 'नल्लतेगड'॥ १०८॥

**मधुकं क्लीतकं यष्टिमधुकं मधुयष्टिका ॥ १०९ ॥**
**विदारी क्षीरशुक्लेक्षुगन्धा क्रोष्ट्री च या सिता ।**
**अन्या क्षीरविदारी स्यान्महाश्वेतर्क्षगन्धिका ॥ ११० ॥**

(वि.) मधुकमिति—[1]मधुकरत्वेन मधुसमत्वात् मधुकम्। क्लीवत्वं तकति [2]प्रतिहन्तीति क्लीतकम्। 'तक [3]प्रतिघाते'। यष्ट्याकारत्वात् मधुद्रवत्वाच्च [4]यष्टिमधुकम्। मधुयष्टिका[5] च। यष्टिमधुकनामानि। 'अतिमधुरमु'॥ विदारयति भूमिमिति [6]विदारी। 'दॄ विदारणे'। क्षीरेव[7] शुक्लेनामलस्वरूपेति[8] क्षीरशुक्ला। इक्षोरिव गन्धोऽस्या इक्षुगन्धा। 'तेल्लनेलगुम्मुडु'॥ रोगान् नाशयामीति नोशतीति क्रोष्ट्री[9]। 'क्रुश आह्वाने रोदने च'। 'नल्लनेलगुम्मुडुपेल्लु'॥ विदार्यादीक्षुगन्धान्तानि नामानि क्रोष्ट्रीनामानीति केचित्॥ क्षीरवत् श्वेता विदारी क्षीरविदारी। स्वरूपत, कन्दतश्च क्षीरतश्च श्वेतत्वात् महाश्वेता। ऋक्षवत् क्रिम्यादिरोगान् गन्धयते नाशयतीति ऋक्ष-

गन्धिका। 'गन्ध अर्दने'। ऋक्ष्णुवन्ति हिंसन्तीति ऋक्षा। 'ऋक्ष हिंसायाम्'। [10]ऋक्षान् पित्तादिरोगान् गन्धयत इति वा। क्षीरविदारीनामानि। 'पालगुम्मुडुपेल्लु' ॥ १०९–१० ॥

[1] मधुरत्वात् $K_5$, $K_6$ [2] हन्ति $K_5$ [3] हसने $D_2$, $J_2$. [4] यष्टिरूप मधुक $Pt_2$ [5] मधुना तुल्या यष्टि $F_2$, $Pt_2$. [6] विदार्य पच्यत इति $D_2$, $K_5$, $K_6$ [7] क्षीरमिव $K_5$ [8] अमलस्वरूपिणी $B_1$, $K_5$ [9] मधुरत्वाद् वृष्यादिप्रयोगेषु समर्थाहमिति क्रोशतीति $Pt_2$ [10] ऋक्षशब्दयान् हिंस्रान् $F_2$, $Pt_2$

(पा.) मधुक—मधुयष्टिका। अत्र द्वे नपुंसके। द्वे [1]स्त्रीलिङ्गे। मधुयष्टिकानामानि। 'यष्टिमधुरमु'॥ विदारी—या सिता। श्वेतविदारीनामानि। 'तेल्लनिनेलगुंमडि'॥ अन्या—ऋक्षगन्धिका। कृष्णभूमिकूश्माण्डनामानि। 'नल्लनिनेलगुमडि'। महाश्वेतापदे विरोधिलक्षणा॥ १०९–१० ॥

[1] यष्टिमधुकेति पारिजातानुसारी पाठ

**लाङ्गली शारदी तोयपिप्पली शकुलादनी।**
**खराश्वा कारवी दीप्यो मयूरो लोचमस्तकः॥ १११ ॥**

(वि.) लाङ्गलीति—[1]हलाकारफलयोगात् लाङ्गली। शरदि [2]भवा शारदी। [3]तोयजा पिप्पली तोयपिप्पली। शकुलाना [4]मत्स्यानामदन[5] भवतीति शकुलादनी। जलपिप्पलीनामानि। 'नीरुपिप्पलिपेल्लु'॥ खरत्वम् उष्णत्वमश्नुत इति खराश्वा[6]। 'अशू व्याप्तौ'। कारुनत् सर्षपबीना भवतीति [7]कारवी। दीपन करोतीति दीप्य। दीप्यतेऽनेनेति वा। 'दीप दीप्तौ'। अग्निमान्द्य मीनाति[8] नाशयतीति मयूर। 'मीञ् हिंसायाम्'। लोचमुपनीत मस्तकमस्येति लोचमस्तक[9]। मयूरशिखानामानि॥ 'ओममु'॥ १११ ॥

[1] लाङ्गलाकारत्वात् $F_2$, $Pt_2$ [2] भवत्वात् $K_5$, $K_6$ [3] तोये $D_2$, $J_2$, जलजत्वात् $B_1$, $K_5$, $K_6$ [4] $B_1$ omits two lines [5] अदनीभवति $J_2$, शकुलैर्मत्स्यैरद्यत इति $Pt_2$ [6] खरमत्युष्णमश्नुते $D_2$, $K_2$, $K_5$ [7] केन जलन रौतीति करव मयूर, करवस्येय $F_2$, $Pt_2$ [8] मिनोति, 'डुमिञ् प्रक्षेपणे' $K_5$, $K_6$ [9] मस्तकात् बीजानि उत्पन्तेऽस्येति। 'उच अपनयने' $K_5$, $K_6$

(पा.) लाङ्गली—शकुलादनी। नीरपिप्पलीनामानि। 'नीरुपिप्पलि'। 'मराटपुचेट्टुनु'॥ खराश्वा—लोचमस्तक। मयूरशिखानामानि। 'चोममनि कोदरु' ॥ १११ ॥

**गोपी श्यामा शारिवा स्याचन्दनोत्पलशारिवा ।**
**योग्यमृद्धिः सिद्धिलक्ष्म्यौ वृद्धेरप्याह्वया इमे ॥ ११२ ॥**

(वि.) गोपीति—[1]अतिसाररोगिणं गोपायतीति गोपी । 'गुपू रक्षणे' । श्यामवर्णत्वात्[2] श्यामा । शीर्यन्तेऽनया दोषा इति शारिवा । 'शॄ हिंसायाम्' । चन्दयति [3]सुगन्धेनाह्लादयतीति चन्दना । 'चदि आह्लादने' । उत्पलाभपुष्पत्वाद् उत्पलशारिवा । उत्पलशारिवानामानि । 'सुगन्धिपालपेरु' ॥ [4]अष्टवर्गगतौषधियोगे साध्यते योग्यम् । ऋध्नोत्यनयेति ऋद्धिः । 'ऋधु वृद्धौ' । सिद्ध्यत्यारोग्यमनयेति सिद्धिः । 'षिधु संराद्धौ' । 'लक्ष्यत इति लक्ष्मीः । 'लक्ष दर्शनाङ्कनयोः' । ऋद्ध्याख्यौषधिनामानि । 'ऋद्धियनुगन्धद्रव्यमु' ॥ इमे [5]वृद्ध्याख्यौषधेरपि आह्वया नामानि ॥ ११२ ॥

[1] अतिसारादि° $K_5$, $K_6$　[2] °रूपत्वात् $D_2$, $J_1$　[3] सौगन्ध्येन $D_2$, $K_5$, $K_6$
[4] $F_2$, $Pt_2$ add अष्टवर्गयोगे　[5] $F_2$, $J_2$ add वर्धतेऽनया वृद्धिः.

(पा.) गोपी—चन्दना । अनन्तेति केचित् । उत्पलशारिवा । शारिवानामानि । 'मामेन' ॥ योग्यम्—लक्ष्म्यौ । ऋद्धेर्नामानि । 'ऋद्धि' ॥ वृद्धेरपि—इमे । इमे योग्याद्यो वृद्धिसंज्ञाया ओषधेरपि नामानि । 'वृद्धिपेल्लुसु' ॥

'अष्टवर्गो महामेदा[1] मेदा[2] स्याज्जीवकर्षभौ ।
काकोली क्षीरकाकोली ऋद्धिर्वृद्धिरितीरितः ॥'

इति ॥ ११२ ॥

[1] महामेधा $B_3$　[2] मेधा $B_3$

**कदली वारणबुसा रम्भा मोचांशुमत्फला ।**
**काष्ठीला मुद्गपर्णी तु काकमुद्गा सहेत्यपि ॥ ११३ ॥**

(वि.) कदलीति—केन वायुना दल्यत[1] इति कदली । 'दल विशरणे' । वारणानां[2] बुसा घास वारणबुसा । रमन्ते पक्षिणोऽत्रेति रम्भा । 'रमु क्रीडायाम्' । मुञ्चति त्वचमिति मोचा । 'मुच्लृ मोक्षणे' । अंशुमन्ति तेजस्वन्ति फलान्यस्या इति अंशुमत्फला । ईषदष्ठीला मज्जा अस्या अस्तीति काष्ठीला । कदलीनामानि । '[3]अरटिचेट्टु' ॥ [4]मुद्गस्येव पर्णान्यस्या मुद्गपर्णी । हीनमुद्गत्वात् काकमुद्गा । [5]सहते वातरोगोऽनया सहा । 'षह मर्षणे' । काकमुद्गानामानि । '[6]पिल्लिपेसरपेल्लु' ॥ ११३ ॥

[1] दल्तीति $J_2$ $Pt_2$ [2] वारणेन वुस्यत इति, 'बुस उत्सर्गे' $Pt_2$ [3] 'बाळेमर' $J_2$
[4] मुद्गपर्णाभपर्णयोगात् G, $J_2$, $K_2$ $K_5$ [5] सहते वातरोग $F_2$ $Pt_2$ [6] 'मरुहेसरु' $J_2$

(पा.) कदली वारणवुसा। वारणवृषा च। 'कदले पुन । वृषा वारवुसा रम्भा' इति वैजयन्तीपाठात् (पृ ५९, श्लो १७३) कदलशब्दो वारबुसाशब्दश्च॥ रम्भा—काष्ठीला । कदलीनामानि। 'अरटिचेट्टु'। अनुक्तम्—'[1]शिलीन्ध्र कदली-पुष्पम्'। तत्पुष्पनाम ॥ मुद्गपर्णी—सहेत्यपि। मुद्गपर्णीनामानि। 'पिल्लपेसर'॥ ११३॥

[1] शिली द्र $B_3$

**वार्ताकी हिङ्गुली सिंही भण्डाकी दुष्प्रधर्षणी।**
**नाकुली सुरसा नागसुगन्धा गन्धनाकुली ॥ ११४ ॥**
**नकुलेष्टा भुजंगाक्षी छत्राकी सुवहा च सा।**

(वि.) वार्ताकीति—[1]वृत्तफलयोगाद् वार्ताकी। वार्त निरामय करोतीति वा। हिनोति वर्धत[2] इति हिङ्गुली। 'हि गतौ वृद्धौ च'। हिनस्ति कण्टकैरिति सिंही[3]। 'हिसि हिंसायाम्'। भण्ड्यते रुचिकरत्वाद् [4]भण्डाकी। 'भडि परिभाषणे'। भाण्डारीत्येके। भाण्डाकीत्यन्ये। कण्टकैर्दु खेन प्रधृष्यत[5] इति दुष्प्रधर्षणी[6]। 'ञि-धृषा प्रागल्भ्ये'। भण्डाकीनामानि। 'मुलकचेट्टु'॥ [7]नकुलानामिव प्रियेति नाकुली। शोभनो रसोऽस्या इति सुरसा। नागाना सर्पाणामिव सुगन्धोऽस्या इति नागसुगन्धा। [8]रास्ना, सुगन्धेति वा पाठ। गन्धतो[9] नकुलाना प्रिया[10] गन्धनाकुली। गन्धतो नकुलानामिष्टा नकुलेष्टा। सर्पनयनसन्काशपुष्पत्वाद् [11]भुजगाक्षी। छत्राभानि पर्णान्यकतीति छत्राकी[12]। 'अक कुटिलाया गतौ'। सुष्ठु वहत्यामोद सुवहा। 'वह प्रापणे'। भुजगाक्षीनामानि। 'सर्पाक्षिपेल्लु'॥ ११४॥

[1] आरोग्याय वर्तत इति, 'वृतु वर्तने' $F_2$, $Pt_2$ [2] वर्धयति $J_2$ [3] हिंसी $J_2$
[4] भटति विमर्दयनया दीपनाग्निमिति भण्टाकी, 'भट भृतौ' $F_2$, $Pt_2$ [5] प्रधृष्यत इति $h_5$, $h_6$ [6] दुष्प्रधर्षिणी $D_2$ [7] नकुलप्रियत्वात् G, I, $h_6$ [8] रस्यते रास्ना, 'रस आस्वादने' $h_5$ [9] गन्धेन $Pt_2$ [10] प्रियत्वात् $J_2$ [11] सर्पाक्षितुल्य-पुष्पत्वात् $J_2$, $h_5$ $h_6$ [12] छत्राभपुष्पत्वात् $D_2$, $h_5$

(पा.) वार्ताकी हिङ्गुली। हिम्गुलीति केचित्। सिंही। क्षुद्रवार्ताकीनामानि। 'मुलक'। 'बृहत्या प्रसहा काली वार्ताकी हिङ्गुली[1] कुली' इति वैजयन्ती (पृ ५३, श्लो १०८)। भण्टाकी दुष्प्रधर्षिणी। वार्ताकनामानि। 'वग'।

'वार्तिङ्गणस्तु वार्ताकुर्वार्ताकः शाकबिल्वकः ।
भाण्डाकी राजकूस्माण्डी वार्ताकी दुष्प्रधर्षिणी ॥'

इति रभसकोशः । अनुक्तम्—'कटङ्कारा राजमाता' । 'वंग' ॥ नाकुली—सुवहा च सा । वैद्यके[2]—

'नाकुली सर्पगन्धा च सुगन्धा चोग्रगन्धिका ।
अन्या महासुगन्धा तु सुवहा गन्धनाकुली ॥
सर्पाक्षी नकुलेष्टा च छत्राकी विषमर्दिनी ।'
'नाकुली[3] सुरसा रास्ना सुगन्धा गन्धनाकुली ॥'

इत्युक्तत्वात् सर्पाक्ष्या रास्नायाश्च नामानि । 'सर्पाक्षिरास्नानु' ॥ ११४ ॥

[1] हिङ्गुदीति मुद्रितग्रन्थे, वार्ताकुर्हिङ्गुलुरिति १०२ श्लोके. [2] धन्वन्तरीयनिघण्टुः (४. १०३–५) [3] भावप्रकाशे (Apte's Dict. p. 1341).

**विदारिगन्धांशुमती सालपर्णी स्थिरा ध्रुवा ॥ ११५ ॥**
**तुण्डिकेरी समुद्रान्ता कार्पासी बदरेति च ।**
**भारद्वाजी तु सा वन्या शृङ्गी तु वृषभो वृषः ॥ ११६ ॥**

(वि.) विदारिगन्धेति—विदार्या इव गन्धोऽस्या इति विदारिगन्धा । [1]दीर्घा अंशवो मूलान्यस्याः सन्तीति अंशुमती । सालस्येव पर्णान्यस्याः सन्तीति सालपर्णी । [2]तिष्ठतीति स्थिरा । 'ष्ठा गतिनिवृत्तौ' । ध्रुवति स्थिरीभवतीति ध्रुवा । 'ध्रुव स्थैर्ये' । सालपर्णीनामानि । 'मुष्याकुपोत्रपेल्लु' ॥ [3]तुण्डिकाद्वदनतो गवादीनीरयति प्रेरयतीति तुण्डिकेरी । 'ईर क्षेपे' । दूरप्रसरणात्[4] समुद्रान्ता । तन्त्वाद्यनेकलोकोपकाराय[5] कल्पत इति कार्पासी । 'कृपू सामर्थ्ये' । बदर्या इव फलान्यस्याः सन्तीति बदरा । कार्पासीनामानि । '[6]अत्तिचेट्टु' ॥ भरद्वाजसष्टत्वाद्[7] भारद्वाजी । वन्यकार्पासीनाम । [8]'अडविप्रत्ति' ॥ वृषभशृंगाकारावयवयोगात् शृङ्गी । वृषभः । वृषश्च । ऋषभ इति वा पाठः । 'वृषभमहौषधमु' ॥ ११५–१६ ॥

[1] दीर्घमूलरूपा अंशवः सन्त्यस्याः $F_2$, $Pt_2$. [2] दृढत्वात् स्थिरा $D_2$, $K_5$, $K_6$ [3] तुण्डिकान् वदनगतरोगान् $B_1$, $F_2$, $Pt_2$. [4] प्रसरात् $Pt_2$, प्रसारात् $B_1$, I, $K_2$. [5] जनोपकाराय $F_2$, $Pt_2$. [6] 'पत्ति' $G_2$, I, 'हत्ति' $J_2$. [7] भरद्वाजेन सृष्टा $D_2$, $K_5$, $K_6$. [8] 'मडदियदत्ति' $J_2$.

(पा.) विदारी—ध्रुवा। विदारीगन्धानामानि। 'मुय्याकुलपोन्न'। तुण्डिकेरी—बदरेति च। बदरं फलमस्यां बदरा। 'अर्शआदिभ्योऽच्' इति (५. २. १२७) सुभूतिटीकावचनाट्टाबन्तः। 'बदरं कोलकार्पास्योः फले स्याद्बदरी तयोः' इति विश्वप्रकाश-वचनात् (पृ. १३४, श्लो. ११०) ङ्यन्तः। 'कार्पासो बदरः प्रोक्तः' इत्यमरमालावचनात् पुंलिङ्गोऽपि। कार्पासीनामानि। 'प्रत्तिचेट्टु'॥ भारद्वाजी—वन्या। वन्यकार्पासीनाम। 'अडविप्रत्तिचेट्टु'। वैद्यके—

> 'तुण्डिकेरी[1] समुद्रान्ता केसरा बदरा फला।
> कार्पास्यक्षत्र वन्यायां भारद्वाज्यपि कुप्यनुत्॥'

इति। शृङ्गी—वृषः। वृषभाख्याया ओषधेर्नामनी। 'वृषभकमु'॥ ११५–१६॥

[1] 'तुण्डिकेरी स्वा क्षीग केसरा बदराफला' इति मुद्रितवैजयन्त्याम् (पृ. ५३, श्लो. ९९).

**गाङ्गेरुकी नागबला झषा ह्रस्वगवेधुका।**
**धामार्गवो घोषकः स्यान्महाजाली स पीतकः॥ ११७॥**

(वि.) गाङ्गेरुकीति—गङ्गाया[1] इदं [2]गाङ्गम्। जलमित्यर्थः। [3]तस्मिन्नीरयति प्रेरयतीति गाङ्गेरुकी। अथवा पवित्रत्वाद् गङ्गास्मरणफलमीरयतीति वा। 'ईर क्षेपे'। नागानां गजानां [4]बलकृत् नागबला। [5]झषति हिनस्ति रोगमिति झषा। 'झष हिंसायाम्'। ह्रस्वे स्वल्पे गवि जले एधत इति ह्रस्वगवेधुका। 'एध वृद्धौ'। नागबलानामानि। '[6]जिविलिकचेट्टु'॥ धाम कफस्थानं कण्ठादिकम् [7]अर्जयतीति धामार्गवः। 'अर्ज अर्जने'। शुष्कदशायां [8]घोषयति शब्दायत इति घोषकः। 'घुषिर् विशब्दने'। घोषवल्लीनामनी। 'तेल्लपूवुल गल आवड चेट्टुपेल्लु'॥ [9]महाजालं वितानमस्या अस्तीति महाजाली। पीतवर्णघोषवल्लीनाम। 'पच्चपूवुल्याबडचेट्टुपेरु'॥ ११७॥

[1] गङ्गायां $K_3$, $K_6$ [2] गाङ्गेय $J_2$. [3] गाङ्गमीरयति $Pt_2$. [4] बलं $K_1$, $K_6$. [5] तीक्ष्णगन्धेन हिनस्ति $D_2$, $F_2$, $K_6$. [6] 'नागबल्दचेट्टु' $J_2$. [7] अर्जति $F_2$, मार्ष्टीति $K_6$, 'मृजूष् शुद्धौ' G, I [8] घोषति $J_2$. [9] महत् जालं $Pt_2$.

(पा.) गाङ्गेरुकी—ह्रस्वगवेधुका। नागबलानामानि। वैद्यके—

> 'गाङ्गेरुकी नागबला [1]नीरबन्धनिका झषा।
> विश्वदेवा वशाविश्वा [2]खजा ह्रस्वगवेधुका॥'

इति। 'चिविविक' ॥ धामार्गवो—पीतकः। पीतकनामानि। 'आरवीर'। स इति सर्वनामनिर्देशः सांकर्यनिरासार्थः ॥ ११७ ॥

[1] दरगन्धिनिकेति धन्वन्तरीयनिघण्टौ (१. २८४). [2] खण्डा ibid

**ज्यौत्स्नी पटोलिका जाली नादेयी भूमिजम्बुका।**
**स्याल्लाङ्गलिक्यग्निशिखा काकाङ्गी काकनासिका ॥ ११८॥**

(चि.) ज्यौत्स्नीति—ज्योत्स्नेव रात्रौ [1]भासते ज्यौत्स्नी[2]। पटति विस्तीर्यते[3] इति पटोलिका[4]। पटं पटसदृशं पुष्पसमूहम् उलत्यावृणोतीति वा। 'उल आवरणे'। पुष्पे [5]जालसदृशत्वात् जाली। पटोलिकानामानि। 'पोट्लचेट्टुपेल्लु' ॥ नद्यां भवा नादेयी। भूमौ जम्बूः भूमिजम्बुका[6]। नादेयीनामनी ॥ [7]लाङ्गलवद् गर्भभेदकत्वात् [8]लाङ्गलिकी। अत्र एवाग्नेः शिखेव तिष्ठतीति अग्निशिखा[9]। लाङ्गलीनामनी। 'तरि[10] गोट्टु चेट्टु' ॥ काकाङ्गसदृशफलमस्या अस्तीति [11]काकाङ्गी। काकनासिकासदृशफलमस्या[12] अस्तीति काकनासिका। काकनासिकनामनी। 'काकिदोण्डचेट्टु' ॥ ११८ ॥

[1] अवभासते $B_1$, $K_5$ [2] 'भासृ दीप्तौ' G, $F_2$. [3] विस्तार्यते G, I, $K_3$, $K_5$. [4] 'पट गतौ' $F_2$; 'पट विस्तारे' $K_5$, $K_6$ [5] जालवत्त्वात् $K_5$, $K_6$. [6] जायते, 'जनी प्रादुर्भावे' $D_2$, $K_5$, $K_6$ [7] लाङ्गलीव $F_2$, $Pt_2$. [8] लाङ्गली $Pt_2$. [9] उष्णवीर्यत्वादग्निशिखा $F_2$, $Pt_2$. [10] 'तरियोरी' $J_2$. [11] काकस्येवाङ्गं फलमस्याः $F_2$, $Pt_2$ [12] °नासा° $K_5$, $K_6$

(पा.) ज्योत्स्नी—जाली। पटोलिकानामानि। 'चेन्तिपोङ्ग'। अनुक्तम्—'बहुजाली कोकफला'। 'अडविवीर' ॥ नादेयी—जम्बुका। भूमिजम्बूनामनी। 'नेलनेरेडु' ॥ स्यात्—अग्निशिखा। लाङ्गलिकीनामनी। 'तरिगोट्' ॥ काकाङ्गी—नासिका। वैद्यके[1]—'काकतुण्डफला च सा। सुरङ्गी तस्करस्नायुर्ध्वाङ्क्षतुण्डफला मता' ॥ प्रतापे—

'काकजङ्घा नटी दासी काकसञ्ज्यपि लोमशा।
पारावतपदी स्यातां पुंसि काण्डप्रचीवरौ ॥'

इति ॥ 'वन्यबिम्बी तु काकाङ्गी' इति गौडः। वैजयन्त्याम् (पृ. ५४, श्लो. ११९) 'दास्यां पडश्चा शार्ङ्गेष्टा[2] काकजङ्घा विलोमिका' इति। वन्यबिम्बीनामानि। 'काकिदोंड' ॥ ११८ ॥

[1] धन्वन्तरीयनिघण्टुः (४. २५). [2] °ग्रङ्गिष्ठा $B_1$

**गोधापदी तु सुवहा मुसली तालमूलिका ।**
**अजशृङ्गी विषाणी स्याद् गोजिह्वादार्विके समे ॥ ११९ ॥**

(वि.) गोधापदीति—गोधाया[1] इव पादा मूलानि यस्याः गोधापदी । सुष्ठु वहत्यामोदं[2] सुवहा । 'वह प्रापणे' । गोधापदीनामनी । 'चेप्पुतट्टचेट्टु'[3] ॥ मुस्यति त्रिदोषानिति[4] मुसली । 'मुस खण्डने' । तालस्येव मूलमस्या इति तालमूलिका । मुसलीनामनी । 'नेलताटिपेल्लु[5]' ॥ अजशृङ्गाभफलयोगाद् अजशृङ्गी । अत[6] एव विषाणी च । अजशृङ्गीनामनी । 'दुष्टुचुर्तीगेपेल्लु' ॥ गोजिह्वाभपत्रत्वाद् गोजिह्वा । दारयति रोगान् दार्विका । 'दॄ विदारणे' । गोजिह्वानामनी । '[7]एद्दुनालुकचेट्टु' ॥११९॥

[1] गोधा इव $Pt_2$. [2] आरोग्य $F_2$, $Pt_2$; आमोहं $K_3$. [3] 'हंसपादिलि' $D_1$. [4] रोगान् $F_2$, $Pt_2$. [5] 'नेलशलु' $J_2$. [6] तथैव $K_5$, $K_6$. [7] 'दरिवैंकपूचेट्टु' $D_1$, $K_5$, $K_6$; 'यतुनालगेयगिड' $J_2$.

(पा.) गोधापदी—सुवहा । हंसपदीनामनी । 'चप्पुतट्ट' ॥ मुसली—मूलिका । भूतालिनामनी । 'अर्शोघ्न्यां मुसली ताली तालमूली फलिन्यपि' इति वैजयन्ती (पृ. ६१, श्लो. २०१) । 'नेलताडि' ॥ अजशृङ्गी—स्यात् । साहचर्यात् स्त्रीलिङ्गः । वैजयन्त्याम्[1]—'अजशृङ्गी मेषशृङ्गी सर्पदंष्ट्रा च वर्तिका' इत्येतत्पर्यायत्वेन मेषशृङ्गी प्रोक्ता । वैद्यके—'मेषशृङ्गीफलं स्वादु तिक्तमुष्णं प्रमेहनुत्' इति फलप्रतिपादनादिमौ शब्दौ फलवद्वृक्षविशेषनामनी । 'टोद्दिचेट्टु' । लताविशेषनामानीति केचित् । 'दुट्टुगु' । कर्कटकशृङ्गीनामनी इत्यन्ये । शेषे—'कुलुङ्गी कर्कटाह्वया' । 'कुलीरशृङ्गी शृङ्गी च' । कुलुङ्गयादयः कर्कटशृङ्गीनामानि । 'कर्कटकशृङ्गी' ॥ गोजिह्वा—समे । गोजिह्वानामनी । 'चेद्दनालिकचेट्टु' ॥ ११९ ॥

[1] मुद्रितग्रन्थे न दृश्यते, धन्वन्तरीयनिघण्टुः (१. ८७).

**ताम्बूलवल्ली ताम्बूली नागवल्ल्यप्यथ द्विजा ।**
**हरेणू रेणुका कौन्ती कपिला भस्मगन्धिनी ॥ १२० ॥**

(वि.) ताम्बूलवल्लीति—[1]ताम्बूलार्थं वल्ली ताम्बूलवल्ली । [2]ताम्बूलसाधनत्वात् ताम्बूली । नागलोकादाहृता वल्ली नागवल्ली । नागस्थैरावणस्यालाने [3]जातत्वाद्वा । नागवल्लीनामानि । '[4]तमलपाकुर्तीगेपेल्लु' ॥ द्विर्जायते द्विजा[5] । द्विजसादृश्याद्वा ।

[6]तृष्णादिकं हरतीति हरेणुः। 'हृञ् हरणे'। रेणुयोगाद् रेणुका। कुन्त्यै दुर्वाससा [7]दत्ता कौन्ती। कपिलवर्णत्वात् कपिला। भस्मना रेणुना [8]गन्धयति वासयतीति भस्मगन्धिनी। 'गन्ध अर्दने'। [9]हरेणुनामानि। 'तक्कोलम्'॥ १२०॥

[1] ताम्बूलस्य $K_5$, $K_6$ [2] ताम्यति विवशो भवति जनोऽनयेति $Pt_2$. [3] नागालाने यतो जाता नागवल्ली भविष्यति इति स्कान्दवचनम् $Pt_2$. [4] 'ताम्बूलदएलेवल्लि' $J_2$. [5] राजपुत्रीत्वात् $K_5$, $K_6$ [6] रोगान् $F_2$, $Pt_2$ [7] दत्तत्वात् $D_2$, $K_5$, $K_6$. [8] गन्धयते मदिराचूर्ण $K_5$, $K_6$. [9] $K_5$ adds केचित् हरिणरेणुवर्णमित्येव वदन्ति.

(पा.) ताम्बूलवल्ली—नागवल्ल्यपि। ताम्बूलवल्लीनामानि। 'तमलपाकुतीग'। अथ द्विजा। हरेणू रेणुका। 'हूलोपे . . .' (६. ३. १११) इति दीर्घः। कुन्ती। कौन्ती-त्यन्ये। कपिला भस्मगन्धिनी। रेणुकाख्यगन्धद्रव्यविशेषनामानि। 'रेणुकम्'। शेषे—'पाण्डुपत्नी राजपुत्री भस्मगर्भा च नन्दिनी'॥ १२०॥

**एलावालुकमैलेयं सुगन्धि हरिवालुकम्।**
**वालुकं चाथ पालङ्क्या मुकुन्दः कुन्दकुन्दुरू॥ १२१॥**

(वि.) एलावालुकमिति—एलावत् प्रियगन्धेन [1]वनस्थलं वलते [2]संवृणोतीत्ये-लावालुकम्। 'वल संवरणे'। इलायां[3] भवम् ऐलेयम्। [4]शोभनो गन्धो यस्येति सुगन्धि। हरिः[5] पिङ्गलवर्णः, तेन वलत इति हरिवालुकम्। वलते भुवं संवृणोतीति वालुकम्। 'वल संवरणे संचलने च'। वालुकनामानि। 'कुंतुरुवुडमु'॥ वैचै. पाल्यत इति पालङ्क्या। 'पाल रक्षणे'। पालेन रक्षणेन अङ्क्यत इति वा। 'अकि लक्षणे'। [6]मुखेन कुन्द इव प्रतिभातीति मुकुन्दः। कुन्द इव [7]भातीति कुन्द [8]। कुं भुवं द्यति मूलैरिति कुन्दुरुः। 'दो अवखण्डने'। कुन्दनामानि। 'कुन्दुरुष्कमु[9]'॥ १२१॥

[1] वनस्थान $J_2$ [2] आवृणोति $J_2$ [3] $J_2$ adds भुवि [4] सुगन्धयोगात् सुगन्धि $K_5$, $K_6$ [5] हरि कपिलवर्ण वालुक $Pt_2$ [6] मुखात् $Pt_2$. [7] प्रतिभाति $K_5$, $Pt_2$ [8] $J_2$ adds 'मा दीसी'. [9] 'कुन्दरवृक्ष' $J_2$

(पा.) एलावालुकम्—वालुकं च। एलावालुकनामानि। 'कून्तुरुवुडमु'॥ अथ पालङ्क्या—कुन्दकुन्दुरू। कुन्दुरुनामानि। 'कुन्दुरुलु'॥ १२१॥

**वालं ह्रीवेरबर्हिष्ठोदीच्यं केशाम्बुनाम च।**
**कालानुसार्यवृद्धाश्मपुष्पशीतशिवानि तु॥ १२२॥**

**शैलेयं तालपर्णी तु दैत्या गन्धकुटी मुरा ।**
**गन्धिनी गजभक्ष्या तु सुवहा सुरभी रसा ॥ १२३ ॥**
**महेरणा कुन्दुरुकी सल्लकी ह्लादिनीति च ।**

(वि.) <u>वालमिति</u>—वलते भुवं मूलवाहुल्यात् वालम् । 'वल संवरणे संचलने च' । निगूढत्वेन ह्रीयुक्तमिव वेरमस्येति ह्रीवेरम्[1] । वर्हति वर्धते[2] इति वर्हिष्ठम् । 'वृह वृद्धौ'[3] । उदग्देशे भवमुदीच्यम्[4] । केशानामम्बुनां च नामान्यस्य सन्तीति केशाम्बुनाम । ह्रीवेरनामानि । '[5]कुरुवेरुपेल्लु' ॥ शीतोष्णाभ्यां[6] कालोऽनुसर्यतेऽनेनेति कालानुसार्यम् । [7]चिरस्थितत्वात् वृद्धम । अश्मनः पुष्पमिव अश्मपुष्पम् । शीतवीर्येण शिवं शीतशिवम् । शिलायां भवं पुष्पं शैलेयम् । शैलेयनामानि । '[8]रातिपुव्वुपेल्लु' ॥ तालस्येव पर्णान्यस्या इति तालपर्णी । [9]मुराख्यदैत्यनामास्या अस्तीति दैत्या । [10]गन्धस्य कुटी गृहं गन्धकुटी । मुरतीति मुरा । 'मुर वेष्टने' । मुराख्यदैत्यनामयोगाद्वा । प्रशस्तो गन्धोऽस्या अस्तीति गन्धिनी । गन्धकुटीनामानि । 'मुरयनुगन्धद्रव्यमुपेल्लु' ॥ गजैर्भक्ष्यत इति [11]गजभक्ष्या । 'भक्ष अदने' । सुष्ठु वहत्यामोदं सुवहा । 'वह प्रापणे' । घ्राणतर्पणगन्धत्वात् सुरभिः । वहुरसयोगाद् रस्यत इति रसा । महदीरणं प्रेरण गजानां भक्षणेऽस्या इति महेरणा । 'ईर प्रेरणे' । कुं भुव यति मूलैरिति कुन्दुरुकी । 'दो अवखण्डने' । सल्लत्य लस्यते आस्वाद्यते गजैरिति सल्लकी । 'लक आस्वादने' । ह्लादोऽस्या अस्तीति ह्लादिनी । ह्लादिनीति वा पाठः । सल्लकीनामानि । 'अन्दुगुचेट्टु-पेल्लु' ॥ १२२–३ ॥

[1] जिह्रेति वर्तेत इति । 'ह्री लज्जायाम्' । धातूनामनेकार्थत्वाद् वर्तमानार्थोऽवगन्तव्य. $K_5$, $K_6$. [2] वर्धयति $J_2$ [3] 'वृह वृहि वृद्धौ' $D_2$, $K_5$, $K_6$. [4] उदीच्यानामतिशयेन भवति $F_2$, $K_6$ [5] 'मुरिवाल' $J_2$. [6] हिमत्वात् हेमन्तकालमनुसरति $K_5$, $K_6$ [7] स्थायित्वात् $Pt_2$. [8] 'चल्लपूवु' $J_2$ [9] मुरदैत्यनामयोगात् $F_2$, $Pt_2$ [10] गन्धाश्रयत्वात् $K_5$, $K_6$ [11] गजभक्षा $K_5$, $K_6$

(पा.) <u>वालं—केशाम्बुनाम च</u> । ह्रीवेरनामानि । 'कुरुवेलु' ॥ <u>कालानुसार्य—शैलेयम्</u> । शैलेयनामानि । 'रापुव्वु' । <u>दैत्या—गन्धिनी</u> । मुरानामानि । 'मुर अने गन्धद्रव्यमु' ॥ <u>गजभक्ष्या—सुरभी रसा</u> । 'ढ्रलोपे . . .' (६. ३. १११) इति दीर्घ. । <u>महेरणा—[1]ह्लादिनीति च</u> । सल्लकीनामानि । 'अंदुगचेट्टु' । तस्य निर्यासो गन्धद्रव्यम् ॥ १२२–३ ॥

[1] $B_2$ adds ह्लादिनीति वा पाठः.

**अग्निज्वालासुभिक्षे तु धातकी धातुपुष्पिका ॥ १२४ ॥**
**पृथ्वीका चन्द्रबालैला निष्कुटी बहुलाथ सा ।**
**सूक्ष्मोपकुञ्चिका तुत्था कोरङ्गी त्रिपुटा त्रुटिः ॥ १२५ ॥**

(वि.) अग्निज्वालेति—अग्निज्वालाभपुष्पयोगाद्[1] अग्निज्वाला। शोभना भिक्षा प्रार्थनास्यामिति [2]सुभिक्षा। 'भिक्ष याच्ञायाम्'। दधाति पुष्पाणीति धातकी। 'डुधाञ् धारणपोषणयोः'। धातुवद् [3]रक्तपुष्पयोगाद् धातुपुष्पिका। धातकीनामानि। 'धातकी-कुसुमम्' ॥ बहुफलयोगात् पृथ्वीका। चन्द्रस्य कर्पूरस्य बाला पुत्रिकेव स्थिता चन्द्रबाला। एलयति नाशयति मुखदौर्गन्ध्यमिति एला। 'इल स्वप्नक्षेपणयो.[4]'। निष्क्रान्ता कुटेः कोशादिति [5]निष्कुटी। बहूनि फलानि लातीति बहुला। 'ला दाने'। एलानामानि। 'पेद्दयेलकुलपेल्लु' ॥ उपकुञ्चति स्वल्पीभवतीति उपकुञ्चिका। 'कुञ्च [6]कौटिल्याल्पी-भावयोः'। अत एव तुच्छत्वात् तुन्छेति वा पाठः। तुदति तापं तुत्था। 'तुद व्यथने'। कुरति शब्दायत इति कोरङ्गी। 'कुर [7]शब्दे'। पुटत्रयशालिनीत्वात्[8] त्रिपुटा[9]। सूक्ष्मत्वात् त्रुट्यतीति त्रुटि.। 'त्रुट भेदने'। सूक्ष्मैलानामानि। 'सन्नयेलकुलपेल्लु[10]' ॥ १२४–५ ॥

[1] पुष्पत्वात् $F_2$, $J_2$, $Pt_2$ [2] सुलभत्वात् $K_5$, $K_6$ [3] रक्तानि पुष्पाण्यस्याः $F_2$, $Pt_2$. [4] 'इल स्वप्नप्रेरणयो:' $K_5$, $Pt_2$. [5] निष्कुटिः $F_2$, $Pt_2$ [6] $K_5$, $K_6$, $Pt_2$ add गति°. [7] 'कुर कूर शब्दे' $K_5$, $K_6$. [8] °शालित्वात् $K_5$, $K_6$. [9] त्रिपुटाकारत्वात् $F_2$, $Pt_2$. [10] 'चिकयेलकि' $J_2$.

(पा.) अग्निज्वाला—धातुपुष्पिका। धातकीनामानि। 'येरुजाजि'। पुष्पगन्ध-द्रव्यम् ॥ पृथ्वीका—बहुला। वैद्यके[1]—

'भद्रैला बृहदेला च त्रिदिवा[2] त्रिदिवोद्भवा[3]।
स्थूलैला त्वक्सुगन्धा च पृथ्वीका कन्यका पुटा ॥'

इति स्थूलैलानामानि। 'पेद्दयाल्कुलु' ॥ अथ सा—त्रुटिः। वैद्यके—

'सूक्ष्मैला द्राविडी [4]तुत्था कोरङ्गी बहुला त्रुटिः।
एला कपोतवर्णा च चन्द्रबाला[5] च निष्कुटी[6] ॥'

इति। सूक्ष्मैलानामानि। 'सन्नपुयाल्कुलु' ॥ १२४–५ ॥

[1] ध. नि. २. ४६. [2] त्रिपुटा $B_2$. [3] त्रिपुटेद्भवेति मुद्रितनिघण्टौ. [4] तुन्छा $B_2$. [5] °माला $B_2$. [6] ध. नि. २. ४४.

**व्याधिः कुष्ठं पारिभाव्यं वाप्यं पाकलमुत्पलम् ।**
**शङ्खिनी चोरपुष्पी स्यात् केशिन्यथ वितुन्नकः ॥ १२६ ॥**
**झटामलाज्झटा ताली शिवा तामलकीति च ।**

(वि.) व्याधिरिति—[1]कुष्ठव्याधिनामान्यस्य [2]सन्तीति व्याधि । कौ[3] तिष्ठतीति कुष्ठम् । 'ष्ठा गतिनिवृत्तौ' । कुष्ठनामधेययोगाद्वा । पारिषु जलेषु भवतीति पारिभाव्यम् । वारिभाव्यमिति[4] वा पाठ । अत एव वाप्या भव वाप्यम् । व्याप्यमिति वा पाठ । त्रिदोषपरिपाक लाति ददातीति पाकलम् । उत्पलाभपुष्पत्वाद् उत्पलम् । कुष्ठनामानि । 'चेंगलुवकोष्टुपेल्लु' ॥ [5]शङ्खाभपुष्पयोगात् शङ्खिनी । रात्रावेव पुष्प्यतीति[6] चोरपुष्पी । [7]केशप्ररोहत्वात् केशा सन्त्यस्येति केशिनी । शङ्खिनीनामानि । 'कढिलट्टुपेल्लु' ॥ वितुदते पित्त[8] श्लेष्म चानेनेति वितुन्नक । 'तुद व्यथने' । झट फलसघातोऽस्या अस्तीति झटा । [9]विशदफलयोगाद् अमला । आश्चर्यकारी झट फलसघातोऽस्या अज्झटा[10] । अदिति आश्चर्ये वर्तते । मालाभानि फलान्यस्या अन्योन्य ताडयन्तीति [11]ताली । ताडीति वा पाठ । 'तड आघाते' । आरोग्यरूपमङ्गलहेतुत्वात् [12]शिवा । तम्यते काङ्क्ष्यत इति तामलकी । 'तमु काङ्क्षायाम्' । तालीनामानि । 'नेलयुसिरिकपेल्लु' ॥ १२६ ॥

[1] व्याधे $K_5$, $h_6$  [2] सम्प्रयोगात् $J_2$  [3] $K_5$ adds भूमौ  [4] वारिषु जलाधारेषु $K_6$  [5] शङ्खवत् पाण्डुरत्वात् $K_5$, $K_4$  [6] $D_2$, $h_5$ add विकसति, $K_6$ adds 'पुष्प विकसने'  [7] केशाकारावयवत्वात् $D_2$, G  [8] पित्तश्लेष्मादिक $F_2$ $Pt_2$  [9] रोगहरत्वात् F. $Pt_2$  [10] आज्झटा, आ इत्याश्चर्ये वर्तते $h_6$  [11] ताडयति रोगानिति $Pt_2$  [12] निशदफलयोगात् $D_2$, $h_5$, $K_6$

(पा.) व्याधि । व्याधेर्नामान्यपि । 'पारिभाव्य गदाह्वयम्' इति रभसकोश । कुष्ठनामानि । 'कोष्टु' ॥ शङ्खिनी—केशिनी । शेषे—'ग्रन्थिका च निशाचरी चोरी धनहरी चण्डा' । शङ्खिनीनामानि । 'कट्लुतीगपद्मपुतींगालु' ॥ अथ वितुन्नक — तामलकीति च । शेषे—'आमलक्युत्तमा चैव तमाला च तमालिनी'[1] । भूम्यामलकीनामानि । 'नल उसिरिक' ॥ १२६ ॥

[1] 'तामलक्यजटा ताली तमाल तु तमालिनी ।
वितुन्नभूता तमक भूधात्री भ्वामलक्यपि' ॥ ध नि ३ ८४

**प्रपौण्डरीकं पौण्डर्यमथ तुन्नः कुबेरकः ॥ १२७ ॥**
**कुणिः कच्छः कान्तलको नन्दिवृक्षोऽथ राक्षसी ।**
**चण्डा धनहरी क्षेमदुष्पत्रगणहासकाः ॥ १२८ ॥**

(नि.) प्रपौण्डरीकमिति—पुण्डरीकस्येद [1]पौण्डरीकम्। प्रकृष्ट पौण्डरीक प्रपौण्डरीकम्। [2]पौण्डर्यमिति [3]देशीयपदम्। पौण्डर्यनामनी। 'पुण्डरीकमनु गन्धद्रव्यमु[4]'॥ तुद्यते हस्तादिभिरिति तुन्न। 'तुद व्यथने'। कुत्सित [5]बेरमस्यास्तीति कुबेरक। शाखाभङ्गात् कौतीति कुणि[6]। 'कु शब्दे'। कच्यते गजैरिति कच्छ। 'कष हिंसायाम्'। कस्य [7]जलस्यान्त समीप गच्छन्तीति कान्ता गजा, तैर्लक्यत इति कान्तलक। 'लक आस्वादने'। नन्दिसज्ञको वृक्षो नन्दिवृक्ष। नन्दिवृक्षनामानि। 'नन्दिवृक्षमु[8]'॥ वनचरा गन्धाढ्या मूर्तिं रक्षन्तीति राक्षसी[9]। 'रक्ष पालने'। तीक्ष्णत्वात् चण्डा। राक्षसीनामसाम्यात् चण्डत्त इति वा। 'चडि कोपे'। बहुमूल्यत्वाद्[10] धन हरतीति धनहरी। 'हृञ् हरणे'। दीपनत्वेन क्षेमकरत्वात् क्षेम। क्षियति वसति ग धोऽस्मिन्निति वा। 'क्षि निवासगत्यो'। [11]दुष्टानि पत्राण्यस्य[12] दुष्पत्र। दुष्पुत्र इति वा पाठ। सौरभ्यातिशयेन सर्वजनमुखविकासकरत्वाद् गणहासक[13]। 'हसे हसने'। हासो विकास। धनहरीनामानि। 'नल्लकचोरसुपेल्लु'॥ १२७–८ ॥

[1] पुण्डरीकस्यैव रूपान्तर $K_5$ प्रकर्षेण पुण्डरीकस्येद $F_2$, $Pt_2$ [2] $Pt_2$ adds अस्यैकदेशानुसारात् [3] देशीय I, $K_3$ [4] 'पुण्डरीकवेम्म औषध' $J_2$
[5] $h_4$ $h_6$ add शरीरम् [6] कुत्सितशाखात्वात् G $K_5$ [7] उदकस्य G $h_2$
[8] 'नन्दिअनेडि वृक्षमु' $K_6$, 'नन्दियेम्म वृक्ष' $J_2$ [9] रक्ष्यतेऽस्या $F_2$ $Pt_2$
[10] मूल्यत्वेन $F_2$, $Pt_2$ [11] दुष्टा पुत्रा पत्राण्यस्य दुष्पुत्र $h_5$ $h_6$ [12] पुष्पाणि $h_3$
[13] गण हासयतीति $F_2$ $Pt_2$

(पा.) प्रपौण्डरीक पौण्डर्यम्। द्रव्यावल्याम्—

'[1]प्रपौण्डरीक चक्षुष्य पुण्डर्यं पुण्डरीयकम्।
पुण्डरीक श्वेतपुष्प सुपुष्पं साधुमूलकम्।
मूलसाधनसज्ञ च श्रीपुष्प पुण्ड्रकाह्वयम्॥'

इति॥ 'पौण्डर्यक सालपुष्प स्थिरक पुण्डरीयकम्' इति रभसकोश। पुण्डरीकस्य गन्धद्रव्यनामानि। 'पुण्डरीकमनगन्धद्रव्यमु। अदे सालपुष्पमुमु'॥ अथ तुन्न—

नन्दिवृक्ष । नन्दिवृक्षनामानि । 'नन्दिवृक्षसु' ॥ अथ राक्षसी—गणहासका । शेषे—'चोरक शङ्कितस्तेन कुह्न कितवो रिपु'। चोराख्यगन्धद्रव्यनामानि। 'नह्नरुचोरम्'। हस्तिकर्णीनामानि च । 'वलुरक्लिस' ॥ १२७–८ ॥

[1] प्रपौण्डरीक—पुण्डरीयकम् ध नि ३ ९२

**व्यालायुधं व्याघ्रनखं करजं चक्रकारकम् ।**
**सुषिरा विद्रुमलता कपोताङ्घ्रिर्नटी नली ॥ १२९ ॥**
**धमन्यञ्जनकेशी च हनुर्हट्टविलासिनी ।**

(वि.) व्यालायुधमिति—[1]व्यालस्य व्याघ्रस्यायुध नखमिव तिष्ठतीति व्यालायुधम् । व्याघ्रनख च । कमुदक रञ्जयतीति करञ्जम् । 'रञ्ज रागे'। करजमिति वा पाठ । [2]धूपसमूहेन चक्र मेलन करोतीति चक्रकारकम् । 'डुकृञ् करणे'। व्याघ्रनखनामानि । 'पुलिगोरुचेट्टु' ॥ [3]सुषिर रन्ध्रमस्या अस्तीति सुषिरा । विद्रुमलताभत्वात्[4] विद्रुमलता । कपोताङ्घ्रिसदृशमूलत्वात् कपोताङ्घ्रि. । वायुवशान्नटति चलतीति नटी । 'नट[5] नृत्तौ'। नल्यते नली । 'णल [6]गन्धने'। सुषिरवत्त्वाद्[7] धम्यत इति धमनी । 'ध्मा[8] शब्दाग्निसयोगयो'। अञ्जनसदृशा केशा सूक्ष्ममूलान्यस्या इत्यञ्जनकेशी[9] । धमनीनामानि । 'नलियनुगन्धद्रव्यमु' ॥ हन्त्यामयमिति[10] हनु । 'हन हिंसागत्यो.'। [11]हट्टवीथ्या विलसतीति हट्टविलासिनी । 'लस श्लेषणक्रीडनयो' ॥ १२९ ॥

[1] $K_6$ omits 7 lines [2] चक्रं धूपद्रव्यमेलन $Pt_2$ [3] शुषि $K_6$, $Pt_2$.
[4] विद्रुमवत् रक्तत्वात् $Pt_2$ [5] 'नट स्पन्दने' $Pt_2$ [6] बन्धने च $J_2$ [7] सुषिरत्वधमात् $K_3$, $K_6$, धमयोगात् $J_2$ [8] 'ध्मा पूरण' $K_2$, $K_3$, $h_4$. [9] अञ्जनाभसूक्ष्मबहुमूलत्वात् $D_2$, $K_3$, $K_6$ [10] भूतान् $K_3$, $h_6$, भूतानि $I$, $h_3$ [11] हट्ट पथ्य $D_2$, $K_3$, $h_6$

(पा.) व्यालायुधं—चक्रकारकम् । शेषे—'व्यक्ष व्याघ्रबल पाद नूत्नस्थं पुण्ड्रक नखम्'। व्याघ्रनखाख्यवृक्षनामानि । 'व्याघ्रनखवृक्षमु' ॥ नखनामकगन्धद्रव्यनामानीति केचित् ॥ सुषिरा—नली । नलीनामवृक्षनामानि । 'नलीवृक्षमु'। 'सुषिरा धमनी शून्या निर्मध्या नर्तकीति[1] च' इति धन्वन्तरि (ध नि. ३ ८३)। गन्धद्रव्यविशेषस्य कपोताङ्घ्रिनामौषधिविशेषस्य च नामानीति केचित् । 'नली अनि गन्धद्रव्यमुनु गुल्लकुसुमनु' ॥ धमनी—हट्टविलासिनी ॥ १२९ ॥

[1] नर्तकि सुषिरमन्य (ध. नि ३ ८३)

**शुक्तिः शङ्खः खुरः कोलदलं नखमथाढकी ॥ १३० ॥**
**काक्षी मृत्स्ना तुवरिका मृतालकसुराष्ट्रजे ।**

(वि.) शुक्तिरिति—शुक्त्याकृतित्वात्[1] शुक्तिः । [2]शङ्खसाम्यात् शङ्खः । खुरति [3]भूतान् हन्तीति खुरः । 'खुर विलेखने'। कोली बदरी तत्पत्रयोगात् [4]कोलः । कुल्यत इति कोलः । 'कुल संस्याने'। दलति भूतानीति दलम् । 'दल विशरणे'। कोलस्येव दलं कोलदलम् । नखति कुष्ठादिरोगान्[5] गृहीत्वा गच्छतीति नखम् । 'नख गतौ'। नखगन्धद्रव्यनामानि । 'नखमनेडिगन्धद्रव्यमु'॥ [6]आढक्याख्यधान्यतुल्यरसत्वाद् आढकी । कपति हिंसति कण्ड्वादिरोगानिति [7]काक्षी । 'कष हिंसायाम्'। प्रशस्ता मृत् मृत्स्ना । तुवरः कषायो [8]रसोऽस्यास्तुवरिका । म्रियते [9]विलीयते ।[10]सुवर्णमनेनेति मृतालकम् । 'मृङ् प्राणत्यागे'। मृत्तालकमिति वा पाठः । मृत्, तालकमिति पदद्वयमिति केचित् । मृद्यते मृत् । 'मृद क्षोदे'। तलन्ति प्रतिष्ठन्तेऽनेनेति तालकम् । सुराष्ट्रदेशे भवं[11] सुराष्ट्रजम् । तुवरिकानामानि । 'तोवरिमन्नु'॥ १३० ॥

[1] आकारत्वात् $F_2$, $Pt_2$ [2] शङ्खाकृतित्वात् $D_2$, $K_5$ [3] भूतानि $B_1$, I, $K_2$ [4] कोली $K_5$, $K_6$. [5] कुष्ठादीन् $F_2$, $Pt_2$ [6] तुवरीवाचकत्वात् $F_2$, $Pt_2$ [7] काङ्क्षी $K_5$, $K_6$. [8] तद्योगात् $Pt_2$ [9] निलीयते $Pt_2$ [10] हिरण्यम् $J_2$, $K_5$. [11] भवत्वात् $K_5$.

(पा.) शुक्तिः—नखम् । शेषे—

'नागहनुः सहः ।
चलः कोशी च केशी च शिल्पी कररुहस्तथा ।
सामुद्रो हस्तिकर्णश्च नखी ॥'

नखाख्यवृक्षनामानि । 'नखवृक्षमु'॥ 'धमन्यञ्जनकेश्यौ तु हनुर्हट्टविलासिनी' इति वैजयन्ती (पृ. १३१, श्लो. १०१) । अथाढकी—सुराष्ट्रजे । आढकीनामानि । 'कंदिचेट्टु'।

'तालकं . . . मृन्मृत्स्ना मृत्तिकाजिता ।
सौराष्ट्री तुवरी काक्षी[1] काची तालमृत्तालके ॥'

इतीन्दुः । सुराष्ट्रमृत्तिकानामानीति केचित् । 'तोगरिमन्नु'। 'अडवितोगरितीगेलु । सुरुगुडु'॥ १३० ॥

[1] 'काक्षी कासी सुराष्ट्रजा' (ध. नि. ३. १०५).

**कुटन्नटं दाशपुरं वानेयं परिपेलवम् ॥ १३१ ॥**
**प्लवगोपुरगोनर्दकैवर्तीमुस्तकानि च ।**
**ग्रन्थिपर्णं शुकं बर्हंपुष्पं स्थौणेयकुक्कुरे ॥ १३२ ॥**

(वि.) कुटन्नटमिति—[1]कुटन् वक्रीभवन्नटतीति कुटन्नटम् । 'नट [2]नृत्तौ' । दशपुराख्यदेशे भवं दाशपुरम् । वनं जलमत्रास्तीति वानम् । वाने जलाशये भवं वानेयम्[3] । कोमलत्वात्[4] परितः पेलवं परिपेलवम् । [5]लघुतया प्लवत इति प्लवम् । 'प्लुङ् गतौ[6]' । अभक्ष्यतया गवां [7]पुरति अग्रे तिष्ठति[8] गोपुरम्[9] । 'पुर अग्रगमने' । [10]अरुचित्वेन गा नर्दयति क्रोशयतीति [11]गोनर्दम् । 'नर्द शब्दे' । कैवर्तानां मत्स्यानां [12]भक्षणमिति कैवर्ती । मुस्यते वराहैरिति [13]मुस्तकम् । 'मुस खण्डने' । कैवर्तमुस्तकं तदिति वा पाठः । तथाष्टमं नाम त्रिलिङ्गम् । एवं भिन्नलिङ्गानां द्वन्द्वः कृत इति नावगन्तव्यम् । कैवर्तीमुस्तकनामानि । 'तुङ्गमुस्तलुपेल्लु' ॥ ग्रन्थिषु पर्णान्यस्मिन् सन्तीति [14]ग्रन्थिपर्णम् । शुकवत् पत्राण्यस्य शुकम् । बर्हतुल्यपुष्पत्वात् बर्हपुष्पम् । केचित्तु शुकबर्हमिति पठन्ति । तदा शुकस्य बर्हाणीव पत्राण्यस्येति विग्रहः । पुष्यतीति पुष्पं च । 'पुष्प विकसने' । [15]स्थूणाकृतित्वात् स्थौणेयम् । [16]शुनकाकारत्वात् कुक्कुरम् । ग्रन्थिपर्णनामानि ॥ '[17]स्थौणेयमनेडि गन्धद्रव्यम्' ॥ १३१–२ ॥

[1] कुडति J₂. [2] 'नड स्पन्दने' F₂, Pt₂. [3] वने जले जातं Pt₂. [4] अतिकोमलत्वात् B₁, J₂, K₅. [5] लघुत्वात् F₂, Pt₂ [6] जलोपरिसर्पणे च J₂. [7] पुरतः J₂. [8] सरतीति K₃. [9] गौर्जलं पुरं संस्थानमस्येति Pt₂. [10] रुचिकरत्वेन Pt₂. [11] गोनर्दः D₂, K₂, K₃, गोनर्दी K₆. [12] अदनं F₂, Pt₂. [13] वातकफौ मुस्यतीति I, K₅, K₆. [14] ग्रन्थिप्रधानानि पर्णानि D₂, I, K₆. [15] स्थूणस्येव रूपं Pt₂. [16] श्वाकृतित्वात् K₅, K₆. [17] 'स्थौणेयकं गन्धद्रव्य' J₂.

(पा.) कुटन्नट—कैवर्तीमुस्तकानि च । कैवर्तीमुस्तकमित्येकपदम् ।

> 'जायते मुस्तकाकारः शैवालदलसंचयः ।
> कैवर्तीमुस्तकं नाम गन्धद्रव्यं तदुच्यते ॥'

इति ॥ 'कैवर्तीमुस्तके क्लीबं शोनके नाकुटं नटः' इति च । कैवर्ती पृथक्पदमिति केचित् । रूपभेदात् स्त्रीलिङ्गम् । नपुंसकमपि । 'कैवर्तं मुस्तकं तस्य तथा च करियादभम्' इति तन्त्रान्तरोक्तत्वादित्याहुः । शेषे—

> 'प्लवनं कर्तनं मुस्ता सुगन्धिः कर्णपूरकः ।
> शकुल्यादश्वेतमध्यो नादेयपिठरावपि ॥'

इति । तथा च वैजयन्त्याम्—

> ‘जलमुस्ते तु प्लवनं [1]गोनर्दं परिपेलवम् ।
> कुटन्नट दशपुर गोपुर [2]वर्तकं प्लवम् ॥’ (पृ ६१, श्लो. २०१)

इति । जलमुस्तानामानि । ‘कैवर्तिमुस्तलु ॥’ ग्रन्थिपर्णं—कुक्कुरे । शेषे—

> ‘बर्हपुष्पं बर्हिचूड शुकपुष्प शुकच्छदम् ।
> विकर्चं शुकबर्हं च हरितं शीर्णलोमकम् ॥’

इति । ग्रन्थिपर्णनामानि । ‘गंदिवनमुपस्नाकुन्नुमान्चिपञ्जिन्नि’ ॥ १३१-२ ॥

[1] गोदर्भमिति मुद्रितग्रन्थे [2] कर्तनं $B_3$

**मरुन्माला तु पिशुना स्पृक्का देवी लता लघुः ।**
**समुद्रान्ता वधूः कोटिवर्षा लङ्कोपिकेत्यपि ॥ १३३ ॥**

(वि.) मरुन्मालेति—मरुत माला अस्या इति [1]मरुन्माला । पदद्वयं वा । मरुता तुल्यत्वात् मरुत् । मालाकारत्वात् माला । गन्धं पिशति सूचयतीति पिशुना[2] । ‘पिश अवयवे’ । स्पृशति दूरस्थ गन्धेनेति स्पृक्का[3] । ‘स्पृश संस्पर्शने’ । [4]देवपुत्री-सञ्ज्ञकत्वाद् देवी । लतारूपत्वात् लता । लघुत्वात् [5]लघु । [6]दूरप्रसरणात् समुद्रान्ता । उह्यते परिमलेन[7] वधूः । ‘वह प्रापणे’ । कोटिभिरग्राभिर्मधु[8] वर्षतीति कोटिवर्षा । ‘वृष सेचने’ । लङ्कायामुप्यते[9] लङ्कोपिका[10] । ‘डुवप् बीजसन्ताने’ । लङ्कोपिका-नामानि । ‘स्पृक्कयनुगन्धद्रव्यमुपेल्लु’ ॥ १३३ ॥

[1] मरुच्चासौ माला च $K_6$, अत्र तुशब्द पादपूरणार्थः $K_6$ [2] गन्धसूचकत्वात् $F_3$, $Pt_2$. [3] स्पृश्यते स्पृक्का $D_2$, $K_6$ [4] $K_5$, $K_6$ *omit* सञ्ज्ञक [5] $J_2$ *adds* ‘लघि गतौ’, ‘अघि लघि गत्याक्षेपे’ $K_5$, $K_6$ [6] प्रसारणत्वात् $J_2$, प्रसरत्वात् $Pt_2$ [7] आशावधूत्वात् $B_1$, $K_5$, $K_6$, °वहत्वात् $J_2$ [8] नेमिभि. स्वरसं $F_2$, $Pt_2$ [9] I adds वितन्यते [10] लङ्कोयिकेति वा पाठ , तदा लङ्कायामूय(य्य ?)ते तन्यते, ‘ऊयी तन्तुसन्ताने’ $K_5$, $K_6$

(पा.) मरुन्माला—लङ्कोपिकेत्यपि । शेषे—‘स्पृड्निर्माल्या पङ्कमुष्टिर्माला च ब्राह्मणी मरुत्’ । तथा च वैद्यके—

> ‘स्पृङ्नीरुता पङ्कमुष्टिर्माला देवी लता गुरुः ।
> देवपुत्री देवजाता सिता पङ्कजमुष्टिका ॥

सुन्दरी च मरुत्कोटिवर्पा निर्मालिका वधूः ।
लङ्कोपिका ब्राह्मणी च निर्माल्या पिशुना तथा ॥'

इति । स्पृक्कानामानि । 'पिक्कचेट्टु' ॥ १३३ ॥

**तपस्विनी जटा मांसी जटिला लोमशा मिसी ।**
**त्वक्पत्रमुत्कटं भृङ्गं त्वचं चोदं वराङ्गकम् ॥ १३४ ॥**

(वि.) तपस्विनीति—जटायोगसाम्यात् तपस्विनी । जटाः सन्त्यस्या इति जटा । जटिला च । मांससदृशावयवत्वात्[1] मांसी । जटामांसीति वा पाठः । लोमानीव जटा अस्याः सन्तीति [2]लोमशा । मस्यतीति मिसी[3] । 'मसी परिणामे' । जटामांसीनामानि । 'जटामांसिअनेढि [4]गन्धद्रव्यमु' ॥ त्वग्भूयस्त्वात् त्वक् । त्वचं च । पत्रमिश्रितत्वात् पत्रम् । अतितीक्ष्णत्वाद् उत्कटम् । भृङ्गकार्ष्ण्यसाम्याद् भृङ्गम् । अग्निं चोदयतीति चोदम् । 'चुद प्रेरणे' । चोचमिति वा पाठः । वरं [5]श्रेष्ठमङ्गमस्येति वराङ्गकम् । वराङ्गकनामानि । '[6]लवङ्गपुचेट्टु' ॥ १३४ ॥

[1] अवयवयोगात् $K_1$, $K_6$; साम्यावयवत्वात् $F_2$, $Pt_2$. [2] लोमयोगात् $F_2$, $Pt_2$. [3] आमिषीति वा पाठः $K_5$, $K_6$. [4] 'जटामासिवेम्बगन्धद्रव्य' $J_2$. [5] $J_2$, $K_3$ add त्वक्प्रचुरं. [6] 'लवङ्गदहेसक' $J_2$.

(पा.) तपस्विनी—मिसी । 'स्यान्मास्यां शतपुष्पायां मधुरायां मिसी स्त्रियाम्' इति रभसकोशपाठात् मिसी । 'जटिला लोमशा मांसी तपस्विन्यामिपी मिषी[1]' इति वैजयन्तीपाठात् (पृ. १३१, श्लो. १००) मिषी । शेषे—

'स्त्रियां तपस्विपिशितपिशाचाम्बार्थवाचकाः ।
तथा भूतजटा कृष्णजटा हिस्रा च पूतना ॥'

स्त्रियां वर्तमानास्तपस्व्यादिपर्याया जटामांसीनामानि भवन्ति । यथा तपस्विनी तापसी पिशिती मांसी पिशाची क्रव्यादी अम्बा माता जननीत्यादयः । जटामांसीनामानि । 'जटामांसि' ॥ त्वक्पत्रं—वराङ्गकम् । त्वक्पत्रमेकपदमिति केचित् । 'सुरभेद प्रियं वर्णं वल्कं सुरभिवल्कलम्' इति वैद्यके । लवङ्गद्रुमत्वचो नामानि । 'लवङ्गपुचेक्क' ॥ १३४ ॥

[1] 'जटा' इति मुद्रितग्रन्थे.

**कर्चूरको द्राविडकः काल्यको वेधमुख्यकः ।**
**ओषध्यो जातिमात्रे स्युरजातौ सर्वमौषधम् ॥ १३५ ॥**

(वि.) कर्चूरक इति—[1]कर्जति रोगानिति कर्चूरक । 'कर्ज व्यथने'। द्रावयति रोगानिति द्राविडक । 'द्रु गतिहिंसाकौटिल्येषु'। कल्य निरामय करोतीति काल्यक । प्लीहादिरोगवेधे[2] मुख्यत्वात् वेधमुख्यक । 'व्यध ताडने'। कर्चूरकनामानि। 'गन्धकचोरसु'॥ जातिमात्रे[3] फलपाकादिव्यक्तिमात्रे वर्तमान ओषधिशब्द ईकारान्त ईकारान्तो वा स्त्रीलिङ्गो भवति। अजातौ फलपाकादिव्यक्तेरन्यत्र वर्तमान ओषधिशब्द औषधमित्यकारान्तनपुंसकलिङ्गो भवति ॥ १३५ ॥

[1] कृन्तति $K_5$ $K_6$ 'कृति छेदने' $D_2$, $K_6$ [2] मेदकत्वात् $B_1$, $K_6$
[3] लतादिजातय ओषध्य न तु त्रिफलादय । अजाताविति लतादिजातेरन्यत्र यस्मिन्नपि रोगापनयनक्षमं तदौषधम् $Pt_2$

(पा.) कर्चूरको—वेधमुख्यक । द्रव्यावल्याम्—

'कर्चूरो गन्धमूलश्च द्रविक[1] काल्य[1] एव च ।
वेधमुख्यो दुर्लभश्च कस्यचित्समता [1]शटी ॥'

इति । कर्चूरनामानि । 'कचूरसु'॥ ओषध्यो—स्युः । वनस्पतिवानस्पत्यक्षुपोलपलता तृणत्वक्सारादिभेदभिन्नोद्भिज्जातिमात्रे ओषध्यो वर्तन्ते । 'कृदिकारात्[2]' इति[2] वा ङीप्। 'ओषध्य फलपाकान्ता लता गुल्माश्च वीरुध ' इति काशिका (पृ ४४९, सू ८ ४ ६)। उद्भिज्जातिनाम। 'चेट्टुलु मोदलयिनवि'॥ अजातौ—औषधम्। रोगहर फलमूलघृतचूर्णक्षौद्रादिसर्वमौषध स्यात् । 'ओषधेरजातौ' (५ ४ ३७) इत्यण्। 'मन्दु'॥ १३५ ॥

[1] द्राविड, कार्श्य, शठी इति ध नि ३ ९४ [2] गणसूत्रम् under 4 1 45

**शाकाख्यं पत्रपुष्पादि तण्डुलीयोऽल्पमारिपः ।**
**विशल्याग्निशिखानन्ता फलिनी शक्रपुष्पिका ॥ १३६ ॥**

(वि.) शाकाख्यमिति—शक्यते भोक्तुमनेनेति शाकम् । 'शक्लृ शक्तौ'। पत्रपुष्पादि शाकाख्य शाकनामकम् । अत्र [1]श्लोक —

'मूलपत्रकरीराग्रफलकाण्डादिरूढकम् ।
त्वक् पुष्पं कवचं चेति शाकं दशविधं स्मृतम् ॥'

इति । [2]लघुतण्डुलाभबीजयोगात् तण्डुलीयः । अल्पं समर्दनं मृष्यति सहत इत्यल्पमारिषः । 'मृष सहने' । अल्पामपि मारिं व्याधिं स्यतीति वा । 'षोऽन्तकर्मणि' । तण्डुलीयनामनी । 'चिरिंकूरपेल्लु' ॥ विगलं शल्यमस्या इति विशल्या[3] । गर्भभेदकत्वाद् अग्निशिखेव तिष्ठतीत्यग्निशिखा[4] । बहुदेशव्यापित्वाद् अनन्ता[5] । फलानि सन्त्यस्या इति [6]फलिनी । शक्रप्रियपुष्पत्वात् शक्रपुष्पिका । शक्रपुष्प्यपीति वा पाठः । अग्निशिखानामानि । 'वेन्नवेदुरुकूर' ॥ १३६ ॥

[1] तदुक्तम् $F_2$ $Pt_2$ [2] °आभानि बीजान्यत्र $Pt_2$ [3] विशल्यं करोतीति $F_2$ $Pt_2$ [4] दीपनकारित्वात् $Pt_2$ [5] दूरप्रसरणात् $D_2$, $K_5$ $K_6$ [6] हलपर्यायवाचकत्वात् हलिनीति वा पाठः $Pt_2$

(पा.) शाकाख्य—पुष्पादि । पत्रपुष्पफलमूलादिरूपभोज्यं शाकशब्दवाच्यं भवति ।

'मूलपत्रकरीराग्रफलकाण्डादिरूढजा ।
[1]पुष्पं त्वक् कवचं चेति शाकं दशविधं स्मृतम् ॥'

'कूर' ॥ तण्डुलीयो—मारिषः ।

'[2]मारिषे जीवशाकः स्यादनाल्पे[3] तण्डुलीयकः ।
मेघनादो[4] विगण्डीरम् ॥'

इति [5]यादववचनात् । 'चिरिंकूर' । मारिषः, जीवः, शाकनाम । 'तोटकूर' ॥ विशल्या—शक्रपुष्प्यपि । फलिनीशाकनामानि । 'नादटिजालुकूर । अदे तरिगोगूरानुद्व' ॥ 'तिन्दुकाकारपत्रस्तु विटपाग्निशिखा मता' ॥ १३६ ॥

[1] त्वक्पुष्पं कवकं चेति $B_2$ [2] मारिष $B_2$ [3] तत्र $B_2$ [4] मेघनादोऽपि गण्डीर $B_2$ [5] वैजयन्ती (पृ ५७, श्लो १५०–१)

**स्याद्दृक्षगन्धा छगलाण्ड्यावेगी वृद्धदारकः ।**
**जुङ्गो ब्राह्मी तु मत्स्याक्षी वयःस्था सोमवल्लरी ॥ १३७ ॥**

(टि.) स्यादिति—ऋक्षवत् निर्मान् [1]गन्धयतेऽर्दयतीति ऋक्षगन्धा । 'गन्ध अर्दने' । छगलस्याजस्येवाण्डान्यग्रन्थयस्या इति छगलाण्डी । छगलाङ्घ्रीति वा पाठः ।

धातुवृद्धिकरत्वाद् आवेगोऽस्या अस्तीति आवेगी[3]। वृद्धत्व दारयतीति[4] वृद्धदारक.। 'दृ विदारणे'। जुङ्गति कफाद्यादिदोषान्[5] वर्जयतीति जुङ्ग.। 'जुगि वर्जने'। ऋक्षगन्धानामानि। 'वोद्दि क्रूरपेल्लु'॥ [6]पावनत्वात् ब्राह्मी। मत्स्याक्षितुल्यपुष्पत्वात् मत्स्याक्षी। [7]वयसि तिष्ठतीति वय स्था। 'ष्ठा गतिनिवृत्तौ'। सोमवत् शीतवीर्यत्वात् सोमवल्लरी[8]। ब्राह्मीनामानि। 'पोन्नगण्टिकूरपेल्लु'॥ १३७॥

[1] ग-धयति $K_5$, $K_6$, $Pt_2$　　[2] छगलाङ्घ्रसदृशावयवत्वात् छगलाङ्घ्री $K_3$, $K_6$　　[3] वृष्यत्वादावेगोऽस्या $D_2$, $K_5$　　[4] $B_1$, $K_3$, $K_6$ add नाशयति　　[5] °रोगान् $D_2$, $K_3$, $K_5$　　[6] ब्राह्मणीवत् पवित्रत्वात् $B_1$, $D_2$, $K_3$　　[7] वय स्थापयति $F_2$, $Pt_2$.　　[8] सोमाश्रभूतवल्लरीत्वात् $B_1$, $D_2$, G

(पा.) स्याद्दक्षगन्धा—जुङ्ग। जुङ्गाग्यशाकनामानि। 'वोद्धिकूर'॥ ब्राह्मी तु। मण्डूकब्राह्मीनाम। 'ब्राह्मी कपोतवेगा स्यान्माण्डूकीति सुवर्चला' इति [1]वैजयन्ती॥ मत्स्याक्षी। लोहमारकनाम। 'योन्नगंटि'॥ 'मत्स्याक्ष्या [2]शालशारिण्डौ पत्तूरो लोहमारक' इति वैजयन्ती (पृ. ५८, श्लो १५६)॥ वयस्था—वल्लरी। सोमवल्लरीनामानि। 'सेंमेदकूर'। 'ब्राह्मधा सत्यवती [3]ब्राह्मी मत्स्याक्षी सोमवल्लरी' इति वैजयन्ती (पृ ५७, श्लो १४४)॥ १३७॥

[1] मुद्रितग्रन्थे न दृश्यते श्लोकार्धम्　　[2] शालीनौ इति मुद्रितग्रन्थे　　[3] ब्रह्मी $B_3$

**पटुपर्णी हैमवती स्वर्णक्षीरी हिमावती।**
**हयपुच्छी तु काम्बोजी माषपर्णी महासहा॥ १३८॥**

(टि.) पटुपर्णीति—पटूनि श्रेष्ठानि पर्णान्यस्या इति पटुपर्णी[1]। [2]हिमवति [3]प्रचुरत्वाद् हैमवती। स्वर्णवर्णं क्षीरमस्या इति [4]स्वर्णक्षीरी। हिम[5] शीतलत्वमस्या इति हिमावती। स्वर्णक्षीरीनामानि। 'कस्तोरुपुचेट्टु'॥ [6]हयपुच्छाभशाखत्वाद् हयपुच्छी। काम्बोजदेशे भवा [7]काम्बोजी। माषस्येव पर्णान्यस्या माषपर्णी। महान्[8] रोग सहतेऽनया महासहा। 'षह मर्षणे'। माषपर्णीनामानि। 'कारुमिनुमु'॥ १३८॥

[1] श्रेष्ठपर्णत्वात् $D_2$, $K_3$, $K_4$, वर श्रेष्ठ पर्णमस्या वरपर्णी $K_3$, $K_3$　　[2] हिमवद्गिरौ $F_2$, $Pt_2$　　[3] प्रचुर $K_3$, $K_4$, $K_6$　　[4] स्वर्णवर्णक्षीरत्वात् $K_3$, $K_6$　　[5] हिमत्वमस्या $K_3$, $K_6$, हेमवती $D_2$, $K_2$　　[6] हयपुच्छाकारत्वात् $F_2$, $Pt_2$　　[7] काम्बोजी $K_3$, $K_6$.　　[8] महारोगान् सहत इति $Pt_2$

(पा.) पटुपर्णी—हिमावती। शेषे—'क्षीरिणी काञ्चनाह्वा च तिक्तदुग्धा च कर्पिणी'। हेमदुग्धिकानामानि। 'रेड्डिवारिनानावालु'।

'हेमपीत पयस्तस्या हिमवद्भूमिसंभवा।
सा नागजिह्विकाकारा तन्मूल वणिगौषधम्॥'

हयपुच्छी—महासहा। वनमापनामानि। 'कारुमिनुमु'॥ १३८॥

**तुण्डिकेरी रक्तफला बिम्बिका पीलुपर्ण्यपि।**
**बर्बरा कबरी तुङ्गी खरपुष्पाजगन्धिका॥ १३९॥**

(नि.) तुण्डिकेरीति—[1]तुण्डिकमोष्ठबिम्बमियर्त्यनुकरोतीति तुण्डिकेरी। 'ऋ गतौ'। [2]रक्तवर्णफलत्वाद् रक्तफला। फलैरोष्ठबिम्बमनुकरोतीति [3]बिम्बिका। पीलोरिव पर्णान्यस्याः पीलुपर्णी। तुण्डिकेरीनामानि। '[4]दोण्डचेट्टुपेल्लु'॥ कुटिलह्रस्वकेशाभत्वाद् बर्बरा[5]। [6]कबरी च। विरुद्धलक्षणया तुङ्गत्वात् [7]तुङ्गी। खराणि परुषाणि पुष्पाण्यस्याः खरपुष्पा[8]। अजस्येव गन्धोऽस्या अस्तीति अजगन्धिका। खरपुष्पानामानि॥ 'वायण्टचेट्टुपेल्लु'॥ १३९॥

[1] तुण्ड वदनमाश्रयत्वेनास्येति, तुण्डिकमोष्ठ $F_2$, $Pt_2$ [2] रक्त फलमस्याः $Pt_2$
[3] ओष्ठस्य बिम्बमाकृतिरिव फलमस्याः $F_2$ $Pt_2$ [4] 'तोंडेयबीलु' $J_2$ [5] परुषपर्णत्वात् $F_2$, $Pt_2$ [6] कबराम्यात् $J_2$, $Pt_2$ [7] अतितीक्ष्णत्वात् $F_2$, $Pt_2$. [8] तीक्ष्ण पुष्पत्वात् $F_2$, $Pt_2$

(पा.) तुण्डिकेरी—पीलुपर्ण्यपि। बिम्बिलतानामानि। 'दोंड'॥ बर्बरा—अजगन्धिका[1]। बर्बराशाकनामानि। 'वायिंट[2]'॥ १३९॥

[1] अजगन्धिनी $B_3$ [2] 'वायिट' $B_3$

**एलापर्णी तु सुवहा रास्ना युक्तरसा च सा।**
**चाङ्गेरी चुक्रिका दन्तशठाम्बष्ठाम्ललोणिका॥ १४०॥**

(नि.) एलापर्णीति—एलाया[1] इव पर्णान्यस्या इति एलापर्णी। सुष्ठु वहत्यामोदमिति[2] सुवहा। 'वह प्रापणे'। रस्यत इति रास्ना। 'रस आस्वादने[3]'। युक्तः प्रियो रसोऽस्या इति युक्तरसा। एलापर्णीनामानि। 'मन्नगरनपुल्लु'॥ [4]चाङ्ग

दन्तपटुत्वमीरयति अपगमयतीति चाङ्गेरी[6]। चकन्त्यनेनेति चुक्रः अम्लः। तद्योगात् चुक्रिका। 'चक तृप्तौ'। चुक्किकेति वा पाठः। चुक्कयन्ति व्यथन्तेऽस्या उष्णवीर्यत्वात् [7]चुक्किका। 'चुक व्यथने'। आम्लत्वाद् दन्तानां शठं करोतीति दन्तशठा[8]। अम्ब्वेव तिष्ठतीति अम्बष्ठा[9]। अम्लरसेन दन्तान् लुनातीति अम्ललोणिका[10]। 'लूञ् छेदने'। अम्ललोणिकानामानि। 'पुलिचिन्तपेल्लु[11]'॥ १४०॥

[1] एलापर्णानीव पर्णानि $B_1$, $J_2$. [2] रसे $F_2$, $Pt_2$ [3] आस्वादे $Pt_2$. [4] रसेन युक्ता $F_2$, $Pt_2$. [5] $F_3$, $Pt_2$ add चङ्गो दक्षः तस्य भावः चाङ्गं. [6] $K_6$ adds 'ईर क्षेपे.' [7] चक्रिका $K_5$, $K_6$. [8] दन्तान् शठतीति, 'शठ हिंसासङ्क्लेशनकैतवेषु' $K_5$, $K_6$. [9] अम्बे शब्दे $D_2$, $K_5$, $K_6$; अम्बशब्दे $K_2$; I adds 'ष्ठा गतिनिवृत्तौ'. [10] आम्ल° $Pt_2$. [11] 'इलिहुवे' $J_2$.

(पा.) एलापर्णी—युक्तरसा च सा। रास्नानामानि। 'कारुयालकि'॥ चाङ्गेरी—अम्ललोणिका। वैद्यके[1]—'क्षुद्राम्लिका तु चाङ्गेरी लोणिका चाम्ललोणिका'। इति। चाङ्गेरीनामानि। 'पुलिचिचलम्'। अम्बरोहिकेति पाठः साधुः। अम्बरोलिकेति केचित्॥ १४०॥

[1] ध. नि. ५. ३६

**सहस्रवेधी चुक्रोऽम्लवेतसः शतवेध्यपि।**
**नमस्कारी गण्डकाली समङ्गा खदिरेत्यपि॥ १४१॥**

(वि.) सहस्रवेधीति—[1]सहस्रसंख्याकैर्मूलैर्भुवं विध्यतीति सहस्रवेधी। शतवेधी च। [2]चुक्रयन्ति व्यथन्तेऽस्मादुष्णवीर्यात् चुक्रः। 'चुक व्यथने'। [3]अम्लरससंयुक्तो वेतसः अम्लवेतसः। अम्लवेतसनामानि। 'पुल्ल प्रब्बलिपेल्लु'॥ [4]अञ्जलिरूपत्वान्नमस्करोतीव नमस्कारी। गण्डेषु ग्रन्थिषु कालिमास्या[5] अस्तीति गण्डकाली। समन्तादङ्गतीति समङ्गा। 'अगि गतौ'। सम्यगङ्गान्यस्या इति वा[6]। खदिरवत्[7] कृष्णसूक्ष्मपर्णत्वात् खदिरा। खदिरानामानि। '[8]मुनुगुदामरपेल्लु'॥ १४१॥

[1] सहस्र रोगान् विध्यतीति, 'व्यध ताडने' $F_2$, $K_3$, $Pt_2$. [2] चक्यन्ते वध्यन्ते दन्ता अनेनेति चुक्रः। 'चक प्रतिघाते' $Pt_2$ [3] अम्लरसोपेतः $D_2$, $K_5$, $K_6$. [4] अञ्जल्याकारपर्णशालिनीत्वात् $K_5$, $K_6$; $K_6$ adds पर्णैर्नमस्कुर्वन्निव तिष्ठति. [5] काली $F_2$, $Pt_2$. [6] संकुचितानि पत्ररूपाण्यङ्गानि $F_2$, $Pt_2$. [7] खदिर इव सूक्ष्मपत्रत्वात् $F_2$, $Pt_2$. [8] 'मोगुडुदामर' $K_6$; 'मुगुल्तावरे' $J_2$

(पा.) सहस्रवेधी—शतवेध्यपि। अम्लवेतसनामानि। 'अम्लवेतसम्'। नमस्कारी—खदिरेत्यपि। वैद्यके—

'रक्तपादी[1] शमीपत्रा समङ्गाञ्जलिकारिका।
लज्जालुर्गण्डकारी च रास्ना खदिरिकेत्यपि॥'

इति। अञ्जलिकारिकानामानि। 'मुणुगुदामर'॥ १४१॥

[1] पूर्वार्धम्—ध नि ४ १०९

**जीवन्ती जीवनी जीवा जीवनीया मधुस्रवा।**
**कूर्चशीर्षो मधुरकः शृङ्गह्रस्वाङ्गजीवकाः॥ १४२॥**

(वि.) जीवन्तीति—जीवन्ति [1]प्राणिनोऽनयेति जीवन्ती। जीवनी। जीवा। जीवनीया च। 'जीव प्राणधारणे'। मधु स्रवतीति मधुस्रवा। 'स्रु[3] गतौ'। जीवन्तीनामानि। 'पालक्रूरपेल्लु'॥ कूर्चवत् श्मश्रुवत् [4]शीर्षमस्येति कूर्चशीर्ष। मधुरत्वात् [5]मधुरक। [6]शृङ्गाभानयवयोगात् शृङ्ग। [7]ह्रस्वान्यङ्गान्यस्य ह्रस्वाङ्ग। जीवयतीति जीवक[8]। जीवकनामानि। '[9]जीवकमुसुगन्धद्रव्यमुपेल्लु'॥ १४२॥

[1] $F_2$ $J_2$ $Pt_2$ omit [2] $B_1$ $J_2$ omit 3 lines [3] 'स्नु स्नवणे' $Pt_2$
[4] समशीर्षत्वात् $F_2$ $Pt_2$ [5] मधुरत्वात् मधुरक $K_3$ [6] शृङ्गयोगात् $F_2$ $Pt_2$
[7] ह्रस्वावयवत्वात् $Pt_2$ [8] $K_6$ adds 'जीव प्राणधारणे' [9] 'जीवरमु' $K_2$ 'जीवर' $J_2$

(पा.) जीवन्ती—मधुस्रवा। जीवन्तीनामानि।

'चक्षुष्या सर्वदोषघ्नी जीवन्ती मधुरा हिमा।'

इति धन्वन्तरि (ध नि १ १४१)। 'पालक्रूर'॥ कूर्चशीर्षो—जीवकः। शेषे—
'दीर्घायु[1] सर्जक स्वादु प्राणदश्चिरजीव्यपि'। जीवकनामानि। 'जीवकमु'॥ १४२॥

[1] 'ह्रस्वाङ्गो मधुर स्वादु प्राणदश्चिरजीव्यपि' इति ध नि १ १२३

**किराततिक्तो भूनिम्बोऽनार्यतिक्तोऽथ सप्तला।**
**विमला सातला भूरिफेना चर्मकषेत्यपि॥ १४३॥**

(वि.) किराततिक्त इति—तिक्तरसयोगात् तिक्त, किरातदेशे भवत्तिक्त किराततिक्त। शुचि निम्बो भूनिम्ब। अनार्या किराता तद्देशे भवत्तिक्त [1]अनार्यतिक्त।

भूनिम्बनामानि। 'नेलवेमुपेल्लु'॥ सपति स्वावयवेषु समेता[2] सप्तला। 'षप समवाये'। विगतं मलमनयेति[3] विमला। सातं सुखं लातीति[4] सातला[5]। सतां सुखं लातीति वा। भूयः फेनबिन्दवोऽस्याः सन्तीति भूरिफेना। चर्म कपतीति चर्मकषा। 'कष हिंसायाम्'। चर्मकसेति पाठे चर्म कसति वर्धतेऽत्रेति चर्मकसा। 'कस गतौ'। सप्तलानामानि। 'सम्वरेनिपेल्लु'॥ १४३॥

[1] तिक्तरसश्च B₁, K₅. [2] समवैति K₅, K₆ [3] अस्याः D₂, K₅, K₆. [4] D₂, K₅, K₆ add रोगाद्यपनयनेन. [5] I, J₂ add 'ला दाने'.

(पा.) किराततिक्तो—अनार्यतिक्तः। भूनिम्बनामानि। 'नेलवेमु'। अनुक्तम्—'[1]काकजङ्घा तु शार्ङ्गेष्टा[2] पडश्रा च विलोमिका[3]'। 'वेलमलन्दि'। स भूनिम्बावान्तरभेदः॥ अथ सप्तला—चर्मकषेत्यपि। चर्मैव कसति वर्धत इति चर्मकसेति दन्त्योपधः सुभूतिटीकायां व्युत्पादितः। सातलानामानि।

> 'फेनाभबिन्दुयुक्तेयं पश्चाद्देशसमुद्भवा।
> सातरिष्येव विख्याता गन्धद्रव्यं वणिग्धनम्॥'

'सवरेणि'॥ १४३॥

[1] 'दास्या पडश्रा शार्ङ्गेष्टा काकजङ्घा विलोमिका' इति वैजयन्त्याम् (पृ. ५४, श्लो १११). [2] शार्ङ्गिष्टा B₂. [3] विलोलिका B₂.

## वायसोली स्वादुरसा वयःस्थाथ मकूलकः।
## निकुम्भो दन्तिका प्रत्यक्श्रेण्युदुम्बरपर्ण्यपि॥ १४४॥

(वि.) वायसोलीति—वायसवदुलति चलतीति वायसोली। 'उल सचलने'। अवलीयत इति वा। 'ली श्लेषणे'। स्वादू रसोऽस्या इति स्वादुरसा। वयसि स्थीयतेऽनयेति वयःस्था। कायस्थेति पाठे काये कुक्षौ तिष्ठतीति [1]कायस्था। 'ष्ठा गतिनिवृत्तौ'। वयःस्थानामानि। 'काकोलिमि'॥ [2]मङ्क्यते चित्रत्वात् मकूलकः। 'मकि मण्डने'। रसाधारत्वेन निश्चितः कुम्भो निकुम्भः। [3]कफादिदोषाः दाम्यन्त्युपशाम्यन्त्यनयेति दन्तिका। 'दमु उपशमने'। प्रत्यक् तिर्यक् पर्णश्रेणयोऽस्याः सन्तीति [4]प्रत्यक्श्रेणी। उदुम्बरस्येव [5]पर्णान्यस्या उदुम्बरपर्णी। दन्तिकानामानि। 'दन्तिचेट्टुपेल्लु'॥ १४४॥

[1] क्रीयते ज्ञायते कयः । 'कि ज्ञाने' । कये वुध्ने तिष्ठतीति कयस्था $K_5$, $K_6$. [2] मङ्क्ते राजते $B_1$, $J_2$, $K_3$. [3] दम्यन्ते दोषा अनयेति $F_2$, $Pt_2$ [4] प्रत्यग्भवती(न्ती) प्रत्यक् श्रेणिरस्याः $Pt_2$. [5] पर्णानीव पर्णानि $Pt_2$.

(पा.) वायसोली—वयःस्था । कायस्थेति केचित् । अत्र कालिका काकोली शुक्लादयः शब्दाश्च । गौडदेशप्रसिद्धकाकोलीनामानि । 'काकोलीकारुकोरित्रि' ॥ अथ मकूलकः—उदुम्बरपर्ण्यपि । दन्तीनामानि । 'दन्तिचेट्टु' ॥ १४४ ॥

## अजमोदा तूग्रगन्धा ब्रह्मदर्भा यवानिका ।
## मूले पुष्करकाश्मीरपद्मपत्राणि पौष्करे ॥ १४५ ॥

(वि.) अजमोदेति—अजस्येव[1] मोदो गन्धोऽस्या अस्तीति अजमोदा । उग्रो गन्धोऽस्या उग्रगन्धा । ब्रह्मसंबन्धित्वात् दर्भाकारत्वाच्च ब्रह्मदर्भा[2] । यवानीव[3] सूक्ष्मपुञ्जसरूपत्वाद् [4]यवानिका । अजमोदानामानि । 'अजमोदमतुनोमसुपेल्लु[5]' ॥ स्थलपद्मिनीमूलत्वेन पुष्करस्य मूलमिदं पुष्करम्[6] । [7]काश्मीरदेशे भवं काश्मीरम् । पद्मस्येव पत्राण्यस्य पद्मपत्रम् । पुष्करस्येदं पौष्करम् । पुष्करमूलनामानि । 'पुष्करमूलसुपेल्लु[8]' ॥ १४५ ॥

[1] अजवत् $K_5$, $K_6$. [2] ब्रह्मदर्भत्वात् $D_2$, $K_3$ [3] $J_2$ adds वृत्त°. [4] यवसादृश्यात् $F_2$, $Pt_2$. [5] 'ओमपुंगूरपेरु' I; 'अवचिका' $J_2$. [6] $K_5$, $K_6$ add पुष्णातीति पुष्करं; 'पुष पुष्टौ' $K_2$. [7] काश्मीरदेशजन्यत्वात् $K_5$, $K_6$, कश्मीर° $K_2$. [8] $K_3$ adds 'नाल्गु'.

(पा.) अजमोदा—यवानिका । इयं द्विविधा । एका गन्धद्रव्यम् । अपरा क्षेत्रजा । द्वयोर्नामानि । 'अजमोदमुत्रु वोमसुत्रु' ॥ मूले—पौष्करे । पौष्करे मूले पुष्करकाश्मीरपद्मपत्राणि स्युः । द्रव्यावल्यां तु—

> 'मूलं पुष्करमूलं च पौष्करं पुष्कराह्वयम् ।
> काश्मीरं पुष्करजटावीरं तत् पद्मपत्रकम् ॥
> श्वासारिब्रह्मतीर्थं च पद्मकं पुण्यसागरम् ॥'

इति मूलपौष्करशब्दौ पर्यायत्वेनोक्तौ ॥ १४५ ॥

## अव्यथातिचरा पद्मा चारटी पद्मचारिणी ।
## काम्पिल्यः कर्कशश्चन्द्रो रक्ताङ्गो रोचनीत्यपि ॥ १४६ ॥

(वि.) अव्यथेति—न व्यथतेऽनयेति [1]अव्यथा। 'व्यथ भयचलनयो'। अत्यर्थं चरति व्याप्नोतीति अतिचरा। 'चर[2] गतिभक्षणयो'। [3]पद्मसादृश्यात् पद्मा। चरति व्याप्नोतीति चारटी। पद्ममिव चरतीति पद्मचारिणी। 'मेट्ट (काश्मीरदेशपु) [4]दामरपेल्लु'॥ कम्पिल्याख्यदेशे भव काम्पिल्य। कटुतिक्तोष्णरूपत्वात् कृणोतीति कर्कश[5]। 'कृञ् हिंसायाम्'। रोगहरणेन[6] चन्दयत्याह्लादयतीति चन्द्र। 'चदि आह्लादने'। रक्तमङ्गमस्येति रक्ताङ्ग। रोचयति [8]रक्तपर्णेनेति रोचनी। 'रुच दीप्तौ'। रोचनीनामानि। 'कम्पिल्लुपेल्लु'॥ १४६॥

[1] न व्यथयति $K_5$, $K_6$ [2] 'चर गतौ' $D_2$, $K_5$ [3] पद्मामत्वात् $K_2$, $K_6$ [4] '°मन्दलितामरपेरु' $K_5$ [5] कठिनत्वात् कर्कश $F_2$, $Pt_2$ [6] पित्तश्लेष्मादिरोगिणो रोगहरत्वेन $D_2$, $J_2$, $K_6$ [7] रोचते $Pt_2$ [8] °वर्ण° I

(पा.) अव्यथा—पद्मचारिणी। शेषे—'पद्मावती गन्धमूला लक्ष्मी श्रेष्ठा च पुष्करा'। स्थलपद्मिनीनामानि। 'मेट्टदामर'॥ काम्पिल्य—रोचनीत्यपि। 'रजतो रोहिताङ्गश्च कर्कशो रक्तचूर्णक। करम्ब स्यात्' इतीन्दु। काम्पिल्यनामानि। 'कम्पिल्लु'॥ १४६॥

**प्रपुन्नाटस्त्वेडगजो दद्रुघ्नश्चक्रमर्दकः।**

**पद्माट उरणाक्षश्च पलाण्डुस्तु सुकन्दकः॥ १४७॥**

(वि.) प्रपुन्नाट इति—प्रकर्षेण पुमांस नाटयतीति प्रपुन्नाट। [1]प्रकर्षेण पुनातीति वा[2]। 'पूञ् पवने'। बल प्रपुणतीति प्रपुण्णाट इति वा पाठ। 'पुण कर्मणि शुभे'। एडाभपुष्पत्वाद्[3] एड। गज्यत[4] इति गज.। 'गज शब्दे'। एडश्चासौ गजश्च एडगज। दद्रु रोग हन्तीति दद्रुघ्न[5]। चक्राणि दद्रुमण्डलानि मृद्नाति नाशयतीति चक्रमर्दक[6]। 'मृद[7] क्षोदे'। पद्मवदटति चरतीति पद्माट। 'अट पट गतौ'। उरणो[8] मेषस्तदक्षिसदृशपुष्पत्वाद् उरणाक्ष। उरणाख्य इति वा पाठ। तदोरणस्य मेषस्याख्या अस्येति। पद्माटनामानि। 'तगिरसचेट्टुपेल्लु'॥ कफ पिपर्ति पूरयतीति पलाण्डु। 'पृ पालनपूरणयो'। शोभन कन्दोऽस्यास्तीति सुकन्दक। पलाण्डुनामनी॥ '[9]नीरुल्लि पेरु'॥ १४७॥

[1] $D_2$, $K_1$, $K_6$ add कफहरत्वेन [2] प्रपुनाट $K_2$, $K_3$ [3] मेषाक्षितुल्यत्वात् $K_5$ [4] $B_1$, I, $K_3$ add शब्द्यते, श्रेष्ठत्वात् $F_2$, $Pt_2$ [5] $F_2$, $Pt_2$ add 'हन हिंसागत्यो'. [6] मर्दन $J_2$ [7] 'मृद मर्दने' $K_3$, $K_6$ [8] उरणस्तैडस्याक्षितुल्यपुष्पत्वात् $B_1$, $K_6$. [9] 'दम्पुनीरुल्लि' $J_2$

(पा.) प्रपुन्नाटः—उरणाक्षश्च । 'प्रपुन्नटः प्रपुन्नाडो[1] दद्रुघामनिघातकः' इति वैद्यके । प्रपुन्नाटनामानि । 'तंटेपुचेट्टु' ॥ पलाण्डुस्तु सुकन्दकः । पलण्डुश्च पलण्डश्च पलाण्डुनामनी । 'नीरुल्लि' ॥ १४७ ॥

[1] प्रपुन्नाटः $B_3$.

**लतार्कदुर्द्रुमौ तत्र हरितेऽथ महौषधम् ।**
**लशुनं गृञ्जनारिष्टमहाकन्दरसोनकाः ॥ १४८ ॥**

(वि.) लतार्क इति—[1]लताभिः शाखाभिरर्च्यत इति लतार्कः । अपवित्रत्वेन दुष्टो द्रुमो दुर्द्रुमः । हरितपलाण्डुनामनी । 'पचनिनीरुल्लिपेरु' ॥ महच्च तदौषधं च महौषधम् । [2]अश्यते भुज्यत इति लशुनम् । 'अश भोजने' । गृञ्ज्यते कुत्सितं शब्द्यत इति गृञ्जनः[3] । 'गृजि शब्दे' । न [4]रिष्यतीत्यरिष्ट । 'रिष हिंसायाम्' । महान् कन्दो यस्य सः महाकन्दः । षट्सु रसेषु एकेनाम्लरसेनोनः [5]रसोनकः । लशुननामानि । 'वेल्लुल्लिपेल्लु' ॥ १४८ ॥

[1] लतार्कस्यार्काह्वयस्यावयवसदृशावयवत्वात् लतार्कः $B_1$, $D_3$, $K_3$. [2] लशति कफादिकमिति, 'लश भेदने' $D_2$, I, $K_2$, $K_5$. [3] गृञ्जनं $D_2$, $K_2$, $K_5$. [4] रिष्यते $K_5$, नास्ति रिष हिंसास्मादिति $F_2$, $Pt_2$. [5] अम्लरसेन कदूनत्वात् $D_2$, $K_r$, $K_6$.

(पा.) लतार्कदुर्द्रुमौ—हरिते । हरितपलाण्डुनामनी । 'पचनिनीरुल्लि' । अथ महौपधं—रसोनकाः । लशुननामानि । 'वेल्लुल्लि' । वैद्यके तु[1]—

'लशुनं दीर्घपत्रं च पिच्छागन्धो महौषधम् ।
पलण्डुश्च पलाण्डुश्च लतार्कश्च पताकिका ॥
गृञ्जनो यवनेष्टश्च पलाण्डोर्दश जातयः ॥'

इत्युक्तम् ॥ १४८ ॥

[1] इति सुश्रुतेनोक्तत्वात्—भानुजीदीक्षितः (पृ. २०३).

**पुनर्नवा तु शोथघ्नी वितुन्नं सुनिषण्णकम् ।**
**स्याद्वातकः शीतलोऽपराजिता शणपर्ण्यपि ॥ १४९ ॥**

(वि.) पुनर्नवेति—पुनः पुनर्नवो[1] भवतीति पुनर्नवा। पुनर्भव इति वा पाठः। [2]शोथं हन्तीति शोथघ्नी। शोफघ्न इति वा पाठः। 'हन हिंसागत्योः'। शोथघ्नीनामनी। '[3]गलिजेरुपेरु'॥ वितुद्यते विशेषेण छिद्यत इति वितुन्नम्। 'तुद व्यथने'। सुष्ठु निषीदन्ति [4]गुणा अत्रेति[5] सुनिषण्णकम्। 'षद्लृ विशरणगत्यवसादनेषु'। वितुन्ननामनी। नीरुचेञ्चलिपेल्लु॥ वातं करोतीति वातकः। अत एव शीतं लातीति शीतला। रोगैरपराजितत्वाद्[6] अपराजिता। शणस्येव पर्णान्यस्या शणपर्णी। शणपर्णीनामानि। 'सोमिद्पुचेट्टुपेल्लु[7]'॥ १४९॥

[1] नवीभवति $B_1$, $K_5$ [2] शोफ $J_2$ [3] 'गणक्षिलु' $J_2$ [4] $D_2$, $K_5$, $K_6$ add दीपकत्वादि° [5] आसिन् $K_5$, $K_6$ [6] रोगान् जिता, 'जि अभिभवे' [7] 'उल्गु' $J_2$

(पा.) पुनर्नवा—[1]शोफघ्नी। पुनर्नवानामनी। 'गलिजेरु'।

'शोफघ्न्या पूरणा[2] पूरी वर्षाभ्वी जीवबोधिनी[3]॥
पुनर्नवा च रक्ताया तस्या योग्या कटिल्लका[4]।
श्वेताया वृश्चिकोऽल्पाया दीर्घपत्री विटाटिका॥
अस्या जात्यन्तरे [5]स्वल्पे पूरणी [6]हस्तिपूरणी॥'

इति वैजयन्ती (पृ ५७, श्लो. १४५-७)। वितुन्नं सुनिषण्णकम्। जलचुक्रिकानामानि। 'नीरुचिचिल्म्'। स्याद्वातकः—शणपर्ण्यपि।

'वलापराजिता मोटा स्यन्दा शीतलवातलः।'

इत्यायुर्वेदप्रकाशोक्त्या शीतलवातल इत्येकपदमिति केचित्। शणपर्णीनामानि। 'सोमिदम्'॥ १४९॥

[1] शोभघ्नी $B_2$ [2] पूरण पुर $B_2$ [3] बोधनी $B_2$ [4] कटुल्लक $B_2$ [5] सर्वे $B_2$ [6] हस्त° $B_2$

**पारावताङ्घ्रिः कटभी पण्या ज्योतिष्मती लता।**
**वार्षिकं त्रायमाणा स्यात् त्रायन्ती बलभद्रिका॥ १५०॥**

(वि.) पारावताङ्घ्रिरिति—पारावताङ्घ्रिसदृशावयवयोगात् [1]पारावताङ्घ्रिः। कटत्यावृणोतीति [2]कटभी। 'कटे वर्षावरणयोः'। पण्यते स्तूयत[3] इति पण्या। 'पण

व्यवहारे स्तुतौ च'। ज्योतिरुष्णमस्या अस्तीति ज्योतिष्मती[1]। दूरप्रसरात्[5] लता[6]। ज्योतिष्मतीनामानि। 'एक्कुडुर्दिगेपेल्लु'॥ वर्षासु भवं वार्षिकम्। रोगेभ्यस्त्रायत इति त्रायमाणा। 'त्रैङ् पालने'। त्रायन्ती च। बलेन प्राणेन भद्रत्वात् बलभद्रिका[7]। त्रायमाणानामानि। 'कटुगानुगुपेल्लु'॥ १५० ॥

[1] रक्तत्वेन पारावताङ्घ्रिसदृशात् $F_2$, $Pt_2$. [2] कटतिः $B_1$, कटती $J_2$. [3] $B_1$, $K_2$, $K_3$ add मधुकरित्वात्, मेधाकरित्वात् I, $J_2$. [4] अभ्यामावयवदृशात् $D_2$, $K_3$, $K_6$. [5] °प्रसरणात् $K_5$, $K_6$ [6] $J_2$ adds लतति, 'लति व्याप्तौ'. [7] बलेन भद्रिका $F_2$, $Pt_2$.

(पा.) [1]पारावताङ्घ्रि.—लता। शेषे—

'ज्योतिष्का साग्निभा सा च लवणोक्ता च दुर्मदा।
स्यात्सुपर्णलता चैन्द्री त्रिपर्णी किंशुकापि च॥'

ज्योतिष्मतीनामानि। 'मानेरुदीग'॥ वार्षिकं—बलभद्रिका। त्रायन्तीनामानि। 'कलुनान्त'॥ १५० ॥

[1] कटभिरिति पाठः $B_3$

## विष्वक्सेनप्रिया घृष्टिर्वाराही बदरेति च।
## मार्कवो भृङ्गराजः स्यात् काकमाची तु वायसी॥ १५१ ॥

(वि.) विष्वक्सेनप्रियेति—[1]विष्वक्सेनस्य प्रिया विष्वक्सेनप्रिया। वराहै-र्घृष्यत इति [2]घृष्टिः। 'घृष सङ्घर्षणे'। [3]वराहैराक्रान्ता वाराही। बदति स्थिरीभवतीति बदरा। 'बद स्थैर्ये'। वाराहीनामानि। 'पांचितीगेपेल्लु'॥ मार्कः सम्पर्कः औषधेषु तं वातीति मार्कवः[4]। 'वा गतिगन्धनयोः'। [5]भृङ्गवद् राजते भृङ्गराजः। 'राजृ दीप्तौ'। भृङ्गराजनाम्नी। [6]'गुंटगल्गरपेल्लु'॥ काकान् मच्यत इति काकमाची। 'मचि धारणोच्छ्रायपूजनेषु'। काकमूचीति पाठे काकवर्णेन मूचते सवध्यत इति काकमूची। 'मूङ् बन्धने'। वायसवर्णरसत्वाद् वायसी। 'कांचिचेट्टुपेल्लु[7]'॥ १५१ ॥

[1] विष्वक्सेनप्रियत्वात् $F_2$, $Pt_2$. [2] घृष्टिरिति पाठे प्रयोगबाहुल्याद् घकारस्य गकारः $D_2$, $K_1$, $K_6$ [3] वराहाक्रान्तत्वात् $K_6$. [4] औषधादिरोगान् मार्जयति मार्कवः। 'मृजूष् शुद्धौ' $B_1$, $J_2$, $K_6$, मार्जवः $K_3$. [5] $K_5$, $K_6$ add वर्णात्. [6] 'गदया' $J_2$. [7] 'कांचुरुकगे' $J_2$.

(पा.) विष्वक्सेनप्रिया—वदरेत्यपि। यद्रसयोगेन तक्रस्यानता तल्लतानामानि। 'पार्चितीगे'॥ मार्कवो—स्यात्। द्रव्यावल्याम्—

'भृङ्गारको भृङ्गराजो भृङ्गः स्यात् केशरञ्जन.।
भृङ्गारकेशरागा च भृङ्गराजार्थवाचका.॥'

इति। भृङ्गराजनामानि। 'गुटकलगर'। काकमाची—वायसी। वैद्यके—'[1]काकार्थेभ्य परा माची काकसाह्वा च वायसी' इति। अनेन ध्वाङ्क्षमाचीत्यादिरपि। काकी करटेत्यादिश्च। काकमाचीनामानि। 'कचिचेट्टु। अदे नल्लबुडुसर'॥ १५१॥

[1] 'काकमाची ध्वाङ्क्षमाची काकाह्वा चैव वायसी' इति ध नि (४ २१)

**शतपुष्पा सितच्छत्रातिच्छत्रा मधुरा मिसिः।**
**अवाक्पुष्पी कारवी च सारणी तु प्रसारिणी॥ १५२॥**
**तस्यां कटंभरा राजवला भद्रबलेति च।**

(वि.) शतपुष्पेति—बहुपुष्पत्वात्[1] शतपुष्पा। [2]सितच्छत्राभानि पुष्पाण्यस्या इति सितच्छत्रा। छत्रमतिक्रान्ता अतिच्छत्रा। [3]विरुद्धलक्षणया मधुरत्वात् मधुरा। मस्यति परिणमतीति [4]मिसि। 'मसी परिणामे'। अवाञ्च्यधोमुखानि पुष्पाण्यस्या अवाक्पुष्पी। कारेण यत्नेन वीयते खाद्यते, कटुतिक्तत्वादिति [5]कारवी। 'वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु'। मधुरानामानि। 'पेद्दसदापपेल्लु'॥ [6]सार्यते नि सार्यते पीडानयेति सारणी। प्रसारिणी च। 'सृ गतौ'। कटिं श्रोण्याद्यवयव बिभर्ति पुष्णातीति[7] कटंभरा। '[8]डुभृञ् धारणपोषणयो.'। बलप्रदवस्तुषु राजवन्मुख्यत्वाद् राजबला। भद्रं बलमस्या अस्तीति भद्रबला। प्रसारिणीनामानि। [9]'गोन्तेमगोरुचेट्टुपेल्लु'॥ १५२॥

[1] °पुष्पयोगात् $K_5$, $K_8$ [2] सितानि छत्राकाराणि $D_2$, $K_3$ [3] $F_2$, $Pt_2$ add कटुतिक्तरसत्वेऽपि [4] मसि $K_8$ [5] करोतीति कार तस्येव कारवी $F_2$, $Pt_2$ [6] सार्यन्ते वातसंकुचिताऽन्यङ्गान्यनयेति $F_2$, $Pt_2$ [7] $D_2$, $J_2$ add वातहरणेन [8] 'भृञ् भरणे' $K_5$, $K_8$, $Pt_2$ [9] 'हेसवणा' $J_2$

(पा.) शतपुष्पा—कारवी च। शतपुष्पानामानि। 'सदाप'। सारणी—भद्रबलेति च। प्रसारिणीनामानि। 'गोंतेमगारु। दूसर'॥ १५२॥

**जनी जतूका जननी जतुकृच्चक्रवर्तिनी ॥ १५३ ॥**
**संस्पर्शाथ शटी गन्धमूली षड्ग्रन्थिकेत्यपि ।**
**कर्चूरोऽपि पलाशोऽथ कारवेल्लः कटिल्लकः ॥ १५४ ॥**
**सुषवी चाथ कुलकं पटोलस्तिक्तकः पटुः ।**

(वि.) जनीति—जनयति शैत्यादिक जनी । जननी च । 'जनी प्रादुर्भावे' । जतु लाक्षा तद्वद्रोगक्षय करोतीति जतूका । [1]जतुकृच्च । चक्रे शाकाना समूहे वर्तत[2] इति चक्रवर्तिनी । 'वृतु वर्तने' । शीतगुणत्वात् सम्यक् स्पृश्यते [3]सस्पर्शा । 'स्पृश सस्पर्शने' । सस्पर्शोऽस्या इति वा । चक्रवर्तिनीनामानि । 'कीरिन्द्रचेट्टुपेल्लु' ॥ शटति कफादिरोगान् नाशयतीति शटी । 'शट रुजाविशरणगत्यवसादनेषु' । गन्धयुक्त मूलमस्या इति [4]गन्धमूली । षड्ग्रन्थयोऽस्या सन्तीति षड्ग्रन्थिका । कर्चूं चूर्यते दहतीति कर्चूर[5] । 'चूरी दाहे' । पृथुपलाशत्वात् पलाश[6] । त्रणश्च पल मासमश्नुत वा । 'अशू व्याप्तौ' । गन्धमूलीनामानि । 'गद्लकचोरमुपेल्लु' ॥ कारेण प्रयत्नेन यष्ट्यादिकमवलम्ब्य वेल्लति चलतीति कारवेल्ल[7] । 'वेल्ल[8] चलने' । कटत्यावृणोतीति[9] कटिल्लक । 'कटे वर्षावरणयो' । सुष्ठु सूयते फलानीति सुषवी । 'षूङ् प्राणिप्रसवे' । कारवेल्लनामानि । '[10]काकरचेट्टु' ॥ कुत्सित लक्यते आस्वाद्यत इति कुलकम्[11] । 'लक आस्वादने' । पटति सरतीति पटोल । 'अट पट गतौ' । तिक्तरसत्वात् तिक्तक[12] । देहपटुत्वयोगात् पटु । कटुरिति वा पाठे कटुरसत्वात् कटु । पटोलनामानि । 'चेन्दुपोट्लचेट्टु[13]' ॥ १५३–४ ॥

[1] जतु करोतीति जतुकृत् F₂, Pt₂  [2] D₂, J₂ add श्रेष्ठतया  [3] समीचीन स्पर्शोऽस्या अस्तीति F₂, Pt₂  [4] ग्रन्थिमूली J₂  [5] कचतीति कच्चूर । 'कच बन्धने' h₁, h₆  [6] मृदुपलाशत्वात् मृदुपलाश D₂, h₅  [7] कारवेल्ली D₂, K₅, h₆  [8] 'वेल्ह चल्लने' h₆  [9] B₁, h₃ add पत्राद्यादिक  [10] 'द्दुग्गु' J₂  [11] कुलतीति कुलक Pt₂  [12] तिक्तरसयोगात् F₂, Pt₂  [13] 'केपटल' J₂

(पा.) जनी—सस्पर्शा । लाक्षाजनकलताविशेषनामानि । 'कारिद' । अथ शटी । मूर्धन्योपध । गन्धमूली—पलाश । ग्रन्थिकचोरनामानि । 'गद्लकचोरमु' । कारवेल्ल—सुषवी च । कारवेल्लनामानि । 'काकर' । अनुक्तम्—'सुरन्दरतु फलादि.' । वह्निदीपनाम्नी । 'मदुकाकर' ॥ अथ कुलक—पटु । वैद्यक—

'पटोलस्तिक्तरसश्चक्षुष्य पर्कप्रच्छद ।
राजिमान्[1] बीजगर्भश्च कुष्ठहा कासमर्दन ॥

प्रतीककर्कशौ चैव तथा राजिपटोलक ।
राजिराजामृतापाण्डुभूतेभ्यश्च फल परं ॥
रचणश्चेति ॥'

यादवस्त्वाह—

'पटोलिका ह्रस्वफला कन्याकुब्जा यवीयसी ।
सा तिक्ता तिक्तफलिका वन्या[2] तिक्तपटोलिका ॥'

इति । पटोलनामानि । 'पोट्ल'॥ '[3]पटोलायास्तु पर्यायैर्योजयेद्विपगुत्तम' इति धन्वन्तरिवचनात् (ध नि १ ५२) तिक्तपटोलनामान्यपि । 'चेंति पोट्लानुन्नु'॥१५३–४॥

[1] राजनामा $B_3$　[2] कन्या $B_3$　[3] पटोऽस्य च $B_3$

**कूष्माण्डकस्तु कर्कारुरुर्वारु' कर्कटी स्त्रियौ ॥ १५५ ॥**
**इक्ष्वाकुः कटुतुम्बी स्यात् तुम्ब्यलाबूरुभे समे ।**
**चित्रा गवाक्षी गोतुम्बा विशाला त्विन्द्रवारुणी ॥ १५६ ॥**

(वि.) कूष्माण्डक इति—कुत्सित[1] ऊष्मा अण्डेषु बीजेषु यस्य [2]कूष्माण्डक । हर्षं करोतीति कर्क । इयर्तीति अरु । 'ऋ गतौ'। कर्कश्चासावरुश्च कर्कारु । कूष्माण्डनामनी । '[3]गुम्मडिपेल्लु'॥ कटुरसेन जिह्वामूर्वतीति उर्वारु[4]। '[5]उर्वी हिंसायाम्'। कर्कापेक्षया ह्रस्वत्वात् कर्कटी[6]। उर्वारुनामनी । 'दोसचेट्टुपेल्लु'॥ इक्षुमप्यकयति कुटिलयति तिक्तत्वेनेति इक्ष्वाकु[7]। 'अक कुटिलायां गतौ'। कटुत्वेन जन तुम्बयति पीडयतीति [8]कटुतुम्बी । 'तुबि अदर्शने अर्दने च'। कटुतुम्बीनामनी । '[9]चेट्टुसोरपेल्लु'॥ तुम्बयति पित्त नाशयतीति तुम्बी । 'तुबि अर्दने'। न लम्बते जलेऽधो न गच्छति शुष्कदशायामिति अलाबू । 'लबि शब्दे अवस्रंसने च'। अलाबूनामनी । 'मचिसोरपेल्लु'॥ चित्ररूपफलत्वात् चित्रा । वृषभाक्षितुल्यपुष्पयोगात् गवाक्षी । गोभिर्भक्षणेन तुम्ब्यते गोतुम्बा । 'तुबि अर्दने'। गवाक्षीनामानि । 'पिन्नपापरपेल्लु'॥ विशालफलयोगाद् विशाला[10]। इन्द्र [11]इव वृषभाक्षाभे [12]फले स्वदेहं वृणोतीति इन्द्रवारुणी । 'वृञ् वरणे'। इन्द्रवारुणीनामनी । '[13]पेद्दपापर'॥१५५–६॥

[1] कु ईषत् ऊष्मा $Pt_2$　[2] कूश्माण्डक $h_4$, $h_6$, $Pt_2$　[3] 'कुनल' $J_2$
[4] उरु मूत्रमारयति नि सारयतीति $F_2$ $Pt_2$　[5] उर्वी तुर्वी धुर्वी हिंसायाम्' $h_4$, $h_6$
[6] करोति पर्गमिति $Pt_2$　[7] क्षत्रियधनत्वात् $h_4$ $h_6$　[8] कटुश्चिका तुम्बी $F_2$, $Pt_2$
[9] 'केसार' $J_2$ $W_2$　[10] विशालफलत्वात् $Pt_2$　[11] इन्द्रवत् $F_2$, $Pt_2$　[12] पुष्पे $Pt_2$
[13] 'दोड्डु दानक' $J_2$

(पा.) कूश्माण्डक —कर्कारु । वैद्यके—

'कूश्माण्डश्चित्रक सोम पीतपुष्पो नृपात्मज ।
चनवास पुण्ड्रफल कालिङ्गीपीतके स्त्रियौ ।
महाफला शाकफला सुभद्रा शकुलापि च ॥'

इति । नामचन्द्रिकायां तु—

'कूश्माण्डस्तु कलिङ्ग स्याच्चित्रको गर्भपातन ।'

इति । कूश्माण्डनामानि । 'गुमडि' ॥ उर्वारु —स्त्रियौ । वैजयन्त्याम्—'भीरुस्त्रिवर्वारुर्कर्कटी,' (पृ ५८, श्लो १६८) 'चोदन्युर्वारुपलस्य'[1], 'अल्पा[2] सा राजकर्कटी[3]' (पृ ५८, श्लो १६७) इति कर्कटीसामान्यनामानि । 'दोस' ॥ शेषे—'सुरवासी [4]शीर्णवृन्तस्तीव्रगन्ध सुवासक'। तद्विशेषनामानि । 'कोरुवुडम'। शेषे—

'त्रिलिङ्गया[1] त्रपुसेत्राल उर्दिनी हस्तिपर्णिनी ।
विपाण्डुश्चिर्भिटीमूत्रफल स्यात् तिक्तकर्कटी ॥'

त्रपुस। इत्रालमिति छेद । इतालमिति केचित्। तिक्तकर्कटीनामानि । 'चिति दोस'। 'करवुजमुनु'। '[5]चिर्भटी पुनरुर्वारु' इति वैजयन्ती । (पृ ५९, श्लो १७२) 'नक्कदोस'। 'विटङ्कोऽतिमृगेर्वारु' इति वैजयन्ती (पृ ५९, श्लो १७२)। 'बुडुम'॥ इक्ष्वाकु —स्यात्। शेषे—

'अम्ला पिण्डफला तथा ।
उपा च क्षत्रियरसस्तिक्तबीजो महाफल ।
बृहत्फला राजपुत्री ॥'

तिक्ततुम्बीनामानि । 'सदर'। 'चत्तिसोर'॥ तुम्ब्यलाबू —समे । अलाबूनामानि । 'अनुगमु'॥ अनुक्त—'कालिङ्ग्या सोमक्रमेरुर्नन्दासक इत्युभौ'। कालिङ्गानामनी । 'पुच्चचेट्टु'॥ चित्रा—गोतुम्बा। 'चित्रा विशाला द्रवन्ती चेति' द्व्यर्थतन्त्राभिधाने सत्यपि विशालापर्यायान्तरभेदत्वाद् गवाक्षीपर्यायत्वेनोक्ति । गवाक्षीनामानि । क्षुद्रफलेन्द्रवारुणी नामानि च । 'वुडुमानु'। 'पिजपापरानु'॥ विशाल्या—इन्द्रवारुणी । शेषे—'ऐन्द्री द्रसाह्वा त्रपुसी रक्तर्यारुश्च तुम्बिनी'। इन्द्रवारुणीनामानि । 'पेद्दपापर'॥ ८५—६॥

[1] वाल्सप इति मुद्रितग्र थ [2] पन्या $B_1$ [3] 'कर्कटी' $B_1$ [4] उग्रगन्ध इति, 'त्रिलिङ्ग त्रपुषे तन्दु उदनी हस्तिपर्णिनी' इति च मुद्रितवैजयन्त्याम् (पृ ५९) [5] चिर्भिट $B_1$

**अर्शोघ्नः सूरणः कन्दो गण्डीरस्तु समष्ठिला ।**
**कलम्ब्युपोदकास्त्री तु मूलक हिलमोचिका ॥ १५७ ॥**

(वि.) अर्शोघ्न इति—अर्शोरोग हन्तीति अर्शोघ्न । सूयते प्रेर्यते भक्षणे [2]रुचित्वादिति [3]सूरण । 'षू प्रेरणे' । अर्शोरोगिभि कन्द्यतेऽन्विष्यत इति कन्द [4] । 'कदि आह्वाने रोदने च' । सूरणनामानि । 'कन्दपेल्लु' ॥ गण्डीन् ग्रन्थीनीरयत्यपनयतीति गण्डीर । 'ईर [5]क्षेपे' । सम्यगष्ठीन्यन्तर्वस्तूनि लात्यादत्ते समष्ठिला[6] । 'ला आदाने' । गण्डीरनामनी । '[7]एरुवगपेल्लु' ॥ के जले लम्बते कलम्बी[8] । '[9]तींगेयचलिपेरु' ॥ उपगतमुदक यस्या सा उपोदका[10] । 'दुवयचलि' ॥ प्रशस्तानि मूलान्यस्येति मूलकम्[11] । 'मुल्लगि' ॥ हेलया रोगान् मोचयतीति हिल्मोचिका । 'मुच्लृ मोक्षणे' । 'चिलुक्कूर' ॥ १५७ ॥

[1] I, $Pt_2$ add हन हिंसागत्यो [2] रुचिरत्वात् $D_2$ [3] सूर्यत इति सूरण, 'सूरी हिंसायाम्' $Pt_2$ [4] कन्द्यत रोगोऽनेनेति $Pt_2$ [5] 'ईर गतौ' $K_6$, $Pt_2$ [6] सम्यगष्ठिला बीज यस्या $F_2$ $Pt_2$ [7] 'हल्लवदने' $J_2$ [8] क शिर अग्र लम्बमानमस्या $D_2$, $K_5$ $K_6$, 'लवि शब्दे अवस्रसने च' $J_2$ $K_5$ $Pt_2$ [9] 'हम्बुवसले' $J_2$ [10] उपशब्दोऽधिकार्थ, अधिकमुदकमस्येति $Pt_2$ [11] मूलमधिक करोतीति, 'डुकृञ् करणे' I

(पा.) अर्शोघ्न—कन्द । शेषे—'कण्डूरश्चित्रदण्डक । उल्लुश्च दैत्यमदन' । सूरणनामानि । 'कद' । 'कन्द त्वस्त्री चित्रदण्ड उल्लु कण्डूरसूरणौ' इति वैजयन्ती (प्र ६२, श्लो २०८) । अनुक्तम्—'अरित्रयामानुवक्रोष्टि' । 'गेणुसु' ॥ 'शकुटो जलकूचिका' । 'अडिविचाम' ॥ 'बृहच्छदो महापद्मो मोहमाण इमे समा' । 'वलुरकिस' ॥ 'वज्रवल्ली चाण्डलता' । 'नल्लेरु' ॥ 'वन्याह्वा तु स्थलेरुहा' । 'कलुवद' ॥ 'छत्राकस्तु शिलीन्ध्रोऽहिच्छत्र भूस्फोटमित्यपि' । 'पुट्टगोड्गु' ॥ 'मुण्डिनी श्रमणी मुण्डा' । 'बोडतरसु' ॥ 'कुणुञ्जो वनवास्तुकम्' । 'चञ्चलिवपित्थपत्रिझरसी' । 'चंतलासि' ॥ 'द्रोणपुष्पी कुरुण्टिका' । 'तुम्मि' ॥ 'अरण्यवासिनो घोली' । 'घोलिकूर' ॥ 'क्षुद्रा सैव चिचिल्लिका' । 'पायलिकूर' ॥ गण्डीर—समष्ठिला । गण्डीरनामनी । 'योरवग । तुरुजकूरानु' ॥ कलम्बी—हिलमोचिका । कलम्ब्यादिपञ्चक शाकविशेषवाचकम् । कलम्बी—'तीङ्गेचयली' । उपोदका । 'अपोदका मत्यकाली' । इति [1]धन्वन्तरिपाठादपशब्दादिरपि । 'दुप्फगचलि' । अस्त्री तु मूलक । मूलक । 'मुल्लगि' । हिल्मोचिका—'चिलुक्कूर' ॥ १५७ ॥

[1] उपोदकाति मुद्रितग्रन्थे (प कि ७ ७४)

**वास्तुकं शाकभेदाः स्युर्दूर्वा तु शतपर्विका।**
**सहस्रवीर्याभार्गव्यौ रुहानन्ताथ सा सिता ॥ १५८ ॥**
**गोलोमी शतवीर्या च गण्डाली शकुलाक्षकः।**

(वि.) वास्तुकमिति—वसन्त्यत्र त्रिदोषघ्नगुणा इति वास्तुकम्। 'वस निवासे'। 'चक्रवर्तिकूर[1]'॥ एते कलम्ब्याद्याः पञ्च शाकभेदा इत्युच्यन्ते॥ दूर्व्यते पशुभिरिति दूर्वा। 'दुर्वी हिंसायाम्'। दूरं याति गच्छतीति वा। 'या गतिगन्धनयोः'। [2]शतं पर्वाण्यस्यामिति शतपर्विका। महाप्रभावत्वात् सहस्रवीर्या। भृगोरियं भार्गवी। छिन्नापि रोहतीति रुहा[3]। 'रुह बीजजन्मनि प्रादुर्भावे च'। दूरप्रसरणाद्[4] अनन्ता। दूर्वानामानि। 'गरिकपेल्लु[5]'॥ गोरिव लोमान्यस्या इति गोलोमी। शतं[6] वीर्याणि प्रसरणरूपाण्यस्या इति शतवीर्या। सितदूर्वानामनी। 'तेल्लगरिकपेल्लु'॥ गण्डैर्ग्रन्थिभिरल्यते भूष्यत इति गण्डाली। 'अल भूषणादौ'। [7]मत्स्यनयनतुल्यग्रन्थियोगात् शकुलाक्षकः। शकुलाक्षकनामनी। 'तेल्लगरिक[8] यनि कोंदरु'॥ १५८॥

[1] चक्रोत' J₂ [2] बहुग्रन्थित्वात् D₂, K₅, K₆ [3] मूलैरेव रोहतीति h₅ h₆
[4] प्रसरत्वात् F₂, Pt₂ [5] 'करिके' J₂ [6] महाप्रभावत्वात् D₂ h₃, h₆
[7] मत्स्याक्षितुल्यग्रन्थित्वात् J₂, h₆ [8] 'विलियकर्क' J₂

(पा.) वास्तुक—स्युः। वास्तुकं, वास्तूकमपि। 'वास्तूकं चक्रवास्तुकम्' इति वाग्भटः। 'चक्रवर्तमु'॥ शाकाख्यं पत्रपुष्पादीत्यारभ्य (श्लो० १३६) वास्तुकान्ता (श्लो० १५८) शाकभेदाः स्युरित्युपसंहारः॥ दूर्वा तु शतपर्विका। तुशब्देन तृणप्रकरणारम्भो द्योत्यते। सहस्रवीर्या—अनन्ता। दूर्वानामानि। 'गरिकि'। अथ सा—शतवीर्या च। श्वेतदूर्वानामनी। 'तल्लगरिकि'॥ गण्डाली शकुलाक्षकः। महादूर्वानामनी। 'अथ महादूर्वा परा पुनः। गण्डाली शकुलाक्षश्च' इति प्रतापः। 'तीगेगरिकि'॥ १५८॥

**कुरुविन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम् ॥ १५९ ॥**
**स्याद् भद्रमुस्तको गुन्द्रा चूडाला चक्रलोचटा।**

(वि.) कुरुविन्द इति—कुरुदेशं विन्दत्याश्रयत्वेनेति कुरुविन्दः। 'विद्लृ लाभे'। [1]मेघनामान्यस्य सन्तीति मेघनामा। मुस्यति खण्डयति पित्तादिरोगानिति मुस्ता। 'मुस खण्डने'। मुस्तकं च। मुस्तानामानि। 'निडुपुगल तुंगमुस्तलपेल्लु'॥

भद्रश्चासौ मुस्तश्च[2] भद्रमुस्तकः । अतिसारादिरोगहरत्वगुणैर्द्रातीति[3] गुन्द्रा । 'द्रा कुत्सायां गतौ' । 'भद्रमुस्तलु[4]' ॥ चूडा [5]लातीति चूडाला । 'ला दाने' । चक्राकार लात्वादत्त इति चक्रला । उच्चटति रोगानिति उच्चटा[6] । 'चट[7] भेदने' । चूडालानामानि । 'वट्टुवमुस्तलपेल्लु' ॥ १५९ ॥

[1] मेघस्य F₂, Pt₂ [2] मुस्तकः D₂, K₅, K₆ [3] गुणान् Pt₂ [4] 'भद्रमुस्त वदनीरटे' J₂ [5] K₅, K₆ add आदत्ते [6] उच्चाटा J₂ [7] 'चट स्फुट भेदने' K₅, K₆

(पा.) कुरुविन्दो—मुस्तकमस्त्रियाम् । दीर्घमुस्तानामानि । 'निडुपुतुगमुस्तेलु' । स्यात्—गुन्द्रा । भद्रमुस्तानामनी । 'भद्रमुस्तलु' । चूडाला—उच्चटा । वृत्तमुस्तानामानि । 'वट्लुवमुस्तलु' । आम्लपत्रतृणविशेषनामानीति [1]टीकासर्वस्वे (पृ २०३, श्लो. १६०) ॥ १५९ ॥

[1] 'अयमल्पपत्रस्तृणविशेष' इति मुद्रितग्रन्थे

**वंशो त्वक्सारकर्मारत्वचिसारतृणध्वजाः ॥ १६० ॥**
**शतपर्वा यवफलो वेणुमस्करतेजनाः ।**

(वि.) वंश इति—[1]वन्यते सेव्यत इति वंशः । 'वन षण सम्भक्तौ' । [2]त्वचि सारो दार्ढ्यमस्येति त्वक्सारः । त्वचिसारश्च । मिथ सघट्टनादि कर्म इयर्तीति कर्मारः । 'ऋ गतौ' । तृणानां मध्ये मुख्यत्वात् तृणध्वजः[3] । शतमनेकानि पर्वाण्यस्येति [4]शतपर्वा । यवफलाभफलत्वाद् यवफलः[5] । वयन्त्यनेन कटादिकमिति वेणुः । 'वेञ् तन्तुसताने' । मङ्क्यते नौकादिरनेनेति मस्करः । 'मकि मण्डने' । मा क्रियते[6] प्रतिषिध्यतेऽनेनेति वा । तजयत्यग्निमिति तेजनः । 'तिज [7]निशाने' । वेणुनामानि । '[8]वेदुरुपेल्लु' ॥ १६० ॥

[1] D₂, K₅, K₆ add अङ्कुरैः [2] त्वचि सरति स्थैर्यमाप्नोतीति K₅, K₆ [3] तृणानां मुख्य, K₅, K₆ [4] बहुग्रन्थित्वात् D₂, J₂, K₆ [5] यवसदृशानि फलान्यस्येति F₂, Pt₂ [6] मा कीर्यते K₅, मङ्क्यते कटादिरनेन प्रसार्यते B₁ [7] निशातने K₆ [8] 'तिदिरु' J₂

(पा.) वंशे—तेजनाः । शेषे—'मृत्युपुष्प च य खेल' । वंशनामानि । 'वेदुरु' ॥ शेषे—भल्लुकः । 'गट्टुवेदुरु' । कृष्णसारकः । 'नल्लवेदुरु' ॥ १६० ॥

**वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः ॥ १६१ ॥**
**ग्रन्थिर्ना पर्वपरुषी गुन्द्रस्तेजनकः शरः ।**
**नडस्तु धमनः पोटगलोऽथो काशमस्त्रियाम् ॥ १६२ ॥**
**इक्षुगन्धा पोटगला पुंभूमनि तु वल्वजाः ।**

(वि.) वेणव इति—ये वेणवोऽनिलोद्धता वायुना ताडिताः स्वनन्ति ते कीचका इत्युच्यन्ते। की चेति कायन्ति शब्दायन्त इति कीचकाः। 'कै शब्दे'। 'वोंगुवेवुळ्ळपेरु'॥ ग्रन्थ्यते [1]सन्धिरूपेण बध्यत इति ग्रन्थिः। 'ग्रथि कौटिल्ये' 'ग्रन्थ सन्दर्भे' इति वा धातुः। पर्वति स्थूलो भवतीति पर्व। 'पर्व [2]पूरणे'। पिपर्तीति परुः। 'पॄ पालनपूरणयोः'। [3]सान्तोऽयं नपुंसकलिङ्गः। पर्वनामानि। 'वेदुरु [4]गणुपुलपेल्लु'॥ गूयत इति गुन्द्रः। 'गूञ् शब्दे'। इन्द्र इति पाठे इन्दतीन्द्रः। 'इदि परमैश्वर्ये'। तेजयति पित्तादिरोगान्[5] तनूकरोतीति तेजनकः। 'तिज निशातने'। शृणाति [6]रोगं शरः। 'शॄ हिंसायाम्'। शरनामानि। '[7]काकिवेदुरुपेल्लु'॥ वायुवशात् नलति चलतीति नडः[8]। 'नल गतौ'। सुषिरत्वात् ध्मायते पूर्यत इति धमनः। 'ध्मा[9] शब्दाग्निसंयोगयोः'। पुटति[10] गलति चेति पोटगलः। 'पुट संश्लेषणे'। नडनामानि। '[11]किक्कसकसवुपेल्लु'॥ काशत इति काशम्। 'काशृ दीप्तौ'। इक्षोरिव गन्धोऽस्या इति इक्षुगन्धा। गले मूलस्थाने पुटतीति पोटगला। 'पुट संश्लेषणे'। काशनामानि। 'रेल्लुकसवुपेल्लु'॥ वल्वाख्ये विशेषस्थाने जायन्त इति वल्वजाः[12]। 'जनी प्रादुर्भावे'। अयं शब्दः पुंसि भूम्न्येव वर्तते। '[13]मोदयवुकसवुपेल्लु'॥ १६१–२॥

[1] काण्डक्षधिरूपेण $D_s$, $K_6$ [2] 'पर्व मर्व पूरणे' $K_s$, $K_6$. [3] दन्त्यसान्त. $J_2$, $K_s$ [4] 'गणिनबसरु' $J_2$. [5] °रोग $J_2$. [6] दाहक $D_2$, $K_s$, $K_6$ [7] 'काकाडु' $J_2$ [8] नलति विष्यतीति, 'नल बन्धने' $Pt_2$. [9] 'ध्मा पूरणे' $K_s$, $K_6$. [10] गले मूले पुटति संश्लिष्यत इति $D_2$, $K_s$, $K_6$. [11] 'देवनाल्तृणमु' $K_2$. [12] वल्वन्ते संवृण्वन्ति स्तम्बबाहुल्यात् भुवमिति वल्वजाः $F_2$, $Pt_2$, पक्षोऽभेदः, 'वृञ् वरणे' $Pt_2$. [13] 'मोदे' $J_2$

(पा.) वेणव.—अनिलोद्धताः। ये वंशा अनिलोद्धताः सन्तः स्वनन्ति ते वेणवः कीचकाश्च स्युः। 'वोंगुवेदुल्लु'। अनुस्वम्—'विषमो नि स्तुपी रेणौ'। 'वोलुलेनि वेदुरु'॥ ग्रन्थिः—पर्वपरुषी। सान्तद्विवचनम्। द्वे नपुंसके। ग्रन्थिनामानि। 'कणुपु'॥ गुन्द्र—शरः। शेषे—'शरनामा भद्रमुञ्जो मुञ्जेक्षुतिक्षुरा. समाः'। वशनारतृण-विशेषस्य नामानि। 'कारिवेदुरुलु काकिपकुलु पनुमुञ्जु'। अनुस्वम्—'लतानशाश्च वेत्रश्च भूधरश्च समार्थकाः'। 'पेमु'। नडस्तु—पोटगलः। शेषे—'रभ्री च

नर्तक । विभीषण शून्यमध्यो नल '। अन्त सरन्ध्रस्य तृणविशेषस्य नामानि। 'किक्किम '। अथो काश—पोटगल । अपचयविवक्षाया [1]स्त्रीलिङ्गो भवति काशीति। 'इक्षुगन्धा तु काण्डेक्षुकाशयो ' इति यादववचनात्। 'दर्भेऽश्ववाल काशिनी काशोऽस्त्री स्त्रीक्षुगन्धिका ' इति वैजयन्तीवचनाच्च (प्र. ६३, श्लो २२७) स्त्रीलिङ्गत्वमिक्षुगन्धाशब्दस्य। अश्ववालदर्भनामानि। 'रेल्लु '॥ पुभूमनि—वल्वजा । पुलिङ्गो बहुवचनश्चाय शब्द । 'एकश्च वल्वजो बन्धनेऽसमर्थ ' इत्यर्थवत्सूत्रे (१ २ ४५) महाभाष्यप्रयोगदर्शनादेकवचनान्तत्वमपि। मुञ्जकल्पस्य तृणविशेषस्य नाम। 'मोदयमु '। केचित्तिङ्गवचनद्योतनार्थस्तुशब्द इति काशादिवल्वजान्तान् पर्यायानेवाहु ॥ १६१-२॥

[1] गौरादित्वान्ङीष् इति टीकासर्वस्वे (पृ २०५)

**रसाल इक्षुस्तद्भेदाः पुण्ड्रकान्तारकादयः ॥ १६३ ॥**
**स्याद्वीरणं वीरतर मूलेऽस्योशीरमस्त्रियाम् ।**
**अभयं नलदं सेव्यममृणाल जलाशयम् ॥ १६४ ॥**
**लामज्जकं लघुलयमवदाहेष्टकापथे ।**

(वि.) रसाल इति—रस्यत इति रसाल । 'रस आस्वादने '। रसेनालत इति वा। 'अल भूषणादौ '। इष्यते सर्वैरिति इक्षु । 'इषु इच्छायाम् '। रसालनामनी। 'चेरुकुपेल्लु '॥ तद्भेदानाह। पुण्ड्राख्यदेशे भव [1]पुण्ड्र । काम्यत इति कान्तारक । 'कमु कान्तौ '। पुण्ड्रनामनी। 'वगालपुचेरुकु '॥ पूर्व श्वेतरसाल, इतरमान्ध्रा वगालमिति वदन्ति। इत्यादय सन्ति॥ [2]वीरयति विक्रमति [3]तीक्ष्णत्वेनेति वीरणम्[4]। [5]वीरतर च। 'वीर[6] विक्रान्तौ '। वीरणनामनी। '[7]अवुरुकसवुपेल्लु '॥ उश्यते काम्यते उशीरम्। 'वश कान्तौ '। न विद्यते भयमनेनेत्यभयम्[8]। नलत्यर्दयतीति नल पित्तादिकम्। तद् यतीति [9]नलदम्। 'दो अवखण्डने '। 'नल गन्धने '। सेव्यते पित्तादिशमनार्थमिति[10] सेव्यम्। 'षेवृ [11]सेवायाम् '। मृणति हिनस्तीति मृणाल हिस्र, तन्न भवतीति [12]अमृणालम्। 'मृण हिंसायाम् '। जले आशेत इति जलाशयम्। 'शीङ् स्वप्ने '। [13]रक्तदोष लाति नाशयतीति ला। ला मज्जासारोऽस्यास्तीति लामज्जकम्। [14]इक्षुरसवदगुरुत्वात् लघु। जठराग्नौ[15] लीयतेऽनेनेति लयम्। 'लीङ् श्लेषणे '। अवलीयते[16] दाहोऽनेनेत्यवदाहम्। पथि इष्टकमबाधकस्थानमस्येतीष्टकापथम्[17]। वारणमूलनामानि। 'तेड्डनिवट्टिवेरु[18] '॥ १६६-४॥

[1] पुणतीति पुण्ड्र, 'पुण कर्मणि शुभे ' $F_2$, $Pt_2$ [2] वीरयते $K_5$, $K_6$ [3] पद्मपु तीक्ष्णतृणत्वेन $D_2$, $J_2$, $K_6$ [4] वीरतृण $K_5$, $K_6$ [5] वीरतरश्च $D_2$ $J_2$ [6] 'शूर

चीर विक्रान्तो' $K_6$ [7] 'वह्निवेरुचेट्टु' $K_2$, $K_6$, 'लामचद पूतु' $J_2$ [8] रोगहर त्वादभयम् $D_2$, $K_5$, $K_6$, $K_2$ $K_5$ add 'वह्निवेरु', 'लामचदवेरु' $J_2$ [9] नल्मत्यर्थं पित्तादिरोग (रोगान् I) द्यति $K_5$, $K_6$ [10] रोगहरत्वात् $D_2$, $K_6$ [11] 'पेट्ट सेवने' $K_6$ [12] हिममपि मृणालविलक्षणत्वात् $K_5$, $K_6$ [13] $J_2$, $K_6$ add जतूकावत् [14] गुरुत्वाभावात् $F_2$, $Pt_2$ [15] जाठरोऽग्नि $J_2$, $K_5$ [16] अवनश्यति $F_2$, $Pt_2$ [17] वातवत्वेन गमननिरोधरत्वाद् इष्ट कापथमस्येति $F_2$, $Pt_2$ [18] 'तिलियलामञ्चदवेरु' $J_2$

(पा.) रसाल इक्षु । शेषे—

'पिप्पलरसो मधुतृणस्तथा ।
खड्गपत्र कर्कटक कान्तारो वेणुनि सृति ।
मृत्युप्रसून ॥'

इक्षुनामानि । 'चेरुकु' ॥ तद्भेदा—कान्तारकादय । आदिपदाच्छतपर्वयञ्जालनेपालादयो गृह्यन्ते । 'चेरुकु भेदालु'। अनुक्तम्—'अनिक्षुस्त्विक्षुनासिका'। 'नङ्जेरुकु' ॥ स्यात्—वीरतृणम् । यन्मूलमुशीर तत्तृणस्य नामनी । 'अवुरु' ॥ मूले—अमृणालम् । वीरणमूलस्य नामानि । 'वह्निवेल्लु' । जलाशय—इष्टकापथे । सेव्यामृणालशब्दौ लामज्जकेऽपि वर्तते । तथा चोक्त द्व्यर्थे—अमृणाल लामज्जकमुशीर च । (अ द्व २ ७०) सेव्य लामज्जकमुशीर च । (अ द्व २ २१) अत एव उशीरलामज्जकयोर्भेद ।

'लामज्जक [1]सुनाल स्यादमृणाल [2]लय लघु ।
इष्टकापथक शीघ्र दीर्घमूल जलाशयम् ॥'

इति वैद्यके (ध नि ३ ८६) दर्शनात् लघु लयमितिसञ्ज्ञाद्वयमेतत् ।

'लामज्जक हित तिक्त रक्तपित्तविषार्तिनुत् ।
उशीर शीतल तिक्त दाहश्रमहर च तत् ॥'

इति वैद्यके च भेदो विवक्षित । जलाशयवीरणमूलनामानि । 'नीटवट्टिवेल्लु' । केचिद्भेदविवक्षयोशीरादीष्टकापथान्ताना पर्यायत्वमाहु ॥ १६३–४ ॥

[1] मुनाल $B_3$ [2] लयमिति मुद्रितनिघण्टौ (पृ ११३)-

**नडादयस्तृणं गर्मुच्छ्यामाकप्रमुखा अपि ॥ १६५ ॥**
**अस्त्री कुशं कुथो दर्भः पवित्रमथ कत्तृणम् ।**
**पौरसौगन्धिकध्यामदेवजग्धकरौहिषम् ॥ १६६ ॥**

(वि.) नडादय इति—नडकाशादय [1] गर्मुच्छ्यामकप्रमुखाश्च तृण तृणभेदा इत्युच्यन्ते। गीर्यतेऽस्य धान्य मनुष्यैरिति गर्मुत्। 'गॄ निगरणे'। श्यामवर्णमकति प्राप्नोतीति श्यामाक। 'अक अग कुटिलाया गतौ'। एते प्रत्येक तृणविशेषा ॥ तृण्यते ऽद्यते पशुभिरिति तृणम्। 'तृणु अदने'। कौ भूमौ[2] शेते कुशम्[3]। 'शीङ् स्वप्ने'। विप्रपाणिषु कुथ्यत इति कुथ [4]। 'कुथ[5] श्लेषणे'। दृणाति करादिकमिति दर्भ। 'दॄ विदारणे'। पुनातीति पवित्रम्[6]। 'पूञ् पवने'। दर्भनामानि। 'दर्भपेल्लु[7]'॥ [8]कुत्सित तृण कत्तृणम्। पुरे भव पौरम्। शोभनो गन्ध प्रयोजनमस्येति सौगन्धिकम्[9]। ध्यायते पशुभिरप्रियत्वादिति[10] ध्यामम्। 'ध्यै चिन्तायाम्'। देवेन कालेन जक्ष्यत इति देवजग्धकम्[11]। 'जक्ष भक्षहसनयो'। यत्र तत्र वा रोहतीति रौहिषम्। 'रुह बीजजन्मनि प्रादुर्भावे च'। सौगन्धिकनामानि। '[12]कामचिपूरिपेल्लु' ॥ १६५–६ ॥

[1] नडकाशानल्वनेक्षुवीरणा नडादय सर्वे $D_2$ $K_5$ $K_6$　[2] भुवि $J_2$　[3] $F_2$ $Pt_2$ add 'कु श्यति वा, शो तनूकरणे'　[4] विप्रा पाणिषु कुथ्नति $J_2$　[5] सश्लेषणे $D_2$　[6] पूयतेऽनेनेति $F_2$ $Pt_2$　[7] 'कुशपेरु $K_6$　[8] $Pt_2$ adds पशूनामभक्ष्यत्वेन　[9] सुगन्धिकत्वात् $D_2$ $K_5$ $K_6$　[10] अप्रियत्वेन $K_5$ $K_6$　[11] देवेनाग्निना जग्ध देवजग्धम् $F_2$ $Pt_2$　[12] 'गजिणिपेल्लु $B_1$ I

(पा.) नडादय —प्रमुखा अपि। पूर्वोक्ता नडकाशाद्यास्तृणजातयस्तृणशब्दे नोच्यन्ते। तथा गर्मुत् श्यामाकादयोऽपि। गर्मुत्—'गण्टे'। श्यामाक —'चाम'। 'श्यामाको नीलपुष्प स्यात्' इति वैजयन्ती (पृ १२७, श्लो ५८)। अस्त्री—कुथ। विप्रपाणिषु कुथ्यत इति। 'कुथ सश्लेषणे'। दर्भ पवित्रम्। शेषे—

'बर्हिरद्वयो।
कपिशाग्रो दीर्घमूल पीलाह्वो यज्ञजागर।
क्षुरयग्रो मुनिर्वीरा सूचि ॥'

कुशनामानि। 'कुशदर्भ'। 'स्ताकुशे तु शारि स्त्री मुञ्ज स्याद् ब्रह्ममेखल'॥ अथ कत्तृण—रौहिषम्। सुगन्धितेजनतृणनामानि। 'कामञ्चि'। 'रामकर्पूरमु' ॥ १६५–६ ॥

**छत्रातिच्छत्रपालघ्नौ मालातृणकभूस्तृणे।**
**शष्प बालतृणं घासो यवस तृणमर्जनम् ॥ १६७ ॥**

(वि) छत्रेति—छत्राकारत्वात् छत्रा। अत एव छत्रमतिक्रान्तोऽतिच्छत्र। छत्रातिच्छत्र इत्येक वा नाम। नैर्ऋत्यात् पाल पारक रक्षक हन्तीति [1]पालघ्न। 'हन

हिंसागत्यो'। छत्रानामानि। 'छत्राकारमैनतृणमुपेल्लु'॥ मालारूपाणि तृणान्यस्येति मालातृणकम्[2]। भूरित्यव्ययम्। तस्या तृण भूस्तृणम्[3]। मालातृणकनामनी। 'चिप्पकसवुपेल्लु'॥ शस्यते पशुभिर्भक्षणेनेति शष्पम्। 'शसु हिंसायाम्'। 'शसु स्तुतौ' वा धातु। बाल च तत् तृण च बालतृणम्। शष्पनामनी। 'तेंतकसवुपेल्लु'॥ घस्यते पशुभिरिति घास। 'घस्लृ अदने'। यूयते [4]मिश्रीक्रियते लावकैरिन्धनकाल इति यवसम्। 'यु मिश्रणे'। घासनामनी। 'वेंतपूरि'॥ तृण्यते पशुभिरिति तृणम्। 'तृणु अदने'। पशुग्रासार्थमर्ज्यतेऽर्जनम्[5]। 'अर्ज [6]अर्जने'। अर्जुनमिति वा पाठ। तृणनामनी। 'सामान्यमुगा कसवुपेल्लु'॥ १६७॥

[1] पल माष हन्ति तैक्ष्ण्यादिति पल्घ्न। पल्घ्न एव पाल्घ्न $Pt_2$ [2] मालारूपतृणत्वात् $K_5$ $K_6$ [3] भुव स्तृणातीति, 'स्तृञ् आच्छादने' $Pt_2$ [4] मिश्रीयते $K_5$, यौतीति $F_2$, $Pt_2$ [5] अर्ज्यते I [6] 'अर्ज षर्ज अर्जने' $K_6$

(पा.) छत्रा—पालघ्नौ। छत्रेति भिन्न पद, स्त्रीलिङ्ग च। अतिच्छत्रपालघ्नौ पुलिङ्गेऽपि। तथा च रुद्र—

'आतपत्र मत छत्र छत्रा मधुरिका मता।
अतिच्छत्रोऽपि छत्र स्याच्छत्रा धान्याकमुच्यते॥'

इति। छत्रातिच्छत्र इत्येकपदमिति केचित्। छत्रा द्रोणिका अतिच्छत्रपालघ्नौ देवद्रोणिकेति केचित्। 'त्रपणी द्रोणिका छत्रा चक्षुष्या द्रोणपुष्पिका' इति वैजयन्ती (पृ ५५, श्लो १२४)। देवद्रोणीति गोपाल। छत्राकारस्य तृणविशेषस्य नामानि। 'गुड्डिकामचि'। मालातृणकभूस्तृणे। सकाररहित भूतृणमिति केचित्। यस्य ग्रन्थिस्थानेषु परिमण्डलावयवा भवन्ति स भूतृणाख्य शाकविशेष। 'तथा च भूस्तृणशिग्रुसर्षप—' इत्यादि शाकप्रकरणे विष्णुवचन (विष्णुस्मृति ७९ १७) स्मृतिचन्द्रिकाकार पपाठ। भूतृणनामनी। 'तुम्मिकूर'। वैद्यके तु—(ध नि ८ ८२)

'[1]भूस्तृण रोहिण[1] भूतिर्भूम्यूतिश्च[1] कुटुम्बक।
मालातृण च [1]पालघ्न छत्रातिच्छत्रकस्तथा॥'

इति छत्रादिभूस्तृणान्ताना पर्यायत्रयमाह। 'चिप्पकसवु'। शष्प बालतृणम्। अमरमालाया पुस्यप्युक्तम्। नवतृणनामनी। 'यतकसवु'। नीलदूर्वानामापि। 'नीलदूर्वा भवच्छष्प शाद्वल हरिता तथा' इति माधव। घासो—अर्जुनम्। तृणसामान्यनामानि। 'कसवु'। घासादिद्वय पशुभक्ष्ये, तृणादिद्वय तृणसामान्य इति वदन्ति। अन्ये शष्पादिचतुष्टय बालतृणे, तृणादिद्वय तृणमात्र इति वदन्ति॥ १६७॥

[1] भूतृण, रोहिण, भूतिकोऽथ, पुमालीति मुद्रितनिघण्टौ (पृ ३६०)

**तृणानां संहतिस्तृण्या नड्या तु नडसंहतिः ।**
**तृणराजाह्वयस्तालो नालिकेरस्तु लाङ्गली ॥ १६८ ॥**

(वि.) तृणानामिति—तृणाना समूहः तृण्या । '[1]गड्डिकुप्प' ॥ [2]नडतृणानां समूहो नड्या । 'किक्कसवुकसवुकुप्प' ॥ [3]तृणानां राजा मुख्यः तृणराजः । तृणराजः इत्याह्वयो यस्येति तृणराजाह्वयः । तलति प्रतिष्ठते दृढमूलत्वात् तालः । 'तल प्रतिष्ठायाम्' । तालनामनी । 'ताटिचेट्टुपेल्लु' ॥ नाल्या कमुदकमीरयतीति नालिकेर । 'ईर क्षेपे' । नालीकानि नालयुक्तानि फलादीनीरयति वर्धयतीति वा । लाङ्गलवत् कुञ्चिताग्रावयवत्वात् [4]लाङ्गली । नालिकेरनामनी । 'नारिकेलवृक्षमु (टेंकायचेट्टु)' ॥ १६८ ॥

[1] 'घासि' $K_6$ [2] नडसमूहो $K_5$, 'नड अनेडि कसवुकुप्प' $K_6$ [3] तृणमध्ये मुख्यत्वात् $D_2$, $K_5$ [4] लाङ्गलाकारपत्रत्वात् $F_2$, $Pt_2$. [5] 'नालिकेर' $J_2$.

(पा.) तृणानां—तृण्या । तृणसमूहनाम । 'गड्डिमोपु । अदे कुप्पैतेनुघरड्ढमु' । 'घरण्डस्तृणसञ्चय.' इति वैजयन्ती (पृ. १२८, श्लो. ६१) । 'पूलमु' । 'पूलोऽस्त्री तृणपञ्जिरा' इति वैजयन्ती (पृ. १२८, श्लो. ६४) ॥ नड्या—नडसहति. । नडसमूहनाम । 'निक्किसघामि' । शेषे—'पुञ्जिलस्तु तृणस्तम्बे' । तृणगुल्मनाम । 'गड्डिदुब्बु' । 'इषीकान सकण्टके' । कण्टकसहिततृणस्तम्बनाम । 'मुव्वदुव्वु' । 'मुञ्जस्तु यज्ञियो मेध्यो मृदुत्वग्नक्षमेखलः' । मुञ्जदर्भनामानि । 'उल्लुनस्तूलपो दर्भ ऊर्ध्वमूलः खरच्छद.' । उलपदर्भनामानि ॥ तृणराजाह्वयस्तालः । शेषे—

'दीर्घस्कन्धो द्रुमेश्वर ।
फलेरुहो महापत्रस्तलो भूमिपिशाचक ॥
काले दीर्घतरुर्लेख्यपत्रकश्च दुरारुह ।
राजद्रुमो द्रुमश्रेष्ठ ॥'

तालनामानि । 'ताडि' । नारिकेलः—लाङ्गली । शेषे—

'नारिकेलो रसफलः सुतुङ्गः कूर्चकेसर ।
लाङ्गलो दृढफलो दाक्षिणात्यः सुपत्रकः ।
तृणराजो महाप्रांशुर्दृढमूलो महाफलः ।
जीवनमुघको रोही दीर्घदण्ड मुनीरकः ।
घटोदकः स्कन्धफलो वली चापि मुराफल. ॥'

नारिकेरनामानि। 'नारिकेरम्'।

'[1]नारिकेरे तु लाङ्गली।
दाक्षिणात्यो नीरफलः सुतुङ्गः कूर्चकेसरः।
सुराफलो नली च'।

इति वैजयन्ती (पृ. ६३, श्लो. २२०–१)। शेषे—'ह्रस्वे त्वखण्डुकः'। 'चेन्नंगि'। 'रक्तेऽग्निकः स्वर्णः'। 'येरनिकायलनारिकडमु'। 'अस्य पट्टके परिक्रोणा'। 'नारिकडपु दोत्ति'। 'फलं त्वस्य चोचं च घटसंज्ञकम्'। 'नारिकडपुकाय'॥ १६८॥

[1] 'नालिकेरः . . . अफलोऽथालः सुत(तु)ङ्गः कूर्चनेत्ररः। मदाफलो वली च' इति मुद्रितग्रन्थे (पृ. ६३)।

**घोण्टा तु पूगः क्रमुको गुवाकः खपुरोऽस्य तु।**
**फलमुद्वेगमेते च हिन्तालसहितास्त्रयः॥ १६९॥**
**खर्जूरः केतकी ताली खर्जूरी च तृणद्रुमाः।**

## इति वनौषधिवर्गः

(वि.) घोण्टेति—घुणन्ति भ्रमन्त्यनया [1]जना इति घोण्टा। 'घुण भ्रमणे'। [2]पुनाति मुखं फलेनेति पूगः। 'पूञ् पवने'। [3]क्रामन्त्यस्मिन् फलार्थिन इति क्रमुकः। 'क्रमु पादविक्षेपे'। गुवति मलं निःसारयत्यनेनेति गुवाकः। 'गु पुरीषोत्सर्गे'। खानीन्द्रियाणि पृणोतीति खपुरः। 'पृ प्रीतौ'। '[4]पोंकचेट्टु'॥ उद्गतो [5]वेगोऽस्येति उद्वेगम्। उद्विजन्तेऽस्माद् दुर्बला इति वा उद्वेगम्। 'ओविजी भयचलनयोः'। 'पोंकपण्डु'॥ हिनोति वर्धते तलति प्रतिष्ठत इति हिन्तालः। 'हि गतौ वृद्धौ च'। 'हितालमु'॥ हिन्तालसहिताः प्रागुक्तास्तृणराजा नालिकेरक्रमुकाख्यास्त्रयो वृक्षाः तृणद्रुमा इत्युच्यन्ते। खर्जति रक्तपित्तमिति खर्जूरः। 'खर्ज व्यथने'। 'खर्जूरमुचेरु'॥ कित्यते ज्ञायते गन्धेनेति केतकी[6]। 'कित ज्ञाने'। 'मोगलिचेट्टुपेरु'॥ तलति प्रतिष्ठते ताली। 'तल प्रतिष्ठायाम्'। 'श्रीतालमुपेरु[7]'॥ खर्जति रोगं खर्जूरी। 'खर्ज[8] व्यथने'। 'चिट्टीदुपेरु'॥ [9]एते चत्वारो वृक्षा अपि तृणद्रुमा इत्युच्यन्ते॥ १६९॥

इति श्रीलिङ्गयसूरिविरचितायाममरकोशपदविवृतौ वनौषधिवर्गः

[1] पुरुषाः $K_5$, $K_6$, नराः $B_1$, $J_2$. [2] पवते, 'पूङ् पवने' $D_2$, $K_5$, $K_6$ [3] काम्यन्त्यस्योपरि $D_2$, $K_6$. [4] 'अङ्केरे' $J_2$. [5] $K_5$, $K_6$ add प्रवाह. [6] गन्धो ऽनेनेति $K_5$, $Pt_2$. [7] 'पेद्दयीन्दु' $K_2$, $K_6$. [8] 'खर्ज व्यथने पूजने च' $B_1$, $D_2$; खर्जयति $K_6$, $Pt_3$. [9] खर्जूरश्च केतकी च ताली च खर्जूरी च एते I.

(पा.) घोण्टा—गुवाकः। गूवाक इति वा। 'गुवाकोऽपि च गूवाकः' इत्युभयत्र तारपालः। खपुरः। शेषे—आसवः क्रूरः कषायस्त्रिवाटी रागवान् वीटिका। क्रमुकनामानि। 'पोंकमानु'॥ अस्य —अस्त्री स्यात्। शेषे—स्रंसिपर्कटम्। पूगादिशब्दाः नपुंसकलिङ्गाः सन्तः फलवाचकाः। घोण्टाशब्दः स्त्रीलिङ्गः सन्नेव फलवाचकः। तथा च प्रताप.—

'अस्य तु।
फलं पूगफलस्रंसि गुडा घोण्टा फलं भवेत्॥
उद्वेगश्चिक्कणश्चिक्वा चिक्कणं च प्रकीर्तितम्।
तथा गोपफलं चेति॥'

क्रमुकफलनामानि। 'पोकलु'। अत्र तु—'पक्वे पोढम्'। 'पंडुपोंक'। 'खरं शुष्के'। 'येंडुपोंक'। 'मसृणे चिक्कचिक्कणे'। 'चिक्किनीचक्क'। 'दीर्घवृन्ते रामपूगः'। 'तोडिमेनिडुपैनपोंक'। 'लतापूगे तु योजनः'। 'सुदिगोटि'। 'भूपूगे लघुकः'। 'तोंटपोंक'। 'क्षुद्रफले वोदावकापि च'। 'सन्नपुपोंक'। 'गौलेयकः शैलजातपूगः'। 'कारुपोंक'। 'पूगस्य पटकी खपुरः'। 'पोंकजवर'। 'पुष्पपट्टे तु कुहली घटिकेति च'। 'पोंकयोत्ति'। तालगमाद्या एते च॥ हिन्तालः—तृणद्रुमाः। एते प्रयुक्तास्त्रयस्तालगमाद्यास्तालनारिकेलपूगा हिन्तालसहिताः खर्जूरादयश्चत्वारः शब्दास्तृणद्रुमा इत्युच्यन्ते। 'येनिमिदिन्नि तृणद्रुममुलु'। शेषे—'हिन्तालस्तृणराजश्च लताङ्कुरक इत्यपि'। हिन्तालनामानि। 'गिरुकाडि'। 'महारसो मधुक्षीरः परूपः पाण्डुरेच च। खर्जूर.'। खर्जूरनामानि 'खजूरमु'। 'पेरींदुलु'।

'पत्रलायां तु फल्पाकान्धिकेत्यपि।
ताली दृढफला नाली श्रीताल्य च वराङ्गना॥'

श्रीतालीनामानि। 'श्रीताडि'।

'[1]इलीमे केतकी न स्त्री दीनो व्यञ्जनजम्बुखे[2]।
श्रीभूषणो[3] रज.पुष्पो गुमपगो चलीनकः॥'

इति वैजयन्ती (पृ. ६३, श्लो. १२३)। केतकीनामानि। 'मोगलि'। 'सा पीता मदनद्रोणी सुगन्धिः कनकच्छदा'। 'गेदंगि'। 'परूषी चापि खर्जूरी निस्त्वचा दृढकण्टका'। खर्जूरीनामानि। 'चिट्टीन्दु'॥ १६९॥

इति वनौषधिवर्गः

[1] *हरिम. B₃.* [2] *जम्बुकी B₃* [3] *भूपण B₃*

---

## ५. सिंहादिवर्गः

**सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः।**
**(कण्ठीरवो मृगरिपुर्मृगदृष्टिर्मृगाशनः[1]।**
**पुण्डरीकः पञ्चनखचित्रकायमृगद्विपः॥)**
**शार्दूलद्वीपिनौ व्याघ्रे तरक्षुस्तु मृगादनः॥ १॥**

(वि.) अथ सिंहादिवर्गं आरभ्यते—सिंह इति। हस्त्यादिकं [2]हिनस्तीति सिंहः। 'हिंसि हिंसायाम्'। मृगाणामिन्द्रः श्रेष्ठः मृगेन्द्रः[3]। पञ्चत[4] इति पञ्चम्। 'पचि विस्तारे'। पञ्चं विस्तृतमास्यमस्येति[5] पञ्चास्यः। हरिणी कपिलवर्णेऽक्षिणी अस्येति हर्यक्षः[6]। के शिरसि सरन्तीति केसराः सटाः, तेऽस्य सन्तीति केसरी। हरति गजादिकं हरिः। 'हृञ् हरणे'। [7]सिंहनामानि। 'सिंहमुपेल्लु'॥ शृणाति बलीवर्दादिकमिति शार्दूलः। 'शॄ हिंसायाम्'। [8]द्वीपमाश्रयो यस्य स द्वीपी। व्याजिघ्रतीति व्याघ्रः[9]। 'घ्रा गन्धोपादाने'। व्याघ्रनामानि। 'पेद्दपुलिपेल्लु'॥ तरं बलमत्यर्थं क्षिणोतीति तरक्षुः। 'क्षिणु हिंसायाम्'। मृगानत्तीति मृगादनः। 'अद भक्षणे'। तरक्षुनामनी। 'सियगिपेल्लु'॥ १॥

[1] *सिंहदृष्टिः Pt₁* [2] हन्तीति, 'हन हिंसागत्योः' *J₁.* [3] मृगेषु बलवान् *D₂,* K₅, K₆. [4] पञ्च्यते W₂. [5] D₂, K₆ add मुखं [6] कपिलाक्षत्वात् D₂, K₆, W₂. [7] K₆, Pt₂ add कण्ठे रवो यस्य कण्ठीरवः। मृगाणां रिपुः। सिंहे दृष्टी यस्य। मृगाणामधिपः मृगाधिपः. [8] F₁, Pt₂ add निवासत्वेन [9] K₆, Pt₂ add पञ्च विस्तृता नखा नखरा यस्य पञ्चनखः, चित्रः कायो यस्य चित्रकायः, पुण्डं मार्गं रीणति हरतीति पुण्डरीकः, मृगाणां द्विट् मृगद्विट्.

(पा.) सिंहो—हरिः। 'हलीक्ष्णस्तृणसिंहः स्यात् कुटरुर्मृगसिंहकः' इति वैजयन्ती (पृ. ६५, श्लो. २)। अभेदादत्रोक्तम्। शेषे—

'कण्ठीरवो मृगरिपुः पारीन्द्रः श्वेतपिङ्गलः।
महानादश्च शार्दूलो हरितोऽतुल्यविक्रमः।
सुगन्धि. सिन्धुरद्वेषी व्यादीर्णवदनो हरित्॥'

यादवप्रकाशोऽपि—

'कण्ठीरवो मृगरिपुः सुगन्धिर्हरितो हरित्।
व्यादीर्णास्यो महानादः शार्दूलोऽतुल्यविक्रमः।
हरिर्मृगेन्द्रो हर्यक्षः पारीन्द्रः श्वेतपिङ्गल.॥'

सिंहनामानि। 'सिंहमु'। हलीव हलयानिव कुटिलनखतया ईक्ष्यत इति हलीक्ष्णः। तृणमपि हिनस्तीति तृणसिंहः। मृगान् हिनस्ति मृगसिंहक। शार्दूलद्वीपिनौ व्याघ्रे। शेषे—

'तत्र व्यालो गुहाशयः।
पुण्डरीकरतीक्ष्णदंष्ट्रस्तरस्वी घोरदर्शनः।
मृगारपञ्चनखो हुण्डो हिंसारुश्चण्डकश्च सः॥'

व्याघ्रनामानि। 'पुलि'। शेषे—

'सर्वेऽस्मिन् मेहनो मेही भेलश्चुलुकचित्रकौ।
द्वीपी पित्सश्चित्रकाय॥'

यादवप्रकाशोऽपि—

'स्वल्पकस्त्वयम्।
मेलो मेही च चुलुको द्वीपी पित्सश्च चित्रकः।
चित्रमायश्च॥'

इति। 'चिरुतपुलि'। तरक्षु.—मृगादनः। शेषे—

'तरक्षश्च मृगाजीवस्तिलित्सश्च मृगार्दनः।
मृगादर्दद्भिर्भेदे च तिलित्सः स्यात्॥'

इति गोपाल.। कुर्कुरप्रायस्याल्पव्याघ्रस्य नामानि। 'शिरुगि'॥ १॥

**वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः ।**
**दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि ॥ २ ॥**

(वि.) वराह इति—वरं श्रेष्ठं [1]सस्यं पोत्रेणाहन्तीति[2] वराहः । 'हन हिंसागत्योः' । बहून्यपत्यानि सूते सूकरः । 'पूङ् प्राणिप्रसवे' । उन्नतप्रदेशान् [3]कूलादीन् घर्षतीति घृष्टि । 'घृष [4]संघर्षणे' । कोलति संहताङ्गो भवतीति कोल[5] । 'कुल संस्त्याने' । दीर्घं पोत्रं [6]मुखाग्रमस्यास्तीति पोत्री । पोत्रेण क्षितिं किरतीति किरिः । किर इति वा । 'कॄ विक्षेपे' । केटति[7] स्वयमेकाकी गच्छतीति किटिः । 'किट गतौ' । दंष्ट्रास्यास्तीति[8] दंष्ट्री । स्थूला घोणास्यास्तीति घोणी । स्तब्धानि रोमाण्यस्य सन्तीति स्तब्धरोमा । क्रुडति[9] क्रमेण घनत्वं प्राप्नोतीति क्रोड. । 'क्रुड घनत्वे' । [10]भुवं दारयतीति भूदारः । 'दॄ विदारणे' । [11]वराहनामानि ॥ 'अडवि पन्दिपेल्लु[12]' ॥ २ ॥

[1] शाल्यादिकं $D_2$, $K_5$, $K_6$ [2] $J_2$ adds आदत्ते [3] कूलानि $K_5$, $K_6$ [4] संघर्षे $B_1$, $D_2$ [5] पीनत्वात् कोलः $K_5$, $K_6$ [6] मुखेऽस्तीति $W_2$ [7] किटति स्वैरं $F_2$, $Pt_2$ [8] सन्तीति $Pt_2$ [9] क्रोडति $D_2$, $K_5$, $Pt_2$ [10] $J_2$, $K_5$, $W_2$ add पोत्रेण [11] अरण्यसूकरनामानि $W_2$ [12] 'काडहन्दि' $J_2$

(पा.) वराह.—भूदार इत्यपि । किर इत्यकारान्तोऽपि । 'वराहश्च किरः किरिः' इति यादवः । शेषे—

'जलप्रियो वक्रदंष्ट्रः पीनस्कन्धस्तलेक्षण' ।
काकरूपी स्थूलनासः क्षुरश्च बहुप्रज. ॥
[1]दंष्ट्रायुधश्चाफसिक (?) पङ्कक्रोडश्च रोमश. ॥'

इति । वराहनामानि । 'दंष्ट्रायुधः कामरूपी कुंदारो मुसलाङ्गलः' । एतानि च ॥ २ ॥

[1] दंष्ट्रायोध. $B_3$

**कपिप्लवंगप्लवगशाखामृगवलीमुखाः ।**
**मर्कटो वानरः कीशो वनौका अथ भल्लुके ॥ ३ ॥**
**ऋक्षाच्छभल्लभालूका गण्डके खड्गखड्गिनौ ।**
**लुलायो महिषो वाहद्विषत्कासरसैरिभाः ॥ ४ ॥**

(वि.) कपिरिति—प्रायेण कम्पते चलतीति कपि । 'कपि चलने'। प्लवरूलङ्घनैर्गच्छतीति प्लवग [1]। प्लवगश्च । 'गम्लृ[2] गतौ'। शाखासु सचारी मृग शाखामृग [3]। अथ चर्म वली, सा मुखेऽस्य वलीमुख [4]। मिथ संश्लिष्टशाखासङ्कटे म्रियत इति मर्कट । 'मृङ् प्राणत्यागे'। मर्कति गच्छतीति वा। 'मक ग्रहणे'। नर इव वानर । की इत्यनुकरणशब्द कर्तुमीष्टे कीश । 'ईश ऐश्वर्ये'। वने[5] ओक स्थानमस्य वनौका । सान्त । वानरनामानि। 'कोन्तिपेल्लु'॥ [6]भल्लते हिनस्ति क्रिमीनिति भल्लुक । भल्लूकश्च। 'भल्ल भल परिभाषणहिंसादानेषु'। [7]ऋक्ष्णोति हिनस्ति क्रिमीनिति ऋक्ष । 'ऋक्ष हिंसायाम्'। ऋष्यते गहनमनेनेति वा। 'ऋषी गतौ'। अच्छेनाभिमुख्येन भल्लते हिनस्तीति अच्छभल्ल । भलत इति भाल्लूक । 'भल परिभाषणहिंसादानेषु'। भल्लूकनामानि। '[8]एलुगुपेल्लु'॥ प्रशस्तो गण्डोऽस्यास्तीति गण्डक [9]। गण्डति वर्धयत्यात्मानमिति वा। 'गडि वदनैकदेशे'। खण्डयति जिघांसन्त भिनत्तीति [10]खड्ग । 'खडि भेदने'। खड्गो हिंस्र शृङ्गमस्यास्तीति खड्गी। खड्गमृगनामानि। '[11]गण्डमृगमुपेल्लु'॥ पङ्के लुलति लोडतीति [1] लुलाय । 'लुड विलोडने'। डल्योरभेदत्वात्। 'लुल सश्लेषणे' इति वा धातु । सत्त्ववत्वात् महत इति महिष । 'मह पूजायाम्'। मह्या शेत इति वा। 'शीङ् स्वप्ने'। वाहानामश्वाना समूहो वाह, तद् द्वेष्टीति वाहद्विषत्[13]। 'द्विष अप्रीतौ'। महाकायत्वात् ताड्यमानोऽपि का ईषत् सरतीति कासर । 'सृ गतौ'। सीरा एषा सन्तीति सीरिण वलीवर्दा । सीरिभि सह भातीति सैरिभ [14]। 'भा दीप्तौ'। महिषनामानि॥ '[15]कारेनुपोतुपेल्लु' ॥३–४॥

[1] प्लवो लङ्घन तेन गच्छतीति $F_2$ $Pt_2$ $K_5$ $K_6$ add 'प्लुङ् गतौ'　　[2] गम्ल
[3] शाखाचारी (सचारी I $J_2$) मृग $F_2$ $Pt_2$　　[4] वलयो
सुट्ल गतौ' I $J_2$ $W_2$　　[5] वन $F_2$ $Pt_2$　　[6] भल्लति $K_5$ $K_6$　　[7] ऋक्षति
मुखेऽस्य सन्तीति D $K_5$ $K_6$　　[9] गण्डति गण्डस्थलवत् $D_2$ $K_6$　　[10] खण्डयति
K $K_6$　　[8] करडि $J_2$　　[11] 'खड्गमृगमु $Pt_2$　　[12] छोल्न
तीक्ष्णत्वात् खड्ग शृङ्ग तद्योगात् $F_2$, $Pt_2$　　[13] वाहस्य हयस्य द्विषत् शत्रु $F_2$, $Pt_2$
लुल्समयतीति, अय गतौ' $F_2$ $Pt_2$　　[15] काडकोण $J_2$
[14] सीरिभिर्हल्युक्तै पशुभि भा तीति सीरिभा कर्षका तेषामय $F_2$ $Pt_2$

(पा.) कपि —वनौका । शेषे—

'च प्लवङ्गम ।
महावेगो दधिमुख कुरङ्गो भल्लुक [1]प्रथु ।
सालावृको हरिश्चापि ॥'

'भल्लूकौ कपिभल्लूकौ' इति चिन्तामणि । 'महावेगो दधिमुख कुरङ्गो भल्लुक प्रथु' इति वैजयन्ती (पृ ६८, श्लो ४०)। कपिनामानि ॥ अथ गोलाङ्गूलोऽसितानन ।

नीलशीर्पोऽपि। नीलशीर्षीति नकारान्तोऽपि। स्त्रिया नीलशीर्षीत्यपि। 'कोण्डमुच्चु' शेपे—अथ क्लिङ्क्को रक्तास्य। स्त्रियाम्—क्लिङ्क्का। तथा च पुरुषमृग इत्यनुवाके। क्षुरे। 'सा ज्ञेया वानरी क्लिङ्का यस्या रक्तमुख भवेत्' इति। 'चिंकलिक'। शेपे—नीलज कपि नीलक। नीलेन वर्णेन नीलात्पर्वताद्वा जातो नीलज। स नीलक इत्युच्यते। 'कोंडिङ्ग'। शेपे—कर्म भावश्च कापेयम्। कर्मभावयो कापेयशब्द स्यात्। अथ भल्लुके—भल्लूका। वाल्लूक इत्यपि क्वचित्। शेपे—'भल्लाटो मृगधूर्तक'। 'भल्लाच्छौ दीर्घरोमाक्षे'। 'भल्लौ भल्लूकबाणौ स्त' इति धरणि। 'अच्छौ निर्मल-भल्लूकौ' इत्यजय। ऋक्षशब्द ऋकारादि। 'भल्लूको दीर्घरोमर्क्षो भल्लाटो वृकधूर्तक' इति वैजयन्ती (पृ ६५, श्लो ७)। केपाचिद् रिशब्दादिरपि। '[3]रिक्षहर्यक्षकक्षरी' (द्विस. १८ ५८) इति राघवपाण्डवीयम्। अच्छभल्ल इत्येक नाम। 'विकरालो ऽच्छभल्लश्च' इति वैजयन्ती (पृ ६५, श्लो. ७)। केपाचिन्नामद्वयम्, 'अच्छ स्फटिक भल्लूकनिर्मलेष्वच्छमव्ययम्' (पृ ३१, श्लो. १)। 'भल्लो भल्ली च वाणे स्याद् भल्लो भल्लूक[4] इष्यते' (पृ १५१, श्लो ३०) इत्युभयत्र विश्वप्रकाशिका। भल्लूकनामानि॥ गण्डके खड्गखड्गिनौ। शेपे—'वार्ध्रीणसो वनोत्साहस्तत्र वार्ध्रीणसोऽपि च'। खड्गमृगनामानि॥ लुलायो—सैरिभा। शेपे—

> 'लोहिताक्ष कृष्णशृङ्गो वीरस्कन्धो रजस्वल।
> जरन्त. कलुप पोत्री जलात्मा गद्गदस्वर।
> स्कन्धशृङ्गो यमरथ कटाहो दशलालिकौ[5]।
> [6]हसकालीसुत शृङ्गी हेरम्ब कृष्ण इत्यपि॥'

महिपनामानि। शेपे—'सृजयो गवल कृष्ण'। कृष्णमहिपनामानि। 'स परस्वान-रण्यज'। स महिपोऽरण्यजश्चेत् परस्वानित्युच्यते। 'कामाय परस्वान्' (तै स ५ ५ ११. १) इत्यत्र परस्वानरण्यमहिप इति क्षुरे। पर शब्दोऽसुन्नन्तो भासपर्याय अरण्य-महिपनाम॥ ३—४॥

[1] करी $B_3$ [2] मृग° $B_1$ [3] 'रिक्षकर्यर्थकक्षरि' इति मुद्रितग्रन्थे [4] भल्लुक इति मुद्रितग्रन्थ [5] कटाहो दशलालिक' इति वैजयन्त्याम् (पृ ६५, श्लो १०) [6] हास $B_3$

**स्त्रियां शिवा भूरिमायुगोमायुमृगधूर्तकाः।**
**सृगालवञ्चकक्रोष्टुफेरुफेरवजम्बुकाः॥ ५॥**
**ओतुर्विडालो मार्जारो वृषदंशक आखुभुक्।**

(चि.) स्त्रियामिति—शकुनेन मोदहेतुत्वात् शिवा। भूरयो माया यस्य भूरिमायु । भूरिमाय इति वा पाठ । गा मिनोति क्षिपतीति गोमायु । 'डुमिञ् प्रक्षेपणे'। मृगेषु धूर्तो मृगधूर्तक । वने तत्र तत्र सरति, सृजति मायामिति वा सृगाल । 'सृ गतौ' 'सृज विसर्गे'। असृगालातीति वा। 'ला आदाने'। [2]वञ्चयतीति वञ्चक । 'वञ्चु [3]प्रलम्भने'। क्रोशतीति [4]क्रोष्टु, क्रोष्टा वा। 'क्रुश आह्वाने रोदने च'। फे इति[5] रौतीति फेरु । फेरवश्च[6]। 'रु शब्दे'। मास जमत्यत्तीति जम्बुक । 'जमु अदने'। शृगालनामानि। 'नक्कपेल्लु'॥ अवति मूषकबाधाया ओतु । 'अव [8]रक्षणे'। बिडति मूषिकान् बिडाल । 'बिड भेदने'। बिडवद् अस्पृश्य मूल पुच्छमस्येति वा। आखुभक्षणेन[9] गृह मार्ष्टि मार्जार । 'मृजूष शुद्धौ'। वृषान् मूषकान् दशतीति वृषदंशक । 'दंश [10]अदने'। आखु भुङ्क्त आखुभुक्। 'भुज पालना भ्यवहारयो'। मार्जारनामानि॥ '[11]पिल्लिपेल्लु' ॥ ५ ॥

[1] शकुनावेदक(दनहेतु $K_3$)त्वात् $K_5$ $K_6$ अयं शब्द स्त्रियाम् $K_6$　[2] $D_2$ $J_2$ $K_5$ add तुदया　[3] कौटिल्ये $F_2$ $Pt_2$　[4] उकारान्त ऋकारा तश्च $F_2$ $Pt_2$　[5] $B_1$ $K_5$ add अव्यक्त　[6] फे इति रवो यस्य $D_2$ $K_3$ $Pt_2$　[7] मूषकोपद्रवभय $K_5$ $K_6$ °द्रवात् $J_2$　[8] रक्षणादौ $D_2$, $Pt_2$　[9] ग्रहणेन $J_2$ $Pt_2$　[10] दशने $K_6$ $W_2$ [11] 'वेक्कु' $J_2$

(पा.) स्त्रिया शिवा—जम्बुका । पुमभिधानोऽपि स्त्रीलिङ्ग एवेति स्त्रिया शिवेति। भूरिमायोऽदन्त [1] इति टीकासर्वस्वकार । शेषे—

'भरुजश्चापि फेरुण्ड श्वभीरुर्मृगमर्तक ।
शयालु सूचको घोर '॥

जम्बुकनामानि। तथा च यादव —(वैजयन्ती पृ ६८, श्लो ३७ ८)

'सृगालो भरुज क्रोष्टा श्वभीरुर्मृगमर्तक [2]।
शयालु सूचको घोर फेरुफेरुण्डफेरवा ॥'

इति। स्वल्पे तत्र किखि स्त्रियाम्। पुमभिधानेऽपि स्त्रीलिङ्ग । 'किखि स्त्री क्रोष्टु भेदेऽल्पे[3]' इति वैजयन्ती (पृ ६८, श्लो ३९)। अल्पजम्बुकनाम॥ पृथौ गण्डिवलोपाशौ। 'पृथौ लोपाशगण्डिवौ[4]' इति वैजयन्ती (पृ ६८, श्लो ३९)। पृथुजम्बुकनामनी॥ 'नाम्नो नक्रमुखे स्मृत '। नक्रमुखजम्बुकनाम॥ ओतु —आखुभुक्। शेषे—'जहको गात्रसंकोची मण्डली नखरायुध '। मार्जारनामानि। शेषे—'लोमशोऽन्यो विडाल स्यात् पूतिक शालिजातिक '। पूतिमार्जारनामानि। कशशब्दोऽप्यत्र। 'कशो लोमश' इति क्षुरे। 'मार्जारिका वेधमुख्या'। 'पुनुगुपिल्लि'। 'मदना [5]गन्धचेलिका'।

'जवादिपिह्नि'। शेषे—'गोधा पञ्चनखी गोवी निहाका दीर्घपुच्छिका। मुसली'॥ बिलगोधा जलगोधा तरुगोधा गृहगोधा शिलागोधेति गोधा बहुविधा। गोधासामान्यनामानि। 'उड़ुमु'। वृक्षजाता[6] सा शयण्डक उदाहृत। तरुगोधानाम॥ ५॥

[1] दान्त B₃, मुद्रितग्रन्थे तु 'भूरि अनन्ता माया अस्येति भूरिमाय' इत्येव दृश्यते (पृ २१८) [2] °मत्तक [वैज पृ ६८] [3] अल्प B₃ [4] गन्धिलौ B₃ [5] गण्ड° B₃
[6] 'वृक्षजा सा शयण्डक' इति वैजयन्त्याम् (पृ १५०, श्लो २६).

**त्रयो गौधारगौधेरगौधेया गोधिकात्मजे॥ ६॥**
**श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम्।**

(वि.) त्रय इति—गोधाया अपत्य[1] गौधार, गौधेर, गौधेयश्च। गोधिकात्मजनामानि। 'उड़ुमुपिल्लपेल्लु'[2]॥ श्वान विध्यतीति श्वावित्। 'व्यध ताडने'। शलतीति शल्य[3]। 'शल चलने'। 'एदुपन्दिपेल्लु'॥ शलतीति शलली, शलल, शल च। 'शल [4]गतौ'। 'एदुपन्दिमुल्लपेल्लु'[5]॥ ६॥

[1] I adds पुमान् [2] 'उडुबिनमरि' J₂ [3] शलाकाभरोमत्वात् D₂, h₅, h₆
[4] आशुगमने h₅, h₆ [5] 'येदुपन्दिमुल्लु' D₂

(पा.) त्रयो—गोधिकात्मजे। गोधिकासुतनामानि। 'उड़ुमुपिल्ल'। जात्यन्तरमिति स्वामी[1]॥ श्वावित्—शल्य। शेषे—'शलली स्याद्व्रजसलल शल। शल्यरोमा च'। शल्यमृगनामानि। 'येदुपन्दि'। तल्लोम्नि—शलम्। श्वावितो लोमनामानि। 'तल्लोम्न्यना शलली[2] शलम्' इति यादव (वैज पृ ६८, श्लो ३७)। स्त्रीलिङ्गे [3]गौरादिङीपि शलली॥ ६॥

[1] (पृ. १२५) [2] शल्ल B₃ [3] (४ १ ४१)

**वातप्रमीर्वातमृगः कोक ईहामृगो वृकः॥ ७॥**
**मृगे कुरङ्गवातायुहरिणाजिनयोनयः।**

(वि.) वातप्रमीरिति—वात प्रत्यामिमुख्येन प्रमिमीते वातप्रमी। ग्रामणीशब्दनदीकारान्त पुलिङ्ग। '[1]माङ् माने शब्दे च'। वात [2]मृगयते वातमृग। 'मृग अन्वेषणे'। मृगभेदनामनी। 'गालि केदुरुगानडचुमृगमुपेल्लु'॥ कौतीति कोक। 'कुङ् शब्दे'। कोकते[3] मांसादिक वा। 'कुक [4]आदाने'। मृगानीहत इति ईहामृग।

'ईह चेष्टायाम्'। ईहा धावनादिचेष्टा मृगयते वा। 'मृग अन्वेषणे'। इरा भूमि वर्कते प्रचारार्थमिति वृक[5]। 'वृक [6]आदाने'। वृकनामानि। '[7]तोंडेलुपेल्लु'॥ मृग्यते [8]व्याधैर्मांसार्थमिति मृग। 'मृग अन्वेषणे'। कौ[9] रङ्गतीति कुरङ्ग। 'रगि नृत्ते'। 'रगि गतौ' इति वा धातु। वात प्रत्ययते यातीति वातायु। 'अय गतौ'। वानायुरिति वा पाठे वान शुष्क पृथेतस्तत्रोऽयते धावतीति वानायु। 'अय पय गतौ'। [10]व्याधेनान्यत्र ह्रियते हरिण। 'हृञ् हरणे'। अजिनस्य[11] योनि कारणमित्यजिनयोनि। हरिणनामानि॥ '[12]इर्रिपेल्लु'॥ ७॥

[1] 'मा (माङ् $Pt_2$) माने वर्तने च' $h_5$　　[2] मृगयति $K_5$ $K_6$, $Pt_2$　　[3] $K_2$, $h_5$, $K_6$ add इहा गृह्णातीति वा　　[4] 'कुक वृक आदाने' $K_5$, $K_6$　　[5] वर्कत मांसादिकमिति $Pt_2$　　[6] आच्छादने $K_5$ $K_6$　　[7] 'तोडे' $J_2$ आरण्याश्व(व्यश्व)नामानि $W_2$　　[8] कुत्र्यकैः $F_2$, $Pt_2$　　[9] $K_5$, $h_6$ add भुवि, 'रगि गतौ' $Pt_2$　　[10] $W_2$ adds शीतन　　[11] $F_2$, $Pt_2$ add चर्मण　　[12] 'यरलेयहेसरु' $J_2$

(पा.) वातप्रमीर्वातमृग। शेषे—'नि श्रृङ्गो हरिणाकृति। शिववातायुजविन'। वातमृगनामानि। कोक —वृक। शेषे—'तस्मिन्निडावृकोऽरण्यशुनकस्तस्करोऽपि च'। वृकनामानि। 'तोडेलु'। मृगे—अजिनयोनय। शेषे—'भीरुचेता लिगु प्लावी [1]वननो मरुवरतथा'[2]। कुरङ्गजातिमात्रनामानि। 'इर्रि'॥ ७॥

[1] वल्न $B_3$　　[2] वैजयन्ती (पृ ६५, श्लो ११)

**ऐणेयमेण्याश्चर्माद्यमेणस्यैणमुभे त्रिषु ॥ ८ ॥**
**कदली कन्दली चीनश्चमूरुप्रियकावपि ।**
**समूरुश्चेति हरिणा अमी अजिनयोनयः ॥ ९ ॥**

(वि.) ऐणेयमिति—एण्या इदम् ऐणेयम्। एणस्येद चर्माद्यम् ऐणम्। 'इरिलेलु मांसमुमोदलयनवानिपेल्लु'॥ ऐणेयमैण च गुणिलिङ्गे। केन वायुना दल्यते[1] कदली। 'दल विशरणे'। 'वोल्लिचायमेडचारलु गल्लिगि, वल्मु तोलुडु मृगमु'॥ कन्दानि कन्दतीति [2]कन्दली। 'कदि आह्वान रोदने च'। [3]लुन्दिलनीलवर्णमृगनाम। चीयते व्याधै सपाद्यत इति चीन। 'चिञ् चयन'। श्वेतस्कन्धमृगनाम॥ चम्यते व्याधैरिति चमूरु। 'चमु [4]भक्षणे'। पुच्छहीननानावर्णमृगनाम॥ प्रीयते वात प्रति प्रियक[5]। 'प्रीङ् प्रीतौ' 'प्रीञ् तर्पणे कान्तौ च'। [6]फाले श्वेतरोमाङ्कमृगनाम[7]॥ [8]सगतौ ऊरू अस्येति समूरु। महाग्रीवकेसरयुतसितमृगनाम॥ अमी हरिणा अपि अजिनयोनय चर्मवारणानीत्युच्यन्ते॥ ८–९॥

[1] I, $K_5$, $W_2$ add अस्या चक्षुषी [2] कन्दलीशब्दव्युत्पत्ति कदलीश०दवत् $K_2$, $W_2$ [3] इन्दीवर° $W_2$ [4] अदने $W_2$, $Pt_2$ [5] म्रियते गच्छति वात प्रति, ' प्रिय गतौ ' $K_6$, $Pt_2$ [6] माले $J_2$, $W_2$ [7] $D_2$, I, $K_2$, $K_6$, $W_2$ add नील्वण° [8] सम्यगूयते तन्तुसतानवत् क्रमेण गच्छतीति, ' वेञ् तन्तुसताने ' $K_5$, $K_6$

(पा.) ऐणेय—रिपु। एणशब्दो हरिणपर्याय । 'एण कुरङ्गमो रिश्यो [1]वातायुर्हरिणो मृग ' इति त्रिकाण्डशेष (पृ १२, श्लो २६७)। एण्याश्चर्मादिकमैणेयम्। एणस्य तु ऐण स्यात्। द्वे त्रिलिङ्गे। कदली—अजिनयोनय । कदल्यादय पडप्यमी हरिणविशेषा । प्रावरणाद्युपयुक्तचर्मकारणानि। कदलीकन्दलीशब्दौ स्त्रीलिङ्गौ। अथ कदल्या कन्दल्या क्रमतो विदु । कदलीन कन्दलीनमिति । कदली कन्दलीत्येतौ नान्तौ पुलिङ्गाविति केचित्। शेषे—

' कदली तु बिले शेते मृदुश्लक्ष्णैश्च कर्बुरै ।
नीलाग्रैर्लोमभिर्युक्ता सा वितस्त्यङ्गुलायता ॥
कदली तु श्यामवर्णा हस्तायामा महोदरी ।
चीनस्तु चीनसी स्त्रीत्वे कपोता त्रिशदङ्गुला ॥
चमरा तु चमूरुर्ना सहोऽपि त्रिविध स्मृत ।
सित कृष्णश्चित्ररोमेत्यस्य पुच्छोऽस्ति वा न वा ॥
प्रियको रोमभिर्युक्तो मृदुरक्तासितैर्घनै ।
समूना स्त्री समूरुर्ना महाग्रीवसमूरुकौ ॥
सितके सत्वान् वेगी स्निग्धश्च मृदुरोमवान्।
गोधूमाभ स्निग्धवर्ण इति स द्विविधो मत ' ॥ ८–९ ॥

[1] उत्तरार्धं मुद्रितग्रन्थे न दृश्यते

**कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररौहिषाः ।**
**गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः ॥ १० ॥**

(वि.) कृष्णसार इति—कृष्णेन[1] सार शवल कृष्णसार । कृष्णशुक्लरोमवत्प्रदेशयुगयुक्तमृगनाम। 'नल कण्पुन विचित्रमैन यरि'॥ रौति प्रायेणेति रुरु । 'रु शब्दे'। 'नल्लचारलदुरिव'॥ न्यञ्चत्यधोमुखतया न्यङ्कु । 'अञ्चु गतिपूजनयो '। 'जिंकपोतु '॥ रमते सजातीयमृगेषु रङ्कु [3]। 'रमु क्रीडायाम्'। [4]अत्यन्तश्वेतमृगनाम॥ शयनादिना श सुख वृणोतीति शम्बर । 'वृञ् वरणे'। रक्तवर्णह्रस्वन्यङ्कुनाम॥ रोहिषाख्यतृणे भव रौहिष [5]। 'कोण्डगोरे'॥ गोकर्णसदृशकर्णत्वाद् [6]गोकर्ण । 'वणिति

युनुस्मृगमु'॥ [7]पृपता विन्दवोऽस्य सन्तीति पृपत । 'दुष्पि'॥ सरलमतित्वाद् व्याधमेतीत्येण [8] । 'इण् गतौ' । सर्वतोनीलमृगनाम ॥ इयर्ति [9]वनम् ऋश्य । 'ऋ गतौ'। 'मनु बोतु'॥ रक्तवर्णत्वेन रोहित[10]। 'केसरि [11]यनु मृगमु'॥ चमति तृण चमर । 'चमु [12]अदने'। 'चमरीमृगमु'॥ एतानि प्रत्येक मृगविशेप-नामानि ॥ १० ॥

[1] $F_2$, $Pt_2$ add नीलवर्णो न　[2] $D_2$ $J_2$ $K_6$ add गच्छति　[3] रञ्जयति रङ्कु, 'रञ्ज रागे' $F_2$ $Pt_2$　[4] आधक॰ $J_2$ $K_5$, $W_2$　[5] रोहतीति रोहिष तृणविशेष स भक्ष्यमस्येति $F_2$, $Pt_2$　[6] गोकर्णशस्तसवर्णत्वात् $W_2$　[7] पृषत $D_2$ $K_5$, $K_6$　[8] सरसमतित्वाद् ०याधमेति $W_2$　[9] लीन $W_2$　[10] रोहतीति, 'रुह बीजज-मनि प्रादुर्भाव च' $K_5$, $K_6$　[11] केसरयेवमृगनाम' $J_2$　[12] 'चमु छमु जमु अदने' $K_2$ $K_6$

(पा.) कृष्णसार —मृगा । इह मृगशब्देन इतरे च वनगोचराश्चतुष्पादो विवक्षिता । न तु हरिणजातीया एव। कृष्णसारादयश्चमरान्ता मृगभेदा भवन्ति। [1]रौहिप इति केचित्। शेपे—

'कृष्णसार कृष्णशार कृष्णश्चैव निरञ्जन ।
यज्ञार्हो विन्दुयुक्तस्तु महाकृष्णमृगो रुरु ॥
न्यङ्कुस्तु हरिणाकार त्रिकोणविपुलोन्नत ।
रङ्कु स यद्रोमकृत राङ्कव वस्त्रमुच्यते ॥
शम्वर स्वल्पहरिणो रोहिपो गर्दभाकृति ।
गोकर्ण स भवेद्यस्य गोकर्णप्रतिमे श्रुती ॥
स्थविष्ठैर्विन्दुभि शुक्लरोमजैश्चित्रित शतै ।
हरिण पृपत प्रोक्त एण स्यात् कृष्णवर्णक ॥
ऋश्य स्त्री यस्य रोहित् स्यादरुणो वर्णतश्च य ।
कृष्णो धवात्री(?) शृङ्गश्च तुरङ्गमसमाकृति ॥
रोहितो रक्तवर्ण स्यात् पृष्ठत श्वेतराजिमान् ।
चमरो धवल कृष्णश्चित्रो वा महिपाकृति ।
हरिणश्च कुरङ्गश्च राजीवो मृगमातृका ॥'

हरिणकुरङ्गशब्दौ मृगसामान्यत्वेनोक्तावप्यत्र विशेपवचनत्वेन कथितौ ॥ १० ॥

[1] रोहिप इति पारिजातानुसारी पाठ

**गन्धर्वः शरभो रामः सृमरो गवयः शशः।**
**इत्यादयो मृगेन्द्राद्या गवाद्याः पशुजातयः ॥ ११ ॥**

(वि.) गन्धर्व इति—गन्धयत्यर्दयतीति[1] गन्धर्वः। 'गन्ध अर्दने'। तुन्दिलमृगनाम ॥ हिंस्रत्वात् शरवद् भातीति शरभः। 'भा दीप्तौ'। शृणाति [2]सिंहादिकमिति वा। 'शॄ हिंसायाम्'। अष्टापदमृगनाम ॥ व्याधा अस्मिन् दृष्टे रमन्ते[4] रामः। 'रमु क्रीडायाम्'। 'पेद्[5] दुप्पि' ॥ वने सर्वत्र [6]सरतीति सृमरः। 'सृ गतौ'। 'पेद सवरुसुमृगमु' ॥ गवते गवयः। 'गुङ् अव्यक्ते शब्दे'। गामयते सदृशत्वादिति वा। 'अय गतौ'। 'गुरुपोतु' ॥ शशति प्लुतेन[7] गच्छतीति शशः। 'शश प्लुतगतौ'। '[8]कुंदेलु' ॥ इत्यादयो गन्धर्वादयः। मृगेन्द्राद्याः सिंहादिचमरान्ता गवाद्या वक्ष्यमाणमूषकप्रभृति गोपर्यन्ताश्चतुष्पदाः सर्वे च पशुजातयः पशुसंज्ञिका भवन्ति। पाश्यन्ते दामभिः [9]पशवः। 'पश बन्धने' ॥ ११ ॥

[1] $D_2$, $K_5$ $K_6$ add नाशयति. [2] हिंसादिक I, $K_2$, $K_3$, $W_2$. [3] अष्टपद° $W_1$; अष्टपाद° $J_3$, $K_5$. [4] $K_5$, $K_6$ add मोदन्ते. [5] 'रामं दुप्पु' $K_6$. [6] प्रसारयति $J_2$ [7] प्लुत्या $W_2$. [8] 'मोलदहेसरु' $J_2$. [9] 'नाड़ुकाडुळ्ळवाल्वुळ्ळ यह्राजीवंगलहेसरु' $J_2$.

(पा.) गन्धर्वः—शशः। मृगा इत्यनुवर्तते। हरिणादिशशान्ताश्च मृगविशेषा भवन्ति। 'गन्धर्वपृषतश्चेति ज्ञेयाः सारङ्गजातयः' इति भागुरिः। गवयो रामः सृमरो जाहकलम्पाकमुकयगन्धर्वा इति मतान्तरबोधनार्थं पृथक्पाठः। शेषे—

'हरिणस्ताम्र उद्दिष्टः कुरङ्गो हरिणो महान्।
राजीवस्तु मृगो ज्ञेयो राजिभिः परितो वृतः ॥
पृषतश्चन्द्रबिम्बाभो हरिणात् किञ्चिदल्पकः।
स्वल्पावृत्तोदरारक्ता शशाभा मृगमातृका ॥
गन्धर्वः स्याद्गोलपुच्छः शरभस्तूर्ध्वलोचनः।
गजाविरष्टपादित्वाद्रामस्तु वृकधोरणः।
सृमरः स्याद्बालमृगः परुर्ना चमरी न पण् ॥'

-पण्डनामैकदेशः पण्। 'अरण्याय सृमरः' (तै. सं. ५.५.१६.१) इत्यत्र क्षुरे सृमरश्चमर इत्युक्त्वा महत्तश्चमरस्य नामानि।

'गवयः स्याद्वनगवः शशस्तु मृदुरोमवान्।
शलिको लम्बकर्णोऽप्यपलवाद्रोमकर्णिकः ॥'

हरिणादीनां यथासंभवं लक्षणानि नामानि च ॥ इत्यादयो—पशुजातयः । इत्यादयो हरिणगन्धर्वादयः आस्येनानुक्तकुमारीमूकादयः प्रागुक्तसिंहाद्याः वक्ष्यमाणगवाद्याश्च पशुत्वव्यञ्जकपुच्छपादचतुष्टयादिमत्त्वेन पशुजातयो भवन्ति । अनुक्तम्—'नकुल पिङ्गल.' । 'मुगि' । 'अथ स्याच्चित्रोड कालिका स्त्रियाम्' । 'उडत' ॥ ११ ॥

**(अधोगन्ता तु खनको वृकः पुन्ध्वज उन्दुरः)**
**उन्दुरुर्मूषिकोऽप्याखुर्गिरिका बालमूषिका ।**
**(चुचुन्दरी गन्धमूषी दीर्घदेही तु मूषिका)**
**सरटः कृकलासः स्यान्मुसली गृहगोधिका ॥ १२ ॥**
**लूता स्त्री तन्तुवायोर्णनाभमर्कटकाः समाः ।**

(वि.) उन्दुरुरिति—उनत्ति मुखस्पृष्ट[1] मुखस्रावेण सेचयतीति[2] उन्दुरुः । 'उन्दी क्लेदने' । अन्नादिकं मुष्णातीति मूषिकः । 'मुष स्तेये' । मूषक इति वा पाठः । [3]स्वाश्रयमाखनतीति[4] आखुः । 'खनु अवदारणे' । मूषिकनामानि ॥ '[5]एलुक पेल्लु' ॥ गिरति धान्यादिकमिति गिरिका । गीर्यते मार्जारेणेति वा । 'गॄ निगरणे' । बाला चासौ मूषिका च बालमूषिका । '[6]चिट्टेलुकपेल्लु' ॥ (छ्यतीति चुचुन्दरी । 'छो छेदने' । गन्धवती मूषी गन्धमूषी । 'चुचु पेल्लु' ॥ दीर्घो देहोऽस्या इति दीर्घदेही । मुष्णाति धान्यादिकं मूषिका । 'पन्दिकोक्क पेल्लु') सरति प्रायेणेति सरटः । 'सृ गतौ' । कृकेन[7] शिरोऽग्रेण [8]लसतीति कृकलासः । 'लस श्लेषणक्रीडनयोः' । '[9]तोण्डपेल्लु' ॥ [10]मुस्यति खण्डयति क्रिमीनिति मुसली । 'मुस खण्डने' । गृहे गोधिकेव तिष्ठतीति गृहगोधिका[11] ॥ '[12]बल्लिपेल्लु' ॥ लूयते [13]छिद्यतेऽस्यास्तन्तुरिति लूता । 'लूञ् छेदने' । तन्तून् वयतीति तन्तुवायः । 'वेञ् तन्तुसन्ताने' । [14]ऊर्णं नाभौ यस्य ऊर्णनाभः [15] । तन्तुमवलम्ब्य [16]मर्कटवदारोहणात् मर्कटः । ऊर्णनाभनामानि ॥ [17]'सालेपुरुगु पेल्लु' ॥ १२ ॥

[1] F₂, Pt₂ add वस्तु [2] सिञ्चति J₂, W₂ [3] स्वालय I [4] आसमन्तात् J₂, Pt₂ [5] 'इलिय हसरु' J₂ [6] 'चिक्कयिलि' J₂ [7] गरेन F₂, Pt₂ [8] विलसति J₂, W₂. [9] 'ओती हेसरु' J₂ [10] D₂, K₅, K₆ add मुखेन [11] J₂, K₆, W₂ add गृहाश्रयत्वाच्च ईषद्गोधिकासादृश्योपेतत्वाच्च [12] 'हल्लि' J₂ [13] अस्याः W₂ [14] ऊर्णा K₅, K₆. [15] ऊर्णनाभि J₂ [16] K₆, W₂ add अवरोहणात् [17] 'जेड्नहुलु' J₂

(पा.) उन्दुरु —आखु । उन्दुर इत्यकारान्तश्चास्ति । मूषक इत्यकारमध्यस्त्व-साधु । शेषे—'गताट खानक खन'। खनकशब्दोऽप्यस्ति। तथा च माधव — 'उन्दुरुर्मूषिक काण्ड आखुश्च खनक खन' इति। मूषिकनामानि। 'येलुक'। 'पन्दिकोक्कुलु'॥ 'चुचुन्दरी तु गन्धाखु'। (वैज पृ १५०, श्लो ३२)। 'चुन्दरी राजपुत्रीति' कोशान्तरम्। 'चुञ्चु'। गीरिका बालमूषिका। 'चिट्टेलुक'॥ सरट —स्यात्। शेषे—'शयानश्च शयण्डक। शयश्च जाहको गात्रसंकोची प्रतिसूर्यक'। सरटनामानि। 'कृकलास प्रतिरवि शयान सरट शय' इति वैजयन्ती (पृ १५०, श्लो २८)। 'तोण्ड'॥ 'कामरूपिणि तत्र स्याच्चित्रबिम्बश्च बिम्बक'। 'उसरवेल्लि'। 'कृकवाकुर्दुष्प्रभे स्यात्'। 'मैलचायतोण्ड'॥ मुसली—गोधिका। शेषे—'ज्येष्ठा पल्ली कुड्यमत्स्या वैवक्षा नदनी तथा। माणिक्या'। पल्लीनामानि॥ 'बल्लि'॥ सा तु शुक्ला कुण्डणाची [1]सुराजिका। कुण्डण कुड्यम्। तत्राञ्चतीति कुण्डणाची। शुक्लपल्लीनामनी। 'तेल्लबल्लि'॥ हालाहलस्तु सृजया ब्राह्मणी रक्तपुच्छिका। वैजयन्त्या च (पृ १५०, श्लो २९) 'हालाहलस्त्वञ्जनिका ब्राह्मणी रक्तपुच्छिका' इति। हालाहलनामानि। 'मिड'॥ लूता—समा। ऊर्णनाभिरपि। 'तन्तुवायोणनाभोर्णनाभय शलकोऽपि च'। इति रभसकोशात्। शेषे—

'मूषिका[2] लूतिका[3] तन्तुनाभोर्णाबहिजालिका।
जालकृत्क्रिमिदिग्बन्धा॥'

लूतानामानि। 'सालेपुरुगु'। 'लूतापट्टोऽस्य जालकम्'। आशाबन्धोऽस्येति पाठान्तरम्। 'सालेपट्ट'॥१२॥

[1] सराजना $B_1$ [2] दूषिका $B_2$ [3] लुपिका $B_3$

**नीलङ्गुस्तु क्रिमिः कर्णजलौका शतपद्युभे॥ १३॥**
**वृश्चिकः शूककीटः स्यादलिद्रोणौ तु वृश्चिके।**

(वि.) नीलङ्गुरिति—नीलति [1]मन्द नीलङ्गु। 'नील [2]वर्णगत्योः'। अयं शब्दो देशीय[3]। [4]मन्द [5]क्रामतीति क्रिमि। 'क्रमु पादविक्षेपे'। क्रिमिनामनी। 'सामान्यपुगा पुरुगु[6] पेल्लु'॥ कर्णे [7]जलौका इव कर्णजलौका। शतम्[8] अपरिमितानि पदानि सन्त्यस्या शतपदी। '[9]जेर्रिपेल्लु'॥ वृश्चति [10]शूकाग्रेण वृश्चिक। 'ओव्रश्चू छेदने'। [11]शूकयुक्त कीट शूककीट। 'नल्ल[12] तेलु'॥ अलमनर्थोऽस्मादिति अली।

नकारान्त । अलिरिति वा पाठ । द्रुणति हिनस्तीति द्रोण । 'द्रुण हिसागतिकौटिल्येपु'। वृश्चतीति वृश्चिक । '[13]एर्र तेलुपेल्लु' ॥ १३ ॥ कीटकप्रकरण समाप्तम् ॥

[1] नीलत्यङ्गमिति $K_3$, म द गच्छति $K_5$ [2] 'नील गतौ' $K_5$ [3] देश्य $J_2$, $K_5$ $W_2$ [4] मन्द मन्द $K_5$, $K_6$ [5] आक्रामति $W_2$ [6] 'हुलुगलहेसरु' $J_2$ [7] जरूका $D_2$, $K_5$, $K_6$ [8] शतपरिमितानि $W_2$ [9] 'जेरु' $J_2$ [10] शूकेन $J_2$ [11] शूकप्रधान $D_2$, $K_5$, $K_6$ [12] 'यमचेलु' $J_2$ [13] विषकीटनामानि $W_2$, 'वैचेलु' $J_2$

(पा.) नीलङ्गु —कृमि । शेपे—'नीले द्रुकीटे पुलकस्तथा'। नीलवर्णे द्रुकीटे नीलङ्गुकृमिपुलकशब्दा वर्तन्ते। नीलङ्गुर्वृक्षज कीटो नीलवर्ण इति वेदभाष्ये। नीलङ्गुकृमिशब्दौ कीटमात्रनामनी इति केचित्। 'द्रुमामये भवेत् पुसि कीटे च क्रिमिवत्कृमि' इति रभसकोश । 'दुर्दशो मत्कुणे'। 'नल्लि'। 'काष्ठभवे ज्ञेय क्रिमौ घुण'। काष्ठभक्षकक्रिमिनाम। 'पिपीलिका द्वयोर्लूता'। पिपीलिकनामनी। 'चीम'॥ 'महान् प्राञ्ची स पिङ्गल'। स पिपीलिक महान् पिङ्गलश्च यदि प्राञ्चीत्युच्यते। 'गोप्पयर्चीम'॥ 'महान् कृष्ण उल्गव[1]'। महान् कृष्णश्च स यदि उल्गव[1] इत्युच्यते। 'कण्डूचिम'॥ 'या तु स्वल्पा कृष्णवर्णा सा [2]मर्कटपिपीलिका'। 'चिन्ननल्लचीम'॥ 'कृष्णा सूक्ष्मा च चेत् सान्या जाति कन्यापिपीलिका'। 'सिंचसन्नपुनल्लचीम'॥ 'वम्रो वम्युपदीकोपजिह्विकास्त्युपदेहिका'। रूपभेदेन वम्र पुल्लिङ्ग । वम्रयादय पञ्च स्त्रीलिङ्गा । स्त्यायति सघातयति मृद स्त्री । वम्रिकनामानि । 'चदलुपुरुगु'।

'अनेकसुषिरोपेत कान्त स्त्रीमुखपङ्कजम् ।
सुसिद्ध त्र्यक्षरोपेत चक्षु श्रोत्रमनोहरम्' ॥

इति प्रयोग । '[3]तत्प्राया शिथिली [4]पिङ्गवर्णा'। उपदेहिकासदृशी पिङ्गवर्णा शिथिलीत्युच्यते। 'चेकोणुजु'। 'अथ क्रिमयोऽणव । भवेयु कीकसा'। पुलका इति केचित्। 'अतिसूक्ष्ममुलैन पुरुगुलु'॥ कर्णजलूका—उभे। जलौका इति सान्त इति केचित्। 'आढा शतपदी कर्णजलूका द्वारिकापि च' इति वैजयन्ती (पृ १५०, श्लो ३३)। शतपदीनामानि । 'जेरिन्निचेविचोरुपामुन्तु'॥ वृश्चिक —कीट स्यात्। कण्टकीट नामनी। 'गोगलपुरुगु'। भ्रमरभेद इति केचित्। अलिद्रुणौ—वृश्चिके। 'भृङ्गवृश्चिकयोरलि' इति रभसकोशादलिरिकारान्त । अलमस्यास्तीति अली। 'अल वृश्चिकस्याद्ग्रलम्' इति हलायुध (अ मा ३ २३)। अलमाल, वृद्धानालीति केचित्। 'वृश्चिके स्यात्यलिद्रुणा[5] मल तत्पुच्छकण्टक[6]' इति वैजयन्ती (पृ १५०, श्लो. ३२)।

'द्रुणो वृश्चिकभृङ्गयो' इति विश्वप्रकाशिकापाठात् (पृ. ४७, श्लो ६) ह्रस्वादिरपि। वृश्चिकनामानि। 'तेलु'॥ १३॥

[1] उलकल (वैज पृ १५१, श्लो ३७) [2] मर्कट° (वैज पृ १५१, श्लो ३७)
[3] तत्राय $B_3$ [4] पिङ्गल° $B_3$ [5] °द्रूणावल $B_1$ [6] °कण्टकम् $B_1$

**पारावतः कलरवः कपोतोऽथ शशादनः॥ १४॥**
**पत्री श्येन उलूके तु वायसारातिपेचकौ।**
**(दिवान्धः कौशिको घूको दिवाभीतो निशाटनः)**

(वि.) अथ पक्षिप्रकरणमारभ्यते। पारावत इति—पारेण बलेनावतीति पारावत। 'अव रक्षणादौ'। परमवतीति परावत। 'अव गतौ'। शीघ्रगामी[1] खगादि, तस्यायमिति पारावतो वा। कलो रवोऽस्येति कलरव[2]। शीघ्रगामित्वेन कस्य वायो पोत इव कपोत। 'पावुरसुपेल्लु, [3]गुऽजपेल्लु'॥ शशानत्तीति शशादन। 'अद भक्षणे'। प्रशस्त पत्र पक्षोऽस्यास्तीति पत्री। श्यायते आशु गच्छतीति श्येन। 'श्यैङ् गतौ'। श्येननामानि। 'डेगपेल्लु[4]'॥ उलति नेत्रज्योतिषा दहति काकानिति उलूक। 'उल आवरणे'। धातूनामनेकार्थत्वाद् अत्र दहनार्थो ग्राह्य। वायसानामराति वायसाराति[5]। स्वनेत्रज्योतिषा वायसान् पचति हन्तीति पेचक। 'डुपचष् पाके'। उलूकनामानि। 'गूबपेल्लु[6]'॥ १४॥

[1] °गामिक I [2] $D_2$, $K_2$, $K_3$ add 'पावुरमु' [3] 'पालियाण' $J_1$, $W_2$ adds कपोतशब्द पारावतस्य वा नाम [4] 'हद्दिन हेसरु' $J_1$ [5] $W_2$ omits one line [6] $D_1$, $Pt_2$ add दिवा अन्ध दिवान्ध। कुशा वृथा, तेषु चरतीति कौशिक। घू इति शब्द करोतीति घूक। दिवा भीत दिवाभीत। निशायामटतीति निशाटन। 'अट गतौ'

(पा.) पारावत कलरव। शेषे—'पाटलाङ्घ्रिश्च रक्तदृक्। मदोत्कटो वालरवस्स कपोत'। पारावतादिकपोतान्ता शब्दा पारावते वर्तन्त इति टीकासर्वस्वकारेण व्याख्यातम् (पृ २२८ ५)। तथा च माधव—'पारावत कलरव कपोता रक्तलोचन' इति। कश्चित्तु पारावतादिपञ्चक पारावते वालरवसादिद्वय कपोत वर्तत इति व्याचक्षते। तथा च वैजयन्त्याम् (पृ २६, श्लो १८) 'पारावत कलरवो रक्तदृग्मिर्दोत्कट' इत्युक्त्वानन्तर 'नारस्तु द्विक एराश्च' इत्यादिना वायसनामान्यनुदिश्य, 'कपोतो वालरवस[1] स्यात्' (पृ २७) इत्युक्तम्। अत एव—

'प्रच्छाद्य पुष्पपटमेष महान्तमन्त
रावर्तिभिर्गृहकपोतशिरोधराभैः ।'

इति माघकाव्ये (४ ५२) गृहेण कपोतो विशेषित । तस्मात् पारावतादिपञ्चक गृहकपोत नामानि । 'पाविरमु'। नालवत्सादिद्वय वनकपोतनामनी। 'गुन्र'॥ अथ शशादन — श्येन । अत्र वर्तुलाक्षशब्दश्च । श्येननामानि । 'डेग । सानुवमुन्तु'। उलूकास्तु—पेचकौ। शेषे—

'घूक [2]कोण्टो दिवाभीत कौशिको हरिलोचन ।
[3]नक्तचरो घर्घरको निशादर्शी वहुस्वन ।
महापक्षी च ॥'

उलूकनामानि । 'गूब'। 'कृष्णोऽसौ नक्तक कृतमालक'। (वैज प्र २७, श्लो २३)। कृष्णोलूकनामानि । 'नङ्गनिगूब'॥ १४ ॥

[1] यालन्तक $B_3$ [2] कोट $B_3$ [3] वैजयन्त्याम् (पृ २७, श्लो २२ ३)

**व्याघ्राटः स्याद् भरद्वाजः खञ्जरीटस्तु खञ्जनः ॥ १५ ॥**
**लोहपृष्ठस्तु कङ्कः स्यादथ चाषः किकीदिविः ।**

(वि.) व्याघ्राट इति—[1]व्याजिघ्रन्नटतीति व्याघ्राट । 'अट' गतौ'। भरद्वाज मुनिवत् [3]कणवृत्तित्वात् भरद्वाज[4]। व्याघ्राटनामनी। 'एट्रिन्तपेरु'॥ खमाकाशम् अञ्जसा [5]एटतीति खञ्जरीट । 'इट किट गतौ'। खञ्जनश्च[6]। खञ्जरीटनामनी। 'रुप्पुपुलुगु'॥ लोहवर्ण पृष्ठोऽस्य लोहपृष्ठ[7]। कङ्कते गच्छतीतस्तत इति कङ्क । 'ककि गतौ'। कङ्कनामनी। 'मल्लेजेगुरु'॥ चषत्येकाकी भक्षयतीति चाष । 'चष भक्षणे'। किकीति[8] दीव्यति वाशयत इति किकीदिवि । 'दिवु क्रीडादौ[9]'। धातूनामनेकार्थत्वात् । किकी दिविरिति वा पदच्छेद । तदा किकी[10] नान्त । दिविशब्द कविशब्दवद् इकारान्त । चाषनामनी। 'पालपक्षिपेल्लु'॥ १५ ॥

[1] व्याघ्रवत् I, $K_3$, $K_5$ $Pt_2$ [2] 'अट पट गतौ' $W_2$ [3] कणानत्तीति $K_2$
[4] भरद्वाजेन सृष्ट $F_2$ $Pt_2$ [5] जयतीति $W_2$ [6] खञ्जतीति खञ्जन । भाद्रपदमासादि-पट्‌कऽदर्शनगतित्वात् । खनि गतिवैकल्ये' $Pt_2$ [7] दृढत्वात् लोहमिव पृष्ठोऽस्येति $F_2$ Pt
[8] $B_1$, $K_6$ add अनुकरण [9] 'दिवु शब्दे $K_5$ $K_6$ [10] कीति ग्रायति $Pt_2$

(पा.) व्याघ्राट —भरद्वाज । शेषे—'क्षिप्रश्येन [1]सुपर्णक । पेङ्गराजश्चाट-वैर'। भरद्वाजपक्षिनामानि । 'एट्रिंत'॥ खञ्जरीट —खञ्जन । [2]रसरत्नाकरे—

'खञ्जरीटं सजीवं तु गृहीत्वा फाल्गुने क्षिपेत्।
पञ्जरे रक्षयेत्तावद्यावद्धाद्रपदो भवेत्॥
तदा स पञ्जरोऽदृश्यो जायते नात्र संशयः।
खञ्जरीटशिखा ग्राह्या हस्तस्था दृश्यकारिणी॥'

इत्यदृश्यकरणप्रकरणे। शेषे—मिथुनी चञ्चलश्च। चटकविशेषस्य नामानि। 'मन्व-पिचुक'। 'अथ कृष्णोऽस्मिन् कृष्णवक्षसि'। कृष्णवक्षस्यस्मिन् कृष्णः स्यात्। 'नह्लनिपोट्ट मल्मन्दपिचुक'। 'गोलत्तिका खञ्जरीटी शार्ङ्गकी सा च पिप्पका'। तज्जातिस्त्रीनामानि। 'अण्डमन्दपिचुक'। लोकपृष्ठः—स्यात्। शेषे—'दीर्घपात् कमल-च्छदः। पर्कटः कर्कटस्कन्धोऽपि'। कङ्कनामानि। 'रांबुलुगु'॥ अथ चापः किकीदिविः। 'चापो राजविहङ्गमः' इति वैजयन्ती (पृ. २८, श्लो. २९)। 'इक्षुपक्षिभिदोश्चासः'। इति रभसकोशे दन्त्यान्तेषु पाठाचासोऽपि। किकी नान्तः, दिविरिदन्तः, नामद्वयमिति केचित्। 'किकिदीविश्चापः स्यात्' इति रत्नकोशपाठात् तृतीयवर्णदीर्घोऽपि। शेषे—'मणिकण्ठः स्वर्णचूडश्चित्रवालश्च राजविः[3]'। चापनामानि। 'पालगुम्म'॥ १५॥

[1] सुवर्णकः $B_3$. [2] मुद्रितग्रन्थे न दृश्यते. [3] राजविहङ्गमः इति वैजयन्त्याम् (पृ. २८, श्लो. २९).

**कलिङ्गभृङ्गधूम्याटा अथ स्याच्छतपत्रकः॥ १६॥**
**दार्वाघाटोऽथ सारङ्गः स्तोककश्चातकः समाः।**

(वि.) कलिङ्ग इति—के शिरसि लिङ्गं शिखारूपमस्यास्तीति कलिङ्गः। भृङ्गवर्णसाम्याद् भृङ्गः। [1]धूम्येवाटति [2]लौहित्यमिश्रकार्ष्ण्ययोगादिति धूम्याटः। 'अट[3] पट गतौ'। कलिङ्गपक्षिनामानि। 'कुङ्कुटिमूङ्गयनुपक्षिपेल्लु'॥ बहुपक्षत्वात् शत-पत्रकः[4]। [5]चञ्चुना दारु आहन्तीति दार्वाघाटः। 'हन हिंसागत्योः'। दार्वाघाटनाम्नी। 'वेग्गुरुपुल्लुगु'॥ [6]चातकान्तरैः सहारङ्गति[7] संचरत इति सारङ्गः। 'रगि गतौ'। स्तोकं [8]मन्दं कायतीति स्तोककः। 'कै शब्दे'। चतते चलवर्षबिन्दून् चातकः[9]। 'चते याचने'। चातकपक्षिनामानि॥ '[10]वानकोयल्पेल्लु (चातकमु)'॥ १६॥

[1] धूमवानिव $K_5$, $K_8$. [2] रौहित्य° $K_3$. [3] 'अट चलने' $K_6$. [4] शतं पत्राण्यस्य $F_2$. [5] चञ्च्वा $K_5$; दारुचञ्चुना $K_6$; दारुणा चञ्च्वा $W_2$. [6] अहल्यारं गच्छतीति $Pt_1$. [7] दूरं गच्छति $K_5$. [8] अल्पं शिरोऽस्येति $F_2$, $Pt_2$. [9] पर्योदकं चततीति $Pt_2$. [10] 'चातकपक्षि' $J_2$.

(पा.) कलिङ्ग—धूम्याटाः । शेषे—'धूम्राटो धूम्र आटकः । मान्धीरो[1] वागुदश्च[2] स्यात्' । कलिङ्गनामानि । 'कुंकटामूग' । 'स तु [3]मान्धीलवो महान् । बुद्धिमान् राजभृङ्गश्च' । 'पेद्दकुंकटिमूग' ॥ अथ स्यात्—दार्वाघाटः । द्रुमकुट्टशब्दश्चात्र । दार्वाघाटनामानि । 'वड्रंगिपिट्ट' ॥ अथ सारङ्गः—समाः । शेषे—'[4]पौरेन्द्रश्चाम्बुजोऽनम्बुर्वर्पाम्भःपारणव्रतः' । चातकनामानि । 'वानकोकिल' ॥ १६ ॥

[1] मान्धिरः $B_3$. [2] वागुदः (वैज. पृ. २८, श्लो. २८). [3] मान्धिलवः $B_3$. [4] वादीन्द्रः $B_3$.

कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः ॥ १७ ॥
चटकः कलविङ्कः स्यात् तस्य स्त्री चटका तयोः ।
पुमपत्ये चाटकैरः स्त्र्यपत्ये चटकैव हि ॥ १८ ॥

(वि.) कृकवाकुरिति—कृकेण शिरोऽग्रेण [1]वक्ति कृकवाकुः । 'वच परिभाषणे' । ताम्रवर्णो चूडास्यास्तीति ताम्रचूडः । कुकु इति शब्दमुच्चारयन्[2] कुटति वक्रोभवतीति कुक्कुटः । 'कुट कौटिल्ये' । चरणमेवायुधं यस्य सः चरणायुधः । कुक्कुटनामानि । 'कोडि[3] पेल्लु' ॥ चटति तुण्डेन [4]धान्यादिकमिति चटकः । 'चट[5] स्फुट भेदने' । कं शिरः आनम्य[6] तुण्डेन कुक्षिं लुनातीति[7] कलविङ्कः[8] । 'लूञ् छेदने' । चटकनामनी । 'पिच्चुकपेल्लु' ॥ चटकशब्दव्युत्पत्तिवत् [9]चटकाशब्दव्युत्पत्तिः । '[10]आण्डुपिच्चुकपेल्लु' ॥ तयोश्चटकाचटकयोः पुमपत्यं पुरुपापत्यं चाटकैरः । 'पिच्चुकल्योकमोगपिल्लपेरु' ॥ तयोश्चटकयोः स्त्र्यपत्यं चटका । 'आण्डुपिच्चुकपिल्लपेरु[11]' ॥ १७–१८ ॥

[1] $D_3$, $K_3$, $K_6$ add वासयते. [2] कुर्वन् $K_5$, $K_6$. [3] 'कोळि' $J_2$.
[4] अङ्गणगतधान्य° $B_1$, $K_5$, $K_6$. [5] $K_3$ omits स्फुट. [6] आलम्ब्य $J_2$.
[7] विलुनाति $W_3$. [8] कं सुखं यथा भवति तथा लपति, 'लप व्यक्तायां वाचि' $Pt_2$.
[9] चटकस्य स्त्री $Pt_2$. [10] 'हेणगुब्बि' $J_2$. [11] 'गुब्बिहेणमरि' $J_2$

(पा.) कृकवाकुः—चरणायुधः । शेषे—

'शिखण्डिको विवृत्ताक्षो दीर्घवाग्दक्ष [1]आरणिः ।
ग्रामी कुमारोपवाहः कालज्ञः शिखिचूलिकौ[2] ॥'

कुक्कुटनामानि। "मयूरश्चटकः[3] शौण्डः कीरीटी नखरायुधः'। एतानि च। 'कोडि'॥ चटकः—स्यात्। शेषे—

'चटको वर आटकः।
बलिभुग् लङ्घनगतिः सेव्यस्तिलककण्टकः॥'

चटकमात्रनामानि॥ शेषे—कलविङ्कस्त्वसौ पीतो मुण्डः'। असौ कलविङ्कः पीतश्चेन्मुण्ड इत्युच्यते। 'पचतिपिचुक'॥

'श्यामा तु पोतकी।
देवी वराही शकुनिः कुमारी चटकोत्तमा॥
ब्रह्मपुत्री पाण्डविका कृष्णिका सितपक्षिणी।
धनुर्धरी पान्थमाता॥'

असौ चटकजातिः श्यामवर्णा चेत् पोतक्यादिशब्दैरुच्यते। श्यामशब्दवाच्या च। तदुक्त वसन्तराजीयाख्ये शकुनग्रन्थे—

'श्यामा[4] वराही शकुनेः कुमारी दुर्गाथ देवी चटका तथोत्तमा।
त्वं पोतकी पाण्डविका त्वमेव त्वं कृष्णिका त्वं सितपक्षिणी च।
त्वं ब्रह्मपुत्री शकुनैकदेवी धनुर्धरी पान्थसमूहमाता॥'

इति। तल्लक्षणं च तत्रैवोक्तम्—

'ग्राम्येण तुल्यश्चटकेन नीलो योऽसौ पुमान् पाण्डुरधर्मयुग्मः।
लघ्वी ततो धूम्रनिभा च नारी तत्पोतकी युग्ममुपाहरन्ती॥'

इति। एते शब्दाः पुमभिधानेऽपि स्त्रीलिङ्गा एव। 'नह्लपिचुक'॥ तस्य—चटका। अजादित्वाट्टापि [5]इत्वाभावः। 'अण्डपिचुक'॥ तयो.—चाटकैरः। चटकायाश्चटकस्य वा पुंरूपेऽपत्ये चाटकैरशब्दो वर्तते। 'मोगपिल्ल'॥ स्त्र्यपत्ये—क्वि। चटकायाश्चटकस्य वा स्त्रीरूपेऽपत्ये चटकाशब्द एव। 'अण्डपिल्ल'॥ १७—१८॥

[1] आरणी (वैज. पृ. २७, श्लो. १३). [2] शिखिचूलिरः B₁. [3] मयूरचटरः B₁.
[4] 'यात्राप्रवेशादिषु च प्रशस्ता श्यामा यथा दक्षिणवामभेयम्। लघ्वेव नीलश्चटकः प्रदिष्टः शुभाय काष्ठचटकोऽपि तद्वत्' इति मुद्रितग्रन्थे (पृ. ६३). [5] 'क्षिपकादीनाम्' (वा. ७. ३. ४५).

**कर्करेटुः करेटुः स्यात् कृकणक्रकरौ समौ।**
**वनप्रियः परभृतः कोकिलः पिक इत्यपि॥ १९॥**

(नि.) कर्करेटुरिति—कर्क इति रेटतीति कर्करेटु । कुत्सित रेटतीति करेटु । '[1]रेट् परिभाषणे'। कर्क सिताश्व इव रेटतीति वा। 'पेट्टकोकेरपेल्लु'॥ कृक शिरोऽग्र पार्श्वकण्डूयनाय पुन पुनर्नयतीति कृकण[2]। 'णीञ् प्रापणे'। क्रेति शब्द रौति क्रकर[3]। 'डुकृञ् करणे'। 'कोक्केरपेल्लु'॥ वन प्रियमस्य वनप्रिय । परया[4] जात्या भृत पोषित परभृत । कोकते [5]सुस्वरेण चित्त गृह्णातीति कोकिल । 'कुक वृक आदाने'। अपि कायतीति पिक । 'कै गै शब्दे'। पिधानशब्दवदकारलोप । कोकिलनामानि॥ '[6]कोयलपेल्लु'॥ १९॥

[1] 'रट परिभाषणे' $K_3$ $h_8$ $F_2$, $Pt_2$ add के वृक्षादीना शिरसि रेटति　[2] कृ इति क्वणति शब्दायते, 'क्वण शब्दे' $Pt_2$　[3] कृणाति स्वजातीयविरुद्ध कृकर, 'कृ हिंसायाम्' $B_1$, $D_2$, $h_6$　[4] काकजात्या $K_5$, परै काकै भृत $F_2$ $Pt_2$ I adds 'भृञ् भरणपोषणयो'　[5] श्रोत्रचित्त $F_2$ $Pt_2$　[6] 'कोक्लि' $J_2$, 'कोयिल' $B_1$, $K_6$

(पा.) कर्करेटु—स्यात्। पेट्टक्केर'। कृकण—समौ। 'मिन्नक्केर'॥ वनप्रिय —पिक इत्यपि। शेषे 'कलकण्ठ काकपुष्ट ताम्राक्षो मधुवागपि'। कोकिलस्य नामानि। 'कोकिल'॥ १९॥

**काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः ।**
**ध्वाङ्क्षात्मघोषपरभृद्बलिभुग्वायसा अपि ॥ २० ॥**
**(चिरजीवी चैकदृष्टिर्मौकलिः पिकवर्धनः)**

(नि.) काक इति—का इति कायति[1] काक । 'कै शब्दे'। [2]केति रटतीति करट । 'रट परिभाषणे'। न रिष्यते[3] रोगैरित्यरिष्ट । 'रिष हिंसायाम्'। बलिना पुष्टो बलिपुष्ट । 'पुष पुष्टौ'। सकृदेव प्रजा सततिरस्येति सकृत्प्रज । [4]ध्वाङ्क्षति [4]मामभिकाङ्क्षतीति ध्वाङ्क्ष । '[5]ध्वाक्षि काङ्क्षायाम्'। [6]आत्मानमेव घोषयति काकेति आत्मघोष । 'घुषिर् विशब्दने'। परजाति[7] बिभर्तीति परभृत्। 'डुभृञ् धारणपोषणयो'। बलिं भुङ्क्ते बलिभुक्। 'भुज पालनाभ्यवहारयो'। वय एव वायस । (चिर जीवतीति चिरजीवी। एकैव दृष्टिरस्य एकदृष्टि । मूकलस्य यमस्याय मौकलि । पिक वर्धयति पिकवर्धन ।) काकनामानि। '[8]काकिपेल्लु'॥ २०॥

[1] $W_2$ adds वादयत, वाद्यते I, $J_2$　[2] क रटति $h_5$ $h_8$　[3] $W_2$ adds हिस्यत　[4] बलिं $D_2$ $h_5$, $h_6$　[5] 'ध्वाक्षि घोरवाशिते च' $D_2$　[6] आत्मनाम्नो घोषोऽस्य $D_2$, $h_5$ $h_6$　[7] पर कोकिल $F_2$, $Pt_2$　[8] 'काके' $J_2$

(पा.) काके तु—वायसा अपि। शेषे—

' दिवाटन [1]उलूकारिर्नाडीजङ्घोऽप्रहष्टक ।
[2]धूलीजङ्घोऽन्यवापश्च चिरजीव्यन्यपुट् द्विक ।
मौकलिश्च महानेमिरेकाक्ष कण्टक क्षुण ॥'

काकनामानि। 'काकि' ॥ २० ॥

[1] प्रहृष्टक $B_3$ [2] धूलि° $B_3$

**द्रोणकाकस्तु काकोलो दात्यूहः कालकण्ठकः ।**
**आतापिचिल्लौ दाक्षाय्यगृध्रौ कीरशुकौ समौ ॥ २१ ॥**
**क्रुङ् क्रौञ्चोऽथ बकः कह्वः पुष्कराह्वस्तु सारसः ।**

(वि.) द्रोणकाक इति—द्रुणतीति द्रोण। द्रोणश्चासौ काकश्च द्रोणकाक। 'द्रुण हिंसागतिकौटिल्येषु'। काकेषु[1] कोलति स्थूलो भवतीति काकोल। 'कुल संस्त्याने'। काकोलनामनी। 'माल्काकि'॥ द्वितीय तृतीय वा रूप वहतीति वित्यवाट्। वित्यवाह पक्ष्यादेरपत्य दात्यूह। दान्ति प्लवन ऊहत इति वा। 'ऊह वितर्के'। कालवर्ण कण्ठेऽस्येति कालकण्ठक[2]। दात्यूहनामनी। 'कूड्कुरुगु झुगिपिट्टपेल्लु भरतपक्षि'॥ आतापयति [3]परजातिमिति आतापी। नकारान्त। 'तप सतापे'। [4]चिल्लति परजातिमिति चिल्ल। 'चिल्ल[5] शैथिल्ये भावकरणे च'। 'पिल्ल ग्रद्धपेल्लु जेमुड्डु काकि'॥ दक्षते [6]शीघ्र गच्छतीति दक्षाय्य। तस्यापत्य दाक्षाय्य। 'दक्ष वृद्धौ शीघ्रार्थे च'। गृध्यति मास सर्वदा काङ्क्षतीति गृध्र। 'गृधु अभिकाङ्क्षायाम्'। गृध्रनामनी। '[7]ग्रद्धपेल्लु'॥ कीति शब्द रातीति कीर। 'रा आदाने'। शोभते लोहिततुण्डेन हरितवर्णदेहेनेति च शुक। 'शुभ[8] दीप्तौ'। शुकतीति वा। 'शुक गतौ'। शुकनामनी। '[9]चिलुकपेल्लु'॥ क्रुञ्चति क्रुङ्। 'क्रुञ्च कौटिल्याल्पीभावयो'। क्रौञ्चश्च। क्रौञ्चनामनी। 'कोङ्गपेल्लु'॥ [10]वक्तीति बक। 'वच परिभाषणे'। वबयोरभेद। वङ्कते कुटिलो भवतीति वा। 'वकि कौटिल्ये गतौ च'। के जले ह्वयति मत्स्यानिति कह्व। 'ह्वेञ् स्पर्धाया शब्दे च'। 'वक्कुपुलुगुपेल्लु, [11]वक्कुकोंग'॥ सरसि सर समीपे भव सारस। सारसनामकत्वात् पुष्कराह्व, पुष्करस्याह्वा अस्येति। सारसनामनी॥ '[12]बेग्गुरुपेल्लु'॥ २१ ॥

[1] काकेषु पीनत्वात् $B_1$, $D_2$, $K_6$ [2] कल एव कालोऽव्यक्तध्वनि स कण्ठेऽस्येति वा। कालवर्ण कण्टको रोमोद्गमोऽस्येति वा $Pt_2$ [3] परजातीय $K_5$, $K_6$ [4] चिल्लयति

$K_6$ $Pt_2$ 5 'चिह्ल कौटिल्ये' $K_5$, $K_6$ $Pt_2$ 6 आशु $K_6$ $W_2$ 7 'मुदिकाग' $J_2$ 8 'शुभ शुम्भ शोमनार्थे' $K_5$ $K_6$ 9 'गिण $J_2$ 10 बृ वक्ति $W_2$ 11 'वकपक्कि' $J_2$ 12 'पेग्गुल' $J_2$

(पा.) द्रोणकाक—काकोल । 'कृष्णकाकस्तथासुर । ऐन्द्रिश्च वृद्धकाके'। वृद्धकाकनामानि। 'मालकाकि'। अद्रिभवे वा द्रोणवायस । तथा च ग्रन्थान्तरे—'द्रोणकाकस्तु काकालोऽद्रिकाक इति चेष्यते' इति। 'कोण्डकाकि'। 'धूङ्क्ष्णा तु श्वेतकाक स्यात्'। 'तेल्काकमु'। 'काक सामुद्रक पुन । कुपीतक सम्प्रदिष्ट'। समुद्रभव काक कुपीतक इति सम्प्रदिष्ट । समुद्रकाकनाम ॥ दात्यूह कालकण्ठक । शेषे—'जलरङ्ग[1] कालकण्ठ'। जलचरपक्षिणो नामनी। 'कुकरगुडेन्न'। 'जलरङ्कुस्तु वञ्जुल'। जलरङ्गभेद एवायम्। तथा च प्रताप—'दात्यूहस्तु वञ्जुल । जलरङ्कु कालकण्ठ कालकण्टक इत्यपि' इत्यभेदविवक्षयोक्तवान्। वैजयन्त्या तु (प्र २६, श्लो ११) दात्यूहपर्यायानुक्त्वा 'जलरङ्कुस्तु वञ्जुल' इति विशिष्योक्तम्। ततस्तद्भेद एव। 'हससाचि क्षुद्रहस'। क्षुद्रहसनाम। 'चिरिहस'। 'कयिस्तु[2] कुनलायिक'। कयिर्हंसजातिरिति वेदभाष्ये। हसजातिविशेषनामानि ॥ आतापिचिल्लौ आतापी नान्त । सदा सजातीयकलहकारिणि पक्षिविशेषस्य नामनी। 'पेम्रद चमरुगा किपेरुन्तु'। दाक्षाय्यगृध्रौ। शेषे—'तत्र सुदर्शन । दूरदृक् पुरुषव्याघ्र' गृध्रनामानि। 'प्रद्द'॥ अथ कीर—समौ। शेषे—'[3]दण्डारित्रकेतुर्मेधावी श्रीमान् वाग्मी फलाशन । दरण'। कीरनामानि। 'चिलुक'। 'पोषितशुक पान्त्र इत्यभिधीयते'। क्षुरे—पान्त्रो गृहशुक इति। 'पेंप्पुडु चिलुक'। कुङ् क्रौञ्च । 'क्रौञ्चपक्षि'। अथ बक कह्व । 'कोंग'। 'बकोट शुक्लवायस'। बकनामनी ॥ पुष्कराह्वस्तु सारस । शेषे—'गोनर्दो लक्ष्मण कामी दीर्घजङ्घश्च मैथुनी'। तदाह प्रताप—

> 'अथ नीलाङ्ग समौ सारसलक्ष्मणौ।
> पुष्कराह्वो दीर्घजङ्घो रक्तनेत्रोऽन्यवल्लभ ॥
> दीर्घग्रीवो रक्तगलस्तनतो रक्ततुण्डक ।
> रक्तपाद ॥'

इति। सारसनामानि। 'पेग्गुर' ॥ २१ ॥

[1] जलरङ्ग $B_3$ [2] क्षयि $B_2$, (वैज पृ २६ श्लो ९) [3] दण्डारि वैजयन्त्याम् (पृ २८, श्लो २५)

**कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः ॥ २२ ॥**
**कादम्बः कलहंसः स्यादुत्क्रोशकुररौ समौ ।**

(वि.) कोक इति—कवते प्रियाविरहाद्[1] रात्रौ[2] कोक । 'कुङ् शब्दे' । चकते तर्पयति प्रियामिति [3]चक्र । 'चक[4] तृप्तौ' । चक्रेण चक्रशब्देनोच्यत इति चक्रवाक । चक्र इति वाक् नाम यस्येति वा । रथाङ्ग चक्रम् । रथाङ्गशब्दोऽस्याह्वय इति रथाङ्गाह्वय । रथाङ्गाह्वयशब्दो नामास्यास्तीति रथाङ्गाह्वयनामक । चक्रवाकनामानि । 'जकव पिट्टपेल्लु[5]' ॥ कदम्बस्य [6]सजातीयसमूहस्याय कादम्ब । [7]कलस्वरो हस कलहस । कलहसनामनी । 'लेस्सस्वरमुगलहसपेरु' ॥ उच्चै क्रोशति उत्क्रोश । 'क्रुश आह्वाने रोदने च' । कुरत्युच्चैरिति कुरर । 'कुर [8]शब्दे' ॥ कुररनामनी । 'पेन्नडपुलुगुपेल्लु' ॥ २२ ॥

[1] प्रियावियोगात् $F_2$ $Pt_2$ [2] $K_3$ adds वासयते [3] प्रियागमनेन चकते मीणातीति $D_2$ $K_5$ $K_6$ [4] चक तृप्तौ प्रतिघाते च $B_1$, $D_2$ $K_6$ [5] 'चक्रवाकपक्षि' $J_2$ [6] स्वसङ्घस्य सहचारित्वात् $F_2$, $Pt_1$, $Pt_2$ [7] कल स्वन $J_2$ कलो मधुरास्फुटध्वनि, तद्वान् हस $Pt_2$ [8] 'कुरु कुर शब्दे' $D_2$ $K_2$

(पा.) कोक—नामक । रथाङ्ग चक्रम् । तद्वाचिन प्रातिपदिकात् परौ आह्वयनामशब्दौ वाचकत्वेनान्वयेते रथाङ्गाह्वयनामक । रथाङ्गाह्वयो रथाङ्गनामेति द्वे नामनी इत्यर्थ । आह्वयनामशब्दयोरेव नियमात् रथाङ्गसज्ञिक इत्यादि नास्तीत्यवगम्यत इति कामधेनुकार । अन्ये तु—रथाङ्गस्याह्वयो हूतिस्तत्पर्यायो [1]नामास्येति व्याचक्षते । तथा च माघे (शिशु ९ १५) 'हरिहेतिहूतिमिथुन पततो' इति । केचित् रथाङ्गशब्दाह्वयशब्दपर्याया एते नामान्यस्येति व्याचक्षु । एतदुक्त भवति । रथाङ्गाख्य चक्राह्व रथचरणनामा इत्यादि । अत्र चक्राङ्गचक्रिरथशब्दाश्च । तथा च प्रताप —'अथ चक्राङ्गो रथङ्गाह्वयचक्रिणौ' इति । 'चक्रवाको रथ [2]कोकश्चक्रश्चक्राह्वयाह्वय' इति वैजयन्ती (पृ २, श्लो ९) । चक्रवाकनामानि । 'जक्कुवपिस्व' ॥ कादम्ब —स्यात् । 'कादम्ब कलहसश्च हस आधूसरच्छद' इति वैजयन्ती (पृ २६, श्लो ८) ।

'धूम्राभचञ्चुचरण कलहसश्च वन्धुर ।
कादम्बो जालपाद स्यात्' ।

इति प्रताप । धूम्रवर्णचञ्चुचरणपक्षस्य हसस्य नामानि ॥ उत्क्रोश—समौ । 'मत्स्यनाशन उत्क्रोश' इति वैजयन्ती (पृ २८, श्लो ३४) । योऽन्तरिक्षे चरन् जलान्तर्वर्तिन

मत्स्यादिकं निपत्यादत्ते तस्य पक्षिविशेषस्य नामनी। 'ल्कुमुकि'। शारिकानामनी इति केचित्। 'गोरिंक' ॥ २२ ॥

[1] नामानि $B_3$　　[2] Pada omitted in $B_3$

**हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः ॥ २३ ॥**
**राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः ।**

(वि.) हंसा इति—हन्ति मनोहरतया गच्छतीति हंस । 'हन हिंसागत्यो'। श्वेता गरुत पक्षा अस्येति श्वेतगरुत्। चक्रवत् [1]वृत्तमङ्गमस्येति चक्राङ्ग । [2]मानससर ओकः स्थानमस्य मानसौका । हंसनामानि। 'सामान्यमुगा हंसलपेल्लु'॥ हंसेषु श्रेष्ठत्वाद् राजहंस । रक्तचञ्चुपादस्य श्वेतदेहस्य हंसस्य नाम। 'हंसल्लो श्रेष्ठमैनदि' ॥ २३ ॥

[1] वृत्ताङ्गत्वात् $D_2$, $K_5$ $K_6$　　[2] मानससरसि $B_1$, $K_6$, $W_2$

(पा.) हंसास्तु—मानसौकस । शेषे—

'मरालश्चक्रपक्षश्च नीलाक्षो जालपादक ।
परिप्लाव्याचिशकश्च शङ्कु सकुश्च [1]धोरण ॥'

अत्र ज्येष्ठप्रस्थितक्षीराशशब्दाश्च। तथा च वैजयन्त्याम्—(पृ २६, श्लो ५७)।

'हंसो मरालो नीलाक्षश्चक्रपक्ष सितच्छद ।
मानसौका परिप्लावी चक्राङ्गो जालपादक ॥
आचि शङ्कु शकु सकुर्ज्येष्ठ प्रस्थितधोरणौ'।
क्षीराशश्चाप्यसौ राजहंसो रक्तै पदाननै ॥'

इति। हंसनामानि। राजहंसा —सिता । रक्तचञ्चुचरणविशिष्टास्तदितराङ्गधवला राजहंसा इत्युच्यन्ते ॥ २३ ॥

[1] दोरण $B_3$　　[2] °दोरणौ $B_3$

**मलिनैर्मल्लिकाक्षास्ते धार्तराष्ट्राः सितेतरैः ॥ २४ ॥**
**शरारिराटिराडिश्च बलाका बिसकण्ठिका ।**

(वि.) मलिनैरिति—मलिनैः किंचिद्धूम्रैश्चञ्चुचरणै उपलक्षिता सिताश्च शरीरेण हंसा मल्लिकाक्षा इत्युच्यन्ते। [1]मल्लिकाकुसुमपाण्डुराङ्गत्वात् मल्लिकाक्षा। [2]ईषन्नीलपादस्य श्वेतहंसस्य नाम। धृतराष्ट्रदेशे भवा धार्तराष्ट्राः। सितेतरैः कृष्णैश्चञ्चुचरणैरुपलक्षिता हंसा धार्तराष्ट्रा इत्युच्यन्ते। अतिनीलचञ्चुपादस्य सितहंसस्य नाम॥ [3]परजाति शृणातीति शरारिः। 'शॄ हिंसायाम्'। शरं नीरं हिंसा वा ऋच्छतीति वा। 'ऋ गतौ'। अटतीतस्ततो गच्छतीत्याटिः। 'अट पट गतौ'। अतति [4]सततं गच्छतीत्यातिः। 'अत सातत्यगमने'। त्रयः[5] पुलिङ्गा भवन्ति। शरारिनामानि। 'आडेल्लुपक्षिपेल्लु'॥ बलेन [6]मेघपङ्क्तिमकति प्राप्नोतीति बलाका। 'अक अग कुटिलायां गतौ'। शौक्ल्यात् दैर्घ्याच्च बिसवत् कण्ठोऽस्या इति बिसकण्ठिका। बलाकानामनी। 'तेल्लकोकरपेल्लु'॥ २४॥

[1] मल्लिकाख्या इति वा पाठ $F_2$, $Pt_2$ [2] I, $K_2$, $K_3$ add चञ्चु [3] पराजितं $J_2$ [4] सततं $W_2$ [5] त्रीणि पुलिङ्गानि भवन्ति I, $J_2$, $K_2$, $K_3$ [6] माला $F_2$ $Pt_2$

(पा.) मलिनैः—ते। मलिनैश्चञ्चुचरणैरुपलक्षिताः सिता हंसा मल्लिकाक्षा इत्युच्यन्ते। धार्तराष्ट्राः सितेतरैः। कृष्णवर्णैश्चञ्चुचरणैरुपलक्षिताः सिता हंसा धार्तराष्ट्रा इत्युच्यन्ते। शरारिः—आतिश्च। त्रयोऽपि शब्दाः स्त्रीलिङ्गाः। 'आटिस्त्वाति शरारिका'[1] इति वैजयन्ती (पृ २६, श्लो. ११)। 'आटिः शरारिर्वरटा गण्डोरी वानरी क्पी। आतिश्च' इति रत्नकोशे स्त्रीकाण्डे पठिताः। आटिनामानि। 'आडेलु'॥ बलाका बिसकण्ठिका। बिसकाशिकेति केचित्। अत्र [2]दर्वीतुण्डशब्दश्च। बकस्यैव जातिभेदोऽयम्। 'तेल्लकोकेर'॥ २४॥

[1] शारिक $B_2$, शराटिका इति मुद्रितग्रन्थे [2] दर्वीमण्ड° $B_2$, °तुण्ड° वैज (पृ २६, श्लो १०)

**हंसस्य योषिद् वरटा सारसस्य तु लक्ष्मणा॥ २५॥**
**जतुकाजिनपत्रा स्यात् परोष्णी तैलपायिका।**

(वि.) हंसस्येति—वृणीते हंसमिति [1]वरटा। 'वृञ् वरणे'। वरं श्रेष्ठमटनमस्या इति वा। हंसस्त्रीनाम। 'आण्डुहंसपेरु'॥ सारसस्य लक्ष्माणि चिह्नानि सन्त्यस्या इति लक्ष्मणा। लक्ष्मीरस्या अस्तीति वा। सारसस्त्रीनाम। 'आण्डु बेग्गुरु'॥ जतुवत् कृष्णपिङ्गलत्वात् जतुका। अजिनवत् पत्राणि पक्षा अस्या इति अजिनपत्रा[1]। जतूकानामनी। 'चीकुरुवायपेल्लु'॥ शीतासहत्वेन परमुष्णमस्या इति परोष्णी[2]। [3]नित्य

मुखविकासेन तैलं पिबतीव तिष्ठतीति तैलपायिका। 'पा पाने'। देवालयस्थजतुका[7]-नामनी। 'गव्विलायपेल्लु'॥ केचिदेतानि चत्वारि नामानि जतुकाया[8] एवेति वदन्ति॥ २५॥

[1] हसेन म्रियत इति $B_1$, $D_2$, $K_6$ [2] 'वृद् धमत्तौ' $K_6$ [3] जतुकवत् $W_2$ [4] पत्रस्थाने (पक्षस्थाने $W_2$) अजिनं चर्मास्या अस्तीति $D_2$, $K_5$, $K_6$ [5] पर वेवल्गुणा तेजो यस्या $J_2$, $K_6$ [6] सर्वदा विवृतास्यत्वेन $Pt_2$ [7] °जतुका° $J_2$ [8] $K_3$ $K_5$, $W_2$ add नामानि.

(पा.) हंसस्य—वरटा। हंसस्त्री वरटेत्युच्यते। 'वरटा हंसकान्ता स्याद्वराला वरलापि च' इति वैजयन्ती (पृ. २६, श्लो. ८)। सारसस्य—लक्ष्मणा। स्त्रीविपर्ययाद्वावेव। 'आण्डवेग्गुरु'॥ शेषे—

'उलूकचेटी हिक्का स्यात् कनराक्षी निशाचरी।
पिङ्गला दैवपिशुनी॥'

शुभाशुभसूचकस्य रात्रिचारिणि पक्षिविशेषस्य नामानि। 'पशिडिकटे'। 'श्येन्या तु प्राचिका स्मृता'। 'अण्डडेग'॥ जतुका—स्यात्। 'जतुका चर्मचटक' इति वैजयन्ती[1]। निशाचटकनामनी। 'चिकुरुवाय'।

'निशा निश्यग्रेऽपि स्थितघनजतूकापटलकं
कदा शून्यागारं भवति तव जन्म क्षपयितुम्।'

इति प्रयोगाज्जतूकापि॥ परोष्णी तैलपायिका। शेषे—'निशाटा मुखविड्गुली'। वैजयन्त्यां तु—'[1]अथ निशाटनी। तम प्रिया तरोष्णी च मुरवविष्ठा च वल्लकी' इति। 'मुखविष्ठा वल्लरिका' इति तन्त्रान्तरे। चर्मचटकविशेषनामानि। 'जिवुकपिट्ट। गव्विलमुन्नु'। जतुकादीनि सप्तापि [2]जतूकानामान्येवेति केचित्। 'बवराली तु मक्षिका'। मक्षिकासामान्यनामानि॥ 'ईंग'॥ २५॥

[1] मुद्रितग्रन्थे न दृश्यते [2] जतुका $B_3$

**चर्वणा मक्षिका नीला सरघा मधुमक्षिका॥ २६॥**
**पतङ्गिका पुत्तिका स्याद् दंशस्तु वनमक्षिका।**

(वि.) चर्वणेति—पद्मादिकं चर्वतीति चर्वणा[1]। 'चर्व अदने'। वर्वणेति वा पाठः। तदा सजातीयैः सह पद्मादिकं वृणोतीति वर्वणा। 'वृञ् वरणे'। [2]भक्ष्यन्ते

पशव आभ्य इति मक्षिका। 'मक्ष रोषे'। मक्षिकानामानि। 'नह्ननियीङ्गपेल्लु'॥ [3]सरन्तीति सरा स्वविषय प्राप्ता मधुहर्तार, तान् घ्नन्तीति सरघा। [4]'हन हिंसागत्यो'। मधुनि सक्ता मक्षिका मधुमक्षिका। 'तेनेटीङ्ग'॥ पततीति पतङ्गिका। 'पत्लृ गतौ'। पुत् कुत्सित मधु तनोतीति[1] पुत्तिका। 'तनु विस्तारे'। 'गोप्प तेनेयीङ्ग'॥ दशतीति दश। 'दश दशने'। वने मक्षिका वनमक्षिका। वनमक्षिकानामनी॥ 'अडवियीङ्गपेल्लु[5]'॥ २६॥

[1] प्राणिना त्वच चवति $F_2$ $Pt_2$ [2] मक्षन्ति, 'मक्ष रोषे सघाते च $D_2$ [3] सरतीति (मधुहर्तार $W_2$) सरघा $K_5$ $K_6$ [4] $J_2$ adds निस्तारयति तायत ताॡ सतानपालनयो' $Pt_2$ [5] काडनोण' $J_2$

(पा.) चर्वणा—नीली। नीलवर्णमक्षिका चर्वणा स्यात्। चर्वणस्यन्तस्थादि केचिदाहु। 'नह्ननीगे'॥ सरघा—मक्षिका। 'तेनटीग'॥ पतङ्गिका—स्यात्। पुत् कुत्सित तनोति पुत्तिका। पृषोदरादि।

> 'माक्षिक तैलवर्ण स्याद् घृतवर्ण तु पौत्तिकम्।
> भ्रामर तु भवेच्छुक्ल क्षौद्र तु कपिश भवेत्॥'

इति वचनात्, मधुमक्षिकाविशेषस्यैव नामनी। 'पेर्यीग'॥ दशस्तु वनमक्षिका। 'अडवियीङ्ग'॥ २६॥

**दंशी तज्जातिरल्पा स्याद् गन्धोली वरटा द्वयोः॥ २७॥**
**भृङ्गारी चीरुका चीरी झिल्लिका च समा इमाः।**

(वि.) दशीति—अल्पा[1] दशजाति दशी। 'अडविदोमपेरु'॥ गन्धयति परजातिमर्दयतीति[2] गन्धोली। 'गन्ध अर्दने'। गण्डोलीति पाठ गण्ड कपोलमुल स्यावृणोतीति गण्डोली। 'उल सवरणे'। [3]वृणोतीति वरटा। 'वृञ् वरणे'। 'एर्रतुम्मेदपेल्लु'। [4]आकारेण [5]भृङ्गमियर्तीति भृङ्गारी। 'ऋ गतौ'। ची इति गैतीति [6]चीरुका। 'रु शब्दे'। ची इति शब्देन रिणाति पीडयतीति चीरी। 'री गति रेषणयो'। झिल्लाख्यवाद्यवत् कायतीति झिल्लिका। 'कै शब्दे'। झिल्लिकानामानि। 'चिमटपेल्लु'॥ २७॥

[1] दशस्याल्पजाति $D_2$ $K_5$ $K_6$ [2] अदति $K_5$ $K_6$ [3] $K_5$ $K_6$ add इसिरावत् [4] आकृत्या $F_2$ $Pt_2$ [5] D $K_6$ add अनुगच्छति, अनुसरोति $J_2$ $K_5$ $W_2$ [6] चिरुका $K_5$, चिरिका $K_6$

(पा.) दर्शी—स्यात् । अल्पा दराजातिर्दर्शीत्युच्यते । 'अडविदोम' । शेषे—'जलजा तु कषायिका' । जलजा मक्षिका कषायिकेत्युच्यते । 'नीरुदोम' । 'कुम्भीरमक्षिका घोणा' । कुम्भिनोऽपि ईरयति या मक्षिका सा घोणेत्युच्यते । 'येनिकदोम' । 'मशकस्तु मलिम्लुच । नीलदशस्तीक्ष्णतुण्ड' । नीलदशनामानि । 'नल्दोम' । गण्डोली—द्वयो । गन्धोलीति कतिचित् । 'गन्धोलिरपि गण्डोलिर्वरटा वरटोऽपि च' इति गोपाल । अत्र—'गृहिणी गृहकारिका । अन्यदाख्या कोष्ठकारी' इति तन्त्रान्तरे । 'घण्टया घण्टवालना । 'गृहिणी' इति वैजयन्त्या (पृ २९, श्लो ४७) च नामान्तराणि । पक्षवत कीटविशेषस्य नामानि । 'येर्तुमिद । कदिरीगातु' । भृङ्गारी—समा इमा । [1]झिल्लीनामानि । 'चिविट' ॥ २७ ॥

[1] 'गृहिणी गृहकारिका' इति ४६ श्लोके [2] झल्ली $D_3$

**समौ पतङ्गशलभौ खद्योतो ज्योतिरिङ्गणः ॥ २८ ॥**
**मधुव्रतो मधुकरो मधुलिण्मधुपालिनः ।**
**द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः ॥ २९ ॥**
**(इन्दिन्दिरश्चञ्चरीको रोलम्बो बम्भरश्च सः)**

(वि.) समाविति—पतत्यग्नौ पतङ्ग । 'पत्लृ गतौ' । अग्नौ श शम लभत इति शलभ । 'डुलभष् प्राप्तौ' । शलत्याशु गच्छत्यग्निमिति वा । 'शल आशुगमने' । शलभनामनी । '[1]मिडतपेल्लु' ॥ ख चोतयतीति खद्योत । 'द्युत दीप्तौ' । खज्योतिषा इङ्गति चलतीति[3] ज्योतिरिङ्गण[4] । '[5]इगि गतौ' । खद्योतनामनी । 'मिणिङ्गुरु[6] पुरुगुपेल्लु' ॥ मधु पुष्परस व्रतयति भुङ्क्ते मधुव्रत । मधु[8] करोतीति मधुकर । 'डुकृञ् करणे' । मधु लेढीति मधुलिट् । 'लिह आस्वादने' । मधु पिबतीति मधुप । 'पा पाने' । अलति भूषयति पद्मादिकमिति[9] अली । 'अल भूषणादौ' । नकारान्त पुलिङ्ग । अस्य भ्रमर इति नाम्नि द्वौ रेफौ स्त इति द्विरेफ । पुष्प लेढ्या-स्वादयतीति पुष्पलिट्[10] । कार्ष्ण्यं [11]भरतीति भृङ्ग । 'भृञ् भरणे' । षट् पदानि यस्य स षट्पद । भ्रमतीति भ्रमर । 'भ्रमु अनवस्थाने' । अलति पुष्पाणि अलि । 'अल भूषणादौ' । (इन्दति इन्दिरया इन्दिन्दिर । 'इदि परमैश्वर्ये' । चरतीति चञ्चरीक । 'चर गतिभक्षणयो' । रौतीति रोलम्ब । 'रु शब्दे' । बमिति शब्द बिभर्तीति बम्भर ।) भ्रमरनामानि ॥ 'तुम्मेदपेल्लु' ॥ २८–९ ॥

[1] 'पतगदङ्गु' J [2] I, $J_2$ $K_5$ $W_2$ add आकाश खे द्योतत इति $F_2$, $Pt_2$
[3] ज्वलति $W_2$ [4] ज्योतिषा प्रकाशेनोपलक्षित सन् रिङ्गति गच्छतीति $F_2$ $Pt_2$ [5] रिगि

गतौ' $K_6$ $Pt_2$ [6] 'मिचनहुलु' $J_2$ [7] उपभुङ्क्ते $D_2$, $K_5$, $K_6$ [8] I, $J_2$, $K_2$ add स्वय [9] स्वस्थान (पुष्पादिक $J_2$, पद्मादिक $D_2$, वृक्षादिक $K_5$) $B_1$, $K_6$ [10] I, $Pt_2$ add 'लिह आस्वादने' [11] निभर्ति, 'डुभृञ् धारणपोषणयो' $D_2$, $K_6$ [12] अली इति शब्दवद् अलिशब्दव्युत्पत्ति, इकारान्तोऽयम् $D_2$, $K_5$, $K_6$

(पा.) समौ पतङ्गशलभौ। 'मिडल'। खद्योतो ज्योतिरिङ्गण। शेषे—'तमोमणि कीटमणिर्ज्योतिर्माली निशामणि'। खद्योतनामानि। 'मिणुगुरुपुरुगु'॥ मधुव्रतो—भ्रमरालय। शेषे—

'इन्दिन्दिरश्चञ्चरीको रोलम्ब शिलुटस्तथा।
भृङ्गाणो भ्रमणश्चापि भसल पुष्पलोलुप॥'

इन्दिन्दिरचञ्चरीकरोलम्बभसलशब्दा देश्या इति स्वामी (पृ १३०)। शिते कार्ष्ण्यस्य पुट शिलुट। पृषोदरादि। 'बृहस्पतये[1] शिलुट पीतभ्रमर' इति वेदभाष्यम्। पुष्पधयबम्भरशब्दावप्यत्र—

'पुष्पधयो बम्भरश्च भसल पुष्पलोलुप।
भृङ्गभ्रमणरोलम्बभयदभ्रमरालय॥'

इति यादव। मिलिन्दशब्दोऽपि। 'पुष्पधयो मिलिन्दश्च भसल शिलुटश्च स' इति कोशान्तरम्। भृङ्गनामानि। 'तुमिद'॥ २८–९॥

[1] तै. सं ५ ५ १७ १

**मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक्।**
**शिखावलः शिखी केकी मेघनादानुलास्यपि॥ ३०॥**
**केका वाणी मयूरस्य समौ चन्द्रकमेचकौ।**

(वि.) मयूर इति—मीनाति हिनस्ति सर्वानिति मयूर। 'मीञ् हिंसायाम्'। बर्हमस्यास्तीति बर्हिण। बर्ही च। नील कण्ठोऽस्येति नीलकण्ठ[1]। भुजङ्गान् भुङ्क्ते भुजङ्गभुक्। 'भुजपालनाभ्यवहारयो'। शिखा चूडास्यास्तीति शिखावल। शिखी च। [2]केकारवोऽस्यास्तीति केकी। मेघनादमनुलसतीति मेघनादानुलासी। लस श्लेषणक्रीडनयो'। मयूरनामानि॥ नेमिलि पेल्लु'॥ के मूर्ध्नि [3]कायतेऽभिव्याप्य व्यज्यत इति केका। 'कै शब्दे'। मयूरवाणीनाम। '[4]नेमिलिकून्तपेरु'॥ [5]चन्द्रप्रतिकृतित्वात् चन्द्रक। हरितमिश्रवर्णत्वात्[6] मेचक। चन्द्रकनामनी॥' नेमिलिपुरिकच्छुपेल्लु'॥ ३०॥

[1] नीलवर्णः (नीलः I, $W_2$) कण्ठे यस्य $B_1$, $D_2$, $K_6$.　　[2] केका $K_5$, $K_6$.
[3] अभिव्यज्यते I, $J_2$, $Pt_2$.　　[4] 'नविल ध्वनि' $J_2$.　　[5] चन्द्र इव $Pt_2$.
[6] हरितवर्णमिश्रकृष्ण° $D_2$, $K_2$, $K_6$, $W_2$.　　[7] 'नविल चँदिके' $J_2$.

(पा.) मयूरो—मेघनादानुलास्यपि । शेषे—

'मार्जारकण्ठः केकालिश्चन्द्रकी चित्रपिङ्गलः ।
वर्षामदः शापटीको दार्वण्डश्चित्रपक्षकः ।
शुक्लापाङ्गो मयूकश्च विष्किरो नर्तकप्रियः ॥'

मरूकश्च इति पाठान्तरम् । मयूरनामानि । 'नेमलि' ॥ केका—मयूरस्य । मयूरवाणी केका स्यात् । 'नेमलिपलुकु' ॥ समौ—मेचकौ । बर्हगतलोचननिभप्रदेशनामनी । 'नेमलिपुरिमीदिकन्नु' ॥ ३० ॥

**शिखा चूडा शिखण्डश्च पिच्छबर्हे नपुंसके ॥ ३१ ॥**
**खगे विहंगविहगविहंगमविहायसः ।**
**शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः ॥ ३२ ॥**
**पतत्रिपत्रिपतगपतत्पत्ररथाण्डजाः ।**
**नगौकोवाजिविकिरविविष्किरपतत्रयः ॥ ३३ ॥**
**नीडोद्भवा गरुत्मन्तः पित्सन्तो नभसंगमाः ।**

(वि.) शिखेति—शिरसि खेलतीति [1]शिखा । 'खेलृ चलने' । चुद्यते वायुनेति चूडा[2] । 'चुद प्रेरणे[3]' । शिखाभिरग्रभागैर्डयते चलतीति शिखण्ड । 'डीङ् विहायसा गतौ' । पिच्छयतीति पिच्छम् । 'पिच्छ कुट्टने' । पिञ्छमिति पाठे पिञ्छयतीति पिञ्छम् । 'पिञ्छ दीप्तौ' । बर्हति नृत्तेन बर्हम् । 'बृह [4]वृद्धौ' । बर्हनामानि । 'नेमिलि-[5]पुरिपेल्लु' ॥ खे[6] आकाशे गच्छतीति खगः । 'गम्लृ गतौ' । विहायसा[7] गच्छतीति विहंग । विहग.[8] । विहंगमश्च । विजिहीते विशेषगतिभिरिति विहायाः । 'ओहाङ् गतौ' । आकाशे गन्तुं शक्नोतीति शकुन्ति । शकुनिः । शकुन्तः । शकुनश्च । 'शक्लृ शक्तौ' । पक्षौ स्तोऽस्येति पक्षी । अण्डरूपेण पक्षिरूपेण च द्विर्जायत इति द्विज. । [9]पतत्रे अस्य स्त इति पतत्री । पत्रे पक्षौ स्तोऽस्येति पत्री । पतन् गच्छतीति पतग । पतंगश्च । पततीति पतन् । 'पत्लृ गतौ' । पत्रमेव [10]रथो यस्य सः पत्ररथः । अण्डाज्जायतेऽण्डजः । 'जनी प्रादुर्भावे' । [11]नगे वृक्षे ओक. स्थानमस्य नगौकाः । वाज. पक्षोऽस्यास्तीति

वाजी। विकिरति मास[12] तुण्डेनेति विकिर। विष्किरश्च। 'कृ विक्षेपे'। चयति तृणादिना नीडमिति वि। 'वेञ् तन्तुसताने'। पततीति पतत्रि। [13]नीडाद् उद्भवतीति नीडोद्भव। गरुत पक्षा येषा सन्तीति गरुत्मन्त। पतितुमिच्छन्त पित्सन्त। नभसि गच्छन्तीति नभसगमा। पक्षिनामानि। '[14]सामान्यमु गाजलपेल्लु' ॥ ३१–३ ॥

[1] शासते व्याप्नोतीति, 'शासृ व्याप्तौ' $D_2$, $K_5$, $K_6$ [2] चुडयत, 'चुड सवरणे समुच्छ्राये च' $K_5$ [3] I, $K_2$, $K_3$ add 'नेमिलिशिखपेद'. [4] 'बृह बृहि वृद्धौ' $K_6$ [5] 'नविलगरि' $J_2$ [6] खेन आकाशेन $J_2$, $K_3$, $W_2$ [7] विहायसि $B_1$, $D_2$, $K_6$ [8] विविध जिहीते गच्छतीति $F_2$, $Pt_2$ [9] पतत्र पक्ष $D_2$, $K_5$, $K_6$ [10] $F_2$, $Pt_2$ add गमनसाधन [11] नगो वृक्ष $F_2$, $Pt_2$ [12] मस्य $Pt_2$ [13] नीडे $K_5$, $K_6$ [14] 'पक्षिपेल्लु' $K_5$, $K_6$, 'पक्षिय हेसरु' $J_2$

(पा.) शिखा चूडा। मयूरस्य चूडा शिखा स्यात्। 'नेमिलिजुट्टु'। शिखण्डस्तु—नपुसके। शेषे—

'बर्हश्च प्रचलाकश्च कलापश्च समार्थका'।
'बर्होऽस्त्री प्रचलाकश्च कलापश्च शिखण्डक'।

इत्यजयपाल। 'सीताया पुरतश्च हन्त शिखिना बर्हा सगर्हा इव' इति प्रयोगश्च। तस्मात् पुलिङ्गोऽपि बर्हशब्द। प्रचल सन्नकति गच्छतीति प्रचलाक। तद्योगात् प्रचलाकी मयूर। तथा च—'एतस्मिन् प्रचलाकिना प्रचलतामुद्वेजिता कूजितैरुद्वेल्लन्ति [1]पुराणरोहिणतरुस्कन्धेषु[2] कुम्भीनसा।' इत्युत्तररामचरिते (२. २९) भवभूतिप्रयोग। बर्हनामानि। 'नेमिलिपिञ्छमु'॥ खगे—नभसगमा। नीडोद्भवादिषु बहुवचन वृत्तानुरोधात्। शेषे—

'ध्वाङ्क्षी पिपतिषन्नीडी मल्लुक शुकतुण्डिनौ।
धराकुर्मदन पीतुर्मशाको[3] विप्रयो भसन्॥'

पक्षिसामान्यनामानि। 'वातगामी[4] [5]शलक उक' इति चैते वैजयन्त्याम् (पृ २६, श्लो ३-४) ॥ ३१–३ ॥

[1] रोहण° $A_1$ [2] स्कन्धेषु $B_3$ [3] मकार $B_3$ [4] वातप्रमी $B_3$ [5] शकल $B_3$

**तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः ॥ ३४ ॥**

**तित्तिरिः कुक्कुभो लावो जीवजीवश्चकोरकः ।**
**कोयष्टिकष्टिट्टिभको वर्तको वर्तिकादयः ॥ ३५ ॥**

(वि.) तेषामिति—हरितवर्णत्वाद्[1] हारीत । 'पचनिपिट्' । मज्जति जले मद्गु । 'टुमस्जो शुद्धौ' । '[3]नीरुकाकि' । करण्डे भज[4] कारण्ड । त याति गच्छतीति कारण्डव । 'वा गतिगन्धनयो' । प्लवत इति प्लव । 'प्लुङ् गतौ जलोपरिसर्पणे च' । 'नीरुकोडि' ॥ तित्तीति रौति शब्दायत इति तित्तिरि । 'रु शब्दे' । 'तीतिवु' ॥ कुगिति [5]कुभति शब्दायत इति कुक्कुभ । कुभि सौत्रो धातु । 'गम्पपुलुगु' ॥ लाति मासमिति लाव [6] । 'ला आदाने' । लूयते मासमनेनेति वा । 'लूञ् छेदन' । 'लावुक' ॥ जीवेन [7]सहचरेण क्रीडन् जीवतीति जीवजीव । 'जीव प्राणधारणे' । '[8]चन्नेपुलुगु' ॥ चकति तृप्यति ज्योत्स्नया[9] चकोर । 'चक तृप्तौ' । '[10]चकोरपक्षि' ॥ ओकसा[11] स्थानेन यजते सगच्छते कोयष्टिक । 'यज देवपूजासगतिकरणयजनदानेषु' । 'चीकुकोक्कर' ॥ टिट्टीति निष्ठुर भाषत इति टिट्टिभक । 'भाष व्यक्ताया वाचि' । टिट्टीति श देन भातीति वा । 'भा दीप्तौ' । 'लकुमुकिपेरु' ॥ वर्तते स्वेच्छया[12] वर्तक । 'वृतु वर्तने' । 'वलिचेपिट्ट' ॥ [13]वर्तकशब्दवद् वर्तिकाशब्दव्युत्पत्ति । 'मूलवहकिपेरु' ॥ एते पक्षिविशेषा ह्या ॥ ३४–५ ॥

[1] वर्णयोगात् $F_2$ $Pt_2$ [2] 'हरीतपक्षि $J_2$ [3] नीरकाये $J_2$ [4] गद्ध $K_6$ [5] भापते $K_6$ [6] लावहकि $J_2$ [7] जलन $K_5$ $K_6$ [8] जीवजीवमु $D_2$ $K_2$ [9] चन्द्रिकया $D_2$ $J_2$ $K_2$ $K_5$ [10] वन्निलपुलुगु I $K_5$ [11] ओक स्थान $D_2$ $K_2$ $K_6$ [12] $K_5$ $K_6$ add इतस्तत [13] ॰मु पक्षि पूववत् $J_2$

(पा.) तेषा विशेषा—वर्तिकादय । तेषा पक्षिणा विशेषा हारीतादय उक्ता । शेषे—'हारीतो हरितापीते' । हरिते आपीते हारीत स्यात् । 'पचपिट्ट' । 'मद्गुस्तु जलवायस' । 'नीरुकाकि' । 'कारण्डवो महापक्ष' । 'कन्नेलेडि' । 'प्लव स्याद्वारि कुक्कुट' । परिप्लवश्च [1]शकटविलश्चात्र समाहृत । 'प्लव शकटविल' इति वेदभाष्ये । 'नीरुकोडि' ॥ 'तित्तिरस्तु खरकाणो वरिष्ठ शकरप्रिय' । 'रुद्राणा तित्तिरि' इति श्रुति (तै स ५ ५ १६ १) । 'तीतुव' । 'भस्मवर्णोऽलजो भास शकुन्त कुक्कुभस्तथा' । 'भस्मवर्णस्तु भास स्यात्' इति क्षुरे । 'अलज आन्तरिक्ष' इत्यत्र (वाज स २४ ३४) अलजो भास इति ज्ञानपत्रे व्याख्यातम् । शकुन्तशब्द पक्षिसामान्यवचन, तद्विशेषवचनश्च । कुगिति कौति शब्दायते कुक्कुभ । [2]भकप्रत्यय । 'गपपुलुगु' ॥

'लावकश्चित्रयोधी स्याच्चतुर्धा स प्रकीर्तित ।
गौरिक पासुल पौण्ड्र कर्बुरश्च ॥'

[3]लावपश्चित्रयोधी। [3]लावकनामनी। स च गौरिकादिभेदेन चतुर्विध। 'अथ जीवदक्। जीवजीवो भवेत्'। जीवजीवनामनी॥ रक्तनयनस्तु चकोरक। 'चलश्चञ्चूत्पिवज्ज्योत्स्नाप्रियाश्च विपसूचके'। विपसूचकपक्षिणो नामानि। जीवजीवशब्दश्चात्र। 'जीवजीवश्चकोरे स्याद् द्रुमपक्षिविशेषयो' इति विश्व (पृ १६७, श्लो ६२)। 'वेन्नेलपुलुगु'॥ 'कोयष्टिक शिखरिणि'। शिखरिनाम्नि पक्षिणि कोयष्टिकशब्द स्यात्। 'कोयष्टि शिखरी समौ' इति यादव (वैज प्र २७, श्लो २०)। 'चीकुगोक्केर'। 'टिट्टिभस्तु कटुकण'। तस्मिन्नुत्पादशयनोऽण्डुकश्च। टिट्टिभनामानि। 'टिट्टिभमु'॥ 'अथ वलनक्रमे वर्तक'। वलनक्रमे वर्तकशब्द स्यात्। 'वेलिशगुब्व'। 'शकुनौ प्राचाम्। वर्तिका मीनवङ्क्षिा'। प्राचा पक्षिणा मध्ये प्रशस्ते शकुनौ वर्तिका मीनवङ्क्षिकेति शब्दद्वय वर्तत। 'मीलवङ्क्षि'। 'कपिञ्जलश्चित्रपक्ष'। 'कञ्जु'। इत्याद्या पक्षिण परे ग्रन्थगौरवभयान्नोक्त ।

'हंसादयो जलचरा ग्राम्या स्यु कुक्कुटादय ।
वनजा पीतमुण्डाद्या भृङ्गाद्या क्षुद्रपक्षिण'॥ ३४–५॥

[1] शकटाविल इति वैजयन्त्याम् (पृ २७ श्लो १२) [2] $B_3$ adds बाहुल्कात्
[3] लावुक $B_3$

**गरुत्पक्षच्छदाः पत्रं पतत्रं च तनूरुहम् ।**
**स्त्री पक्षतिः पक्षमूलं चञ्चुस्त्रोटिरुभे स्त्रियौ ॥ ३६ ॥**
**प्रडीनोड्डीनसंडीनान्येताः खगगतिक्रियाः ।**

(वि.) गरुदिति—[1]गिरति [2]गगनमाक्राम्यत्यनेनेति गरुत्। 'गॄ निगरणे'। पक्षति परिगृह्णात्याकाशमनेनेति[3] पक्ष । 'पक्ष परिग्रहे'। छाद्यतेऽङ्गमनेनेति [4]छद । 'छद अपवारणे'। पतत्यनेनेति पत्रम्[5]। 'पत्लृ गतौ'। पतन्त त्रायत इति पतत्रम्। 'त्रैङ् रक्षणे'। तन्वा रोहतीति तनूरुहम्। 'रुह बीजजन्मनि प्रादुर्भावे च'। पक्षनामानि। '[6]रेक्कलपेल्लु'॥ पक्षस्य मूल पक्षति । पक्षमूल च। 'रेक्कमोदलु'॥ चञ्चति[7] चलत्याहारग्रहणे चञ्चु । 'चञ्चु गतौ'। त्रुम्पति[8] ग्रासादिकमनेनेति[9] त्रोटि । 'त्रुट छेदने'। 'पक्षुलमुक्केल्लु'॥ प्रकृष्ट [10]डयन प्रडीनम्। उद् ऊर्ध्वं डयनम् उड्डीनम्। सहत डयन सडीनम्[11]। 'डीङ् विहायसा गतौ'। पक्षिणा गतिविशेषनामानि॥ 'पक्षुलगतिविशेषनाममुलु'॥ ३६॥

[1] आक्रामति $D_2$, $K_6$, क्राम्यति $K_5$, अतिक्रामति $J_2$　[2] आकाश $K_5$, $K_6$　[3] गगन $F_2$, $Pt_2$.　[4] I, $K_5$, $K_6$ add छादयत्याकाशमनेनेति.　[5] $D_2$, $K_5$, $K_6$ add पतत्त्र च　[6] 'पक्ष' $J_2$　[7] $K_5$ omits one line　[8] $D_2$, $K_5$, $K_6$ add भिनत्ति　[9] मासमनेन $J_2$, $K_6$　[10] डयत इति I.　[11] खगतं ($D_2$, $K_5$, $K_6$) डयत इति I

(पा.) गरुत्—तनूरुहम्। पक्षनामानि। 'रेक्कलु'। स्त्री—पक्षमूलम्। पक्षमूलनाम। 'रेक्कमोदलु'॥ चञ्चु—स्त्रियौ। शेषे—'तस्या सृपाटिका तुण्डम्'। चञ्चुनामानि। 'पक्षिमुक्कु'। 'डिडीन डयन गति'। पक्षिणो गतिनामानि। प्रडीनोड्डीनसडीनान्येता. खगगतिक्रिया'। एता इति विधेयानुरोधी लिङ्गनिर्देश.। पक्षिगतिविशेषनामानि।

> 'प्रडीनमाद्य डयनमुड्डीन तु वियद्गति'।
> सडीन तरुगुल्मादिप्राप्तये डयन मतम्' ॥ ३६ ॥

**पेशी कोशो द्विहीनेऽण्डं कुलायो नीडमस्त्रियाम् ॥ ३७ ॥**
**पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः।**

(वि.) पेशीति—पिंशतीति पेशी। अथवा पेशयति गर्भमिति पेशी। 'पिश अवयवे'। गर्भस्य कोशत्वात् कोश। पेशीकोश इति पाठे पेशीना [1]मासखण्डाना कोश पेशीकोश। अमति नि सरत्यस्मात् शिशुरित्यण्डम्। 'अम गत्यादिषु'। अण्डशब्दो द्विहीने, नपुसके[2] वर्तते। अण्डनामानि। 'गुड्डुपेल्लु'॥ सायकाले पक्षिकुलमयत एनमिति कुलाय[3]। 'अय गतौ'। पक्षिकुलमेतीति वा कुलायम्। 'इण् गतौ'। नीयते तृणादिकमत्रेति नीडम्। 'णीञ् प्रापणे'। '[4]गुड्डुपेल्लु'॥ [5]पुनाति कुलमिति पोत। 'पूञ् पवने'। पायते रक्ष्यते पाक। 'पा रक्षणे'। पच्यते गर्भक्लेशेन वा पाक[6]। 'डुपचष् पाके'। जनन्या[7] हस्तमवलम्ब्य ऋच्छतीत्यर्भक। 'ऋ गतौ'। गमनाय डयते डिम्भ[8]। 'डीङ् विहायसा गतौ'। क्षुत्पीडित सन् पृथु अत्यर्थं कायतीति पृथुक[9]। 'कै शब्दे'। श्यति तनूकरोति पित्रोर्दु खमिति शावक। क्षुत्पीडितजठर श्यतीति वा। 'शो तनूकरणे'। शेतेऽत्यर्थमिति शिशु। 'शीङ् स्वप्ने'। शिशुनामानि॥ '[10]सर्वजन्तुसामान्यशिशुमात्रमुनकुनु पेल्लु' ॥ ३७ ॥

[1] $D_2$ $K_6$ add शरीरिणा　[2] $K_2$ $K_3$, $K_6$ add लिङ्गे　[3] कुलायम् $K_5$ $K_6$　[4] 'गुडु' $J_2$　[5] $K_5$, $K_6$ add विरुद्धलक्षणया　[6] $D_2$, $J_2$, $K_5$ add माता पात्येनमिति वा, स्तनौ पिबतीति वा $K_5$, $K_6$ $W_2$　[7] $J_2$, $W_2$ add आदि　[8] डिम्बयति,

'डिभि क्षेपे' $K_2$ [9] पृथुतर यथा भवति तथा कायति $F_2$, $Pt_3$ [10] 'पिल्ल पेरु' $D_2$, $K_2$, $K_6$

(पा.) पेशी—अण्डम्। पेशीकोश इत्येकपदमिति केचित्। [1]डिम्बशब्दश्चात्र। 'पेशी कोशश्च डिम्बोऽण्डम्' इति वैजयन्त्याम् (पृ ३०, श्लो ५०)। अण्डनामानि। 'गुड्डु'॥ कुलायो—अस्त्रियाम्। पञ्जरशब्दश्चात्र। 'कुलाये पञ्जर क्लीबे' इति तन्त्रान्तरे। पक्षिनिलयनामानि। 'गूडु'॥ पोत—शिशु। शिशुसामान्यनामानि। शेषे—'पक्षिपोतस्तु [2]पिल्लाकश्चञ्चुस पीलुकावटौ'। चञ्चुस इत्यत्र चमस इत्येके। पक्षिशिशुनामानि।

'इह सह सक्रीडन्ते विडालपोती च कीरपाकौ च।
अहमहमिकया पिबतो हरिणीस्तनमिह च हरिणहरिशावौ'॥ ३७॥

[1] डिम्भ° $B_3$ [2] पिल्लाकश्चम्पुक इति वैजयन्त्याम् (पृ २६, श्लो ४)

**स्त्रीपुंसौ मिथुन द्वन्द्वं युग्मं तु युगलं युगम्॥ ३८॥**
**समूहनिवहव्यूहसंदोहविसरव्रजाः।**
**स्तोमौघनिकरव्रातवारसंघातसंचयाः॥ ३९॥**
**समुदायः समुदयः समवायश्चयो गणः।**
**स्त्रियां तु संहतिर्वृन्दं निकुरुम्बं कदम्बकम्॥ ४०॥**

(वि.) स्त्रीपुंसाविति—स्त्री च पुमांश्च स्त्रीपुंसौ। मेथति मिथ सगच्छत इति मिथुनम्। 'मिथृ मेथृ [1]सगमे'। [2]द्वौ सह वर्तते इति द्वन्द्वम्। 'स्त्रीपुरुषल्जट-पेल्लु'॥ परस्पर युज्यते[3] युग्मम्। युगल। युग च। 'युजिर् योगे'। युग्मनामानि॥ 'सामान्युगा रेण्डु जोडैयुड्डटकु पेल्लु'॥ [4]सम्यगूह्यते एकत्रेति समूह। 'ऊह वितर्क'। नितरा वहति प्रापयति स्वसबन्धिनामेकत्वमिति निवह[5]। 'वह प्रापणे'। विशेषेण उह्यत इति व्यूह[6]। सदुह्यते प्रपूर्यत[7] इति सदोह। 'दुह प्रपूरणे'। विस्रियत इति विसर। 'सृ गतौ'। [8]व्रज्यते बहुभिरिति व्रज। 'व्रज गतौ'। स्तूयत बहुत्वेनेति स्तोम। 'ष्टुञ् स्तुतौ'। उच्यते सघीभूयत इत्योघ। 'उच समवाये'। निकीर्यत इति निकर। 'कॄ विक्षेपे'। व्रियत इति व्रात। वारश्च। 'वृञ् सभक्तौ'। सहन्यत इति सघात। 'हन हिंसागत्यो'। सचीयते सचय। 'चिञ् चयने'। [9]समुदयन्तेऽत्र समुदाय। समुदयश्च[10]। 'अय गतौ'। समवैति समवाय[11]। 'इण् गतौ'। चीयते चय। 'चिञ् चयने'। गण्यते गण। 'गण सख्याने'। सहन्यते

सहति । 'हन हिंसागत्योः'। व्रियते वृन्दम्। 'वृञ् संभक्तौ'। वनयोरभेदः। नितरां कुरति शब्दायते निकुरुम्बम्। 'कुर शब्दे'। निकुरयति शब्दमन्योन्यसंघट्टनेन कारयति वा। कोलाहलरूपेण कुत्सितमम्बते कदम्बकम्। 'अबि शब्दे'। समूहनामानि ॥ 'गुपुपेल्लु' ॥ ३८–४० ॥

[1] समगमने I, $K_2$, $h_3$, $W_2$　　[2] द्वौ द्वौ $D_2$, $h_5$, $h_6$　　[3] $J_2$ adds संग॰च्छते
[4] समूह्यते I, $J_2$, $W_2$　　[5] $D_2$ $h_5$, $h_6$ add निवहति समुदायस्य पक्षादीनां प्रापयति
[6] व्यूह्यते $K_6$, $W_2$, I adds 'ऊह वितर्के'　　[7] $D_2$ $K_6$ add अनेन　　[8] मजति $W_2$
[9] समुदयन I, $K_6$, समुदयन्ति $h_5$　　[10] समुच्छन्त्यत्र, 'इण् गतौ' $\Gamma_2$, $Pt_2$　　[11] समवयन्ति प्राप्नुवन्त्यत्रेति $\Gamma_2$, $Pt_2$

(पा.) स्त्रीपुंसौ—द्वन्द्वम्। स्त्रीपुंसयुगनामनी। युग्म—युगम्। द्वितयसामान्यनामानि। 'द्वय द्वैत यम द्वन्द्व द्वितय यमल द्वयो' इति तन्त्रान्तरे द्वितयसामान्यवाचकेषु द्वन्द्वपदमप्युक्तम्। तेन पदद्वन्द्वमित्यादिप्रयोगः।

> 'मिथुन द्वितय द्वैत द्वय द्वन्द्व युग यमम्।
> यमल युगल युग्म युतक च द्वयोर्गण [1]॥'

इति वैजयन्ती (पृ १८७, श्लो १५)। तेन मिथुनपदमपि द्वितयसामान्यार्थकमाहु। समूह—कदम्बकम्। समूहनामानि।

> 'पूगो वितान प्रकरो मण्डल चक्रवालकम्।
> पटल पेटिका स्त्री स्यात् चक्र जात च जालकम्॥
> स्कन्ध कलाप सस्त्यायो ग्राम परिकरश्छटा॥'

एतानि च ॥ ३८–४० ॥

[1] गण इति मुद्रितम थे

**वृन्दभेदाः समैर्वर्गः संघसार्थौ तु जन्तुभिः।**
**सजातीयैः कुलं यूथं तिरश्चां पुंनपुंसकम् ॥ ४१ ॥**

(वि.) वृन्दभेदा इति—वृन्दभेदाः समूहभेदा वक्ष्यन्ते। वृज्यते[1] विजातीयैरिति वर्गः। 'वृजी वर्जने'। उदाहरणे—प्राणिवर्गः, कवर्गः॥ संहन्यते [2]परस्परसजातीयविजातीयैरिति संघः। 'हन हिंसागत्योः'। सरतीति सार्थः। 'सृ गतौ'। उदा—पक्षिसंघः, वणिक्सार्थः। कोलति संघीभवतीति कुलम्[3]। 'कुल [4]संस्त्याने'।

यथा—ब्राह्मणकुलम् ॥ तिरश्चां तिर्यग्जातीनां समूहो यूथमित्युच्यते। यौति[5] मिश्रीभवतीति यूथम्। 'यु मिश्रणे'। यथा—गजयूथ, वराहयूथमित्यादि ॥ ४१ ॥

[1] वर्ज्यते $D_2$ $K_2$ $W_2$ [2] परस्पर $K_5$ $K_6$ [3] सजातीयैर्जन्तुभिर्निर्वृत्त समूह कुलमित्युच्यते, कुल्यत इति कुलम् I, $K_2$ $W_2$ [4] 'कुल संस्त्याने बन्धुषु च' I $K_2$ $K_5$ [5] $K_6$ $W_2$ add परस्पर

(पा.) वृन्दभेदा । वक्ष्यन्त इति शेष । समैर्वर्ग । केनचिदुपाधिना सजातीयैर्निर्वृत्त समूहो वर्ग इत्युच्यते। यथा शिष्यवर्ग कवर्ग इत्यादि। सघ —जन्तुभि । प्राणिभिर्निर्वृत्त समूह सघ सार्थ इति चोच्यते। गोसघो विप्रसघ इत्यादि । मेघसघ इत्यादि तूपचारात्। निरुपपद सार्थशब्दो वणिक्समूहे। 'सार्थौ वणिक्समूहे स्यादपि सघातमात्रके' इति विश्व (पृ ७६, श्लो ९) ॥ सजातीयै कुलम्। सजातीयैर्जन्तुभिर्निर्वृत्त समूह कुलमित्युच्यते। गोकुल विप्रकुलमित्यादि। यूथ—पुनपुसकम्। सजातीयाना तिरश्चा समूह यूथ यूथ इति चोच्यते। गजयूथ कथायूथ कथयिष्यामीति समूहमात्रेऽपि प्रयोग। 'यूथ तिर्यक्समूहेऽपि[1] वृन्दमात्रेऽपि[1] भाषितम्' इति विश्वप्रकाशिका (पृ ७६, श्लो १२) ॥ ४१ ॥

[1] स्यात्, 'च' इति च मुद्रितग्रन्थे

**पशूनां समजोऽन्येषां समाजोऽथ सधर्मिणाम्।**
**स्यान्निकायः पुञ्जराशी तूत्करः कूटमस्त्रियाम् ॥ ४२ ॥**

(वि.) पशूनामिति—[1]समजन्त्यत्र समज । 'अज गतिक्षेपणयो'। पशुसमूहनाम॥ [2]समाजशब्दव्युत्पत्ति समजशब्दवत्[3]। पशुभिन्नसघनाम॥ निचीयते निकाय । 'चिञ् चयने'। सधर्मिवृन्दनाम॥ पुञ्ज्यते समूह्यत इति पुञ्ज[4]। 'पुञ्ज समूहे'। अश्नुत इति राशि । 'अशू व्याप्तौ'। उत्कीर्यत उन्नतत्वेनेति उत्कर । 'कॄ विक्षेपे'। कूटवत् शिखरवत् [6]स्थित कूटम्। धान्यादिराशिनामानि ॥ ४२ ॥

[1] समजति I, $K_6$ $W_2$ [2] $F_2$, $Pt_2$ add समजन्त्यत्र समाज, 'अज गतिक्षेपणयो' [3] $D_2$ $K_5$ $K_6$ add व्युत्पत्ति॰ [4] $F_2$ $Pt_2$ add पुसो जायत इति वा [5] रश्यत इति वा राशि रशि सौत्रो धातु दीप्त्यर्थ $D_2$ $J_2$ $W_2$ [6] $K_5$ $K_6$ add उन्नतत्वात्

(पा.) पशूना समज । पशुसमूह समज स्यात्। गोसमज । अश्वसमज इत्यादि ॥ अन्येषा समाज । पशुव्यतिरिक्तसमूह समाज स्यात्। राजसमाज इत्यादि।

अथ सधर्मिणां—निकायः। समानधर्मवतो समूहो निकायः स्यात्। ऋषिनिकायः। पुञ्जराशी—अस्त्रियाम्। धान्यादीनामुचितसमूहनामानि। चणकानां पुञ्जः। मौक्तिकानां राशिः। 'रैपार्ष्णीपुधिराशयः' इति स्त्रीपुंसयोस्त्रिकाण्डशेषः (पृ. ३८, श्लो. १०४४)। पुञ्जराशीत्युत्तरनिपात एवात्र ज्ञापकः। वस्त्राणामुत्करः। 'कॄ धान्ये' (३. ३. ३०) इति घञ्विधानसामर्थ्यादुत्कारो धान्यमात्रसमूहः। 'उत्कारस्तण्डुलीनां—तण्डुलानामिति वा, शिवपदपदवीपान्थपाथेयमस्तु'। शिलानां कूटम्॥ ४२॥

## कापोतशौकमायूरतैत्तिरादीनि तद्गणे।
## गृहासक्ताः पक्षिमृगाश्छेकास्ते गृह्यकाश्च ते॥ ४३॥

## इति सिंहादिवर्गः

(वि.) कापोत इति—कपोतानां समूहः कापोतम्। कपोतसमूहनाम[1]॥ शुकानां समूहः [2]शौकम्। शुकसमूहनाम॥ मयूराणां समूहो मायूरम्। [3]मयूरसमूहनाम॥ तित्तिरीणां समूहः तैत्तिरम्। तित्तिरिसमूहनाम[4]॥ गृहासक्ता गृहनिरुद्धाः पक्षिमृगाः छेका गृह्यकाश्च इत्युच्यन्ते। छ्यन्ते छिद्यन्ते पक्षादिषु छेकाः। 'छो छेदने'। गृहे बद्धा गृह्यकाः। गृह्यन्त इति वा गृह्यकाः। 'ग्रह उपादाने'। गृहबद्धपक्षिमृगनामनी॥ ४३॥

[1] 'गुब्यलसमूहमु' $K_5$. [2] 'चिलुकलयोक्क समूहमु' $F_2$, $Pt_2$. [3] 'नेमळ्ळयोक्क गुंपु' $K_5$, $Pt_2$. [4] तित्तिराणां $D_2$, 'तीतुवुलगुंपु' $K_5$, $Pt_2$.

इति श्रीयज्ञलकामभट्टोपाध्यायसूनुलिङ्गयसूरिविरचितायाममरकोश-
पदविवृतौ सिंहादिवर्गः

(पा.) कापोत—तद्गणे। तेषां कपोतशुकमयूरतित्तिर्यादीनां गणे कापोतादयः स्युः। आदिना काकानां समूहः काकमित्यादि। गृहासक्ताः—गृह्यकाश्च ते। गृहोषितपक्षिमृगाश्छेका गृह्यकाश्चेत्युच्यन्ते। 'गृह्याश्छेका गृहाण्डजाः। गृहका गृहजाश्चेति' इति रत्नकोशः॥ ४३॥

इति श्रीवत्स[1]नृसिंहसूरिसुतमल्लिनाथसूरिविरचितेऽमरपदपारिजाते
सिंहादिवर्गः

[1] नरसिंह $A_1$.

## ६. मनुष्यवर्गः

गृहनिरुद्धपक्षिमृगप्रसङ्गात् तद्वर्तिमनुष्याणां नामानि विवक्षुः इदानीं साङ्गोपाङ्गं मनुष्यवर्गमाह मनुष्या इत्यादिना—

**मनुष्या मानुषा मर्त्या मनुजा मानवा नराः ।**
**स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः ॥ १ ॥**

(वि.) मनुष्या इति—मनोरपत्यानि[1] मनुष्याः, मानुषाश्च । म्रियन्त इति मर्त्याः । 'मृङ् प्राणत्यागे'। मर्तो भूलोकः । तत्र भवा वा । मनोर्जाता मनुजाः । 'जनी प्रादुर्भावे'। मनोरिमे मानवाः । नृणन्ति नयन्ति सर्वं स्ववशमिति नराः । 'नॄ नये'। स्वकर्म नयन्ति प्राप्नुवन्तीति वा नराः । नरश्च । 'णीञ् प्रापणे'। [2]पूर्वः अकारान्तः । अपरः ऋकारान्तः । एतानि मनुष्यनामानि ॥ [3]पान्ति स्त्र्यादिकमिति पुमांसः । 'पा रक्षणे'। पञ्चभिः पृथिव्यादिभूतैर्जन्यन्त[4] इति पञ्चजनाः । 'जनी प्रादुर्भावे'। पुरि देहे शेत इति पुरुषः[5]। अथवा पुरन्ति प्राणिनामग्रे गच्छन्तीति पुरुषाः । 'पुर अग्रगमने'। पूरुषाश्च[6] । एतानि पुरुषनामानि ॥ १ ॥

[1] जाताः $K_5$, $K_6$. [2] पूर्वोक्तः $W_2$. [3] कुलं पातीति वा पुमान् $D_2$, $K_5$. [4] जायन्ते $F_2$, $Pt_2$. [5] I, $K_6$ add स्त्र्यादिकं पालयतीति वा पुरुषः, पूरुषोऽपि; $D_2$, I add 'पाल रक्षणे', $K_6$ adds 'शीङ् स्वप्ने'. [6] $F_2$, $Pt_2$ add नयन्त इति नरः । 'णीञ् प्रापणे'.

(पा.) मनुष्याः—नराः । मनुष्यनामानि । जातिशब्दत्वात् स्त्रीलिङ्गा अपि भवन्ति । मनुषी । 'योपधप्रतिषेधे गवयहयमुकयमनुष्यमत्स्यानामप्रतिषेधः' (वा. ४. १. ६३) इति ङीप् । मानुषी । मर्त्या । मनुजा । मानवी ॥ स्युः—नरः । ऋदन्तोऽयम् । पुंसो नामानि । 'ब्रुवते स्म दूत्य उपसृत्य नरान् नरवत् प्रगल्भमतिगर्भगिरः' (शिशु. ९. ६२) इत्यादिप्रयोगान्नरशब्दः पुंसोऽपि नाम । 'पुंसः पुमानी मलिन . . . बुद्ध्या प्रमाणमपि चेच्छिरसा करोति ।' इत्यादितः पुमादिशब्दा मनुष्याणामपि नामानि भवन्ति । 'पुरुषावात्ममानवौ' (३. ३. २१८) इति मूलकारः स्वयमेव वक्ष्यति ॥ १ ॥

**स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः ।**
**प्रतीपदर्शिनी वामा वनिता महिला तथा ॥ २ ॥**

(वि.) स्त्रीति—स्त्यायति [1]संघातो भवति गर्भोऽस्यामिति स्त्री। 'स्त्यै [2]शब्द-संघातयोः'। यौति पुंसेति योषित्। योषा च। 'यु मिश्रणे'। योषितेति वा पाठः। पुंस इव बलमस्या न विद्यत इत्यबला। अल्पं बलमस्या इति वा। अल्पार्थे नञ्। नृणाति नयति स्ववशं पुरुषमिति नारी। 'नॄ नये'। सीमन्तः[3] केशवीथी अस्त्यस्याः सीमन्तिनी। [4]उह्यते भर्त्रेति वधूः। 'वह प्रापणे'। प्रतीपं वक्रं द्रष्टुं शीलमस्या इति [5]प्रतीपदर्शिनी। 'दृशिर् प्रेक्षणे'। वामत्वेन वक्रस्वभावत्वेन रम्यत्वेन वा वामा[6]। वनति प्राप्नोति पुरुषमिति वनिता। 'वन[7] संभक्तौ शब्दे च'। [8]अपत्यादिना मह्यत इति महिला। 'मह पूजायाम्'। एतानि [9]स्त्रीनामानि ॥ २ ॥

[1] घनीभवति $D_2$, $J_2$, $W_3$, संघीभवति $K_5$, $K_6$. [2] 'स्त्यै ष्ट्यै शब्दसंघातयोः' $K_5$, $K_6$, $Pt_2$. [3] सीमन्तं $K_5$, $K_6$, $Pt_2$. [4] ऊह्यते $K_5$, $K_6$, $Pt_2$. [5] प्रतीपं वक्रं यथा भवति तथा पश्यतीति I, $J_2$, $W_2$. [6] वाम वक्र पश्यति $K_2$, $W_2$. [7] 'वन षण संभक्तौ' $K_6$, $Pt_2$. [8] पत्यादिना $J_2$, $W_2$. [9] 'स्त्रीत्रु' $K_5$.

(पा.) स्त्री योषित्। योषिताशब्दोऽप्यस्ति। 'स्त्री वधूर्योषिता रामा' इति त्रिकाण्डशेषः (पृ. १३, श्लो. ३००)। अबला योषा। जोषाशब्दोऽपि। जोषयति प्रीणयतीति जोषा। नारी—महिला तथा। महेलापि।

'अविरलरववारिवाहिनीयं प्रसभमिवाह्वयदाकुलं महेला।'

इति कर्पिणाभ्युदये (१०. ११)। नारिनामानि ॥ २ ॥

**विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना।**
**प्रमदा मानिनी कान्ता ललना च नितम्बिनी ॥ ३ ॥**
**सुन्दरी रमणी रामा कोपना सैव भामिनी।**

(वि.) विशेषा इति—तद्विशेषान् प्रत्येकमाह[1]—प्रशस्तानि अङ्गान्यस्या इत्यङ्गना॥ भयं[2] शीलमस्या इति भीरुः[3]॥ कामयते पुमांसमत्यर्थमिति कामिनी। अतिशयेन कामोऽस्या इति वा। 'कमु कान्तौ'॥ वामे वल्गुनी[4] लोचने यस्याः सा वामलोचना। रमणीयलोचनस्त्रीनाम॥ प्रकृष्टो मदः [5]कामावेगोऽस्या अस्तीति प्रमदा॥ मान. प्रणयकोपोऽस्या अस्तीति मानिनी[6]॥ भाविनीति पाठे भावः शृङ्गारचेष्टा, सोऽस्या अस्तीति भाविनी॥ तापसादिनापि काम्यत[7] इति कान्ता॥ ललति विलसतीति ललना[8]। 'लल [9]विलासे'॥ पृथुर्नितम्बः कटिपश्चाद्भागोऽस्त्यस्या इति नितम्बिनी॥ [10]सुष्ठु आद्रियते पुंसेति सुन्दरी। 'दृङ् आदरे'॥ रमयति नायकमिति रमणी। 'रमु

क्रीडायाम्'। पुमान् यस्या रमते विशेषत[11] सा रमणीति वा॥ रमते कामशास्त्रानुसारेण कलाभिरिति रामा। 'रमु क्रीडायाम्'॥ एतानि स्त्रीविशेषनामानि॥ सा कोपना चेत् कोपशीला यदि भवेद् भामिनीत्युच्यते। रमयन्ती भामयत्यवश्य कुप्यतीति भामिनी। 'भाम क्रोधे'। कोपनस्त्रिया नामनी॥ ३॥

[1] विशेषा उच्यन्ते $W_2$ [2] भयशीला भीरु I, $K_6$, $W_3$ [3] $K_5$ $K_6$ add 'ञिभी भये', $W_2$ adds भयशीलाया स्त्रिया नाम [4] रुचिरे $F_2$, $Pt_2$ [5] चेतोविकार $K_5$, $K_6$ [6] प्रणयकलहवतीनाम $J_2$, $W_2$ [7] कम्यते $K_5$, $K_6$ [8] अति रमणीयस्त्रीनाम $W_2$ [9] क्रीडायाम् $Pt_2$ [10] $K_5$ $K_6$ add रूपत [11] विशेषेण $W_2$

(पा.) <u>विशेषास्तु—रामा</u>। वक्ष्यन्त इति शेष। ते च शब्दा सामान्येऽपि। तथा च <u>हलायुध</u> (२ ३२६–७)—

> 'रामा वामा वामनेत्रा पुरन्ध्री नारी भीरुर्भामिनी कामिनी च।
> योषा योषिद् वासिता वर्णिनी स्त्री स्यात् सीमन्तिन्यङ्गना सुन्दरी च॥
> अबला महिला ललना प्रमदा रमणी नितम्बिनी वनिता।
> दयिता प्रतीपदर्शिन्युक्ता च वधूर्वशा युवति॥'

इति। अङ्गना कल्याणाङ्ग्या स्त्रिया नाम। भीरुर्भयशीलाया। सञ्ज्ञापूर्वकविधेरनित्यत्वेन सबुद्धौ गुणस्यानित्यता। तेन 'कुतस्त्य भीरु यत्तेभ्यो दुह्यद्भ्योऽपि क्षमामहे' इति <u>भट्टि</u> (४ ३९)। 'कम्पोत्तर भीरु तवोपगूढम्' इति <u>कालिदासश्च</u> (रघु १३ २४)। कामिनी प्रियसगमलालसाया। वामलोचना रमणीयनयनाया। प्रमदा यौवनादिमदवत्या। मानिनी प्रणयकोपवत्या। कान्ता स्पृहणीयाया। ललना विलसनशीलाया। नितम्बिनी घननितम्बाया नामानि॥ सुन्दरी मनोहरा। रमणी रामा क्रीडाशीला। <u>कोपना—भामिनी</u>। सैव कोपवती चेद् भामिनी स्यात्। क्रीडासमये कोपशीलाया नाम॥ ३॥

**वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी॥ ४॥**
**कृताभिषेका महिषी भोगिन्योऽन्या नृपस्त्रियः।**

(वि.) <u>वरारोहेति</u>—पुसा आरुह्यत इति आरोह नितम्ब, वर श्रेष्ठ आरोहोऽस्या इति वरारोहा। मधुपान[1] विनापि मत्तेव काशत इति मत्तकाशिनी। 'काशृ दीप्तौ'। मत्तकासिनीति पाठे श्रोणीगौरवात् मत्तगजवत् मन्द कसतीति मत्तकासिनी। 'कस गतौ'। रूपशीलादिभिरुत्कृष्टत्वाद्[3] उत्तमा। वर श्रेष्ठो वर्णो रूपमस्या इति वरवर्णिनी। उत्तमस्त्रीनामानि॥ मह्यते पूज्यत[4] इति महिषी। 'मह पूजायाम्'।

नृपेण सहाभिषिक्तस्त्रीनाम ॥ भोगः संभोगो यास्विति भोगिन्यः । नृपस्य आभ्यो भोगोऽस्तीति वा । [5]नृपभोगस्त्रीनाम ॥ ४ ॥

[1] मद्यसेवया $D_2$, $k_5$ $K_6$　　[2] °गुणादिभिः $J_2$, $K_2$ $W_2$　　[3] $J_2$, $K_2$ $K_6$ add इतराभ्यः　　[4] $k_5$, $k_6$ add सर्वं　　[5] °भोग्य° $W_2$

(पा.) वरारोहा । घनश्रोणीनाम । मत्तकाशिनी । मत्तेन मदेन प्रकाशमानाया नाम । उत्तमा । असाधारणगुणाया नाम । वरवर्णिनी । प्रशस्तरूपवत्या नाम ॥ कृताभिषेका महिषी । राज्ञा सहाभिषिक्ताया नाम ॥ भोगिन्यो—नृपस्त्रियः । तदन्या राज्यो भोगिन्यः स्युः । अनुक्तम्—'पालाक्ली युद्धजिता' । युद्धे निर्जित्याहृता राज्ञी पालाक्ली स्यात् ॥ ४ ॥

**पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी ॥ ५ ॥**
**भार्या जायाथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी ।**
**पुरंध्री सुचरित्रा तु सती साध्वी पतिव्रता ॥ ६ ॥**

(वि.) पत्नीति—पत्युरनया सह यज्ञसंयोगः संपद्यत इति पत्नी । पाणिर्गृहीतो ऽस्या इति पाणिगृहीती । द्वितीयो धर्मभागोऽस्या अस्तीति द्वितीया[1] । पत्या[2] सह धर्मो दानयज्ञादिरस्या अस्तीति सहधर्मिणी । ब्राह्मादिमुख्यविवाहतो यस्या यज्ञाधिकारोऽस्ति तस्या नामानि ॥ भ्रियत इति भार्या । 'भृञ् [3]भरणे' । [4]जायतेऽपत्य मस्यामिति' जाया । जायतेऽस्या पतिः पुत्ररूपेणेति वा । 'जनी प्रादुर्भावे' । दारयन्ति उद्वेजयन्ति पतीनिति दाराः । 'दॄ भये' । अयं शब्दः पुंस्येव भूम्नि च । अत्र अथशब्दस्य अथ भार्येत्यादौ अन्वयः । परिणीतस्त्रीनामानि ॥ कुटुम्बमस्या[5] अस्तीति कुटुम्बिनी[6] । पुरं पोष्यवर्गं [7]धरतीति पुरंध्री । 'धृञ्[8] धारणे' । कुटुम्बपोषकस्त्रीनामनी ॥ शोभनं चरित्रं यस्याः सा सुचरित्रा । दर्शनादेव पापं स्यति नाशयतीति सती[10] । 'षोऽन्तकर्मणि' । [11]साधुगुणयोगात् साध्वी । पतिसेवैव व्रतमस्याः पतिव्रता । सुनियत स्त्रीनामानि ॥ ५–६ ॥

[1] यज्ञाधिकारफलभागिनोर्जायापत्योर्न्यतरत्वेन द्वितीया $F_2$ $Pt_2$　　[2] $Pt_2$ adds भर्त्रा　　[3] भरणपोषणयोः $k_5$ $K_6$　　[4] पुत्र $K_2$ $W_2$　　[5] अस्याः $K_5$ $K_6$　　[6] $F_2$ $Pt_2$ add पुत्रभृत्यादिकं　　[7] पोष्यवर्गं कुटुम्बवत् $K_6$ कुटुम्बं तदस्या I $J_2$　　[8] धत्ते $K_5$, $K_6$ दधाति $J_2$　　[9] 'डुधाञ् धारणपोषणयोः' K $K_6$　　[10] सद्गुणा सत्यस्याः $K_5$　　[11] साधुगुणाः सन्त्यस्याः $J_2$　　[12] $k_2$ adds सदैव

(पा.) पत्नी पाणिगृहीती च। चशब्दो भङ्ग्यन्तराभिधानार्थः। तेन पाण्यत्ती करात्तीत्यपि। द्वितीया—दाराः। दाराः पुंस्येव भूम्न्येव। अग्निसाक्षिकतया परिणीतस्त्रीनामानि॥ 'शूद्री शूद्रस्य भार्या स्यात्' (२. ६. १३) इत्यौपचारिकः प्रयोगः। स्यात्तु—पुरंध्री। कुटुम्बपोषिकानामनी॥ सुचरित्रा—पतिव्रता। नियतस्त्रीनामानि। पतिवत्न्येकपत्न्यपि। एते च॥ ५—६॥

**कृतसापत्निकाध्यूढाधिविन्नाथ स्वयंवरा।**
**पतिंवरा च वर्या च कुलस्त्री कुलपालिका॥ ७॥**
**कन्या कुमारी गौरी तु नग्निकानागतार्तवा।**

(वि.) कृतेति—सपत्न्या भावः सापत्न्यं सापत्नं च। कृतं सापत्नं यस्याः सा कृतसापत्निका। अधि स्वोपरि उह्यते अस्या इति अध्यूढा। 'वह प्रापणे'। अधि उपरि [1]विन्ना लब्धा यस्या अधिविन्ना। 'विद्लृ लाभे'। पूर्वोढानामानि॥ स्वयं [2]वृणुते पतिमिति स्वयंवरा। 'वृञ् वरणे'। पतिं [3]वृणुत इति पतिंवरा। वरणं वरः, तत्र निपुणा वर्या। या स्वरुच्यैव पतिं [4]वृणुते तस्या नामानि॥ कुलेनाव्यभिचारेण रक्षिता स्त्री [5]कुलस्त्री। कुलं पालयतीति [6]कुलपालिका। 'पाल रक्षणे'। सन्तानसंपादयितृस्त्रीनामनी॥ कन्यते काम्यत इति कन्या। 'कनी दीप्तिकान्तिगतिषु'। कनति द्युतिमती भवतीति वा। कुत्सितो मारो मदनोऽस्या अस्तीति कुमारी। कुमारयति क्रीडयतीति वा। 'कुमार क्रीडायाम्'। अनूढनववर्षाधिकानामनी॥ मनसा विवाहं प्रति गुरते [7]प्रत्युद्यच्छतीति गौरी। 'गुरी उद्यमने'। नजते व्रीडतीति नग्निका। [8]'ओणजी व्रीडने'। अत्र नग्निकाशब्दो विरुद्धलक्षणया गौर्यां वर्तते। अनागतम् आर्तवं पुष्पमस्या इति अनागतार्तवा। अनूढसप्त[9]वर्षाधिकानामानि॥ ७॥

[1] विन्दति $K_5$, $K_6$, विदन्ति $K_2$, $K_3$ [2] वृणोति $J_2$. [3] $K_5$, $K_6$ add स्वयमेव [4] वरयति, 'वर ईप्सायाम्' $J_2$ [5] कुले स्त्री I, $K_2$, $K_5$, कुलपालिका स्त्री $J_2$ [6] कुलस्य पालिका स्त्री $W_2$ [7] प्रत्युद्यतते $F_3$, $Pt_2$, प्रत्युद्यमवती $W_2$. [8] 'ओनजी लज्जो व्रीडने' $W_2$ [9] "नव" $K_3$, $K_5$.

(पा.) कृतसापत्निका—अधिविन्ना। या व्यूढा सती [1]कृतसापत्नका साधिविन्ना स्यात्। सापत्न्यदुःखिताया नाम॥ त्रीण्यपि सपत्नीनामानीति केचित्। कृतसापत्न्यिकेति पाठे स्त्रीप्रत्ययानन्तरं कप्। कृतसापत्न्यकेति पाठे तु कबनन्तरमपि स्त्रीप्रत्ययः॥ अथ स्वयंवरा—वर्या च। या कन्या स्वातन्त्र्येण पतिं वृणीते तस्या नामानि॥ कुलस्त्री

कुलपालिका। मातापितृप्रतिपादितकन्यकानाम्नी॥ कन्या—गौरी च। कन्यकानामानि॥ '[2]कुमारी कन्यका गौरी' इति वैजयन्ती (पृ १७३, श्लो ६)। नग्निकानागतार्तवा। अनागतप्रथमरजा कन्या नग्निका स्यात्॥ ७॥

[1] कृतसापत्न्यका $B_3$　　[2] 'कुमारी कन्यका कन्या' इत्येव मुद्रितग्रन्थे

**स्यान्मध्यमा दृष्टरजास्तरुणी युवतिः समे॥ ८॥**
**समाः स्नुषाजनीवध्वश्चिरण्टी तु सुवासिनी।**

(वि.) स्यादिति—कन्यायुवत्योर्मध्यमे वयसि तिष्ठतीति मध्यमा। दृष्टं रजोऽस्या इति दृष्टरजा। दृष्टरज स्त्रीनाम्नी॥ [1]कन्यावस्था तरतीति तरुणी। 'तॄ प्लवनतरणयो'। पुंसा [2]बाह्वङ्गादिना यौतीति युवतिः। 'यु मिश्रणे'। युवती वा। षोडशवर्षाधिकस्त्री-नाम्नी॥ [3]श्वशुरादिपादप्रक्षालनाय जलं स्नौतीति स्नुषा। 'ष्णु[4] प्रस्रवणे'। [5]जायते पुत्रोऽस्यामिति जनी। 'जनी प्रादुर्भावे'। पुत्रेण[6] उह्यते वधू। 'वह प्रापणे'। पुत्रभार्यानामानि॥ चिरेणाटति पितृगेहाद् भर्तृगेहमिति चिरण्टी। चिरिणोति हिनस्त्य-मङ्गलानीति[7] वा। 'चिरि[8] हिंसायाम्'। चरतीति चरण्टीत्येके। [9]सुष्ठु वसतीति सुवासिनी। 'वस निवासे'। स्वेषु वस्तु शीलमस्या इति स्वासिनीति वा पाठः। सभर्तृकाया नाम्नी॥ ८॥

[1] क यादशा $D_2$ $K_2$ $W_2$　　[2] बाह्य° $K_3$　　[3] गृह॰व्यापाराय $F_2$ $Pt_2$　　[4] स्नु $K_5$ $K_8$, $Pt_2$　　[5] जन्यते $D_2$, $K_5$ $K_8$　　[6] पत्या $D_2$ $K_2$ $K_8$　　[7] वर वादि-पेषणादिषु सूक्ष्मगाणिन इति $K_5$, $K_8$　　[8] चिरि जिरि° $K_5$ $K_8$　　[9] $K_5$ $K_8$ add पतिसमीपे

(पा.) स्यात्—दृष्टरजा। दृष्टप्रथमपुष्पा मध्यमा स्यात्। अनुक्तम्—'प्राप्त-र्तुर्दिकरी[1] राका'। प्राप्तर्तोर्नाम्नी। 'श्यामा स्त्रीव्यञ्जनैर्युता'। उत्पन्नकुचकलशादि श्यामा स्यात्। तरुणी युवती समे। यौवनवत्या नाम्नी। पाक्षिकल्लादेशात् तलुनी॥ 'वधूटी वेकटी[2] तह्री' (?)। एतानि च। समा—वध्व। पुत्रपत्नीनामानि॥ चिरण्टी—सुवासिनी। स्त्रीनाम्नी॥ ८॥

[1] धकरी $B_3$　　[2] वेकली $B_3$　युवतिस्तलुनी चरी इति वैजय त्याम् (पृ १७२)

**इच्छावती कामुका स्याद् वृषस्यन्ती तु कामुकी॥ ९॥**
**कान्तार्थिनी तु या याति संकेतं साभिसारिका।**

(वि.) इच्छावतीति—पुष्पादिषु इच्छा अस्त्यस्या इति इच्छावती। सुरतव्यतिरिक्तवस्तुनि कामोऽभिलाषोऽस्या अस्तीति [1]कामुका। 'कमु कान्तौ'। [2]सुरतादन्यत्र विषये इच्छावतीनामनी॥ [3]वृषं रेतोऽधिकपुरुषम् आत्मन इच्छतीति वृषस्यन्ती। सुरतं कामयत इति कामुकी[4]। यूना सह [5]सुरताभिलाषिणीनामनी॥ [6]अभिसारयते कान्तम् अभिसारिका। 'सृ गतौ'। कान्तमुद्दिश्य [7]सकेतस्थानगामिनीनाम[8]॥ ९॥

[1] इन्द्रियार्थेषु कामोऽस्या $D_2$, $K_5$, $K_6$ [2] सुतरामक्षीच्छा अस्या इच्छावती, विषयेच्छावतीनाम $W_2$ [3] असकृद्वीजनिषेकसमर्थो वृषः शुक्लं, तं $F_2$, $Pt_2$ [4] कामः सुरताभिलाषो अस्या अस्तीति $D_2$, $K_3$, $K_3$ [5] सुरताभिलापस्त्रीनाम $W_2$ [6] अभिसरति $J_2$ [7] सकतन° $J_2$ [8] स्थल° $W_2$

(प.) इच्छावती कामुका स्यात्। सभोगान्यविषयकेच्छवत्या नाम॥ वृषस्यन्ती—कामुकी। सभोगेच्छावत्या नामनी॥ कान्तार्थिनी—साभिसारिका। कान्तसकेतगामिन्यभिसारिका स्यात्॥ ९॥

**पुंश्चली चर्षणी बन्धक्यसती कुलटेत्वरी॥ १०॥**
**स्वैरिणी पांसुला च स्यादशिश्वी शिशुना विना।**

(वि.) पुंश्चलीति—पुमांसं प्रलोभ्य चलतीति[1] पुंश्चली। 'चल गतौ'। कामोद्दीपनात् पुमांसं [2]व्याकर्षतीति चर्षणी। 'कृष विलेखने'। ककारस्य चकारादेशः। [3]धर्षणीति वा पाठः। बध्नाति उदासीनमपि पुरुषं स्ववशं करोतीति बन्धकी 'बन्ध बन्धने'। न सती असती। विटकुलमटतीति कुलटा[4]। 'अट गतौ'। एत्यसाधुजनस्थानं ताच्छील्येनेति [5]इत्वरी। 'इण् गतौ'। स्वैरं[6] स्वेच्छागमनमस्या अस्तीति स्वैरिणी। [7]पांसवो मलिना दोषा अस्याः सन्तीति पांसुला। व्यभिचारिणीनामानि॥ शिशवो न सन्त्यस्या इत्यशिश्वी। शिशुरहितस्त्रीनाम॥ १०॥

[1] $K_2$, $W_2$, $Pt_2$ add गच्छति पुंसः परिणेतुश्चलतीति वा $Pt_2$ [2] $J_2$ $K_2$ $K_5$ add दूरं [3] चर्पणी I, J. [4] विलङ्घ्य कुलमटतीति वा 'अट पट गतौ' $D_2$, $K_6$ [5] एतुमिच्छास्या अस्तीति वा $D_2$ $K_5$ $K_6$ [6] स्वैरगमनं I, $K_2$ $K_3$, $W_2$ $Pt_2$ [7] पांसु मलिनं दुश्चरितं I, $K_5$ $K_6$

(पा.) पुंश्चली—पांसुला च स्यात्। व्यभिचारिण्या नामानि॥ अनुक्तम्—'ऊर्मिला त्यक्तभर्तृका'। भर्तारं त्यक्तवत्या नाम॥ अशिश्वी—विना। अनपत्या अशिश्वी स्यात्। '[1]नश्यत्प्रसूतिर्भिंदु[2] स्यात्' इति हलायुधः (अ मा २ ३३३)॥ १०॥

[1] 'नश्यत्प्रसूति कथिता च भिन्दुः' इति मुद्रितग्रन्थे [2] भिन्दुः $B_2$

**अवीरा निष्पतिसुता विश्वस्ताविधवे समे ॥ ११ ॥**
**आलिः सखी वयस्या च पतिवत्नी सभर्तृका ।**

(वि.) अवीरेति—न विद्यते [1]वीरोऽस्या अवीरा । पतिपुत्ररहितस्त्रीनाम ॥ विश्वसिति विगतश्वसनेव तिष्ठति मृतप्रायत्वादिति विश्वस्ता । 'श्वस प्राणने' । विगतो धवः पतिर्यस्याः सा विधवा । मृतभर्तृकानामनी ॥ अलति मिथो भूषयत्यनुरूपसवन्धेनेति[2] आलिः । 'अल[3] भूषणपर्याप्तिवारणेषु' । गुणादिना [4]समाना ख्यातिरस्या इति सखी । वयसा तुल्या[5] वयस्या । सहक्रीडन्त्या नामानि ॥ [6]पतिरस्या अस्तीति पतिवत्नी[7] । विवाहासभर्तृमतीनाम ॥ ११ ॥

[1] $Pt_2$ adds वीरः पतिः पुत्रश्च. [2] संबन्धिनीव $F_2$, $Pt_2$. [3] 'अल भूषणे' $K_6$. [4] समा I. [5] $D_2$, $W_2$ add भवतीति. [6] $F_2$, $Pt_2$ add जीवन्. [7] $F_2$, $Pt_2$ add भर्त्रा सहिता सभर्तृका.

(पा.) अवीरा—सुता । पतिसुतरहिता अवीरा स्यात् । 'पतिपुत्रवती वीरा' इति नाममाला ॥ विश्वस्ता—समे । मृतभर्तृकानामनी । अनुक्तम्—'रण्डा च त्वरिकेत्यपि' । बालविधवानामनी ॥ आलिः—वयस्या च । सखीनामानि । 'सध्रीची सहचर्यपि' । एते च ॥ पतिवत्नी सभर्तृका । आयुष्मद्भर्तृकानामनी ॥ अनुक्तम्—'जीवतोका जीवसूः स्यात्' । जीवदपत्यानामनी ॥ 'किमिला बहुपुत्रिका' । बहुपुत्रवत्या नाम ॥ ११ ॥

**वृद्धा पलिक्नी प्रज्ञा तु प्राज्ञी प्राज्ञा तु धीमती ॥ १२ ॥**
**शूद्री शूद्रस्य भार्या स्याच्छूद्रा तज्जातिरेव च ।**

(वि.) वृद्धेति—गतवयस्का वृद्धा[1] । पलितरोमयोगात्[2] पलिक्नी । वृद्धस्त्रीनाम ॥ प्रकर्षेण जानातीति [3]प्राज्ञी । प्रज्ञा च । 'ज्ञा अवबोधने' । प्रकर्षेण लौकिकव्यवहारादभिज्ञाया नामानि ॥ [4]प्रज्ञा अस्या अस्तीति प्राज्ञा । धीरस्या अस्तीति धीमती । प्रकृष्टधीमतीनामनी ॥ शूद्रस्य भार्या शूद्री । शूद्रभार्यानाम ॥ शूद्रजातौ भवा स्त्री शूद्रा[5] । शूद्रस्त्रीनाम ॥ १२ ॥

[1] वर्धते स्म वृद्धा, 'वृधु वृद्धौ' $F_2$. [2] योगत्वात् $W_2$ [3] प्रजानातीति $D_2$, $K_5$, $K_6$, $W_2$. [3] प्रज्ञावतीति $J_2$ [4] $F_2$, $Pt_2$ add प्रशस्ता. [5] शूद्रजातिस्त्री $D_2$, $K_5$, $W_2$.

(पा.) वृद्धा पलिक्नी। वृद्धस्त्रीनामनी ॥ प्राज्ञी—धीमती। प्रज्ञावत्या नामानि॥ शूद्री—भार्या स्यात्। शूद्रस्य भार्या शूद्री स्यात् ॥ शूद्रा तज्जातिरङ्गना। शूद्रजातिः स्त्री शूद्रा स्यात् ॥ १२ ॥

**आभीरी तु महाशूद्री जातिपुंयोगयोः समा ॥ १३ ॥**
**अर्याणी स्वयमर्या स्यात् क्षत्रिया क्षत्रियाण्यपि ।**

(वि.) आभीरीति—आभीरस्य गोपस्य भार्या तज्जातीया[1] वा आभीरी[2]। महाशूद्रस्य भार्या [1]तज्जातीया वा महाशूद्री। गोपालस्य भार्यायाः तज्जातिस्त्रिया वा नामनी ॥ अर्यकुले जाता अर्याणी। अर्या च। अर्यकुलप्रसूतानाम्नी ॥ [3]क्षत्रकुले जाता क्षत्रिया। क्षत्रियाणी च। [4]क्षत्रकुलप्रसूतानाम्नी ॥ १३ ॥

[1] तज्जातिस्त्री वा $D_2$, $W_2$ [2] महाशूद्री च, व्युत्पत्तिश्चैवम् $D_2$, $K_5$ $K_6$
[3] क्षत्रियकुले $J_2$, $W_2$ [4] क्षत्रिय° $J_2$

(पा.) आभीरी—समा। महाशूद्रशब्द आभीरपर्याय। तत्र [1]जातिपुयोग[2]-योरेकरूपता ॥ अर्याणी—अर्या स्यात्। अर्याया[3] नाम ॥ क्षत्रिया क्षत्रियाण्यपि। क्षत्रियाया नामनी ॥ १३ ॥

[1] ४ १ ६३. [2] ४ १ ४८ [3] आर्याया $B_2$

**उपाध्यायाप्युपाध्यायी स्याचार्यापि च स्वतः ॥ १४ ॥**
**आचार्यानी तु पुंयोगे स्यादर्यी क्षत्रियी तथा ।**

(वि.) उपाध्यायेति—उपेत्य [1]अधीतेऽस्या सकाशात् 'सूदशास्त्र गीतादिक वेत्ति उपाध्याया। उपाध्यायी च। 'इङ् अध्ययने'। सूदशास्त्र[3] गीतादिक या उपदेशिन्या नामनी ॥ [4]शिल्पोपदेश स्वत एवाचरति आचार्या। 'चर गतिभक्षणयोः'। स्वत शिल्पोपदेशिनीनाम ॥ आचार्यस्य पत्नी आचार्यानी। आचार्यपत्नीनाम ॥ अर्यस्य सभ्यस्य पत्नी अर्यी। सभ्यस्य पत्नीनाम ॥ क्षत्रियस्य पत्नी क्षत्रियी। क्षत्रियपत्नीनाम ॥ १४ ॥

[1] अधीयते I, $K_3$, $Pt_2$ [2] सूप° $J_2$ [3] शास्त्रादिक $W_2$ [4] मन्त्र° $Pt_2$.

(पा.) उपाध्यायाप्युपाध्यायी। उपाध्यायाया नामनी ॥ स्या।—स्वत। आचार्याया नाम ॥ आचार्यानी—क्षत्रियी तथा। आचार्यादिशब्दानां पूर्वं जातिलक्ष-

णाभिधानम् । इदानीं पुयोगलक्षणाभिधानम् । स्वयमयोग्या चेदाचार्यस्य पत्नी आचार्यानी । 'आचार्यादणत्वं च' (पा ४ १ ४९) इति णत्वं न । क्षुद्रा [1]चेदर्यस्य पत्नी [2]अर्यी । [3]अर्यो वैश्यजाति पुरुष । शूद्रकुलजा चेत् क्षत्रियस्य पत्नी क्षत्रियी ॥ १४ ॥

[1] आयस्य $B_3$ [2] आर्यी $B_3$ [3] आय $B_3$

**उपाध्यायान्युपाध्यायी पोटा स्त्रीपुंसलक्षणा ॥ १५ ॥**
**वीरपत्नी वीरभार्या वीरमाता तु वीरसूः ।**

(वि.) उपाध्यायानीति—उपाध्यायस्य पत्नी उपाध्यायानी । उपाध्यायी च । उपाध्यायपत्नीनामनी ॥ [1]स्त्रीपुंसलक्षणे पुटति सश्लिष्यतीति पोटा । 'पुट सश्लेषणे' । [1]स्त्रीपुंसलक्षणवतीनाम ॥ वीर पतिर्यस्या सा वीरपत्नी । वीरस्य भार्या वीरभार्या । [2]वीरभार्यानामनी ॥ वीरस्य माता वीरमाता । वीरं सूयते[3] वीरसू । 'षूङ् प्राणिप्रसवे' । वीरमातृनामनी ॥ १५ ॥

[1] °पुंसक° $J_2$ [2] वीरपत्नी° $J_2$ [3] सूते, 'षूङ् प्राणिगर्भविमोचने' $F_2$

(पा.) उपाध्याया युपाध्यायी । मूर्खा चेदुपाध्यायस्य पत्नी उपाध्यायानी । उपाध्यायीत्यपि ॥ पोटा—लक्षणा । स्तनश्मश्रुमती स्त्री पोटा स्यात् । दास्यपि पोटा । 'पोटा वोटा तथा चेटी दासी स्यात् [2]कुटहारिका' इति हलायुध (अ मा० २ ३३७) ॥ वीरपत्नी वीरभार्या । वीरस्य पत्नी, वीर पति यस्या इति वा वीरपत्नी । वीरभार्यानाम ॥ वीरमाता—वीरसू । वीरजननीनामनी ॥ १५ ॥

[1] चेटि $B_3$ [2] कुट्टहारिकेति मुद्रितग्रन्थे

**जातापत्या प्रजाता च प्रसूता च प्रसूतिका ॥ १६ ॥**
**स्त्री नग्निका कोटवी स्याद् दूतीसंचारिके समे ।**

(वि.) जातापत्येति—[1]जातमपत्यमस्या जातापत्या[2] । प्रकर्षेण जायन्तेऽपत्यान्यस्या प्रजाता । प्रसूयते[3] पुमान् प्रसूता । प्रसूतिका च । 'षूङ् प्राणिप्रसवे' । [4]जायमानापत्यानामानि ॥ नजते नग्निका । 'ओणजी व्रीडने' । कुटेन कौटिल्येन वेति यातीति कोटवी । 'वी [5]गतिप्रजनकान्त्यसनखादनेषु' । [6]बलादपेतवस्त्रानामनी ॥ दूयतेऽनया [7]पुमान् स्त्रीपक्षपातेनेति दूती । 'दूङ् परितापे' । सचारयति पुमास स्त्रिय[8] प्रापयतीति सचारिका । 'चर गतौ' । दौत्यकस्त्रीनामनी ॥ १६ ॥

[1] जायमानानि अपत्यानि $D_2$, $J_2$, $K_5$ [2] प्रजाता च $D_2$, $W_2$ [3] प्रसूते I
[4] 'सन्तानमुगन्न स्त्री पेरु $D_2$, $K_6$ [5] गत्यादिषु $K_6$ [6] बलादपि विगतवस्त्रस्त्रीनाम $K_2$
[7] पुमान् वा स्त्री वा $F_2$ $Pt_2$ [8] क्लिय $K_6$, स्त्रिय प्रति $J_2$

(पा.) जातापत्या—प्रसूतिका। प्रसूतिकानामानि॥ स्त्री—कोट्टवी स्यात्। कोट्ट विदिशम्। कोट कौटिल्य वातीति कोटवीत्यपि। सयुक्तोऽसयुक्तो वा टकार। विवसनस्त्रीनामानि॥ दूती—समे। दूतिरित्यप्यस्ति। 'त्वा कामिनो मदनदूतिमुदाहरन्ति' इति प्रयोगात् (विक्रमो ४ २५)। दूतिकानामनी॥ १६॥

**कात्यायन्यर्धवृद्धा या काषायवसनाधवा॥ १७॥**
**सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका।**

(वि.) कात्यायनीति—कत्यस्य ऋषेरपत्यमिव वर्तते [1]कात्यायनी। अर्धवृद्धाया [2] काषायवसनाया पतिरहिताया परस्त्रियमुद्दिश्य आपणार्हाया वा नाम॥ स्वकार्येण सह पर्यायप्रेरण[3] धारयतीति सैरन्ध्री[4]। 'धृञ् धारणे'। दासीवन्मण्डनादिशिल्पकर्म कुर्वत्या असबन्धिवेश्मस्थाया स्ववशाया नाम॥ १७॥

[1] कात्यायनस्य मुनेर्विधवापत्यमिव वर्तते $K_8$, $K_6$, यात्यायिनी $J_2$ [2] अर्धजरिताया (अर्धजरती $Pt_2$) विधवायाश्च $K_6$ [3] परपत्या $K_2$ [4] स्वैरं स्वच्छन्द वर्तनं दधातीति, 'डुधाञ् धारणपोषणयो' $F_2$ $Pt_2$

(पा.) कात्यायनी—वसनाधवा। अर्धवृद्धा काषायवस्त्रा[1] विधवा चेत्युपाधित्रयविशिष्टा कात्यायनी स्यात्। सैरन्ध्री—शिल्पकारिका। परगृहस्थिता स्वाधीना [2]शिल्पकारिणी चेत्युपाधित्रयविशिष्टा सैरन्ध्री स्यात्॥ १७॥

[1] कषाय° $B_2$ [2] शिल्पकरणाच $B_2$

**असिक्नी स्यादवृद्धा या प्रेष्यान्तःपुरचारिणी॥ १८॥**
**✓ वारस्त्री गणिका वेश्या रूपाजीवाथ सा जनैः।**
**सत्कृता वारमुख्या स्यात् कुट्टनीशम्भली समे॥ १९॥**

(वि.) असिक्नीति—[1]असितकेशयोगाद् असिक्नी। [2]अवृद्धाया [3]रन्ध्यगारचारिण्या दास्या नाम॥ वारस्य समूहस्य स्त्री वारस्त्री। वार वार राजसेवार्थमागता स्त्री वा। विटगणोऽस्या अस्तीति गणिका। गणयति धनिकानिति वा[4]। वेशे[5] भवा

वेश्या। रूपमेवाजीवो जीविका[6] अस्या इति रूपाजीवा। [7]वेश्यानामानि॥ वारे [8]राजादि-सेवावसरे मुख्यत्वाद् वारमुख्या। [9]जनैरादृतगणिकानाम॥ विटस्य कुटुम्बमर्थहरणेन कुट्टयति नाशयतीति कुट्टनी। 'कुट्ट [10]छेदनभर्त्सनयोः'। शं श्रेयः [11] भालयति हिनस्तीति शंभली। [12]'भल भल्ल परिभाषणहिंसादानेषु'। विटवेश्ययोः संधानकारिणी-नामनी॥ १८–१९॥

[1] °रोमत्वात् $D_2$ $K_8$  [2] अन्तःपुरस्थयुवतिदासीनाम $K_5$  [3] अन्तःपुर° $F_2$, $Pt_2$
[4] $F_2$, $Pt_2$ add 'गण संख्याने'  [5] वेश्यावाटिकाया $F_2$, $Pt_2$  [6] जीवन $K_2$.
[7] वेषो नेपथ्यं तेन शोभते $Pt_2$  [8] वेश्यासमूहे $F_2$, $Pt_2$  [9] वेश्याजने I, $K_3$, $K_5$ $W_2$
[10] भेदन° $K_8$  [11] राजोद्रय सुख $D_2$, $K_5$, $K_8$  [12] 'भल आभण्डने' $D_2$

(पा.) असिक्नी—चारिणी। अवृद्धा शरीरायासेन जीवितं कुर्वती रथ्यागारवा-सिनी चेत्युपाधित्रयविशिष्टा असिक्नी स्यात्॥ वारस्त्री—रूपाजीवा। वेश्यानामानि॥ 'पश्यन्ती लञ्जिका पण्यशब्दाद्भार्याह्वया अपि'। एतानि च। अथ—वारमुख्या स्यात्। जनैरादृता वेश्या वारमुख्या स्यात्॥ कुट्टनी—समे। [1]लञ्जिकाविटयोः संघटनकारिणी-नामनी। [2]'चुन्दी संघटिका तथा'। एते च॥ १८–१९॥

[1] मिण्ठयोः $B_3$  [2] चण्डी $B_3$

**विप्रश्निका त्वीक्षणिका दैवज्ञाथ रजस्वला।**
**स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपि॥ २०॥**
**ऋतुमत्यप्युदक्यापि स्याद् रजः पुष्पमार्तवम्।**

(वि.) विप्रश्निकेति—[1]शुभाशुभविषये विशेषतः प्रश्नोऽस्या इति विप्रश्निका। ईक्षणं[2] शुभाशुभदर्शनमस्या अस्तीति ईक्षणिका। 'ईक्ष दर्शने'। दैवं शुभाशुभं जानाति दैवज्ञा। 'ज्ञा अवबोधने'। जन्मान्तरशुभाशुभज्ञायाः नामानि॥ आन्ध्रभाषाया 'वेल्पुसानि पेल्लु'॥ रजोऽस्त्यस्या इति [3]रजस्वला। रजोरूपः स्त्रीधर्मोऽस्या अस्तीति स्त्रीधर्मिणी। अव्यतेऽस्मिन् काले [4]रक्षोभयादिति अविः। अवी वा। 'अव रक्षणे'। अत्रेरपत्यमिव आत्रेयी°। मलिनमार्तवमस्या इति मलिनी। पुष्पमार्तवमस्या पुष्पवती। ऋतुरस्या अस्तीति ऋतुमती। चतुर्थेऽहनि उदकमर्हतीति उदक्या। रजस्वलास्त्रीनामानि॥ रज्यते रजः। 'रञ्ज रागे'। पुत्राख्यफलहेतुभूतत्वात् पुष्पम्। ऋतौ भवम् आर्तवम्। स्त्रीणां वयोधर्मेण प्रतिमासं प्रवृत्तरक्तनामानि॥ २०॥

[1] प्रश्नश्रवणोद्यततत्वात् $K_5$, $K_6$ [2] ईक्षते शुभाशुभमिति $D_2$, $K_5$, $W_2$
[3] रजोयोगात् $D_2$, $K_5$ $K_6$ [4] रक्षोम्यं I, $K_5$, $W_2$ [5] अत्र वर्तते (कुक्षौ अस्या विद्यते, आपन्नगर्भा *Śabarabhasya,* VI 1 7) $K_6$

(पा.) विप्रश्निका—दैवज्ञा। जन्मान्तरशुभाशुभज्ञानामानि॥ स्त्रीधर्मिण्यवि। "[1]अवीरुदन्या च रजस्वला स्यात्" इति हलायुध (अ मा २ ३३३)। आत्रेयी—उदक्यापि। रजस्वलानामानि॥ स्याद् रज—आर्तवम्। वय स्त्रीणा प्रतिमास प्रवृत्तरक्तनामानि॥ २०॥

[1] अवि $B_3$

**श्रद्धालुर्दोहदवती निष्कला विगतार्तवा॥ २१॥**
**आपन्नसत्त्वा स्याद् गुर्विण्यन्तर्वत्नी च गर्भिणी।**

(वि.) श्रद्धालुरिति—पायसापूपादिपु श्रद्धा इच्छा अस्या अस्तीति श्रद्धालु। दोहदोऽस्या अस्तीति दोहदवती। [1]गर्भिणीस्वभावाद् विविधविपयदोहदवतीनामनी॥ [2]कलाभ्यो [3]रजोभ्यो निष्क्रान्ता निष्कला। विगतमार्तवमस्या इति विगतार्तवा। [4]निवृत्तरज स्त्रीनामनी॥ आपन्न गृहीत सत्त्व [5]गर्भोऽनयेति आपन्नसत्त्वा। गुरु गर्भशरीरमस्त्यस्या इति गुर्विणी। उदरान्तर्गर्भोऽस्या अस्तीति अन्तर्वत्नी। गर्भोऽस्त्यस्या गर्भिणी। गर्भिणीनामानि॥ २१॥

[1] गर्भस्वभावात् $K_5$, $K_6$, $W_2$ [2] निर्गत कल शुक्रमस्या $F_2$, $Pt_2$ [3] रजोऽशोभ्य $D_2$, $K_5$, $K_6$ [4] निवृत्तरजस स्त्रिया नाम $K_5$, $W_2$ [5] अस्या. $D_2$, $K_6$

(पा.) श्रद्धालुर्दोहदवती[1]। दोहदवत्या नामनी। निष्कला विगतार्तवा। [2]नष्टार्तवानामनी। [3]गौरादित्वान्निष्कली विकली चेति धातुप्रदीपवचनाद् ईकारान्तोऽपि॥ आपन्नसत्त्वा—गर्भिणी। गर्भिण्या नामानि॥ २१॥

[1] दोहदवती $B_2$ [2] निवृत्त° $A_1$ [3] ४ १ ४१

**गणिकादेस्तु गाणिक्यं गार्भिणं यौवतं गणे॥ २२॥**
**पुनर्भूर्दिधिपूरूढा द्विस्तस्या दिधिषुः पतिः।**

(वि.) गणिकादेरिति—गणिकादेर्गण गाणिक्यादीनि वर्तन्ते। यथा। गणिकाना समूहो गाणिक्यम्। वेश्यासमूहनाम॥ गर्भिणीना समूहो गार्भिणम्[1]।

गर्भिणीसमूहनाम ॥ युवतीनां समूहो यौवतम् । युवतिसमूहनाम ॥ प्रथममेकस्य जाया भूत्वा [2]पुनरन्यस्य जाया भवतीति पुनर्भूः । पुनरन्येन धृता पुनरन्येन धीयत इति वा दिधिषूः । 'धृञ् धारणे' । 'डुधाञ् धारणपोषणयोः' । द्विवारं विवाहसंस्कृतायाः नामनी ॥ दिधिषूमात्मन इच्छतीति दिधिषुः । दिधिषूर्वा । तस्या द्वितीयपतिनाम ॥ २२ ॥

[1] गार्भिण्यम् $K_5$, $K_6$ [2] पुनः पुनः $K_3$

**(पा.)** गणिकादेस्तु—यौवतं गणे । गणिकानां समूहो गाणिक्यम् । गर्भिणीनां समूहो गार्भिणम् । युवतीनां समूहो यौवतम् । [1]भिक्षादिगणे पाठसामर्थ्यात् पुंवद्भावो न भवति । भाष्ये भिक्षादित्वप्रत्याख्यानाद् यौवनमिति व्यवस्थापितम् । भागवृत्त्या-मुदाहृतं च ।

'स्वरूपमिव नेपथ्यकलाकुशलयौवनम् ।
यस्य पुण्यवतः प्रेष्यं सफलं तस्य यौवनम् ॥'

पुनर्भूः—ऊढा द्विः । द्विवारं विवाहसंस्कृतायाः नामनी ॥ तस्याः—पतिः । पुनर्भूभर्तृ-नाम ॥ २२ ॥

[1] 'भिक्षादिभ्योऽण्' (४. २. ३८)

**स तु द्विजोऽग्रेदिधिषूः सैव यस्य कुटुम्बिनी ॥ २३ ॥**
**कानीनः कन्यकाजातः सुतोऽथ सुभगासुतः ।**
**सौभागिनेयः स्यात् पारस्त्रैणेयस्तु परस्त्रियाः ॥ २४ ॥**

**(वि.)** स त्विति—सा पुनर्भूरेव यस्य कुटुम्बिनी पुत्रपौत्रप्रतिष्ठिता, स द्विजः अग्रेदिधिषूरित्युच्यते । अग्रे पूर्वकाले प्रधानत्वेन दिधिषूः भार्यात्वेनास्येति [1]अग्रेदिधिषूः । उकारान्तोऽप्यस्ति । यस्य सैव दिधिषूः कुटुम्बिनी तस्य द्विजस्य नाम ॥ कन्यायाः [2]पुत्रः कानीनः । कन्यासुतनाम ॥ सुभगायाः [3]पुत्रः सौभागिनेयः । [4]भाग्यवती-पुत्रनाम ॥ परस्त्रियाः [5]पुत्रः पारस्त्रैणेयः । परस्त्रीपुत्रनाम ॥ २३–४ ॥

[1] गृहरक्षणे अग्रणीभूता दिधिषूर्यस्य $K_3$, $K_5$, $K_6$ [2] सुतः $K_3$ [3] अपत्यं $F_2$, $Pt_2$, सुतः I, $J_2$, $W_2$ [4] सौभाग्य° $W_2$ [5] अपत्यं $F_2$ $Pt_2$

**(पा.)** स तु—कुटुम्बिनी । 'कुटुम्बं तु सुतादिकम्' इति वैजयन्ती (पृ. १७७, श्लो. ५१) । यस्य द्विजस्य सैव दीधिषूरेव कुटुम्बिनी पत्नी स्यात् स द्विजोऽग्रेदिधिषूः[1] स्यात् । विधिनिषेधयोर्द्विजविषयत्वाद् द्विजग्रहणम् । कानीनः—सुतः । कन्याया उत्पन्न

कानीनः स्यात्। अथ सुभगासुतः—स्यात्। सुभगायाः [2]पुत्रः सौभागिनेयः स्यात्। एवं दुर्भगाया दौर्भागिनेयः। पारस्त्रैणेयः—परस्त्रियाः। परस्त्रियाः पुत्रः पारस्त्रैणेयः स्यात्॥ २३–४॥

[1] अग्रेदिधिषुः $B_3$. [2] सुतः $A_1$.

**पैतृष्वसेयः स्यात् पैतृष्वस्रीयश्च पितृष्वसुः।**
**सुतो मातृष्वसुश्चैवं द्वैमात्रेयो द्विमातृजः॥ २५॥**

(वि.) पैतृष्वसेय इति—पितृष्वसुः पुत्रः पैतृष्वसेयः पैतृष्वस्रीयश्च। पितृसोदरीपुत्रनामनी॥ [1]एवं मातृष्वसेयः, मातृष्वस्रीयश्च। [2]मातृसोदरीपुत्रनामनी॥ द्वे मातरौ यस्य द्वैमात्रेयः। वैमात्रेयो [3]विमातृजः इति वा पाठः। विगता विभिन्ना वा माता विमाता, तस्या अपत्यं वैमात्रेयः। सपत्नीपुत्रनाम॥ २५॥

[1] $D_2$, I, $Pt_2$ add मातृष्वसुः पुत्रः. [2] मातुः $J_2$, $W_2$. [3] $F_2$, $Pt_2$ add विमातुर्जातः विमातृजः, द्वाभ्यां मातृभ्यां जायत इति द्विमातृजः.

(पा.) पैतृष्वसेयः—सुतः। पितृष्वसुः सुतः पैतृष्वसेयः पैतृष्वस्रीयश्च स्यात्। मातृष्वसुः—एवम्। मातृष्वसुरेवं सुतो मातृष्वसेयो मातृष्वस्रीयश्च स्यात्॥ [1]वैमात्रेयो विमातृजः। सपत्नीपुत्रनामनी[2]॥ २५॥

[1] द्वैमात्रेयः $B_3$. [2] सुत° $A_1$.

**अथ बान्धकिनेयः स्याद् बन्धुलश्चासतीसुतः।**
**कौलटेयः कौलटेरो भिक्षुकी तु सती यदि॥ २६॥**
**तदा कौलटिनेयोऽस्याः कौलटेयोऽपि चात्मजः।**

(वि.) अथेति—बन्धक्या अपत्यं पुमान् बान्धकिनेयः। [1]स्वकुलपरिणादाय बन्धून् लाति [2]स्वकीयान् करोतीति बन्धुलः। 'ला आदाने'। असत्याः सुतः असतीसुतः। कुलटायाः पुत्रः[3] कौलटेयः। कौलटेरश्च। व्यभिचारिणीपुत्रनामानि॥ भिक्षार्थं कुलान्यटतीति कुलटा। तस्याः पुत्रः कौलटिनेयः। कौलटेयश्च। या भिक्षुकी सती तस्याः पुत्रस्य नामनी॥ २६॥

[1] $F_2$, $Pt_2$ add स्वनिन्दापरिहाराय वा. [2] स्वीयान् $F_2$, $Pt_2$. [3] अपत्यं $W_2$.

(पा.) अथ वान्धकिनेय —कौलटेर । [1]व्यभिचारिणीपुत्रनामानि ॥ भिक्षुकी—चात्मज [2]। कुलान्यटति भिक्षार्थमिति सती भिक्षुक्यपि कुलटा। तस्या सुत कौलटिनेय कौलटेयश्च स्यात् । न कौलटेर ॥ २६ ॥

[1] वन्धकी° $A_1$ [2] आत्मजे $B_3$

**आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी ॥ २७ ॥**
**आहुर्दुहितर सर्वेऽपत्यं तोकं तयोः समे ।**

(वि.) आत्मज इति—आत्मनो जायते [1]आत्मज । 'जनी प्रादुर्भावे'। [2]कुल तनोतीति तनय । 'तनु विस्तारे'। माता एन सूयत इति सूनु । 'पूङ् प्राणिप्रसवे'। सौत्येन माता सुत । 'पु प्रसवैश्वर्ययो '। पुन्नाम्नो नरकात् त्रायत इति पुत्र । 'त्रैङ् पालने'। पुत्रनामानि ॥ अमी आत्मजादय [3] स्त्रीप्रत्ययान्ता दुहितरमाहु । आत्मजा, तनया, सूनु, सुता, पुत्री इत्येपा व्युत्पत्ति पूर्ववत् । दोग्धि धनहरणेन रिक्तीकरोति [4]पितराविति दुहिता । 'दुह प्रपूरणे'। दुहितृनामानि ॥ न पतत्यनेन पिता नरकमिति [5]अपत्यम् । 'पत्लृ गतौ'। तौति कुलमननेति तोकम् । [illegible] इति सौत्रो धातु गतिवृद्धिहिंसासु । स्तूयते बन्धुजनैरिति वा । 'ष्टुञ् स्तुतौ'। अपत्यनामनी ॥ तयो पुत्रे दुहितरि च समे [6]समानलिङ्गे ॥ २७ ॥

[1] आत्मना $K_6$ [2] $F_2$ $Pt_3$ add मुद वा [3] $F_2$ $Pt_3$ add पश्च [4] मातापितरौ $D_3$ $K_5$ $K_6$ [5] नरकापतने साधु $D_2$ $K_5$, $K_6$ [6] समाननामनी $D_2$ $K_2$ $W_2$

(पा.) आत्मज —पुत्र । पुत्रनामानि । 'उद्वहो नन्दनो वत्स पोत क '। एतानि च । [1]स्त्रिया—सर्वे । अमी आत्मजादय स्त्रिय स्त्रीलिङ्गा सन्त दुहितरमाहु । आत्मजा तनया । सूनोर्लक्षणाभावान्न स्त्रीत्वे विधिरिति सूनुश द पुत्रवचन एव । सुता पुत्री । अनुक्तसमहार्थं सर्वे इति । तेनोद्वहा नन्दना वत्सेत्यादि ॥ अपत्य—तयो समे । अपत्यतोकपदे तयो पुत्रे दुहितरि च समे, नियतनपुसक इति यावत् । 'तोकापत्ये नपु स्त्री तु प्रसूति सतति प्रजा' इति वैजयन्ती (पृ १७६, श्लो ४१) ॥ २७ ॥

[1] स्त्रिय $B_3$

**स्वजाते त्वौरसोरस्यौ तातस्तु जनकः पिता ॥ २८ ॥**
**जनयित्री प्रसूर्माता जननी भगिनी स्वसा ।**

(वि.) स्वजात इति—उरसा निर्मित. औरस. उरस्यश्च। स्वस्मात् जाते स्वजाते। [1]स्वोत्पादितपुत्रनामानि ॥ द्विजातीनां क्षेत्रजादिसंभवात् ॥ तनोति कुलमिति तात। 'तनु विस्तारे'। जनयति पुत्रमिति जनक। 'जनी प्रादुर्भावे'। [2]पातीति पिता। 'पा रक्षणे'। पितृनामानि ॥ जनयत्यपत्यानीति जनयित्री। जननी च। 'जनी प्रादुर्भावे'। प्रसूते प्रजाः प्रसूः। 'पूङ् [3]गर्भविमोचने'। माति वर्तते [4]गर्भोऽस्यामिति माता। 'मा माने वर्तने च'। मातृनामानि ॥ भग. कल्याणं भ्रातृवात्सल्यमस्या अस्तीति भगिनी। सोदरायास सुष्ठु अस्यति [5]हिंसतीति स्वसा। 'असु क्षेपणे'। [6]सोदरीनामनी ॥ २८ ॥

[1] उरसोत्पादित° I, K₃, K₆ [2] K₅, W₃ add पुत्र [3] 'पूङ् प्राणिप्रसवे' K₂, K₆, Pt₂ [4] K₅, K₆ add पूर्ण., परिपूर्णः K₃ [5] अपास्यति K₂, K₃, W₂ [6] सोदरस्त्री I, K₂, W₂

(पा.) स्वजाते—औरसोरस्यौ। स्वजातसुतनामनी। आत्मजादय. शब्दाः कुण्डगोलकादिपु न वर्तन्त एव। तातस्तु—पिता। पितुर्नामानि। जनयित्री—जननी। मातुर्नामानि। भगिनी स्वसा। सोदर्या नामनी। 'तस्यामनन्ती ज्येष्ठाया कनिष्ठाया तु कन्यका'[1] ॥ २८ ॥

[1] कन्यका इति वैजयन्त्याम् (पृ १७५, श्लो २७)। कन्यकी स्वसेति महाभारत (१. २३० ८)

**ननन्दा तु स्वसा पत्युर्नप्त्री पौत्री सुतात्मजा ॥ २९ ॥**
**भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम् ।**

(नि.) ननन्देति—न नन्दयति भ्रातृजायामिति ननन्दा। ननान्दा वा। ऋकारान्तस्त्रीलिङ्गोऽयम्। 'टुनदि समृद्धौ'। [1]पतिसोदरीनाम ॥ न पतति कुलमनयेति नप्त्री। 'पत्लृ गतौ'। पुत्रस्य पुत्र्या वा पुत्री पौत्री। पुत्रस्य दुहितृनामनी ॥ यतन्ते गृहकृत्येषु स्पर्धया [2]प्रयत्न कारयन्तीति यातरः। 'यती प्रयत्ने'। [3]सोदरवर्गभार्याः परस्पर प्रति यातृनाम्नोच्यन्ते ॥ २९ ॥

[1] पत्यु. K₂, W₂, पतिस्वसृनाम K₆, 'यदिनी पेद' D₁, K₆ [2] [illegible] K₆, स्पर्धया K₂ [3] मर्तृ° K₂.

(पा.) ननान्दा—पत्युः। पत्युः स्वसा ननान्दा स्यात्। ननन्दाशब्दोऽपि। 'ननान्दा [illegible] स्वसा पत्युर्ननन्देति प्रकीर्तिता' इति रत्नकोशः। नप्त्री—सुतात्मजा।

सुतस्य सुतायाश्चात्मजा नप्त्री पौत्री च स्यात्। [1]स्वस्रादित्वान्नप्त्रा चेति भागवृत्तिः। 'नप्त्रा नप्त्री च पौत्रिका' इति रभसकोशः। पुमांश्चेन्नप्तैव। 'नप्तारौ पौत्रदौहित्रौ' इति वैजयन्ती (पृ १७६, श्लो ४५)॥ भार्यास्तु—परस्परम्। सोदरवर्गस्य पत्न्यः परस्परं प्रति यातरः इत्युच्यन्ते॥ २९॥

[1] ४ १ १० स्वस्रादिगणे नप्तृशब्दो न दृश्यते काशिकायां कौमुद्यां च

## प्रजावती भ्रातृजाया मातुलानी तु मातुली ॥ ३० ॥
## पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः ।

(वि.) प्रजावतीति—देवरादयः प्रजाः सन्त्यस्याः इति प्रजावती। भ्रातुर्जाया भ्रातृजाया। सोदरभार्यानामनी॥ मातुलस्य पत्नी मातुलानी। मातुली च। [1]मातृभ्रातृपत्नी-नामनी॥ पत्युः भर्तुः पत्न्याः भार्यायाश्च प्रसूर्माता श्वश्रूरित्युच्यते। शं सुखम् अश्नुते स्वगृहे इति श्वश्रूः[2]। 'अशू व्याप्तौ'। पत्युः पत्न्याश्च परस्परमातृनाम॥ शं सुखम् अश्नुते जामातरं स्नुषां च लब्ध्वा श्वशुरः। पतिपत्न्योः परस्परस्य पितृनाम॥ ३०॥

[1] मातुः भ्रातुः $K_3$, मातुः सोदरपत्नी $W_2$　　[2] 'अस्तमामलपेद' $D_1$, 'अस्तलपेद' $K_4$ श्वशुरस्य पत्नी श्वश्रूः $F_2$, $Pt_2$

(पा.) प्रजावती भ्रातृजाया। सोदरपत्नी प्रजावती स्यात्। मातुलानी—मातुली। [1]मातृसोदरपत्नीनामनी। पतिपत्न्योः—श्वश्रूः। पत्युः भार्यामाता भार्यायाः पतिमाता च श्वश्रूः स्यात्॥ श्वशुरस्तु—तयोः। पत्युर्भार्यापिता भार्यायाः पतिपिता च श्वशुरः स्यात्॥ ३०॥

[1] मातुल॰ $A_1$

## पितृभ्राता पितृव्यः स्यान्मातुर्भ्राता तु मातुलः ॥ ३१ ॥
## स्यालाः स्युर्भ्रातरः पत्न्याः स्वामिनो देवृदेवरौ ।

(वि.) पितृभ्रातेति—पितुः भ्राता पितृव्यः। पितृसोदरनाम॥ मातुर्भ्राता मातुलः। [1]मातृसोदरनाम॥ [2]स्यामयन्ते [3]भगिनीपतिं [4]परिहासवचनं तद्वाक्यखण्डनमार्गेण भञ्जयन्तीति स्यालाः। 'स्यमु[5] वितर्के'। पत्नीसोदरनाम॥ अपहासेन दीव्यति क्रीडतीति देवा। ऋकारान्तोऽयम्। देवरश्च। 'दिवु क्रीडादौ'। स्वामी पतिः, तस्य सोदरनामनी॥ ३१॥

[1] भ्रातृ° $K_5$ [2] श्यामयन्त्ये श्याला $W_2$ [3] स्वसृपतिं $K_5$ [4] विनोदसमये $K_5$ विनोदन° $W_2$ [5] श्यमु $W_2$ [6] भ्रातृ° $K_5$ [7] भ्रातृजायाभि सह परिहासेन $F_2$ $W_2$

(पा.) पितृभ्राता पितृव्य स्यात्। पितु [1]सोदर पितृव्य स्यात्। मातृभ्राता—मातुल । मातु [1]सोदरो मातुल स्यात्। स्याला—पत्न्या । [2]पत्नीसोदरा स्याला स्यु । स्त्रियश्चेत् स्यालिका । 'स्यालसालसल्सूरसूरय ' इत्यूष्मभेदपाठाद् दन्त्यादि । स्वामिनो देवृदेवरौ। स्वामी पति । तस्य सहोदर देवा देवरश्च स्यात्। अनुक्तम्—' भावुको भगिनीपति '। भगिनीपतिर्भावुक स्यात्॥ ३१॥

[1] भ्राता $A_1$ [2] °भ्रातर $A_1$

**स्वस्रीयो भागिनेयः स्याज्जामाता दुहितुः पतिः ॥ ३२ ॥**
**पितामहः पितृपिता तत्पिता प्रपितामहः ।**

(वि.) स्वस्रीय इति—स्वसुरपत्य[1] स्वस्रीय'। भगिन्या अपत्यं पुमान् भागिनेय । सोदरीपुत्रनामनी॥ [2]जाया मिमीते जामाता। 'माङ् [3]माने '। दुहितृपतिनाम॥ पितु पिता पितामह । पितु पितृनाम॥ पितामहात् प्रगत प्रपितामह[4]। पितामहपितृ नाम॥ ३२॥

[1] $F_2$ $Pt_2$ add पुमान् [2] जा जाया विवाहार्थं स्वदेहेन मिमीते $K_5$ $W_2$ [3] $D_2$, $K_5$ add छन्दे च [4] पितामहस्य पिता $F_2$ $Pt_2$

(पा.) स्वस्रीयो—स्यात्। स्वसु सुतनामनी। जामाता—पति । सुतापतिनाम। पितामह पितृपिता। पितु पिता पितामह स्यात्। तत्पिता प्रपितामह । पितामहपिता प्रपितामह स्यात्॥ ३२॥

**मातुर्मातामहाद्येवं सपिण्डास्तु सनाभयः ॥ ३३ ॥**
**समानोदर्यसोदर्यसगर्भ्यसहजाः समाः ।**

(वि.) मातुरिति—[1]मातामहप्रमातामहशब्दावप्येवम्। समान एक पिण्ड पिण्डप्रदान येषां ते सपिण्डा । समानो नाभिर्मूल[2] कूटस्थपुरुषो येषामिति सनाभय'। ये पितृक्रमणि[4] पिण्डभागित्वेन लेपभागित्वेन वा परस्पर सन [5]सप्रविष्टास्तेषां नामनी॥ तथा चोक्तम्[6]—

'लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥'

इति ॥ समाने उदरे शयितः समानोदर्यः । सोदर्यश्च । समाने गर्भे भवः [7]सगर्भ्यः ।
सह जायत इति सहजः । 'जनी प्रादुर्भावे' । एकोदरोत्पन्नानां नामानि ॥ ३३ ॥

[1] $F_2$, $Pt_2$ add मातुः पिता मातामहः । मातामहात् प्रकृष्टः प्रमातामहः [2] पिण्डदाननक्रिया $D_2$, $K_2$, $K_6$ [3] मूलकारण $Pt_2$ [4] पित्र्य° $K_2$ [5] अनुप्रविष्टा $K_2$, $K_6$, $W_2$ [6] मत्स्यपुराणे इति कुल्लूकः (म स्मृ ५ ६०) [7] सगर्भः $K_5$, $K_6$

(पा.) मातुर्मातामहाद्येवम् । एवंप्रकारेण मातुः पिता मातामहः । मातामहपिता प्रमातामहश्च स्यात् । अनुक्तम्—'पुत्रस्य [1]सूनुः पौत्रोऽस्य प्रपौत्रोऽस्य परपरः' । पुत्रस्य पुत्रः पौत्रः । पौत्रस्य पुत्रः प्रपौत्रः । प्रपौत्रस्य पुत्रः परपरः स्यात् । [2]सपिण्डाः—सनाभयः । नाभिसंबन्धिनां नामनी । समानोदर्य—समाः । एकोदरनामानि ॥ ३३ ॥

[1] पुत्र $B_3$ [2] 'सपिण्डता तु पुरुषे सप्तमे विनिवर्तते' इति मनुः (५ ६०) $B_3$

**सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः ॥ ३४ ॥**
**ज्ञातेयं बन्धुता तेषां क्रमाद् भावसमूहयोः ।**

(वि.) सगोत्र इति—समानं गोत्रं यस्य सगोत्रः । बन्धुरेव बान्धवः । अन्तरङ्गतया ज्ञायत इति ज्ञातिः । 'ज्ञा अवबोधने' । बध्नाति [1]प्रीतिमिति बन्धुः । 'बन्ध बन्धने' । स्वकीयत्वात्[2] स्वः । [3]स्वश्चासौ जनश्च स्वजनः । [4]बन्धुजननामानि ॥ ज्ञातेर्भावो ज्ञातेयम् । बन्धुत्वनाम ॥ बन्धूनां समूहो बन्धुता । बन्धुसमूहनाम ॥ ३४ ॥

[1] $J_1$, $K_5$, $K_6$ add करोति [2] स्वधनसंबन्धित्वात् $F_2$, $Pt_2$ [3] स्वकीय $D_2$, स्वसंबन्धी जनः $F_2$, $Pt_2$ [4] स्वकीय° $K_5$ [5] ज्ञातीनां $K_5$, $K_6$

(पा.) सगोत्र—स्वजनाः समाः । बन्धुनामानि । ज्ञातेय—समूहयोः । तेषां ज्ञातीनां भावो ज्ञातेयम् । तेषां बन्धूनां समूहो बन्धुता । अनुक्तम्—'पितरस्तु पितुर्वंश्या मातुर्मातामहाः कुले' । पितृवंशे भवाः [1]सर्वे पितरः, मातृवंशे भवाः सर्वे मातामहाः [2]स्युः ॥ ३४ ॥

[1] $B_3$ omits सर्वे [2] $B_3$ omits स्युः

**धवः प्रियः पतिर्भर्ता जारस्तूपपतिः समौ ॥ ३५ ॥**
**अमृते जारजः कुण्डो मृते भर्तरि गोलकः ।**

(वि.) धव इति—धुनोति स्वतेजसा भार्यामिति धव । 'धूञ् कम्पने'। तामेव [1]प्रीणयतीति प्रिय । 'प्रीञ् [2]तर्पणे कान्तौ च'। पाति [3]जायामिति पति । 'पा रक्षणे'। तामेव बिभर्तीति भर्ता। 'डुभृञ् [4]धारणपोषणयो'। [5]पतिनामानि ॥ [6]जरयति [7]परस्त्रिय वयोहानि धर्षणै करोतीति जार । 'जॄष् वयोहानौ'। [8]उपजात पति उपपति । परस्त्रीगन्तृनामनी ॥ [9]कुण्ड्यते क्षेत्रिण कुलमनेन कुण्ड । 'कुडि दाहे'। जाराज्जात जारज । भर्तर्यमृते जारजस्य नाम ॥ गुल्यते मात्रा [10]गोप्यत इति गोलक । 'गुड रक्षणे'। भर्तरि मृते सति जारजस्य नाम ॥ ३५ ॥

[1] प्रीणाति $F_3$ $Pt_2$ [2] प्रीणने $K_6$, $Pt_2$ प्रीतौ $W_2$ [3] तामेव $K_5$
[4] भरणे $K_6$ [5] भर्तृ° $K_3$ [6] जारयति $D_2$ [7] स्त्रिया वयोमानहानिं $W_2$
[8] उपमित पत्या $F_2$, $Pt_3$ [9] कुण्डयति $Pt_3$ [10] अप्रकाशत्वेन $Pt_3$

(पा.) धव —भर्ता। पतिनामानि । एताविति केचिदिति शाकटायन । पत्यु [1]समास इति काका निर्देश । तेनानियमो गम्यते ।

> 'मृते प्रव्रजिते नष्टे क्लीबे च पतिते पतौ ।
> पतिना नीयमानाया प्रतिशुक्रो न दुष्यति ॥'

इति सुभूतिटीकायामुक्तम्। जार —समौ। परस्त्रीगन्तुर्नामनी। अमृते—कुण्ड । भर्तरि जीवति जाराज्जात कुण्ड । मृते—गोलक । भर्तरि मृते जाराज्जात गोलक ॥ ३५ ॥

[1] 'पति समास एव' इति पाणिनिसूत्रम् (१ ४ ८)

**भ्रात्रीयो भ्रातृजो भ्रातृभगिन्यौ भ्रातरावुभौ ॥ ३६ ॥**
**मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ ।**
**श्वश्रूश्वशुरौ श्वशुरौ पुत्रौ पुत्रश्च दुहिता च ॥ ३७ ॥**
**दम्पती जम्पती जायापती भार्यापती च तौ ।**

(वि.) भ्रात्रीय इति—भ्रातु [1]पुत्रो भ्रात्रीय । [2]भ्रातृपुत्रनाम ॥ भ्राता च स्वसा[3] च भ्रातरौ। भ्रातृभगिन्योर्नाम ॥ माता च पिता च पितरौ। मातापितरौ।

मातरपितरौ च। प्रसूश्च जनयिता च प्रसूजनयितारौ। प्रसूजनकयोर्नामानि॥ श्वश्रूश्च श्वशुरश्च [4]श्वशुरौ। श्वश्रूश्वशुरयोर्नाम। पुत्रश्च दुहिता च पुत्रौ। पुत्रदुहित्रोर्नाम॥ जाया च पतिश्च दम्पती। [5]जम्पती। जायापती। भार्या च पतिश्च भार्यापती। भार्यापत्योर्नामानि॥ ३६-७॥

[1] अपत्यं $Pt_2$. [2] $F_2$, $Pt_2$ add भ्रातुर्जातो भ्रातृजः. [3] भगिनी $Pt_2$. [4] $Pt_2$ adds श्वश्रूश्वशुरौ. [5] दमिति जमिति मान्तमव्ययद्वयं जायाशब्दवाचि $Pt_2$.

(पा.) [1]भ्रातृव्यो भ्रातृजः। भ्रातृसुतनामनी। भ्रातृभगिन्यौ—उभौ। भ्राता भगिनी चेत्युभौ सहवचने भ्रातरौ। मातापितरौ—जनयितारौ। जननीजनकौ सहवचने मातापितरौ पितरौ मातरपितरौ च स्याताम्। 'मातरपितराभ्यामित्यन्यः' इति भाषावृत्तिकारवचनान्मातरपितरशब्दोऽकारान्तोऽप्यस्ति। तेन मातरपितरयोरित्याद्यपि॥ श्वश्रू—श्वशुरौ। श्वश्रूश्च श्वशुरश्चेत्युभौ सहवचने श्वशुरौ श्वश्रूश्वशुरौ च स्याताम्। पुत्रौ—दुहिता च। पुत्रश्च दुहिता चेत्युभौ सहवचने पुत्रौ स्याताम्। '[2]भ्रातृपुत्रस्वसृदुहितृभिः' इति शाकटायनमते (२. १. ८४) बहुवचनग्रहणात् सुतश्च दुहिता च सुतावित्यादि सिद्धम्। दम्पती—च तौ। भार्या पतिश्चेत्युभौ सहवचने दम्पत्यादिशब्दवाच्यौ भवतः। जाया च पतिश्चेति द्वन्द्वे जाशब्दस्य पक्षे जमादेशदमादेशौ। 'जं दं शब्दौ दारवाच्यावव्ययौ परिकीर्तितौ' इत्यभिधानात् प्रकृत्यन्तरे च। [3]राजदन्तादित्वात् सर्वत्र परनिपातः॥ ३६-७॥

[1] भ्रात्रीयः $B_2$. [2] 'भ्रातृपुत्राः'—इति मुद्रितग्रन्थे [3] 'राजदन्तादिषु परम्' (२. २. ३१).

## गर्भाशयो जरायुः स्यादुल्वं च कललोऽस्त्रियाम्॥ ३८॥
## सूतिमासो वैजननो गर्भो भ्रूण इमौ समौ।

(वि.) गर्भाशय इति—गर्भ आशेतेऽत्र गर्भाशयः। गर्भनिष्क्रमणानन्तरं जरां [1]जीर्णतामेतीति[2] जरायुः। 'इण् गतौ'। उलति गर्भमावृणोतीति उल्वम्। 'उल [3]संवरणे'। गर्भोपरिचर्मनाम॥ शुक्लशोणिते कलति मिथः सगच्छत इति कललः[4]। कलतिः कामधेनुः। शुक्लशोणितसंयोगनाम॥ सूतेः प्रसवस्य मासः सूतिमासः। विजननं गर्भमोचनं, तदस्मिन्नस्तीति वैजननः[5]। सूतिकालमासनामनी॥ [6]मातृभुक्तान्नरसं गिरतीति गर्भः। 'गॄ निगरणे'। भ्रियते कुक्षौ[7] मात्रेति भ्रूणः। 'भृञ् भरणे'। गर्भनामनी॥ ३८॥

[1] जीर्णत्व $D_2$, $K_5$, $K_6$ [2] $K_5$ adds प्राप्नोति [3] आवरणे $K_5$, 'उल' गतौ धातु $D_2$ [4] कलत योगात् शुक्रशोणिते मिथ सगच्छेते अत्रेति, 'कल सख्याने' $F_2$, $Pt_2$ [5] विशिष्टजन (विजन $W_2$) सम्बन्धित्वात् $D_2$, $K_5$, $K_6$ [6] मात्रा भुक्त $K_5$, $K_6$ [7] (कुक्षिमात्रण $K_5$, $K_6$) भ्राम्यति कुक्षाविति वा, 'भ्रमु अनवस्थाने' $Pt_2$, भ्रूण्यते, 'भ्रूण आशाविशङ्कयो' $D_2$

(पा.) गर्भाशयो—कल्लोऽस्त्रियाम्। [1]गर्भपरिवेष्टिकचर्मनामानि। 'मावि'। 'कललो जरायुरुल्व' इति रत्नकोश। 'लोक एष तिमिरोल्ववेष्टितो गर्भवास इव वर्तते निशि।' इति कुमारसभव (८ ५६)। उल्वकललशब्दौ गर्भगोलनामनी इति केचित्॥ '[2]सुमेरोरुल्वभूतस्य जरायुश्च महीधरा' इति॥ सूतिमासो वैजनन। प्रसवमास नामनी॥ गर्भो—समौ। गर्भनामनी॥ ३८॥

[1] परिवेष्टन° $B_3$ [2] 'मेरुरुल्वमभूत्तस्य जरायुश्च महीधरा' इति टीकासर्वस्वे (पृ २९३)

**तृतीयप्रकृतिः षण्डः क्लीबः पण्डो नपुंसकम्॥ ३९॥**
**शिशुत्वं शैशवं बाल्यं तारुण्यं यौवनं समे।**

(वि.) तृतीयेति—स्त्रीपुसापेक्षया तृतीया [1]प्रकृति तृतीय प्रकार तृतीयप्रकृति। तृतीया प्रकृतिरिति वा पाठ। [2]स्वस्यापख्यातिनिवारणार्थं किमपि हिरण्यादिक सनोति ददातीति षण्ड। 'षणु दाने'। सण्डश्च। [3]शण्ड इति वा पाठ। तदा शाम्यति [4]प्रजाविच्छेदेनेति शण्ड। 'शमु उपशमे[5]'। क्लीवतेऽधीरो भवतीति क्लीव। 'क्लीट अधार्ष्ट्ये'। क्लाम्यति अप्रजत्वेनेति वा। 'क्लमु ग्लानौ'। पण्डते लज्जया प्रदेशान्तर गच्छतीति पण्ड। 'पडि गतौ'। न स्त्रीपुसौ [6]नपुसकम्। नपुसको वा[7]। शिशोर्भाव शिशुत्वम्। शैशव च। बालस्य भाव बाल्यम्। अष्टवर्षात् पूर्ववयस, अष्टवर्षादूर्ध्वं षोडशवयसश्च नामानि॥ तरुणस्य भाव तारुण्यम्। यूनो भावो यौवनम्। षोडशवर्षाधिकवयोनामनी॥ ३९॥

[1] $F_2$, $Pt_2$ add प्रथमा प्रकृति स्त्री, द्वितीया प्रकृति पुमान् [2] नपुसकप्रख्यापकाय पुरुषाय $K_5$, $K_6$ [3] शण्ढ इति वा पाठ $W_2$ [4] अप्रजत्वेन $D_2$, $K_5$, $K_6$ [5] उपरमे I, $K_2$, $W_2$ [6] न पुमान् $J_2$, $K_6$ [7] नपुसकशब्द पुल्लिङ्गोऽप्यस्ति, नपुसकनामानि $D_2$, I, $K_2$, $K_6$, $W_2$

(पा.) तृतीया—नपुसके। नपुसकनामानि। विशेषणसमासश्चेत् तृतीयप्रकृतिशब्द स्त्रीलिङ्ग। षण्डपण्डशब्दौ रूपभेदात् पुलिङ्गौ। तत्र [1]'शमेर्ढ.' इति सिद्ध-

शण्ढशब्दस्तालव्यादिष्टवर्गचतुर्थान्तश्च भवति[2]। संकरपाठात् क्लीबनपुंसकशब्दौ पुंलिङ्गावपि। 'अस्त्री नपुंसकं क्लीबं वाच्यलिङ्गमविक्रमे' इति रुद्रः। 'स नपुंसको भवेत्' इत्यमरभाष्यकारः॥ शिशुत्वं—बाल्यम्। बालत्वनामानि। 'अपि कैशोरकौमारे'। एते च॥ तारुण्यं—समे। षोडशवर्षाधिकवयोनामनी। [3]दृढादिपाठात् तरुणिमापि। प्रयोगश्च—'कथंचिन्नोत्पत्तिं तरुणिमनि मन्ये मृगदृशः' इति। [4]मनोज्ञादिपाठाद् यौवनिकापि। 'न गता यौवनिका निवर्तते' इति॥ ३९॥

[1] उ. १. १०४.　[2] शण्ड इति $A_1$.　[3] ५. १. १२३.　[4] ५. १. १३३.

**स्यात् स्थाविरं तु वृद्धत्वं वृद्धसंघेऽपि वार्धकम्॥ ४०॥**
**पलितं जरसा शौक्ल्यं केशादौ विस्रसा जरा।**

(वि.) स्यादिति—स्थविरस्य भावः स्थाविरम्। वृद्धस्य भावः वृद्धत्वम्। पञ्चाशद्वर्षाधिकवयोनामनी॥ वृद्धस्य भावः [1]समूहो वा वार्धकम्। वृद्धभावस्य वृद्धसमूहस्य च नाम॥ पलति [2]शौक्ल्येन शोभते शरीरसौन्दर्यमिति पलितम्। 'पल गतौ'। धातूनामनेकार्थत्वाद् अत्र शोभार्थः। जरसा केशादिशौक्ल्यनाम॥ विस्रंसते अधः पतति [3]शरीरमनयेति विस्रसा। 'स्रंसु [4]अवस्रंसने'। जरयति दन्तादिकमिति जरा। 'जॄष् वयोहानौ'। जीर्यन्तेऽनयाङ्गादीनीति वा। वयोहानिनामनी॥ ४०॥

[1] संघः $D_2$, $K_2$, $W_2$　[2] गच्छत्यनेन $K_2$, $W_2$.　[3] अङ्गादिकं $K_5$, $K_6$.
[4] अधःपतने $F_2$, $Pt_2$, 'स्रंसु ध्वंसु भ्रंसु अवस्रंसने' $K_2$, $K_6$.

(पा.) स्यात् स्थाविरं—वार्धकम्। वृद्धत्वनामानि। वार्धकशब्दो वृद्धसंघेऽपि स्यात्। वार्धक्यशब्दो वृद्धभाव एव। 'वार्धक्ये तु समागते परिभवो जातो महान् विभ्रमः' इति। पलितं—केशादौ। जरसा कृत केशादीनां शौक्ल्यं पलितं स्यात्। 'पलितं पाण्डुराः केशाः' इति शुक्लकेशेषु हलायुधः (अ. मा. २. ३७७)॥ विस्रसा जरा। चरमवयःकृतशरीरपरिपाकनामनी। 'स्थाविरं तु पात् स्त्री [1]विसंसया जरा' इति चरमवयसि वैजयन्ती (पृ. १७७, श्लो. ५४)॥ ४०॥

[1] विस्रसा $B_2$; विसंसजेति मुद्रितग्रन्थे (पृ. १७७).

**स्यादुत्तानशया डिम्भा स्तनपा च स्तनंधयी॥ ४१॥**
**बालस्तु स्यान्माणवको वयस्थस्तरुणो युवा।**

(वि.) स्यादिति—उत्ताना[1] शेते[2] इति उत्तानशया। 'शीङ् स्वप्ने'। [3]डयते गमनायेति डिम्भा। 'डीङ् विहायसा गतौ'। स्तनं पिबतीति स्तनपा। 'पा पाने'। स्तनं [4]धयतीति स्तनधयी। 'धेट् पाने'। मानुषशिशुनामानि[5]॥ स्त्रीलिङ्गे निर्देशस्तु स्त्रीप्रत्ययप्रदर्शनार्थं॥ बलति स्वल्पायासेनापि श्वसितीति बाल। 'बल प्राणने'। मनो कुत्सित स्वल्पमपत्य माणवक। अप्रतिपूर्णषोडशवर्षवतो नामनी॥ 'आ षोडशाद् भवेद् बालस्ततस्तरुण उच्यते' इति मनु[6]। [7]षोडशवर्षाधिके वयसि तिष्ठतीति वयस्थ। तरति [8]दुस्तरमपीति तरुण। 'तॄ प्लवनतरणयो' यौति स्त्रीबाह्याङ्गाद्यवयवे मिश्रीभवतीति युवा। 'यु मिश्रणे'। परिपूर्णषोडशवर्षस्य अवृद्धस्य नामानि॥ ४१॥

[1] उत्तान $K_5$, $K_6$ [2] शेते $D_2$, $W_2$ [3] $D_2$, $J_2$ $W_2$ add उड्डच्छति
[4] $W_2$ adds पिबति [5] $Pt_3$ adds सिंहादिवर्गे पोतसामान्ये पठितस्यापि डिम्भशब्दस्य पुनर्मनुष्यवर्गेऽभिधान उत्तानशय एव मनुष्यशिशावस्य प्रवृत्ति [6] Attributed to Narada in Apte s Dict p 1162 [7] यौवन° $Pt_2$ [8] दुस्तर $D_2$ $J_2$ $K_6$

(पा.) स्यादुत्तानशयो डिम्भ। चरमवपुरथ कृत्य य शेते तन्नाम। स्तनपश्च स्तनधय। स्तन्यपायिनो नामनी। 'त्रिषु जरावरा' इति [1]वक्ष्यते। तेन त्रिलिङ्गा। "धेधातोरनुबन्धप्रयोजन स्तनधयीति ङीप्[3]। बाल—माणवक। 'बालो वटुर्माणवक' इति तन्त्रान्तरम्। बालनामनी॥ वयस्थ—युवा। 'युवान सस्कृतेऽपि' इति त्रिविक्रमवचनाद् अकारान्तो युवानशब्दोऽप्यस्ति। प्रयोगश्च—'स्फुटकुसुममरन्दा नन्दनुवानैर्युवानै' इति। पूर्णवयसो नामानि॥ ४१॥

[1] श्लो ४९ [2] धेट् धातो $B_3$ [3] 'टिड्ढाणञ्—' (४ १ १५)

**प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि॥ ४२॥**
**वर्षीयान् दशमी ज्यायान् पूर्वजस्त्वग्रियोऽग्रजः।**

(वि.) प्रवया इति—प्रगत यौवनाख्य वयो यस्य प्रवया। बहुकाल तिष्ठतीति स्थविर। 'ष्ठा गतिनिवृत्तौ'। वयसा वर्धते वृद्ध। 'वृधु वृद्धौ'। जिनाति [1]वयसो हीयत इति जीन। 'ज्या वयोहानौ'। जीर्यत इति जीर्ण। जरश्च। 'जॄष् वयोहानौ'। [2]अतीतयौवनस्य वृद्धस्य नामानि॥ अतिशयेन वृद्धो वर्षीयान्। नवतेरूर्ध्वं दशमोऽवस्था-विशेषोऽस्यास्तीति दशमी। अतिशयेन वृद्धो ज्यायान्। वृद्धतमनामानि॥ [3]पूर्वस्मिन् काले जात पूर्वज। अग्रे भव[5] अग्रिय। अग्रे जात अग्रज। जमो ज्येष्ठभ्रातृनामानि॥ ४२॥

[1] वयोहानिमाप्नोति $D_2$, $K_5$, $K_6$. [2] $W_2$ omits two lines. [3] वर्षशतादुपरि दशमो वर्षोऽस्यास्तीति $K_6$. [4] पूर्वजाग्रजशब्दौ व्यत्ययेनौ $J_2$, $W_2$. [5] जातः $K_5$, $K_6$.

(पा.) प्रवयाः—जरन्नपि। प्रगतवयसो नामानि। जिन इति ह्रस्वादिरपि। 'जिनः स्यादतिवृद्धे च बुद्धे चार्हति जित्वरे' इति केचित्[1]। वर्षीयान्—ज्यायान्। अतिवृद्धनामानि। पूर्वजः—अग्रजः। ज्येष्ठनामानि॥ ४२॥

[1] विश्वप्रकाशे दृश्यते (पृ. ८५, श्लो. १).

**जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः॥ ४३॥**
**अमांसो दुर्बलश्छातो बलवान् मांसलोंऽसलः।**

(वि.) जघन्यज इति—जघन्ये पश्चात्काले जात.[1] जघन्यजः। [2]अतिशयेनाल्पः कनिष्ठ.[3]। अतिशयेन [4]युवा यवीयान्। [5]अवरस्मिन् काले जातोऽवरजः। अनु पश्चाज्जातः अनुजः। जन्मतः कनिष्ठभ्रातृनामानि॥ न विद्यतेऽल्पत्वात् [6]मांसमस्य अमांस.[7]। [8]दुष्टं बलमस्य दुर्बल.। वातादिदोषेण [9]छिन्नमांसत्वात् छातः। 'छो छेदने'। [10]कृशदेहनामानि॥ [11]बलमस्यास्तीति बलवान्। बहुमांसोऽस्यास्तीति मांसलः। पीनावंसौ स्तः अस्येति अंसल'। पीनदेहस्य नामानि॥ ४३॥

[1] भूत: $K_6$ [2] I, $W_2$ omit two lines. [3] अत्यल्पो वयसा $F_2$, $Pt_2$ [4] युवैव $K_5$, $K_6$ [5] अवरे पश्चात् $D_2$ [6] मांसादिकं $W_2$ [7] अल्प मांसमस्य $Pt_2$ [8] दुर्निन्दितं $Pt_2$. [9] कृशत्वेन छिन्न इवास्थानात् $F_2$, $Pt_2$. [10] कृशस्य $W_2$. [11] $F_2$, $Pt_2$ add स्यादस्य

(पा.) जघन्यजे—अनुजाः। कनिष्ठनामानि॥ अमांसो—छात.[1]। कृशशरीरनामानि॥ बलवान्—अंसल.। स्थूलकायनामानि॥ ४३॥

[1] छातः $B_1$

**तुन्दिलस्तुन्दिकस्तुन्दी बृहत्कुक्षिः पिचिण्डिलः॥ ४४॥**
**अवटीटोऽवनाटश्चावभ्रटो नतनासिके।**

(वि.) तुन्दिल इति—[1]पीनं तुन्दमस्यास्तीति तुन्दिल.। तुन्दिक.[2]। तुन्दी च। बृहन् कुक्षिरस्येति [3]बृहत्कुक्षिः। पीन. पिचिण्डः कुक्षिरस्यास्तीति पिचिण्डिल'। [4]पीवर-

जठरस्य नामानि ॥ [5]अवनता नासिकास्येति अवटीट । अवनाट । अवभ्रटश्च । नता नासिकास्येति नतनासिक । अस्थिभङ्गवशादीषन्निम्ननासिकस्य नामानि ॥ ४४ ॥

[1] तुन्दिपिचण्डशब्दौ कुक्षिपर्यायौ, तद्योगात् $Pt_2$ [2] अत्र द्वितीयं नाम तुन्दिम इति वा पाठ $W_2$ [3] वृहत् $D_2$ [4] पीन° $K_2$, $K_3$, $W_2$ [5] $K_5$, $K_6$ add अस्थिभङ्गवशात्

(पा.) तुन्दिल—पिचण्डिल । बृहज्जठरनामानि ॥ अवटीटो—नतनासिके । नम्रनासिकनामानि ॥ अवटीटादयो नतायां नासिकायामपि । तत्र स्त्रीलिङ्गा एव । नासिकानमनेऽपि । तत्र नपुंसकलिङ्गा एव ॥ ४४ ॥

**केशवः केशिकः केशी वलिनो वलिभः समौ ॥ ४५ ॥**
**विकलाङ्गस्तु पोगण्डः खर्वो ह्रस्वश्च वामनः ।**

(वि.) केशव इति—प्रशस्ता केशा सन्त्यस्य केशव । केशिक । केशी च । प्रशस्तकेशस्य नामानि ॥ वलयोऽस्य सन्तीति वलिन । वलिभश्च । त्वक्संकोचात् कुक्ष्यादौ रेखावतो नामानि ॥ [1]विकलान्यङ्गान्यस्य विकलाङ्ग । अपकृष्टो गण्यत इति [2]पोगण्ड । 'गण सङ्ख्याने'। [3]विकलाङ्गस्य नामनी ॥ खर्वति विकलाङ्गस्यापेक्षया श्रेष्ठत्वेन दृश्यत इति खर्व । '[4]खर्व दर्पे'। ह्रसतीति ह्रस्व । 'ह्रस शब्देऽल्पत्वे च'। [5]वामत्वमस्यास्तीति वामन । नीचकायस्य नामानि ॥ ४५ ॥

[1] $W_2$ omits one line [2] कृत्यिचरणादौ अपचार्यते अनर्हत्वात् $K_6$, $W_2$ [3] अङ्गहीनस्य नाम $W_2$ [4] 'खर्व खर्व गव दर्पे' $K_6$, $Pt_2$ [5] वार्धकेऽपि वाम शरीरस्खलता अस्ति $K_5$, $K_6$

(पा.) केशव—केशी । दीर्घकेशस्य नामानि । अनुक्तम्—'रोमशो लोमश समौ'। भल्लुकवत्प्रवृद्धरोम्णो नामनी ॥ वलिनो—समौ । वलिभि सवृतदेहस्य नामनी ॥ विकलाङ्ग—पोगण्ड । हीनाङ्गनाम ॥ खर्वो—वामन । स्वल्पवर्ष्मणो नामानि ॥ ४५ ॥

**खरणाः स्यात् खरणसो विग्रस्तु गतनासिके ॥ ४६ ॥**
**खुरणाः स्यात् खुरणसः प्रज्ञुः प्रगतजानुकः ।**

(वि.) खरणा इति—खरस्य गर्दभस्येव नासिकास्येति खरणा । सकारान्तोऽयम् । खरस्येव तीक्ष्णनासिकास्येति खरणस । अकारान्तोऽयम् । [1]तीक्ष्णाग्रनासिकस्य

नामनी ॥ विगता [1]छेदनादिना नासिका यस्य विग्र । विख्य इति वा पाठ, विखुरिति [3]वा। छिन्ननासिकस्य नाम ॥ खुराकारा नासिकास्येति खुरणा.। सकारान्तोऽयम्। खुरणसश्च । अकारान्तः। गोखुरवत् विकटनासिकस्य नामनी ॥ प्रगते विरले जानुनी यस्य प्रज्ञु । प्रगतजानुकश्च । वातादिदोषेण विरलजानुकस्य नामनी ॥ ४६ ॥

[1] $W_3$ adds यत्नतः. [2] छेदनात् $W_2$ [3] विख इति वा पाठः $K_5$, $K_6$.

(पा.) खरणा.—खरणस.। तीक्ष्णाग्रनासिकस्य नामनी ॥ [1]विग्रो विगतनासिकः। भिन्ननासिकस्य नामनी ।

'विशब्दादपि खुख्रा स्युर्मतान्तरचोदिता ।
विखुर्विख्रस्तथा विग्रो नासाया विगमात् पुन. ॥'

इति दुर्गसिंहः। तेन विखु, विखोऽपि ॥ खुरणा —खुरणस.। गोखुरसमनसो नामनी ॥ प्रज्ञुः—प्रगतजानुक । प्रगतजानुकस्य नाम । प्रज्ञोऽपि स्यात्।

'प्रसञ्भ्यां जानुनो ज्ञुज्ञौ स्यातामूर्ध्वाद्विभाषया।
प्रगते जानुनी यस्य स प्रज्ञु प्रज्ञ इत्यपि ॥'

इति दुर्गसिंह' ॥ ४६ ॥

[1] विग्रस्तु $B_3$

**ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात् संज्ञुः संहतजानुकः ॥ ४७ ॥**
**स्यादेडे बधिरः कुब्जे गडुलः कुकरे कुणिः ।**

(नि.) ऊर्ध्वज्ञुरिति—[1]ऊर्ध्वे गते जानुनी यस्य ऊर्ध्वज्ञु । [2]उपवेशनादिवशात् शिर पर्यन्तमुन्नतजानुकस्य नाम ॥ [3]संहते जानुनी यस्य संज्ञु । गमनवशात् परस्परं सङ्घट्यमानजानुकस्य नामनी ॥ श्रुतिहीनतया [4]भारतादिश्रवणहीनतया मेषसदृशत्वाद् एड इव एड । [5]बध्यते वातादिना श्रवणमस्येति बधिर । '[6]बन्ध बन्धने'। अशृण्वतो नामनी ॥ कुत्सितम् 'उब्जतीति कुब्जः। 'उब्ज आर्जवे'। कुत्सितो जल. कुब्जो वा। उरसि पृष्ठभागे वा गडु [8]मांसग्रन्थिरस्येति गडुल । वातादिना उरसि पृष्ठभागे वा स्थौल्यान्वितस्य नामनी ॥ कुत्सित. करोऽस्य कुकर । कुण्यते कुत्सित इति [9]कुणिः। 'कुण शब्दोपकरणयो.'। जन्मतः प्रभृति कुत्सितकरस्य नामनी ॥ ४७ ॥

[1] ऊर्ध्वे $D_1$, $K_5$, $K_6$ [2] उपवेशादि° I. [3] $D_2$, I, $W_2$ add संहते
[4] रामायणादिश्रवणेऽपि एडका(वा $D_2$, $K_5$, $K_6$)स्यपद्यवचिप्फलत्वात् $D_2$, $K_2$, $K_3$, $K_4$.

[5] बाध्यते $K_3$. [6] 'बधि संयमने' $K_3$, $K_6$. [7] उज्ज्वमार्जवमस्येति $D_2$, $K_3$, $W_2$.
[8] स्थौल्यं $D_2$, I, $K_2$. [9] कुत्सितः पाणिरस्येति वा $D_2$, $W_2$.

(पा.) ऊर्ध्वज्ञुः—स्यात्। उन्नतजानोर्नाम। उद्धितस्यापि। संज्ञुः—जानुकः। परस्परसदृष्टजानोर्नाम॥ स्याद्देडे वधिरः। श्रुतिपाटवशून्यनामनी॥ कुब्जे गडुलः। कुब्जनामनी॥ कुकरे कुणिः। कुत्सितकरनामनी॥ 'करपाददेहविकला निसर्गतः कूणिपङ्गुपोगण्डाः'। इति नाममालापाठात् कूणिरपि[1]॥ ४७॥

[1] $A_1$ adds अस्ति; 'सोट्टचेति बांडु'.

**पृश्निरल्पतनौ श्रोणः पङ्गौ मुण्डस्तु मुण्डिते॥ ४८॥**
**वलिरः केकरे खोडे खञ्जस्त्रिषु जरावराः।**

(वि.) पृश्निरिति—शिरसि अंशुभिः स्पृश्यत इति पृश्निः। 'स्पृश संस्पर्शने'। अल्पा तनुर्यस्य अल्पतनुः। अत्यल्पशरीरस्य नामनी॥ श्रोणति संहतो भवतीति [1]श्रोणः। 'श्रोणृ संघाते'। मन्दं [2]पनति गच्छतीति पङ्गुः। 'पन गतौ'। कुटिलजङ्घाद्यवयववशात् जङ्घाभावमापन्नस्य नामनी॥ मुण्ड्यते क्षुरेण शिरोऽस्येति मुण्डः। मुण्डितश्च। 'मुडि खण्डने'। क्षुरेण वापितकेशस्य नामनी॥ वलते विषयग्रहणवेलायाम् अपाङ्गदेशं प्रतीति वलिर्गोलकम्। तद्योगाद् वलिरं नेत्रम्। तद्योगात् पुरुषोऽपि वलिरः। 'वल संवरणे संचरणे च'। के [3]शिरःसमीपेऽक्षिसंचारं[4] करोतीति केकरः[5]। दृष्टिं तिर्यगाकृष्य पश्यतो नामनी॥ [6]खोडति हतगतिर्भवतीति खोडः। 'खोडृ गतिप्रतिघाते'। खञ्जति गतिवैकल्यं प्राप्नोतीति खञ्जः। 'खजि गतिवैकल्ये'। भग्नचरणस्य नामनी॥ त्रिषु। जराशब्दः पूर्वोक्तोऽवधिर्येषां[7] ते जरावराः। उत्तानशयादयः खञ्जशब्दान्ताः सर्वे शब्दा अभिधेयानुसारेण त्रिषु लिङ्गेषु वर्तन्त इत्यर्थः॥ ४८॥

[1] कुटिलजङ्घत्वात् $D_3$, $K_2$, $W_2$. [2] $D_3$, $J_2$, $K_4$ add टपयेरो (ने $K_2$, $K_3$, $W_1$) नेय. [3] शिरसि $D_2$, $K_5$, $K_6$. [4] चक्षुः $D_2$, I, $K_3$, $K_4$, $K_6$. [5] $D_1$, $J_2$ add 'डुकृञ् करणे'. [6] खुडति, 'खुड संवरणे' $K_3$, $K_4$, $W_2$. [7] तस्मादपराः $J_2$

(पा.) प्रश्निरल्पतनौ। [1]पृश्निरल्पतनावपीति [2]व्याख्यानान्तरपाठः। [3]स्वल्पशरीरनाम॥ श्रोणः पङ्गौ। पङ्गोर्नाम। '[4]पिच्चुकुंटिचांडु'॥ मुण्डस्तु मुण्डिते। छिन्नकरचरणादेर्नाम। क्षुरेण[5] वापितकेशस्यापि[5] नाम॥ [7]वलिरः केकरे। 'टेरे वलिरकेकरौ' इति रभसकोशपाठात् इत्येकारः[8]। तिर्यगाकृष्य पश्यतो नामनी। 'मेल्लकंटुचांडु'॥

खोडे खञ्जः। भग्नचरणस्य नाम। 'कुंटिवांडु'[9]॥ त्रिपु जरावराः। जराशब्दादवरा.[10] खञ्जशब्दान्ताः शब्दाः सर्वे [11]संकीर्णलिङ्गा भवन्ति॥ अनुक्तम्—सिरालः ....॥४८॥

[1] वृद्धिरिति B₃. [2] व्याख्यान्तरे B₃. [3] संकुचितकरादेर्नाम A₁ [4] B₃ omits. [5] B₃ omits. [6] च B₃. [7] वलीरः B₃. [8] B₃ adds अपि [9] B₃ omits. [10] शब्दादयः A₁. [11] त्रिलिङ्गाः B.

**जडुलः कालकः पिप्लुस्तिलकस्तिलकालकः॥ ४९॥**
**अनामयं स्यादारोग्यं चिकित्सा रुक्प्रतिक्रिया।**

(वि.) जडुल इति—[1]जडन्ति जडीभवन्ति [2]रोमाण्यत्रेति जडुलः। 'जड शूल्ये'[3]। [4]कालयति कृष्णयति स्वप्रदेशमिति कालकः। [5]निजवर्णेन परिप्लवते व्याप्नोतीति पिप्लु। 'प्लुङ् गतौ'। तिल इव तिष्ठतीति [6]तिलकः। तिल[7] इव कालवर्णत्वात् तिलकालकः। देहोपरि कृष्णवर्णबिन्दुसदृशत्वक्प्रदेशनामानि॥ आमयस्य व्याधे-[8]रभावोऽनामयम्। अरोगस्य भावः आरोग्यम्। रोगाभावनामनी॥ चिकित्सन्त्यनया चिकित्सा। 'कित निवासे रोगापनयने च'। रुजः प्रतिक्रिया रुक्प्रतिक्रिया। व्याधि-प्रतिक्रियानामनी॥ ४९॥

[1] जटुल इति पाठे, जटन्ति सघीभवन्ति रोमाण्यत्र, 'जट संघाते' F₂, Pt₂. [2] J₂ adds रोगेणेति. [3] संघाते D₂, घनत्वे Pt₂. [4] कालवर्णत्वात् J₂, K₂, K₆. [5] निजवर्ण प्लवते K₅, K₆, नीच° W₂. [6] तिलप्रकृतित्वात् D₂, K₅, K₆. [7] कृष्ण (वर्ण K₅) तिलवत् D₂, K₅, W₂ [8] J₂ adds कालेन.

(पा.) जडुलः—तिलकालकः। तिलाकारसूक्ष्मत्वगुबिन्दुनामानि[1]॥अनामयं—आरोग्यम्। [2]रोगाभावनाम॥ स्वास्थ्यं पाटवमित्यपि। एते द्वे[3] च॥ चिकित्सा—प्रतिक्रिया। रोगस्य [4]प्रतिकारश्चिकित्सा[5] स्यात्॥ ४९॥

[1] A₁ adds कृष्ण°. [2] आरोग्यनाम A₁. [3] B₃ omits. [4] प्रतीकारः B₃. [5] A₁ omits.

**भेषजौषधभैषज्यान्यगदो जायुरित्यपि॥ ५०॥**
**स्त्री रुग् रुजा चोपतापरोगव्याधिगदामयाः।**

(वि.) भेषजमिति—भिषज्यन्ते चिकित्सन्त्यनेनेति भेषजम्। 'भिषज् चिकित्सायाम्'। ओषं दाहं धयति नाशयतीति औषधम्[1]। 'धेट् पाने'। भेषजमेव भैषज्यम्। अविद्यमानो गदोऽनेनेति[2] अगदः। जयति रोगान् जायुः। 'जि जये'[3]। रोगहरद्रव्यनामानि॥ रुज्यते [4]भज्यते प्राण्यनयेति रुक्। रुजा। रोगश्च। 'रुजो भङ्गे'। उपतप्यते प्राण्यनेनेति उपतापः। 'तप संतापे'। विविधा आधयो मनःपीडा यस्मिन् सः [5]व्याधिः। [6]गदन्त्यनेनेति गदः। 'गद व्यक्तायां वाचि'। आमीनाति आ मोक्षात् पीडयतीति आमयः। 'मीन् हिंसायाम्'। व्याधिमात्रनामानि॥ ५०॥

[1] ओषध्या भवं $F_2$, $Pt_2$. [2] असिन्निति $K_5$, $K_6$. [3] 'जि अभिभवे' I, $J_2$, $W_2$. [4] मक्ष्यते $D_2$, $K_6$. [5] व्याधीयतेऽप्यनेन शरीरे विशेषेण धीयते $D_2$, $K_6$. [6] धैर्यघ्नं (धैर्यहरणात् I; °रहितं $D_2$, $J_2$) गदयति प्रलापयति $K_5$, $K_6$.

(पा.) भेषजौषध—जायुरित्यपि। औषधनामानि॥ स्त्री रुक्—गदामयाः। [1]व्याधेर्नामानि॥ ५०॥

[1] रोगस्य $B_2$.

**पुमान् यक्ष्मा क्षयः शोषः प्रतिश्यायस्तु पीनसः॥ ५१॥**
**स्त्री क्षुत् क्षुतं क्षवः पुंसि कासस्तु क्षवथुः पुमान्।**

(वि.) पुमानिति—यक्ष्यते [1]रोगराजव्यपदेशात् यक्ष्मा। नान्तः[2] पुमान्। 'यक्ष पूजायाम्'। [3]क्षीयतेऽत्यर्थमनेन क्षयः। 'क्षि क्षये'। शुष्यत्यनेन[4] प्राणीति शोषः। 'शुष शोषणे'। रोगराजनामानि॥ प्रतिक्षणं श्यापयति[5] श्लेष्मजलं स्रावयतीति[6] प्रतिश्यायः। 'श्यैङ् गतौ'। पीनं [7]अपृद्धमप्यङ्गं स्यति व्यथयतीति पीनसः। 'षोऽन्तकर्मणि'। श्लेष्मध्वनिकारिरोगनामनी[8]॥ पुनः पुनः [9]क्षौतीति क्षुत्। क्षुतं क्षवश्च। 'टुक्षु शब्दे'। [10]पीनसेन नासायां पुनःपुनरागच्छतो ध्वनेर्नामानि॥ कासते भिन्नकांस्यवत् कुत्सितं ध्वनतीति कासः। 'कासृ शब्दकुत्सायाम्[11]'। क्षौति भिन्नकांस्यवत् क्षवथुः। पुमान्। कासरोगनामनी॥ ५१॥

[1] रोगेषु $F_2$, $Pt_2$. [2] नकारान्तः पुंलिङ्गः $K_6$. [3] क्षीयन्ते $F_2$, $Pt_2$. [4] शुष्यन्तेऽनेन $F_2$, $Pt_2$. [5] श्यायते $D_2$, $K_5$, $K_6$. [6] स्रापयति $Pt_2$. [7] मस्तकरूपं $K_2$, $K_5$, $W_2$. [8] विकारि° $J_2$. [9] क्षवणं $Pt_2$. [10] पीनसे इति $W_2$. [11] कुत्सने $K_5$, $K_6$.

(पा.) क्षयः[1] शोषश्च यक्ष्मा च। [2]यक्ष्माशब्दः अदन्तश्च भवति। 'यक्ष्मा यक्ष्मः क्षयः शोष.' इति वैजयन्ती (पृ. १८३, श्लो. १२४)। राजशब्दपूर्वकोऽपि भवति[3]। 'राजयक्ष्मेव रोगाणां [4]समूहः स महीभृताम्' इति माघः (शिशु. २. ९६)। क्षयरोगनामानि॥ प्रतिश्यायस्तु पीनसः। पिहिता[5] नासानेनेति व्युत्पत्त्या दन्त्यान्त.। पीनं श्यतीति व्युत्पत्त्या तालव्यान्तश्च। नासारोगनामनी। 'पडिशमु'[6]॥ स्त्री क्षुत्—पुंसि। क्षुतनामानि। 'तुम्मु'॥ कासस्तु—पुमान्। [7]कासरोगनामनी। 'दग्गु'॥ ५१॥

[1] पुमान् यक्ष्मा क्षयः शोपः $B_3$ [2] $A_1$ omits. [3] $B_3$ omits. [4] $B_3$ omits the second *pāda*. [5] अपिहिता $A_1$. [6] 'पडिश' $B_3$ [7] $B_3$ omits °रोग°.

**शोफस्तु श्वयथुः शोथः पादस्फोटो विपादिका॥ ५२॥**
**किलाससिध्मे कच्छ्वां तु पाम पामा विचर्चिका।**

(वि.) शोफ इति—शवति[1] अभिवृद्ध्या आसन्नप्रदेशमभिसर्पतीति[2] शोफः। 'शव गतौ'। श्वयति [3]वर्धते श्वयथुः। 'टुओश्वि गतिवृद्ध्योः'। शोथश्च। शोष इति पाठे शुष्यत्यनेन म्रियते[4] शोष.। शोफरोगनामानि॥ पादाः [5]स्फुटन्त्यनेन पादस्फोटः। 'स्फुट[6] विकसने'। [7]विपद्यन्ते म्रियन्तेऽनयेति विपादिका[8]। 'पद्ऌ गतौ'। पादशब्दः पाणिशब्दस्याप्युपलक्षणम्। के शिरसि कं[9] वा लसति श्लिष्यति किलासम्। 'लस श्लेषणक्रीडनयोः'। केलयति सुसाध्यत्वात् भिषजं प्रेरयति वा। 'किल क्षेपे'। सिध्यति भेषजेनाशु गच्छतीति सिध्मम्[10]। 'षिधु गत्याम्'। कण्ठादौ[11] चित्रत्वग्गतरोगनामनी[12]॥ स्वस्थानात् त्वचं कषतीति कच्छूः। 'कष हिंसायाम्'। शरीराङ्गसौष्ठवं पिबति नाशयतीति पाम। पामा च। पामाशब्दः नकारान्तपुंलिङ्गः आकारान्तस्त्रीलिङ्गो वा। त्वचं विचर्चयति[13] स्रावेण लिम्पतीति विचर्चिका। 'चर्च अध्ययने'। धातूनामनेकार्थत्वाद् अत्र चर्चधातोः लेपनार्थो ग्राह्यः। श्रोण्यादौ सूक्ष्मसान्द्रपिटकायुतरोगनामानि॥ ५२॥

[1] शापति $D_2$. [2] गच्छति $K_5$. [3] वर्धयति $K_5$, $K_6$. [4] मीयते $W_2$. [5] स्फोटयति $D_2$, $K_6$. [6] 'स्फुट भेदने' $D_2$, $K_6$. [7] पाणीनामपि $D_2$, $W_2$. [8] विपादिकेति पाठे विपद्यन्ते अनया, 'पद गतौ' $K_6$. [9] कण्ठादौ $K_5$; कर्णादौ $W_2$. [10] सिध्मलं $K_5$, $K_6$; सिध्म $F_2$, $Pt_2$. [11] कर्णादौ $W_2$ [12] आन्ध्रभाषाया 'सिब्बेमु पेल्लु' $K_5$. [13] विचर्चति $K_5$, $K_6$.

(पा.) शोफस्तु—शोथः[1]। शोफनामानि। पाद—विपादिका। पादस्फुटितनामनी। 'पिटिकै'॥ किलाससिध्मे। नान्तोऽपि भवति[2]। 'सिहुह्निका तु त्वक्पुष्पं

किलास सिध्मसिध्मनी'। इति रभस। चर्मपुष्पनामनी। 'शिब्बमु'॥ कच्छ्रा—विचर्चिका[3]। [4]प्रथमो नान्त स्त्रीलिङ्ग। द्वितीय (पामा) आकारान्त स्त्रीलिङ्ग[5]। कच्छूनामानि। 'मूगतिटि'॥ ५२॥

[1] शोथ $B_3$ [2] $B_3$ adds सिध्मशब्द [3] $B_3$ adds पामपामे इति पाठे पाम च पामा चेति द्वन्द्व [4] आद्य $B_3$ [5] द्वावपि स्त्रीलिङ्गौ $B_3$

**कण्डूः खर्जूश्च कण्डूया विस्फोटः पिटकस्त्रिषु॥ ५३॥**
**व्रणोऽस्त्रियामीर्ममरुः क्लीबे नाडीव्रणः पुमान्।**

(वि.) कण्डूरिति—कण्ड्यते नखैरिति कण्डू। कण्डूया च। 'कडि [1]भेदने'। खर्जति व्यथयतीति खर्जू। 'खर्ज व्यथने'। कण्डूतिनामानि॥ परिपक्वदशाया[3] विस्फोटतीति[4] विस्फोट। '[5]स्फुटिर् विशरणे'। पिटति सङ्क्लिश्यतीति पिटक। 'पिट सङ्क्लेषणे'। पेटक इति वा पाठ। देहे तत्र तत्र जायमानसूक्ष्मव्रणनामानि[6]॥ व्रणयतीति व्रण। 'व्रण गात्रसचूर्णने'। ईर्तेऽभिवृद्ध्या समीपमङ्गमभिसर्पतीति ईर्मम्। 'ईर गतौ कम्पने च'। इयर्ति वृद्धिम् अरु। 'ऋ गतौ'। अरुशब्द वपुशब्दवत् सान्तो नपुसकलिङ्गश्च। व्रणनामानि॥ नाडीयुक्तो[7] व्रण नाडीव्रण। पुमान्। स्रवत्पूयनाडिव्रणनाम॥ ५३॥

[1] $K_3$, $K_6$ add खण्ड [2] खर्जयति $F_2$ $Pt_2$ [3] अवस्थाया $K_3$, $K_6$ [4] विस्फुटति $Pt_2$. [5] 'स्फुट भेदने' $F_2$, $Pt_2$. [6] 'पोकलपेल्लु' $K_3$, $K_5$, $K_6$. [7] नाडीवान् $D_2$, $K_2$, $W_2$

(पा.) कण्डू—कण्डूया। कण्डूतिनामानि। 'दूल'। धातुत्वविज्ञानात् कण्डू कण्डव। प्रातिपदिकत्वविज्ञानात् कण्डौ कण्ड॥ विस्फोट—त्रिषु। [1]औष्ण्यजायमानस्फोटनामनी। 'बोब्बलु'॥ व्रणो—अरु क्लीबे। व्रणनामानि॥ नाडीव्रण पुमान्। [2]सिराव्रणनाम॥ ५३॥

[1] औष्ण्य° $B_3$ [2] नाडि° $B_3$

**कोठो मण्डलकं कुष्ठश्वित्रे दुर्नामकार्शसी॥ ५४॥**
**आनाहस्तु निबन्धः स्याद् ग्रहणीरुक् प्रवाहिका।**

(वि.) कोठ इति—कुण्ठित व्याधितोऽनेन कारित[1] कोठ । 'कुठ प्रतिघाते'। मण्डलाकृतित्वात्[2] मण्डलकम् । मण्डलाकृतिकुष्ठभेदनामनी[3] ॥ कुत्सित[4] तिष्ठत्यङ्ग[5] कुष्ठम् । 'ष्ठा गतिनिवृत्तौ'। श्वेतते[6] त्वगनेनेति श्वित्रम् । 'श्विता वर्णे'। श्वेतकुष्ठनामानि ॥ पापरोगत्वेन प्रसिद्धतया दुष्ट नामास्येति दुर्नामकम् । अरिवत् प्राणिन श्यति तनूकरोतीति अर्श । 'शो तनूकरणे'। इयर्त्युद्गच्छतीत्यर्शो वा । 'ऋ गतौ'। गुदादौ प्ररूढमांसाङ्कुरनामनी[7] ॥ आनह्यते विण्मूत्रमनेन आनाह । 'णह बन्धने'। विण्मूत्रं निबध्नातीति निबन्ध । 'बन्ध बन्धने'। विण्मूत्रविष्टम्भनामनी ॥ [8]भुक्तमन्नादिकं गृह्णातीति[9] ग्रहणी । 'ग्रह उपादाने'। ग्रहणी चासौ रुक् च ग्रहणीरुक् । द्रवमल प्रवहति प्रवाहिका । 'वह प्रापणे'। ग्रहणीरोगनामनी ॥ ५४ ॥

[1] कावित, 'कु श॰दे' $K_6$ $W_2$ [2] आकृतित्वेन $F_2$, $Pt_2$ [3] आ॰मभाषाया 'चुलुगुकुपेरु' $K_3$ [4] कुत्सिते तिष्ठति $F_2$, $Pt_2$ [5] अङ्गे $K_6$ [6] $D_2$, $K_6$ add विशिष्ट भवति [7] मूल॰याधि॰ $K_3$ [8] $Pt_2$ adds दीप्तनाग्निमान्द्यकरत्वेन. [9] स्थापयति $J_2$, $Pt_2$

(पा.) कोठो मण्डलकम् । मण्डलाकारकुष्ठभेदनामनी । 'कुप्पतोन्नु'। 'कोठ कुष्ठ च मण्डलम्' इति वैजयन्ती (पृ १८३, श्लो १२४)॥ कुष्ठश्वित्रे । [1]श्वेतकुष्ठनामनी ॥ दुर्नामकार्शसी । [2]मूलरोगनामनी ॥ आनाहस्तु—स्यात् । मलबन्धनाम ॥ ग्रहणी—प्रवाहिका । अतिसारनामनी । '[3]नातिभेदस्त्वतीसारो[4] ग्रहणी स्त्री प्रवाहिका'। इति वैजयन्ती (पृ १८३, श्लो १२९) ॥ ५४ ॥

[1] $A_1$ omits श्वेत [2] $A_1$ adds सान्तोऽयम् [3] नातिभेदा $A_1$ नातिभिन्न इति मुद्रितग्रन्थे [4] अतिसार $A_1$

**प्रच्छर्दिका वमिश्च स्त्री पुमांस्तु वमथुः समाः ॥ ५५ ॥**
**व्याधिभेदा विद्रधिः स्त्री ज्वरमेहभगंदराः ।**

(वि.) प्रच्छर्दिकेति—प्रच्छर्दयत्यनया[1] प्रच्छर्दिका । 'छर्द वमने'। भुक्तमन्न वमयत्यनयेति वमि । वमथुश्च । 'टुवमु उद्गिरणे'। छर्दिरोगनामानि ॥ विद्राति कुत्सित गन्ध्याहारादिकमनयेति विद्रधि । 'द्रा कुत्सायां गतौ'। विविधो द्रवो धीयतेऽस्मिन्निति वा । 'डुधाञ् धारणपोषणयो'। तदुक्तम्—

'दोषा अस्थिगता धातून् दूषयित्वा त्वगादिकान् ।
जनयन्ति दृढं शोफ वृत्तं वाप्यथवायतम् ।

सा विद्रधिरिति ख्याता दुश्चिकित्सा महारुजा ॥'

इति। [2]ज्वरयतीति ज्वरः। 'ज्वर रोगे'। [3]मेहति भृशं मूत्रयत्यनेन मेहः। 'मिह सेचने'। भगं [4]गुदसमीपदेशं [5]दारयतीति भगंदरः। 'दॄ विदारणे'। एतानि प्रत्येकं व्याधिभेदनामानि ॥ ५५ ॥

[1] प्रच्छर्दनहेतुत्वात् $K_3$, $K_6$; $W_2$ adds छर्दिश्च. [2] ज्वरति $K_1$. [3] मेहयति $K_3$, $W_2$. [4] गुदादुपरिभागं $K_5$, $K_6$, गुदोपरि $W_2$ [5] $D_2$, $K_5$, $K_6$ add विदारणेन, स्रवणेन $W_2$.

(पा.) प्रच्छर्दिका—वमथुः समाः। वमननामानि॥ अनुक्तम्—'गलगण्डो गण्डमाला'। [1]गण्डमालरोगनामनी। गण्डमाला ग्रन्थिनामेति प्राञ्चः॥ रोहिणी ना गलाङ्कुरः। गलाङ्कुराख्यरोगनाम। उपजिह्विकेति केचित्। '[2]गलचुलिक'॥ कुरण्डो वृद्धिरण्डस्य[3]। वृषणाभिवृद्धिः कुरण्डः स्यात्। '[4]बुड्डगोंडु'। केशघ्नं त्विन्द्रलुप्तकम्। यूकदंशरोगनामनी। 'पेनु गोरिगिनव्याधि'॥ 'उच्छ्वासरोगो यौकः स्यात्'। उच्छ्वासनिरोधनाम। 'ऊपिरिचिक्किनव्याधि'। 'अथ [5]मारिर्मसूरिका'। मसूरिकारोगनामनी। 'गालेम्म'। व्याधिभेदा। वक्ष्यन्त इति शेष। विद्रधिः। विद्रधिरित्यन्तर्व्रण। [6]वर्गचतुर्थान्त। ज्वरमेहभगंदराः। ज्वरस्तापः। मेहः शुक्लोत्सर्गः। भगदरो राजव्रणः। व्याधिभेदनामानि ॥ ५५ ॥

[1] गण्डमाला $B_3$ [2] $B_3$ omits. [3] $A_1$ adds अण्डशब्दः पादपूरणार्थः. [4] $B_3$ omits [5] मारी $A_1$ [6] $A_1$ adds विद्र भिदा दधातीति व्युत्पत्त्या.

**अश्मरी मूत्रकृच्छ्रं स्यात् पूर्वे शुक्रावधेस्त्रिषु ॥ ५६ ॥**
**रोगहार्यगदंकारो भिषग्वैद्यौ चिकित्सके ।**

(वि.) अश्मरीति—शुक्रमूत्रादिकमेव घनीभूतत्वेन अश्मवदवस्थानात् अश्मरीत्युच्यते। [1]मूत्रद्वारे शुक्रात्मानमश्मानं राति ददातीति अश्मरी[2]। [3]मूत्रविसर्गकाले [4]कृच्छ्रं कष्टमस्येति मूत्रकृच्छ्रम्। अश्मर्याख्यरोगनामनी॥ [5]इतः परं शुक्रं तेज इति (श्लो. ६२) वक्ष्यमाणशुक्रशब्दावधेः पूर्वे रोगहार्यादिशब्दा अभिधेयानुसारेण त्रिषु लिङ्गेषु वर्तन्त इत्यर्थ ॥ रोगं हरतीति[6] रोगहारी[7]। अगदमरोगं [8]करोति प्राणिनमिति अगदंकारः। एतौ शब्दौ वैद्यचिकित्सायाम् औषधे च वर्तेते। [9]भिषज्यति चिकित्सां करोतीति भिषक्। 'भिषज् चिकित्सायाम्'। [10]विद्यामायुर्वेदम् अधीते वेत्ति वा वैद्यः। 'विद ज्ञाने'। [11]चिकित्सते चिकित्सकः। वैद्यनामानि ॥ ५६ ॥

[1] द्वार $W_2$ [2] $W_2$ adds 'रा दाने', $K_3$ omits 4 lines [3] विस्रवण° $F_2$ $Pt_2$ [4] कष्ट करोति $D_2$, $K_5$, $K_6$ [5] $D_2$, $K_6$, $W_2$ add पूर्वे शुक्रावघेस्रिपु [6] $Pt_2$ adds ता-छील्येन [7] $K_5$, $Pt_2$ add 'हृञ् हरणे' [8] नीरोगीक्रियतऽनेन $D_2$, $K_2$, $K_6$ [9] भिषज्य $D_2$, $K_5$, $K_6$ [10] आयुर्विद्या $K_6$ [11] चिकित्सा करोति $D_2$, $K_2$, $K_6$

(पा ) अश्मरी मूत्रकृच्छ्रं च । अश्मरी मेढ्रान्त शिलाबन्ध । मूत्रकृच्छ्र मुहुर्मुहु [1]मूत्रस्रवणम् । एते व्याधिभेदा । चशब्द [2]साकल्यत समुच्चयार्थ । पूर्व—त्रिपु । [3]शुक्रशब्दात् पूर्वे रोगहार्यादय शब्दा [4]त्रिलिङ्गा भवन्ति ।

'पतिर्वैद्य सुतो वैद्यो वैद्याह कि वहूदितै ।
गृहस्थूण च नो वैद्य रोगश्च न जहाति न ॥'

इति । रोगहारी—चिकित्सके[5] । वैद्यनामानि ॥ ५६ ॥

[1] स्रवन्मूत्रम् $A_1$ [2] $B_3$ adds अनुक्तसमुच्चयार्थं अनुक्ता वैद्यशास्त्रे द्रष्टव्या [3] शुक्र° $A_1$ [4] सकीर्णलिङ्गा $A_1$ [5] वैद्यचिकित्सकौ $B_3$

**वार्तो निरामयः कल्य उल्लाघो निर्गतो गदात् ॥ ५७ ॥**
**ग्लानग्लास्नू आमयावी विकृतो व्याधितोऽपटुः ।**
**आतुरोऽभ्यमितोऽभ्यान्तः समौ पामनकच्छुरौ ॥ ५८ ॥**

(वि.) वार्त इति—वृत्ति [1]पुनर्जीवनमस्यास्तीति वार्त । निर्गत आमयादिति निरामय । पुन कलासु[2] विद्यासु साधुर्भवतीति कल्य । अनेन रोग उल्लङ्घ्यते स्म उल्लाघ । 'लघि[3] गतौ' । उल्लाघते समर्थो भवतीति वा । 'लाघृ सामर्थ्ये' । रोगाद्विमुक्तस्य नामानि ॥ ग्लायति स्म[4] ग्लान । ग्लास्नुश्च । 'ग्लै हर्षक्षये' । रोगेण क्षीणस्य नामनी ॥ आमयोऽस्यास्तीति आमयावी । कार्श्यादिना [6]पूर्वावस्थापेक्षया विरुद्ध विकृत । व्याधि [7] सजातोऽस्य व्याधित । पाटवाभावाद्[8] अपटु । आतुर सभ्रमोऽस्यास्तीति आतुर । 'तुर त्वरणे' । अमित सर्वतो रोगेणाम्यते[10] अभ्यमित । अभ्यान्तश्च । 'अम रोगे' । रोगग्रस्तनामानि ॥ [11]पामाख्यरोगोऽस्यास्तीति पामन । कच्छूरस्यास्तीति कच्छुर । विचर्चिकारोगवतो नामनी ॥ ५७–८ ॥

[1] पुन वृत्तिर्जीवनम् $K_6$ [2] सकलासु $Pt_2$, स्वकलासु $K_3$ [3] 'रघि लघि गत्याक्षेपे', अत्र द्वितीयो धातु $K_3$, $K_6$ [4] इति $K_3$, $W_2$ [5] 'ग्लै म्लै हर्षक्षये' $K_6$ [6] अन्यथात्वा (त्वा $W_2$) त्वात् $D_2$, $K_2$, $K_6$ [7] $W_2$ adds 'तदस्य सजात तारकादिभ्य

इतच्'. [8] क्षयात् $K_5$, न पठ्: $F_2$, $Pt_2$. [9] शनैः शनैः रोगमातरतीति वा $K_5$, $K_6$. [10] अमति $Pt_2$. [11] पामा $Pt_2$.

(पा.) वार्तो—निर्गतो गदात् । रोगान्निर्मुक्तनामानि ॥ ग्लानग्लास्नू—अभ्यान्तः । रोगिनामानि ॥ समौ पामनकच्छुरौ । कच्छुररोगिनामनी ॥ ५७–८ ॥

**दर्द्रुणो दर्द्रुरोगी स्यादर्शोरोगयुतोऽर्शसः ।**
**वातकी वातरोगी स्यात् सातिसारोऽतिसारकी ॥ ५९ ॥**
**स्युः क्लिन्नाक्षे चुल्लचिल्लपिल्लाः क्लिन्नेऽक्ष्णि चाप्यमी ।**

(वि.) दर्द्रुण इति—दीर्यन्तेऽनया चर्म [1]दर्द्रुः । सा अस्यास्तीति दर्द्रुणः । दर्द्रुरोगिणो नाम ॥ [2]अर्शांसि सन्त्यस्य अर्शसः । अर्शोरोगयुतस्य नाम ॥ [3]वातरोगोऽस्यास्तीति वातकी । वातरोगिणो[4] नाम ॥ अतिसार्यतेऽनेनेत्यतिसारः । तेन सह वर्तत इति सातिसारः । अतिसाररोगोऽस्यास्तीति अतिसारकी । अतिसाररोगिणो नामनी ॥ क्लिन्नमक्षि यस्य सः क्लिन्नाक्षः । चुल्लः चिल्लः पिल्लश्च क्लिन्नाक्षस्य नामानि । क्लिन्नं दूषिकाक्तावि यदक्षि तस्मिन्नक्ष्णि मुख्यवृत्त्या अमी पिल्लादयः शब्दा वर्तन्ते ॥ क्लिन्नाक्षिनामानि ॥ ५९ ॥

[1] दरिद्रयति $Pt_2$. [2] अर्शः $F_2$, $Pt_2$. [3] वातश्शकः $F_2$, $Pt_2$. [4] रोगवतः $K_5$, $W_2$.

(पा.) [1]दर्द्रुणो [2]दर्द्रुरोगी स्यात् । [3]दर्द्रुरोगिनाम । तद्व्युत्पत्तिद्वारा[4] दर्द्रु । 'दद्रु' ॥ अर्शोरोगयुतोऽर्शसः । मूलरोगिणो नाम ॥ वातकी वातरोगी स्यात् । वातव्याधिमतो नाम ॥ सातिसारोऽतिसारकी । ग्रहणिरोगिणो नाम ॥ स्युः क्लिन्नाक्षे—चिल्लाः[5] । क्लिन्ननेत्रवतो[6] नामानि । 'मुरुगिनक्लुलगांडु' । क्लिन्नेऽक्ष्णि चाप्यमी । [7]स्रवज्जलस्य चक्षुषो नामान्यपि पिल्लादयो भवन्ति । चुल्लमक्षि देवदत्तस्य । चुल्ला दृग् देवदत्तस्य । त्रिष्वित्यधिकारात् त्रिलिङ्गता ॥ ५९ ॥

[1] दद्रुणः $B_3$. [2] दद्रु° $B_3$. [3] दद्रुरोगि° $B_3$. [4] $B_3$ omits. [5] चुल्लचिल्लपिल्लाः $A_1$. [6] क्लिन्ननेत्रस्य पुरुषस्य $A_1$. [7] पिल्लादयः क्लिन्नो नेत्रस्य च नामानि $B_3$.

**उन्मत्त उन्मादवति श्लेष्मलः श्लेष्मणः कफी ॥ ६० ॥**
**न्युब्जो भुग्ने रुजा वृद्धनाभौ तुण्डिभतुण्डिलौ ।**

(वि.) उन्मत्त इति—[1]उन्माद्यतीति उन्मत्त । उन्मादोऽस्यास्तीति वा । 'मदी[2] हर्षे'। उन्मादरोगवतो नाम ॥ [3]श्लेष्मास्यास्तीति श्लेष्मल । श्लेष्मणश्च । कफोऽस्यास्तीति कफी । क्षुभितश्लेष्मवतो नामानि ॥ न्युब्जति[4] वक्रीभवतीति न्युब्ज । 'उब्ज आर्जवे'। वातादिरोगेण रुजा भुग्नदेहस्य नाम ॥ वृद्धो नाभिरस्येति वृद्धनाभि । तुण्डिरुन्नतनाभि तद्योगात् तुण्डिल । तुण्डिभश्च । दीर्घनाभेर्नामनी ॥ ६० ॥

[1] W₂ omits two lines [2] 'मदी हर्षग्लपनयो' F₂, Pt₂ [3] K₃ omits six lines [4] न्युब्जम् अनार्जवं भुग्नत्वं तदस्यास्तीति D₂, K₅, K₆ [5] तुण्डवद् वृद्धा नाभिरस्यास्तीति I, K₆ W₂

(पा.) उन्मत्त उन्मादवति । उन्मादिनो नाम ॥ [1]ग्रहिकस्तु पिशाचकी । [2]पिशाचाविष्टनामनी ॥ श्लेष्मल—कफी । श्लेष्मरोगिणो नामानि ॥ न्युब्जो—रुजा । रुजा रोगेण भुग्ने न्युब्जशब्दः स्यात् । 'गूनिगाड्डु'॥ वृद्धनाभौ [4]तुन्दिलतुन्दिभौ । रोगेण प्रवृद्धनाभेर्नामनी[5] । 'वेक्किनवोड्डुवाड्डु[6]' । तद्व्युत्पत्तिद्वारा तुन्दि रोगाभिवृद्धनाभि ॥ ६० ॥

[1] ग्रहिल A₁ [2] पिशाचेनाभिहतस्य A₁ [3] भुग्ननाम A₁ [4] तुण्डिल-तुण्डिभौ B₃ [5] °नाभिवस्य° B₃ [6] B₃ omits

**किलासी सिध्मलोऽन्धोऽदृङ्मूर्च्छाले मूर्तमूर्च्छितौ ॥ ६१ ॥**
**शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च ।**

(नि.) किलासीति—किलासाख्यरोगोऽस्यास्तीति किलासी । सिध्ममस्यास्तीति सिध्मल । [1]पूर्वोक्तसिध्मरोगवतो नामनी ॥ अन्धयति दृष्टिमुपसंहरतीति [2]अन्ध । 'अन्ध दृष्ट्युपघाते'। न विद्यते दृक् दृष्टिरस्य अदृक् । अन्धस्य[3] नामनी ॥ मूर्च्छा स्यास्तीति मूर्च्छाल । मूर्च्छति[4] स्म मूर्त । मूर्च्छास्य सञ्जाता मूर्च्छित । मूर्च्छारोगवतो नामानि ॥ स्त्रीसंदर्शनादिना शोचति स्रवतीति शुक्रम् । 'शुक्र गतौ'। तेजयति स्रवणानन्तरं देहं तनूकरोति तेजः । 'तिज निशातने'। रीयते[5] भगादागिति रेत । 'रीङ् स्रवणे'। वीयते क्षिप्यते योन्यादाविति [6]बीजम् । 'वी गत्यादौ'। अत्र असनं क्षेपणम् । बीजति रोहति पुरुषोऽनेनेति वा । 'बीज रोहणे'। वीरेऽर्हति साधु वीर्यम् । इन्द्रस्य [7]पुरुषस्येदम् इन्द्रियम् । रेतसो नामानि ॥ ६१ ॥

[1] कर्णादौ चित्रत्वग्गतरोगिण W₂ [2] अन्धयतेः निरलीकियत इत्यन्धम्, चक्षुः, तद्योगाद् अन्धः F₂, Pt₂ [3] दृष्टिरहितस्य W₂ [4] W₂ adds मोहं प्राप्नोति

[8] रिणाति स्रवति, 'री गतौ' $Pt_2$ [6] विशेषेण जायते, 'जनी प्रादुर्भावे' $F_2$, $Pt_2$
[7] आत्मन $F_2$, $Pt_2$

(पा.) किलासी सिध्मल। सिद्धलिकारोगिणो नामनी। '[1]शिव्व वद्विवाड्ु'। अर्शआदित्वात् (५ २ १२७) किलाससिध्मशब्दौ धर्मिण्यपि स्याताम्।

> 'सुख दु ख मल छिद्र किलास सिध्ममर्मरौ।
> रभस पलित श्वित्रमेतेऽपि त्रिपु धर्मिणि॥'

इति वैजयन्ती (पृ २१३, श्लो १४४)। अन्धोऽदृक्। दृष्टिरहितस्य[2] नामनी। अनुक्तम्—जनुपान्ध स्वजात्यान्ध। जात्या [3]अन्ध जनुपान्ध स्यात्। 'काण स्यादेकलोचन'। एकदृक् काण स्यात्। मूर्च्छाले—मूर्च्छितौ। मूर्च्छावतो नामानि॥ शुक्र – इन्द्रियाणि च। अन्त्यधातुनामानि॥ ६१॥

[1] $B_3$ omits [2] अन्धकनाम $A_1$ [3] अन्धक $A_1$

## मायुः पित्तं कफः श्लेष्मा स्त्रियां तु त्वगसृग्धरा॥ ६२॥
## पिशितं तरसं मांसं पललं क्रव्यमामिपम्।

(वि.) मायुरिति—मिनोति शिरोभ्रमणेन भुवि [1]क्षेपयतीति मायु। 'डुमिञ् प्रक्षेपणे'। पुमानयम्। पतति स्रसते द्रवत्वात् पित्तम्। 'पत्लृ गतौ'। पित्तनामनी॥ के शिरसि फलति [3]निक्षिप्यते कफ। 'फल [4]निष्पत्तौ'। [5]श्लिप्यते हृदयादौ श्लेष्म। 'श्लिप आलिङ्गने'। श्लेष्मणो नामानि॥ त्वचति मास [6]वेष्टयतीति त्वक्। 'त्वच संवरणे'। असृज रक्त धारयतीति [7]असृग्धरा। 'धृञ् धारणे'। त्वचो नामनी॥ पिंशति [8]शरीरावयवो भवतीति पिशितम्। 'पिश अवयवे'। तरन्ति काश्यमनेनेति तरसम्[9]। मन्यते [10]पुष्टिकृदिदमिति मासम्। 'मन ज्ञाने'। पाल्यते देहमनेनेति पललम्। 'पाल रक्षणे'। क्रुध्यतेऽस्मादिति क्रव्यम्। 'क्रुध भये'। क्रूयते ताडनादिना निर्गच्छतीति वा क्रव्यम्। 'क्रुङ् गतौ'। आमिष्यते ताडनादिना ईषद् आमिषम्[11]। 'मिप स्पर्धायाम्'। मासनामानि॥ ६२॥

[1] क्षिपति $K_6$, $K_3$ omits four lines [2] 'पित्तमुपल्लु' $Pt_2$ [3] निष्पद्यत $W_2$ [4] 'निपत्त विशरणे' $K_6$ [5] श्लिष्यति कण्ठे $W_6$ [6] आ ($W_2$) वृणाति $K_3$, $K_6$ [7] वृणोतीति असृग्वरा $F_2$, $Pt_2$ [8] अवयव(वा $W_2$) स्यात् $K_6$ [9] I, $W_2$, $Pt_2$ add 'तृ प्लवनतरणयो' [10] रक्तकरमिति $I_3$, $Pt_2$ [11] अमति रोगयति, 'अम रोग' $F_2$, $Pt_2$

(पा.) मायुः पित्तम्। पित्तनाम ॥ कफः श्लेष्मा। [1]श्लेष्मणो नाम ॥ स्त्रियाम्—असृग्धरा। त्वचो नामनी। स्त्रियामिति विशेषविधिर्मायुवादिषु[2] स्त्रीत्वबाधनार्थः। तथा चोक्तम्—'स्त्रियां मायुर्नरि श्लेष्मा बलासः खेटकः कफः' इति। अथवा त्वक्छब्दस्य प्रकृत्यन्तरबोधनार्थः। 'त्वदवेष्टितमस्थिपञ्जरं यदि काय समुपैपि योषिताम्'। इति [4]त्वद् दान्तः। पिशितम्—आमिषम्। मांसनामानि ॥ ६२ ॥

[1] $B_3$ omits  [2] मायो $B_3$  [3] पित्तमिति वैजयन्त्याम्। 'पित्तं मायुर्नरि श्लेष्मा बलासः खेटकः कफः' इति मुद्रितग्रन्थे (पृ १८३)  [4] $B_3$ adds त्वचशब्दो दान्तः

**उत्तप्तं शुष्कमांसं स्यात् तद्वल्लूरं त्रिलिङ्गकम् ॥ ६३ ॥**
**रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम् ।**

(वि.) उत्तप्तमिति—[1]उत्तप्यते शोष्यत आतपेनेति उत्तप्तम्। 'तप संतापे'। शुष्यते शुष्कम्। शुष्कं च तद् मांसं च शुष्कमांसम्। 'शुष शोषणे'। बल्यते शोषणार्थमिति वल्लूरम्। 'वल संवरणे'। वलं लुनातीति वा। 'लूञ् छेदने'। बवयोरभेदः। लवणादिना पुनः पुनः लिप्तशुष्कमांसनामानि[2] ॥ स्रोतांसि[3] रुणद्धीति रुधिरम्। 'रुधिर् आवरणे'। अस्यते त्वग्भेदेनेति असृक्। 'असु क्षेपणे'। न [4]सृजति वा। 'सृज विसर्गे'। लोहितवर्णत्वात् लोहितम्। [5]असति त्वग्भेदे[6] निर्गच्छति अस्रम्। 'अस गतिदीप्त्यादानेषु'। रज्यत इति रक्तम्। 'रञ्ज रागे'। क्षतात् घातात् जायते क्षतजम्। शोणतीति शोणितम्[7]। 'शोणृ वर्णगत्योः'। रक्तनामानि ॥ ६३ ॥

[1] ऊर्ध्वं तप्यत अग्निना आतपेन वा $Pt_2$, तदेवोत्तप्तं वल्लूरमुच्यते I, $K_6$, $W_2$
[2] 'उप्पुनण्डलु' $K_5$  [3] रुध्यते त्वचा $K_2$ $F_2$, $Pt_2$  [4] सृज्यते $K_5$, $K_6$
[5] असते $D_2$, $K_2$, $K_6$  [6] $K_5$, $K_6$ add सति  [7] शोणितवर्णत्वात् $F_3$ $Pt_2$

(पा.) उत्तप्तम्—मांसं स्यात्। शुष्कशब्दमुत्तप्तं स्यात् तन्नपुंसकमेव। [1]वल्लूरं [2]त्रिलिङ्गकम्। 'वल्लूरामहरद्दह्रो मिळे धावति शशो यदा क्षाय (?)' इति मल्लूरेति वा ॥ रुधिरे—शोणितम्। रक्तनामानि ॥ अस्रं आस्रं इत्युभयरूपं तन्त्रोपात्तम्। सकृदुच्चारितं बहूपकारकं तन्त्रम्[3]। 'अस्रं आस्रश्च पुलिङ्गौ केशे द्वौ रुधिरेऽश्रुणि'। इति वैजयन्ती (पृ २३०, श्लो ७) ॥ ६३ ॥

[1] $A_1$ adds इत्येतत्  [2] तत् शुष्कमांसं वल्लूरं स्यात्, तच्च त्रिलिङ्गकं भवति $B_3$.
[3] 'यत् सकृत्कृतं बहूनामुपकरोति तत् तन्त्रमित्युच्यते। तथा बहूनां ब्राह्मणानां मध्ये कृतः प्रदीपः' (शाबरभाष्यम् ११. १. १)

**वुक्काग्रमांसं हृदयं हृद् मेदस्तु वपा वसा ॥ ६४ ॥**
**पश्चाद्ग्रीवासिरा मन्या नाडी तु धमनिः सिरा ।**

(नि.) वुक्केति—वुक्क्यते स्वादुरस इति वुक्का । 'वुक्क भषणे' । वृक्केति पाठे वृक्यते स्वादुतरमिति शब्यते वृक्का । 'वृक[1] आदाने' । नकारान्त । आकारान्त[2] इति केचित् । अग्र च तन्मांस च अग्रमांसम् । श्रेष्ठमांसनामनी ॥ ह्रियते हृदयम् । हृत् । 'हृञ् हरणे' । पद्माकारजीवाधारनामनी[3] ॥ [4]मेद्यतीति मेद । 'ञिमिदा स्नेहने' । सान्तोऽयम् । पूर्वोक्तहृदयाच्छादकस्य नाम ॥ उप्यत इति वपा । 'डुवपू बीजतन्तुसताने' । नाभिसमीपदेशस्थितमांसस्नेहनाम ॥ वासयति मांस स्नेहयति वसा । 'वस निवासे' । 'वस स्नेहमोहच्छेदापहरणेषु' इति वा धातु । सर्वदेहस्थितमांसस्नेहनाम ॥ मन्यत इति मन्या । 'मन ज्ञाने' । अक्षरसाम्यात् निर्वचनम् । ग्रीवाया पश्चिमभाग-स्थितसिराया नाम ॥ अन्त सुषिरत्वात् नडाख्यतृणवत् तिष्ठतीति नाडी । [5]अग्निबोधन-धमनीसाम्यात् धमनि । धमनी वा । सिनोति काय बध्नातीति सिरा । 'षिञ् बन्धने' । सरन्ध्रसिरानामानि ॥ ६४ ॥

[1] 'वृक भापणे' K₂ K₄ [2] अकारान्त K₂, K₃, D₂, K₄ add वृकेति केचित् पठन्ति [3] 'कुन्दिकायपेरु' K₃ [4] मेद्यते K₄ मियते Pt₁ [5] बोधक° h₅, h₆

(पा.) वृक्काग्रमांस—हृत् । जुक्काग्रमांसमिति पाठान्तरम् । वृक्का नान्त । श्रेष्ठमांसनामनी । 'अग्रमांसमु वृक्युलु' । [1]मेदस्तु—वसा । वसानामानि । अनुक्तम्—द्वावस्थिस्नेहमज्जानौ[2] । मज्जनामनी ॥ पश्चाद्ग्रीवासिरा[3] मन्या । ग्रीवाया पश्चाद्भागे वर्तमाना [3]सिरा मन्या स्यात् । 'पेडतल्नरमु[4]' ॥ नाडी—शिरा । त्रयंधमन्याकार सिरानामानि । 'घोलुनरालु' । सिरेत्यपि स्यात् । 'शिञो' बहुलमन्यत्रापीति शिरा । "षिञ् बन्धने" इत्यव सिरा वा[5] इति सुभूतिटीका ॥ ६४ ॥

[1] B₃ adds हृदय हृत्—हृदयनामनी [2] मज्जासी, मज्जानामानि A₁ [3] शिरा A₁ [4] B₃ omits [5] क्षीटो मद्रादय इति A₁, उ २ २५

**तिलकं क्लोम मस्तिष्कं गोर्दं किट्टं मलोऽस्त्रियाम् ॥ ६५ ॥**
**अन्त्रं पुरीतद् गुल्मस्तु प्लीहा पुंस्यथ वल्लसा ।**
**स्नायुः स्त्रियां कालखण्डयकृती तु समे इमे ॥ ६६ ॥**

(वि.) तिलकमिति—[1]तिलतीति तिलकम्। 'तिल स्नेहने'। क्लाम्यति [2]ग्लायतीति क्लोम। 'क्लमु ग्लाने'। नान्तोऽयम्। उदरे दक्षिणभागस्थितलोहितमांसखण्डनामनी॥ [3]मस्तमिष्यतीति[4] मस्तिष्कम्। 'इष गतौ'। शिरःकपालेन गुर्द्यते गोर्दम्। 'गुर्द परिवेष्टने'। मस्तकस्थमज्जानामनी॥ केटति निर्गच्छतीति किट्टम्। 'किट गतौ'। [5]मलते धारयति देहं मलः। 'मल मल्ल धारणे'। [6]तदुक्तम्—

'वसा शुक्रमसृङ्मज्जा मूत्रविट् घ्राणकर्णविट्।
श्लेष्माश्रुदूषिकास्वेदा द्वादशैते मला नृणाम्॥'

इति। एते वसादिसर्वमलानां सामान्यनामनी॥ अम्यते सम्भज्यते भुक्तान्नादिकमनेनेति अन्त्रम्। 'अम गत्यादिषु'। आन्त्रमिति वा पाठः। पुरीं देहं तनोतीति पुरीतत्[7]। 'तनु विस्तारे'। आन्त्रनामनी॥ गुड्यते [8]प्रकोपनाद् [9]रक्ष्यत इति गुल्मः। 'गुड रक्षायाम्'। प्लेहते कदाचिद् उद्रिक्तः प्रदेशान्तरं गच्छतीति प्लीहा। नान्तोऽयम्। 'प्लिह गतौ'। हृदि [10]वामभागस्थितपीतवर्णमांसदलनामनी॥ वस्ते छादयति देहं वस्नसा। 'वस आच्छादने'। हस्ताद्यङ्गं स्नायति वेष्टयतीति [11]स्नायुः। 'ष्णै वेष्टने'। त्वगन्तरस्थतन्त्रीभाना नामनी॥ [12]कालवर्णं च तन्मांसखण्डं च कालखण्डम्। क्लोम्ना द्वितीयमात्मानं करोतीति यकृत्। क्लोम्ना सह यौतीति वा। 'यु मिश्रणे'। पूर्वोक्तक्लोमाधःस्थितमांसदलनामनी॥ ६५–६॥

[1] D₂, K₅, K₆ add बलाद्ग्लिप्तवात्  [2] ग्लायति I  [3] मस्तक J₂, K₆
[4] D₂, K₅, K₆ add प्राप्नोति  [5] मल्यते K₆  [6] तथा चोक्तानि मलानि D₂, I, K₂, K₆, W₂  [7] अशरणादिना पूर्यत इति, 'पूरी आप्यायने' D₂, I, K₅  [8] प्रकोपनाद्यैः K₅, K₆  [9] रक्षणे Pt₂  [10] °स्थ° W₂  [11] स्नाति सदार्द्रीभवति, 'ष्णा शौचे' Pt₂  [12] खण्ड मांसखण्ड Pt₂

(पा.) तिलकं क्लोम। नान्तोऽयम्[1]। क्लोमनामनी। 'वल्मीपार्श्वमदुण्डे गु'[2]॥ मस्तिष्कं गोर्दम्। मस्तकस्थमज्जनाम[3]। 'तल्मेदस्तु'॥ किट्टं मलोऽस्त्रियाम्। मलसामान्यनाम। तथा च—(म स्मृ ५ १३५)

'वसा शुक्रमसृङ्मज्जा मूत्रविट् घ्राणकर्णविट्।
श्लेष्माश्रुदूषिका स्वेदो द्वादशैते मला नृणाम्॥'

इति केचित्॥ अन्त्रं पुरीतत्। [4]अन्त्रनामनी। 'पेगुलु'॥ गुल्मस्तु प्लीहा। नान्तोऽसौ पुंसि। वामभागस्थमांसगोलनामनी॥ पुंसीति केषांचित् पुरीतदादिविशेषणम्। तेन पुरीततः, गुल्माः, प्लीहानः इत्यादि॥ अथ वस्नसा—स्त्रियाम्। 'नरारुस्तु स्नसा स्नारः [5]स्नायुर्ना सन्धिबन्धनम्' इति स्नायुशब्दः स्त्रीनपुंसक इति केचित्। त्वगन्तर-

स्थिततन्तुनिभसिरानामनी। 'नरमुल'। कालखण्ड—समे इमे। [6]क्लोमा[7]धःस्थितमांसखण्डविशेषनामनी। 'काळेजमु'। 'कालेजं कालखण्डकम्' इति रभसकोशः ॥ ६५–६ ॥

[1] असौ $A_1$ [2] $B_3$ omits [3] मज्जा $B_2$ [4] पुरीतन्नाम $B_3$. [5] स्नायुर्ना, स्नायुशब्दः पुंलिङ्ग इति केचित् $B_3$ [6] $A_1$ adds बन्धुजीवकनिम°. [7] क्लोमगः $A_1$.

**सृणिका स्यन्दिनी लाला दूषिका नेत्रयोर्मलम् ।**
**मूत्रं प्रस्राव उच्चारावस्करौ शमलं शकृत् ॥ ६७ ॥**
**गूथं पुरीषं वर्चस्कमस्त्री विष्ठाविशौ स्त्रियौ ।**

(वि.) सृणिकेति—सरति स्रवतीति सृणिका। 'सृ गतौ'। स्यन्दत इति स्यन्दिनी। 'स्यन्दू प्रस्रवणे'। विरुद्धलक्षणया ललति[1] लाला। 'लल विलासे'। सृक्किण्योः स्रवज्जलनामानि ॥ नेत्रे दूषयतीति दूषिका[2]। नेत्रमलनाम ॥ मूत्रयतीति मूत्रम्। 'मूत्र प्रस्रवणे'। प्रस्रवतीति प्रस्रावः। 'स्रु स्रवणे'। मूत्रनामनी ॥ उच्चार्यते गुदात् त्यज्यत इति उच्चारः। 'चर गतौ'। [3]अव अधः क्रियत इति अवस्करः। 'डुकृञ् करणे'। शाम्यति किंचिद्गते सति स्वयमेव शमलम्। 'शमु [4]उपरमे'। विरेचितुमनेन शक्यत[5] इति शकृत्। 'शक्लृ शक्तौ'। पिपर्त्यान्त्रं पूरयति पुरीषम्। 'पॄ पालनपूरणयोः'। अनुदिनं गूयत उत्सृज्यत इति गूथम्। 'गु पुरीषोत्सर्गे'। वर्च एव वर्चस्कम्। वितिष्ठते नाभेरध इति विष्ठा। 'ष्ठा गतिनिवृत्तौ'। नाभेरधोभाग विशतीति विट्[6]। 'विश प्रवेशने'। विष्ठानामानि ॥ ६७ ॥

[1] I, $K_5$, $K_6$ add विलसति [2] $F_2$, $Pt_2$ add 'दुष वैकृत्ये'. [3] $K_6$ adds हेयत्वात्. [4] उपशमने $K_5$, $K_6$ [5] शक्नोति $F_2$, $Pt_2$. [6] येषेहि 'विष्लृ व्याप्तौ' $J_2$

(पा.) सृणिका—लाला। [1]दन्तान्तर्गतोदकनामानि। 'चोल्लु'। शृणिका स्यन्दिनीति पाठान्तरम्।

'नानाजनशृणिकार्द्रे वेश्यामुखपतद्ग्रहे।
अधरग्रहसप्रीतिः सुप्रिय. कस्य जायते ॥'

इति प्रयोगात् ॥ दूषिका—मलम्। चक्षुषोर्मलं दूषिका स्यात्।

'दूषीकापटलनिरुद्धलोचनान्ता
दुर्गन्धा बहलमलोपलिप्तगात्राः।'

इति सोमजातप्रयोगात् दीर्घकारः।

'[2]क [3]कीदृगत्रिमुनिलोचनदूषिकाया
पीयूषदीधितिरिति प्रथितोऽनुरागः ॥'

इति अनर्घराघवप्रयोगात् (२. ८३) ह्रस्वेकारश्च[4]। 'नासामलं तु सिंहाणम्[5]'। नासिकाया मलं[6] सिंहाणं स्यात्। 'चिविडि'। 'पिञ्जूषः कर्णयोर्मलम्'। श्रोत्रमलं पिञ्जूषं स्यात्। 'चेविगुलिवि'। मूत्रं प्रस्रावः। आत्मजलनामनी। 'एकाङ्गुलं कायजलम्'। एते द्वे च ॥ उच्चारावस्करौ—विष्ठाविशौ स्त्रियौ[7]। विष्ठानामानि ॥ शकृत् तवर्गप्रथमान्तं[8]। गूथं तवर्गद्वितीयान्तम्। पुरीषं मूर्धन्यान्तम्। विट्शब्दो मूर्धन्यान्तश्च[9] भवति। 'वेवेष्टीति विट् विशतीति वा' इति सुभूतिटीका। अनुक्तम्—'चिरिका तूपिता[10] विष्ठा'। [11]चिरतनविट् चिरिका स्यात् ॥ ६७ ॥

[1] ववत्रद्रव° B₃ [2] क्षा A₁ [3] अत्र B₃ [4] A₁ adds स्यात् [5] सिंघाण A₁ B₃ शिङ्घाण इति मुद्रितवैजयन्त्याम् (पृ १८०) [6] नासिकामलं B₃ [7] स्त्रियाम् A₁ [8] प्रथमा तम् B₃ [9] B₃ adds तालव्या तश्च [10] तुपिता A₁ [11] अतिचिरतन° A₁

## स्यात्कर्परः कपालोऽस्त्री कीकसं कुल्यमस्थि च ॥ ६८ ॥
## स्याच्छरीरास्थि कङ्कालः पृष्ठास्थि तु कशेरुका ।

(वि.) स्यादिति—भारधारणाय[1] कल्पते[2] समर्थो भवतीति कर्परः। 'कृपू सामर्थ्ये'। [3]कं शिरः पालयतीति कपालम्। 'पाल रक्षणे'। शिरोगतास्थिशकलनामनी ॥ कीं इति ध्वनिं जनयन् कसति चलतीति कीकसम्। 'कस गतौ'। कोलति संस्त्यायतीति कुल्यम्। 'कुल संस्त्याने'। कुले शरीरे साधु वा। मांसभक्षणसमये अस्यतेऽपास्यत[4] इत्यस्थि। 'असु क्षेपणे'। अस्थिमात्रनामानि ॥ कं कुत्सितं कालयतीति कङ्कालः[5]। 'कल किल क्षेपे'। शरीरास्थिनिकुरुम्बनाम ॥ कश्यते भारस्थापनेन क्लिश्यते कशेरुका[6]। 'कश[7] गतिशासनयोः'। पृष्ठास्थिनाम ॥ ६८ ॥

[1] धारणे I, K₆, W₂ [2] कर्पते D₂ K₅ W₂ [3] I adds काठिन्यात् [4] त्यज्यते F₂ Pt₂ [5] कं जलं स्वाम्यन्तरेण कालयति प्रेरयति F₂ Pt₂ [6] को वायु दीतेऽत्र F₂ Pt₂ [7] कश कस D₂, K₅ K₆

(पा.) स्यात् कर्परः—अस्थी। कपालास्थिनामनी। 'चिप्पयमुक'। 'कर्परः स्यात् कपाले च शस्त्रभेदकटाहयोः' (श्लो १३५), 'खर्परस्तस्करे धूर्ते भिक्षापात्रकपालयोः' (श्लो १३८) इति विश्वप्रकाशिकापाठात् (पृ १३६) कर्परखर्परशब्दौ स्याताम्।

कीकस—अस्थि च। शल्यनामनी॥ शरीरास्थि तु कङ्काल। कायस्यास्थि कङ्काल स्यात्। शरीरास्थि त्विति प्रथमान्तनिर्देश साहचर्यार्थ। तेन—'कङ्कालोऽस्त्री तनोरस्थि करङ्कोऽप्यस्थिपञ्जरम्' इति वैजयन्ती (पृ १८२, श्लो ११४)॥ पृष्ठास्थि—कशेरुका। तनोश्चरमभागे स्थितमस्थि कशेरुका स्यात्। 'वेन्नेमुक'। अस्याप्युन्नेय पूर्वन्याय। 'पृष्ठस्यास्थि कशेर्वना' इति वेजयन्ती (पृ १८२, श्लो ११५)॥ ६८॥

**शिरोऽस्थनि करोटिः स्त्री पार्श्वास्थनि तु पर्शुका॥ ६९॥**
**अङ्गं प्रतीकोऽवयवोऽपघनोऽथ कलेवरम्।**
**गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः॥ ७०॥**
**कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः।**

(वि.) शिरोऽस्थनीति—प्रवेशसमये के शिरसि नासादारुणा रुन्यते करोटि। 'रुट प्रतिघाते'। क वायु रोटते वा। 'रुट दीप्तौ प्रतिघाते च'। शिरोऽस्थिनाम॥ स्पृश्यते शयनादिनेति पर्शुका। 'स्पृश सस्पर्शने'। पार्श्वास्थिनाम[1]॥ अङ्गति चलति अङ्गम्। 'अगि गतौ'। प्रत्येत्यन्योन्य[2] प्रतीक। 'इण् गतौ'। अवयौति [3]मिथो मिश्रीभवति अवयव। 'यु मिश्रणे'। अपहन्यतेऽन्योन्यमिति[4] अपघन। 'हन हिंसागत्यो'। हस्ताद्यवयवनामानि॥ आदानाद्युपयोगितया कले करे वर वर कलेवरम्। रलयोरैक्ययोश्चाभेद। कल्यत आद्रियत' इति वा। 'कल सख्याने'। गाते गच्छतीति[6] गात्रम्। 'गाङ् गतौ'। उप्यते प्राक्कर्मभिरिति वपु। 'डुवप् बीजसताने[7]'। उप्यते जनकेनेति वा। सान्तोऽयम्। सहन्यते हस्तादिना [8]सघन्यते सहननम्। 'हन हिंसागत्यो'। शीर्यते कालक्रमेणेति शरीरम्। 'शॄ हिंसायाम्'। मलानि वर्षतीति[9] वर्ष्म। 'वृषु सेचने'। नान्तोऽयम्। विशेषेणात्मना[10] गृह्यत इति विग्रह। 'ग्रह उपादाने'। चीयतेऽवयवैरिति काय। 'चिञ् चयने'। दिह्यतेऽन्नरसेनेति देह। 'दिह उपचये'। मूर्च्छति समुच्छ्रितो[11] भवतीति मूर्ति। 'मूर्च्छा मोहसमुच्छ्राययो'। तन्यते [12]आहारेणेति तनु। तनूश्च। 'तनु विस्तारे'। शरीरनामानि॥ ६९—७०॥

[1] 'जङ्घास्थनि नल प्रोक्त नल्क च द्वयोरमी' इत्यधिक पाठ $F_2$, $Pt_2$ [2] $F_2$ $Pt_2$ add आभिमुख्येन [3] अन्योन्य $K_5$ $K_6$ [4] मिथ $D_2$ $K_2$ $W_2$ [5] $D_2$, $K_5$, $K_6$ add ससारिणा [6] $K_2$, $K_5$ add अनेन [7] $D_2$, $K_5$ add तन्तु° [8] सघ्यत $F_2$ $Pt_2$ [9] वृष्यत $Pt_2$ [10] स्वकर्मवशात् परिगृह्यते $D_2$, $K_5$, $K_6$, $W_2$ [11] समुच्छ्रीयते $K_2$, $K_5$, $K_6$ [12] अन्नरसेन $D_2$, $W_2$

(पा.) शिरोऽस्थनि—स्त्री। शिरसः शल्यं करोटिः स्यात्॥ पार्श्वास्थनि—पर्शुका। पक्षस्थितमस्थि पर्शुका स्यात्। 'वरियमुक[1]'॥ अङ्गं—अपघनः। शरीरावयवानां नामानि। अङ्गापघनशब्दौ अवयविन्यपि स्याताम्। 'अङ्गं वपुर्वर्ष्म पुरं च पिण्डं क्षेत्रं च गात्रं[2] च घनश्च मूर्तिः' इति हलायुधः (अ. मा. २. ३५५)॥ अथ कलेवरं—तनूः। शरीरनामानि। गात्रशब्दोऽङ्गेऽपि[3] स्यात्। 'गात्राण्यङ्गानि चास्यांशाः प्रतीकापघनावपि[4]' इति वैजयन्ती (पृ. १७७, श्लो. ५५)॥ ६९—७०॥

[1] $B_3$ omits. [2] गात्रापघनौ $A_1$, $B_3$. [3] अवयवेऽपि $B_3$. [4] °घनाविति $A_1$.

**पादाग्रं प्रपदं पादः पदङ्घ्रिश्चरणोऽस्त्रियाम्॥ ७१॥**
**तद्ग्रन्थी घुटिके गुल्फौ पुमान् पार्ष्णिस्तयोरधः।**

(वि.) पादाग्र इति—पादस्याग्रं पादाग्रम्। पदस्य[1] प्रारंभः प्रपदम्। पादाग्रभागनामनी॥ पद्यते गच्छत्यनेनेति पादः। पच्च। 'पद गतौ'। अङ्घति [2]गच्छत्यनेन अङ्घ्रिः। 'अघि[3] गतौ'। चरत्यनेन चरणः। 'चर गतिभक्षणयोः'। पादनामानि॥ घोटते परिवर्तते [4]घुटिका। 'घुट परिवर्तने'। अभिघाताद् गुल्यते रक्ष्यत इति गुल्फः। 'गुड रक्षायाम्'। पादोपरिस्थितग्रन्थिनामनी॥ पृष्यते स्नेह्यते[5] नवनीतादिना पार्ष्णिः। 'पृषु [6]स्नेहने'। गुल्फयोरधोभागनाम॥ ७१॥

[1] पादप्रारम्भभागत्वात् $K_2$, $K_6$, $W_2$ [2] $K_3$, $K_6$ add वेगेन. [3] 'अघि लघि गत्याक्षेपे' $K_5$, $K_6$ [4] परितो वृत्तत्वात् $D_2$, $K_5$, $K_6$. [5] स्निह्यते $K_6$ [6] 'पृषु सेचनहिंसाक्लेशनेषु' $D_2$.

(पा.) पादाग्रं प्रपदम्। अग्रपादनाम॥ पादः—चरणोऽस्त्रियाम्। पादनामानि॥ तद्ग्रन्थी—गुल्फौ। '[1]पदग्रन्थौ द्वयोर्गुल्फः' इति [2]द्विलिङ्गतायां रभसकोशः। पाष्ण्युपरिस्थितवृत्तपदग्रन्थिनामनी[3]॥ पुमान्—तयोरधः। पदग्रन्थ्योरधोभागः पार्ष्णिः स्यात्। स पुंलिङ्गः। 'मड्डुम[4]'। 'पार्ष्ण्येव प्रोषितासु [5]दनुसुतमवतात् कुर्वती पार्वतीव' इति प्रयोगात् स्त्रीलिङ्गोऽप्यस्ति॥ ७१॥

[1] चरण° $A_1$. [2] स्त्रीपुंलिङ्ग° $A_1$. [3] °पद° $B_3$ [4] $B_3$ omits. [5] दिति° $B_3$.

**जङ्घा तु प्रसृता जानूरुपर्वाष्ठीवदस्त्रियाम्॥ ७२॥**
**सक्थि क्लीबे पुमानूरुस्तत्संधिः पुंसि वङ्क्षणः।**

(वि.) जङ्घेति—जङ्घन्यते कशादिना [1]हन्यत इति जङ्घा[2]। 'हन हिंसागत्योः'। [3]प्रसरतीति प्रसृता। 'सृ गतौ'। गुल्फोपरि जानुपर्यन्तमाश्रितस्य नामनी॥ जङ्घोरुसंधिभागे जायत इति जानु। 'जनी प्रादुर्भावे'। ऊर्वोः पर्व ऊरुपर्व। नान्तोऽयम्। स्थूलमस्थि विद्यतेऽत्रेति अष्ठीवत्। जङ्घोरुसंधिभागनामानि॥ सजते सगच्छत इति सक्थि। 'षञ्ज सङ्गे'। अयं क्लीबे वर्तते। ऊर्णूयते वस्त्रेणेति[4] ऊरु। 'ऊर्णुञ् आच्छादने'। अयं पुमान्। ऊरुनामनी॥ वङ्क्यते उपवेशसमये किंचित्कुटिलमापद्यत इति वङ्क्षण। 'वकि कौटिल्ये'। ऊरुसंधिभागनाम॥ ७२॥

[1] हसते $D_2$, $K_5$ [2] जायते, 'जनी प्रादुर्भावे' $F_2$, $P_2$ [3] $K_6$, $W_2$ add स्वयं. [4] वस्त्रादिना $D_2$, $K_5$ $K_6$

(पा.) जङ्घा—प्रसृता। जङ्घानामनी। '[1]नट्टुकालु'। प्रसृतास्थाने जङ्घिनीशब्दं पठन्ति केचित्। जानूरु—अस्त्रियाम्। जङ्घोरुमध्यग्रन्थिनामानि। 'मोकालु[1]'। अस्त्रास्त्रियामिति विशेषविधिं केचिज्जानुशब्देन योजयन्ति। सक्थि—पुमानूरु। [2]ऊरुनामनी॥ तत्संधि—वङ्क्षण। [2]ऊरुसंधि वङ्क्षण स्यात्। '[3]गज्जु'॥ ७२॥

[1] $B_7$ omits [2] ऊर्वो $A_2$ [3] 'ग्रज्जु' $A_1$

**गुदं त्वपानं पायुर्ना वस्तिर्नाभेरधो द्वयोः ॥ ७३ ॥**
**कटो ना श्रोणिफलकं कटिः श्रोणिः ककुद्मती ।**

(वि.) गुदमिति—[1]गूयते पुरीषमुत्सृज्यतेऽनेनेति गुदम्। 'गु पुरीषोत्सर्गे'। अपानित्यधोवायुम् उत्सृजति[2] अपानम्। 'अन प्राणने'। पाति [3]मलोत्सर्जनेनेति पायु। 'पा रक्षणे'। [4]पुरीषोत्सर्गस्थाननामानि॥ वसति [5]मूत्रादिकमस्मिन्निति वस्ति। 'वस निवासे'। नाभेरधोभागनाम[6]॥ [7]कट्यते [8]आव्रियते वस्त्रादिनेति कट[9]। 'कटे वर्षावरणयोः'। फलकाकृति श्रोणि श्रोणिफलकम्[10]। श्रोणिफलकस्य नाम॥ कट्यते कटि। कटी वा। [11]श्रोणति सगच्छते मेखलादिनेति श्रोणि। 'श्रोणृ संघाते'। श्रोणी वा। ककुदिव [12]श्रोणिपार्श्वस्थस्थूलांशोऽस्या अस्तीति ककुद्मती। काञ्चीबन्धनस्थाननामानि॥ ७३॥

[1] गुवति उत्सृजति $F_2$, $Pt_2$ [2] $D_2$, W add अनेन [3] मलनिरोधपरिहरणेन $J_2$ $K_5$, $K_6$ [4] अपानद्वारनामानि $W_2$ [5] पक्वाशादिक $D_2$, $K_5$, $K_6$ [6] नाभेरधः स्थितमूत्रपुटकनाम $W_2$ [7] कटति आवृणोति $W_2$, $Pt_2$ [8] आर्द्रीक्रियते $K_6$ [9] $K_5$, $K_6$ add कटिश्च [10] श्रोणिरेव फलकमिव $W_2$ [11] श्रोण्यते (संहन्यते $W_2$) आहन्यते $K_5$, $K_6$ [12] मांसलतया ककुदाकारत्वात् $F_2$, $Pt_2$

(पा.) गुद—पायुर्ना। मलद्वारनामानि ॥ वस्ति—द्वयो। नाभेरधोभागो वस्ति स्यात्। [1]मूत्राशय। कटो ना—ककुद्मती। कटिनामानि। कटिश्रोणिफलकानि केपाचिद् भिन्नपर्यायाणि। गजगण्डकटौ कटाविति[2] स्वयमेव [3]वक्ष्यति (३ ३ ३४)॥ ७३॥

[1] $B_3$ omits, but adds द्विलिङ्ग . [2] इति मेद $A_1$ [3] $B_3$ omits last two lines

**पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः ॥ ७४ ॥**
**कूपकौ तु नितम्बस्थौ द्वयहीने कुकुन्दरे ।**

(नि.) पश्चादिति—सुरतकाले[1] नितरां ताम्यतीति नितम्ब। 'तमु ग्लानौ'। स्त्रीकट्या वाह्यभागनाम॥ हन्यते ताड्यते पुरुषेण सुरतसमय इति जघनम्। 'हन हिंसागत्यो'। स्त्रीकट्या पुरोभागनाम, न तु पुरुषस्य॥ कु ईषत् कु नितम्बभूमिं दृणीत इति कुकुन्दरे। 'दॄ विदारणे'। द्विवचनमेतत्। [2]ईषत्कूपसदृशनितम्बस्थलनिम्ननाम॥ ७४॥

[1] समर्दने $F_2$, $Pt_2$ [2] अश्र° $K_5$, $K_6$

(पा.) पश्चात्—स्त्रीकट्या। [1]स्त्रीकटीचरमभाग नितम्ब स्यात्। [2]स्त्रीकटिग्रहण रूढिप्रदर्शनार्थम्। तेन 'त्यागेन सह [3]प्रथिमानमाजगाम नितम्बभाग' इति चन्द्रापीडवर्णने (काद पृ १५२) बाणप्रयोग। क्लीबे—पुर। स्त्रीकट्या पुरोभागो जघन स्यात्। कटिमात्रेऽपि[4] स्यात्। 'काञ्चीपद कलत्र जघन श्रोणी[5] ककुद्मती ज्ञेया' इति हलायुध (अ मा २ ३५७)॥ कूपकौ—कुकुन्दरे। नितम्बाश्रयौ कूपकौ [6]कुकुन्दरे स्याताम्। 'पिरुन्दुलमीदियुनगुटलु'। स नपुसक ॥ ७४॥

[1] °कटि° $B_3$ [2] स्त्रीग्रहण $B_3$ [3] 'प्रथितमानमाततान' इति मुद्रितग्रन्थे [4] कटिनामन्यपि $A_1$ [5] श्रोणि $A_1$ [6] $A_1$ adds कुकुन्दरद्वयादि°

**स्त्रियां स्फिचौ कटिप्रोथावुपस्थो वक्ष्यमाणयोः ॥ ७५ ॥**
**भगं योनिर्द्वयोः शिश्नो मेढ्रो मेहनशेफसी ।**

(नि.) स्त्रियामिति—स्फायेते वर्धते स्फिचौ। 'स्फायी वृद्धौ'। कट्या प्रोथौ मांसपिण्डौ कटिप्रोथौ[1]। [2]कटिस्थस्थूलस्तननाम॥ उप समीपे शिश्नस्य[3] कदाचित्तिष्ठतीति

उपस्थ । 'ष्ठा गतिनिवृत्तौ'। वक्ष्यमाणयो योनिमेहनशब्दयो[4] सामान्यनाम ॥ भज्यते [5]पुरुषैरिति भग । 'भज सेवायाम्'। यौति शिश्नेनेति योनि । 'यु मिश्रणे'। स्त्रीगुह्यस्थाननामनी ॥ शिनोति वृश्चति[6] रेतसा भगमिति शिश्न । 'शिञ् [7]निशाने'। निशान सघर्षणम् । रेतसा मेहति भग मेढ्र । मेहन च । 'मिह सेचने'। कदाचित् भगे शेते शेफ[8]। 'शीङ् स्वप्ने'। सकारान्तनपुसकलिङ्गोऽयम् । शेप इति वा पाठ । शिश्ननामानि ॥ ७५ ॥

[1] $W_2$ adds प्रोयते उद्गियते प्रोथ [2] श्रोणिकक्कुद्माम $K_5$ [3] $K_5$ adds यदा, $W_2$ adds भगस्य वा [4] °शिश्नयो $W_2$ [5] कामुकै $D_2$, $K_3$, $K_4$ [6] वर्षति $W_2$ [7] निशातने $K_5$, $K_4$ [8] रेतस स्रावण शेते $Pt_2$

(पा.) स्त्रिया—कटिप्रोथौ । कटिस्थलस्थूलाशनामनी । 'गुङ्गति'। स्फिजौ स्फिचौ सदिग्धचजकारान्तौ । उपस्थो वक्ष्यमाणयो । [1]वक्ष्यमाणयो (श्लो ७६) [2]स्त्रीपुरुषव्यञ्जनयोरुपस्थशब्द । भग—द्वयो । स्त्रीव्यञ्जननामनी ॥ शिश्नो—शेफसी । पुरुषव्यञ्जननामानि[3] ॥ ७५ ॥

[1] $A_1$ adds उपरि [2] °पु॰यञ्जन° $A_1$ [3] $A_1$ adds 'पोलिङ्गवाङ्गल च कामलता'। एतानि च

मुष्कोऽण्डकोशो वृषणः पृष्ठवंशाधरे त्रिकम् ॥ ७६ ॥
पिचण्डकुक्षी जठरोदर तुन्दं स्तनौ कुचौ ।

(वि.) मुष्क इति—मुष्णाति गोपायति शुक्रमिति[1] मुष्क । 'मुष स्तेये'। अण्डयो कोशोऽण्डकोश । अण्डकोशावितिवा पाठ । तदा अण्ड इति कोश इति द्वे नामनी। वर्षति रेत इति वृषण । 'वृषु सेचने'। वृषणनामानि ॥ त्रयाणाम् ऊरुद्वयपृष्ठास्थ्ना समाहार त्रिकम् । पृष्ठवशाधोभागस्य साण्डद्वयशिश्नस्य वा नाम ॥ पचत्यन्न स्वगताग्निनेति[2] पिचण्ड । 'डुपचष् पाके'। कुष्यते [3]वह्निष्क्रियत मध्यमस्मा दिति कुक्षि । 'कुष निष्कर्षे'। जन्यत गर्भोऽस्मिन्निति जठरम् । 'जनी प्रादुर्भावे'। उदियर्ति[4] गर्भोऽस्मादिति[5] उदरम् । 'ऋ गतौ'। तुद्यतेऽजीर्णादिनेति तुन्दम् । 'तुद व्यथने'। [6]उदरनामानि ॥ स्तनति बाल आभ्यामिति स्तनौ । 'स्तन शब्दे'। कुच्यते नखै पुरुषेण[8] लिम्प्यत[9] इति कुच । 'कुच सपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु'। स्तननामनी ॥ ७६ ॥

[1] रेत $F_1$, $Pt_2$ [2] $D_2$, $K_3$ $K_4$ add °ज्ञात्न [3] निष्कृष्यत $D_2$, $K_3$, $K_4$ [4] $W_2$ adds वृद्धि गच्छति [5] गर्भाद् वृद्धि गच्छतीति वा $D_2$ $K_3$, $K_4$ [6] कुक्षि°

D₂, W₂ [7] बालेन कुचपानकाले स्तन्यत इति स्तनौ K₃, K, K₆, W₂ [8] कामिना Pt₂ [9] विलिख्यते W₂

(पा.) मुष्को—वृषण.। मुष्कनामानि। 'अण्डयो कोशोऽण्डकोश' इति सुभूतिटीकाव्युत्पत्त्या एकनाम। 'अस्त्रिया मुष्ककोशाण्डा' इति पाठान्नामद्वयम्। अनुक्तम्—भगमध्यगुडो मणि.। [1]स्त्रीव्यञ्जनमध्यगोलो मणि स्यात्। पृष्ठवंशाधरे त्रिकम्। कटेरुकायाश्चाधोभाग त्रिक स्यात्। '[2]येन्नेमुककिदु गुद'॥ पिचण्डकुक्षी—तुन्दम्। कुक्षिनामानि॥ स्तनौ कुचौ। उरोजनामनी। 'उरोरुहौ वक्षसिजौ' इत्येते द्वे च॥७६॥

[1] °व्यञ्जनस्य A₁ [2] B₂ omits

चूचुकं तु कुचाग्रं स्यान्न ना क्रोडं भुजान्तरम् ॥ ७७ ॥
उरो वत्सं च वक्षश्च पृष्ठं तु चरमं तनोः ।

(वि.) चूचुकमिति—चूचु इति कायति [1]स्तनपाने चूचुकम्। 'कै [2]शब्दे'। कुचयोरग्र कुचाग्रम्। कुचाग्रनाम॥ क्रोडति घनीभवतीति क्रोडम्। स्त्रीनपुसके। 'क्रोड घनत्वे'। भुजयोरन्तर भुजान्तरम्। भुजमध्यनाम॥ ऊर्णूयते वस्त्रेणेति उर। सान्तोऽयम्। 'ऊर्णुञ् आच्छादने'। वस्यते वस्त्रेण छाद्यते वत्सम्। 'वस आच्छादने'। सुरतकाले वक्ष्यते प्रतिहन्यते वक्ष। 'वक्ष[3] रोषे सघाते च'। सान्तोऽयम्। उरोनामानि॥ पृष्यते केशोदकैरिति पृष्ठम्। 'पृषु सेचने'। तनो पश्चाद्भाग-नाम॥ ७७॥

[1] बालेन पीयमान F₂, Pt₂, K₅ adds शब्द करोति [2] 'कै गै रै शब्दे' K₅
[3] 'वक्ष प्रतिघात' D₂, K₆, K₆

(पा.) चूचुक तु—स्यात्। स्तनमुखनाम। 'चूचुको ना कुचाननम्' इति रत्नकोश। 'चनुमुक्कु[1]'। न ना—वक्षश्च। बाह्वोरन्तरनामानि। 'लेम्मु[1]'॥ पृष्ठ तु—तनो। [2]देहस्य पश्चाद्भाग पृष्ठ स्यात्। 'लिम्पु[1]'॥ ७७॥

[1] B₂ omits [2] तनो B₂

स्कन्धो भुजशिरोंऽसोऽस्त्री संधी तस्यैव जत्रुणी ॥ ७८ ॥
बाहुमूले उभे कक्षौ पार्श्वमस्त्री तयोरधः ।

(वि.) स्कन्ध इति—स्कन्यते भारेण शुष्यते [1]स्कन्ध । 'स्कन्दिर् गतिशोषणयो ' । भुजस्य शिरोऽग्र भुजशिर । अम्यते भारेण रुज्यते अस । 'अम रोगे' । वाहुशिरोनामानि ॥ [2]जायते वाहुरस्मादिति [3]जत्रु । 'जनी प्रादुर्भावे' । स्कन्धासयोर्मध्यभागनाम ॥ वाह्वोर्मूले वाहुमूले । कष्येते स्वेदेन[4] कक्षौ । 'कष [5]हिंसायाम्' । वाहुमूलनाम ॥ [6]पर्शूना समूह पार्श्वम् । कक्षयोरधोभागनाम ॥ ७८ ॥

[1] क शिरो दधातीति, 'डुधाञ् धारणपोषणयो ' $F_2$ $Pt_2$ [2] $K_5$ $K_6$ add कर्णोदयोमध्ये [3] अंसकक्षयो सन्धिरनेन जायत $W_2$ [4] स्वेदजलादिना पच्यते (पीड्यते $D_2$) $K_3$, $K_6$, जतूकादिभि $K_5$, यूकादिभि $W_2$ [5] गतिहिंसनयो $K_5$ [6] पशुनाना $D_2$, $K_2$

(पा.) स्कन्धो—असोऽस्त्री । भुजमस्तकनामानि । '[1]गुगुलु' ॥ सधी—जत्रुणी । असस्य [2]सन्धी [3]जत्रुणी स्याताम् । 'मेढकिंदि [4]अड्डयेमुकलु' ॥ वाहुमूले—कक्षौ । वाह्वोर्मूले द्वे कक्षौ स्याताम् । 'स्त्रीलिङ्गकक्षाशब्दोऽप्यस्ति । 'स्कन्धस्याध कक्षा लतिका श्रवणस्य पालिराख्याता' इति स्त्रीकाण्डे गोपालित ॥ पार्श्वमस्त्री तयोरध । कक्षयोरधोभाग [5]पार्श्वं स्यात् । 'वरि' ॥ ७८ ॥

[1] $B_3$ omits [2] सधि $A_1$ [3] जत्रुणि $A_1$ [4] $A_1$ adds आदन्त° [5] पार्श्वं च $B_3$

**मध्यमं चावलग्नं च मध्योऽस्त्री द्वौ परौ द्वयोः ॥ ७९ ॥**
**भुजबाहू प्रवेष्टो दोः स्यात् कफोणिस्तु कूर्परः ।**

(वि.) मध्यममिति—मध्ये भव मध्य मध्यम च । अवलगति सनमति [1]इत स्याद् अवलग्नम् । 'लगे सङ्गे' । [2]शरीरमध्यप्रदेशनामानि ॥ परौ द्वौ भुजवाहुशब्दौ द्वयो स्त्रीपुलिङ्गयोर्वर्तत । भुज्यतेऽन्नादिकमनेन भुज । 'भुज पालनाभ्यवहारयो ' । वाहते [3]वस्तूपादानाय [4]प्रयत्न करोतीति [5]वाहु । 'वाहृ प्रयत्ने' । प्रवेष्टयति वस्त्रादिक मध्ये प्रवेष्ट[6] । 'वेष्ट वेष्टने' । दाम्यत्यनेनाति दो । 'दमु उपशमे' । दो शब्द मकारान्त पुलिङ्ग । नपुसकेऽप्यस्ति । कथं ? 'दक्षिण दोर्निशाचर ' इति कालिदासप्रयोगात्[7] (रघु १५. २३) । वाहुनामानि ॥ क [8]कर्म वाहुप्रसरणादिक पुणति करोतीति कफोणि । 'पुण कर्मणि शुभे' । कफोणिरिति वा पाठ । [10]पुरति हठाद्वाकर्षणेन ध्वनति कूर्पर । 'पुर शब्दे' । वाहुमध्यसन्धिनामनी ॥ ७९ ॥

[1] $K_2$, $K_6$ add अग्नि° [2] मध्यत्व˚ मध्यम, मध्य च $D_2$, $K_2$ [3] वस्त्रा-दानाय $W_2$ [4] प्रयत्न $K_2$ [5] वाधत इति वा $K_2$, $Pt_2$ [6] प्रवेष्ट इत्यन

Pt₂　[7] D₂, K₅, K₆ add कर्मणा, दम्यतेऽनेन Pt₂　[8] K₆ adds न स्त्रिया वर्तते [9] सुख Pt₂　[10] कूरति, 'कुर कूर शब्दे' K₆

(पा.) मध्यम—मध्योऽस्त्री। मध्यनामानि॥ चकारौ अस्त्रीशब्दाकर्षणार्थौ। मध्यम, मध्यम। अचलग्न, अवलग्न। अतिकृशत्वाद्वलगतीत्यवलग्नम्। पृषोदरादित्वात् वलग्न विलग्नमिति त्रैरूप्य वदन्ति[1]॥ द्वौ परौ—प्रवेष्टौ दो। भुजनामानि॥ द्वौ पराविति प्रत्यासन्नयोर्भुजवाह्वोरेव ग्रहणम्। भुजेन भुजया, वाहुना वाह्वा। [2]वाहुशब्दोऽप्यस्ति। 'कल्लोललीलाभुरवैरिवाहा' इति [3]साहित्यकल्पवल्लीप्रयोगात्। दो शब्दस्यान्त्यपाठो[4]ऽसकरार्थ। 'दोर्न स्त्री करपोणिर्ना हरण करण [5] प्लव' इति वैजयन्ती (पृ १७८, श्लो ७१)। दोषौ दोष। दो षी दोषि। 'दोष्णो वलान्मन्त्रवल गरीय' इति। 'पद्दन्नोमा-स्हृन्निशसन्यूषन्दोषन्' इत्यादिना (६ १ ६३) दोषन्नादेश। प्रथगेको दोषाशब्दोऽप्यस्ति। 'दोर्दोषा च भुजो वाहु' इति धनजय॥ स्यात् कफोणि—कूर्पर। कूर्परनामनी। 'मोचेय्य'। '[6]कफोणिकूर्परौ तुल्यौ कफणिश्चापि दृश्यते' इति रभसकोशद्वन्द्व-निर्देशात् पुलिङ्ग। 'कफोणि कूर्पर पुमान्' इति गोपालितनिघण्टोस्त्रिकाण्ड-निर्देशात् स्त्रीलिङ्ग॥७९॥

[1] A₁ adds वलग्न वलग्न, विलग्न विलग्न　[2] A₁ adds पृथगेक　[3] साहिती A₁　[4] °निपात A₁　[5] करपल्लव A₁　[6] कपोणि A₁

**अस्योपरि प्रगण्डः स्यात् प्रकोष्ठस्तस्य चाप्यधः॥ ८०॥**
**मणिबन्धादाकनिष्ठं करस्य करभो बहिः।**

(वि.) अस्येति—प्रगण्यते सुवृत्ततया[1] श्लाघ्यते प्रगण्ड। 'गण सख्याने'। कफोणेरुपरिभागनाम॥ प्रकुष्यते प्रावरणाद् बहि [2]नि सार्यते प्रकोष्ठ। 'कुष निष्कर्षे'। [3]प्रगण्डाधोभागनाम॥ करे मुष्टिकृते[4] भातीति[5] करभ। 'भा दीप्तौ'। मणिबन्धो हस्तग्रन्थि। तस्मादारभ्य [6]आकनिष्ठ स्थितस्य करवहि प्रदेशस्य नाम॥ ८०॥

[1] सुव्यक्ततया K₅, K₆　[2] प्रकृष्यते K₆, Pt₂　[3] कूपर° W₂　[4] मुष्टीकृते W₂　[5] विभासते, 'भामृ दीप्तौ' K₆　[6] सर्वाङ्गुलिसहितस्य वाह्यामभागनाम W₂

(पा.) अस्योपरि—स्यात्। कफणेरुपरिभाग प्रगण्ड स्यात्॥ प्रकोष्ठ—चाप्यध। [1]कफोणेरधोभाग प्रकोष्ठ स्यात्॥ मणिबन्धात्—करभो बहि। मणिबन्ध[2] इति कङ्कणबन्धस्थानम्। तस्मादारभ्य कनिष्ठाङ्गुलिपर्यन्तं करस्य बहिर्भाग करभ स्यात्।

'क प्रस्थितासि करभोरु घने निशीथे
प्राणेश्वरो[3] वसति यत्र [4]मनःप्रियो मे ।'

इत्यमरुकः[5] ॥ (अ. श श्लो. ७१) ॥ ८० ॥

[1] कपोये: $A_1$. [2] मणिबन्धात् कंकणबन्धस्थानात् $B_3$. [3] प्राणाधिक: $B_3$. [4] जन: $B_3$. [5] इत्यमरुकम् $A_1$.

**पञ्चशाखः शयः पाणिस्तर्जनी स्यात् प्रदेशिनी ॥ ८१ ॥**
**अङ्गुल्यः करशाखाः स्युः पुंस्यङ्गुष्ठः प्रदेशिनी ।**
**मध्यमानामिका चापि कनिष्ठा चेति ताः क्रमात् ॥ ८२ ॥**

(वि.) पञ्चशाख इति—[1]पञ्च शाखा[2] इवाङ्गुल्योऽस्य सन्तीति पञ्चशाखः । स्वकीयं[3] [4]धनं शेते तिष्ठत्यत्रेति शयः । 'शीङ् स्वप्ने' । पणति व्यवहरत्यनेनेति पाणिः । 'पण व्यवहारे स्तुतौ च' । मणिबन्धादारभ्य सर्वाङ्गुलिसहितस्य बाह्याग्रभागस्य नामानि ॥ तर्जयत्यनया पुत्रादिकमिति तर्जनी । 'तर्ज [5]भर्त्सने' । प्रदिशति चोरादिकं निर्दिशत्यनया प्रदेशिनी । 'दिश अतिसर्जने' । अङ्गुष्ठसमीपाङ्गुलेर्नाम ॥ स्वयमङ्गितया अन्यमङ्गं लाति स्वीकरोतीति अङ्गुलिः[6] । अङ्गुलीत्यप्यस्ति । 'ला आदाने' । करस्य शाखा इव तिष्ठन्तीति करशाखाः । अङ्गुलिनामनी ॥ अङ्गे अङ्गे तिष्ठतीत्यङ्गुष्ठः । प्रदिशति चोरादिकं प्रदेशिनी । [7]मध्ये भवा मध्यमा । नास्ति प्रसिद्धनामास्या अनामिका । अतिशयेन अल्पा कनिष्ठा[8] । एतानि स्थूलाङ्गुलिमारभ्य यथाक्रममङ्गुलीनां [9]प्रत्येकनामानि ॥ ८१–२ ॥

[1] $W_2$ omits 3 lines. [2] अङ्गुलीरूपा $F_2$, $Pt_2$. [3] स्वं $K_5$. [4] वस्तु $D_2$, $K_3$, $K_6$. [5] 'तर्ज भर्ज संतर्जने' $F_2$, $Pt_2$. [6] अङ्गति अन्योन्यमित्यङ्गुलिः 'अगि गतौ' $F_2$, $Pt_2$. [7] मध्यम (स्व $K_5$) त्वात् $D_2$, $K_2$, $K_6$. [8] इतराभ्योऽल्पत्वात् कनिष्ठिका $D_2$, $K_6$. [9] प्रत्येकं $D_2$, $W_2$.

(पा.) पञ्चशाखः—पाणिः । पाणिनामानि ॥ तर्जनी—प्रदेशिनी । तर्जनीनामनी । '[1]जुट्टुल्वेलु' ॥ अनुक्रम्—समानाचङ्गुल्याङ्गुष्ठौ । अङ्गुष्ठनामनी । 'बोट्टनवेलु[1]' । अङ्गुल्यः करशाखाः स्युः । अङ्गुलिनामनी ॥ पुंस्यङ्गुष्ठः—वाः क्रमात् । [2]ता अङ्गुल्यः क्रमादङ्गुष्ठादिसञ्ज्ञाः स्युः[3] ॥ ८१–२ ॥

[1] $B_3$ omits. [2] अङ्गुष्ठादयोऽङ्गुलिकमसंज्ञाः $A_1$. [3] $A_1$ adds पादचन्द्रपूर्वाभिर् पादाङ्गुलिर्मस्यः स्युः.

**पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम् ।**
**प्रादेशतालगोकर्णास्तर्जन्यादियुते तते ॥ ८३ ॥**
**अङ्गुष्ठे सकनिष्ठे स्याद् वितस्तिर्द्वादशाङ्गुलः ।**

(वि.) पुनर्भव इति—[1]पुनःपुनर्भवतीति पुनर्भवः । 'भू सत्तायाम्' । करे रोहतीति कररुहः । 'रुह बीजजन्मनि प्रादुर्भावे च' । न विद्यते खमाकाशोऽस्य[2] नखः । खमाकाशं[3] न राति न ददातीति नखरः[4] । 'रा दाने' । नखनामानि ॥ [5]प्रदिश्यते परिमीयते प्रादेशः । 'दिश अतिसर्जने' । तलति प्रतिष्ठते[6] परिमेयमस्मिन्निति तालः । 'तल प्रतिष्ठायाम्' । गोकर्णाकृतिरत्रास्तीति[7] गोकर्णः । एतानि क्रमेण तर्जन्यादियुतेऽङ्गुष्ठे वितते सति यावदन्तरं भवति तस्य नामानि ॥ वितस्यते[8] हस्तापेक्षया उपक्षीयत इति वितस्तिः । 'तसु उपक्षये' । कनिष्ठेऽङ्गुष्ठे तते सति यावदन्तरं भवति तस्य नाम ॥ द्वादशाङ्गुलयः प्रमाणमस्य द्वादशाङ्गुलः । द्वादशाङ्गुलो वा वितस्तिः । द्वादशाङ्गुलिप्रमाणस्य नामनी ॥ ८३ ॥

[1] $F_2$, $Pt_2$ add छिन्नोऽपि. [2] °शं $W_2$. [3] इन्द्रियं स्पर्शज्ञापकं $Pt_2$. [4] नखशब्दो नखैकदेशोऽपि । सोऽस्यास्तीति नखरः $Pt_2$. [5] $W_2$ adds अङ्गुष्ठे. [6] प्रतितिष्ठति $D_2$, $K_3$, $K_6$. [7] आकृतित्वात् $W_2$. [8] $W_2$ omits two lines.

(पा.) पुनर्भवः—नखरोऽस्त्रियाम्[1] । नखनामानि । [2]स नखः प्रवृद्धश्चेत् खराङ्कुशः ।

'पुनर्भवः पाणिरुहो महाराजः [3]पुनर्नवः ।
खरुः[4] करजश्चाथ स प्रवृद्धः खराङ्कुशः ॥'

इति वैजयन्ती (पृ. १७९, श्लो. ७६) ॥ प्रादेश—तते । अङ्गुष्ठे तर्जन्या सह वितते[5] प्रादेशः स्यात् । मध्यमया सह [6]विस्तृतेऽङ्गुष्ठे तालः स्यात् । अनामिकया सह[7] विततेऽङ्गुष्ठे गोकर्णः स्यात् ॥ अङ्गुष्ठे—द्वादशाङ्गुल । कनिष्ठिकया[8] सह [5]विततेऽङ्गुष्ठे वितस्तिः स्यात् । क्तिन्नन्तत्वात् (३. ३. ९४) स्त्रीलिङ्गः । 'स्त्रियां वितस्तिः कनीयस्या' । इति रत्नकोशः । स एव द्वादशाङ्गुलः । 'जान' ॥ ८३ ॥

[1] $A_1$ adds नखरोऽप्ययम् इति क्वचित् पाठः. [2] $B_3$ omits the sentence. [3] पुनर्नरः $A_1$. [4] खरूः इति मुद्रितग्रन्थे. [5] विततोऽङ्गुष्ठः $A_1$. [6] विस्तृतोऽङ्गुष्ठः $A_1$. [7] प्रसारितोऽङ्गुष्ठः $A_1$. [8] कनिष्ठया $B_3$.

**पाणौ चपेटप्रतलप्रहस्ता विस्तृताङ्गुलौ ॥ ८४ ॥**
**द्वौ संहतौ संहतलप्रतलौ वामदक्षिणौ ।**

(वि.) पाणाविति—विस्तृताङ्गुलौ पाणौ चपेटादित्रयं वर्तते । चप्यते [1]पुत्रादिः सान्त्व्यतेऽनेनेति चपेटः । 'चप सान्त्वने'। प्रसृत[2] तलमत्रास्तीति प्रतलः । प्रसृतो हस्त प्रहस्त.[3] । विस्तृताङ्गुलिपाणिनामानि ॥ संहतं सघट्टं लातीति संहतलः[4] । 'ला आदाने'। सिंहतल इति वा पाठः । तदा सिंहस्य पादद्वयतलवत् तिष्ठतीति सिंहतलः । [5]प्रतते तलेऽत्रेति प्रतलः । [6]वामदक्षिणयोः पाण्योर्मिलितयोः विस्तृताङ्गुल्यो-र्नामनी ॥ ८४ ॥

[1] हीनः $D_2$, $K_6$ [2] प्रतीतं $K_2$, $K_3$, $K_5$, $W_2$ [3] $K_5$, $K_6$ add विरुद्ध-लक्षणया प्रसार्यत इति प्रसृतिः । प्रसृत इति वा पाठः । निकुब्जपाणिनाम [4] संहतल इति पाठे संहते तले यत्र संहतलः $K_5$, $K_6$, $W_2$. [5] प्रतीते $K_5$, प्रवितते $D_2$, $K_6$. [6] मिलित-संयोगविस्तृताङ्गुलिपाणिद्वयनामनी $K_5$, $K_6$, $W_2$

(पा.) पाणौ—विस्तृताङ्गुलौ । विततादृगुलौ पाणौ [1]चपेटः स्यात् । 'चपेटश्चर्पटस्ताल.[2]' इति वैजयन्ती (पृ. १७९, श्लो. ७७) । प्रतलश्च प्रहस्तश्च स्यात् । 'प्रहस्त. प्रतलस्तल.' इति वैजयन्ती (पृ १७९, श्लो. ७७) ॥ द्वौ संहतौ—वामदक्षिणौ । वामदक्षिणौ प्रतलौ द्वौ संहतौ चेत् संहतल. स्यात् ॥ ८४ ॥

[1] चपेटप्रतलप्रहस्तशब्दाः स्युः $B_3$ [2] चर्पटस्तथा $A_1$, $B_3$.

**पाणिर्निकुब्जः प्रसृतिस्तौ युतावञ्जलिः पुमान् ॥ ८५ ॥**
**प्रकोष्ठे विस्तृतकरे हस्तो मुष्ट्या तु बद्धया ।**
**स रत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना ॥ ८६ ॥**

(वि.) पाणिरिति—कुब्जितः पाणिः प्रसृतिरित्युच्यते । प्रसार्यते विरुद्ध-लक्षणया सकुच्यत इति प्रसृतिः । नितरां कुब्जा प्रकृतिरस्य निकुब्ज.[1] । अञ्ज्यते परप्रणामो व्यक्तीक्रियतेऽनेनेति [2]अञ्जलिः । 'अञ्जू [3]व्यक्तिम्रक्षणकान्तिगतिषु'। [4]संयुतप्रसृतिद्वयनाम ॥ कूर्पोणरधः प्रकोष्ठ. तत्र विस्तृतकरे सति हस्त इत्युच्यते । हन्यतेऽसुरादिरनेन हस्तः । 'हन हिंसागत्योः'। विस्तृतकरप्रकोष्ठनाम ॥ बद्धया मुष्ट्या उपलक्षितः स हस्त. [5]रत्निरित्युच्यते । रमन्ते व्यवहारिणोऽनेनेति रत्निः । 'रमु क्रीडायाम्'। निष्कनिष्ठेन निर्गतकनिष्ठाङ्गुलिना मुष्टिना उपलक्षितो हस्तोऽरत्निरित्युच्यते । ऋच्छति [6]मानसख्यामित्यरत्निः । 'ऋ गतौ'। निष्कनिष्ठमुष्टिहस्तनाम ॥ ८५–६ ॥

[1] $W_2$ adds ह्रस्वविकृतिपाणिनाम [2] व्यज्यते भक्तिरनेन $F_2$, $Pt_2$ [3] °श्लक्ष्ण° $Pt_2$ °ग्रहण° $K_3$, $K_6$ [4] °प्रसृत° $K_5$ $K_6$ [5] $D_2$ adds रत्न्या सहवर्तत इति सरत्नि, बद्धमुष्टिहस्तनाम [6] न विद्यते रत्निर्मुष्टिरत्रेति $D_2$ $W_2$

(पा.) पाणि —प्रसृत । प्रसृतिरिति क्वचित् पाठ । ईषदावर्जित पाणि प्रसृत स्यात्। 'चेर[1]'। 'प्रसृते तु द्रवाधारे गण्डूषश्चुलुकस्तथा[2]' । इति प्रसृतविशेष एव ॥ तौ युतौ—पुमान् । प्रसृतौ द्वौ सगतौ चेत् अञ्जलि स्यात्। स सनिवेशविशेषाद् बहुविध ।

'पिबत्यञ्जलिना तोय देवाय रचितोऽञ्जलि ।
पिदधात्यात्मनो वक्त्र केलिष्वञ्जलिना वधू ॥'

इत्यादि ॥ प्रकोष्ठे—हस्त । [3]विस्तृतकरे प्रकोष्ठे हस्त स्यात्। 'मूर' । हस्त करमात्रेऽपि स्यात्। 'पाणि कर शयो हस्त' । इति नाममाला । मुष्ट्या—रत्नि स्यात्। [4]मुष्टिरङ्गुलिकुञ्चनम् । [5]हस्तो बद्धया मुष्ट्योपलक्षितश्चेत् स रत्नि स्यात्। अरत्निस्तु—मुष्टिना । स एव निष्कान्तकनिष्ठेन मुष्टिनोपलक्षितश्चेद् अरत्नि स्यात्। तौ द्वौ च स्त्रीपुसलिङ्गौ[6] ॥ ८५–६ ॥

[1] $B_3$ omits [2] अपि च $A_1$ चुलुकश्चुल इति मुद्रितवैजयन्त्याम् (पृ १७९, श्लो ७८) [3] वितत करो यस्य प्रकोष्ठ स्यात्, तस्मिन् हस्त स्यात् $A_1$ [4] मुष्टिरिति $A_1$ [5] $A_1$ adds पुरो वक्ष्यमाण [6] $A_1$ adds अत्र विशेषानभिधानमेव तदभिधानम्

**व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम् ।**
**ऊर्ध्वविस्तृतदोःपाणिनृमाने पौरुषं त्रिषु ॥ ८७ ॥**
**कण्ठो गलोऽथ ग्रीवायां शिरोधिः कंधरेत्यपि ।**

(वि.) व्याम इति—सकरयो पाणिसहितयो तिर्यक् ततयो तिर्यक्प्रसारितयोर्बाह्वोरन्तर व्याम इत्युच्यते । व्यामीयते [1]रज्ज्वादिकमनेनेति व्याम । 'माङ् माने' । तिर्यक्प्रसारितबाह्वन्तरपरिमाणनाम[2] ॥ ऊर्ध्व विस्तृत प्रसारित ऊर्ध्वविस्तृत, दो सहित पाणि दो पाणि यस्य, स चासौ ना च, तस्य पुरुषस्य माने पौरुषमिति शब्दो वर्तते । पुरुषस्येद मान पौरुषम्[3] । त्रिषु, त्रिषु लिङ्गेषु वर्तते ॥ कणति ध्वनति कण्ठ । 'कण शब्दे' । गलति ग्रासमनेन गल । 'गल अदने[4]' । ग्रीवाभागनामनी ॥ ग्रास[5] गिरतीति ग्रीवा । 'गॄ निगरणे' । शिरो धीयतेऽस्यामिति शिरोधि । 'डुधाञ् धारणपोषणयो' । क शिरो धारयतीति कधरा । 'धृञ् धारणे' । ग्रीवानामानि ॥ ८७ ॥

[1] $D_2$, $K_3$, $K_4$, $W_2$ add विक्रय°. [2] 'वार पेरु' $K_3$, $K_4$. [3] विस्तृतदोः-पाणिनृमाननाम $K_5$. [4] $D_2$, $K_5$ add लवणे च; गिल $D_2$, $W_2$. [5] गिरत्यनया अन्नादिकं $F_2$, $Pt_2$.

(पा.) व्यामो—तिर्यगन्तरम् । साचीकृतयोर्भुजयोर्मध्यं[1] व्यामः स्यात् । 'वार[2]' । व्यायामोऽपि स्यात् । 'न्यग्रोधो व्यायामो व्यामश्च भुजौ प्रसारितौ तिर्यक्' । इति वैजयन्ती (पृ. १७९, श्लो. ८२) ॥ ऊर्ध्वविस्तृत—पौरुषं त्रिषु । ऊर्ध्वमुद्धृतभुजकरस्य पुरुषस्य प्रमाणं पौरुषं स्यात् । तच्च त्रिलिङ्गम्[3] । पौरुषी[4] गङ्गा । 'पुरुषहस्तिभ्यामण् च' (५ २. ३८) इति चकाराद् द्वयसजाद्योऽपि स्युः । पुरुषद्वयसी, पुरुषदघ्नी, पुरुषमात्री गङ्गा । 'द्विगोर्नित्यम्' (वा. ५. २. ३७) इति संख्यापूर्वश्चेल्लुक् । द्विपुरुषी गङ्गा । कण्ठो गलो—कंधरेत्यपि । ग्रीवानामानि । अथशब्दो लिङ्गान्तरज्ञापनार्थः । 'विश्राणमायतिमतीमवृथा[5] शिरोधिम्' इति माघः (शिशु. ५. ६५) ॥ ८७ ॥

[1] $A_1$ adds उभयोः. [2] 'मार' $A_1$. [3] $A_1$ adds त्रिष्वित्यनेन त्रिविधः. [4] $B_1$ omits two words. [5] आयत° $A_1$.

कम्बुग्रीवा त्रिरेखा सावटुर्घाटा कृकाटिका ॥ ८८ ॥
वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम् ।

(वि.) कम्बुग्रीवेति—कम्बुवत्[1] शङ्खवत् [2]त्रिरेखासहितत्वात् कम्बुग्रीवा । रेखात्रयसहितग्रीवानाम ॥ न वटति[3] न वेष्टते अवटुः । 'वट वेष्टने[4]' । शरीरमस्तकयोः संधिं घटयति[5] घाटा । 'घट चेष्टायाम्' । कृकं शिरोग्रीवम् अटति व्याप्नोतीति कृकाटिका । 'अट गतौ' । ग्रीवायाः पश्चाद्भागनामानि ॥ उच्यतेऽनेनेति वक्त्रम् । 'वच परिभाषणे' । अस्यते क्षिप्यते नवनीतादिरस्मिन्निति[6] आस्यम् । 'असु क्षेपणे' । वदन्त्यनेन वदनम् । 'वद व्यक्तायां वाचि' । तुद्यते[7] हिंस्यते[8] खाद्यमनेनेति तुण्डम् । 'तुडि तोडने[9]' । अनिति श्वसित्यनेनेति आननम् । 'अन प्राणने' । [10]लप्यत्यनेन लपनम् । 'लप व्यक्तायां वाचि' । खन्यते भक्ष्यतेऽनेनेति[11] मुखम् । 'खनु अवदारणे' । मुदितानि खानीन्द्रियाण्यस्मिन्निति वा । एतानि मुखस्य वा दन्तात्मकस्य मुखान्तरालस्य वा नामानि ॥ ८८ ॥

[1] कम्बुतुल्या ग्रीवा $F_2$, $Pt_2$. [2] रेखात्रय° $K_5$. [3] वट्यति वेष्टयति $K_1$, $W_2$ [4] परिवेष्टने $K_5$. [5] घटते $Pt_2$; घाटयति, 'घट संघाते' $K_3$. [6] °आदिरमनेन $K_3$. [7] उद्यते $K_2$, $K_3$, $W_2$. [8] खाद्यते $K_5$, $K_6$. [9] तोडनं दारणं हिंसनं च $W_2$. [10] लप्यते $K_2$, $W_2$. [11] $D_2$, $K_3$, $K_4$ add खाद्यं.

(पा.) कम्बुग्रीवा त्रिरेखा सा। रेखात्रयाङ्किता ग्रीवा कम्बुग्रीवेति कथ्यते। अवटु—कृकाटिका। [1]शिर पश्चाद्वर्तनामानि। 'पेडतल'। सावटुरित्यकारपूर्वपद-व्यवहित। 'घाटाप्यवटुरक्लीवे' इति वैजयन्ती (पृ १८०, श्लो ८५)॥ वक्त्रास्ये—लपन मुखम्। मुखनामानि।

'को विघ्रणन् मुह्यति[2] नक्रमास्ये'। तदुपलक्षितसमुदायेऽपि प्रपञ्चितम्। 'अम्भोजमिव वक्त्र ते तव वक्त्रमिवाम्बुजम्'। इति॥ ८८॥

[1] शिरस $A_1$ [2] मह्यति $A_1$

**क्लीबे घ्राण गन्धवहा घोणा नासा च नासिका॥ ८९॥**
**ओष्ठाधरौ तु रदनच्छदौ दशनवाससी।**

(वि.) क्लीब इति—जिघ्रति अनेनेति घ्राणम्। 'घ्रा गन्धोपादाने'। गन्ध वहतीति गन्धवहा। 'वह प्रापणे'। घुणति[1] भ्रमति गन्धग्रहणाय घोणा। 'घुण[2] भ्रमणे'। नासते[3] शब्दायते नासा। नासिका च। 'णास्[4] शब्दे'। नासिकानामानि॥ उष्यते उष्णाहारेण दह्यते ओष्ठ। 'उष[5] दाहे'। अधोभवत्वात्[6] अधर। रदना छाद्यन्तेऽनेन रदनच्छद। 'छद अपवारणे'। दशनाच्छादकत्वेन वास साम्याद् दशनवास[7]। दशन वस्यते वा। 'वस आच्छादने'। ओष्ठद्वयनामानि॥ ८९॥

[1] गन्धाभिमुखेन भ्रमति $K_5$ $K_6$ [2] $D_2$ $K_6$ add घूर्ण. [3] नसते कौटिल्य प्रतिपद्यते घ्राणसमये $K_2$ $K_5$ $K_6$ $W_2$ [4] णस कौटिल्ये $K_6$ [5] $Pt_2$ add प्लुष [6] राति $K_6$ [7] दशनाना वास इवाच्छादकत्वात् $D_2$ $K_2$, $W_2$

(पा.) क्लीबे घ्राण—च नासिका। नासिकानामानि। नासानासिकाशब्दयो [1]प्रत्ययभेदाद् भेदपाठ। वैजयन्त्यामपि तथैव पठितम्' (पृ १८०, श्लो ९१)

'क्लीबे[3] [4]नकुटक घ्राण घोणा नासा विघूणिका[5]।
शिङ्घाणी[1] नासिका चाथ धमनी नासिकापुटी॥'

ओष्ठाधरे—दशनवाससी। ओष्ठ इति उपरितनदन्तवास[7], अधर इत्यधस्तनदन्तवास। तौ[3] द्वावपि रदनच्छदौ दन्तवाससी च स्याताम्। ओष्ठाधरौ तु रदनच्छदौ दशनवाससी इति केचित् पठन्ति। तत्पाठे सर्वाणि पर्यायपदानि। 'अधरो दन्तच्छद ओष्ठ उच्यते दन्तवासश्च' इति हलायुध (अ. मा २ ३६९)॥ ८९॥

[1] 'गुरोश्च हल.' (३ ३ १०३) इति अकारप्रत्यय., नासे 'ण्वुल्तृची' (३ १. १३३) इति ण्वुल्प्रत्यय [2] $B_3$ omits [3] वक्रो इति मुद्रितग्रन्थे [4] नक्कुटक $A_1$, $B_3$ [5] विकूणिका $A_1$, $B_2$ [6] शिङ्घिनी $B_3$, शिंघिणी $A_1$ [7] $B_3$ omits °वन° [8] ओष्ठाधरी $A_1$

## अधस्ताच्चिबुकं गण्डौ कपोलौ तत्परो हनुः ॥ ९० ॥
## रदना दशना दन्ता रदास्तालु तु काकुदम् ।

(वि.) अधस्तादिति—चीयते स्वच्छासास्थ्यादिभिरिति चिबुकम्। 'चिञ् चयने'। [1]चीयते वा। 'चीञ् आदानसंवरणयो.'। अधरोष्ठादध स्थिताङ्गस्य नाम ॥ गण्डति वदनस्य एकदेशो भवति गण्ड । 'गडि वदनैकदेशे'। कम्पते भक्षणसमये चलतीति कपोल । 'कपि [2]चलने'। चिबुकस्य वामदक्षिणभागयोरूर्ध्वभागनामनी ॥ हन्ति [3]चणकादिकमिति हनु । 'हन हिंसागत्यो '। पूर्वोक्तयो कपोलयो पश्चाद्भागनाम ॥ रद्यन्ते [4]भक्ष्याणि एभिरिति रदना.। रदाश्च। 'रद विलेखने'। [5]दशन्ति स्त्र्यधरमेभिरिति दशना । 'दश दशने'। दम्यते [6]भक्ष्यमेभिरिति दन्ता । 'दमु [7]उपशमे'। दन्तनामानि ॥ तलति [8]प्रतितिष्ठति [9]वर्णघोषमनेनेति तालु । 'तल प्रतिष्ठायाम्'। काकु ध्वनिविशेष ददातीति काकुदम्। '[10]दाण् दाने'। तालुनामनी ॥ ९० ॥

[1] $Pt_2$ adds चीयति [2] $Pt_2$ adds किंचित् [3] भक्ष्य $F_3$, $Pt_2$ [4] रद्यते स्त्र्यधर, $D_3$, $K_4$, $K_5$ [5] दश्यते खाद्य ($D_2$, $K_5$) स्त्र्यधरः $K_4$, $W_2$ [6] खाद्य $K_1$, $K_5$, $K_6$ [7] उपशमने $D_2$, $K_2$, $K_5$, $K_4$, $K_3$, $K_6$ add रदन्ति उत्पादयन्ति रदा [8] प्रतिष्ठत $Pt_2$ [9] षिष्टादिक $K_5$, $K_6$, $W_2$ [10] 'डुदाञ् दाने' $W_2$

(पा.) अधस्ताच्चिबुकम्। सन्निधिसामर्थ्याद् ओष्ठस्याधोभागश्चिबुक स्यात्। 'ओष्ठस्याधस्तु चिबुक [1]चीबुक चुबुक च तत्' इति वैजयन्ती (पृ. १८०, श्लो. ८७)॥ गण्डौ कपोलौ। गण्डस्थलनामनी। चिबुकसव्यापसव्यभागनामनी। तत्परो हनु । तयोरुपरिभागो हनु. स्यात्। केषाञ्चिद् गण्ड एव हनु । 'गण्डो गल्ल' कपोलश्च हनुस्तुल्यार्थवाचका ' इति हलायुधः (अ. मा. २ ३६७)॥ रदना.—रदा'। दन्तनामानि ॥ अनुक्तम्—'राजदन्ता मध्यदन्ता '। [2]अभ्यमदन्ता राजदन्ता. स्यु'। 'दंष्ट्रा [3]दाढाश्च पार्श्वयोः'। तेषा पार्श्वस्थदन्ता दंष्ट्रा [3]दाढाश्चेत्युच्यन्ते। तालु—काकुदम्। [4]तालुनो नाम। 'वयदलु[5]'॥ ९० ॥

[1] चुबुकमिति मुद्रितग्रन्थ [2] मध्य° $B_2$ [3] दाधा $A_1$, $B_2$ [4] तालुनो. $A_1$ [5] $B_2$ omits.

**रसज्ञा रसना जिह्वा प्रान्तावोष्ठस्य सृक्किणी ॥ ९१ ॥**
**ललाटमलिकं गोधिरूर्ध्वे दृग्भ्यां भ्रुवौ स्त्रियौ ।**

(वि.) रसज्ञेति—रसं जानातीति रसज्ञा। 'ज्ञा अवबोधने'। रस्यतेऽनया रसो रसना। 'रस आस्वादने'। ह्वयति [1]रसवद्वस्तु जिह्वा। 'ह्वेञ् स्पर्धायां शब्दे च'। जिह्वानामानि॥ लालां सृजतीति सृक्किणी। सृक्कं, सृक्कि, सृक्कणी सृक्किणीति बहवः पाठाः। 'सृज विसर्गे'। ओष्ठप्रान्तनाम[2]॥ ललन्त्यलन्तोऽटन्त्यलका अत्रेति [3]ललाटम्। 'अट[4] गतौ'। [5]अल्यते तिलकेनेति अलिकम्। 'अल भूषणादौ'। गुध्यते उष्णीषेणेति [6]गोधिः। 'गुध परिवेष्टने'। ललाटनामानि॥ ऊर्ध्वमधश्च भ्रमतीति [7]भ्रूः। 'भ्रमु [8]चलने'। दृग्भ्यामूर्ध्वभागनाम॥ ९१॥

[1] विषयलम्पटं $D_3$, $K_2$, $K_6$.　[2] प्रान्तस्य $D_2$, $K_6$.　[3] ललति तिलकादिरत्राटतीति $K_5$, $K_6$, $W_2$.　[4] $K_5$, $K_6$ add पट　[5] $F_2$, $Pt_2$ add भूष्यते.　[6] गावौ नेत्रे धीयेतेऽस्मिन्निति $F_2$, $Pt_2$.　[7] भ्रमत इति भ्रुवौ $Pt_2$.　[8] अनवस्थाने $F_2$, $Pt_2$.

(पा.) रसज्ञा—जिह्वा। जिह्वानामानि। प्रान्तावोष्ठस्य सृक्किणी। ओष्ठस्य प्रान्तौ सृक्किणी स्याताम्। 'शेलिवेलु'। ललाटं—गोधिः। 'भालो निदालं निटलम्'। एतानि च॥ ऊर्ध्वे दृग्भ्यां—स्त्रियाम्। दृग्भ्यामुपरिगतरोमलेखे भ्रुवौ स्याताम्। हे भ्रूः। 'नेयङुवङ्स्थानावस्त्री[1]' (१. ४. ४) इति नदीसंज्ञा[2] न भवति।

'अलभ्यशोकाभिभवेयमाकृतिर्विमानना सुभ्रु कुतः पितुर्गृहे'।

(कु. स. ५. ४३) इत्यत्र बहुव्रीहिवशाद् भवति। संबुद्धौ तु नदीभावं ब्रुवते सौगतोत्तमाः। 'श्लेष्मातकभुवस्तद्वदरुणं सुतनोरपि[3]' इति॥ ९१॥

[1] स्थानाविति $B_3$.　[2] नदीभावः $A_1$.　[3] सुतनोरिति $A_1$.

**कूर्चमस्त्री भ्रुवोर्मध्यं तारकाक्ष्णः कनीनिका ॥ ९२ ॥**
**लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी ।**
**दृग्दृष्टी चास्रु नेत्राम्बु रोदनं चास्रमस्रु च ॥ ९३ ॥**

(वि.) कूर्चमिति—कोचति भ्रूरोमाणि [1]प्रतिष्टभ्नाति कूर्चम्। 'कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु'। भ्रूमध्यनाम॥ [2]तारयति तम इति तारका। 'तॄ प्लवनतरणयोः'। कनति प्रकाशयति सर्वं कनीनिका। 'कनी[3] दीप्तिकान्तिगतिषु'।

अक्ष्णोर्मध्यगतनीलतारकानामनी ॥ लोच्यतेऽनेनेति लोचनम्। 'लोचृ दर्शने'। नीयते[2] आलोकमनेनेति नयनम्। नेत्रं च। 'णीञ् प्रापणे'। ईक्ष्यतेऽनेनेति ईक्षणम्। 'ईक्ष दर्शने'। चष्टे [5]आचष्टे वस्तुस्वरूपं चक्षुः। सान्तः। 'चक्षिङ् व्यक्तायां वाचि'। अश्नोति याति दूरमिति अक्षि। 'अक्षू व्याप्तौ'। इकारान्तनपुंसकलिङ्गमिदम्। [6]पश्यन्त्यनया दृक्। दृष्टिश्च। 'दृशिर् प्रेक्षणे'। नेत्रनामानि ॥ अश्नुते [7]कपोलमिति अश्रु। 'अशू व्याप्तौ'। रुद्यतेऽनेन रोदनम्। 'रुदिर् अश्रुविमोचने'। अस्यते क्षिप्यतेऽस्रम्। अस्रु च। 'असु क्षेपणे'। नेत्राम्बुनामानि ॥ ९२-३ ॥

[1] कुटिलानि करोति $F_2$, $Pt_2$ [2] तारयतेऽनेन $W_2$ [3] 'कन दीप्तौ' $Pt_2$
[4] $K_2$, $K_3$, $W_2$ add जायमाने दृश्यते [5] चष्टि $F_2$, $Pt_2$ [6] दृश्यतेऽनया $D_3$, $K_3$, $W_2$ [7] कपोलादौ $W_2$

(पा.) कूर्चमस्त्री—मध्यम्। भ्रूमध्यं कूर्चं स्यात्। तारका—कनीनिका। अक्षिमध्यनामनी। 'नक्षत्रे चाक्षिमध्ये च तारकं तारकापि [1]च' इति शाश्वतः (अने. सं. पृ. ३७, श्लो ४२०)॥ लोचन—दृग्दृष्टी च[2]। नेत्रनामानि ॥ अश्रु—चास्रमस्रु च। नेत्रजलनामानि ॥ अनुक्तम्—'पक्ष्म लोचनलोम्नि स्यात्'। [3]नेत्रलोम्नि पक्ष्मशब्दः स्यात्। 'वर्तनी लोचनच्छदे'। नेत्रपत्रे[4] वर्तनी स्यात्। 'वत्तुरेष्य'॥ ९२-३ ॥

[1] यथा for अपि च in the printed text [2] $A_1$ adds अत्र विमर्शविषयद्वाद
[3] नेत्रलोम वक्ष्म स्यात् $A_1$ [4] नेत्रपत्र $A_1$

**अपाङ्गौ नेत्रयोरन्तौ कटाक्षोऽपाङ्गदर्शने।**
**कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः ॥ ९४ ॥**
**उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्।**

(वि.) अपाङ्गाविति—अङ्गात् नासिकाख्याद्[1] अपकृष्टौ अपाङ्गौ। नेत्राञ्चलनाम ॥ कटे [2]नेत्रबाह्याङ्गेऽक्षिदर्शनमस्य कटाक्षः। अपाङ्गदर्शननाम ॥ [3]कीर्यतेऽत्र शब्द इति कर्णः। 'कॄ विक्षेपे'। शब्दस्य [4]ग्रहोऽनेनेति शब्दग्रहः। श्रूयतेऽनेन शब्द इति श्रोत्रम्। श्रुतिः। श्रवणम्। श्रवश्च। सान्तोऽयम्। 'श्रु श्रवणे'। कर्णनामानि ॥ उत्तमं च तदङ्गं च उत्तमाङ्गम्। शीर्यते जरापरिपाकादिनेति शिरः। सान्तः। शीर्षं च। 'शॄ हिंसायाम्'। मूर्च्छति गर्वादुन्नतो भवतीति मूर्धा। 'मूर्छा मोहसमुच्छ्राययोः'। मस्यति कठिनत्वेन परिणमतीति मस्तकः। '[5]मसी परिणामे'। शिरोनामानि ॥ ९४ ॥

[1] नासिकाया $F_2$ $Pt_2$ [2] अन्ते $K_2$ अङ्क $K_5$ $K_6$ °देशे अश्नोतीति $Pt_2$ [3] करोति शब्दग्रहण, डुकृञ् करणे' $Pt_2$ [4] $Pt_2$ adds गृह्यतेऽनेन [5] मस्त मस्त एव मस्तक $Pt_2$

(पा.) अपाङ्गौ नेत्रयोरन्तौ । [1]नेत्रान्तौ अपाङ्गौ भवत । 'कडकलु' । कटाक्षो ऽपाङ्गदर्शने । नेत्रान्तवीक्षण कटाक्ष स्यात् । 'कटाक्ष केकरापाङ्गौ' इति केषाचिद पाङ्गमात्रार्थ । अपाङ्गवीक्षित काक्ष । कटाक्षोऽक्षिविकूणनमिति[2] केषाचिदपाङ्ग दर्शनार्थ । कर्णशब्दग्रहौ—श्रव । [3]श्रव सान्त । कर्णनामानि । श्रुतिशब्दव्यवधान श्रवणशब्दस्य[4] लिङ्गव्यभिचारसूचनार्थम् । 'आस्येषु' जिह्वा हृदयेषु हस्तानसेषु[6] शूरा श्रवणान् नृपत्कै'। इति राघवपाण्डवीयम् (द्विस १६ २६) ॥ उत्तमाङ्ग— मस्तकोऽस्त्रियाम् । शिरोनामानि ॥ ९४ ॥

[1] नेत्रान्तोऽपाङ्ग स्यात् $A_1$ [2] विकूणनेति $A_1$ [3] $A_1$ omits [4] श०दे $A_1$ [5] अन्येषु $A_1$, $B_2$ [6] अङ्कषु $A_1$ कशेषु $B_2$

**चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः ॥ ९५ ॥**
**तद्वृन्दे कैशिकं कैश्यमलकाश्चूर्णकुन्तलाः ।**

(वि.) चिकुर इति—चीयत[1] एकत्र चिकुर । 'चिञ् चयने'। दैर्घ्यात् कुन्ताकार लातीति कुन्तल । 'ला आदाने'। वल्यते [2]पुष्पादिना वाल । 'वल सवरणे'। कच्यते बध्यते कच । 'कच बन्धने'। के शिरसि शेते वर्तते केश[3]। शिरसि रोहतीति शिरोरुह । 'रुह बीजजन्मनि प्रादुर्भावे च'। [4]शिरोरुहनामानि ॥ केशाना समूह कैशिकम् । कैश्य च । केशवृन्दनामनी ॥ अल्यन्त इत्यलका । 'अल भूषणादौ'। चूर्णा कुटिला कुन्तला चूर्णकुन्तला । चूर्णयोग्यकुन्तलनाम ॥ ९५ ॥

[1] चिन्वन् वधमान कुर्यते छियत इति वा $F_2$ $Pt_2$ [2] वस्त्रादिना $Pt_2$ [3] $D_2$ $W_2$, $Pt_2$ add 'शीङ् स्वप्ने [4] केशनामानि $K_2$ $W_2$

(पा.) चिकुर —शिरोरुह । शिर केशनामानि । चिकुरशब्द [1]ककारमध्यो हकारमध्यश्च स्यात् । 'कुन्तला मूर्धजा प्रस्थाश्चिकुराश्चिहुरा कचा' इति [2]श्रीभोज ॥ तद्वृन्दे—कैश्यम् । केशसमूहनामनी ॥ अलकाश्चूर्णकुन्तला । कुटिलकेशनामनी । 'स्वभाववक्राण्यलकानि तासाम्' इति [3]भारवि ॥ ९५ ॥

[1] कवर्ग° $A_1$. [2] $A_1$ omits श्री. [3] कस्यचित् प्रयोगः इति टीकासर्वस्वे (पृ. ३५७); quoted by Malli. Apte's Dict. p. 232.

**ते ललाटे भ्रमरकाः काकपक्षः शिखण्डकः ॥ ९६ ॥**
**कवरी केशवेशोऽथ धम्मिल्लः संयताः कचाः ।**

(वि.) ते इति—[1]भ्रमरप्रतिकृतिर्येषामस्तीति भ्रमरकाः । ललाटस्थालकनाम ॥ कार्ष्ण्येचाञ्चल्याभ्यां[2] काकपक्षसाम्यात्[3] काकपक्षः । शिरसि खण्डतया[4] वर्तत इति शिखण्डकः । बालशिखानामनी ॥ कं शिरो वृणोतीति कवरी । 'वृञ् वरणे' । केशानां संनिवेशः[5] केशवेशः । 'विश प्रवेशने' । केशरचनाविशेषनामनी ॥ संयताः बद्धाः केशाः धम्मिल्ल इत्युच्यते । धमित्यव्ययम्, मूर्धाधः ऊर्ध्वं वा मिल्यते धम्मिल्लः[6] । 'मिल श्लेषणे' । दृढसंयतकचनाम ॥ ९६ ॥

[1] प्रकृतिः $W_2$; भ्रमराकृतित्वात् $F_3$, $Pt_2$. [2] चञ्चलाभ्यां $K_1$, $K_6$. [3] सादृश्यात् $Pt_2$. [4] खण्डत्वेन वर्तमानत्वात् $Pt_2$. [5] समूहनिवेशः $W_2$; केशा विशन्त्यस्मिन्निति $F_3$, $Pt_2$. [6] धम्मल्ल इति वा पाठः । तदा ऊर्ध्वं मल्यत इति धम्मल्लः, 'मल मल्ल धारणे' $D_1$, $K_2$, $K_6$.

(पा.) ते ललाटे भ्रमरकाः । ललाटश्रितकुटिलकेशाः भ्रमरकाः स्युः । [1]भ्रमरालकाश्च स्युः । 'ते ललाटे भ्रमरकाः कुरुलाः[2] भ्रमरालकाः' इति वैजयन्ती (पृ. १८१, श्लो. ९९) ॥ काकपक्षः शिखण्डकः । [3]बालकचूलिकानामनी । 'चिप्पकुंपदलु' ॥ कवरी केशवेशः । संकुचितबद्धकेशविन्यासः कवरी स्यात् । 'कोप्पु' । अथ धम्मिल्लः—कचाः । संयताः[4] केशा धम्मिल्लः स्यात् । अनुक्तम्—'तुरम्बो माल्यादिगर्भः' । स्रगादिगर्भकेशविन्यासस्तुरम्बः स्यात् ॥ ९६ ॥

[1] $B_3$ omits. [2] कुरलाः $A_1$, $B_3$. [3] चूलिक° $A_1$. [4] संबद्ध° $A_1$.

**शिखा चूडा केशपाशी व्रतिनस्तु जटा सटा ॥ ९७ ॥**
**वेणिप्रवेणी शीर्षण्यशिरस्यौ विशदे कचे ।**

(वि.) शिखेति—शासते व्याप्नोतीति शिखा । 'शासृ व्याप्तौ' । शेते शिरसि वा । 'शीङ् स्वप्ने' । चुम्यते[1] चाल्यते वायुनेति चूडा । 'चुड [2]संवरणे समुच्छ्राये च' । [3]केशपाशोऽस्त्यस्तीति केशपाशी । शिखानामानि ॥ [4]जटति सर्पीभवतीति जटा । 'जट[5] संघाते' । सटतीति सटा । 'षट अवयवे' । व्रतिशिखानामनी ॥ वेणि

निर्मलत्वेन शोभत इति वेणिः। वेणी वा। प्रवेणिश्च। प्रवेणी वा। 'वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु'। वेणतीति वा। 'वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु'। शिरसि भवः [6]शीर्षण्यः। शिरस्यश्च। निर्मलकचनामानि ॥ ९७ ॥

[1] $D_2$, $K_5$, $W_2$ add इतस्ततः. [2] अपनये $K_3$, $K_6$; आच्छादने $Pt_2$. [3] $F_2$, $Pt_2$ add केशसमूहः. [4] $W_2$ omits two lines. [5] $K_5$, $K_6$, $Pt_2$ add झट. [6] शिरस्यः, शीर्षे भवः शीर्षण्यः $K_3$.

(पा.) शिखा—केशपाशी। शिखानामानि ॥ प्रतिनरस्तु—सटा। जटानामनी ॥ तुशब्दस्थाने साशब्दं केचिदभिपेचयन्ति[1] ॥ वेणिः प्रवेणिः। सर्पाकारतया संबद्धस्त्रीजटानामानि ॥ स्त्रीत्वाभिव्यक्त्यर्थं [2]वेणिप्रवेणीति केचित् पठन्ति ॥ शीर्षण्यशिरस्यौ—कचे। स्नानादिसंस्कारवत्केशनामनी ॥ ९७ ॥

[1] पठन्ति $B_3$. [2] वेणी° $A_1$.

## पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ॥ ९८ ॥
## तनूरुहं रोम लोम तद्वृद्धौ श्मश्रु पुंमुखे।

(वि.) पाश इति—पाशः पक्षः हस्तः—एते शब्दाः कचपर्यायात् परे वर्तमाना बाहुल्यार्था भवन्ति। यथा—केशपाशः, केशपक्षः, केशहस्तः, चिकुरपाशः, चिकुरपक्षः, चिकुरहस्तः इत्यादि। पाश्यत इति पाशः। 'पश बन्धे'। पक्ष्यते परिगृह्यते पक्षः। 'पक्ष परिग्रहे'। हस्यते[1] हस्तः। तन्वां रोहतीति तनूरुहम्। तनुरुहं वा। [2]रोहतीति रोम। लोम च। नान्तावेतौ[3]। तनूरुहकेशनामानि ॥ पुंमुखं श्रयते श्मश्रु[4]। 'श्रिञ् सेवायाम्'। पुंमुखे वृद्धिगतरोमनाम ॥ ९८ ॥

[1] श्लिष्यते $Pt_2$. [2] $K_3$, $K_5$ add तन्वा. [3] रोमलोमशब्दौ $K_3$. [4] श्मन् शब्दो मुखवाची। श्मनि मुखे श्रियते $Pt_2$.

(पा.) पाशः—कचात्परे। [1]कचपर्यायात्परे पाशपक्षहस्तशब्दाः विकीर्णकेशार्थाः। 'चतुरमयकिरन्त्याः केशपाशं करामैः' इति। तनूरुहं—लोम। [2]वपुर्लोमनामानि ॥ तद्वृद्धं—पुंमुखे। पुरुषस्य[3] मुखे प्रवृद्धं रोम[4] श्मश्रु स्यात्। 'गडुं [5]मांसालु'। 'श्मश्रुश्वशुरश्वश्रूशिंशपा[5]' इति वर्णनिर्देशनायां [6]द्विताल्व्येषु पठितम् ॥ ९८ ॥

[1] वचकात् $B_2$ [2] $B_2$ omits वपुः. [3] पुंसः $B_2$. [4] लोम $B_3$.
[5] $B_3$ omits [6] द्विधा तालव्येषु पठितः $A_1$.

**आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम् ॥ ९९ ॥**
**दशैते त्रिष्वलंकर्तालंकरिष्णुश्च मण्डितः ।**
**प्रसाधितोऽलंकृतश्च भूषितश्च परिष्कृतः ॥ १०० ॥**

(वि.) आकल्प इति—[1]आकल्प्यते शरीरशोभा अनेनेत्याकल्पः । 'कृपू [2]सामर्थ्ये' । वेवेष्टि [3]शोभामिति वेषः । 'विष्लृ व्याप्तौ' । वेश इति वा पाठः । नेत्रयोः पथ्यं नेपथ्यम् । वस्त्रालंकारमाल्यादिकृतशोभातिशयनामानि ॥ प्रत्यङ्गं क्रियते प्रतिकर्म । प्रतिगतम् अङ्गप्राप्तं कर्म वा । [4]प्रसाध्यतेऽङ्गमनेन प्रसाधनम् । 'साध[5] संसिद्धौ' । एते तिलकपत्ररचनादेर्नाम्नी ॥ आकल्पादिप्रसाधनान्तानि नैसर्गिकाङ्गशोभातिरिक्तकृत्रिमाङ्गशोभाया नामानीति केचित् ॥ दशैते त्रिषु । अलंकर्ता अलंकरिष्णुरित्यादयः रोचिष्णवन्ता दशपर्यायाः त्रिषु लिङ्गेषु वर्तन्ते । अलंकरोतीति अलंकर्ता । अलंकर्तुं शीलमस्यास्तीति अलंकरिष्णुः । अलंकारकर्तुर्नाम्नी[6] । मण्डयते भूष्यते स्म मण्डितः । 'मडि भूषायाम्' । प्रसाध्यते स्म प्रसाधितः । 'साध संसिद्धौ' । अलंक्रियते स्म अलंकृतः । भूष्यते स्म भूषितः[7] । परिष्क्रियतेऽलंक्रियते स्म परिष्कृतः । अलंकारकृतशोभावतो नामानि ॥ ९९–१०० ॥

[1] आ समन्तात् $D_2$, $F_2$, $Pt_2$ [2] 'कल्प कल्पने' $K_1$, $K_2$. [3] तत्तदङ्गमिति $F_2$, $Pt_2$. [4] $Pt_2$ adds अलंक्रियते. [5] $D_2$, $K_2$, $W_2$, $Pt_2$ add राध. [6] कर्तुं $W_2$. [7] 'भूष अलंकारे' $D_2$, $Pt_2$; अलंकरणे $W_2$.

(पा.) आकल्पवेषौ—प्रसाधनम् । अलंकरणनामानि ॥ मज्जनानुलेपनमाल्यवस्त्राभरणैस्तत् पञ्चविधम् । 'द्वेषरहितमपि सद्वेष'मिति [1]कुमारचरिते वेषः । 'गृहमात्रे[2] च नेपथ्ये वेशो वेश्यागृहेऽपि च' । इति रभसकोशपाठात् वेशः ॥ दशैते त्रिषु । अलंकर्तेत्यादिरोचिष्णवन्ताः दश पर्यायाः त्रिषु लिङ्गेषु भवन्ति ॥ ९९–१०० ॥

[1] कुमारचलितालंकारे $A_1$. [2] नेपथ्यगृहमात्रे $A_1$.

**विभ्राड् भ्राजिष्णुरोचिष्णू भूषणं स्यादलंक्रिया ।**
**अलंकारस्त्वाभरणं परिष्कारो विभूषणम् ॥ १०१ ॥**
**मण्डनं चाथ मुकुटं किरीटं पुंनपुंसकम् ।**

(वि.) विभ्राडिति—विशेषेण [1]भ्राजते विभ्राट्। भ्राजितुं शीलमस्यास्तीति भ्राजिष्णुः। 'भ्राजृ दीप्तौ'। विशेषेण रोचते रोचिष्णुः। 'रुच दीप्तौ'। भूषितत्वेन शोभमानस्य नामानि ॥ भूषा भूषणम्[2]। अलंकरणम् अलंक्रिया। अलंकरणव्यापार-नामनी ॥ अलंक्रियतेऽनेन अलंकारः। आ समन्तात् भ्रियते आभरणम्। 'भृञ् भरणे'। परिष्क्रियतेऽनेन परिष्कारः[3]। विशेषेण [4]भूष्यतेऽनेन विभूषणम्। 'भूष अलंकारे'। मण्ड्यतेऽनेनेति मण्डनम्। 'मडि [5]भूषायाम्'। मकुटादिभूषणमात्रस्य नामानि ॥ मुखे ललाटोपरि कुट्यते बध्यते [6]मुकुटम्। 'कुट कौटिल्ये'। मकुटमिति वा पाठः। कीर्यते ललाटोपरि क्षिप्यते किरीटम्। 'कॄ विक्षेपे'। [7]किरीटनामनी ॥ १०१ ॥

[1] $F_2$, $Pt_2$ add ताच्छील्येन. [2] $K_2$, $K_6$ add भाति, 'भा दीप्तौ'. [3] $F_2$, $Pt_2$ add 'डुकृञ् करणे'. [4] भाति $K_5$, $K_6$. [5] हर्षे च $D_2$; $K_3$, $K_6$ add व्याप्तौ. [6] मङ्क्यतेऽनेन मकुटम्। 'मकि मण्डने' $F_2$, $Pt_2$. [7] मुकुट° $K_2$, $W_2$.

(पा.) विभ्राट्—रोचिष्णुः। अलंकृतत्वेन शोभमानस्य नामानि ॥ भूषणं—अलंक्रिया। भूषणव्यापारनामनी ॥ अलंकारः—मण्डनं च। हाराद्यलंकारनामानि ॥ अथ मकुटं पुंनपुंसकम्। मुकुटं किरीटं पुंनपुंसकमिति क्वचित् पाठः। मकुटनामानि ॥ पुंनपुंसकशब्द उभयविशेषणम्। 'मौलिः कोटीर उष्णीषं[1] किरीटं मकुटोऽस्त्रियाम्' इति वैजयन्ती (पृ. १६९, श्लो. १३५) ॥ १०१ ॥

[1] उष्णीषकिरीटमकुटा अस्त्रियः $A_1$.

## चूडामणिः शिरोरत्नं तरलो हारमध्यगः ॥ १०२ ॥
## वालपाश्या पारितथ्या पत्रपाश्या ललाटिका ।

(वि.) चूडामणिरिति—चूडायां मणिः चूडामणिः। शिरसि रत्नं शिरोरत्नम्। शिरोमणिनामनी ॥ प्रभया तमस्तरति लङ्घयतीति तरलः। 'तॄ प्लवनतरणयोः' ॥ [1]हारमध्यगतरत्ननाम ॥ वालपाशे केशपाशे [2]साध्वी वालपाश्या। केशपाशस्य परितः सर्वतः तथा भवति शोभते पारितथ्या। [3]केशपाशशोभार्थं स्थूलमुक्तामयवलयनामनी ॥ पत्राकारे[4] ललाटे पश्यत इति पत्रपाश्या। 'पश बन्धने'। ललाटे भवा [5]भूषा ललाटिका। फाललम्बिप्रालम्बमुक्तापीडनामनी[6] ॥ १०२ ॥

[1] हारगतरत्ननामनी $W_2$. [2] साधुः $D_2$, $K_3$, $K_6$, $W_2$. [3] केशपाशोपरि $K_5$. [4] $W_2$ adds वालालंकारे. [5] अलंकारः $D_2$, $K_6$. [6] °माला° $K_2$, $K_3$.

(पा.) चूडामणि शिरोरत्नम् । चूडामणिनामनी ॥ तरलो—मध्यग । हार मध्यमणि तरल स्यात् । 'हारमध्यस्थित[1] रत्न तरल नायक विदु ' इति हलायुध (अ मा २ ४०९) ॥ वालपाश्या—पारितथ्या । केशालकारनामनी ॥ पत्रपाश्या ललाटिका । ललाटालकारनामनी ॥ १०२ ॥

[1] मध्यगत° $A_1$

कर्णिका तालपत्र स्यात् कुण्डलं कर्णवेष्टनम् ॥ १०३ ॥
ग्रैवेयकं कण्ठभूषा लम्बन स्याल्ललन्तिका ।

(टी.) कर्णिकेति—[1]कर्णस्यालकार कर्णिका । तालस्य पत्र तालपत्रम् । कर्णपत्र[2]-नामनी ॥ [3]कुण्डवद् वृत्तत्वात् कुण्डलम् । कुण्डव्युत्पत्तिर्यथा—कुण्डयते नैरन्तर्येण दह्यते कुण्डम् । 'कुडि दाहे' । कर्णभूषणनाम ॥ कर्णा वेष्ट्यते कर्णवेष्टनम् । 'वेष्ट वेष्टने' । स्त्रीपुरुषयो कर्णभूषणनामनी ॥ ग्रीवाया भवोऽलकारो ग्रैवेयकम् । कण्ठस्य भूषा कण्ठभूषा । कण्ठभूषणनामनी ॥ लम्बते लम्बनम् । लम्बमान वा । 'लबि अवस्रसने' । ललति विलसति ललन्तिका । 'लल विलासे' । हेमपट्टादिमैत्रेय[4]काण्डलम्बिमणि-विद्रुमादिकृतनिसरादिमण्डननामनी ॥ १०३ ॥

[1] कर्णयो $F_2$ $Pt_2$ [2] पत्रिका $W_2$ [3] गार्हपत्याग्निकुण्डवत् $D_1$, $K_2$ $K_6$
[4] °का न °$D_1$, $K_2$, $K_3$, $W_2$

(पा.) कर्णिका—स्यात् । कर्णपत्रनामनी । 'चौलकु' ॥ कर्णपूरतालाद्या-दयस्तद्विशेषा । 'कर्णपूरस्तु पुष्पाद्यैस्ताडङ्को[1] दन्तकादिभि ' इति वैजयन्ती (पृ १६९, श्लो १३४) ॥ कुण्डल कर्णवेष्टनम् । कुण्डलनाम ॥ ग्रैवेयक कण्ठभूषा । कण्ठाभरण सर्वं ग्रैवेयक स्यात् । 'ग्रीवालकरण सर्वं ग्रैवेयकमितीष्यते[2] ' इति हलायुध (अ मा २ ४२३) । 'कुकुक्षिग्रीवाभ्य श्चारयलकारेषु' (४ २० ९६) इत्यलकारार्थ ढकञ् । 'ग्रीवाभ्योऽण् च' इति [3]ढञ् (४ ३ ५७) अर्थान्तरे । 'ग्रीवाकवचरज्जौ तु ग्रैवं ग्रैवेयमित्यपि ' इति वैजयन्ती[5] ॥ लम्बन—ललन्तिका । [6]लम्बननामनी ॥ १०३ ॥

[1] ताटङ्क $K_1$ [2] $K_1$ adds अपि [3] इति स्मृतम् $A_1$, $B_3$ [4] अण्ढञौ $B_3$ [5] मुद्रितप्रत्ये न दृश्यते [6] लम्बमाना $B_4$

**स्वर्णैः प्रालम्बिकाथोरःसूत्रिका मौक्तिकैः कृता ॥ १०४ ॥**
**हारो मुक्तावली देवच्छन्दोऽसौ शतयष्टिकः ।**

(वि.) स्वर्णैरिति—स्वर्णैः कृता लल्न्तिका प्रालम्बिकेत्युच्यते। प्रकर्षेण आलम्बते प्रालम्बिका। 'लबि [1]शब्देऽवस्रंसने च'। दोरायाकृत्या स्वर्णकृतग्रीवावलम्बिलल्न्तिकानाम॥ सीव्यतेऽनेन मुक्तादिकमिति सूत्रिका। 'षिवु तन्तुसन्ताने'। उरसि सूत्रिका उरःसूत्रिका। पूर्वोक्तस्यैव मुक्तामयस्य नाम॥ ह्रियते चित्तमनेन हारः। 'हृञ् हरणे'। मुक्तानाम् आवली मुक्तावली[2]। [3]मुक्ताहारनाम॥ [4]देवानामपि चित्तं चन्दयति आह्लादयतीति देवच्छन्दः। 'चदि आह्लादने'। शतसरहारनाम॥ १०४॥

[1] लम्बने $K_2$, $K_5$ $W_2$ [2] मुक्तावलि इति वा पाठः $W_2$ [3] मुक्तावली $D_2$, $K_6$, $W_2$ [4] देवानामि $F_2$, $Pt_2$

(पा.) स्वर्णैः प्रालम्बिका। [1]हेमलम्बनं प्रालम्बिका स्यात्। अथोरःसूत्रिका—कृता। मुक्तामणिभिः कृता[2] उरःसूत्रिका स्यात्। हारो मुक्तावली। हारनामनी॥ 'हारो मुक्तावली हारः' इति स्त्रीलिङ्गपुल्लिङ्गयो रभसः। देवच्छन्दो—शतयष्टिकः[3]। शतयष्टिहारः[4] देवच्छन्दः स्यात्॥ १०४॥

[1] स्वर्णमयलम्बमालानाम $B_3$ [2] कृतलम्बन $A_1$ [3] शतयष्टिका $A_1$, $B_3$ [4] शतयष्ट $A_1$

**हारभेदा यष्टिभेदाद् गुच्छगुच्छार्धगोस्तनाः ॥ १०५ ॥**
**अर्धहारो माणवक एकावल्येकयष्टिका ।**
**सैव नक्षत्रमाला स्यात् सप्तविंशतिमौक्तिकैः ॥ १०६ ॥**

(वि.) हारभेदा इति—यष्टिसरयाभेदात् गुच्छादयो हारभेदा भवन्ति। दैर्घ्यात् गुह्यस्थानं छादयतीति [1]गुच्छः। गूहति सारं संवृणोतीति वा। द्वात्रिंशत्सरहारनाम॥ गुच्छस्य [2]अर्धं [3]गुच्छार्धं। षोडशसरहारनाम॥ गोस्तन इव[4] [5]नाभेरधोवर्तमानत्वाद् गोस्तनः। चत्वारिंशत्सरहारनाम॥ देवच्छन्दस्यार्धत्वाद् [6]अर्धहारः[7]। सरैरितरेभ्योऽल्पत्वात् माणवकः[8]। विंशतिसरहारनाम[9]॥ नक्षत्रपङ्क्तिरिव सरव्यया राजत इति नक्षत्रमाला। सप्तविंशतिस्थूलमौक्तिकरत्नहारनाम॥ १०५–६॥

[1] गुत्स इति वा पाठः $Pt_2$, $D_2$, $W_2$ add 'छद अपवारणे' [2] अर्धं $h_3$, $h_4$, $W_2$ [3] अधगुच्छ $h_3$ [4] °वत् $D_2$, $h_3$, $h_4$ [5] अधस्तात् $h_3$

[6] हारस्यार्धं $W_2$.　　[7] $K_3$, $W_2$ add पञ्चाशत्सरहारनाम.　　[8] माया लक्ष्म्या नवकोऽभिनवः माणवकः $Pt_2$.　　[9] $Pt_2$ adds भूषणाना मध्ये एकैव आवलते एकावली, 'वल संवरणे संचलने च'.

(पा.) हारभेदाः—माणवकः । गुच्छादयः शतादूनयष्टिकहारभेदाः । तथा चोक्तम्[1]—

'देवच्छन्दः शतं साष्टमिन्द्रच्छन्दः[2] सहस्रकम् ।
तस्यार्धं विजयच्छन्दो हारस्त्वष्टोत्तरं शतम् ॥
[3]अर्धं रश्मिकलापोऽस्य द्वादशस्त्वर्धमाणवः ।
द्विद्वादशोऽर्धं गुच्छोऽथ पञ्च हारः फलं लता[4] ॥
अर्धहारश्चतुःषष्टिर्गुच्छमाणवमन्दराः ।
अपि गोस्तनगोपुच्छावर्धमर्धं यथोत्तरम् ॥'

इति । एकावल्येकयष्टिका । 'एकयष्टिर्हार एकावली स्यात् । सैव नक्षत्रमाला—मौक्तिकैः । सप्तविंशतिसंख्याकैर्मौक्तिकैः[6] कृता एकावली नक्षत्रमाला स्यात् । अनुक्तम्—'मणि-निर्मणिसोपानश्चाटुकारश्च काञ्चनैः[7]' । हेमैर्मणिभिः कृता एकावली 'मणिसोपानश्चाटु-कारश्च स्यात् ॥ १०५-६ ॥

[1] वैजयन्ती पृ १७०, श्लो. १३८-४१　　[2] चन्द्रच्छन्दः $A_1$.　　[3] अर्धं रश्मि° $A_1$, $B_1$.　　[4] लतौ $A_1$.　　[5] एकयष्टिमती हार $A_1$.　　[6] $A_1$ omits.　　[7] °सोपानं $B_1$.

आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम् ।
केयूरमङ्गदं तुल्ये अङ्गुलीयकमूर्मिका ॥ १०७ ॥
साक्षराङ्गुलिमुद्रा सा कङ्कणं करभूषणम् ।

(वि.) आवापक इति—आ उप्यते क्षिप्यते मणिबन्धोपरीति आवापकः । 'डुवप् बीजसन्ताने' । परितो 'ह्रियतेऽनेनेति परिहारो हस्तः', तत्र भवः इति पारिहार्यः । कटत्याप्नोति हस्तमिति कटकम् । 'कटे वर्षावरणयोः' । वलते हस्तमिति वलयः । 'वल संवरणे सञ्चरणे च' । मणिबन्धोपरिविहितालंकरणनामानि । के भुजशिरसि याति शिरोभिः केयूरम् । 'यु मिश्रणे' । अङ्गं भुजं ददाति दलयति अङ्गदम् । 'दद दाने' । बाहुभूषणयोः नामनी ॥ अङ्गुलीषु भवम् अङ्गुलीयकम् । अङ्गुल्यलंकारे ऊर्मिरिव यस्य ऊर्मिका । अङ्गुलीभूषणस्य नामनी ॥ मुद्रा विद्यमानाक्षराणि यस्याः सा अङ्गुलिमुद्रा । अक्षरचिह्न°

तोर्मिकानाम ॥ कङ्कते मणिवन्धोपरि सरतीति [10]कङ्कणम । 'ककि[11] गतौ' । करभूपणनाम ॥ १०७ ॥

[1] ०व्यवहरति $K_5$ $K_6$ [2] $D_3$ adds 'हृञ् हरणे' [3] मव $F_2$, $Pt_2$
[4] $K_2$, $K_3$, $K_8$, $W_2$ add प्रमथा [5] $K_3$ omits 4 lines [6] $K_6$, $W_2$ omit
[7] कयूर $D_2$ $W_2$ [8] वर्तते $K_2$ $K_5$ [9] मोदयतीति मुद्रा, 'मुद हर्षे', अङ्गुलीप्रचन्धिनी मुद्रा $F_2$, $Pt_2$ [10] $Pt_2$ adds कमिति क्वणति, 'क्वण शब्दे'
[11] 'कक लौल्ये' $D_2$, $W_2$ $Pt_2$

(पा.) आवापक[1] पारिहार्य[2] कटक वलयोऽस्त्रियाम् । कटकनामानि । 'कडियमु[3]' । केयूरमङ्गद तुल्ये । [4]बाहाङ्गदनामनी । 'बाहुपुलि' । अङ्गुलीय-कमूर्मिका । अङ्गुल्याभरणनामनी । साक्षराङ्गुलिमुद्रा सा । अक्षराङ्कितमङ्गुल्या-[6]भरणमङ्गुलिमुद्रा स्यात् । कङ्कण करभूपणम् । मुक्ताप्रवालादिभि प्रोत प्रकोष्ठाभरण कङ्कण स्यात् । 'चेकट्टम्[5]' । 'कङ्कण हस्तसूत्र च विदु प्रतिसर वुधा' इति हलायुध (अ मा २ ४०३) ॥ १०७ ॥

[1] आवापक $B_3$ [2] पारिहार्य $B_3$ [3] $B_3$ omits [4] कयूरनाम $B_3$
[5] $B_3$ omits [6] अक्षराङ्किता सा $B_3$

**स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा ॥ १०८ ॥**
**क्लीबे सारसन चाथ पुंस्कट्यां शृङ्खलं त्रिपु ।**

(वि.) स्त्रीकट्यामिति—मीयते प्रक्षिप्यते कट्यामिति मेखला । 'डुमिञ् प्रक्षेपण' । कन्यते कन्या वध्यते काञ्ची । 'कचि[1] दीप्तिबन्धनयो' । कट्या सपति समवैति सप्तकी । 'पप समवाये' । रशन्ति कामयन्ते एनामिति रशना । 'रश कान्तौ'[2] । [3]सार सनोतीति सारसनम् । 'पणु दाने' । सारशनमिति वा पाठ । स्त्रीकटिभूपण[4]-नामानि ॥ शृङ्गे [5]श्रेष्ठमणिभि खलतीति शृङ्खलम् । 'खल सचये[6]' । पुरुषकटिभूपण-नाम ॥ १०८ ॥

[1] 'कच' $K_3$ [2] धौत्रो धातु $K_3$, अश्नोति कटिमिति, 'अशू व्याप्तौ' $F_2$, $Pt_2$
[3] $D_2$ $K_3$, $K_6$ add स्त्रैये [4] °हेमसूत्र° $W_2$ [5] प्रधान° $Pt_2$ [6] खचल्ने $K_3$, $K_6$, $Pt_2$

(पा.) स्त्रीकट्या—सारसन च। सारशन चेति पाठ। मेखलानामानि[1]। पुस्कट्या शृङ्खल त्रिपु। पुस्कटीभूषणनाम। सा स्त्रीकट्या काञ्च्यादिशब्दवाच्या, पुस्कट्या शृङ्खलशब्दवाच्या[2] ॥ १०८ ॥

[1] स्त्रीकटीभूषणनामानि $B_3$, 'ताडववि' $A_1$, 'वोड्डाणमु $B_3$ [2] $B_3$ adds 'गोवमेलताडु'

**पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम् ॥ १०९ ॥**
**हंसकः पादकटकः किंकिणी क्षुद्रघण्टिका ।**

(नि.) पादाङ्गदमिति—पादेऽङ्गदमिव पादाङ्गदम्। तुलति आकुटति चेति तुलाकोटि। 'तुल उन्माने' इति मथमो धातु। 'कुट बन्धने', 'कुट कौटिल्ये' इति वा द्वितीयो धातु। मञ्जु [1]मनोहरम् ईरयति ध्वनतीति मञ्जीर। 'ईर [2]क्षेपे'। नूयत इति नूपुरम्। णु स्तुतौ[3]'। हसवत् कायतीति हसक। 'कै शब्दे'। पादस्य कटक[4] पादकटक। पादाङ्गदनामानि॥ किंचित् कणतीति किंकिणी[5]। 'कण शब्दे'। क्षुद्रा अल्पा घण्टा अस्या इति क्षुद्रघण्टिका। [6]बालस्पादभूषणनामनी ॥ १०९ ॥

[1] हन्य $D_2$, $K_6$ [2] ध्वनी $K_5$, $K_6$ [3] स्तवे $K_5$, $K_6$ [4] कटक $D_2$, $K_5$ [5] अल्पघण्टानाम $K_5$, $K_6$, $W_2$ [6] 'चिग्नपण्डुल्पेह' $D_2$.

(पा.) पादाङ्गद—नूपुरोऽस्त्रियाम्। [1]चरणाभरणनामानि। 'कालि अडे'॥ मञ्जीरशब्दसाहचर्यात् तुलाकोटिशब्द पुलिङ्ग। 'शिञ्जिनी ना तुलाकोटि' इति वैजयन्ती (पृ १५०, श्लो १४५)॥ हसक पादकटक। पादवलयनामनी। '[2]कालि-कडियमु'॥ निङ्किणी क्षुद्रघण्टिका। स्वल्पघण्टिकानाम। 'गज्जेलु'॥ विङ्कणं क्षुद्रघण्टिका इति क्वचित् पाठ[3] ॥ १०९ ॥

[1] रणचरणा° $A_1$ [2] $B_2$ omits [3] $A_1$ adds 'चिन्नपण्डुल्पह'

**त्वक्फलकृमिरोमाणि वस्त्रयोनिर्दश त्रिपु ॥ ११० ॥**
**वाल्कं क्षौमादि फालं तु कार्पासं बादरं च तत् ।**

(वि.) त्वगिति [1]त्वक् फल कृमि. रोम च त्वक्फलकृमिरोमाणि। एतानि वस्त्रयोनय[2]। वस्त्रोत्पादनस्थाननामानि॥ दश त्रिपु। वस्त्रयोनिवाल्कफालकार्पासफाल-बादरकौशेयराङ्कवानाहतनिष्प्रवाणितन्त्रकमित्येते शब्दा त्रिपु लिङ्गेपु वर्तन्त इत्यर्थ।

वल्ककृततन्तुनिर्मितं वाल्कम्। क्षुमायाः[3] अतस्या विकारः क्षौमम्। फलस्य विकारः फालम्। कार्पासीफलतन्तुनिर्मितं कार्पासम्। बदराफलनिर्मितं [4]बादरम्। फलनिर्मितवस्त्रनामनी ॥ ११० ॥

[1] $K_3$ omits 4 lines [2] $W_2$ adds वस्त्राणामाच्छादनानां योनिः उपादानं [3] क्षुमा अतसी तस्याः त त्वादिनिर्मितं $K_5$ $K_6$ [4] बदरायाः फल $Pt_2$

(पा.) त्वक्फल—वस्त्रयोनि । त्वगिति वल्कम्। फल कार्पासम्। क्रिमिरिति कीट । रोमेति मेषादेर्लोम। एतानि चत्वार्यपि [1]वस्त्रयोनयः ॥ दश त्रिषु। इत पर वक्ष्यमाणकार्पासबादरकौशेयराङ्कवानाहतनिष्प्रवाणितन्त्रकोद्गमनीयपत्रोर्णमहाधनानीत्येतानि दश शब्दाः त्रिलिङ्गाः । 'धौतयुग्मं तुद्गमनीयकम्' इति वैजयन्ती (पृ १६८, श्लो १२०)। वाच्यलिङ्गमध्यपाठेनोद्गमनीयं प्रधौतवस्त्रयुगमिति गोपालितश्चीवकाण्डमध्यपाठः प्रक्षिप्तः । वाल्कं क्षौमादि। [2]वक्ष्यमाणवस्त्रजातौ[3] वल्काज्जायमानं वासः क्षौमनेत्रादि[4]। फालं तु—बादरं च तत्। फलाज्जायमानं कार्पासम्। तद्[5] बादरं च स्यात्॥ ११० ॥

[1] वस्त्रकारणम् $B_3$ [2] $A_1$ adds उपरि [3] वस्त्रजातिषु क्षौमादि वल्कः $B_3$ [4] $B_3$ omits [5] तदेव $A_1$

**कौशेयं कृमिकोशोत्थं राङ्कवं मृगरोमजम् ॥ १११ ॥**
**अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरे।**

(वि.) कौशेयमिति—[1]कृमिकोशस्येदं कौशेयम्। कृमिकोशगतमृदुतन्तुनिर्मितवस्त्रनाम ॥ रङ्क्वाख्यमृगरोमविकार[2] राङ्कवम्। मृगरोमभिर्जातं मृगरोमजम्। मृगरोमकृतवस्त्रनाम ॥ आहता क्षालनभोगच्छदा । तद्रहितत्वाद् अनाहतम्। न हन्यत इत्यनाहतम्। निर्गता प्रवाणी तन्तुवायशलाका स्मात् निष्प्रवाणि[3]। तन्त्रात् तन्तुवायशलाकादरचिरादपहृतं तन्त्रकम्। नवं च तदम्बरं च नवाम्बरम्। नूतनवस्त्रनामानि ॥ १११ ॥

[1] क्रिमि° $K_5$ $K_6$ [2] °मय $K_2$ $K_3$ [3] नितरां प्रोयते सीव्यते तन्तुजालमत्रेति $K_5$

(पा.) कौशेयं कृमिकोशोत्थम्। कीटकुलायजात[1] कौशेयं स्यात्। 'दसलि[2]'। राङ्कवं मृगरोमजम्। मेषादिलोम्न[3] उत्पद्यमानं राङ्कवं स्यात्। 'मृगमेषाद्याः पशवः,

रूढ्या तल्लोमजमपि कम्बलादिक राङ्कवम्' इति गोवर्धन । अनाहत—नवाम्बरे । नूतनवस्त्रनामानि । 'अहत तु नवाम्बरम्[4]' इति हलायुध (अ मा २ ३९५) । 'अहत निष्प्रवाणि स्यात्' इति वैजयन्ती (पृ १६८, श्लो १२०) ॥ १११ ॥

[1] °कुलायाज्जात $B_3$ [2] $B_3$ omits [3] $A_1$ adds सकाशात् [4] 'अहत स्यान्नव वास ' इति मुद्रितग्रन्थे.

**तत् स्यादुद्गमनीयं यद् धौतयोर्वस्त्रयोर्युगम् ॥ ११२ ॥**
**पत्रोर्णं धौतकौशेय बहुमूल्यं महाधनम् ।**

(वि.) तत्स्यादिति—उद्गम्यते [1]परिधानार्थमिति उद्गमनीयम् । [2]धौतवस्त्रयुगलनाम ॥ वटादिपत्रेषु क्रिमिलालोर्णाभव पत्रोर्णम्[3] । क्षालितकौशेयनाम ॥ बहु मूल्यमस्यास्तीति बहुमूल्यम । महद् धन मूल्यमस्य महाधनम्[4] । बहुमूल्यवस्तुनो नामनी ॥ ११२ ॥

[1] $Pt_2$ adds धौत प्रक्षालित वस्त्रयुग्म, उत्तरासङ्गार्थं च [2] क्षालित° $F_2$
[3] $F_2$ $Pt_2$ add पत्रे पटादिभि ऊर्णायत इति 'ऊर्णुञ् आच्छादने' [4] महाधनमत्रास्ति $Pt_2$

(पा.) तत्स्यादुद्गमनीय—युगम् । मङ्गलवस्त्रमुद्गमनीय स्यात् । अत्र युगग्रहण प्रायिकाभिप्रायमिति [1]क्षीरस्वामी (पृ १५७, श्लो ११२) । धौतशब्देनात्र मङ्गलत्व लक्ष्यते । "[2]गृहीतपत्युद्गमनीयवस्त्रा' इति कुमारसभवे (७ ११) ॥ पत्रोर्णं धौतकौशेयम् । प्रक्षालितक्रिमिकोशज पत्रोर्णं स्यात् ॥ बहुमूल्य महाधनम् । अधिकमूल्यार्हं वस्त्र महाधन स्यात् ॥ ११२ ॥

[1] 'युगमविवक्षितम्' इत्येव मुद्रितग्रन्थे (पृ १५७) [2] 'गृहीतपत्युद्गमनीयवस्त्रम्' इति तारकाख्याने $B_3$

**क्षौमं दुकूल स्याद् द्वे तु निवीतं प्रावृतं त्रिषु ॥ ११३ ॥**
**स्त्रियां बहुत्वे वस्त्रस्य दशाः स्युर्वस्त्रयोर्द्वयोः ।**
**दैर्घ्यमायाम आनाहः परिणाहो विशालता ॥ ११४ ॥**
**पटच्चरं जीर्णवस्त्रं समौ नक्तककर्पटौ ।**

(वि.) क्षौममिति—क्षुमया अतसीविशेषेण निर्मितं [1]क्षौमम्। दुकूलं रूढम्। प्रावारोत्तरासङ्गरूपेण द्विधा कूल्यत इति दुकूलम्। 'कूल आवरणे'। दुकूलनामनी॥ निवीयते स्म निवीतम्। 'वेञ् संवरणे'। प्राव्रियते स्म प्रावृतम्। 'वृञ् आवरणे'। प्रच्छादितपटनामनी॥ दश्यन्ते कण्टकादिभिः त्रुट्यन्ते दशाः। 'दंश दशने'। वस्यन्ते शिष्टैरिति वस्तयः। 'वस आच्छादने'। वस्त्रप्रान्तनामनी॥ [2]आयम्यते [3]आयामः। 'यम उपरमे'। आनह्यते आनाहः। 'णह बन्धने'। पटादिदैर्घ्यनामनी॥ परिणह्यते परिणाहः। विशालस्य भावः विशालता। विस्तारस्य नामनी॥ पूर्वं पटभूतं पटच्चरम्। पटदिति चरति स्फुटतीति वा। [4]जीर्णवस्त्रनाम॥ नजते [5]लज्जते नक्तकः। 'णज[6] व्रीडे'। लज्जायै कल्पते कर्पटः। 'कृपू सामर्थ्ये'। शिथिलतन्तुसंयोगवस्त्रनामनी ॥ ११३–१४ ॥

[1] $Pt_2$ adds क्ष्णूयते शोभनमिति, 'टुक्षु शब्दे'. [2] $F_3$, $Pt_2$ add दीर्घस्य भावः दैर्घ्यम्. [3] $D_2$ adds अनेन; इत्यादिना $Pt_2$. [4] $F_2$, $Pt_2$ add जीर्णं च तत् वस्त्रं च. [5] लज्जा जनयति $D_2$, $K_3$, $K_6$. [6] 'ओनजी व्रीडे' $D_2$, $K_6$.

(पा.) क्षौमं दुकूलं स्यात्। [1]दुकूलनामनी। 'पटावलि[2]'। द्वे तु—त्रिषु। आवृतवस्त्रनामनी। 'कप्पडमु'॥ स्त्रियां बहुत्वे—वस्त्रयोर्द्वयोः। [3]उपवीतोचितवस्त्रखण्डनामनी। 'बद्दे'॥ स्त्रियामिति रूढ्यपेक्षया स्त्रीलिङ्गनिर्देशः। वस्तय इति सामानाधिकरण्याद् बहुवचनम्[4]। 'वस्तिस्त्वस्त्री भूम्नि दशा न पण्' इति वैजयन्ती (पृ. १६९, श्लो. १३१)। अनुक्तम्—'समौ त्वञ्चलपल्लवौ'। चेलान्तनामनी। 'चरंगु'॥ दैर्घ्यम्—आनाहः। दीर्घतानामानि। 'निडुपु'॥ परिणाहो विशालता। वैपुल्यनामनी[5]। 'वेडलुपु'॥ पटच्चरं जीर्णवस्त्रम्। जरद्वस्त्रनामनी॥ समौ नक्तककर्पटौ। मलिनवस्त्रनामनी॥ ११३–१४॥

[1] $A_1$ adds °वस्त्र°. [2] $B_3$ omits. [3] अपरकर्मोपवीतनाम $A_1$. [4] $A_1$ adds °प्रयोगः. [5] वैशाल्य° $B_1$.

**वस्त्रमाच्छादनं वासश्चेलं वसनमंशुकम्॥ ११५॥**
**सुचेलकः पटोऽस्त्री ना वराशिः स्थूलशाटकः।**

(वि.) वस्त्रमिति—वस्यतेऽनेनाङ्गमिति वस्त्रम्। 'वस आच्छादने'। वासश्च। सान्तोऽयम्। वसनं च। आच्छाद्यते देहोऽनेनेति आच्छादनम्। 'छद अपवारणे'। चिल्यतेऽनेनेति चेलम्। 'चिल वसने'। अंशुभिः छाद्यमानैस्तन्तुभिः

[1]कायतीति अशुकम्। 'कै शब्दे'। वस्त्रनामानि॥ शोभनश्चासौ चेलकश्च सुचेलक। [2]पटयति देह वेष्टयति पट.। 'पट ग्रन्थे'। सुवस्त्रनाम॥ भृशमङ्ग वृणोतीति वराशि। वर श्रेष्ठ वरण वा अद्भुत इति वा। [3]स्थूलशाटीनाम॥ ११५॥

[1] $D_2$ $K_2$, $K_8$ add चिरिचिरिति [2] पटति वायुना, 'पट गतौ' $Pt_2$ [3] $F_2$, $Pt_2$ add स्थूलश्चासौ शाटकश्च स्थूलशाटक, °वस्त्र° $K_5$

(पा.) वस्त्रम्—वासश्चेलम्। [1]गौरादित्वात् (४ १ ४१) चेलीति सुभूतिटीका। वसनमशुकम्। वस्त्रनामानि॥ सुचेलक —अस्त्री स्यात्। सूक्ष्मवस्त्रनाम॥ 'अशुक सूक्ष्मवस्त्रे स्याद् वस्त्रमात्रोत्तरीययो' इति विश्वप्रकाशिकापाठाद्[2] (पृ १२, श्लो. १२३) अशुकशब्द सुचेलेऽपि स्यात्। 'सिक् स्त्री पटोऽस्त्री सिचयो वासो वसनमशुकम्' इति वैजयन्तीपाठात् (पृ १६८, श्लो ११६) पटशब्दो [3]वस्त्रसामान्येऽपि स्यात्॥ वराशि. स्थूलशाटक। स्थूलवस्त्रनाम। '[4]दोड्कोफ'॥ 'शार्दूलशम्बर[5]वराशि-शलाटुशाटी' इत्यादूष्मभेदपाठात् तालव्य॥ ११५॥

[1] चेली गौरादिरिति $A_1$ [2] वचनात् $B_3$ [3] वस्त्रनामनि $A_1$ [4] $B_3$ omits [5] शाम्बल° $A_1$

**निचोलः प्रच्छदपटः समौ रल्लककम्बलौ॥ ११६॥**
**अन्तरीयोपसंव्यानपरिधानान्यधोऽशुके।**

(वि.) निचोल इति—निचोल्यते आच्छाद्यते[1] निचोल। 'चुल[2] आवरणे'। प्रच्छाद्यतेऽनेनेति प्रच्छद। स चासौ पटश्च प्रच्छदपट। शय्यादौ प्रच्छदपटनाम॥ रमन्तेऽस्मिन्निति रल्लक। 'रमु क्रीडायाम्'। काम्यते शीतालुभिरिति[3] कम्बल। 'कमु कान्तौ'। कम्बलनामनी॥ [4]जानुनाभ्योरन्तरे भवम्[5] अन्तरीयम्। उपसंवीयतेऽनेनेति उपसव्यानम्। 'व्येञ् सवरणे'। परिधीयतेऽनेनेति परिधानम्। [6]अधोऽशुकनामानि॥ ११६॥

[1] $F_2$, $Pt_2$ add शय्यादिक [2] समुच्छ्राये $W_2$, अपवारण $K_5$ [3] उपवेशनाय $K_2$, $K_6$ [4] नाभेरन्तरे भवं $Pt_2$ [5] $K_5$ adds वस्त्र [6] $F_2$, $Pt_2$ add अध स्थितम् अशुकम् अधोऽशुकम्

(पा.) निचोल प्रच्छदपट। [1]वस्त्वन्तराच्छादकवस्त्रनामनी। 'गलिशेन'। 'येन वस्त्वन्तराच्छाद्यते। स्यूतेन वास्यूतेन वा' इति सुभूतिटीका। समौ—कम्बलौ।

रोमशाटिनामनी ॥ अनुक्तम्—'[2]झाटि स्त्री कम्बलो महान्'। दीर्घायतकम्बलनाम। 'झाटिकम्बली[3]' ॥ अन्तरीयो—अधोंऽशुके। अध प्रावृतवस्त्रनामानि ॥ ११६ ॥

[1] B₃ omits वस्त्र तर°    [2] झाटी B₃    [3] B₃ omits

**द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा ॥ ११७ ॥**
**संव्यानमुत्तरीयं च चोलः कूर्पासकोऽस्त्रियाम् ।**

(वि.) द्वाविति—[1]प्रव्रियतेऽनेनेति प्रावार। 'वृञ् वरणे'। उत्तरे ऊर्ध्वाङ्गे आसज्यत इति उत्तरासङ्ग। 'षञ्ज सङ्गे'। [2]बर्हति बृहतिका। 'बृह वृद्धौ'। संवीयते ऽनेनेति सव्यानम्। 'व्येञ् सवरणे'। उत्तरे ऊर्ध्वाङ्गे भवम् उत्तरीयम्। उत्तरीयवस्त्र-नामानि ॥ चोलयति आच्छादयतीति चोल। 'चुल [3]आवरणे'। कूर्परे कफोणौ अस्यत इति कूर्पासक[4]। 'असु क्षेपणे'। कूर्पासकनामनी ॥ ११७ ॥

[1] प्राव्रियते D₂, K₆  W₂ omits 3 lines    [2] बर्हते K₅, K₆    [3] आच्छादने Pt₂
[4] कुर्पास K₅ K₆

(पा.) द्वौ प्रावारो—उत्तरीयं च। [1]उपरिप्रावरणनामानि ॥ अनुक्तम्—'जोटि-शाटी द्विखण्डक'। द्विखण्डकवस्त्रनाम। 'दुप्पटि'। 'पटी [2]स्यूत पटयुगम्'। स्यूत पटयुग पटी स्यात्। 'पछडमु' ॥ चोल—अस्त्रियाम्। कञ्चुकनामनी। 'अरचट्ट[3]' ॥ ११७ ॥

[1] उद्विर्वसननामानि A₁    [2] स्यूतांशुकयुग A₁    [3] A₁ adds स्त्रीकञ्चुकमिति च

**नीशारः स्यात् प्रावरणे हिमानिलनिवारणे ॥ ११८ ॥**
**अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमंशुकम् ।**

(वि.) नीशार इति—हिमानिलनिवारणे शीतवायुनिवारके प्रावरणे नीशार-शब्दो वर्तते। निशीर्यते निवार्यते शीताद्यनेन नीशार। 'शॄ हिंसायाम्'। शीता-[1]निलवारणवस्त्रनाम ॥ [2]वरस्त्रीणामर्धोरुकम् ऊर्वोरर्धाच्छादकमंशु[3]क चण्डातकमित्यु च्यते। चण्ड [4]गुह्यस्थानम् अतति सवृणोतीति चण्डातकम्। 'अत सातत्यगमने'। वेश्यानामर्धोरुच्छादकांशुकनाम ॥ ११८ ॥

[1] °निवारण° K₅, W₂    [2] वार° K₃    [3] °छादनक° W₂    [4] मर्गं K₆

(पा.) निशार—निवारणे। [1]शीतवातनिवारकमाच्छादन निशार स्यात्। 'गौरिवाकृतनीशार प्रायेण शिशिरीकृत' इति प्रयोगात् नीशारो दीर्घादिश्च[2]॥ अर्धोरुक—अशुकम्। उत्तमस्त्रीणामर्धोरुक वस्त्र चण्डातक स्यात्। 'चल्डमु'॥

'आधूयमानजघनस्थलपीड्यमान-
मर्धोरुक त्रुटति पुत्र तवेक्षणेन।'

इति प्रयोगादर्धोरुकशब्दस्यापि तत्पर्यायत्वम्॥ ११८॥

[1] °वातादि° $B_3$ [2] °आदिरपि $B_3$

**स्यात् त्रिष्वाप्रपदीनं तत् प्राप्नोत्याप्रपदं हि यत्॥ ११९॥**
**अस्त्री वितानमुल्लोचो दूष्याद्यं वस्त्रवेश्मनि।**

(वि.) स्यादिति—आप्रपद पादाग्रपर्यन्त प्राप्नोतीति[1] आप्रपदीनम्। वरस्त्रीणा पादाग्रलम्बिवस्त्रनाम॥ ऊर्ध्वदेशे वितन्यते वितानम्। 'तनु विस्तारे'। उपरि लोच्यत उल्लोच[2]। 'लोचृ दर्शने'। गृहान्तरे उपरिबद्धचित्रांशुकनाम॥ दूष्यते स्वतो बहिर्दशो[3] ऽनेनेति दूष्यम्। 'दुष वैकृत्ये'। आद्यशब्देन पटवासादयो गृह्यन्ते। वस्त्रवेश्मनाम॥ ११९॥

[1] $W_2$ adds व्याप्नोति [2] उल्लोच्यते उद्ग्रीवेण $D_2$ $K_2$ $W_2$ [3] बहिर्देश गमनेन $K_4$ $K_6$ $W_2$

(पा.) स्यात् त्रिषु—आप्रपद हि यत्। [1]पादाग्रमभिव्याप्य वर्तमान वस्त्रमाप्रपदीन स्यात्। अविशेषाभिधानादितरविषयमपि[2] स्यात्।

'मुक्तामय सारसनावलम्बि
भाति स्म दामाप्रपदीनमस्य।'

इति माघ (शिशु॰ ३ १०)। अनुक्तम्—'रेचनो हलिकर्ण स्यात्'। [3]गानवर्णासारपादवन्धुरनामनी। ''तास्त्रिोणमु'। 'कौपीनं मल्लमल्ल'। कौपीननामनी॥

'शिल क्लिन्नल भवेदनल्पोदर वाधितु
पय प्रसूतिपूरक विभु न धारक सारम्भम्।
अयमल्लमल्लक[5] पथि पटचर कर्पर
भजति हि मुधा[6] बुधा अदह[7] गुञ्जित गुञ्जित'॥ (वै प श्लो १)

अस्त्री—उल्लोच । विताननामनी । 'मेलुकट्टु' । 'चन्द्रोदयश्चन्द्रातपश्चन्द्रा च [8]कदरश्च स ।' एतानि च । दूष्याद्य वस्त्रवेश्मनि । दूष्यस्थूलादीनि वस्त्रगृहनामानि । 'दूष्यं स्थुल[9] पटकुटी गुणलयनी केणिका[10] तुल्या ' इति वैजयन्त्याम् (पृ १६९, श्लो १२१) अभेदेनोक्तम् ॥ ११९ ॥

[1] °अप्यतीत्य $A_1$ [2] अन्यत्रापि $B_3$ [3] वर्णिका° $A_1$ [4] $B_3$ omits
[5] मलमल्लक $B_3$ [6] मुदा $A_1$ [7] अहनि $A_1$ [8] कदक $A_1$ [9] स्थूल $A_1$
[10] श्रेणिका $A_1$

**प्रतिसीरा जवनिका स्यात् तिरस्करिणी च सा ॥ १२० ॥**
**परिकर्माङ्गसंस्कारः स्यान्मार्ष्टिर्मार्जना मृजा ।**

(वि.) प्रतिसीरेति—प्रतिसीयते प्रतिबध्यते प्रतिसीरा । 'षिञ् बन्धने' । जवते [1]प्रतिसरति जवनिका[2] । 'जुङ्गतौ[3]' । तिरस्क्रियतेऽनया तिरस्करिणी । इतरान् तिरस्करोतीति वा । [4]जवनिकानामानि ॥ मलमार्जनक्रिया परिकर्म । मालिन्यपरिमार्जनार्थं कर्म परिकर्म । अङ्गानि संस्क्रियन्तेऽनेनेति अङ्गसस्कार । मलापकर्षणव्यापारनामनी ॥ मृज्यते मलमनया मार्ष्टि । मृजा च । मार्जना च । 'मृजष् शुद्धौ' । शोभाकारयो स्नानादिकृतनिर्मलत्वनामानि[5] ॥ १२० ॥

[1] प्रसरति $K_3$ $K_5$ $W_2$ [2] $Pt_2$ adds यवनिकेति पाठे युवन्ति जना अत्रेति, 'यु मिश्रण' [3] जु सौत्रो धातु $D_2$ [4] तिरस्करिणी° $K_2$ [5] निर्मलीकरणस्य $F_2$

(पा.) प्रतिसीरा—तिरस्करिणी च सा । यवनिकानामानि । 'तेरचीर' । 'अपटी स्यात्[1] काण्डपट ' । एते द्वे च । अनुक्तम्—'[2]पर्यस्ति स्यात् परिकर पर्यङ्कश्चावसक्थिका[3]' । परिकरनामानि । 'नडिकट्टु[4]' ॥ 'अञ्चल स्त्वंशुकान्ते स्यात्' । वस्त्रान्तनाम ॥ 'नीवी सारसनश्च य ' । नीवीनामनी । परिकर्माङ्गसस्कार । अङ्गस्य स्नानोद्वर्तनादिसस्कार परिकर्म स्यात् ॥ स्यान्मार्ष्टि—मृजा । तैलाद्युपलेपननामानि । 'निमुरुट[4]' ॥ १२० ॥

[1] ना $A_1$ [2] पर्यस्तिका $A_1$, $B_3$ [3] वसक्थिका $A_1$ [4] $B_3$ omits

**उद्वर्तनोत्सादने द्वे समे आप्लाव आप्लवः ॥ १२१ ॥**

स्नानं चर्चा तु चार्चिक्यं स्थासकोऽथ प्रबोधनम् ।
अनुबोधः पत्रलेखा पत्राङ्गुलिरिमे समे ॥ १२२ ॥

(वि.) उद्वर्तनमिति—उद्वर्त्यतेऽनेनाङ्गमिति उद्वर्तनम् । 'वृतु वर्तने'। उत्साद्यते शरीरमलमनेन उत्सादनम्[1] । मलापकर्षणद्रव्यनामनी ॥ आप्लवति शरीरमलमनेनेति आप्लावः । आप्लवश्च । 'प्लुङ् गतौ' । स्नात्यनेन स्नानम् । 'ष्णा शौचे' । स्नाननामानि ॥ चर्च्यते भूत्याद्यङ्गमिति चर्चा । 'चर्च अध्ययने' । चर्चिकायां[2] साधु चार्चिक्यम् । चिरं तिष्ठतीति स्थासकः । 'ष्ठा गतिनिवृत्तौ' । गजाद्यङ्गकृतपाणिप्रतिबिम्बनामानि ॥ प्रबोध्यते [3]गन्धादिकमनेनेति प्रबोधनम्[4] । अनुबुध्यतेऽनेनेति अनुबोधः । 'बुध अवगमने' । कुङ्कुमादिगन्धाभिव्यञ्जकतैलादिकनामनी[5] ॥ पत्राकारा लेखा पत्रलेखा । पत्राद्याकृतिलेखने अङ्गुल्याकृतिरपि कपोलादौ भवतीति पत्राङ्गुलिः । पत्ररेखानामनी ॥ १२१–२ ॥

[1] $K_5$ adds 'षद्लृ विशरणे'. [2] $D_2$, $K_5$, $K_6$ add चर्चने. [3] $F_2$, $Pt_2$ add कुङ्कुमादि. [4] अनुबोधश्च $K_5$, $K_6$. [5] अभिरञ्जक° $W_2$.

(पा.) उद्वर्तन—द्वे समे । क्लीबे । अङ्गलिप्ततैलाद्यपाकरणनामनी ॥ आप्लावः—स्नानम् । स्नाननामानि । 'मज्जनं चाभिषेकश्च' । एते द्वे च ॥ चर्चा तु—स्थासकः । हस्तन्यस्तकुङ्कुमादिच्छटानामानि ॥ अनुक्तम्—'अङ्गरागोऽनुलेपनम्' । उपलेपननामनी । '[1]मेयिपूंत' ॥ अथ प्रबोधनमनुबोधः । अव्यक्तापूर्वसौरभव्यक्तीकरणनामनी ॥ पत्रलेखा—इमे समे । स्तनकपोलादौ [2]कस्तूरिकादिविरच्यमानभक्तिविशेषनामनी ॥ 'पत्रवल्ली पत्रभङ्गः' । एते द्वे च ॥ १२१–२ ॥

[1] $B_2$ omits. [2] आदिभिः $B_2$.

तमालपत्रतिलकचित्रकाणि विशेषकम् ।
द्वितीयं च तुरीयं च न स्त्रियामथ कुङ्कुमम् ॥ १२३ ॥
काश्मीरजन्माग्निशिखं वरं बाह्लीकपीतने ।
रक्तसंकोचपिशुने धीरं लोहितचन्दनम् ॥ १२४ ॥

(वि.) तमालपत्रमिति—तमालपत्राकृतित्वात्[1] तमालपत्रम् । तिलति स्निह्यतीति तिलकम् । 'तिल स्नेहने' । चित्रयतीति चित्रकम् । 'चित्र चित्रीकरणे[2]' । विशिनष्टि

[3]शोभादिना विशेषकम्। 'शिष्ट्ट विशेषणे'। तिलकनामानि ॥ अत्र द्वितीय पद तिलक तुरीय चतुर्थं पद विशेषक च न स्त्रियाम्। पुनपुसकयोर्वर्तते इत्यर्थः॥ शुष्कदशाया कुम् इति कौति शब्द करोतीति कुङ्कुमम्। 'कु शब्दे'। काश्मीरदेशे[4] जन्मास्यास्तीति काश्मीरजन्म। अग्निवर्णा शिखा केसरा अस्येति अग्निशिखम्। व्रियते सेव्यते जनैरिति वरम्। 'वृञ् [5]सभक्तौ'। वाह्लीकदेशे भव वाह्लीकम्। पीतयति [6]वस्त्रमिति पीतनम्। [7]रक्तवर्णं [8]सकोचमत्र रक्तसकोचम्। गन्धेन सूचयतीति पिशुनम्। गन्धस्य सूचकत्वाद्वा। दधाति धीयते वा धीरम्। 'डुधाञ् धारणपोषणयो'। स्थिरमिति पाठे स्थिरगन्धत्वात् स्थिरम्। लोहितवर्णोऽस्यास्तीति लोहितम्। चन्दयतीति चन्दनम्। लोहितमिव चन्दन लोहितचन्दनम्। कुङ्कुमाख्यगन्धद्रव्यनामानि ॥ १२३–४ ॥

[1] °साम्यात् $D_2$, $K_3$, $K_6$ [2] वैचित्र्यकरणे $K_5$, $W_2$ [3] शोभा $K_5$, $K_6$ [4] °राख्य° $K_3$, $K_5$ [5] वरणे $W_2$ [6] चन्दनादिक $F_2$, $Pt_2$ [7] रक्त सकोचपिशुनमिति वा पाठ $F_2$, $Pt_2$ [8] आत्मन सकोच पिंशति सूचयतीति सकोचपिशुनम् $F_2$, $Pt_2$

(पा.) तमालपत्र—विशेषकम्। तिलकनामानि। द्वितीय—न स्त्रियाम्। अत्र द्वितीयतुरीयौ[1] तिलकविशेषकशब्दौ पुनपुसकलिङ्गौ[2] ॥ अथ कुङ्कुम—लोहितचन्दने। कुङ्कुमनामानि। 'प्रियङ्गु घुसृण वर्णम्'। एतानि त्रीणि च ॥ १२३–४ ॥

[1] $B_3$ omits [2] अस्त्रियौ $B_3$

**राक्षा लाक्षा जतु क्लीबे यावोऽलक्तो द्रुमामयः।**
**लवङ्गं देवकुसुमं श्रीसञ्ज्ञमथ जायकम्॥ १२५ ॥**
**कालीयकं च कालानुसार्यं चाथ समार्थकम्।**
**वंशकागुरुराजार्हलोहक्रिमिजजोङ्गकम् ॥ १२६ ॥**

(वि.) राक्षेति—[1]अग्निन रक्षतीति राक्षा। 'रक्ष पालने'। कुङ्कुमवत् लक्ष्यते लाक्षा। जायते [2]वृक्षेष्वेव जतु। 'जनी प्रादुर्भावे'। क्लीबे वर्तते। यौति वस्त्रादिनेति [3]याव। 'यु मिश्रणे'। अलति पादम् [4]अलक्त। 'अल भूषणादौ'। द्रुमस्य आमयो द्रुमामय। लाक्षानामानि॥ लूयते छिद्यते लवङ्गम्। 'लूञ् छेदने'। देवकुसुमद्युतियोगाद् देवकुसुमम्[5]। श्रियो सञ्ज्ञास्य[6] श्रीसञ्ज्ञम्। लवङ्गनामानि॥ जयति गन्धान्तरमिति जायकम्। [7]कालवर्णोऽस्यास्तीति कालेयकम्। कालीयकमिति वा पाठ। कालवर्णमनुसरतीति कालानुसार्यम्। कृष्णवर्णगन्धद्रव्यविशेषनामानि॥ वंशवत् लघुत्वात् [8]वंशकम्। न गुरु अगुरु। राज्ञामर्हं राजार्हम्। लोहवर्णोऽस्यास्तीति लोहम्[9]।

क्रिमिभिर्जन्यते[10] कृमिजम्। 'जनी प्रादुर्भावे'। [11]जोङ्गपर्वते भवं जोङ्गकम्। अगुरुनामानि ॥ १२५–६ ॥

[1] प्रणिन $W_2$ [2] द्रुमेष्विति $K_2$, $K_3$ [3] कालेन यातीति $K_5$, $K_6$
[4] अलक्तक $D_2$, $K_6$, $W_2$, अलति पादादिकम् अलं, अनक्ति वस्त्रादिकम् अक्तं। अलक्षासावक्तश्च $Pt_2$ [5] देवानां प्रियं कुसुमं $F_2$, $Pt_2$ [6] $D_2$ $K_2$, $W_2$ add नामानि
[7] काल्वर्णेन अनुसार्यं $Pt_2$ [8] वन्यते याच्यते $F_2$, $Pt_2$ [9] लोहवर्णत्वात् $F_2$, $Pt_2$
[10] जम्यते, 'जमु अदने' $D_2$ $W_2$, $Pt_2$ [11] जोङ्गकाख्यगिरिभवं $F_2$, $Pt_2$

(पा.) लाक्षा राक्षा—द्रुमामय। जतुनो नामानि। '[1]लक्ष' ॥ लवङ्ग—श्रीसञ्ज्ञम्। लवङ्गनामानि ॥ अथ जायक—कालानुसार्यं च। [2]कालीयकाख्यगन्ध[3]द्रव्यनामानि। कालेयकमिति कालीयकमिति चोभयथा पाठ। 'कालीयकं च कालेयं वर्णकं कान्तिदायकम्' इति व्याडि ॥ अथ समार्थक—क्रिमिजजोङ्गकम्। अगरुनामानि ॥ '[4]वनमाय काकतुण्ड'। एते द्वे च ॥ १२५–६ ॥

[1] $B_2$ omits [2] गारेयाख्य° $A_1$ [3] ग-धकाष्ठ° $B_3$ [4] वनामल $A_1$

**कालागुर्वगुरु स्यात् तन्मङ्गल्यं मल्लिगन्धि यत्।**
**यक्षधूपः सर्जरसो रालसर्वरसावपि ॥ १२७ ॥**
**बहुरूपोऽप्यथ वृकधूपकृत्रिमधूपके।**

(नि.) कालागुर्विति—कालवर्णं च तदगुरु च कालागुरु। कालागुर्वथ [1]अगुरु। [2]कालागरुनामनी ॥ यत् कालागुरु मल्लिकागन्धि तन्मङ्गल्यमित्युच्यते। मङ्गले साधु मङ्गल्यम्। मल्लिकापुष्पपरिमलोऽत्र मल्लिगन्धि। श्वेतागरुनामनी ॥ यक्षप्रियो धूपो यक्षधूप[4]। सर्जवृक्षस्य [5]रस सर्जरस। राति प्रीतिं ददातीति [6]राल। 'रा दाने'। सर्वो रसो गन्धोऽत्र सर्वरस। बहुविधं रूपं [7]स्वभावोऽस्य बहुरूप। सर्जरसनामानि ॥ वृणोति विश्वमिति वृक सूर्य, तत्प्रियो धूप [8]वृकधूप। [9]कृत्रिमश्चासौ धूपश्च कृत्रिमधूप। दशाङ्गधूपनामनी ॥ १२७ ॥

[1] अगर्विति पाठे अगं पर्वतं रूपत अगरु। 'रु शब्दे' $D_2$, $K_2$, $K_3$, $W_2$ [2] कृष्ण° $K_2$, $K_3$, $W_2$ [3] मङ्गल्योग्य $K_5$, $K_6$ [4] यक्षान् धूपयति, 'धूप सन्तापे' $K_2$, $K_5$, $K_6$ [5] निर्यास $K_2$ $K_6$, $W_2$ [6] अराल इति पाठे अर्यते प्राप्यते अराल। 'ऋ गतौ' $Pt_2$ [7] $W_2$ adds गन्ध [8] वृकस्य प्रियः $K_2$, $K_5$, $K_6$, $W_2$
[9] $F_2$, $W_2$ add कृन्दा (करणेन $Pt_2$) निर्मित कृत्रिम

(पा.) कालागर्वगरु[1] स्यात् ।[2]कृष्णमगरु अगरु स्यात् । तद् मङ्गल्या मल्लिगन्धि यत् । मल्लिकाकुसुमवासनागरु मङ्गल्या[3] स्यात् ॥ यक्षधूपः—बहुरूपोऽपि । सर्जरसनामानि ॥ [4]अरालेत्यपि पदभङ्गः । 'अरालः सर्जजे[5] वक्रे' इति रभसकोशः ॥ अथ वृकधूप—धूपकौ । दशाङ्गादिधूपनामानि ॥ १२७ ॥

[1] अगुरु $B_3$ [2] कृष्णागुरुनामानि $B_3$ [3] मङ्गल्यम् $B_3$. [4] $A_1$ adds सर्जरस°. [5] सर्जजे $A_1$

**तुरुष्कः पिण्डकः सिल्हो यावनोऽप्यथ पायसः ॥ १२८ ॥**
**श्रीवासो वृक्षधूपोऽपि श्रीवेष्टसरलद्रवौ ।**

(वि.) तुरुष्क इति—तुरुष्कदेशे भवः तुरुष्कः । [1]पिण्डाकारत्वात् पिण्डकः । सिल्यते उच्छीयते सिल्हः । 'षिल उञ्छे[2]' । यवनदेशे तुरुष्कदेशे भवो यावनः । सल्लकीत्वगादिना सपादितस्य धूपस्य नामानि ॥ [3]देवदारुपयसो विकारः पायसः । [4]श्रियो वासः श्रीवासः । वृक्षाज्जातो धूपः [5]वृक्षधूपः । श्रिया वेष्टयते श्रीवेष्टः । 'वेष्ट वेष्टने' । सरलस्य[6] देवदारुणो[7] द्रवः निर्यासः सरलद्रवः । देवदारुनिर्यासकृतधूपनामानि ॥१२८॥

[1] पिण्डीक्रियते $K_2$, $K_3$, $W_2$ [2] उञ्छः उञ्चयन ($Pt_2$) अवदान $W_2$ [3] $Pt_2$ adds सरल°. [4] $Pt_2$ adds सौभाग्यहेतुत्वेन [5] वृकधूप इति पाठे वृकस्य मानोर्धूपः $D_2$, $W_2$ [6] $K_3$, $W_2$ add °वृक्ष° [7] $F_2$, $Pt_2$ omit

(पा.) तुरुष्क—यावनोऽपि । यवनदेश्यधूपद्रव्यनामानि । '[1]चिल्लमङ्कि' ॥ अथ पायसः—श्रीवेष्टसरलद्रवौ । [2]सरलद्रवाख्यधूपद्रव्यनामानि । [3]भाषायां 'पालमङ्कि' ॥ १२८ ॥

[1] $A_1$ adds आन्ध्रभाषया. [2] सरलधूप° $A_1$ [3] $B_3$ omits

**मृगनाभिर्मृगमदः कस्तूरी चाथ कोलकम् ॥ १२९ ॥**
**कक्कोलकं कोशफलमथ कर्पूरमस्त्रियाम् ।**
**घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका ॥ १३० ॥**

(वि.) मृगनाभिरिति—मृगनाभिभवत्वाद्[1] मृगनाभिः । मृगस्य मदो मृगमदः । कस्तूरी मृगविशेषः, तत्सम्बन्धित्वात् कस्तूरी । [2]कस्तूरिकानामानि ॥ कोलं बदरीफलं,

तत्सदृशत्वात् कोलकम्। कक्कन्तेऽनेति कक्कोलकम्। 'कक लौल्ये'। तक्कोलकमिति वा पाठ। कोशे शिम्ब्या फलानि बीजान्यस्य कोशफलम्। [3]तक्कोलनामानि॥ कल्पते सुखाय कर्पूरम्[4]। 'कृपू सामर्थ्ये'। घनसार वर्षोपल तस्येव शैत्यमस्यास्तीति [5]घनसार। [6]चन्द्रस्य सञ्ज्ञा नामान्यस्य सन्तीति चन्द्रसञ्ज्ञ। सिताभ्रवत् शौक्ल्ययोगात् सिताभ्र। हिमा च सा वालुका च हिमवालुका। कर्पूरनामानि॥ १२९–३०॥

[1] °नाभ्या भवति K₂, K₆ W₂ [2] कस्तूरी° D₂, K₂, K₅ W₂ [3] कक्कोल° W₂ [4] कर्पूर D₂, K₂, K₆ [5] शीतलत्वेन घनतुल्यसारत्वात् F₃, Pt₂ [6] Pt₂ adds आह्लादकत्वेन

(पा.) मृगनाभि—कस्तूरी च। कस्तूरीनामानि॥ कस्तूरीशब्द तन्मृगेऽपि स्यात्। 'शिवेव स्याद् गन्धमृग कस्तूरी [1]मृगपालिका' इति वैजयन्ती (पृ ६७, श्लो २५)। [2]तन्मृगाण्डेऽपि स्यात्। 'अण्डौ[3] तु तस्या कस्तूरी राजार्हं शितिचन्दनम्'। इति वैजयन्ती (पृ ६८, श्लो ३६)। अथ कोलक—कोशफलम्। कर्कोलनामानि। कर्कोलस्थाने [4]कक्कोलतक्कोलशब्दौ पठन्ति॥ अथ कर्पूर—हिमवालुका। कर्पूरनामानि॥ '[5]स्फटिका° रेणुसारश्च'। एते द्वे च॥ १२९–३०॥

[1] मृगनाभिका A₁, B₂ [2] अस्त्यन्यपि A₁ [3] अश्री A₁ [4] कङ्कोल° A₁ [5] स्फटिक A₁, B₂

**गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्।**
**तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम्॥ १३१॥**

(वि.) गन्धसार इति—गन्धेन सारो गन्धसार। मलयशैले जात मलयज। 'जनी प्रादुर्भावे'। भद्रा श्री शोभास्यास्तीति भद्रश्री। चन्दयतीति चन्दन। 'चदि आह्लादने'। चन्दननामानि॥ मलयैकदेशे तैलपर्णाख्यगिरौ[1] भवं तैलपर्णिकम्। [2]गोशीर्षाकारपर्वते[3] भव गोशीर्षम्। हरिवर्णं चन्दन हरिचन्दनम्। पीतवर्णचन्दननामानि॥ १३१॥

[1] °शैले D₂, K₂, K₅, °पर्णिकशैले W₂ [2] K₂ omits आकार [3] मलयशृङ्ग F₃, Pt₂

(पा.) गन्धसारो—चन्दनोऽस्त्रियाम्। चन्दननामानि॥ 'श्रीखण्डश्च [1]पटीरश्च'। एते द्वे च। तैलपर्णिक—हरिचन्दनमस्त्रियाम्। पीतवर्णचन्दननामानि॥ १३१॥

[1] पाटीर A₁

**तिलपर्णी तु पत्राङ्गं रञ्जनं रक्तचन्दनम् ।**
**कुचन्दनं चाथ जातीकोशजातीफले समे ॥ १३२ ॥**

(वि.) तिलपर्णीति—तिलपर्णाख्यनद्यां भवा[1] [2]तिलपर्णी । पत्रम् अङ्गं प्रयोजनमस्येति [3]पत्राङ्गम् । रञ्जयतीति रञ्जनम् । 'रञ्ज रागे' । रक्तं च तत् चन्दनं च रक्तचन्दनम् । कौ भुवि जातं चन्दनं कुचन्दनम्[4] । लोहितचन्दननामानि ॥ जात्या लताविशेषस्य कोशं जातीकोशम् । जात्या फलं जातीफलम् । [5]जातीफलनामनी ॥ १३२ ॥

[1] भवति $W_2$.　[2] तिलस्येव पर्णा-यस्य $F_2$, $Pt_2$.　[3] पत्रे मकरिकापत्रे अङ्गति $F_2$, $Pt_2$.　[4] निर्गन्धत्वेन कुत्सितं चन्दनं $Pt_2$.　[5] 'जाजिकायपेल्लु' $K_3$

(पा.) तिलपर्णी तु—कुचन्दनं च । [1]रक्तचन्दननामानि ॥ अथ जातीकोश—समे । जातीफलनामनी । 'जाजिकाय' ॥ १३२ ॥

[1] $B_1$ adds कुचन्दनं च पत्राङ्ग इति रभसः.

**कर्पूरागरुकस्तूरीकक्कोलैर्यक्षकर्दमः ।**
**गात्रानुलेपनी वर्तिर्वर्णकं स्याद्विलेपनम् ॥ १३३ ॥**
**चूर्णानि वासयोगाः स्युर्भावितं वासितं त्रिषु ।**

(वि.) कर्पूरेति—यक्षाणां कर्दमवत् [1]सुलभत्वाद् यक्षकर्दमः । कर्पूरागरुकस्तूरीतकोलैः [2]मिश्रीकृतसुगन्धद्रव्यनाम[3] ॥ गात्रमनुलिप्यतेऽनया गात्रानुलेपनी[4] । 'लिप उपदेहे' । [5]वर्तते गात्रमनया वर्तिः । सुगन्धिवर्तिनामनी ॥ वर्णयति देहं [6]वर्णकम् । 'वर्ण स्तुतौ' । विलिप्यते गात्रमनेनेति विलेपनम्[7] । 'लिप उपदेहे' । चन्दनादिलेपनामनी ॥ चूर्ण्यन्त इति चूर्णानि । 'चूर्ण पेषणे' । वासाय सुरभीकरणाय युज्यन्त इति वासयोगाः । 'युजिर् योगे' । [8]सर्ववासनायोगनाम ॥ भाव्यते [9]कस्तूर्यादिनेति भावितम् । 'भुवो अवकल्कने' । वास्यते सुगन्धेन वासितम् । 'वस स्नेहमोहच्छेदापहरणेषु' । सुगन्धवासितद्रव्यनामनी ॥ १३३ ॥

[1] आर्द्रत्वात् कर्दमतुल्यत्वाच $F_2$, $Pt_2$.　[2] मिश्रित° $W_2$　[3] सुगन्धि° $D_2$, $K_2$.　[4] °लेपिनी $K_3$.　[5] $K_3$ omits five lines, वर्त्यते श्लक्ष्णीक्रियते, 'वृतु वर्तने' $F_2$, $Pt_2$.　[6] वर्णान्तरं करोति $F_2$, $Pt_2$.　[7] विलिप्यतेऽनेन विलेपनम् इति वा पाठः $W_2$.　[8] वासन° $K_2$, $K_3$.　[9] सुरभिद्रव्यैः $Pt_2$.

(पा.) कर्पूरागरु—यक्षकर्दमः। कर्पूरादिचतुष्टयसिद्धः कर्दमो यक्षकर्दमः स्यात्।

'कर्पूरागरुकस्तूरीकर्कोलघुसृणानि च।
एकीकृतमिदं सर्वं यक्षकर्दममिष्यते॥'

इति ([1]व्याडिः)

'कर्पूरागरुकस्तूरी कुङ्कुमं चन्दनं तथा।
महासुगन्धमित्युक्तं नामतो यक्षकर्दमः॥'

इति (ध. नि. ७. २८)। अत्र कर्कोलस्थाने कुङ्कुमचन्दने भवतः[2]। गात्रानुलेपनी वर्तिः। अनुलेपनतूलिकानाम॥ वर्णकं स्याद् विलेपनम्। अनुलेपनद्रव्यनाम॥ अनुक्तम्—'उपला तु दृषत्पुत्री'। कस्तूर्यादिघर्षणोपलनाम॥ चूर्णानि वासयोगाः स्युः। गन्धयुक्ता वक्ष्यमाणवासनयोगाश्चूर्णशब्दवाच्याः। 'अल्पेषु चमूरेणुश्चूर्णप्रतिनिधिः[3] कृतः' इति (रघु. ४. ५४)। बहुवचनेन[4] ते बहुविधाः।

'चन्दनं कुङ्कुमं तुल्यं वरार्घमभिधीयते।
त्रिभागकुङ्कुमं यत्र तदुक्तं नात्यपुष्पकम्॥
त्रिसुगन्धमिति ख्यातं त्वगेलापत्रकैस्त्रिभिः।
[5]चातुर्जातं तदेव स्यान्नागकेसरसंयुतैः॥
सर्वगन्धमिदं सिन्धुकर्कोलागरुसिह्लकम्॥'

इत्यादि॥ भावितं वासितं त्रिषु। गन्धमाहितस्य वस्तुनो नामनी॥ १३३॥

[1] व्याडिरिति टीकासर्वस्वे (पृ. ३८५). [2] स्याताम् $A_1$. [3] प्रतिनिधी° $A_1$.
[4] $A_1$ adds ग्रहण°. [5] चतुर्जातम् $B_1$.

**संस्कारो गन्धमाल्याद्यैर्यः स्यात् तदधिवासनम्॥ १३४॥**
**माल्यं मालास्रजौ मूर्ध्नि केशमध्ये तु गर्भकः।**

(वि.) संस्कार इति—गन्धमाल्यधूपाद्यैः वस्त्रताम्बूलादीनां यः संस्कारः तदधिवासनमित्युच्यते। अधि अधिकं वास्यतेऽधिवासनम्। गन्धपुष्पादिकृतसंस्कारनाम॥ मल्यते धार्यते इति माल्यम्। 'मल मल्ल धारणे'। मालैव वा। मल्यते केशेषु माला। सृज्यते रच्यते क्रमबन्धेन स्रक्। 'सृज विसर्गे'। [1]तन्तुबद्धकुसुमकलापनामानि॥ [2]गर्भे अन्तः ध्रियत इति गर्भकः। केशमध्यस्थमाल्यनाम॥ १३४॥

[1] °दाम° $K_2$, $K_1$. [2] $Pt_2$ adds केशमध्ये मध्यभावेन स्थितत्वात्.

(पा.) संस्कारो—अधिवासनम्। गन्धमाल्यादिभिः क्रियमाणो वस्त्रकेशादिसंस्कारो यस्तदधिवासनं [1]स्यात्। तदिति विधेयप्राधान्येन नपुंसकलिङ्गनिर्देशः। अधिवासना च स्यात्। 'संस्कारो [2]गन्धमाल्याद्यैर्यस्तदधिवासनम्[3]' इति वैजयन्ती (पृ. १७१, श्लो. १५६)॥ माल्यं—मूर्ध्नि। शिरसि निक्षिप्तमालानामानि। '[4]स्रग्माला माल्यमाख्यातम्[5]' इति हलायुधः (अ. मा. २. ३९७)॥ केशमध्ये—गर्भकः। शिरोरुहान्तरनिक्षिप्तः सरो गर्भकः स्यात्॥ १३४॥

[1] इत्युच्यते $A_1$.　[2] °धूपाद्यैः इति मुद्रितग्रन्थे.　[3] न पुमान् $B_3$.　[4] स्रङ्माला $A_1$, $B_3$.　[5] $A_1$, $B_3$ add इति सामान्ये.

**प्रभ्रष्टकं शिखालम्बि पुरोन्यस्तं ललामकम्॥ १३५॥**
**प्रालम्बमृजुलम्बि स्यात् कण्ठाद्वैकक्षकं तु तत्।**
**यत् तिर्यक् क्षिप्तमुरसि शिखास्वापीडशेखरौ॥ १३६॥**

(वि.) प्रभ्रष्टकमिति—केशमध्यात् प्रभ्रष्टं प्रभ्रष्टकम्। [1]शिखालम्बिमाल्यनाम॥ ललाटे ललतीति ललामकम्। 'लल विलासे'। मुक्ताजालवद्भासमानललाटपरिरचितमाल्यनाम॥ प्रालम्बत इति प्रालम्बम्। 'लबि [2]लम्बने'। कण्ठादार्जवेनोरसि [3]लम्बमानमाल्यनाम॥ कक्षाद् विगतं विकक्षं, उरःस्थलं पृष्ठभागश्च। तत्र वर्तमानं वैकक्षकम्। यज्ञोपवीतवद् उरसि तिर्यक्क्षिप्तमाल्यनाम[4]॥ आपीड्यते दृढबन्धेन आपीडः। 'पीड अवगाहने'। शिखरं शिरोऽग्रं, तस्यायमिति शेखरः। शिङ्क्ति[5] धारणस्थानाद् अपसर्पतीति वा शेखरः। 'शिखि गतौ'। विवाहादौ [6]ललाटयोग्यकुसुमदामनामनी॥ १३५–६॥

[1] °मध्यप्रभ्रष्टत्वात् $K_2$, $K_5$, $K_6$.　[2] आलम्बने $K_2$, $K_6$.　[3] ऋजुलम्बिमालानाम $K_5$, $K_2$.　[4] °विक्षित° $W_2$.　[5] शेते $W_2$, शेरते $K_2$, $W_2$ adds 'शीङ् स्वप्ने.'　[6] $K_3$ adds °धृत°.

(पा.) प्रभ्रष्टकं शिखालम्बि। शिखायां [1]लम्बमानं माल्यं प्रभ्रष्टकं स्यात्। '[2]जारुदण्ड'॥ पुरो—ललामकम्। पुरोभागे विन्यस्तत्रिमूलकुड्मलस्रग् ललामकं स्यात्। '[3]सूसकमु'॥ प्रालम्बं—कण्ठात्। गलादृजुतया [3]लम्बमानमाल्यं प्रालम्बं स्यात्। 'नेयव्मु'॥ [4]वैकक्षकं—क्षिप्तमुरसि। उत्तरीयवद्[5] वक्षसि निक्षिप्तस्रग् वैकक्षकं[4] स्यात्॥ शिखासु—शेखरौ। शिरःपुरःक्षिप्तशुभिकास्रजो नाम[6]। '[7]वाशिकदण्ड'॥ १३५–६॥

[1] भ्रश्यमानतया निक्षिप्त $A_1$. [2] $B_3$ omits. [3] लम्बनमाल्यं $A_1$. [4] वैकक्ष्यकं $A_1$ [5] उत्तरीयतया $A_1$. [6] आपीडः शेखरश्चेत्युच्यते $A_1$. [7] वासिक° $B_3$.

**रचना स्यात् परिस्पन्द आभोगः परिपूर्णता ।**
**उपधानं तूपबर्हः शय्यायां शयनीयवत् ॥ १३७ ॥**
**शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः ।**

(वि.) रचनेति—रच्यते रचना । 'रच प्रतियत्ने' । परितः स्पन्दः शरीरव्यापारः परिस्पन्दः । 'स्पदि किंचिच्चलने' । [1]माल्यादिविविधरचनानामनी ॥ आभुज्यतेऽनेन[2] आभोगः । 'भुज पालनाभ्यवहारयो.' । [3]रचनापरिपूर्णतानाम ॥ उपधीयते शिरोऽत्र उपधानम् । 'डुधाञ् धारणपोषणयोः' । उपबृह्यत उन्नम्यते शिरोऽत्रेति [4]उपबर्हः । 'बृहि वृद्धौ' । [5]तूलगर्भितवस्त्रादिरचितशिरोऽवस्थानस्थाप्यनामनी ॥ शेतेऽ[6]त्र शय्या । शयनीयं च । शयनं च । 'शीङ् स्वप्ने' । शय्यानामानि ॥ [7]मञ्च्यते धार्यते [8]नरोऽनेन मञ्च. । 'मचि धारणोच्छ्रायपूजनेषु' । परितोऽङ्क्यते [9]उपभोगादिना लक्ष्यत इति पर्यङ्कः । 'अकि लक्षणे' । पल्यङ्कश्च । रलयोरभेदात् । [10]खट्यते काङ्क्ष्यते खट्वा । 'खट काङ्क्षायाम्' । खट्वानामानि ॥ १३७ ॥

[1] माल्याना $K_2$, $W_2$ [2] $K_5$, $K_6$ omit. [3] $Pt_2$ adds वस्तुनो गुणादेर्वा परिपूर्णता समग्रत्व [4] उपबर्हणं $D_2$, $K_6$. [5] माला $K_5$, $K_6$ [6] अस्या- मिति $F_2$, $Pt_2$. [7] मञ्चते $D_2$. [8] शिरः $K_5$. [9] भूष्यते $K_3$, $K_5$, $K_6$. [10] खट्यतेना $K_5$, $K_6$.

(पा.) रचना—परिस्पन्दः[1] । माल्यादिनिर्माणनामनी ॥ 'प्रतियत्नः परिस्पन्दः पुमांसौ रचना स्त्रियाम्' इति [2]केषांचिद्रचना माल्यादिनिर्माणम् ।

'[3]ग्रन्थनं ग्रन्थनं गुम्फः सदर्भो रचना [4]न ना ।
परिवारः परिजन.[5] परिस्पन्दः परिग्रहः ।
तथोपकरणं प्रोक्तं परिबर्हः परिच्छद. ॥'

परिस्पन्दो दर्पणाद्युपकरणमिति केचित् ॥ आभोगः परिपूर्णता । पूर्णत्वनाम ॥ उपधानं तूपबर्ह.[6] । शिर-परिबर्हनामनी । 'वल्गाड' । अनुकम्—'गभोलि. स्त्री स्नस्क.[7] प्रर्मायो मत्तवारणः' । मत्तवारणनामानि । 'चोकु' ॥ शय्यायां—शयनम् । [8]शयनक्रियानामानि । शयनशब्द उत्तरपर्यायलिङ्गसापेक्षोऽपि स्यात् । 'शय्यायां शयनं

न स्त्री निद्रासुरतयोर्न पुम्' इति वैजयन्ती (पृ २६३, श्लो ८५)॥ मञ्चपर्यङ्क—समा[1]। मञ्चनामानि ॥ १३७ ॥

[1] परिस्पन्द A₁　[2] माल्यादिनिर्माणमिति केचित् B₃　[3] श्रथन A₁, B₃
[4] मता A₁, B₃　[5] परिकर A₁　[6] उपबर्हम् A₁　[7] स्तवरक A₁
[8] शय्यानामानि A₁

**गेन्दुकः कन्दुको दीपः प्रदीपः पीठमासनम् ॥ १३८ ॥**
**समुद्गकः सपुटकः प्रतिग्राहः पतद्ग्रहः ।**

(वि.) गेन्दुक इति—[1]गगने इन्दुरिव भातीति गेन्दुक । क शिरो दुनोतीति कन्दुक । 'टुदु [2]उपतापे'। कन्दुकनामनी॥ दीप्यत इति दीप । प्रदीपश्च । 'दीपी दीप्तौ'। दीपनामनी ॥ पिठ्यते सश्लिष्यत इति पीठम्[3]। 'पिठ हिसाक्लेशनयो'। आस्तेऽत्रेत्यासनम्। 'आस उपवेशने'। पीठनामनी॥ सम्यगुद्गच्छतीति समुद्गक । 'गम्लृ गतौ'। सपुच्यते पिधानेन सपुटक । 'पुट सश्लेषणे'। कस्तूर्याद्यावपनार्थं निर्मितकरण्डादेर्नामनी॥ [4]प्रतिगृह्णातीति प्रतिग्राह । पतत्ताम्बूलादिक गृह्णातीति पतद्ग्रह । 'ग्रह उपादाने'। चर्विततताम्बूलनिक्षेपार्थं निर्मितपात्रनामनी ॥ १३८ ॥

[1] W₂ adds के　[2] परितापे K₆　[3] पीठ्यते 'पीठ सश्लेषणे' Pt₂
[4] F₂ Pt₂ add चर्वित ताम्बूलादिक

(पा.) [1]गेन्दुक कन्दुक । कन्दुकनामनी । 'चेण्डु वन्दु'। अनुक्तम्—'क्रीडादुरो [2]गिरियक'। 'अबनगायलु'। दीप प्रदीप । दीपनामनी ॥

'दीपो गृहमणिर्वर्तिर्दीपवृक्ष [3] शिखातरु ।
वर्तिर्दशा दीपवली दीपिकाञ्जनकज्जले ॥'

इत्यन्यत्र साङ्गाभिधानम् ॥ पीठमासनम् । पीठनामनी ॥ समुद्गक सपुटकः। [4]आभरणादिपेटिकानामनी ॥ प्रतिग्राह पतद्ग्रह । कलाचिकानामनी । 'पडिगेमु'॥ १३८ ॥

[1] गण्डुक A₁　[2] गिरीयक B₃　[3] वर्ती A₁　[4] भूषणादि° B₃.

**प्रसाधनी कङ्कतिका पिष्टातः पटवासकः ॥ १३९ ॥**
**दर्पणे मुकुरादर्शौ व्यजनं तालवृन्तकम् ।**

इति मनुष्यवर्गः

(लि.) प्रसाधनीति—प्रसाध्यन्ते [1]केशा अनयेति प्रसाधनी । '[2]साध संसिद्धौ'। केशेषु[3] कङ्कते कङ्कतिका। 'ककि गतौ'। केशविशोधकस्य[4] दन्तमयस्य[5] नामनी ॥ पिष्टभावम् अततीति पिष्टात.। 'अत सातत्यगमने'। [6]पट वासयतीति पटवास.। [7]हरितालादिचूर्णनामनी ॥ चालनीनामनी इति केचित् ॥ दृप्यतेऽनेन सुवेषाभिमानादिति[8] दर्पण । 'दृप दृप्तौ'। मङ्क्यतेऽनेन मुकुरः। 'मकि मण्डने'। मकुर इति वा पाठ । आदृश्यते [9]रूपमत्रेत्यादर्श.। 'दृशिर् प्रेक्षणे'। दर्पणनामानि ॥ व्यज्यते श्रमोऽपनीयतेऽनेनेति व्यजनम्। 'अज गतिक्षेपणयो'। तालवृन्तवद् वृन्तमस्येति तालवृन्तकम्। व्यजननामनी ॥ १३९ ॥

इति श्रीलिङ्गयसूरिविरचितायाममरकोशपदविवृतौ मनुष्यवर्ग

[1] °ते केश $W_2$, $K_2$ adds शोध्यन्ते. [2] $D_2$, $K_6$, $Pt_2$ add राध [3] केशान्, 'कक लौल्ये' $K_5$, $K_6$ [4] शोधनकस्य $W_2$ [5] दन्तादि° $W_2$ [6] पटे वास्यते $K_5$, $K_6$, पटा वास्यन्तेऽनेन $Pt_2$ [7] वस्त्रादिवासनाद्रव्यस्य $W_2$ [8] रूपाभिमानेन $D_2$, $K_6$, $W_2$ [9] असिनाम्नः प्रतिबिम्ब $Pt_2$

(पा.) प्रसाधनी कङ्कतिका। केशसंस्कारकारिणीनामनी। 'दूवेन[1]' ॥ पिष्टात पटवासकः। धूलिगुलुच्छनामनी। 'बुकापिण्डि'॥ 'धूलिगुच्छ. समाख्यातः [2]पांशुचामरमित्यपि'। एते द्वे च ॥ दर्पणो—आदर्शौ। आदर्शनामानि। 'समुद्गीनात्मदर्शाब्दाः'। एतानि त्रीणि च ॥ व्यजन तालवृन्तकम्। व्यजननामनी ॥ वीजन जलार्द्रा चेत्येते च। 'आलावर्तं तु वस्त्रव्यजनम्'। प्रान्तस्यूतवस्त्रव्यजननाम। 'आलपट्टि'॥ 'आलावर्तं[3] तु वस्त्रेण' इति वैजयन्ती (पृ. १७१, श्लो. १५९) ॥ १३९ ॥

इति [4]श्रीवत्सनृसिंहसूरिसुतमल्लिनाथसुधीविरचितेऽमरपदपारिजाते मनुष्यवर्गः

[1] $B_1$ omits. [2] हसचामरम् $B_2$ [3] आलावर्तः इति मुद्रितग्रन्थे. [4] °नरसिंह° $A_1$.

---

## ७. ब्रह्मवर्गः

संततिर्गोत्रजननकुलान्यभिजनान्वयौ ।
वंशोऽन्ववायः संतानो वर्णाः स्युर्ब्राह्मणादयः ॥ १ ॥

(वि.) इदानीं सर्ववर्णानां संकीर्णजातीनां सामान्यसंततेर्नामानि प्रथममाह— संततिरिति। संतन्यतेऽनया संततिः। 'तनु विस्तारे'। गूयते शब्द्यते[1] गार्ग्यो वसिष्ठ इति गोत्रम्। '[2]गुङ् अव्यक्ते शब्दे'। जन्यते उत्तरोत्तरमनेनेति जननम्। 'जनी प्रादुर्भावे'। कुल्यतेऽनेन बन्धुवर्ग इति कुलम्। 'कुल संस्त्याने बन्धुषु च'। अभिजन्यतेऽनेनेति[3] अभिजनः[4]। अन्वीयते संबध्यतेऽनेनेति अन्वयः। 'इण् गतौ'। वंश्यते याच्यते वंशः। 'वनु याचने'। अन्वीयते पूर्वैः परश्चेति अन्ववायः। 'इण् गतौ'। संतन्यते संतानः। 'तनु विस्तारे'। वंशनामानि॥ वर्ण्यन्ते कपिलारुणपीतकृष्णवर्णैर्निरूप्यन्त[5] इति वर्णाः[6]। 'वर्ण स्तुतौ'। ब्राह्मणक्षत्रियवैश्यशूद्राणां [7]सामान्यनाम॥ १॥

[1] संवेद्यन्ते $W_2$ [2] 'गु शब्दे $K_2$ $K_3$ $K_6$ [3] $K_5$ $K_6$ add नैरन्तर्येण [4] $D_2$ $K_2$ $W_2$ add 'जनी प्रादुर्भावे' [5] $D_2$ $K_6$ add यथाक्रमं [6] $K_2$ $W_2$, $Pt_2$ add

'कपिलाश्चारुणा पीताः कृष्णाश्चेति पृथक्पृथक्।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चेति विवक्षिताः॥

इति विष्णुपुराणे [7] $W_2$ adds चतुर्विधानां

(पा.) [1]कलकण्ठकण्ठनिनदप्रमदाभि
मुंदितान्तरङ्गमुरगेन्द्रविभूषम्।
भवभीतिभञ्जनमुमारुचिराङ्ग
कलधौतशैलनिलयं कलयामि॥

संततिः—संतानः। [2]संततिनामानि॥ वर्णाः—ब्राह्मणाद्यः। ब्राह्मणक्षत्रियवैश्यशूद्राश्चेत्येते चत्वारो वर्णशब्दवाच्याः॥ १॥

[1] $B_3$ omits the verse [2] विद्यया वा धनेन वा ख्यातवर्णपुरुषापत्यसन्ताननामानि ।

## विप्रक्षत्रियविट्शूद्राश्चातुर्वर्ण्यमिति स्मृतम्।
## राजबीजी राजवंश्यो बीज्यस्तु कुलसंभवः॥ २॥

(वि.) विप्रेति—चत्वारो वर्णा एव चातुर्वर्ण्यम्। विप्रक्षत्रियविट्शूद्राणां चतुर्विधानां नाम॥ राज्ञो बीजमस्येति राजबीजी। राजवंशे भवो राजवंश्यः। [1]राजभूतमातापितृजन्यनामनी॥ बीजे कुले भवो बीज्यः। कुले संभवोऽस्य कुलसंभवः। सत्कुलसंभवनाम॥ २॥

[1] राजमाता° $W_2$

(पा.) विप्रक्षत्रिय—स्मृतम् । त एव चत्वारो वर्णाश्चातुर्वर्ण्यमित्युच्यते ।

'ब्रह्मक्षत्रियविट्शूद्रा इति वर्णाश्चतुष्टये ।
उपवर्णास्तु संकीर्णा विवर्णास्त्वन्त्यजातय ॥'

इति वैजयन्ती (पृ ७२, श्लो २) ॥ राजबीजी राजवंश्य । राज्ञा कुले जातो राजबीजी स्यात् ॥ बीज्यस्तु कुलसंभव । [1]कुले उत्पन्नो बीज्य स्यात् । सूर्यबीज्यो [2]राम । सोमबीज्यो युधिष्ठिर ॥ २ ॥

[1] $A_1$ adds यस्य कस्यचित् [2] दाशरथि $B_2$

**माहाकुलकुलीनार्यसभ्यसज्जनसाधवः ।**
**ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये ॥ ३ ॥**
**आश्रमोऽस्त्री द्विजात्यग्रजन्मभूदेववाडवाः ।**
**विप्रश्च ब्राह्मणोऽसौ षट्कर्मा यागादिभिर्युतः ॥ ४ ॥**

(वि.) माहाकुलेति—महाकुलस्य सूर्यवंशादेरपत्य [1]माहाकुल । कुलस्यापत्य कुलीन । [2]निषिद्धकर्मकर्तृभ्य आराद् दूरात् यातीति आर्य । सभाया साधु सभ्य । सश्चासौ जनश्चेति सज्जन । [3]साध्नोति धर्ममिति साधु । 'साध[4] संसिद्धौ' । सद्वंशजनामानि ॥ ब्रह्म वेद, [5]तदध्ययननियम चरतीति ब्रह्मचारी[6] । गृहमस्यास्तीति [7]गृही । प्रतिष्ठन्तेऽस्मिन्निति प्रस्थ । वने प्रस्थो वनप्रस्थ । तत्र भव वानप्रस्थ[8] । भिक्षते याचते भिक्षु । 'भिक्ष भिक्षायाम्' । अत्र चतुष्टये चतुर्णां समूहे प्रत्येकमाश्रम-शब्दो वर्तते ॥ आश्राम्यन्त्यस्मिन्निति आश्रम । 'श्रमु तपसि खेदे च' । द्वे जाती जन्मनी यस्य [9]मातृगायत्रीरूपेणेति द्विजाति । [10]अग्रे क्षत्रियादिभ्यो जन्म यस्य अग्रजन्मा । भुवि दीव्यते ब्रह्मवर्चसा भूदेव । 'दिवु क्रीडादौ' । वाडव औवोंऽग्निरिव प्रायेणातृप्त इति वाडव । विशेषेण पापेभ्य आत्मान पर च पातीति विप्र । 'पा रक्षणे' । ब्रह्मणोऽपत्य ब्राह्मण । ब्रह्मणि परब्रह्मणि निष्ठावत्त्वाद्वा । ब्राह्मणनामानि ॥ असौ ब्राह्मण यागादिभिर्युतश्चेत् षट्कर्मेत्युच्यते । यजनयाजनाध्ययनाध्यापनदान-प्रतिग्रहलक्षणानि षट्कर्माणि । तानि अस्य सन्तीति षट्कर्मा । [11]यागादिषट्कर्मयुत-ब्राह्मणनाम ॥ ३–४ ॥

[1] महाकुल इति पाठ महत् कुलमस्येति विग्रह $D_2$, $K_6$, महाकुले भव $F_3$, $Pt_3$. [2] पापकर्मभ्य $Pt_3$, [3] साध्यति $D_2$, $K_6$ [4] $K_3$, $K_6$ $Pt_2$ add राध, [5] तदध्ययनार्थं व्रतमपि वेद $Pt_2$ [6] $Pt_2$ adds स चतुर्विध । गायत्रीब्रह्मचारी,

प्राजापत्यब्रह्मचारी, वैदिकब्रह्मचारी, नैष्ठिकब्रह्मचारी च. [7] $F_2$ adds गृहाः भार्या. [8] वनप्रस्थे वनैकदेशे $Pt_2$. [9] देहोत्पत्त्युपनयनादिलक्षणे $Pt_2$. [10] ब्रह्मणो मुखे $Pt_2$. [11] $Pt_2$ adds:

> 'यजनं याजनं दानं विशिष्टाच्च प्रतिग्रहः।
> अध्यापनं चाध्ययनं विप्रकर्म प्रकीर्तितम् ॥' इति स्मृतिः.

(पा.) महाकुल—साधवः। एतानि सत्कुलप्रसूतनामानि। अनुक्तम्—'दौष्कुलेयो दुष्कुलीनः'। [1]असत्कुलप्रसूतनामनी॥ ब्रह्मचारी—आश्रमोऽस्त्री। मुञ्जमेखलादियुतो वेदाध्यायी ब्रह्मचर्यव्रतस्थितः ब्रह्मचारी। धर्मार्थकामस्थितः पञ्चमहायज्ञकारी[2] गृहस्थः स्यात्। भूमिशय्याजिनधारणवनवासवन्याहारादिलक्षणो वानप्रस्थः स्यात्। गृहीतकाषायवस्त्रदण्डो भिक्षाशी सर्वभूतसमो [3]ध्यानपरो भिक्षुः स्यात्। एते चत्वार आश्रमशब्दवाच्याः॥ द्विजात्यग्रजन्म—ब्राह्मणः। ब्राह्मणनामानि। 'एतशा[4] मुखजो मैत्रः सूत्रकण्ठश्च माहनः'। इत्येतानि पञ्च च॥ असौ षट्कर्मा—युतः। [5]यजनादिषट्कर्मयुक्तो ब्राह्मणः षट्कर्मा स्यात्।

> 'यजनं याजनं दानं विशिष्टश्च प्रतिग्रहः।
> अध्यापनं चाध्ययनं विप्रकर्म प्रकीर्तितम्॥
> स्नानं सन्ध्याजपो होमो [6]देवतानां च पूजनम्।
> आतिथ्यं वैश्वदेवं च षट् कर्माणि दिने दिने।
> जातिमात्रोपजीवी तु विप्रः स्याद् ब्राह्मणब्रुवः॥'

[7]जातिमात्रमुपजीव्य जीवति यो ब्राह्मणः स ब्राह्मणब्रुवः स्यात्॥ ३–४॥

[1] दुष्कुल° $B_3$. [2] यशकृत् $B_3$. [3] $A_1$ adds अध्ययन°. [4] एतशः $A_1$. [5] यजनादिभिः षट्कर्मभिर्युतः $A_1$. [6] स्वाध्यायः पितृतर्पणं $B_3$. [7] $A_1$ adds उचितकर्माणि परित्यज्य.

**विद्वान् विपश्चिद् दोषज्ञः सन् सुधीः कोविदो बुधः।**
**धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः॥ ५॥**
**धीमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः।**
**दूरदर्शी दीर्घदर्शी श्रोत्रियच्छान्दसौ समौ॥ ६॥**

(वि.) विद्वानिति—वेत्ति [1]सर्वमिति विद्वान्। 'विद ज्ञाने'। सान्तः[2]। विशेषेण पश्यन्[3] चेततीति विपश्चित्। 'चिती संज्ञाने'। दोषं पापादि जानातीति

दोपज्ञ । 'ज्ञा अवबोधने'। पाप स्यतीति सन्। 'षोऽन्तकर्मणि'। शोभना धीर्यस्य [4]सुधी । प्रशस्तम् ओक स्थान [5]वेत्तीति कोविद । 'विद् ज्ञाने'। अत्र प्रथमाक्षरलोप । सर्वं बुध्यतीति बुध । 'बुध अवगमने'। प्रशस्ता धिय रातीति धीर । 'रा दाने आदाने च'। विशिष्टा[6] मनीषा धीरस्त्यस्य मनीषी। जानातीति ■ । प्रकर्षेण जानातीति प्रज्ञ, प्रज्ञ एव प्राज्ञ । 'ज्ञा अवबोधने'। सख्या विचारणास्यास्तीति सख्यावान्। पण्डते शीघ्र जानातीति पण्डित । 'पडि गतौ'। सर्वे गत्यर्था ज्ञानार्था । कवते चातुर्येण वर्णयतीति कवि । 'कुङ्[7] शब्दे'। प्रशस्ता धीरस्यास्तीति धीमान्। सुवति [8]सदुपदेशेन प्रयोजयतीति सूरि । 'षू प्रेरणे'। कृत[9] सत्कृत[10] सूक्त्यादिकम स्यास्तीति कृती। कर्षति निष्कर्षतीति कृष्टि । 'कृष विलेखने'। लब्धो [11]वर्ण प्रसिद्धिरनेनेति लब्धवर्ण । विचष्टे विशेषेणाचष्टे विचक्षण । 'चक्षिङ् व्यक्ताया वाचि'। दूरादप्रत्यक्षमपि ऊहेन पश्यतीति दूरदर्शी। 'दृशिर् प्रेक्षणे'। दीर्घदर्शी[12] च। विदुषो नामानि ॥ श्रुताध्ययनसपन्न श्रोत्रिय[13] । छन्दो वेदम् अधीते वेत्ति वा छान्दस । वेदाध्येतृनामनी[14] ॥ ॥ ५–६ ॥

[1] $D_2$ $K_3$ $W_2$ omit [2] $K_3$ adds अय [3] $D_2$ $K_3$ add गहनार्थं
[4] शोमन ध्यायति $Pt_2$ [5] किं नाम न वत्ति $Pt_2$ [6] प्रशस्ता $W_2$ [7] कवृ वर्णने $K_2$ $Pt_2$
[8] प्ररयति सत्कर्मणि $F_2$ $Pt_2$ [9] कृत ज्ञानमनेन $Pt_2$
[10] सत्कृत $D_2$ $K_3$ $W_2$ [11] वर्णाना $K_2$ $K_3$ $K_5$ [12] दीर्घं पश्यतीति $F_2$ $Pt_2$
[13] श्रुतमधीते $F_2$ $Pt_2$ [14] शतृ° $W_2$

(पा.) विद्वान्। विदुषी सभा। उणादिप्रत्ययान्तविदुषशब्दात् टापि विदुषा सभा। विपश्चिद्दोषज्ञ—धीमान् सूरि । सूरि सूरी विचक्षण इत्यभिधानात् इदन्त [1]इन्नन्तश्च स्यात् । कृती—दीर्घदर्शी। विद्वन्नामानि ॥ श्रोत्रियच्छान्दसौ समौ। श्रोत्रियनामनी ॥ अनुक्तम्—'मीमासको जैमिनीये'। जैमिनीयनाम। 'वेदान्ती ब्रह्मवादिनि'। ब्रह्मवादिनाम ॥ 'नैयायिकस्त्वाक्षपाद'। अक्षपादशास्त्रज्ञनामनी ॥ 'चार्वाकलौकायतिकौ'। बौद्धविशेषस्य नामनी ॥ 'सत्कार्ये साख्यकापिलौ'। सत्कार्य वादिनो नामनी ॥ 'वैशेषिकस्तार्किक स्यात्'। वैशेषिकस्य नामनी ॥ 'सौगत शून्यवादिनि'। शून्यवादिनो नाम ॥ ५–६ ॥

[1] नान्तश्च A दूरदृक् कोविद सूरी इति रमस इति मा दी (पृ २८९)

**उपाध्यायोऽध्यापकोऽथ स निषेकादिकृद् गुरुः ।**
**मन्त्रव्याख्याकृदाचार्य आदेष्टा त्वध्वरे व्रती ॥ ७ ॥**
**यष्टा च यजमानश्च स सोमवति दीक्षितः ।**

(वि.) उपाध्याय इति—[1]उपेत्याधीयतेऽस्मादित्युपाध्यायः । 'इङ् अध्ययने' । अध्यापयतीत्यध्यापकः । [2]उपाध्यायनामनी ॥ गृणाति गायत्र्यादिकं मन्त्रमुपदिशति गुरुः । 'गॄ शब्दे' । [3]निषेकादिकर्मकारिणो नाम ॥ आचिनोति शिष्यबुद्धिवृद्धिं करोतीत्याचार्यः[4] । 'चिञ् चयने' । मन्त्रब्राह्मणात्मकवेदं कल्पसूत्राद्युपेतमध्याप्य[5] तदर्थं व्याख्यातुर्द्विजस्य नाम ॥ तथा च मनुः (२. १४०)—

'उपनीय तु यः पूर्वं वेदमध्यापयेद् द्विजः ।
साङ्गं च सरहस्यं च तमाचार्यं विदुर्बुधाः ॥'

आदिशतीत्यादेष्टा । 'दिश अतिसर्जने' । ब्रह्मचारिणो व्रतमस्यास्तीति व्रती । [6]यजते यष्टा, यजमानश्च । 'यज देवपूजासंगतिकरणयजनदानेषु' । अध्वरे यजमानत्वेन स्वामित्वेन ऋत्विगाद्यादेष्टृनाम ॥ [7]दीक्षालक्षणसंस्कारोऽस्य संजातो दीक्षितः । सोमरसवत्यध्वरे तस्यैव यष्टुर्नाम ॥ ७ ॥

[1] अधीत वेत्ति वा $W_2$. [2] अध्यापक° $K_6$ [3] निषेको गर्भाधानविधिः $D_2$.
[4] आचारं ग्राहयति $F_2$, $Pt_2$ [5] उदित° $K_5$, $K_6$. [6] याजयति $K_2$, $K_5$, $K_6$.
[7] दीक्षास्य संजाता $F_2$, $Pt_2$

(पा.) उपाध्यायोऽध्यापकः स्यात् । [1]उपाध्यायनाम । स निषेकादिकृद् गुरुः । गर्भाधानादिकर्मकर्ता गुरुः स्यात् ॥ मन्त्रव्याख्याकृदाचार्यः । वेदव्याख्यानकर्ता आचार्यः स्यात् ॥ आदेष्टा—यजमानश्च । अध्वरे व्रती [2]आदेष्टा यष्टा यजमानश्च स्यात् ॥ स सोमवति दीक्षितः । सोमवत्यध्वरे स व्रती दीक्षितः स्यात् ॥ ७ ॥

[1] अध्यापक° $B_3$. [2] $A_1$ adds ऋद-तोऽयम् .

**इज्याशीलो यायजूको यज्वा तु विधिनेष्टवान् ॥ ८ ॥**
**स गीर्पतीष्ट्या स्थपतिः सोमपीथी तु सोमपाः ।**
**सर्ववेदाः स येनेष्टो यागः सर्वस्वदक्षिणः ॥ ९ ॥**

(वि.) इज्याशील इति—यजनमिज्या, तदेव शीलं यस्य इज्याशीलः । पौनःपुन्येन यजते यायजूकः । 'यज देवपूजादौ' । इज्याशीलवतो नाम ॥ [1]यजते यज्वा । तस्यैव यजमानस्य नाम ॥ विधिनेति अर्थवादप्राप्त्यर्थम्[2] ॥ वाजपेययागं बृहस्पति-[3]सवनसमापनाङ्गेन स्थापयतीति स्थपतिः । 'ष्ठा गतिनिवृत्तौ' । बृहस्पतिसवनकर्तृयज्वनो नाम ॥ सोमपीथः सोमपानमस्यास्तीति सोमपीथी[4] । सोमं पिबतीति सोमपाः । 'पा

पाने'। सोमप इति अकारान्त पुलिङ्ग । सोमपाशब्दस्तु छन्दोविपय, न तु शब्द-शास्त्रविपय इति मन्तव्यम्। [5]इष्टावशिष्टसोमपानकृतो[6] नामनी ॥ सर्वस्वदक्षिण सर्वद्रव्यदक्षिणो याग येन यजमानेनेष्ट स सर्ववेदा इत्युच्यते । ऋत्विगादि अस्मात् सर्वस्व विन्दति लभते सर्ववेदा । सान्तोऽयम् । 'विद्लृ लाभे'। [7]विश्वजिदादियागकर्तृ नाम ॥ ८–९ ॥

[1] यजति $K_2$ $K_3$ [2] पूरणार्थं $K_2$ $W_2$ [3] समापक° $D_2$ $K_3$ $W_2$
[4] सोमपीतीति पाठे सोम पीतमनेनेति विग्रह $K_3$, $Pt_2$ [5] इष्ट्वा $K_2$ $K_3$ $W_2$
[6] सोमपस्य $K_3$ °कृन्नाम $K_2$ $K_3$ [7] यज्ञ° $K_2$

(पा.) इज्याशीलो यायजूक । यजनशीलो यायजूक स्यात् । यज्वा—इष्टवान् । [1]ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादि[2] विध्यर्थाभिप्रेता सन् यजनशीलो यज्वा स्यात् । स गीष्पतीष्ट्या स्थपति । बृहस्पतिसवेनेष्टवान् यज्वा स्थपति स्यात् ॥ सोमपीती—सोमपा । [3]कृतसोमपानो यज्वा सोमपा[4] स्यात् ॥ सर्ववेदा स—सर्वस्वदक्षिण । सर्वस्व दक्षिणा यस्य स तथोक्तो [5]विश्वजित्प्रभृतियागो येनेष्ट स यज्वा सर्ववेदा स्यात् । सान्तोऽसौ ॥ ८–९ ॥

[1] $B_3$ adds विधिना [2] इत्यादिना इष्वान् $B_3$ [3] सोमपानकृतो नामनी $B_3$
[4] $A_1$ adds सोमपायीति केचित् [5] विश्वजिदादि $B_3$

**अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः ।**
**लब्धानुज्ञः समावृत्तः सुत्वा त्वभिषवे कृते ॥ १० ॥**

(वि.) अनूचान इति—साङ्गवेदमधीत्य अनु पश्चात् तमेवोक्तवानिति अनूचान[1]। [2]साङ्गे [3]प्रवचने साङ्गवेदेऽधीती यस्तस्य नाम ॥ गुरुकुलात् गृह प्रति समावर्तते स्म समावृत्त । 'वृतु वर्तने'। उद्वाहे सति गुरोर्लब्धानुज्ञस्य नाम ॥ सुनोति सोममिति सुत्वा । 'षुञ् अभिषवे'। नान्तोऽयम् । [4]अभिषवकर्तुर्यजमानस्य नाम ॥ १० ॥

[1] $K_2$ $Pt_2$ add वच परिभाषणे' [2] शिक्षाद्यङ्गषट्के $F_2$, $Pt_2$ [3] प्रवचनो वेद $K_2$ अत्र कर्मणि सप्तमी $D_2$ $K_3$ $W_2$ [4] $D_2$ adds अभिषवोऽवभृथस्नान

(पा.) अनूचान—साङ्गेऽधीती । साङ्गवेदाध्येता अनूचान स्यात् । 'गणिश्च स '। इति कोशान्तरपाठाद्[1] गणिरपि स्यात् । गुरोस्तु—समावृत्त । वेदाध्ययनानन्तर

गृही भवेति गुर्वनुज्ञातः[2] समावृत्तः स्यात्। सुत्वा तु—कृते। अभिषवकरणानन्तरं सुत्वा स्यात्। नान्तः। 'सुत्वा त्वभिषवादूर्ध्वम्' इति वैजयन्ती (पृ. ८९, श्लो. ७५)॥ १०॥

[1] पाठविशेषात् $A_1$; युगी गणिरिति वैजयन्ती (पृ. ८९, श्लो ८२). [2] अनुशासंपन्नः $A_1$.

**छात्रान्तेवासिनौ शिष्ये शैक्षाः प्राथमकल्पिकाः।**
**एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः॥ ११॥**
**सतीर्थ्यास्त्वेकगुरवश्चितवानग्निमग्निचित्।**

(वि.) छात्र इति—[1]गुरोरसच्चरित्रं[2] छादयतीति छात्रः। 'छद अपवारणे'। गुरोरन्ते निकटे [3]निवसतीति अन्तेवासी[4]। गुरोः छिद्रं [5]शिनोति तनूकरोतीति शिष्यः। 'शिञ्[6] निशाने'। [7]शिष्यनामानि॥ शिक्षायां वर्तमानाः शैक्षाः। प्रथमे वयसि शिक्षायै कल्प्यन्ते प्राथमकल्पिकाः[8]। प्रथमाभ्यासार्थमुपपन्नशिष्यनामनी॥ समानं ब्रह्मव्रतं चरन्तीति [9]सब्रह्मचारिणः। 'चर गतिभक्षणयोः'। गुरोरेककालमेकवेदाध्ययनं ये कुर्वन्ति तेषामन्योन्यस्य नाम॥ विद्यापारं तरन्त्यनेन तीर्थं[10] गुरुः। समाने तीर्थे गुरुकुले भवा वर्तमानाः [11]सतीर्थ्याः। एको गुरुः येषां ते एकगुरवः। एकगुरूणां शिष्याणामन्योन्यस्य नामनी॥ अग्निं चितवान् अग्निचित्। 'चिञ् चयने'। स्थण्डिलप्रतिष्ठापनेनाग्निसंस्कर्तुर्नाम॥ ११॥

[1] गुरुकृतं $K_3$. [2] चरित $W_2$. [3] $W_2$ omits नि, वासी $K_5$. [4] $D_2$, $Pt_2$ add 'वस निवसने'. [5] श्यति $W_2$. [6] 'शो तनूकरणे' $K_6$ [7] शासनीयाः शिष्याः $Pt_2$ [8] प्रथमः कल्पः आचारम्भः प्रयोजनं येषां ते $Pt_2$. [9] $W_2$ adds तुल्यवेदाः तुल्यमताः तुल्याचाराः. [10] पावनहेतुत्वात्तीर्थमिव तीर्थं गुरुः $F_2$, $Pt_2$. [11] सतीर्थाः $K_3$.

(पा.) छात्रान्तेवासिनौ शिष्ये। शिष्यनामानि। '[1]मौक्षः प्राड्ङुपनेदिवान्'। एतानि त्रीणि च। शैक्षाः प्राथमकल्पिकाः। शिक्षापाठकनामनी। शिक्षेति प्रथमपाठ्यो ग्रन्थः। 'शिक्षा प्रथमकल्पिका' इति [2]हलायुधः (अ. मा २. २४५)। एकब्रह्म—सब्रह्मचारिणः। वेदाध्ययनार्थमेकं[3] व्रतमाचरन्तोऽन्योन्यं सब्रह्मचारिणः स्युः। सतीर्थ्याश्चैकगुरवः। एकगुरुकाः सतीर्थ्याः स्युः। चशब्दात् सब्रह्मचारिणोऽपि स्युः॥ चितवान्—अग्निचित्। गृहीतश्रौताग्निकोऽग्निचित् स्यात्॥ ११॥

[1] मौक्षः $A_1$. [2] शैक्षः प्राथमकल्पिकः इति मुद्रितग्रन्थे. [3] एकव्रताचारं $A_1$.

**पारंपर्योपदेशे स्यादैतिह्यमितिहाव्ययम् ॥ १२ ॥**
**उपज्ञा ज्ञानमाद्यं स्याज्ज्ञात्वारम्भ उपक्रमः ।**
**यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः ॥ १३ ॥**

(वि.) पारपर्येति—इत्येव किमु पारपर्यमतीति इतिहा । इतिहैव ऐतिह्यम् । इतिहा अव्ययमित्यत्रापि सबध्यते । पारपर्योपदेशस्य नामनी ॥ [1]उपज्ञायत इत्युपज्ञा । 'ज्ञा अवबोधने'। [2]उद्योगाद्यज्ञाननाम ॥ उपक्रमणम् उपक्रम । ममेद कार्यमिति ज्ञात्वा प्रारम्भनाम ॥ [3]यजन यज्ञ । सूयतेऽभिषूयते सोमोऽत्रेति सव । 'षुञ् अभिषवे'। अध्वान वैदिकमार्गं रातीति अध्वर । 'रा दाने'। यजन याग । सप्तभिर्गायत्र्यादिभि छन्दोभिस्तन्यत इति सप्ततन्तु । 'तनु विस्तारे'। मह्यन्तेऽत्र देवा मख । 'मह पूजायाम्'। मखन्ते वा । 'मख गतौ'। क्रियते [4]त्रैवर्णिकैरिति क्रतु । 'डुकृञ् करणे'। यज्ञनामानि ॥ १२–१३ ॥

[1] उपज्ञान $D_2$ $K_5$ $W_2$ [2] उद्योगाद् आद्य° $W_2$ [3] यजत 'यज देवपूजासगतिकरणदानेषु' $Pt_2$ [4] ब्राह्मणादिभि $Pt_2$

(पा.) पारपर्योपदेश—इतिहाव्ययम् । पारपर्योपदेशनामनी । पारपर्य गुरुक्रम । 'आम्नाय सम्प्रदाय स्यात् [1]पारपर्य गुरुक्रम' इति हलायुध (अ मा २ २४७) ॥ उपज्ञा—आद्य स्यात् । [2]प्रथम जात ज्ञानमुपज्ञा स्यात् । विनोपदेश स्वयमेव प्रथम ज्ञानमुपज्ञा यथा वाल्मीके श्लोकनिर्माणज्ञानमिति सुभूतिटीका । ज्ञात्वा—उपक्रम । [3]ज्ञानसमनन्तरारम्भ उपक्रम स्यात् ॥ यज्ञ—मख क्रतु । यज्ञनामानि ॥ १२–१३ ॥

[1] पारपर्य $A_1$ [2] प्रथमज्ञान $A_1$ [3] पश्चान° $A_1$

**पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः ।**
**एते पञ्च महायज्ञा ब्रह्मयज्ञादिनामकाः ॥ १४ ॥**

(वि.) पाठ इति—पाठो वेदपाठ । होमो वैश्वदेवादि । अतिथीना पूजा सपर्या । तर्पण पितृतर्पण । बलिर्बलिहरणम् । एते पञ्च [1]महाफलयज्ञत्वात् महायज्ञा [2] । क्रमेण ब्रह्मयज्ञदेवयज्ञमनुष्ययज्ञपितृयज्ञभूतयज्ञा भवन्ति ॥ १४ ॥

[1] $W_2$ adds यजमान° [2] तथा च मनु (३ ७०)—
अध्यापन ब्रह्मयज्ञ पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ $W_2$

(पा.) पाठो होम —ब्रह्मयज्ञादिनामका । पाठादय समुदायेन पञ्चमहायज्ञनामानि । प्रत्येक ब्रह्मयज्ञादिनामानि ।

'स्वाध्याय स्याद्ब्रह्मयज्ञ पितृयज्ञस्तु तर्पणम् ।
होमो दैवो वलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥'

इति ॥ १४ ॥

**समज्या परिषद् गोष्ठी सभासमितिसंसदः ।**
**आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयो सदः ॥ १५ ॥**

(वि.) समज्येति—समजन्ति[1] अत्र समज्या । '[2]अज गतौ' । परिषीदन्त्यत्र परिषत् । 'षद्लृ विशरणगत्यवसादनेषु' । गावो नानाविधा वाचोऽत्र तिष्ठन्तीति गोष्ठी । 'ष्ठा गतिनिवृत्तौ' । सह भान्त्यत्र सभा । 'भा दीप्तौ' । सयन्ति [4]सगच्छन्तेऽत्र समिति । 'इण् गतौ' । ससीदन्त्यस्यामिति ससत् । 'षद्लृ गतौ' । आस्थातु योग्या आस्थानी । आ समन्तात् तिष्ठन्त्यत्र आस्थानम् । क्लीबे वर्तते । सीदन्त्यत्र सद । सान्त । क्लीबे । स्त्रीत्वे सदा इति रूपभेद । सभानामानि ॥ १५ ॥

[1] $F_2$, $Pt_2$ add मेलन्ति [2] $Pt_2$ adds 'गतिक्षेपणयो' [3] परित $D_2$ $K_5$ [4] सगम्यते $W_2$

(पा.) समज्या 'परिषद्—स्त्रीनपुसकयो सद' । सभानामानि । आस्थानादीनि पदानि राजसभानामानीति केचित् । रभसकोशे तथैव भेद प्रदर्शित । 'आस्थान सद आस्थानी पर्षत्परिषदौ सभे' इति ॥ १५ ॥

[1] परिषदित्यत्र 'सदिरप्रते' (८ ३ ६६) इति षत्वम् $B_2$

**प्राग्वशः प्राग्घविर्गेहात् सदस्या विधिदर्शिनः ।**
**सभासदः सभास्ताराः सभ्याः सामाजिकाश्च ते ॥ १६ ॥**

(वि.) प्राग्वश इति—यत्र गृहे हव्यादिक स्थाप्यते तत पूर्वं यजमानसदस्यादीना वासाय कल्पित गृह प्राग्वश इत्युच्यते । वन्यत [1]सेव्यत इति वश । 'वन षण सभक्तौ' । प्राग् अग्रे वश प्राग्वश । हविर्गेहात् पूर्वं त्रेताग्नेः पत्याश्च निर्मितगृहनाम ॥ पत्नीशालैवेति कश्चित् ॥ सदसि साधव सदस्या । विधि विधिविहित[2] पश्यन्तीति विधिदर्शिन । 'दृशिर् प्रेक्षणे' । यजमानादिभि क्रियमाणक्रियाकलापदर्शिना नामनी ॥

सभायां सीदन्ति तिष्ठन्तीति सभासदः। सभां सभास्थलं[3] स्तृणन्ति आच्छादयन्ति सभास्ताराः। 'स्तृञ् आच्छादने'। सभायां साधवः सभ्याः। समाजं समूहं समवयन्ति क्षीरनीरवदेकीभवन्तीति सामाजिकाः। व्यवहारद्रष्टॄणां नामानि॥ १६॥

[1] आश्रीयते F₂, Pt₂. [2] हितं D₂. [3] भूमिं K₃; भुवं K₂; स्थानं W₂.

(पा.) प्राग्वंशः प्राग्घविर्गेहात्। हविर्गृहात्[1] पूर्वस्थितसभागृहं प्राग्वंशः स्यात्। सदस्या विधिदर्शिनः। यागविधिपरीक्षाधिकारिणः[2] सदस्याः स्युः॥ सभासदः— सामाजिकाश्च ते। सभायां तिष्ठतां नामानि॥ १६॥

[1] गेहात् B₃. [2] B₃ adds ऋत्विग्विशेषाः.

## अध्वर्यूद्गातृहोतारो यजुःसामर्ग्विदः क्रमात्।
## आग्नीध्राद्या धनैर्वार्या ऋत्विजो याजकाश्च ते॥ १७॥

(वि.) अध्वर्युरिति—अध्वरं [1]अध्वरदेशं यातीत्यध्वर्युः। 'या प्रापणे'। यजुर्वेदविदो नाम॥ उद्गायति देवतां स्तौतीति उद्गाता। 'गै [2]गाने'। ऋकारान्तः। सामवेदविदो नाम॥ होमं करोतीति होता। जुहोतीति वा। 'हु दानादानयोः'। ऋग्वेदविदो नाम॥ यज्ञस्वामिना धनैर्वार्याः आग्नीध्रादयः षोडश याजकऋत्विक्-शब्दवाच्याः। ते च ब्रह्मा, उद्गाता, होता, अध्वर्युः, ब्राह्मणाच्छंसी, प्रस्तोता, मैत्रावरुणः, प्रतिप्रस्थाता, पोता, प्रतिहर्ता, अच्छावाकः, नेष्टा, आग्नीध्रः, सुब्रह्मण्यः, ग्रावस्तुत्, उन्नेता चेति। अग्निम् इन्धे अग्नीत्[3]। 'ञिइन्धी दीप्तौ'। अग्नीधः शरणं अग्नीध्रम्। तत्र वर्तमानः[4] आग्नीध्रः। धनैर्हेतुभिर्व्रियन्ते धनैर्वार्याः। ऋतौ वसन्तादौ याजयति यजमानं ऋत्विक्। यजन्तीति याजकाः। 'यज देवपूजादौ'। दक्षिणाभिर्वृतऋत्विक्[5]-नामानि॥ १७॥

[1] F₁, Pt₂ omit. [2] 'गै शब्दे' D₂, K₄. [3] K₃ adds अग्निपुष्टा. [4] भवः K₂, W₂. [5] W₂ adds °वर्ग°.

(पा.) अध्वर्युः—क्रमात्। यजुःसामर्चां[1] वेत्तारः [2]क्रमेणाध्वर्यूद्गातृहोतारः[3] [4]स्युः। 'अध्वर्यूद्गातृहोतारः ब्रह्मा चेति[5] महर्त्विजः' इति वैजयन्ती (पृ. ८९, श्लो. ७९)॥ आग्नीध्राद्याः—याजकाश्च ते। दक्षिणादानेन वरीतुं योग्या आग्नीध्रादय ऋत्विग्याजकवाच्याः॥ १७॥

[1] °सामर्ग्वेदिनः B₃. [2] क्रमात् B₃. [3] होतृपदवाच्याः B₃. [4] ऋत्विक्पर्यायात् प्राक्कथनं ऋत्विग्विशेषत्वज्ञापनार्थम् A₁. [5] चैव B₃.

**वेदिः परिष्कृता भूमिः समे स्थण्डिलचत्वरे ।**
**चषालो यूपकटकः कुम्बा सुगहना वृतिः ॥ १८ ॥**

(वि.) वेदिरिति—विन्दन्त्यस्या देवा [1]पूजादिकमिति वेदिः । 'विद्लृ लाभे'। [2]परिष्कृतभूमेर्नाम ॥ तिष्ठन्त्यस्मिन् अग्नय इति स्थण्डिलम् । 'ष्ठा गतिनिवृत्तौ' । चतन्ते[3] यागफलमनेति चत्वरम् । '[4]चते याचने' । यागार्थे[5] [6]संस्कारितस्थाननामनी ॥ [7]चष्यते यूपाग्रे प्रक्षिप्यते चषालः । 'चष भक्षणे' । धातूनामनेकार्थत्वात् क्षेपणार्थः । यूपस्याग्रे कृतः कटकः कटकाकारः यूपकटकः । यूपकटकनाम ॥ कुम्बयति आच्छादयति यज्ञवाटं कुम्बा । 'कुबि आच्छादने' । यज्ञवाटं परितः क्षिप्तसुगहनवृतिनाम[8] ॥ १८ ॥

[1] पूजा $K_3$ [2] संस्कृत° $W_2$ [3] $W_2$ adds याचन्ते [4] 'चते चदे याचने' $D_3$ $K_3$, $K_4$ [5] स्थण्डिलनामानि $K_3$, अग्निपालनाथ $K_4$ [6] संस्कृत° $K_2$ $K_3$ $W_2$ [7] $F_2$ $Pt_2$ add कटकाकृतिरचेन [8] यज्ञवाटवृतिनाम $K_5$

(पा.) वेदि—भूमि । यागार्थं संस्कृता भूमि वेदि स्यात् । समे—चत्वरे । शय्यार्थं संस्कृतभूनामनी ॥ चषालो यूपकटकः । यूपमूलस्थितलोहकटकश्चषालः स्यात्[1] ।

'यूपमङ्गुलिमिवोदनीनमद् भूचषालतुलिताङ्गलीयकम् ।'

इति । कुम्बा—वृति । अतिगहनयूपवृतिः कुम्बा स्यात् ॥ १८ ॥

[1] $B_3$ adds राजसूये समाचारोऽयम् ।

**यूपाग्रं तर्म निर्मन्थ्यदारुणि त्वरणिर्द्वयोः ।**
**दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः ॥ १९ ॥**

(वि.) यूपाग्रमिति—तरति चषालमिति तर्म । 'तॄ प्लवनतरणयोः' । तीक्ष्णयूपाग्रनाम ॥ इयर्ति [1]अग्निरस्मादिति अरणिः । अग्निनिर्मन्थनदारुनाम ॥ वेद्या दक्षिणतो वर्तते [2]दक्षिणाग्निः । गृहपतिना इतराग्निभ्यां पूर्वं संस्कृतोऽग्निः गार्हपत्यः । आ कर्मसमाप्तेः [3]आहुतयो हूयन्तेऽत्र आहवनीयः । 'हु दानादानयोः' । त्रयाणामग्नीनां पृथक् नामानि ॥ १९ ॥

[1] अस्या $F_2$ $Pt_2$ [2] $D_3$, $Pt_2$ add अग्निः, $Pt_2$ adds दक्षिणाग्नित्रय पृथक् स्वनामप्रसिद्धेऽग्नित्रये वर्तते [3] होतव्य $F_2$ $Pt_2$

(पा.) यूपाग्रं तर्म। यूपस्याग्रं तर्म स्यात्। अनुक्तम्—'यूपमध्यं समाधानम्'। यूपस्य मध्यभागः समाधानं स्यात्। निर्मन्थ्यदारुणि—द्वयोः। [1]अग्न्यर्थमानीतनूतनकाष्ठमरणिः स्यात्॥ दक्षिणाग्नि—त्रयोऽग्नयः। दक्षिणाग्निगार्हपत्याहवनीयाः त्रयो[2] यागाग्नयः[3]। तत्र[4] दक्षिणकुण्डाग्निर्दक्षिणाग्निः। उत्तरकुण्डाग्निर्गार्हपत्यः। पूर्वकुण्डाग्निराहवनीयः।

'पूर्वेणाहवनीयः स्याद् दक्षिणाग्निस्तु दक्षिणः।
उत्तरो गार्हपत्यस्तु॥'

इति निगमाभिधानम्॥ १९॥

[1] अग्निमन्थनकाष्ठम् $B_3$. [2] श्रौताग्नयः $B_3$. [3] $B_3$ adds स्युः [4] $B_3$ omits three lines.

**अग्नित्रयमिदं त्रेता प्रणीतः संस्कृतोऽनलः।**
**समूह्यः परिचाय्योपचाय्यावग्नौ प्रयोगिणः॥ २०॥**

(वि.) अग्नित्रयमिति—इदं श्रौताग्नित्रयमेकोक्त्या त्रेतेत्युच्यते। एक एवौपासनाग्निः अग्नित्रयरूपं[1] प्राप्त इति त्रेता। अग्नित्रयसमुदायनाम॥ प्रणीयते सत्क्रियते प्रणीतः। संस्कृताग्निनाम॥ समूह्यतेऽग्निरनेन समूह्य। परिचीयते परिचाय्य.। उपचीयते उपचाय्यः। 'चिञ् चयने'। अग्निचिद्विशेष्यनामानि॥ २०॥

[1] अत्र रूपत्रय $W_2$.

(पा.) अग्नित्रयं—त्रेता। उक्ताग्नित्रयमेकोक्त्या त्रेता स्यात्। 'त्रेता स्त्री सर्वपातता' इति निगमाभिधानम्। प्रणीत—अनलः। संस्कारवानग्निः प्रणीतः स्यात्॥ समूह्यः—प्रयोगिणः। समूह्यपरिचाय्योपचाय्यशब्दा [1]अग्नौ प्रयुज्यन्ते। समूह्योऽग्निः, [2]समूहोऽन्यः। परिचाय्योऽग्निः, परिचेयोऽन्यः। उपचाय्योऽग्निः, उपचेयोऽन्यः॥ २०॥

[1] अग्न्यर्थे प्रयोगिणः $A_1$. [2] समूह्यः $B_3$.

**यो गार्हपत्यादानीय दक्षिणाग्निः प्रणीयते।**
**तस्मिन्नानाय्योऽथाग्नायी स्वाहा च हुतभुक्प्रिया॥ २१॥**

(वि.) य इति—आनीयते सत्क्रियते आनाय्य । 'णीञ् प्रापणे'। गार्हपत्यादानीय दक्षिणाग्नौ संस्कृताग्निनाम ॥ अग्ने स्त्री [1]अग्नायी। अग्निना सुप्तु आहूयते स्वाहा। 'हु दानादानयो'। हुतभुज प्रिया हुतभुक्प्रिया। अग्निपत्नीनामानि ॥ २१ ॥

[1] आग्नयी $K_{6}$

(पा.) यो गार्हपत्यादानीय—आनाय्य। गार्हपत्यादाहृत्य यो दक्षिणाग्निरारोप्यते स आनाय्य स्यात्। गार्हपत्यग्रहणमितरयोर्निव्युदासार्थम्। 'वैश्यकुलाद्वित्तवतो भ्राष्ट्राद् गार्हपत्याद्वा' इति तद्योनिविकल्पात्[1]। अथाग्नेयी[2]—हुतभुक्प्रिया। अग्निभार्यानामानि ॥ २१ ॥

[1] बहुविकल्प $A_{1}$ [2] अग्नायी $B_{3}$

**ऋक्सामिधेनी धाय्या च या स्यादग्निसमिन्धने ।**
**गायत्रीप्रमुखं छन्दो हव्यपाके चरुः पुमान् ॥ २२ ॥**

(वि.) ऋगिति—अग्निसमिन्धने अग्निप्रज्वलने या ऋक् तस्या सामिधेनीद्वय वर्तते। समिधामियम् आधानी सामिधेनी। धीयते समिदनयेति धाय्या। 'डुधाञ् धारणपोषणयो'। अग्निप्रकाशने विहितऋङ्नामनी॥ गायन्त त्रायत इति गायत्री। 'त्रैङ् पालने'। गायत्रीप्रमुख गायत्र्याद्य छन्द इत्युच्यते। चन्दयत्याह्लादयति गद्यपद्यमन्थादत्यर्थमिति छन्द। 'चदि आह्लादने'। गायत्री, उष्णिक्, अनुष्टुप्, बृहती, पङ्क्ति, त्रिष्टुप्, जगती, अतिजगती, शक्करीत्यादय छन्दांसि। गायत्र्यादिछन्दोनाम ॥ हव्यस्य पाक हव्यपाक। चर्यते भक्ष्यते चरु। 'चर गतिभक्षणयो'। हव्यपाकनाम ॥ २२ ॥

[1] अग्नि समिन्धे सामिधेनी $D_{2}$, $K_{f}$

(पा.) ऋक्सामिधेनी—अग्निसमिन्धने। [1]अग्निप्रज्वालने या ऋक् पठिता सा सामिधेनी धाय्या च[2] स्यात्। गायत्रीप्रमुखं छन्द। पिङ्गलाद्युपदिष्टा गायत्रीप्रभृतय छन्द शब्दवाच्या। गायत्री। उष्णिक् हान्त। अजादिपाठादाकारान्तोऽपि स्यात्। उष्णिहा। अनुष्टुप्, मकारान्त। बृहती। पङ्क्ति। जगती[3] ॥ हव्यपाके चरु पुमान्। हव्यपाक इति [4]स्थाल्यादि। तस्मिन् चरुशब्द स्यात्। 'चरु पक्त्वाग्निं प्रज्वाल्य परिस्तीर्य तेषु चरु निधायाभिघार्य' इत्यादिवचनैर्हव्येऽपि स्यात् ॥ २२ ॥

[1] अग्निसमिन्धनमग्निप्रज्वालनम्। तत्र येयम् $A_1$. [2] °शब्दवाच्या $A_1$. [3] $A_1$ adds अतिजगती. [4] $A_1$ adds हव्याधारः (प्रसिद्धश्च स्थाल्या चरुशब्दः आ च हिमवतः आ च कुमारीभ्यः प्रयुज्यमानो दृष्टः। *Śābarabhāṣya* 10. 1. 35)

**आमिक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः।**
**धवित्रं व्यजनं तद्यद्रचितं मृगचर्मणा ॥ २३ ॥**

(वि.) आमिक्षेति—आमीयते [1]क्षिप्यते दध्यत्रेति आमिक्षा। 'डुमिञ् प्रक्षेपणे'। पक्वोष्णक्षीरे दधियोगतः काप्यवस्था भवति तस्या नाम॥ धूयते कम्प्यतेऽग्निरनेनेति धवित्रम्[2]। मृगचर्मरचितव्यजननाम ॥ २३ ॥

[1] आकीर्यते $K_2$ [2] यागे अग्निप्रज्वलनाय मृगचर्मणा रचितं यद् व्यजनं तद् धवित्रमित्युच्यते $F_2$, $Pt_2$

(पा.) आमिक्षा—दधियोगतः। क्वथितोष्णक्षीरे दध्नो योगाद्यदुद्भूतं तदामिक्षा स्यात्॥ धवित्रं—मृगचर्मणा। द्रव्योष्णप्रशमनार्थं [1]कृष्णाजिनकृतं व्यजनं धवित्रं स्यात्॥ २३ ॥

[1] रचितकृष्णाजिन° $A_1$.

**पृषदाज्यं सदध्याज्ये परमान्नं तु पायसम्।**
**हव्यकव्ये दैवपैत्रे अन्ने पात्रं स्रुवादिकम् ॥ २४ ॥**

(वि.) पृषदाज्यमिति—पृषद्भिर्दधिबिन्दुभिः अन्वितमाज्यं पृषदाज्यम्। दधियुक्ताज्यनाम[1]॥ परमम् अन्नं परमान्नम्। पयसि क्षीरे पक्वं [2]पायसम्। पायसनामनी॥ हूयते हव्यम्। देवताहार्न्ननाम॥ कूयते स्तूयते पितृभिरिति कव्यम्। 'कु शब्दे'। पितृयोग्यान्ननाम॥ पिबन्त्यस्मादिति पात्रम्। 'पा पाने'। पातीति वा। 'पा रक्षणे'। स्रुवादिपात्रनाम[3]॥ २४ ॥

[1] $W_2$ adds °द्रव्य°. [2] पयसा संस्कृतं $Pt_2$ [3] पात्रस्य स्रुवादेः $K_5$, $K_3$, $K_5$ add स्रवति घृतादिकमिति स्रुवः.

(पा.) पृषदाज्यं सदध्याज्ये। दधिमिश्रिताज्यं[1] पृषदाज्यं स्यात्। परमान्नं तु पायसम्। क्षीरपक्वान्ननामनी। लवणव्यञ्जनान्यनुलेपनमिति ते द्वे नपुंसके। 'क्षैरेयी

पायसं स्मृतम्' इति शब्दस्वभावात् स्त्रीलिङ्गता ॥ हव्यकव्ये—अन्ने । [2]देवपित्र्यर्थेऽन्ने क्रमेण[3] हव्यकव्ये स्याताम् । पात्रं स्रुवादिकम् । स्रुवप्रमुखं [4]पात्रमित्युच्यते । 'पात्रं स्रुवादौ कुण्डादौ योग्येऽतीव द्वयान्तरे' इति जयकोशः ॥ २४ ॥

[1] °मिश्रिताज्यं $A_1$. [2] दैव° $A_1$. [3] क्रमात् $B_3$. [4] पात्रशब्दव्यवहर्तव्यमित्यर्थः $A_1$.

**ध्रुवोपभृज्जुहूर्ना तु स्रुवो भेदाः स्रुचः स्त्रियः ।**
**उपाकृतः पशुरसौ योऽभिमन्त्र्य क्रतौ हतः ॥ २५ ॥**

(वि.) ध्रुवेति—ध्रुवादयः स्रुचो भेदाः, ते च स्त्रियः स्त्रीलिङ्गाः । स्रुवस्तु ना पुंलिङ्गः । ध्रुवतीति[1] ध्रुवा । 'ध्रुव[2] स्थैर्ये' । उपभ्रियते होमार्थमिति उपभृत् । 'भृञ् भरणे' । हूयतेऽनया जुहूः । 'हु दानादानयोः[3]' । स्रवत्यस्माद् [4]आज्यादिकमिति स्रुवः । 'स्रु स्रवणे' । स्रुवभेदनामानि ॥ स्रवतीति स्रुक् । स्रुवादीनां साधारणनाम ॥ [5]उपाकरणेन उपस्पर्शनेन संस्कृतः उपाकृतः । यद्वा उपामन्त्र्य क्रियते हन्यते उपाकृतः । 'कृञ् हिंसायाम्' । [6]हननार्थं यूपे बद्धपशुनाम ॥ २५ ॥

[1] $K_2$, $K_5$, $K_6$ add स्थैर्येणास्ते; तिष्ठतीति $W_2$. [2] 'ध्रुव गतिस्थैर्ययोः' $D_2$, $K_5$. [3] दानादनयोः $F_1$, $Pt_2$. [4] अन्नादिकं $W_2$. [5] $W_2$ adds समन्त्रकः. [6] $K_2$, $W_2$ add अभिमन्त्र्य.

(पा.) ध्रुवोपभृत्—स्रुचः स्त्रियः । [1]पात्रविशेषनामानि । अत्र ना त्विति विशेषविधिः परापरसाहचर्यज्ञापनार्थम्[2] ॥ उपाकृतः—क्रतौ हतः । यागेऽभिमन्त्र्य निहतः पशुरुपाकृतः स्यात् ॥ २५ ॥

[1] पात्रभेद° $A_1$. [2] °सहचर्या° $A_1$.

**परंपराकं शमनं प्रोक्षणं च वधार्थकम् ।**
**वाच्यलिङ्गाः प्रमीतोपसंपन्नप्रोक्षिता हते ॥ २६ ॥**

(वि.) परंपराकमिति—परंपरां प्राणिनां संज्ञपनम् अकति परंपराकम् । 'अक [1]अग कुटिलायां गतौ' । [2]शमतीति शमनम् । 'शमु हिंसायाम्' । [3]प्रकर्षेण उक्षति प्रोक्षणम्[4] । 'उक्ष सेचने' । क्रतौ पशुवधनामानि ॥ [5]प्रकर्षेण मीयते प्रमीतः । 'मीञ् हिंसायाम्' । [6]उपसंपद्यते हननार्थम् उपसंपन्नः । '[7]पद गतौ' । [8]प्रोक्षणम् इतः प्रोक्षितः । एते शब्दाः वाच्यलिङ्गा विशेष्यनिघ्नाः । क्रतौ हतपशुनामानि ॥ २६ ॥

[1] $F_2$, $Pt_2$ omit [2] शस्यते $Pt_2$. [3] प्रोक्षति $W_2$ [4] $K_2$, $K_5$, $W_2$ add उपसर्गवशात् हननार्थः [5] प्रमीयते स्म $K_2$, $K_5$, $W_2$ [6] $K_5$ adds समीपतः. [7] पद्रूढ $K_5$, $K_6$ [8] $K_2$, $W_2$ add हननं

(पा.) परंपराकं—वधार्थकम्। परंपराकादीनि पशुवधार्थकानि। अनुक्तम्—'व्यञ्जनं पशुसस्कारः'। पशो पर्यग्निकरणादिसंस्कारो व्यञ्जनं स्यात्॥ 'सामिकं स्वभिमन्त्रणम्'। पश्वभिमन्त्रण सामिकं स्यात्। वाच्यलिङ्गाः—हते। प्रमीतादयो [1]विशेष्यनिघ्ना [2]। यागे हतपशुनामानि॥ २६॥

[1] वाच्यलिङ्गाः $A_1$ [2] $A_1$ adds इत्यर्थः.

**सांनाय्यं हविरग्नौ तु हुतं त्रिषु वषट्कृतम्।**
**दीक्षान्तोऽवभृथो यज्ञस्तत्कर्मार्हं तु यज्ञियम्॥ २७॥**
**त्रिष्वथ क्रतुकर्मेष्टं पूर्तं खातादिकर्मणि।**

(वि.) सांनाय्यमिति—सन्नीयते सांनाय्यम्। 'णीञ् प्रापणे'। अग्नौ हूयते हविः। 'हु दानादानयोः'। हविषो[1] नामनी॥ वषट् क्रियत[2] इति वषट्कृतम्। अग्नौ हुतहविर्नाम॥ दीक्षाख्यस्य कर्मणोऽन्त दीक्षान्तः। अवभ्रियते परिपूर्यतेऽनेन दीक्षाव्रतमिति अवभृथ। 'भृञ् भरणे'। यागसमाप्तौ जलविहितवारुणेष्टिनाम॥ यज्ञार्हं यज्ञियम्[3]। यज्ञयोग्यद्रव्यनाम॥ अयं शब्द. त्रिषु लिङ्गेषु वर्तते॥ इज्यते इष्टम्। 'यज देवपूजादौ'। तथा च स्मृतिः—

'एकाग्निकर्म हवनं त्रेतायां यच्च हूयते।
अन्तर्वेद्यां च यद्दानमिष्टं तदभिधीयते॥'

क्रतुकर्मनाम। पिपर्ति पालयति[4] पूर्तम्। 'पॄ पालनपूरणयो.'।

'वापीकूपतटाकादि देवतायतनानि च।
अन्नप्रदानमारामः पूर्तमार्याः प्रचक्षते॥'

खातादिकर्मनाम॥ २७॥

[1] हवि शेषनाम $K_5$, $K_6$ [2] $W_2$ adds अग्नौ. [3] यज्ञकर्म अर्हति $W_2$. [4] $K_5$, $W_2$ add पशुदेवब्राह्मणानिति

(पा.) सांनाय्यं हविः। होतव्यद्रव्यनामनी॥ अग्नौ तु—वषट्कृतम्। अग्नौ हुतद्रव्यनाम॥ दीक्षान्तो—यज्ञे। यागदीक्षाया अन्तोऽवभृथः स्यात्। तत्कर्मार्हं—

यज्ञियम् त्रिषु । यज्ञकर्मार्हं यज्ञिय स्यात् । तत् त्रिलिङ्गम् । यज्ञियो देश[1] । अथ क्रतुकर्मेष्टम् । क्रतो कर्म इष्ट स्यात् ॥ पूर्तं—कर्मणि । खातादिकर्म[2] पूर्तं स्यात् ।

> [3]'वापीकूपतटाकानि[4] देवतायतनानि च ।
> अन्नप्रदानमाराम पूर्तमित्यभिधीयते ॥'

इति ॥ २७ ॥

[1] A₁ adds यज्ञियमह [2] °कर्मणि B₃ [3] म स्मृ ४ २२६ (Apte's Dict p 1041), आधुनिकमुद्रितग्रन्थे न दृश्यते [4] तटाकादि B₃

**अमृतं विघसो यज्ञशेषभोजनशेषयोः ॥ २८ ॥**
**त्यागो विहायितं दानमुत्सर्जनविसर्जने ।**
**विश्राणनं वितरणं स्पर्शनं प्रतिपादनम् ॥ २९ ॥**
**प्रादेशनं निर्वपणमपवर्जनमंहतिः ।**

(वि.) अमृतमिति—न म्रियन्तेऽनेनेत्यमृतम् । 'मृङ् प्राणत्यागे ' । यज्ञशेषनाम ॥ विशेषेणाद्यते विघस । 'अद भक्षणे ' । [1]भोजनशेषनाम ॥ त्यज्यते त्याग । 'त्यज हानौ ' । विहीयते विहायितम् । विहापितमिति वा पाठ । 'ओहाक् त्यागे ' । दीयते दानम । 'डुदाञ् दाने '। उत्सृज्यते उत्सर्जनम् । 'सृज विसर्गे ' । विसृज्यते विसर्जनम् । विश्राण्यते[2] विश्राणनम् । 'श्रण दाने ' । वितार्यते वितरणम् । 'तॄ प्लवनतरणयो ' । स्पृश्यते[3] स्पर्शनम् । 'स्पृश [4]स्पर्शने ' । प्रतिपाद्यते प्रतिपादनम् । 'पद[5] गतौ ' । '[6]प्रादिश्यते प्रादेशनम् । 'दिश अतिसर्जने ' । निर्वाप्यते निर्वपणम् । 'डुवप् बीजतन्तुसन्ताने ' । अपवृज्यतेऽपवर्जनम् । 'वृजी वर्जने ' । अपसर्जनमिति वा पाठ । हन्ति पापमनया अंहति । 'हन हिंसागत्यो ' । अहत इति वा । 'अहि गतौ ' । [7]दाननामानि ॥ २८–९ ॥

[1] भोज्य° K₅ [2] विश्रायते K₆ Pt₂ [3] K₂ K₃ add दीयते [4] संस्पर्शने K₂, K₃, K₅ [5] 'पद्लृ गतौ ' K₅, K₆ [6] प्रदिश्यते K₅, K₆ [7] त्यागनामानि K₂, K₃, W₂

(पा.) अमृत विघसो—भोजनशेषयो । यज्ञद्रव्यशेषोऽमृत स्यात् । भोजनद्रव्यशेषो विघस स्यात् ॥ त्यागो विहायित—अपवर्जनमंहति । एतानि [1]दाननामानि ॥ २८–९ ॥

[1] त्यागनामानि B₃

**मृतार्थं तदहे दानं त्रिपु स्यादौर्ध्वदेहिकम् ॥ ३० ॥**
**पितृदानं निवापः स्याच्छ्राद्धं तत्कर्म शास्त्रतः ।**
**अन्वाहार्यं मासिकोंऽशोऽष्टमोऽह्नः कुतपोऽस्त्रियाम् ॥ ३१ ॥**

(वि.) मृतार्थमिति—देहादूर्ध्वम्[1] ऊर्ध्वदेहः, ऊर्ध्वदेहे [2]भवम् और्ध्वदेहिकम् । और्ध्वदैहिकमिति वा पाठः । मृतमुद्दिश्य मृताहे पिण्डादिदाननाम ॥ [3]निवाप्यते निवापः । 'डुवप् बीजसन्ताने' । उपसर्गवशात् पितृदानार्थं पितृत्वमापन्नमुद्दिश्य यद्दीयते तस्य नाम ॥ श्रद्धया भक्त्या दीयते श्राद्धम् । [4]मन्वादिस्मृत्युक्तनियमोपेतपितृकर्मनाम ॥ पिण्डपितृयज्ञमनु पश्चात् आहार्यते[5]ऽन्वाहार्यम् । मासि मासि क्रियत इति मासिकम् । अमावास्याश्राद्धनाम ॥ सूर्योऽस्मिन् काले कुं भुवं रश्मिभिस्तपतीति कुतपः[6] । 'तप संतापे' । तथा च पुराणे—

'कुं यत्र गोपतिर्गोभिः कात्स्न्येंन तपति क्षणे ।
स कालः कुतपो नाम श्राद्धं तत्र विधीयते ॥'

इति । अह्नोऽष्टमांशनाम ॥ ३०–१ ॥

[1] देहादूर्ध्वं $F_2$, $Pt_2$. [2] विहितं $K_5$, $K_6$. [3] न्युप्यते $D_2$, $K_1$.
[4] °शास्त्रोक्त° $K_5$. [5] क्रियते $K_5$, $K_6$; $W_2$ adds दीयते. [6] $Pt_1$ adds पञ्चदशाधाकृतस्याह्नः द्विघटिकात्मकः अष्टमो भागः कुतप इत्युच्यते.

(पा.) मृतार्थं तदहर्दानं—और्ध्वदैहिकम् । मृतेभ्यः [1]क्रियमाणपिण्डजलादिदानमहर्दानं[2] स्यात्, और्ध्वदैहिकं च स्यात् । त्रिपु स्यादित्यनेन द्वितीयं त्रिलिङ्गम् । और्ध्वदेहिकमिति वा पाठः । और्ध्वदेहिकं देहि[3] ॥ पितृदान निवापः स्यात् । पितॄनुद्दिश्य [4]क्रियमाणहिरण्यादिदानं निवापः स्यात् ॥ श्राद्धं—शास्त्रतः । पात्रकालनियमैः शास्त्र[5]चोदितपितृभोजनकर्म श्राद्धं स्यात् ॥ अन्वाहार्यं मासिके । मासश्राद्धनाम ॥

'दशाहे श्राद्धमाग्नेयं साज्यमेकादशेऽहनि ।
संप्रेपणं[6] द्वादशेऽह्नि मासि प्राप्ते तु मासिकम् ॥'

इति ॥ अंशोऽष्टमो—कुतपोऽस्त्रियाम् । अह्न.[7] पञ्चदशांशस्याष्टमांशः कुतपः स्यात् । श्राद्धकालः ।

'दिवसस्याष्टमे भागे यदा मन्दायते रविः ।
स कालः कुतपो नाम[8] पितॄणां दत्तमक्षयम् ॥'

इति [9]निगमाभिधानम् ॥ ३०–१ ॥

[1] क्रियमाणं $B_3$. [2] तत्पिण्ड° $B_3$. [3] $A_1$ adds 'ऊर्ध्वाद्दमदेहान्मवचोर्ध्व-स्यैवेयाम्' इति शाकटायनमताद् (३. १. ६५) मगागमो भवति. [4] क्रियमाणम् $B_3$. [5] चोदितं $B_3$. [6] संप्रेषणी $B_3$. [7] अद्यः पञ्चदशान् कृत्वा तत्राष्टमांशः $A_1$. [8] तत्र $B_3$. [9] शातातपस्मृताविति शब्द. द्रु. (पृ. १४०).

**पर्येषणा परीष्टिश्चान्वेषणा च गवेषणा ।**
**सनिस्त्वध्येषणा याच्ञाभिशस्तिर्याचनार्थना ॥ ३२ ॥**

(वि.) पर्येषणेति—[1]पर्येष्यतेऽनया पर्येषणा । 'इष[2] गतौ' । परीष्टिश्च[3] । अन्विष्यतेऽनया अन्वेषणा । [4]गवेष्यते गवेषणा । 'गवेष मार्गणे' । श्राद्धब्राह्मणान्वेषणनामानि[5] ॥ सन्यतेऽस्मिन्निति सनिः । 'षणु[6] दाने' । अध्येष्यतेऽध्येषणा । 'इष गतौ' । श्राद्धे प्रार्थनानामनी ॥ याचनं याच्ञा, याचना[7] च । 'टुयाचृ याच्ञायाम्' । अभिशस्यते प्रार्थ्यतेऽभिशस्तिः । 'शंसु स्तुतौ' । अर्थ्यतेऽर्थना । 'अर्थ उपयाच्ञायाम्' । प्रार्थनायाः [8]साधारणनामानि ॥ ३२ ॥

[1] पर्येषते $K_3$, $K_6$. [2] ईष $K_3$, $K_6$. [3] $W_2$ adds श्राद्धे द्विजशुश्रूषानामनी. [4] गवेषणं $Pt_2$. [5] चत्वार एकार्थ इति केचित् $W_2$. [6] 'षण संभक्तौ' $K_3$, $K_6$. [7] याच्यते $K_5$. [8] $W_2$ adds सर्व°.

(पा.) पर्येषणा—गवेषणा । [1]आमन्त्रणार्थमन्वेषणनामानि । सनिस्त्वध्येषणा । श्राद्धे प्रार्थनानामनी ॥ याच्ञा—याचनार्थना । याच्ञानामानि ॥ ३२ ॥

[1] $B_3$ adds श्राद्धे ब्राह्मणानाम्.

**पद् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि ।**
**क्रमादातिथ्यातिथेये अतिथ्यर्थेऽत्र साधुनि ॥ ३३ ॥**

(वि.) पडिति—पद् त्रिषु, अर्घ्यपाद्यातिथ्यातिथेयावेशिकागन्तुशब्दाः पट् त्रिषु लिङ्गेषु वर्तन्ते । अर्घार्थं वारि अर्घ्यम् । अर्घार्थवारिनाम ॥ पादाय पादयोग्यं वारि पाद्यम् । [1]पादार्हवारिनाम ॥ अतिथिभ्यः परिकल्पितः आतिथ्यः । [2]अतिथ्यर्थस्यासनादेर्नाम ॥ अतिथिषु साधुः आतिथेयः । [3]अतिथौ साध्वन्नपानादेर्नाम ॥ ३३ ॥

[1] पादार्थ° $K_3$, $K_6$. [2] आतिथ्यस्य $W_2$. [3] अतिथियोग्य° $K_5$.

(पा.) पट् तु त्रिषु। ऊर्ध्वं वक्ष्यमाणाः शब्दाः पट् त्रिलिङ्गाः॥ अर्घ्यमर्घार्थे। अक्षतदूर्वादिकमर्घ्यं स्यात्॥ पाद्यं—वारिणि। पादार्थमुदकं पाद्यं स्यात्॥ क्रमादातिथ्य—साधुनि। अतिथ्यर्थातिथियोग्यावातिथ्यातिथेयशब्दौ क्रमेणापि स्याताम्। अतिथिसत्कारे[1] तु वौ द्वौ[2] स्याताम्। '[3]आतिथेयं तथातिथ्यमातिथेयी च कथ्यते' इति हलायुधः (अ. मा. २. २०४)॥ ३३॥

[1] सत्कारार्थे $A_1$. [2] द्वावपि $B_3$ [3] $A_1$ adds 'पथ्यतिथिवसतिस्वपतेर्ढञ्' इति वा ढञ्.

## स्युरावेशिक आगन्तुरतिथिर्ना गृहागते।
## पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः॥ ३४॥

(वि.) स्युरिति—[1]अवेशोऽध्वक्रमे वर्तमानः आवेशिकः। आगच्छति[2] दूरादध्वगमनेन आगन्तुः। नास्ति तिथिरस्य अतिथिः। अतिथिनामानि॥ पूजनं पूजा। 'पूज पूजायाम्'। [3]नमनं नमस्या। 'णम प्रह्वत्वे शब्दे च'। अपचायनम् अपचितिः। 'चायृ पूजानिशामनयोः'। परेणोत्तमेन सह वर्तते सपरः, सपरे साध्वी सपर्या। अर्च्यते अर्चा। 'अर्च पूजायाम्'। [4]अर्हतीति अर्हणा। 'अर्ह पूजायाम्'। पूजानामानि॥ ३४॥

[1] आवेशोऽध्वग्रामे भवः $K_2$, $K_3$. [2] आगम्यते $K_5$, $K_6$. [3] $W_2$ omits 3 lines. [4] अर्हणं $Pt_2$.

(पा.) स्युरावेशिक—गृहागते। [1]अतिथिनामानि॥ 'आगन्तुरतिथिर्द्वयोः' इति केषांचित् स्त्रीलिङ्गोऽपि। 'अत्रभवतास्मद्गृहेष्वतिथ्या[2] भूयताम्' इत्याश्चर्यपदमञ्जरी॥ पूजा नमस्या—अर्हणाः समाः। [3]पूजानामानि॥ ३४॥

[1] अभ्यागतस्य $B_2$. [2] $A_1$ adds अतिथिना भूयता. [3] सत्कारनामानि $B_3$.

## वरिवस्या तु शुश्रूषा परिचर्याप्युपासना।
## व्रज्याटाट्या पर्यटनं चर्या त्वीर्यापथस्थितिः॥ ३५॥

(वि.) वरिवस्येति—वरिवसनं वरिवस्या[1]। श्रोतुमिच्छा शुश्रूषा। 'श्रु श्रवणे'। [2]परिचरणं परिचर्या। 'चर गतिभक्षणयोः'। उप समीपे आसनम्[3] उपासना। 'आस उपवेशने'। गुरोः शिष्यकृतानुकूलव्यापारनाम॥ व्रजनं व्रज्या। 'व्रज गतौ'।

पुनः पुनः अटनम् अटाट्या[4]। 'अट गतौ'। परितोऽटनं पर्यटनम्। पर्यटननामानि॥ चरणं चर्या। 'चर गतिभक्षणयोः'। ईरणम् ईर्या[5]। 'ईर गतौ'। ईर्याया पन्था ईर्यापथः ध्यानाद्युपायः, तस्मिन् स्थितिः ईर्यापथस्थितिः। सन्मार्गस्थितिनामनी॥ ३५॥

[1] $K_5$, $K_6$ add 'वस निवासे' [2] परिचरतीति $D_2$ $K_2$ $W_2$ [3] आस्यते उपासनम् $K_3$, $K_7$ [4] $K_5$ adds अट्या च [5] ईर्यते ज्ञायते $K_3$ $K_5$

(पा.) वरिवस्या तु—उपासनम्। अपिशब्दादुपासनापि स्यात्। 'वरिवस्या तु शुश्रूषा सेवा भक्तिरुपासना' इति वैजयन्ती (पृ ८६, श्लो ३८)। सेवानामानि॥ व्रज्या—पर्यटनम्। [1]भिक्षार्थभ्रमणनामानि[2]॥ चर्या—ईर्यापथस्थितिः। गतिस्थितिनिषद्याशयनेषु समाहितत्वनामानि॥ ३५॥

[1] भिक्षार्थ $B_3$ [2] पर्यटन° $B_3$

**उपस्पर्शस्त्वाचमनमथ मौनमभाषणम्।**

**आनुपूर्वी स्त्रियां वावृत्परिपाटी अनुक्रमः॥ ३६॥**

**पर्यायश्चातिपातस्तु स्यात्पर्यय उपात्ययः।**

(वि.) उपस्पर्श इति—उपस्पृश्यतेऽङ्गान्यत्र उपस्पर्शः। 'स्पृश [1]स्पर्शने'। आचम्यते उदकमत्र आचमनम्। 'चमु [2]अदने'। आचमननामनी॥ मुनेर्भावो मौनम्। न भाषणम् अभाषणम्। 'भाष व्यक्तायां वाचि'। व्रतादावभाषणनाम॥ पूर्वमनुक्रम्य तिष्ठत्यनुपूर्वम्। तस्य भावः [3]आनुपूर्वी। आवर्तनम् आवृत्[4]। परि पटतीति परिपाटिः। 'पट गतौ'। [5]अनुक्रम्यतेऽनुक्रमः। 'क्रमु पादविक्षेपे'। परित एति[6] पर्यायः। 'इण् गतौ'। क्रमनामानि॥ अतिक्रम्य [7]पततीति अतिपातः। प्राप्तं परित्यज्यायनं पर्ययः। 'अय गतौ'। उप समीपस्थमतिक्रम्यायनम्[8] उपात्ययः। 'इण् गतौ'। क्रमोल्लङ्घननामानि॥ ३६॥

[1] हस्तस्पर्शने $K_3$ $W_2$ [2] भक्षणे $K_3$ $K_5$ $W_2$ [3] अनुगता पूर्वं $K_5$ $K_6$, अनुपूर्वस्य भाव आनुपूर्व्यं $W_2$, आ अनुपूर्वभाव $D_2$ [4] आवर्तत इति, 'वृतु वर्तने' $K_3$ $K_5$, $W_2$ [5] क्रामति $W_2$ [6] अयते, अय गतौ' $D_2$ $K_2$ [7] पतन $K_2$ $K_3$ [8] $K_3$ adds गमनं

(पा.) उपस्पर्श—आचमनम्। आचमननाम॥ अथ मौनमभाषणम्। [1]मौननाम॥ आनुपूर्वी—पर्यायश्च। अनुक्रमनामानि। आनुपूर्वीसाहचर्याद् आवृत्परि-

पाटीशब्दौ स्त्रीलिङ्गौ। आनुपूर्वीशब्दोऽपि वावचनात् पक्षे नपुंसकः। 'स्त्रीनपुंसकयो-र्भावक्रिययोः ष्यञ् कचिच्च वुञ्' इति लिङ्गसग्रहे वक्ष्यति (३. ५. ३९)। आनुपूर्वी, आनुपूर्व्यं वा॥ अतिपातस्तु—उपात्ययः। [2]अतिक्रमनामानि॥ ३६॥

[1] अमापण° $A_1$ [2] उल्लङ्घन° $B_3$.

**नियमो व्रतमस्त्री तच्चोपवासादि पुण्यकम्॥ ३७॥**
**औपवस्तं तूपवासो विवेकः पृथगात्मता।**

(वि.) नियम इति—नियम्यत इति नियम। 'यम उपरमे'। व्रत्यतेऽन्ना-दिकमत्रेति व्रतम्। 'व्रती[1] वर्जने'। पुण्यहेतुत्वात् पुण्यकम्। उपवासादिव्रतनामनी॥ उपवस्तेऽग्निसमीपे[2] उपवस्तम्। तदस्य प्राप्तमिति औपवस्तम्। उप समीपे वसन वर्तनम् उपवासः। यजमानस्य [3]अग्निसमीपस्थितिरूपोपवासनामनी[4]॥ विविच्यते विवेक। 'विचिर् पृथग्भावे'॥ पृथगात्मतानाम॥ ३७॥

[1] 'वृतु वर्तने' $K_5$, $W_2$ [2] वासोऽस्य $W_1$ [3] स्थितिक° $K_3$. [4] °वास° $K_5$, $K_6$.

(पा.) नियमो—अस्त्री। व्रतनामनी॥ तच्च—पुण्यकम्। तद्व्रतमुपवासादि पुण्यकर्म पुण्यकम्। देहशोषणं तत्॥ औपवस्तं तूपवासः। उपवासनामनी। 'उपवासः पुमान् वा स्यादौपवस्तं च कीर्तितम्' इत्यमरमाला॥ विवेक पृथगात्मता। देहात्मावि-भेदज्ञाननाम॥ ३७॥

**स्याद् ब्रह्मवर्चसं वृत्ताध्ययनर्द्धिरथाञ्जलिः॥ ३८॥**
**पाठे ब्रह्माञ्जलिः पाठे विप्रुषो ब्रह्मबिन्दवः।**
**ध्यानयोगासने ब्रह्मासनं कल्पे विधिक्रमौ॥ ३९॥**

(वि.) स्यादिति—ब्रह्मणो[1] वर्चः[2] ब्रह्मवर्चसम्। वृत्तस्य[3] अध्ययनस्य वा समृद्धिनाम॥ ब्रह्मणे वेदायाञ्जलिः ब्रह्माञ्जलिः। वेदपाठसमये अध्ययनाङ्गभूताञ्जलिनाम॥ ब्रह्मणि[4] बिन्दवः ब्रह्मबिन्दवः। वेदपाठे सति गुर्वास्यनिर्गतजलकणनाम॥ ब्रह्मणे आसनं ब्रह्मासनम्। ध्यानयोगोपकारकासननाम॥ कल्प्यतेऽनेन कल्प। विधीयतेऽनेन विधिः। 'विध विधाने'। क्रम्यतेऽनेनेति क्रमः। व्रीहिभिर्यजेतेत्येवमादिविनियोग-नामानि॥ ३८–९॥

[1] F₂ Pt₂ add तप स्वाध्यायादे [2] तेज Pt₂ [3] ब्राह्मणस्य तप स्वाध्यायादे समृद्धिनाम W₂ [4] D₂ Pt₂ add वेदपाठे

(पा.) स्याद् ब्रह्मवर्चसं—ऋद्धि । वृत्ताध्ययनयोरभिवृद्धिर्ब्रह्मवर्चसं स्यात् ॥ अथाञ्जलि—ब्रह्माञ्जलि । वेदपाठे[1] रचिताञ्जलि[2] ब्रह्माञ्जलि स्यात् ॥ पाठे—ब्रह्मबिन्दव । श्रुतिपठनसमये वक्त्रान्निर्यन्तो बिन्दवो ब्रह्मबिन्दव स्यु ॥ ध्यानयोगासने ब्रह्मासनम् । 'योग सनहनोपायध्यानसगतियुक्तिषु' इति वक्ष्यति (३ ३ २२) । ध्यानोपायभूतपद्मस्वस्तिकाद्यासन ब्रह्मासन स्यात् ॥ कल्पे [3]विधिक्रमौ[4] । कर्तव्यत्वेन शास्त्रचोदितार्थनामानि ॥ ३८–९ ॥

[1] A₁ adds य [2] A₁ adds स [3] विधि B₃ [4] क्रम B₃

**मुख्यः स्यात् प्रथमः कल्पोऽनुकल्पस्तु ततोऽधमः ।**
**संस्कारपूर्वं ग्रहणं स्यादुपाकरणं श्रुतेः ॥ ४० ॥**

(वि.) मुख्य इति—मुखमिव प्रधानत्वात् मुख्य । [1]प्रथम आद्य कल्प विधि । [2]मुख्यशास्त्रार्थनाम ॥ अनु पश्चात् कल्प्यतेऽनुकल्प । [3]गौणशास्त्रार्थनाम ॥ उपाक्रियते स्वीक्रियते श्रुतिरनेनेति उपाकरणम् । श्रुतेर्वेदस्य [4]संस्कारपूर्वकग्रहण नाम ॥ ४० ॥

[1] प्रथमश्चाद्यौ कल्पश्च प्रथमकल्प D₂ K₈ K₆ [2] °विधि° K₁ W₂ [3] गौण विधिनाम W₂ [4] संस्कार उपनय तत्पूर्वक Pt₂

(पा.) मुख्य —कल्प । मुख्यार्थ प्रथम[1] कल्प स्यात् । अनुकल्पस्ततोऽधम । तस्मादधमोऽनुकल्प स्यात् । व्रीहिभिर्यजेत । तदलाभे नीवारैर्वा[2] इत्युदाहरणम् । संस्कारपूर्वग्रहण—श्रुते । श्रुते संस्कारपूर्वक[3] ग्रहणम् उपाकरण स्यात् । उपाकर्म च[4] प्रसिद्धम्[5] ॥ ४० ॥

[1] प्रथमकल्प A₁ [2] A₁ adds यजनीयम् [3] पूर्वकग्रहण A₁ [4] नाम A₁ [5] B₃ omits

**समे तु पादग्रहणमभिवादनमित्युभे ।**
**भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी ॥ ४१ ॥**

(वि.) समे इति—पादयो ग्रहण पादग्रहणम्। 'ग्रह उपादाने'। अभिवाद्यते आशीर्वाद [1]क्रियतेऽनेन अभिवादनम्। 'वदि अभिवादनस्तुत्यो '। नमस्कारनामनी॥ अपराह्णे ग्राम प्रविश्य भिक्षते भिक्षु । 'भिक्ष [2]भिक्षायाम्'। परित्यज्य सर्वं व्रजतीति परिव्राट। 'व्रज गतौ'। जकारान्तोऽयम्[3]। [4]कर्मन्दर्षिप्रोक्तसूत्रमधीत इति कर्मन्दी। पाराशर्यप्रोक्तसूत्रमधीते पाराशरी[5]। मस्करो वेणुदण्ड, सोऽस्यास्तीति मस्करी। माकरणशील काम्यकर्मप्रतिषेधपरो[6] वा। सन्यासिनामानि॥ ४१॥

[1] कार्यते $K_5$ [2] याच्ञायाम् $K_3$ $K_6$ [3] $K_5$ adds शब्द [4] कर्मन्देन $D_2$, $K_5$, $K_6$ [5] पराशरेण कृत सूत्रमधीते पराशरी $D_2$ [6] °प्रतिषेधन° $K_2$, $W_2$

(पा.) समे तु—अभिवादनमित्युभे। [1]पादौ सस्पृश्याभिवादननामनी॥ भिक्षु परिव्राट—मस्करी। [2]चतुर्थाश्रमिनामानि॥ ४१॥

[1] पादग्रणामनाम $B_3$ [2] सन्यासिनामानि $B_3$

## तपस्वी तापसः पारिकाङ्क्षी वाचंयमो मुनिः।
## तपःक्लेशसहो दान्तो वर्णिनो ब्रह्मचारिणः॥ ४२॥

(वि.) तपस्वीति—तपोऽस्यास्तीति तपस्वी। तापसश्च। परिकाङ्क्षते तपस [1] फलमिति पारिकाङ्क्षी। '[2]काक्षि काङ्क्षायाम्'। वाच यच्छतीति वाचयम[3]। 'यम उपरमे'। मन्यते मुनि[4]। 'मन ज्ञाने'। [5]मुनिनामानि॥ दाम्यति इन्द्रियेभ्य इति दान्त। 'दमु [6]उपशमे'। तप क्लेशसहस्य नाम॥ वर्णा स्तुतय एषा सन्तीति वर्णिन। ब्रह्मचारिनाम॥ ४१॥

[1] पर ब्रह्मज्ञान $F_2$, $Pt_2$ [2] 'काङ्क्ष इच्छायां' $K_2$, $K_3$, $W_1$ [3] वाचि (नि $W_2$) यमोऽस्तीति वा $D_2$, $K_6$ [4] मौनेनास्ते $K_5$, $K_6$ [5] $D_2$ omits three lines [6] उपरमे $K_6$, उपशमने $K_2$ $K_3$

(पा.) तपस्वी—पारिकाङ्क्षी। तपस्विनामानि। 'तपोधन प्रव्रजित मुरडी च स्यादनाथरी'। एतानि चत्वारि च॥ वाचयमो मुनि। मौनव्रतिनामनी॥ तप क्लेशसहो दान्त। धूमपानादितप क्लेशसहिष्णुर्दान्त [1] स्यात्॥ वर्णिनो ब्रह्मचारिण। ब्रह्मचर्यव्रतस्थ। ब्रह्मचारिण स्यु।

'ब्रह्मचारी भवेद्वर्णी गृहस्थ स्नातकस्तथा।

वैखानसो वनप्रस्थः[2] कर्मसन्यासिको यतिः ॥'

इति हलायुध (अ मा २ २३९) ॥ ४२ ॥

[1] क्लेशसह $B_3$　　[2] वानप्रस्थ इति मुद्रितग्रन्थे

**ऋषयः सत्यवचसः स्नातकस्त्वाप्लुतो व्रती ।**
**ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते ॥ ४३ ॥**

(वि) ऋषय इति—ऋषति तपस इति ऋषि[1]। 'ऋषी गतौ'। सत्य वचो येषा ते सत्यवचस । ऋषिनामनी ॥ व्रतरूपेण[2] स्नातीति स्नातक । 'ष्णा शौचे'। आप्लवत इति आप्लुत । 'प्लुङ् गतौ'। आप्लुतव्रतिनाम ॥ यतम् इन्द्रियसयमो येषामस्तीति यतिन[3]। यच्छन्ति उपरमन्ति [4]विषयेभ्य इति यतय । 'यम उपरमे'। निर्जितेन्द्रियग्रामस्य[5] गृहस्थादेर्नामनी ॥ ४३ ॥

[1] ऋषति वने, 'ऋ गतौ' $K_2$ $K_8$　　[2] व्रतार्थं $F_2$ $Pt_2$　　[3] यतनमस्यास्तीति यती $K_2$, $K_5$, $K_6$, $W_2$　　[4] इन्द्रियेभ्य $Pt_2$　　[5] समूहस्य $K_2$ $W_2$

(पा.) ऋषय सत्यवचस । सत्यव्रतिना नामनी ॥ स्नातक —व्रती[1] स्नानव्रतिनाम ॥ ये निर्जितेन्द्रियग्रामा —यतयश्च ते । [2]जितेन्द्रियनामनी ॥ ४३ ॥

[1] $A_1$ adds व्रतिरिति पाठोऽसाधीयान्　　[2] निर्जित° $B_3$

**यः स्थण्डिले व्रतवशाच्छेते स्थण्डिलशाय्यसौ ।**
**स्थाण्डिलश्चाथ विरजस्तमसः स्युर्द्वयातिगाः ॥ ४४ ॥**

(वि.) य इति—[1]स्थण्डिले शेते स्थण्डिलशायी। स्थाण्डिलश्च। व्रतवशेन[2] स्थण्डिलशयितृनामनी ॥ विगते रजस्तमसी येभ्य इति विरजस्तमस । द्वय रजस्तमोरूपगुणद्वयम् अतिगच्छन्ति अतिक्राम्यन्तीति द्वयातिगा । [3]विगतरजस्तमोगुणाना नामनी ॥ ४४ ॥

[1] $W_2$ omits two lines　　[2] °वशात् $K_5$ $K_6$　　[3] वीत° $K_6$

(पा.) य स्थण्डिले—स्थाण्डिलश्च । व्रतवशात् स्थण्डिले य शेते तन्नामनी ॥ अथ विरजस्तमस —द्वयातिगा । [1]रजोगुणधर्मो राग । तमोगुणधर्मो द्वेषश्चेति द्वाभ्या विमुक्ता द्वयातिगा स्यु ॥ अनुक्तम्—'मूलिको वृक्षमूलथ'। तरुमूलनिवासी[2] मूलिक

स्यात्॥ 'क्षीराहारस्तु लोचकः'। क्षीराहारनियतो लोचकः स्यात्॥ 'औवंव्रती जलाहारः'। जलाहारनियत औवंव्रती स्यात्॥ 'खपुटः पाणिपात्रकः'। यः पाणिपात्रे भुङ्क्ते स[3] खपुटः स्यात्॥ ४४॥

[1] रजोगुणस्तमोगुणश्चेति द्वाभ्यां $B_3$  [2] °भूल्स्य $A_1$  [3] तन्नाम उक्त $A_1$

**पवित्रः प्रयतः पूतः पाषण्डाः सर्वलिङ्गिनः।**
**पालाशो दण्ड आषाढो व्रते राम्भस्तु वैणवः॥ ४५॥**

(वि.) पवित्र इति—परम् आत्मानं च पुनातीति [1]पवित्रः। पूतश्च। 'पूञ् पवने'। प्रयच्छति विषयेभ्य उपरमतीति प्रयतः। 'यम उपरमे'। परपावनहेतुभूतपुरुषनामानि॥ पाशान्[2] संसृतिबन्धहेतुभूतानि असच्छास्त्राणि अणन्ति वदन्तीति पाषण्डाः। 'अण शब्दे'। सर्वेषामाश्रमाणां लिङ्गानि भजन्त इति सर्वलिङ्गिनः[3]। [4]वेदमार्गबाह्यानुवर्तिनां नामनी॥ पलाशस्य विकारः पालाशः। आषाढः प्रयोजनमस्य आषाढः। पलाशदण्डनाम॥ रम्भस्य वेणोः संबन्धी राम्भः। वेणोः संबन्धी वैणवः। व्रते व्रतविषये वेणुदण्डनाम॥ ४५॥

[1] पूयतेऽनेन $F_2$, $Pt_2$  [2] पापानि असंस्कृतहेतुभूतानि $K_5$, $K_6$  [3] सर्वलिङ्गानि वेदविरुद्धचिह्नानि सन्ति एषां $D_2$, $K_2$ कमण्डलुजटादीनि $K_2$, $W_2$  [4] वेदबाह्यमार्ग° $K_5$, $W_2$

(पा.) पवित्र—पूत। शुचेर्नामानि॥ पाषण्डाः—सर्वलिङ्गिनः। षण्णवतिबाह्यलिङ्गिनः पाषण्डाः स्युः॥ पालाशो दण्ड—राम्भस्तु वैणवः। व्रते राम्भः इत्यत्र 'रो रि' (८. ३. १४) इति रेफलोपः[1]। व्रते पालाशो दण्ड आषाढः स्यात्। व्रते वैणुदण्डो राम्भः स्यात्॥ ४५॥

[1] अथवा व्रते इति सप्तम्यन्तं ब्रह्मचर्ये

**अस्त्री कमण्डलुः कुण्डी व्रतिनामासनं वृसी।**
**अजिनं चर्म कृत्तिः स्त्री भैक्षं भिक्षाकदम्बकम्॥ ४६॥**

(वि.) अस्त्रीति—कमुदकम्[1] अण्डे मध्ये लातीति कमण्डलुः। 'ला आदाने'। कुण्डवद् वृत्तत्वात् कुण्डी। कमण्डलुनामनी॥ व्रतिनः सीदन्त्यस्यामिति वृसी। दर्भादिकृतव्रत्यासननाम॥ अज्यते मूत्रसमयेऽन्यत्र क्षिप्यते अजिनम्। 'अज गति-

क्षेपणयोः'। [4]मेखलादिना सह चरति चर्म। 'चर गतिभक्षणयोः'। कृत्यते कृत्तिः। 'कृती छेदने'। [5]अजिननामानि॥ भिक्षाणां समूहो भैक्षम्। भिक्षाकदम्बनाम॥ ४६॥

[1] जलं Pt₂. [2] व्रुवन्तः, 'ब्रूञ् व्यक्तायां वाचि' 'षद्लृ विशरणगत्यवसादनेषु' F₂, Pt₂. [3] वृषीति वा पाठः D₂, Pt₂. [4] चरति कटिप्रदेशं F₂, Pt₂. [5] चर्म° K₂, K₃, W₂.

(पा.) अस्त्री कमण्डलुः कुण्डी। कुण्डिकानामनी॥ व्रतिनामासनं वृसी। नियमिनामासनं वृसी स्यात्। 'वसितसिवृसिमांसीति' दन्त्यान्तेषु चन्द्रगोमिः। 'कपिकच्छ्वां वृषा प्रोक्ता व्रतिनामासने वृषी' इति मूर्धन्यान्तेषु विश्वप्रकाशिका (पृ. १७१, श्लो. २)॥ अजिनं चर्म—स्त्री। [1]कृष्णाजिननामानि। अनुक्तम्—'मौञ्जी तु मेखला क्षोणी'। मुञ्जमेखला क्षोणी स्यात्। 'धटिनी सूत्रमेखला'। तन्तुकृतमेखला धटिनी स्यात्। 'योगपट्टस्तु पर्यङ्कस्तस्मिन् पर्यस्तिका स्त्रियाम्'। योगपट्टनामानि॥ भैक्षं भिक्षाकदम्बकम्। भिक्षाशब्दोऽत्र भिक्षितान्नवचनः। 'भिक्षा स्त्री भिक्षितान्ने[2] च याच्ञायां भृतिसेवयोः' इति वैजयन्ती (पृ. २२२, श्लो. २६)। भिक्षासमूहो भैक्षं स्यात्॥ ४६॥

[1] चर्मनामानि B₃. [2] °अन्नादौ इति मुद्रितग्रन्थे.

**स्वाध्यायः स्याज्जपः सुत्याभिषवः सवनं च सा।**
**सर्वैनसामपध्वंसि जप्यं त्रिष्वघमर्षणम्॥ ४७॥**

(वि.) स्वाध्याय इति—स्ववेदाध्ययनं स्वाध्यायः। जपनं जपः। 'जप व्यक्तायां वाचि'। जाप इति वा पाठः। ब्रह्मयज्ञस्वाध्यायनाम॥ सोमलतामस्यां सुन्वन्तीति सुत्या। अभिषुण्वन्ति अभिषवः। सवनं च। 'षुञ् अभिषवे'। सोमाभिषवानुष्ठानविधिनामानि॥ अघं मृष्यते नाश्यतेऽनेन अघमर्षणम्। 'मृषु[1] सहने'। जले जप्यस्य [2]ऋतं चेत्यादिसूक्तस्य नाम॥ ४७॥

[1] 'मृष हिंसायाम्' K₃, K₆, Pt₂. [2] ऋग्वेदः (१०. १९०).

(पा.) स्वाध्यायः स्याज्जपः। 'बाहुलकाद् घञ्। जापः' इति रक्षितवचनाज्जापोऽपि स्यात्। स्वाध्यायनामनी॥ सुत्याभिषवः—च सा। स्नाननामानि। सोमपाननामान्यपि स्युः। सर्वैनसामपध्वंसि—अघमर्षणम्। [1]जप्यं गायत्र्यादि। सर्वपापापनोदकं जप्यमघमर्षणं स्यात्। तत् त्रिलिङ्गम्। अघमर्षणो मन्त्रः। अघमर्षणी ऋक्[2]॥ ४७॥

[1] A₁ adds शूद्रस्य वैदिकमन्त्रं प्रत्यनधिकारादित्यनेन. [2] ऋगित्यादि B₃.

**दर्शश्च पौर्णमासश्च यागौ पक्षान्तयोः पृथक् ।**
**शरीरसाधनापेक्षं नित्यं यत्कर्म तद्यमः ॥ ४८ ॥**
**नियमस्तु स यत्कर्म नित्यमागन्तुसाधनम् ।**

(वि.) दर्श इति—दर्शेऽमावास्यायां [1]हितो यागो दर्शः । कृष्णपक्षान्तदिनयागनाम ॥ [2]पौर्णमास्यां विहितो यागः पौर्णमासः । शुक्लपक्षान्तदिनयागनाम ॥ यम्यते चित्तमनेन यमः । 'यम उपरमे' । शरीरेन्द्रियमात्रसाधनापेक्षस्य अहिंसास्तेयादिनित्यानुष्ठेयकर्मणो[3] नाम ॥ नियम्यते पुरुषोऽनेनेति नियमः[4] । मृज्जलाद्यागन्तुसाधनस्य नित्यस्य तपःशौचसंतोषादेर्नाम ॥ ४८ ॥

[1] विहितः $D_3$, $K_3$, $W_2$. [2] पूर्णिमाया $D_2$, $K_2$. [3] अनुष्ठेयकनित्यकर्म $K_5$. [4] नित्य यम्यते पुरुषोऽन $D_2$.

(पा.) दर्शश्च [1]पूर्णमासश्च—पक्षान्तयोः पृथक् । पक्षान्तयागौ दर्शपूर्णमासौ स्याताम् ॥ शरीरसाधनापेक्षं—तद्यमः । शरीरैकसाधनं नित्यकर्म यमः स्यात् । अहिंसादि ।

'अहिंसा सत्यमस्तेयं ब्रह्मचर्यमसंग्रहः ।
यमः[2] स्यात्' ।

इति वैजयन्ती (पृ. १००, श्लो. २०९) ॥ नियमस्तु—आगन्तुसाधनम् । आगन्तुसाधनं नित्यकर्म नियमः स्यात्[3] । 'नियमाः शौचसन्तोषतपआद्य.' इति वैजयन्ती (पृ १००, श्लो. २०९) ॥ ४८ ॥

[1] पौर्णमासः $A_1$. [2] यमाः स्युः इति मुद्रितग्रन्थे. [3] $A_1$ adds शौचादयो नियमाः.

**उपवीतं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे ॥ ४९ ॥**
**प्राचीनावीतमन्यस्मिन्निवीतं कण्ठलम्बितम् ।**
**अङ्गुल्यग्रे तीर्थं दैवं स्वल्पाङ्गुल्योर्मूले कायम् ॥ ५० ॥**

(वि.) उपवीतमिति—[1]उपवीयते संव्रियते वामस्कन्धोऽनेनेति उपवीतम् । 'वी गत्यादौ,' 'वृञ् संवरणे' । वामभुजोपरि दक्षिणभुजादधोवर्तमानस्य यज्ञसूत्रस्य नाम ॥ आवीयते आवीतम् । प्राचीन च तदावीतं च [2]प्राचीनावीतम् । दक्षिणभुजोपरि वामभुजादधोवर्तमानस्य यज्ञसूत्रस्य नाम ॥ नियत वीयते निवीतम् । कण्ठलम्बितयज्ञसूत्रनाम ॥

तीर्यते पापमनेनेति तीर्थम्[3]। देवानामिदं दैवम्। अङ्गुल्यग्ररूपदेवतीर्थनाम[4]॥ कः प्रजापति देवतास्य [5]कायम्। वामदक्षिणकरसर्वाग्विकनिष्ठाङ्गुल्योर्मूलरूपप्रजापतितीर्थनाम॥ ४९–५०॥

[1] $K_3$ omits five lines [2] वामकक्षान्तात् प्राग् आवीयते $K_5$ [3] $F_2$, $Pt_2$ add 'तॄ प्लवनतरणयो' [4] दैव° $D_2$, $W_2$ [5] क ब्रह्मणि कीर्यते $K_3$, काय ब्रह्मणे हविरनेन कीयते $K_5$

(पा.) उपवीत यज्ञसूत्र—दक्षिणे करे। यज्ञसूत्र नाम ब्रह्मसूत्रम्। 'यज्ञसूत्र ब्रह्मसूत्र त्रिसूत्र सूत्रमित्यपि' इति [1]वैजयन्ती। तदेव दक्षिणहस्तोद्धृत चेद् उपवीत स्यात्। प्राचीनावीतमन्यस्मिन्। वामहस्तोद्धृत चेत् प्राचीनावीत स्यात्॥ निवीत कण्ठलम्बितम्। कण्ठलम्बित चेत् निवीत स्यात्। अङ्गुल्यग्रे तीर्थं दैवम्। अङ्गुलीनामग्रे दैव तीर्थं स्यात्। [2]तद्देवततर्पणस्थान[3] भवति॥ स्वल्पाङ्गुल्योर्मूले कायम्। तथा कनिष्ठिकानामिकयोर्मूले प्राजापत्यतीर्थं स्यात्॥ ४९–५०॥

[1] द्विजायनी ब्रह्मसूत्र सूत्र यज्ञोपवीतकम्' इत्येव मुद्रितग्रन्थे (पृ ८४, श्लो २०) [2] $A_1$ adds तन्निमित्तात् [3] दैव° $A_1$

**मध्येऽङ्गुष्ठाङ्गुल्योः पित्र्यं मूले त्वङ्गुष्ठस्य ब्राह्मम्।**
**स्याद्ब्रह्मभूयं ब्रह्मत्वं ब्रह्मसायुज्यमित्यपि॥ ५१॥**

(वि.) मध्य इति—पितॄणामिदं पित्र्यम्। तर्जन्यङ्गुष्ठमध्यरूपपितृतीर्थनाम॥ ब्रह्मण इदं ब्राह्मम्। अङ्गुष्ठमूलरूपब्रह्मतीर्थनाम॥ ब्रह्मणो भावो ब्रह्मभूयम्। ब्रह्मत्वं च। [1]ब्रह्मण सायुज्य[2] ब्रह्मसायुज्यम्। हिरण्यगर्भब्रह्मपदप्राप्तिनाम[3]॥ ५१॥

[1] ब्रह्मणा $K_3$, $K_6$ [2] $Pt_2$ adds सयुक् सखा, तस्य भाव सायुज्यम्. [3] $K_2$ omits, ब्रह्मप्रा° $D_2$

(पा.) मध्ये—पित्र्यम्। अङ्गुष्ठतर्जन्योर्मध्ये [1]पित्र्य तीर्थं स्यात्। मूले—ब्राह्मम्। अङ्गुष्ठमूले ब्रह्मतीर्थं स्यात्॥ स्याद् ब्रह्मभूय—ब्रह्मसायुज्यमित्यपि। ब्रह्मैकीभावनामानि॥ ५१॥

[1] पित्र्यतीर्थं $A_1$

**देवभूयादिकं तद्वत् कृच्छ्रं सांतपनादिकम् ।**
**संन्यासवत्यनशने पुमान् प्रायोऽथ वीरहा ॥ ५२ ॥**
**नष्टाग्निः कुहना लोभान्मिथ्येर्यापथकल्पना ।**

(वि.) देवेति—एवं देवभूय देवत्वम् । देवसायुज्यम् । आदिग्रहणात् राजसूयं राजत्वम् राजसायुज्यम् । इन्द्रभूयम् इन्द्रत्वम् इन्द्रसायुज्यमित्यादि ॥ कृन्तति पापमिति [1]कृच्छ्रम् । 'कृती छेदने' । सातपनप्राजापत्यादिकृच्छ्रनाम ॥ प्रकृष्टमेति पुण्यलोकमनेनेति प्राय [2]। 'इण् गतौ' । सर्वसङ्गपरित्यागवदनशनदीक्षानाम ॥ वीरहन्तुः समत्वात् वीरहा[3] । [4]नष्टत्रेताग्नेर्नाम ॥ कुहयते कुहना । 'कुह विस्मापने' । लोभान्मिथ्यापथकल्पनायाः चर्याया नाम ॥ ५२ ॥

[1] Pt₂ adds :

> त्र्यहं सायं त्र्यहं प्रातस्त्र्यहमद्यादयाचितम् ।
> त्र्यहं परं च नाश्नीयात् [5]कृच्छ्रं सातपनं स्मृतम् ॥ इति मनुः (११. २११).

[2] प्रैति उपरम्यते K₂, K₆, W₂
[3] वीरम् अग्निं हतवान्, 'हन हिंसागत्यो.' F₂, Pt₃.
[4] त्वेच्छयोत्सृष्ट° K₂, K₆, W₂
[5] प्राजापत्यं चरन् द्विज. इति मुद्रितग्रन्थे (पृ ३८४), 'गोमूत्रम्' इत्यादि (श्लो २१२) तु सातपनम्.

(पा.) देवभूयादिक तद्वत् । तथा देवभूयदेवत्वदेवसायुज्यानि देवैकीभावनामानि ॥ कृच्छ्र सातपनादिकम् । सांतपनादिव्रत कृच्छ्र स्यात् ।

> 'गोमूत्र गोमय क्षीर दधि सर्पि. कुशोदकम् ।
> एकरात्रोपवासश्च कृच्छ्रं सातपनं स्मृतम् ॥'

इति (मनु. ११. २१२) ॥ सन्यासवत्यनशने—प्राय: । सन्यास. स्यात् क्रियात्याग. । [1]तत्पूर्वकमनशनव्रत प्रायः स्यात् । अकारान्तः । 'प्रायोपवेशनमतिर्नृपतिर्बभूव' इति (रघु. ८. ९४) ॥ अथ वीरहा नष्टाग्नि. । नष्टाग्निर्वीरहा स्यात् । 'वीरहा वा एष देवाना भवति योऽग्निमुद्वासयते' इति श्रुते ([2]तै. स. १. ५. २) । वीरहणौ, वीरहणः । 'सौ च' (६. ४. १३) इत्यादिनियमात् [3]दीर्घो न भवति ॥ कुहना—ईर्यापथकल्पना । अर्थलिप्सयासद्भूतचर्यापथकल्पना कुहना स्यात् । 'कुहनायतिन कुरुप्रवीर स्वसरि न्यस्तदृशं जगाद शौरिः' । इति प्रयोगः ॥ ५२ ॥

[1] संन्यास° A₁. [2] Apte's Dict. p. 1487. [3] B₂ omits.

**व्रात्यः संस्कारहीनः स्यादस्वाध्यायो निराकृतिः ॥ ५३ ॥**
**धर्मध्वजी लिङ्गवृत्तिरवकीर्णी क्षतव्रतः ।**

(वि.) व्रात्य इति—व्रातं स्तोममर्हतीति व्रात्यः । काले उपनयनादिसंस्कारहीनस्य नाम ॥ न विद्यते स्वाध्यायो यस्य अस्वाध्यायः । [1]निराक्रियत इति निराकृतिः । [2]गृहीतस्वाध्यायत्यागिनो नाम ॥ धर्मस्येव ध्वजः चिह्नं यस्य धर्मध्वजी । लिङ्गधारणमेव[3] वृत्तिर्जीवनं यस्य लिङ्गवृत्तिः । मिथ्यानुष्ठानलक्षणजीवतो नामनी ॥ अव[4] व्रतान्तरे कीर्णं रेतोऽस्य अवकीर्णी । 'कॄ विक्षेपे' । क्षतं खण्डितं व्रतमस्य क्षतव्रतः । नष्टब्रह्मचर्यव्रतस्य नामनी ॥ ५३ ॥

[1] $K_2$ adds स्वाध्यायविद्भिः. [2] $K_2$ adds तपः. [3] $F_2$, $Pt_2$ add चिह्न°. [4] $W_2$ adds अवान्तरे.

(पा.) व्रात्यः—हीनः स्यात् । उपनयनं विना कृतविवाहो विप्रो व्रात्यः स्यात् ।

'कुर्वन्त्यनुपनीता ये विवाहं ब्राह्मणादयः ।
व्रात्या व्रातास्च ते सर्वे ॥'

इति वैजयन्ती (पृ ७६, श्लो. ५९) ॥ अस्वाध्यायो निराकृतिः । वेदाभ्यासशून्यो निराकृतिः स्यात् । अनुक्तम्—'अजपस्त्वसदध्येता' । असत्पाठकोऽजपः स्यात् ॥ 'शाखारण्डोऽन्यशाखया' । अन्यशाखापाठकः शाखारण्ड स्यात् ॥ धर्मध्वजी लिङ्गवृत्तिः । लिङ्गं जटाधारणादिकं यस्य वृत्तिः स धर्मध्वजी स्यात् । [1]वर्णिलिङ्गयपि स्यात् । 'वर्णिलिङ्गी लिङ्गवृत्तिः' इति वैजयन्ती (पृ. ८३, श्लो ९) ॥ अवकीर्णी क्षतव्रतः । क्षतब्रह्मचारिव्रतोऽवकीर्णी[2] स्यात् । आरूढच्युतः । पतितः ॥ ५३ ॥

[1] वर्णी लिङ्गी $A_2$. [2] अवकीर्णः $A_2$.

**सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च ॥ ५४ ॥**
**अंशुमानभिनिर्मुक्ताभ्युदितौ च यथाक्रमम् ।**
**परिवेत्तानुजोऽनूढे ज्येष्ठे दारपरिग्रहात् ॥ ५५ ॥**

(वि.) सुप्त इति—य सुप्तमभि[1] सूर्यो निर्मुञ्चति अस्तमेति सोऽभिनिर्मुक्त । सूर्यास्तमयकाले सुप्तस्य नाम ॥ य सुप्तमभि[1] सूर्य उदेति उदय गच्छति सोऽभ्युदित । सूर्योदयकाले सुप्तस्य नाम ॥ ज्येष्ठ [2]परिवर्ज्य वधू विन्दति परिवेत्ता[3]। ज्येष्ठेऽकृतविवाहे सति कृतदारसग्रहस्य[4] नाम ॥ ५४–५ ॥

[1] अभिभूय $Pt_2$ [2] परित्यज्य $F_2$ $Pt_2$ [3] $D_2$, $W_2$, $Pt_2$ add 'विद्लृ लाभे' [4] परिग्रह° $K_3$

(पा.) सुप्ते यस्मिन्—यथाक्रमम् । यस्मिन् [1]पुरुषे सुप्ते सति अशुमानस्तमेति यस्मिन् पुसि[2] सुप्ते सति सूर्योऽभ्युदेति तौ नरौ[3] यथाक्रमम् अभिनिर्मुक्ताभ्युदिताविति फलितार्थ । सूर्यास्तमयसूर्योदयसमयशायिनोर्नामनी[4] ॥ परिवेत्ता—दारपरिग्रहात् । ज्येष्ठस्य विवाहेऽसति सति ऊढ कनिष्ठ परिवेत्ता स्यात् । ऋदन्त ॥ ५४–५ ॥

[1] पुसि $B_3$ [2] नरे $A_1$ [3] $B_3$ omits [4] °समययो शायिनौ क्रमेणाभिनिर्मुक्ताभ्युदितावित्यर्थ $A_1$

**परिविित्तिस्तु तज्ज्यायान् विवाहोपयमौ समौ ।**
**तथा परिणयोद्वाहोपयामाः पाणिपीडनम् ॥ ५६ ॥**

(वि.) परिवित्तिरिति—भ्राद्रादौ परियज्य[1] विन्दति परिवित्ति । पूर्वोक्तस्यैव[2] ज्येष्ठभ्रातृनाम ॥ विशेषेण वहति वधूमिति [3]विवाह । 'वह प्रापणे'। उपयमनम् उपयम । परिणीयते[4] वधूरिति परिणय । 'णीञ् प्रापणे'। उद्वहनम्[5] उद्वाह । 'वह प्रापणे'। उपयमनम्[6] उपयाम । 'यम उपरमे'। वधूपाणे वरपाणिना पीडन ग्रहणमनेति पाणिपीडनम् । विवाहनामानि ॥ ५६ ॥

[1] परिवर्ज्यते $K_5$, $K_6$, $W_2$ [2] पूर्वोक्तज्येष्ठ° $K_6$, ज्यायस $K_2$ [3] विवहति $K_3$, $K_6$. [4] परिणयते $F_2$, $Pt_2$ [5] उद्वहति $K_5$, $K_6$, $W_2$. [6] उपयमवत् $W_2$, अप्प्रसवे, घञ् च (३. ३ ६३).

(पा.) परिवित्तिस्तु तज्ज्यायान् । कनिष्ठस्य विवाहे सति ज्येष्ठोऽनूढ परिवित्ति स्यात् । परिवित्तोऽपि स्यात् । 'परिवित्तिस्तु तज्ज्यायान् परिवित्त [1]कुरी च स ' इति

वैजयन्ती (पृ. ८६, श्लो. ४३) ॥ विवाहोपयमौ समौ । विवाहनामनी ॥ तथा परिणयो—पाणिपीडनम् । इति पुस्तकान्तरपाठात् परिणयादयोऽपि स्युः[2] ॥ ५६ ॥

[1] कुलीति च $A_1$, $B_3$. [2] $B_3$ omits.

व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम् ।
त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः ॥ ५७ ॥
सबलैस्तैश्चतुर्भद्रं जन्याः स्निग्धा वरस्य ये ।

## इति ब्रह्मवर्गः

(वि.) व्यवाय इति—व्यवायनं[1] व्यवायः । 'इण् गतौ' । ग्राम्यो धर्मः ग्राम्यधर्मः[2] । मिथुनस्येदं मैथुनम् । निधूयन्ते कम्पन्तेऽङ्गान्यस्मिन्निति[3] निधुवनम् । 'धूञ् कम्पने' । [4]रमन्तेऽस्मिन्निति रतम् । 'रमु क्रीडायाम्' । मैथुननामानि ॥ [5]त्रिभिर्धर्मार्थकामैरुपलक्षितो वर्गः त्रिवर्गः । धर्मार्थकामसमूहनाम[6] ॥ चतुर्भिरुपलक्षितो[7] वर्गः चतुर्वर्गः । मोक्षसहितस्य पूर्वोक्तस्य वर्गत्रयस्य नाम ॥ चतुर्णां भद्राणां समाहारः चतुर्भद्रम् । अतिनिर्बन्धेन वर्तमानानां धर्मार्थकाममोक्षाणां नाम ॥ जनिं वधूं वरं [8]प्रापयन्तीति जन्याः । वरस्य सुहृदां नाम ॥ ५७ ॥

इति श्रीलिङ्गयसूरिविरचितायाममरकोशपदविवृतौ ब्रह्मवर्गः

[1] व्यवयति $K_6$; व्यवैति $K_4$, $W_2$. [2] ग्राम्याणां धर्मः $F_2$, $Pt_2$. [3] गात्राण्यस्मिन् $W_2$. [4] रमणं $Pt_2$. [5] त्रयाणां वर्गः $W_2$, $Pt_2$. [6] पुरुषार्थत्रयस्य $W_2$. [7] चतुर्णां वर्गः $W_2$, $Pt_2$. [8] नयन्तीति $Pt_2$.

(पा.) व्यवायो ग्राम्यधर्मः—निधुवनं रतम् । 'स्त्रियां क्तिन्' (३. ३. ९४) इति रतिरपि स्यात्[1] । 'ग्राम्यधर्मः कामकेली रतिर्निधुवनं रतम्' इति वैजयन्ती (पृ. १७२, श्लो. १५०) । 'सौ रमेः क्तः' इति [2]सुरतमपि स्यात् । 'सुरतं मोहनं प्रोक्तं मणितं रतकूजितम्' इति हलायुधः (अ. मा. २. ४१४) । संगमनामानि ॥ अनुक्तम्—'चुम्बनं रदनोच्छिष्टम्' । अधरग्रहणनाम ॥ 'मणितं रतिकूजितम्' । गलरवनामनी ॥ त्रिवर्गो धर्मकामार्थैः । धर्मकामार्थास्त्रयो मिलित्वा त्रिवर्गः स्यात् । चतुर्वर्गः समोक्षकैः ।

मोक्षसहितास्ते [3]त्रयश्चतुर्वर्ग स्यात्। सबलैस्तैश्चतुर्भद्रम्। बलयुक्तास्ते चत्वारश्चतुर्भद्रं स्यात्॥ जन्या—वरस्य ये। वरस्य वयस्या जन्या स्यु। नवोढायाश्च ज्ञातिभृत्या जन्या स्यु। 'ज्ञातिभृत्या नवोढाया जन्या स्निग्धा वरस्य च' इति वैजयन्ती (पृ २३२, श्लो ३३)॥५७॥

इति [4]श्रीवत्सनृसिंहसूरिसुतमल्लिनाथसुधीविरचितेऽमरपदपारिजाते ब्रह्मवर्गः

[1] $B_1$ omits [2] सुष्ठु रत सुरतम्। 'सौ रमे त्तो दमे पूर्वपदस्य च दीर्घ' उणादि ७०२। 'रमे सुपूर्वाद्दमे वाच्ये च स्यात्। ० सूरत उपशान्तो दयालुश्च'। इति कौमुदी॥ (पृ ५३९) [3] $B_2$ omits [4] °नरसिंह° $A_1$

---

## ८. क्षत्रवर्गः

**मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्।**
**राज्ञि राट्पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः॥ १॥**

(वि.) मूर्धेति[1]—मूर्ध्नि प्रायेणाभिषिच्यते मूर्धाभिषिक्त। राज्ञ क्षत्रियस्यापत्य पुमान् राजन्य। ब्रह्मणो बाहोर्जात बाहुज। क्षतात् त्रायते क्षत्र, तस्यापत्य क्षत्रिय। विराजते विराट्। 'राजृ दीप्तौ'। क्षत्रियनामानि॥ प्रजा रञ्जयतीति राजा। 'रञ्ज रागे'। राजतीति वा। 'राजृ दीप्तौ'। राजते राट्। पृथिव्या ईश्वर पार्थिव। [2]क्ष्मा बिभर्तीति क्ष्माभृत्। 'भृञ् भरणे'। नॄन् पातीति नृप। भुव पातीति भूप। 'पा रक्षणे'। मही क्षियति अधिवसति महीक्षित्। 'क्षि निवासगत्यो'। राजनामानि॥ १॥

[1] $W_2$ adds अथ क्षत्रियवर्ग प्रारभ्यते, $Pt_2$ adds राज्यारोपणकाले [2] $W_2$ adds भुव

(पा.) मूर्धाभिषिक्तो—क्षत्रियो विराट्। राजन्य'शब्दप्रकृतिभूतराजशब्दोऽपि पर्यायपाती। 'राजा मृगाङ्के क्षत्रिये नृपे' (३ ३ १११) इति वक्ष्यति। तथैव क्षत्रिय'शब्दप्रकृतिभूतक्षत्रशब्द। 'क्षत्रियस्तु विराट् क्षत्रराजन्यद्विजलिङ्गिन' इति

रभसकोश । क्षत्रियजातिनामानि ॥ राज्ञि राट्—भूपमहीक्षित । राज्ञो नामानि । 'भूशक्रो नरदेवश्च' । [2]एते द्वे च ॥ १ ॥

[1] °शब्दस्य $A_1$　　[2] इत्यते च $B_3$

**राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः ।**
**चक्रवर्ती सार्वभौमो नृपोऽन्यो मण्डलेश्वरः ॥ २ ॥**

(त्रि.) राजेति—ससक्त समन्तात् सलग्नोऽन्तो यस्या सा समन्ता स्वविषयावनन्तरा भूमि । समन्ताया इमे सामन्ता । प्रणता अशेषा सामन्ता यस्य । अधि सामन्तानामुपरि ईष्टे अधीश्वर । 'ईश ऐश्वर्ये' । प्रणताशेषसामन्तराजनाम ॥ चक्र[1] राष्ट्र स्वामित्वेन वर्तयतीति चक्रवर्ती । 'वृतु वर्तने' । सर्वस्या भूमेरीश्वर सार्वभौम । चक्रवर्तिनामनी ॥ अन्यो नृपो मण्डलेश्वर इत्युच्यते । मण्डलस्य ईश्वर मण्डलेश्वर । एकदेशाधिपतिनाम ॥ २ ॥

[1] चक्र वर्तते $D_2$ $K_2$

(पा.) राजा तु—स्यादधीश्वर । 'सामन्ता राज्यसधिस्था ' इति वैजयन्ती (पृ १०५, श्लो १८) । प्रणमदखिलसामन्तराजोऽधीश्वर स्यात् । दुर्योधनादि ॥ चक्रवर्ती सार्वभौम । सकलभूमीश्वरनामनी । कार्तवीर्यादि ॥ नृपो—मण्डलेश्वर । अधीश्वरसार्वभौमाभ्यामन्यो राजा मण्डलेश्वर स्यात् । द्रुपदादि ॥ २ ॥

**येनेष्ट राजसूयेन मण्डलस्येश्वरश्च यः ।**
**शास्ति यश्चाज्ञया राज्ञः स सम्राडथ राजकम् ॥ ३ ॥**
**राजन्यकं च नृपतिक्षत्रियाणां गणे क्रमात् ।**

(वि.) येनेति—राजसु मध्ये सम्यक् राजत इति सम्राट् । [1]राजसूययागकृत स्वाज्ञयाशेषनृपशासितुर्मण्डलेश्वरस्य नाम ॥ राज्ञा गणो राजकम् । नृपतिसमूहनाम ॥ क्षत्रियाणा समूहो राजन्यकम् । [2]क्षत्रियसमूहनाम ॥ ३ ॥

[1] येन राज्ञा राजसूयनाम्ना यागेनेष्ट, यो राजा मण्डलस्य हिमवत्सेतुमध्ये सहस्रयोजनपरिमाणस्य भूमण्डलस्य (द्वादशराजमण्डलस्य) ईश्वर पालयिता यश्च राज्ञ हिमवत्समुद्राभ्यन्तरवर्तिनो नृपान् शास्ति, एते त्रय सम्राट्छब्दवाच्या इति कश्चित् $Pt_2$　　[2] राजसमूह° $K_5$, $K_4$

(पा.) येनेष्ट—स सम्राट । येन राजसूययाग कृत, यो मण्डलस्याधिप, [1]यश्च स्वाज्ञया राज्ञ शास्ति स सम्राट् स्यात् । युधिष्ठिरादि ॥ अथ राजक—गणे क्रमात् । राज्ञा कदम्बक राजक स्यात्[2] । क्षत्रियाणा समूह राजन्यक स्यात्[3] ॥ ३ ॥

[1] यस्याज्ञया $A_1$ [2] $A_1$ adds नृपतिसमूहनाम [3] $A_1$ adds क्षत्रियसमूहनाम

**मन्त्री धीसचिवोऽमात्योऽन्ये कर्मसचिवास्ततः ॥ ४ ॥**
**महामात्राः प्रधानानि पुरोधास्तु पुरोहितः ।**

(वि.) मन्त्रीति—मन्त्रो गुप्तवाद [1]कर्तव्यावधारण वा अस्यास्तीति मन्त्री । धिय सचति समवैति धीसचिव । 'षच समवाये' । अमा[2] राज्ञ समीपे वर्तत इति अमात्य । बुद्धिप्रदातृनामानि ॥ कर्म सचन्ति कर्मसचिवा । बुद्धिप्रदातुरितरस्य मन्त्रिणो नाम ॥ महती[3] मात्रा सेना परिच्छद येषा ते महामात्रा । प्रदधति प्रकर्षेण राज्य धारयन्ति प्रधानानि । मुख्यामात्यनामानि ॥ शान्तिकपौष्टिकादिकर्मसु पुरो धीयत इति पुरोधा । सान्तोऽयम् । पुरोहितश्च । 'डुधाञ् धारणपोषणयो' । पुरोहितनामनी ॥ ४ ॥

[1] इतिकर्तव्यताधारण $F_2$ $Pt_2$ [2] अमाशब्द सहार्थे निपात अमा मन्त्रेण सह वर्तत इति $Pt_2$ [3] महानतिमात्र $D_2$ $Pt_2$

(पा.) मन्त्री—अमात्य । 'मन्त्री सहाय सचिवौ' इति वक्ष्यति (३ ३ २०६) । बुद्धिसहायवान् मन्त्री, अमात्यश्च स्यात् । अन्ये कर्मसचिवास्तत — प्रधानानि । 'महामात्र [1]प्रधान स्यात्' इति पुस्काण्डे गोपालित । अन्यकर्मसहाया महामात्रा प्रधानानि चेत्युच्यन्ते ॥ पुरोधास्तु पुरोहित । राजाचार्यनामनी । 'सौवस्तिक इति प्रोक्तो [2]राजाचार्य पुरोहित' इति हलायुध (अ मा २ २७१) ॥ ४ ॥

[1] प्रधान $B_2$ [2] प्रोक्त पुरोधाश्च इति मुद्रितग्रन्थे

**द्रष्टरि व्यवहाराणां प्राड्विवाकाक्षदर्शकौ ॥ ५ ॥**
**प्रतीहारो द्वारपालद्वाःस्थद्वाःस्थितदर्शकाः ।**

(वि.) द्रष्टरीति—अर्थिप्रत्यर्थिनौ[1] पृच्छतीति प्राट् । विशिष्ट वचनमस्येति विवाक[2] । प्राट् चासौ विवाकश्च प्राड्विवाक । [3]अक्ष व्यवहार पश्यतीति अक्षदर्शक ।

[4]व्यवहारद्रष्टृब्राह्मणनामनी ॥ प्रतिह्रियते निवार्यते नूतनो[5] जनोऽनेन प्रतीहारः[6]। द्वारं पालयतीति द्वारपालः। 'पाल रक्षणे'। द्वारि तिष्ठतीति द्वाःस्थः[7]। द्वारि स्थितं कार्यार्थिनं राज्ञे दर्शयति[8] द्वाःस्थितदर्शकः[9]। 'दृशिर् प्रेक्षणे'। द्वारपालकनामानि ॥ ५ ॥

[1] धर्माधर्मौ F₂, Pt₂. [2] विवक्तीति F₂, Pt₂. [3] अक्षान् व्यवहारान् F₂, Pt₂. [4] निर्णेतृनामानि W₂. [5] प्रतिहरति नूतनजनान् Pt₂. [6] प्रतिहारः D₂, K₅, K₆. [7] द्वार्स्थः K₅, K₆, Pt₂, D₂, Pt₂ add 'ष्ठा गतिनिवृत्तौ'. [8] K₃, K₅, W₂ add निवेदयति. [9] द्वास्थितः, दर्शक इति द्वे नामनी इति केचित् Pt₂.

(पा.) द्रष्टरि व्यवहाराणां—अक्षदर्शकौ। 'न्यायोऽक्षो व्यवहारश्च' इति वैजयन्ती (पृ. १२४, श्लो. १५)। राजद्वारायत्तन्यायद्रष्टरि[1] प्राड्विवाकाक्षदर्शकशब्दौ[2] स्याताम्[3] ॥ प्रतीहारे—[4]द्वा स्थितदर्शकाः। दौवारिकनामानि। 'दौवारिको वेत्रधरः'। एते द्वे च ॥ ५ ॥

[1] द्रष्टरि A₁. [2] °दर्शकौ A₁. [3] इत्युच्येते A₁. [4] द्वास्थद्वास्थितदर्शकाः इति क्वचित् पाठः A₁

**रक्षिवर्गस्त्वनीकस्थोऽथाध्यक्षाधिकृतौ समौ ॥ ६ ॥**
**स्थायुकोऽधिकृतो ग्रामे गोपो ग्रामेषु भूरिषु ।**

(वि.) रक्षिवर्ग इति—[1]रक्षिणां वर्गः रक्षिवर्गः। अनीकेन[2] तिष्ठतीति अनीकस्थः। अङ्गरक्षकव्रातस्य नामनी ॥ अधि उपरि अक्ष्णोतीति अध्यक्षः। 'अक्षू व्याप्तौ'। अधिक्रियते[3] उपरि नियुज्यते स्म अधिकृतः। 'डुकृञ् करणे'। अधिकारिनामनी ॥ ग्रामे स्थातुं शीलमस्येति स्थायुकः[4]। एकग्रामाधिकारिणो नाम ॥ गोपायति स्वाधिष्ठितान् ग्रामानिति गोपः। 'गुपू रक्षणे'। बहुग्रामाधिकारिणो नाम ॥ ६ ॥

[1] D₂, K₆, W₂ add ग्रामे स्थातृणा [2] F₂, Pt₂ add वृन्देन. [3] अधिकारं करोति K₅, K₆, W₂. [4] W₂ adds 'ष्ठा गतिनिवृत्तौ'.

(पा.) रक्षिवर्गस्त्वनीकस्थः। अङ्गरक्षिणां वर्गोऽनीकस्थः स्यात्। 'रक्षिवर्गस्तु यो राज्ञां सोऽनीकस्थोऽभिधीयते' इत्यमरमाला। अनुक्तम्—'आरक्षाः पुररक्षिणः'। पुररक्षका आरक्षाः स्युः ॥ अथाध्यक्षाधिकृतौ समौ। अधिकारसामान्यनामनी। अधिकार-

विशेषोऽपि वक्ष्यते। [1]स्थायुको—ग्रामे। एकग्रामाधिकारी स्थायुक[1] स्यात्। गोपो—भूरिषु। अनेकग्रामाधिकारी गोप स्यात्॥ ६॥

[1] स्थायिक $A_1$ $B_3$

**भौरिकः कनकाध्यक्षो रूप्याध्यक्षस्तु नैष्किकः॥ ७॥**
**अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः।**

(वि.) भौरिक इति—भूरिद्रव्ये [1]कनके नियुक्तो भौरिक। कनकस्याध्यक्ष। सुवर्णाधिकृतस्य नामनी॥ प्रशस्त रूपमत्रेति रूप्यम्। रूप्ये[2]ऽध्यक्षो रूप्याध्यक्ष। निष्काणामधिकृतो नैष्किक। निष्के हेम्नि नियुक्तो वा। राजमुद्राङ्करूप्याध्यक्षनामनी॥ अन्त अभ्यन्तरो वशो गृहम्। तस्मिन् नियुक्त अन्तर्वंशिक[3]। वशस्य कुलस्य अन्त अन्तर्वंश स्त्रिय, ता सन्त्यस्येति वा। अधिकरोतीति अधिकृत। अन्त पुराधिकृत[4]नाम॥ ७॥

[1] कनकाख्ये $K_1$ $K_2$ [2] रूप्यस्य $D_2$ $K_5$ [3] अन्तर्वंश कुलस्त्री सा संविधेयत्वेन अस्यास्तीति $K_3$ $K_4$ [4] अधिकारि° $K_3$ $K_4$

(पा.) भौरिक कनकाध्यक्ष। [1]हेमभाण्डाराधिकारी भौरिक स्यात्। रूप्याध्यक्ष—नैष्किक। टङ्काधिकारी नैष्किक स्यात्। '[2]स्याद्धट्टे विकर्मिक'। आपणाधिकारी विकर्मिक स्यात्। 'पुर्यामध्यक्षो दण्डपाशिक'। पट्टणाधिकारी दण्डपाशिक स्यात्॥ अन्त पुरे—अन्तर्वंशिको जन। शुद्धान्ताधिकार्यन्तर्वंशिक स्यात्॥ ७॥

[1] °भण्डार° $A_1$ [2] हट्ट विकर्मिक स्यात् $B_3$

**सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते॥ ८॥**
**पण्डो वर्षवरस्तुल्यौ सेवकार्थ्यनुजीविनः।**

(वि.) सौविदल्ला इति—सुष्ठु वेत्तीति सुवित्। सकलसारज्ञ। त नर लान्ति वल्लभत्वे स्वीकुर्वन्ति सुविदला स्त्रिय, तासा रक्षकत्वेन वर्तमाना सौविदल्ला। कञ्चुका सन्ति[1] येषामिति कञ्चुकिन। राजस्त्रीणा [2]सतीत्व स्थापयन्ति स्थापत्या। शोभन विदन्तीति सुविद स्त्रिय, तासु पालकत्वेन वर्तन्त इति सौविदा। राजस्त्रीरक्षणाधिकृताना नामानि॥ सनोतीति षण्ड[3]। 'षणु दाने'। वर्षं रेत सेक वृणोतीति

वर्षवर[4]। 'वृञ् वरणे'। नपुंसकसौविदल्लनामनी॥ [5]सेवां कुर्वन्तीति सेवका। 'षेवृ सेवने'। अर्थं [6]सेवाप्रयोजनं येषां ते अर्थिनः। प्रभुमनुजीवन्तीति अनुजीविनः। मन्त्रिप्रभृति राजोपचारिणां नामानि॥ ८॥

[1] $F_2$, $Pt_2$ add विनीतवेषार्थं　[2] व्यवस्था $D_2$, $Pt_2$　[3] शाम्यति शिक्षाभावात् $Pt_2$　[4] $K_3$, $K_5$ add घृष्णोतीति घर्षम्। 'घृष शक्तिप्रतिबन्धे'। घर्षं शक्तिप्रबन्धकं वरं रेतोऽस्य घर्षवरः। वर्षधर इति पाठे वर्षाणि वत्सरान् वृथा धारयतीति वर्षधरः। घर्षवरः, वर्षवरः, वर्षधर इति पाठत्रयम्.　[5] सेवन्ते $F_2$, $Pt_2$　[6] सेवैव $K_3$, $K_5$

(पा.) सौविदल्ला' कञ्चुकिनः—ते। महिषीसुरक्षकनामानि। 'सावासुलु' शण्ढो[1] वर्षवरस्तुल्यौ। [2]पुंस्त्वरहितसौविदनामनी। '[3]षाट्टायी'। 'होढः पञ्चजनीनश्च'। एते द्वे च। 'चवुनिनव्वल'॥ सेवकार्थ्यनुजीविनः। सेवकनामानि। दुर्योधनस्य कर्णादय इव। अनुक्तम्—'सपक्षाः सामवायिकाः'। सामवायिकनाम। पाण्डवानां विराटादय इव॥ ८॥

[1] शण्ढः $B_3$　[2] शण्ढनामनी $B_3$　[3] $B_3$ *omits*

**विषयानन्तरो राजा शत्रुर्मित्रमतः परम्॥ ९॥**
**उदासीनः परतरः पार्ष्णिग्राहस्तु पृष्ठतः।**

(वि.) विषयेति—[1]शातयति नाशनं कृत्वा तदाधिपत्यं करोतीति शत्रुः। 'शद्लृ शातने'। स्वदेशसमीपराजनाम॥ मेद्यति स्निह्यतीति मित्रम्। 'ञिमिदा स्नेहने'। शत्रुदेशानन्तरराजनाम॥ [2]ऊर्ध्वमासीन इव वर्तते उदासीनः। मित्रदेशस्य[3] समीपदेशस्थराजनाम॥ पार्ष्णिं[4] पृष्ठभागं गृह्णातीति पार्ष्णिग्राहः। विजिगीषुर्भूत्वा प्राच्यशत्रून् यदा प्रतियाति[5] तदा प्रतीच्यशत्रुनाम[6]॥ ९॥

[1] शातनं $K_5$, $K_6$　[2] उदास्ते 'आस उपवेशने' $D_2$　[3] मित्रदेशशत्रुदेशानन्तरराजनाम $K_3$　[4] $K_3$, $K_6$ add इव　[5] यास्यति $K_6$　[6] $D_2$, $K_6$ add एव सर्वत्रोह्यम्

(पा.) विषयानन्तरो—शत्रुः। विजिगीषोर्भूम्यनन्तरो राजशत्रुः। मित्रमतः परम्। [1]अतोऽप्युपरिस्थितो राजमित्रम्। उदासीनः परतरः। ततोऽप्युपरिस्थितो राजा उदासीनः। पार्ष्णिग्राहः—पृष्ठतः। पृष्ठभागस्थो[2] राजा पार्ष्णिग्राहः। इत्ययं तत्तन्मण्डलविभागः॥ ९॥

[1] ततः परस्थितः $B_3$　[2] स्थितः $B_3$

**रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः ॥ १० ॥**
**द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः ।**
**अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः ॥ ११ ॥**

(वि.) रिपाविति—रपति प्रकाशयत्यपकीर्तिं रिपुः। रेपयति वेष्टयतीति वा। 'रप व्यक्तायां वाचि' 'रेपृ गतौ'। वीरस्य कर्म वैरम्। तदस्यास्तीति वैरी। समानपतित्वमस्यास्तीति सपत्नः[1]। इयर्तीति अरिः। 'ऋ गतौ'। द्वेष्टीति द्विषन्। 'द्विष अप्रीतौ'। द्विट्, द्वेषणश्च। दुष्टं हृदयं यस्य दुर्हृत्। विरुद्धः पक्षोऽस्य विपक्षः। हितादन्यः अहितः[2]। न मित्रं अमित्रः। दस्यति उपक्षयं करोतीति दस्युः। 'दसु उपक्षये'। शातयतीति [3]शत्रुः। 'शद्लृ शातने'। शत्रुरेव शात्रवः। अभिमुखं हन्तीति अभिघाती। 'हन हिंसागत्योः'। अभियातिरिति पाठे अभि अभिमुखं यातीति। अभिमानीति पाठे अभिमन्यते 'शत्रुरित्येवेति। म्रियते उत्सुक्के हन्तुमिति परः। 'पृङ् व्यायामे'। इयर्तीति अरातिः। 'ऋ गतौ'। प्रतिकूलमर्थयते प्रत्यर्थी। 'अर्थ उपयाच्ञायाम्'। परिपन्थयति विरोधं करोति [5]परिपन्थी। 'पथि गतौ'। शत्रु-नामानि ॥ १०-११ ॥

[1] सपत्नीव दुःखहेतुत्वात् $F_2$, $Pt_3$. [2] न हितः $Pt_2$. [3] शत्रुशब्दः पूर्वोक्तः (श्लो. ९) $W_2$. [4] प्रतिपक्ष $D_2$, $K_5$, $K_6$; अभियायीति वा पाठः $K_5$, $K_6$. [5] $K_6$ adds उपसर्गाद्विरोधार्थः.

(पा.) रिपौ वैरि—परिपन्थिनः। शत्रुनामानि।
'असुहृत्प्रत्यवस्थातृप्रत्यनीकजिघांसवः।
प्रतिपक्षोऽप्यसहनः ॥'
एतानि षट् च ॥ १०-११ ॥

**स्निग्धो वयस्यः सवया अथ मित्रं सखा सुहृत् ।**
**सख्यं साप्तपदीनं स्यादनुरोधोऽनुवर्तनम् ॥ १२ ॥**

(वि.) स्निग्ध इति—स्निह्यति स्निग्धः। 'ष्णिह प्रीतौ'। वयसा तुल्यो वयस्यः। समानं वयो यस्य सवयाः। स्वयंकृताभिनवमित्रनामानि। मेद्यतीति मित्रम्। 'ञिमिदा स्नेहने'। शोभनं हृदयमस्य सुहृत्। समानं प्रमुत्वं ख्याति प्रकथयतीति

[1]सखा। 'ख्या प्रकथने'। मित्रमात्रनामानि॥ सख्युर्भावः सख्यम्। सप्तभिः पदैः प्राप्यते साप्तपदीनम्। सख्यनामनी॥ [2]अनुरुध्यते अनुरोधः। 'रुधिर् आवरणे'। [3]अनुवर्तननाम॥ १२॥

[1] समानं ख्यातः Pt₂　　[2] अनुरोधनं F₂, Pt₂　　[3] F₂, Pt₂ add अनुकूलं वर्तनम् अनुवर्तनम्

(पा.) स्निग्धो वयस्यः सवयाः। तुल्यवयोमित्रनामानि। अथ मित्र—सुहृत्। मित्रनामानि॥ सखिशब्दादन्यः सखशब्दोऽप्यस्ति। 'सखा सहायः सचिवः। सखः।'॥ इति सज्जनः। मित्रशब्दादन्यो मित्रयुशब्दोऽप्यस्ति। 'मित्रं सगन्धो मित्रयुः सुहृत्' इति धनंजयः। सख्यं साप्तपदीनं स्यात्। सख्यं नाम सखित्वम्। 'साप्तपदीनं सख्यम्' इति पाणिनीयम्[1] (५. २. २२)। लक्षणया तद्युक्तोऽपि[2] साप्तपदीनः स्यात्। 'सखा साप्तपदीनः स्यात्' इति वैजयन्ती[3]। (पृ. ९८, श्लो. १८७)॥ अनुरोधोऽनुवर्तनम्। सख्यकरणनामनी॥ १२॥

[1] सूत्रम् B₂　　[2] B₂ omits　　[3] मुद्रितग्रन्थे तु 'सख्यं साप्तपदीनं स्यात्' इत्येव

**यथार्हवर्णः प्रणिधिरपसर्पश्चरः स्पशः।**
**चारश्च गूढपुरुषश्चाप्तः प्रत्ययितस्त्रिषु॥ १३॥**

(वि.) यथेति—[1]यथार्हं यथायोग्यो वर्णः प्रकारोऽस्यास्तीति यथार्हवर्णः। परेषु स्वामिना प्रकर्षेण निधीयते[2] प्रणिधिः। 'डुधाञ् धारणपोषणयोः'। [3]अपच्छन्नः सन् सर्पति चरतीति अपसर्पः। 'सृप्लृ गतौ'। चरतीति चरः। 'चर गतौ'। स्पशति बाधते परानिति स्पशः। तालव्यान्तो रेफशून्यश्चायं शब्दः। 'स्पश बाधनस्पर्शनयोः'। चरति जानाति परबलमिति चारः[4]। 'चर गतौ'। गूढश्चासौ पुरुषश्च गूढपुरुषः। चारनामानि॥ आप्नोति रहस्यमित्याप्तः। 'आप्लृ प्राप्तौ'। प्रत्ययो विश्वासोऽस्य सजातः प्रत्ययितः। अयं शब्दः त्रिषु लिङ्गेषु वर्तते। आप्तनामनी॥ १३॥

[1] यथार्हो योग्य F₂, Pt₂　　[2] D₂, Pt₂ add ज्ञेयमस्मिन्　　[3] अपकृष्ट F₂, Pt₂
[4] Pt₂ adds गत्यर्थत्वात् ज्ञानार्थत्वम्

(पा.) यथार्थवर्णः। 'नृपतेर्नेतुरिवायथार्थवर्णा' इति माघप्रयोगात् (शिशु. २०. २३) अयथार्थवर्णोऽपि स्यात्। प्रणिधिः—गूढपुरुषश्च। गूढचारिनामानि। आप्तप्रत्ययितौ समौ। आप्तनामनी॥ १३॥

**सांवत्सरो ज्यौतिषिको दैवज्ञगणकावपि ।**
**स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तान्तिका अपि ॥ १४ ॥**
**तान्त्रिको ज्ञातसिद्धान्तः सत्री गृहपतिः समौ ।**

(वि.) सावत्सर इति—सवत्सर कालमधीते वेत्ति वा सावत्सर [1] । ज्योतींषि [2]ग्रहनक्षत्राणि वेत्तीति ज्यौतिषिक । दैव शुभाशुभ जानाति दैवज्ञ । 'ज्ञा अवबोधने' । [3]दिनानि गणयतीति गणक । 'गण सख्याने' । मुहूर्त काल वेत्तीति मौहूर्तिको मौहूर्तश्च । कालज्ञानमस्यास्तीति ज्ञानी । [4]कृतान्तो दैवम् । तद्वेत्तीति कार्तान्तिक । ज्यौतिषिकनामानि[5] ॥ तन्यतेऽनेन [6]मतधर्म इति तन्त्रम् । तद्वेत्तीति तान्त्रिक । ज्ञात सिद्धान्तोऽनेनेति ज्ञातसिद्धान्त । ज्ञातशैवादिसिद्धा तस्य नामनी ॥ सीदन्त्यत्रेति सत्रम् गृहम् । [7]तदस्यास्तीति सत्री । [8]गृहपतिव्याजेनावस्थितचारनामनी ॥ १४ ॥

[1] W₂ adds सावत्सरिक [2] नक्षत्रादीनि K₆ [3] काल F₂, Pt₂ [4] कृतान्त सूर्यादिषिद्धा त D₂ K₆ [5] ज्योतिषिक° K₆ [6] D₂ K₅ K₆ add पाशुपतादि [7] Pt₂ adds सदा दान च [8] गृहस्थ पति सदा दानादिकर्तृगृहपतिनाम F₂ Pt₂

(पा.) सावत्सरो ज्यौतिषिको—कार्तान्तिका अपि । [1]ज्यौतिषिकनामानि ॥ तान्त्रिको ज्ञातसिद्धान्त । सिद्धान्तवेत्ता[2] [3]ज्यौतिषिकस्तान्त्रिक स्यात् ॥ सत्री गृहपति समौ । भिन्नपुव्यञ्जनवेत्र[प]धरनामनी । 'हग्गडि' ॥ १४ ॥

[1] ज्योतिषिक° B₃ [2] B₃ adds नामनी [3] B₈ omits

**लिपिकारोऽक्षरचणोऽक्षरचुञ्चुश्च लेखके ॥ १५ ॥**
**लिखिताक्षरविन्यासे लिपिर्लिविरुभे स्त्रियौ ।**

(वि.) लिपिकार इति— लिपि करोतीति लिपिकार । लिपिंकरो लिपिकरो वा । अक्षरैर्वित्त अक्षरचण । अक्षरचुञ्चुश्च । लिखतीति लेखक । 'लिख अक्षरविन्यासे' । लेखकनामानि ॥ लिप्यतेऽनया पत्र लिपि । लिबिश्च । 'लिप उपदेहे' । लिखिताक्षरविन्यासनामनी ॥ १५ ॥

[1] लिपी लिबी वा Pt₂

(पा.) लिपिकारोऽक्षरचणो—लेखके। [1]लेखकनामानि। 'कायस्थः करणश्च स्यात्'। एते द्वे च ॥ लिखिताक्षरविन्यासे—उभे स्त्रियौ'। लिखितवर्णानां विन्यासे लिपिलिविशब्दौ स्याताम् ॥ अनुक्तम्—'लेखस्थानं ग्रन्थकुटी'। करणशालानामनी ॥ 'लेखिनी कलमः पुमान्'। लेखिनीनाम[3]। 'वलपमु'। 'मेलामन्दो मषिघटी'। कज्जलपात्रनाम। 'मेला [4]मषिरुभे स्त्रियाम्'। मषीनाम। 'मसि' ॥ १५ ॥

[1] A₁ adds अक्षरेण वित्तनामनी। 'तेन वित्तश्चुञ्चुप्चणपौ' इति चणप्चुञ्चुपौ.
[2] स्त्रियाम् A₁ [3] कलमनाम A₁ [4] मषी B₂

**स्यात्संदेशहरो दूतो दूत्यं तद्भावकर्मणी ॥ १६ ॥**
**अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि ।**

(वि.) स्यादिति—संदेशम् आज्ञां हरतीति संदेशहरः[1]। 'हृञ् हरणे'। दूयतेऽनेन पर इति दूत.। 'दूङ् परितापे'। दूतनामनी ॥ दूतस्य भाव कर्म वा दूत्यम्। दौत्य वा। दूतत्वस्य दूतकर्मणश्च नाम ॥ अध्वान गच्छतीति अध्वनीन'। अध्वगः। अध्वन्य। पन्थान [2]गच्छतीति पान्थ। पथिक। अत्र पान्थशब्द. सतताध्वगनामधेयमिति वदन्ति। पथिकनामानि ॥ १६ ॥

[1] संदेशहार. K₂ [2] D₂ adds नित्य.

(पा.) स्यात् संदेशहरो दूत। आज्ञाहरनामनी। 'मणिहरुडु'। 'वार्तिक शासनहर'। एते द्वे च ॥ दूत्य तद्भावकर्मणी। दूतस्य भाव कर्म चेति द्वे दूत्यं स्यात्। ब्राह्मणादिपाठाद् [1]दौत्यमपि ॥ अध्वनीनोऽध्वगो—पथिक इत्यपि। [2]मार्गिकनामानि। 'तेरुनरुलु[3]' ॥ १६ ॥

[1] A₁ adds स्यात्. [2] मार्गि° B₂ [3] B₂ omits

**स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ॥ १७ ॥**
**राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च ।**

(वि.) स्वामीति—महत् स्वं विद्यतेऽस्येति स्वामी। [1]अमात्य। [2]सुहृत्। एतौ शब्दौ पूर्वं व्युत्पन्नौ (२. ८. ४, १२)। कूयते उत्कृष्ट इति कोश। 'कु शब्दे'। भाण्डागारम्। राजते राष्ट्रम्। दुःखेन गम्यत इति दुर्गम्। बलति प्राणितीति बलम्।

'वल प्राणने'। सुहृदत्र त्रिविधः। सहज सुहृत्, कृत्रिमसुहृत्, प्राकृतसुहृच्च। एते सप्त राज्याङ्गानीत्युच्यन्ते। प्रकृतयश्च राज्याङ्गानि। पौराणां श्रेणयश्च राज्याङ्गानि। प्रक्रियते राज्यमाभिरिति प्रकृतयः। रजकस्वर्णकारादिजातयः परस्परं श्रयन्ते श्रेणयः। 'श्रिञ् सेवायाम्'॥ १७॥

[1] Pt₂ adds अमा समीपे भवः [2] Pt₂ adds शोभनं हृदयमस्येति.

(पा.) स्वाम्यमात्य—राज्याङ्गानि। स्वाम्यादीन्यप्यष्टौ राज्याङ्गानि। समष्टया तु राज्यमेव।

> 'स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो वलं सुहृत्।
> परस्परोपकारीदं सप्ताङ्गं राज्यमुच्यते॥'

इति (काम. नीति. ४. १)॥ प्रकृतयः—श्रेणयोऽपि च। पौरश्रेणयः प्रकृतयः स्युः। अपिशब्दात् स्वाम्यादयोऽपि प्रकृतयः।

> अमात्यराष्ट्रदुर्गाणि वलं कोशश्च पञ्चमः।
> एताः प्रकृतयस्तज्ज्ञैर्विजिगीषोरुदाहृताः॥
> तासां षष्ठं भवेन्मित्रं सप्तमः पृथिवीपतिः।
> सप्तप्रकृतिकं राज्यमित्युवाच प्रजापतिः॥

इति [1]बृहस्पतिः॥ १७॥

[1] मुद्रितबृहस्पतिस्मृतौ न दृश्यते.

## संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः॥ १८॥
## षड्गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः।

(वि.) संधिरिति—संधीयते एकीक्रियतेऽनेनेति संधिः[1]। अन्योन्यं विगृह्यते विरुध्यते विग्रहः। 'ग्रह उपादाने'। हीनं प्रति यातीति यानम्। कालप्रतीक्षां कुर्वन् आस्यत इति आसनम्। 'आस उपवेशने'। स्वकीयेषु द्विधा भावो द्वैधम्। वलिनमाश्रयत इति आश्रयः। एते षड्गुणा इत्युच्यन्ते। शक्यन्ते जेतुं शत्रवोऽमूभिरिति शक्तयः। 'शक्लृ शक्तौ'। प्रभवति अनेन प्रभावः। उदधिकं विक्रमेण सहते[3] उत्साहः। 'षह मर्षणे'। बुद्धया मन्यते मन्त्रः। एतेभ्यो जाताः तिस्रः शक्तयः इत्युच्यन्ते॥ १८॥

[1] F₁, W₂ add 'डुधाञ् धारणपोषणयोः'. [2] D₃ adds 'श्रिञ् सेवाया.' [3] K₆ adds अनेनेति.

(पा.) सधिर्ना विग्रहो—षड्गुणा । सध्यादय षट षड्गुणा स्यु । 'दिक्सख्ये सञ्ज्ञायाम्' (२ १ ५०) इति समास [1]। षाड्गुण्यमपि स्यात्। स्वार्थ ष्यञ्। तत्र सधिर्नाम पणबन्ध । स च कोशदण्डभूमिप्रधानकारणत्वेन त्रिविध । विग्रहो नामापकारकरणतश्च प्रकाशयुद्ध कूटयुद्ध तूष्णींयुद्धमिति त्रिविधम्। तत्स्वरूप त्वन्यत्र द्रष्टव्यम्[2] ॥ यान स्वोपचयेन परव्यसनेन[3] च स्यात्। अनुरक्तप्रकृतिकस्य यात्रा। तच्च विगृह्ययान सधाययान प्रसगयान निग्रहयान[4] सभूययानमिति पञ्चविधम् ॥ आसन नाम देशकालबलाद्यपेक्षया दुर्गादिस्थिति । तदपि सधायासनप्रसङ्गासनादिभेदेन पञ्चविधम्। द्वैध नाम बलवदुभयमध्यस्थितस्य व्यापार । स चोभयप्रवचनेन नात्मार्पण-मन्यतरेण सधिरन्यतरेण विग्रह इति त्रिविध । आश्रयो नाम हीनेन धर्मविजयिन समाश्रयणम्। शक्तय तिस्र —मन्त्रजा । प्रभावजोत्साहजमन्त्रजाश्चेति शक्तयस्तिस्र । 'स प्रभाव प्रतापश्च यत्तेज कोशदण्डजम्' ॥ एतदुक्तशक्तित्रये प्रभावशक्ति वक्ष्यति । शेषशक्ती स्पष्टे। 'भाण्डार कोश इत्युक्तो बल दण्ड इतीरितम्'। कोशदण्डाभ्या यज्जात तत्तेज प्रभाव स्यात्। स एव प्रताप ॥ १८ ॥

[1] $A_1$ adds कर्मधारय　　[2] $A_1$ adds सूर्यसिद्धान्तव्याख्यानचोलराजीयपरिश्रमशालिना सुगमम्　　[3] °व्यसनेनापि $A_1$　　[4] उपेक्ष्ययान $A_1$

**क्षयः स्थानं च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम् ॥ १९ ॥**
**स प्रतापः प्रभावश्च यत्तेजः कोशदण्डजम् ।**

(वि.) क्षय इति—क्षीयते पर इति क्षय । 'क्षि क्षये'। समत्वेनात्र तिष्ठतीति स्थानम् । वर्धते स्वयमिति[1] वृद्धि । 'वृधु वृद्धौ'। नीतिवेदिना एते त्रय त्रिवर्ग इत्युच्यते। त्रयाणा क्षयस्थानवृद्धीना वर्गस्त्रिवर्ग । प्रतपति[2] शत्रुरनेनेति प्रताप । 'तप सतापे'। प्रभवत्यनेन शासितु जगदिति प्रभाव । कोशदण्डाभ्यामुत्पन्नस्य तेजसो नाम ॥ अत्र कोशो हिरण्यवृद्धि । दण्ड शक्तिबाहुल्यात् [3]शरीरदण्ड ॥ १९ ॥

[1] स्वम् $W_2$　　[2] अवमानकर्तृत्वेन $K_5$, $K_6$　　[3] शरीरादिक° $K_5$, $W_2$

(पा.) क्षय स्थान—नीतिवेदिनाम्। परापेक्षया स्वशक्तीना क्षीणता क्षय । समता स्थानम्। अधिकता वृद्धि । एते [1]त्रयस्त्रिवर्ग स्यात्। स प्रताप —कोशदण्डजम्। कोशदण्डाभ्या जातस्य तेजसो नाम ॥ १९ ॥

[1] $B_2$ adds क्षयस्थानवृद्धय .

**सामदाने भेददण्डावित्युपायचतुष्टयम् ॥ २० ॥**
**साहसं तु दमो दण्डः साम सान्त्वमथो समौ ।**
**भेदोपजापावुपधा धर्माद्यैर्यत्परीक्षणम् ॥ २१ ॥**

(वि.) सामदान इति—साम, दानं, भेदः, दण्डः एते चत्वार उपायभेदा इत्युच्यन्ते। उपैति वाञ्छितमनेन प्राप्नोतीति उपायः। 'इण् गतौ'। सहो बलं, [1]तत्र भवं साहसम्। दाम्यति दौष्ट्यमनेनेति दमः। दण्डश्च। 'दमु उपशमने'। दण्डोपायनामनी॥ वैरं स्यतीति साम। 'षोऽन्तकर्मणि'। सान्त्वयत्यनेनेति सान्त्वम्। 'सान्त्व सामप्रयोगे'। सामोपायनामनी॥ भिद्यते सहसानेनेति भेदः। 'भिदिर् विदारणे'। उपांशु जपनम् उपजापः। 'जप[2] व्यक्तायां वाचि'। भेदोपायनामनी॥ उपधीयते [3]चित्तविकारोऽनयेति उपधा। धर्मकामभयार्थाद्यैः पुरोहितादीनामभिप्रायपरीक्षाप्रकारनाम॥ २०—१॥

[1] तदनुसारित्वात् $D_3$, $K_4$; अतिसरति $K_5$. [2] $K_3$, $K_4$ add जल्प.
[3] बुद्धिशानमत्र $Pt_2$; चित्ताधिकारः $W_2$.

(पा.) सामदाने—उपायचतुष्टयम्। सामदानभेददण्डाश्चत्वार उपायाः स्युः। मायोपेक्षेन्द्रजालानीत्येतैस्त्रिभिर्युक्ताश्चेत् सप्तोपायाः। साम सान्त्वः। दानं च भेदश्च दण्डश्चेति चतुष्टयम्। 'मायोपेक्षेन्द्रजालं च सप्तोपायाः प्रकीर्तिताः।' इति नीतिगजाङ्कुशः॥ साहसं तु—दण्डः। दण्डनामानि॥ साम सान्त्वम्। सामोपायनाम॥ अथो समौ—उपजापौ। भेदनामनी॥ उपधा—परीक्षणम्। धर्मार्थकामभयैर्या परीक्षा सा उपधा स्यात्। 'धर्मार्थकामभयेषु व्याजेन परचित्तपरीक्षणं उपधा' इति सोमदेवनीतिः। अनुक्तम्—'तन्त्रं स्वराष्ट्रचिन्ता स्यात्'। [1]स्वराष्ट्रचिन्तनं तन्त्रं स्यात्। 'आवापः परचिन्तनम्'[2]। परराष्ट्रचिन्तनम् आवापः स्यात्॥ २०—१॥

[1] स्वीयराष्ट्र° $A_1$. [2] परिचिन्तनम् $A_1$, वैजयन्त्याम् अरिचिन्तनम् (पृ. १०५, श्लो. १४).

**पञ्च त्रिष्वपदक्षीणो यस्तृतीयाद्यगोचरः।**
**विविक्तविजनच्छन्ननिःशलाकास्तथा रहः॥ २२ ॥**
**रहश्चोपांशु चालिङ्गे रहस्यं तद्भवे त्रिषु।**

(वि.) पञ्चेति—वक्ष्यमाणा अपडक्षीणविविक्तविजनच्छन्ननिःशलाकशब्दाः पञ्च त्रिषु लिङ्गेषु अभिधेयानुसारेण वर्तन्ते। [1]अविद्यमानानि षट् अक्षीणि श्रोत्राण्यत्र[2] अपडक्षीणः। तृतीयपुरुषाद्यगोचरमन्त्रनाम॥ विविच्यते[3] कार्याकार्यमत्रेति विविक्तः। 'विचिर् पृथग्भावे'। विगताः[4] अनुपयोगिनो जना अत्र विजनः। छाद्यते गोप्यते छन्नः। 'छद अपवारणे'। निर्गता शलाका[5] मन्त्रभेदका अस्मादिति[6] निःशलाकः। रहन्तेऽनुपयोगिनो जना अत्रेति रहः। सान्तोऽयम् नपुंसकलिङ्गः। 'रह त्यागे'। रहश्च। उपांशु वाक्यं जातमस्मिन्निति उपांशु। एते द्वे पदे अलिङ्गे। अव्यय इत्यर्थः। [7]मन्त्रालोचनस्थाननामानि॥ रहसि भवः रहस्यम्। रहसि सजातमन्त्रनाम॥ २२॥

[1] न विद्यन्ते $F_3$, $Pt_2$ [2] श्रोत्रादीन्द्रियाणि $F_3$, $Pt_2$ [3] $D_2$ $W_2$ add पृथक् क्रियते [4] विविक्ता $K_5$ $K_6$ [5] शारिका अपि $D_2$ $Pt_2$ [6] अस्मिन् $W_2$ [7] आलापन° $W_2$

(पा.) पञ्च त्रिषु—तृतीयाद्यगोचरः। [1]यस्तृतीयादिजनागोचरः सोऽपडक्षीणः स्यात्। स पञ्च त्रिष्वित्यधिकारात् त्रिलिङ्गः। अपडक्षीणो मन्त्रः। अपडक्षीणा क्रीडा इत्यादि॥ विविक्तविजन—'उपांशु चालिङ्गे'। एकान्तनामानि॥ पञ्च त्रिष्वित्यनेन विविक्तादयः पञ्च सत्त्वार्थे त्रिलिङ्गा भवन्ति। असत्त्वे नपुंसकलिङ्गा एव। विविक्तं वदति, विजनं रमते, छन्नं तिष्ठतीत्यादि। उपांशुरहसोरलिङ्गत्वमव्ययत्वं चापि॥ रहस्यं तद्भवे त्रिषु। रहसि भवं [3]रहस्यं स्यात्। [4]भवार्थे यत्प्रत्ययः। रहस्यं रहोऽपि स्यात्। 'उपांश्वव्ययमेकान्तं रहस्यं निर्जनं रहः' इति वैजयन्ती[5] (पृ २८६, श्लो ३२)। 'रहोऽनुरहसोपांशु रहस्यं च भिनत्ति कः' इति धनंजयः॥ २२॥

[1] $A_1$ adds न विद्यन्ते पञ्चाक्षीण्यत्रेति व्युत्पत्त्या [2] तथा मिथः। रहश्च इति पाठान्तरम् $B_3$ [3] $A_1$ adds यत् तत् [4] 'दिगादिभ्यो यत्' (४ ३ ५४) इति यत्प्रत्ययः $B_3$ [5] 'रहस्येऽर्थे उपांशु स्यादश्रुतोच्चारणेऽपि च' इति मुद्रितग्रन्थे

**समौ विस्रम्भविश्वासौ भ्रेषो भ्रंशो यथोचितात्॥ २३॥**
**अभ्रेषन्यायकल्पास्तु देशरूपं समञ्जसम्।**

(वि.) समाविति—विस्रम्भणं[1] विस्रम्भः। 'स्रम्भु विश्वासे'। विश्वसित्यनेनेति विश्वासः। 'श्वस प्राणने'। विश्वासनामनी॥ भ्रेषते धर्माच्चलतीति भ्रेषः। 'भ्रेषृ चलने'। यथोचितधर्मभ्रंशनाम॥ न भ्रेषोऽभ्रेषः। नियतमीयते न्यायः। 'इण् गतौ'। यथोचितसंकल्पनं कल्पः। 'कृपू सामर्थ्ये।' दृश्यमानस्योचितस्य

रूपं देशरूपम्। [5]समतमञ्जसा सत्यमत्रेति समञ्जसम्। यथोचितधर्मादभ्रंशस्य नामानि ॥ २३ ॥

[1] विस्रभ्यतेऽनेन $D_2$, $K_6$ [2] $D_2$ adds प्रमादे च. [3] कल्प्यते यथोचितं $D_2$, $W_2$. [4] 'कल्प कल्पने' $K_3$, $K_6$ [5] सम्यक् $K_6$

(पा.) समौ विस्रम्भविश्वासौ। प्रत्ययनामनी। 'नम्मिके'। भ्रेषो भ्रंशो यथोचितात्। यथोचितभ्रंशो भ्रेषः स्यात्। अभ्रेषन्याय—समञ्जसम्। [1]न्याय-नामानि ॥ २३ ॥

[1] समञ्जस° $B_3$

**युक्तमौपयिकं लभ्यं भजमानाभिनीतवत् ॥ २४ ॥**
**न्याय्यं च त्रिषु षट् संप्रधारणा तु समर्थनम्।**

(वि.) युक्तमिति—अभ्रेषेण[1] युज्यत इति युक्तम्। 'युजिर् योगे'। उपायजम् औपयिकम्। उपाय एव औपयिकं वा। लब्धुमर्हं[2] लभ्यम्। न्यायं[3] भजते भजमानम्। 'भज सेवायाम्'। अभिनीयते स्म अभिनीतम्[4]। वतिरत्र पादपूरणार्थः। न्यायादनपेतं न्याय्यम्। अभ्रष्टस्य नामानि ॥ त्रिषु षट्। पूर्वोक्ताः युक्तादिन्याय्यान्ताः शब्दा त्रिषु लिङ्गेषु वर्तन्ते ॥ सम्प्रधार्यते इदमेव श्रेय इति निश्चीयतेऽनयेति सम्प्रधारणा। इदमेव [5]श्रय इति समर्थनानाम ॥ २४ ॥

[1] न्यायेन $F_2$, $Pt_2$ [2] योग्य $Pt_2$, अर्हति $K_3$. [3] अभ्रेष $K_5$, $K_6$. [4] $D_2$, $W_2$ add 'णीञ् प्रापणे' [5] श्रेयसे $K_6$.

(पा.) युक्तमौपयिकं—न्याय्यं च त्रिषु षट्। न्यायादनपेतार्थनामानि। [1]अर्शआदिभ्योऽजन्तश्चेत् समञ्जसशब्दोऽपि न्यायवचनः। 'समञ्जसं समाख्यातं विश्वस्तोचितयोरपि' इति विजयकोश ॥ सम्प्रधारणा तु समर्थनम्[2]। समर्थन-नाम ॥ २४ ॥

[1] अर्शआद्यजन्तः (५. २. १२७) $B_3$. [2] समर्थना $B_3$.

**अववादस्तु निर्देशो निदेशः शासनं च सः ॥ २५ ॥**
**शिष्टिश्चाज्ञा च संस्था तु मर्यादा धारणा स्थितिः।**

(वि.) अववाद इति—अवनवान् भटादीन् प्रति वदनम् [1]अववाद । 'वद व्यक्ताया वाचि'। [2]अपवाद इति वा पाठ । नि शेषेण कार्यस्य देशन उपदेशन [3]निदश । नियत देशन निदेश । 'दिश अतिसर्जने'। [4]शास्त्यनेनेति शासनम् । शिष्टिश्च । 'शासु अनुशिष्टौ' । आज्ञापनम् [5]आज्ञा । 'ज्ञा अवबोधने' । आज्ञानामानि ॥ सतिष्ठतेऽनया सस्था[6] । मर्येति सीमार्थेऽव्ययम् । तत्र दीयत इति मर्यादा । 'दा दाने'। धार्यतेऽनया धारणा । तिष्ठन्त्यस्यामिति स्थिति । मर्यादानामानि ॥ २५ ॥

[1] अपवाद $K_5$ $K_6$ [2] अपवदनमपवाद $Pt_2$ [3] निदिश्यते आदिश्यते ($Pt_2$) उपदिश्यते ($D_2$ omits) $K_2$ $K_3$, $K_6$ [4] शास्यते $F_2$ $Pt_2$ [5] आ शायतेऽनया $K_5$ $K_6$ [6] $D_2$ $K_6$ $Pt_2$ add 'ष्ठा गतिनिवृत्तौ'

(पा.) अववादस्तु निर्देशो—आज्ञा च । [1]आज्ञानामानि । सस्था ॥ मर्यादा—स्थिति । मर्यादानामानि ॥ २५ ॥

[1] शासन° $B_3$

**आगोऽपराधो मन्तुश्च समे तूद्दानबन्धने ॥ २६ ॥**
**द्विपाद्यो द्विगुणो दण्डो भागधेयः करो बलिः ।**

(वि.) आग इति—आ अगति कुटिल गच्छतीत्याग । '[1]अग कुटिलाया गतौ'। सान्तनपुसकलिङ्गम् । अपराध्यतेऽनेनेति अपराध । 'राध [2]ससिद्धौ'। मन्यते कष्टमिति मन्तु । 'मन ज्ञाने'। अपराधनामानि ॥ उद्दीयते [3]बध्यतेऽस्मिन्निति उद्दानम् । 'दोऽवखण्डने'। 'देङ् रक्षणे' वा। बध्यतेऽस्मिन्निति बन्धनम् । 'बन्ध बन्धने'। बन्धननामनी ॥ द्वौ पादौ प्रमाणमस्य द्विपाद्य । द्विगुणदण्डनाम ॥ [4]भाग एव भागधेय । कीर्यते [5]विभज्य क्षिप्यते श्रेणिभिरिति कर । 'कॄ विक्षेपे'। बलति राजादिरनेनेति बलि । 'बल प्राणने'। [6]राज्ञो देयस्य क्षेत्रादिफलभागस्य नामानि ॥ २६ ॥

[1] अक अग° $K_5$ $K_6$ [2] हिंसाया $Pt_2$ [3] खण्ड्यते $Pt_2$ [4] $W_2$ adds अंश [5] प्रत्येकं $Pt_2$ [6] राज्ञे $W_2$ [7] अधिप° $K_5$ $K_6$

(पा.) आगोऽपराधो मन्तुश्च । अपराधनामानि । '[1]शतमागासि सोढाहे' इति माघप्रयोगात् (शिशु २ १०८) आग सान्त । समे तूद्दानबन्धने । बन्धननामनी ॥ द्विपाद्य द्विगुणो दण्ड । [2]उचितदण्डात् द्विगुणदण्डो द्विपाद्य स्यात् । अनन[3] प्रकारेण

त्रिगुणो दण्डस्त्रिपाद्यं, चतुर्गुणदण्डश्चतुष्पाद्यमित्यादि ॥ भागधेयः—बलिः। राजभाग-नामानि। '[5]कारराजस्वषड्भागाः'। एतानि त्रीणि च ॥ २६ ॥

[1] 'सह्निध्ये शतभागाख्ये' इति मुद्रितग्रन्थे. [2] द्विपाद्यः B₃. [3] यथोचित° A₁. [4] एवं त्रिपाद्यचतुष्पाद्यादि B₃ [5] कारसिद्धाय° A₁.

## घट्टादिदेयं शुल्कोऽस्त्री प्राभृतं तु प्रदेशनम् ॥ २७ ॥
## उपायनमुपग्राह्यमुपहारस्तथोपदा ।

(वि.) घट्टेति—शलन्ति सुखेन[1] गच्छन्त्यत्रेति शुल्कम्। 'शल आशुगमने'। शुल्क्यत इति वा। 'शुल्क अतिसर्जने'। [2]अरण्यानीनदीतरणादौ देयद्रव्यनाम ॥ प्रकर्षेण भ्रियते प्राभृतम्। 'भृञ् भरणे'। प्रदिश्यते [3]समर्प्यते राज्ञे प्रदेशनम्। 'दिश अतिसर्जने'। राज्ञः समीपमयतेऽनेनेति[4] उपायनम्। 'अय गतौ'। उपगृह्यते नृपादिना[5] उपग्राह्यम्। उपह्रियते समीपमिति उपहारः। उपदीयते राज्ञे इत्युपदा। 'डुदाञ् दाने'। एतानि नृपादीन् द्रष्टुकामेन दीयमानपुष्पस्तबकादिप्रियद्रव्य-नामानि ॥ २७ ॥

[1] आशु गच्छति D₂, K₁, W₂. [2] वन° K₃. [3] दीयते Pt₂. [4] K₅, K₄ add अनिवारितः. [5] राज्ञा F₂, Pt₂, D₂ adds 'ग्रह उपादाने'.

(पा.) घट्टादिदेयं शुल्कोऽस्त्री। घट्टादिदेशे दीयमानं धनं शुल्कं स्यात्[1]। 'पथि देये शुल्कमस्त्री जामात्रा [2]यच्च दीयते' इति तालव्यादिषु वैजयन्ती (पृ. २३७, श्लो. ८९) ॥ प्राभृतं तु—उपहारस्तथोपदा। राजानुसरणार्थमानीतार्थनामानि। 'कानिकेलु'। करदः। एतच्च ॥ २७ ॥

[1] A₁ adds पुंनपुंसकम्. [2] यश्च A₁.

## यौतकादि तु यद्देयं सुदायो हरणं च तत् ॥ २८ ॥
## तत्कालस्तु तदात्वं स्यादुत्तरः काल आयतिः ।

(वि.) यौतकादीति—युतयोः सगतयोः स्त्रीपुंसयोर्विवाहे दत्तं यौतकम्। सुष्ठु दीयते[1] इति सुदायः। 'डुदाञ् दाने'। स्त्रिया स्वातन्त्र्येण ह्रियत इति [2]हरणम्। स्त्रीधननामानि ॥ [3]तदा तस्मिन् काले भवतीति तदात्वम्। प्रकृतकालनाम ॥ एष्यतीति [4]आयतिः। उत्तरकालनाम ॥ २८ ॥

[1] D₂, K₅, K₆ add पत्युनुमत्या. [2] W₂ adds कन्यादाने धनं दत्तं यौतकं च तदिति निघण्टुः. [3] स चासौ कालश्च तत्कालः F₂, Pt₂. [4] D₂, Pt₂ add 'इण् गतौ'.

(पा.) यौतकादि—हरणं च तत्। 'कन्यादाने तु[1] यद्दत्तं यौतकं यौतुकं च तत्' इति वैजयन्ती (पृ. ८७, श्लो. ५५)। यौतकादिदेयवस्तु [2]सुदायो हरणं च स्यात्। अनुक्तम्—'लञ्चा[3] उत्कोच आमिषम्'। लञ्चानामानि। 'लंचमु'। तत्कालस्तु तदात्वं स्यात्। तत्कालनाम[4]॥ उत्तरः—आयतिः। उत्तरकाल आयतिः स्यात्॥ २८॥

[1] धनं A₁. [2] दायः A₁, स दाय इति वा पाठः B₃. [3] लञ्च: A₁; लम्पा B₃. [4] A₁ adds अनेन प्रकारेणेदं कालोचितम्; एवमिदं B₃.

**सांदृष्टिकं फलं सद्य उदर्कः फलमुत्तरम्॥ २९॥**
**अदृष्टं वह्नितोयादि दृष्टं स्वपरचक्रजम्।**

(वि.) सांदृष्टिकमिति—सदृष्टं [1]नृपादिदर्शनं प्रयोजनमस्य सांदृष्टिकम्। सद्यःफलनाम॥ अभिलापाधिक्यात् [2]उदर्च्यते स्तूयत इति उदर्कः। 'अर्च पूजायाम्'। उत्तरफलनाम॥ न दृष्टम् अदृष्टम्[3]। महीभुजामग्नितोयादिजातभयनाम॥ सर्वैर्दृश्यत इति दृष्टम्। 'दृशिर् प्रेक्षणे'। आत्मनः शत्रोश्च सैन्यजातभयनाम[4]॥ २९॥

[1] प्रत्यक्षप्रयोजन F₂, Pt₂. [2] उदच्यते, 'ऋच स्तुतौ' K₅, K₆. [3] दैवकृतत्वात् D₂, Pt₂. [4] स्वपरयोः चक्राभ्या सैन्याभ्या जातं स्वपरचक्रजम् Pt₂.

(पा.) सांदृष्टिकं—सद्यः। सद्यःफलं सांदृष्टिकं स्यात्। उदर्कः—उत्तरम्। उत्तरकालफलमुदर्कः स्यात्। उत्तरकालोऽप्युदर्कः स्यात्। 'उदर्क उत्तरे काले यच्च स्यात् फलमुत्तरम्' इति वैजयन्ती (पृ. २४०, श्लो. १२)॥ अदृष्टं वह्नितोयादि। अनलजलादि[1] दैवकृतमदृष्टं स्यात्॥ दृष्टं स्वपरचक्रजम्। स्वचक्रपरचक्रभूतमनुष्यकृतं[2] दृष्टं स्यात्॥ २९॥

[1] तोयादि A₁. [2] °चक्राभ्या वृत्तमनुक्तं A₁.

**महीभुजामहिभयं स्वपक्षप्रभवं भयम्॥ ३०॥**
**प्रक्रिया त्वधिकारः स्याचामरं तु प्रकीर्णकम्।**

(वि.) महीभुजामिति—अहेरिव[1] भयम् अहिभयम्। राज्ञा [2]स्वपक्षप्रभवभय नाम। [3]प्रकर्षेण क्रियत इति प्रक्रिया। कर्मविशेषमधिकृत्य कर्तृभि क्रियत इत्यधिकार। अधिकारनामनी॥ [4]चमरमृगसबन्धि चामरम्। प्रकीर्यते राजसमीपे इतस्ततो विक्षिप्यते प्रकीर्णकम्। 'कॄ विक्षेपे'। चामरनामनी॥ ३०॥

[1] D₂ adds गृहस्थितात् [2] W₂ adds राजपुत्रादि [3] प्रक्रियते K₂.
[4] चमर्या इद K₂.

(पा.) महीभुजामहिभय—भयम्। पुत्रदायादप्रभृतिस्वपक्षै कृत भयम् अहिभय स्यात्॥ प्रक्रिया—अधिकार स्यात्। अधिकारनाम। '[1]पणिहृस्'॥ चामर—प्रकीर्णकम्। चामरनामनी। 'चमर चामरे[2] प्राहु' इति विश्वप्रकाशिका (पृ १३५, श्लो १२०)। 'चामरा चामर रोमगुच्छक[3] चायचूलनम्[4]' इति त्रिकाण्डशेष (पृ १७, श्लो ४०६)॥ ३०॥

[1] B₃ omits [2] चामर A₁ B₃ [3] °गुत्सक B₃ [4] फालचूलिकम् A₁

**नृपासनं तु यद्भद्रासनं सिंहासन तु तत्॥ ३१॥**
**हैमं छत्रं त्वातपत्रं राज्ञस्तु नृपलक्ष्म तत्।**

(वि.) नृपासनमिति—भद्र च तदासन च भद्रासनम्। नृपासननाम॥ [1]सिंहप्रतिकृतियुक्तमासन सिंहासनम्। राज्ञ सुवर्णमयभद्रासननाम॥ छाद्यते पुरुषोऽनेनेति छत्रम्। 'छद अपवारणे'। आतपात् त्रायते पुरुषमिति आतपत्रम्। 'त्रैङ् पालने'। छत्रमात्रनामनी॥ नृपाणा लक्ष्म नृपलक्ष्म। [2]राजयोग्यच्छत्रनाम॥ ३१॥

[1] सिंहाकृतियुक्त F₂, Pt₂ [2] W₂ adds °श्वेतातपत्र°

(पा.) नृपासन यत्तद् भद्रासनम्। नृपस्यासन भद्रासन स्यात्। सिंहासन—हैमम्। तदेव[1] हेममय चेत् सिंहासन स्यात्। छत्र त्वातपत्रम्। छत्रनामनी। आतपवारणोष्णवारणादय शब्दा अपि स्यु।

'कमलातपवारण [2]तथा शशिशुभ्र विभरावभूव सत्।'

इति राघवपाण्डवीयम् (द्विस ४ २८)। 'हसमण्डलद्युतिजिष्णु जिष्णुरभूतोष्णवारणम्' इति माघ (शिशु १३ २१)॥ राज्ञस्तु नृपलक्ष्म तत्। राज्ञस्तु तच्छत्र [3]नृपलक्षण स्यात्॥ ३१॥

[1] A₁ adds नृपासन  [2] तदा इति मुद्रितग्रन्थे  [3] नृपलक्ष्म B₃

**भद्रकुम्भः पूर्णकुम्भो भृङ्गारः कनकालुका॥ ३२॥**
**निवेशः शिविरं षण्ढे सज्जनं तूपरक्षणम्।**

(नि.) भद्रकुम्भ इति—भद्रश्चासौ कुम्भश्च भद्रकुम्भ । पूर्णश्चासौ कुम्भश्च पूर्णकुम्भ । [1]राजद्वारनिक्षिप्तपूर्णकलशनामनी॥ भ्रियते पूर्यते जलमत्रेति भृङ्गार [2]। कनकमयी चासौ [3]आलुश्च कनकालुका। हेमगलन्तिकानामनी॥ निविशते[4] सन्निवेशाविशेषेण स्थाप्यत इति निवेश । 'विश प्रवेशने'। शेरतेऽत्र शिविरम्। 'शीङ् स्वप्ने'। [5]स्कन्धावारनामनी॥ सत् [6]स्वास्थ्य जन्यतेऽनेनेति सज्जनम्। 'जनी प्रादुर्भावे'। अनेन किंचिद्रक्षण भवतीति [7]उपरक्षणम्। शिविररक्षणार्थं परित कृतस्य [8]वृतिप्रभृतिकस्य नामनी॥ ३२॥

[1] D₂ adds राज्ञ सुवर्णमय°.  [2] 'डुभृञ् धारणपोषणयो' K₄  [3] आलुका W₂, Pt₂.  [4] निविश्यत इति F₂ Pt₂  [5] सैन्यावास° W₂ सेनाधार° K₅ K₆  [6] सौहयादिक W₂.  [7] उपरक्ष्यत Pt₂  [8] भृतकस्य W₂

(पा.) भद्रकुम्भ पूर्णकुम्भ । पूर्णकुम्भनामनी॥ भृङ्गार कनकालुका। [1]कनककरीरनामनी। '[2]पशिडिगरिगे'[2]॥ निवेश शिविर षण्डे। सेनानिवेशनामनी। '[2]पाळेमु'॥ सज्जन तूपरक्षणम्[3]। वेत्रधरै[4] [5]कृतजनसबाधराहित्यनामनी। 'भराभरि'[2]॥ ३२॥

[1] कानक° A₁  [2] B₃ omits  [3] उपलक्षणम् A₁  [4] °धरकृत° B₂
[5] °प्रहरकादिनाम B₂

**हस्त्यश्वरथपादात सेनाङ्ग स्याच्चतुष्टयम्॥ ३३॥**
**दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः।**
**मतङ्गजो गजो नागः कुञ्जरो वारणः करी॥ ३४॥**
**इभः स्तम्बेरमः पद्मी यूथनाथस्तु यूथपः।**

(वि.) हस्तीति—सेनाया अङ्ग सेनाङ्गम् । हस्त्यश्वरथपदातिचतुष्टयस्य नाम ॥ स्थूलौ दन्तौ स्त अस्येति दन्ती । दन्तावलश्च । हस्त शुण्डास्यास्तीति हस्ती । द्वौ रदावस्य स्त इति द्विरद । अनेकेन तुण्डेन[1] वक्त्रेण च पिवतीति अनेकप । द्वाभ्या पिवतीति द्विप [2] । [3]मतङ्गाख्यराजर्षेर्जातो मतङ्गज । 'जनी प्रादुर्भावे' । गजति माद्यतीति गज । 'गज [4]शब्दे मदे च' । नगे गिरौ भव नाग । कुञ्जौ कुम्भाधोगर्तावस्यास्तीति कुञ्जर । कुञ्जे रमत इति वा । अरीन्[5] वारयतीति वारण । 'वृञ् वरणे' । करोऽस्यास्तीति करी । एति मदमिति इभ । 'इण् गतौ' । स्तम्बे नदीकुञ्जे[6] रमत इति स्तम्बेरम । 'रमु क्रीडायाम्' । पद्म विन्दुजाल[7], तदस्यास्तीति पद्मी । [8]गजनामानि ॥ यूथ गजसमूह पातीति यूथप । [9]गजयूथमुख्यनाम ॥ ३३–४ ॥

[1] हस्तेन $F_2$, $Pt_2$ [2] 'पा पाने' $D_2$, $Pt_2$ [3] मतङ्गाद्दषे $F_2$ $Pt_2$
[4] मदवैकृत्य $K_5$, $K_6$ [5] परबल $F_2$ $Pt_2$ [6] तृणगुल्मे $Pt_2$ [7] जालक $W_2$
[8] नाग° $K_2$ $K_3$ [9] करि° $K_2$ $K_5$ $W_2$

(पा.) हस्त्यश्वरथपादात—चतुष्टयम् । हस्त्यश्वरथपदातिचतुष्टय[1] सेनाङ्ग स्यात् । 'तुरगरथपत्तीभ सेनाङ्गमभिधीयते' इति ध्वनिमञ्जरी ॥ दन्ती दन्तावलो हस्ती—स्तम्बेरम पद्मी । गजनामानि ॥

'[2]वैतण्डो [3]मदवृन्द स्यात् कुक्षीवान् षष्टिहायन ।
सिन्धुर [4]सामज कुम्भी शुण्डालश्च मतङ्गज [5] ॥'

एतानि च ॥ यूथनाथस्तु यूथप । नायकगजनामनी ॥ ३५–४ ॥

[1] पदातिना $A_1$ पदातीना $B_2$ [2] वेदण्ड $B_2$ [3] मदवृद $A_1$ [4] सामत $A_1$
[5] मतङ्गम $A_1$

**मदोत्कटो मदकलः कलभः करिशावकः ॥ ३५ ॥**
**प्रभिन्नो गर्जितो मत्तः समावुद्वान्तनिर्मदौ ।**

(वि.) मदोत्कट इति—मदेन[1] उत्कटस्तीव्रो मदोत्कट । मदेन[2] कलो मनोज्ञो मदकल । [3]अतिमदगजनामनी ॥ कलो भाति, कमुदकमन्यतो लभते वा कलभ । 'डुलभष् प्राप्तौ' । [4]करिशिशुनाम ॥ प्रकर्षेण भिन्न इव प्रभिन्न [5] । गर्जो गर्जनमस्य सजात इति गर्जित । 'गर्ज शब्दे' । माद्यतीति मत्त । 'मदि हर्षग्लेपनयो' । मत्तगजनामानि ॥ मदमुद्वमतीति उद्वान्त । 'टुवमु उद्गिरणे' । निर्गतो मदोऽस्मादिति निर्मद । गतमदगजनामनी ॥ ३५ ॥

[1] गजमदेन $W_2$　　[2] $W_2$ adds दानाम्बुना　　[3] मदोत्कट° $W_2$　　[4] °शावक° $W_2$
[5] 'भिदिर् विदारणे' $D_2$

(पा.) मदोत्कटो मदकल । यस्मिन् वयस्युद्भिन्नकटस्तस्मिन् वयसि वर्तमानो गजो मदकल स्यात् । 'लग्नो मदकलो मत्त प्रभिन्नोऽपि[1]' इति वैजयन्त्या (पृ १०९, श्लो ६८) मत्तपर्यायेषु[2] पठित ॥ कलभ करिशावक । [3]करिशिशु कलभ स्यात् । 'पिल्लयेनुगु[4]' । [5]वयोलक्षणडीपि प्राप्ते शावोऽपि कलभी ॥ प्रभिन्नो—मत्त । मत्तगज नामानि ॥ समावुद्वान्तनिर्मदौ । निर्गतमदस्य गजस्य नामनी । 'मदमुलिडिचिन येनगु' ॥ अनुक्तम्—'राजवाह्यस्त्वौपवाह्य' । राजवाहनगज औपवाह्य स्यात् । 'सनाह्य समरोचित' । युद्धोचितगज सनाह्य स्यात् ॥ ३५ ॥

[1] $B_3$ omits　　[2] पर्याये $A_1$　　[3] करिण $A_1$　　[4] $B_3$ omits
[5] (४ १ २०)

**हास्तिक गजता वृन्दे करिणी धेनुका वशा ॥ ३६ ॥**
**गण्डः कटो मदो दान वमथुः करशीकरः ।**

(वि.) हास्तिकमिति—हस्तिना समूहो हास्तिकम् । गजाना समूहो गजता । [1]गजवृन्दनामनी ॥ धयत्येना करिपोतक[2] इति धेनुका । 'धेट पाने' । वष्टि कामयते गजमिति वशा । 'वश कान्तौ' । [3]करिणीनामानि ॥ गण्ड्यते हन्यत इति गण्ड । 'गडि वदनैकदेशे' । कटति मद वर्षतीति कट । 'कटे वर्षावरणयो' । गजगण्डस्थल नामनी ॥ माद्यतेऽनेनेति मद । 'मदि हर्षग्लपनयो' । द्यति हस्तिनमस्योद्गमेन[4] पीडयतीति दानम् । 'दोऽवखण्डने' । वम्यत उद्गीर्यत इति वमथु । 'टुवमु उद्गिरणे' । करिकरशीकरनाम ॥ ३६ ॥

[1] °समूह° $W_2$　　[2] गजशिशु $Pt_2$　　[3] करोऽस्या अस्तीति करिणी $Pt_2$
[4] उद्गमन $W_2$

(पा.) हास्तिक गजता वृन्दे । [1]गजसमूहनामनी । करिणी धेनुका वशा । स्त्रीगजनामानि ॥ गण्ड कट । [2]गजगण्डनामनी ॥ मदो दानम् । मदजलनाम ॥ वमथु करशीकर । करिहस्तामविन्दुर्वमथु स्यात् । अनुक्तम्—'शुण्डा स्त्रिया करो हस्त' । करिकरनामनी ॥ ३६ ॥

[1] करि° $A_2$　　[2] गण्डस्थल° $B_2$

**कुम्भौ तु पिण्डौ शिरसस्तयोर्मध्ये विदुः पुमान् ॥ ३७ ॥**
**अवग्रहो ललाटं स्यादीषिका त्वक्षिकूटकम् ।**

(वि.) कुम्भाविति—कुम्भाकृतियोगात् कुम्भौ । गजशिरोऽवयवभूतमांसपिण्डनाम ॥ [1]वेत्त्यस्मादङ्कुशमिति विदु । 'विद ज्ञाने' । कुम्भमध्यनाम । अङ्कुशेनावगृह्यत इति अवग्रह[2] । गजललाटदेशनाम ॥ ईषावल्लाङ्गलदण्डवद्[3] दैर्घ्यात् ईषिका[4] । गजाक्ष्णोरुपरिकूपरूपनतस्थाननाम ॥ ३७ ॥

[1] अस्मिन् अङ्कुशघात $F_2$, $Pt_2$ [2] $D_2$, $Pt_2$ add 'ग्रह उपादाने' [3] लाङ्गलेव $F_2$, $Pt_2$ [4] $Pt_2$ adds अक्षिकूटकम् अक्षिगोलकम्.

(पा.) कुम्भौ तु—शिरस । शिरस पिण्डौ कुम्भौ स्याताम् । तयोर्मध्ये विदु पुमान् । कुम्भमध्यभागो विदु स्यात् । तवर्गतृतीयान्त । टवर्गतृतीयान्तोऽपि स्यात् । 'तयोर्मध्य विदुर्विड्डु' इति चर्णनिर्देशना । अनुक्तम्—'आरक्ष कुम्भयोरध'। [2]कुम्भयोरधोभाग आरक्ष॰ स्यात् ॥ अवग्रहो ललाट स्यात् । [4]करटिनिटिलमवग्रह स्यात् ॥ इषीका त्वक्षिकूटकम् । गजभ्रूभङ्ग इषीका स्यात् । ह्रस्वप्रथमो दीर्घद्वितीयश्च ॥ ३७ ॥

[1] शिर पिण्डौ $A_1$ [2] कुम्भयोर्मध्ये $A_1$ [3] कुम्भस्थलयो $A_1$ [4] करि° $A_1$

**अपाङ्गदेशो निर्याणं कर्णमूलं तु चूलिका ॥ ३८ ॥**
**अधः कुम्भस्य वाहित्थं प्रतिमानमधोऽस्य यत् ।**

(वि.) अपाङ्गेति—निर्याति नेत्रजलमस्मादिति निर्याणम् । 'या प्रापणे' । गजस्य अपाङ्गदेशनाम ॥ [1]चुल्यतेऽङ्कुशेन प्रेर्यते चूलिका[2] । 'चुल प्रेरणे' । मदवाहिनि[3] स्थाने तिष्ठतीति वाहित्थम् । कुम्भस्याधोभागनाम ॥ प्रतिमीयतेऽनेन प्रतिमानम् । 'डुमिञ् प्रक्षेपणे' । दन्तकुम्भमध्यनाम ॥ ३८ ॥

[1] चोद्यते, 'चुद प्रेरणे' $K_2$, $K_3$, $K_6$ [2] $K_6$, $W_2$ add गजकर्णमूलदेशनाम. [3] वाहस्थानसमीपे $K_5$, $K_6$

(पा.) अपाङ्गदेशो निर्याणम् । गजापाङ्गप्रदेशो निर्याण स्यात् । कर्णमूल तु चूलिका । गजश्रुतिमूल चूलिका स्यात् । चूलिकास्थाने [1]पिप्पलीशब्द केचित् पठन्ति ॥

अध कुम्भस्य वाहित्थम् । कुम्भशब्देनात्र वातकुम्भाभिधानरूढस्वल्पललाटकुटिर्विवक्षिता । '²पित्रनुदिरिट्चुडुनु' । तस्याधोभागो वाहित्थ स्यात् । 'वाहित्थ वातकुम्भाध' इति भागुरि ॥ प्रतिमानमधोऽस्य च । तस्याप्यधोभूत दन्तान्तराल प्रतिमान स्यात् । 'प्रतिमान प्रतिच्छायागजदन्तान्तरालयो' इति रुद्र ॥ ३८ ॥

[1] पिप्पल° $B_3$ [2] $B_3$ omits

**आसनं स्कन्धदेशः स्यात् पद्मकं बिन्दुजालकम् ॥ ३९ ॥**
**पक्षभागः पार्श्वभागो दन्तभागस्तु योऽग्रतः ।**

(वि.) आसनमिति—आस्यते[1] हस्तिपकादिनात्रेत्यासनम्[2] । 'आस उपवेशने' । हस्तिन[3] स्कन्धदेशनाम ॥ पद्मवर्णसाम्यात् पद्मकम् । गजसिध्मनाम ॥ पक्षयोर्भागपक्षभाग । पक्षश्चासौ भागश्चेति वा । [4]गजपार्श्वभागनाम ॥ दन्तवान् भागो दन्तभाग । गजपुरोभागनाम ॥ ३९ ॥

[1] $W_2$ adds उपविश्यत [2] अस्मिन् $W_2$ [3] गजस्कन्धप्रदेशनाम $W_2$
[4] करि° $K_2$, $K_3$, $W_2$

(पा.) आसन स्कन्धदेश स्यात् । गजस्कन्धप्रदेश आसन स्यात् ॥ पद्मक बिन्दुजालकम् । गजमुखबिन्दुजालक[1] पद्मक स्यात् ॥ पक्षभाग पार्श्वभाग । गजाना पार्श्वभाग पक्षभाग[2] स्यात् ॥ दन्तभागस्तु योऽग्रत । गजानामग्रभागो[3] दन्तभाग स्यात् ॥ ३९ ॥

[1] जाल $A_1$ [2] पक्ष $A_1$ [3] पुरोभाग $B_3$

**द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे क्रमात् ॥ ४० ॥**
**तोत्रं वैणुकमालानं बन्धस्तम्भेऽथ शृङ्खला ।**
**अन्दुको निगडोऽस्त्री स्यादङ्कुशोऽस्त्री सृणिः स्त्रियाम् ॥४१॥**

(वि.) द्वाविति—गात्रस्य प्रधानाङ्गत्वाद् गात्रम् । गात्रस्याप्रधानाङ्गत्वाद् अवरम्[1] । एतौ क्रमात् पूर्वपश्चाज्जङ्घादिदेशयोर्नामनी ॥ तुद्यते गजोऽनेनेति तोत्रम् । 'तुद व्यथने' । वेणुना[2] निर्वृत्त वैणुकम्[3] । गजप्रतोदनामनी ॥ आलायते बध्यते गजोऽस्मिन्निति आलानम् । 'ला आदाने' । गजबन्धनस्तम्भनाम ॥ शृणाति 'बन्धनेन

पीडयति गजमिति शृङ्खला। 'शृ हिंसायाम्'। अन्दति वध्नातीति अन्दुकः। '[5]अदि बन्धने'। निगलति[6] पीडयतीति निगड। डलयोरभेदात्। 'गल [7]आदाने'। शृङ्खलनामानि ॥ अङ्क्यते[8] गम्यतेऽनेन अङ्कुशः। 'अकि लक्षणे'। सरत्यनयेति सृणिः[9]। 'सृ गतौ'। अङ्कुशनामनी ॥ ४०–१ ॥

[1] अपरमिति वा पाठः $K_5$, $K_6$. [2] वेणुयष्टित्वात् $D_2$, $W_2$. [3] वेणुकं $K_1$, $W_2$. [4] बन्धयति $K_3$. [5] अति अदि $W_2$. [6] निगलयति $K_5$, $K_6$. [7] 'गल अदने' $D_2$, $W_2$. [8] अकति गच्छति, 'अक कुटिलायां गतौ' $K_3$, $K_6$. [9] $D_2$, $W_2$ add सृणिशब्दः द्वयोः स्त्रीपुंलिङ्गयोर्वर्तते ।'सृणिं चिताम्म्' (शिशु. ५. ५) इति तु माघस्य प्रमादः सृणेः स्त्रीत्वात् इति भानुजीदीक्षितः (पृ. ३२०).

(पा.) द्वौ पूर्वपश्चात्—क्रमात्। गजानां पूर्वजङ्घादिप्रदेशो [1]गात्रं स्यात्। तेषां पश्चाज्जङ्घादिप्रदेशोऽवरा[2] स्यात्। गात्रावरे इति रूपसामान्येन स्त्रीनपुंसकलिङ्गे। 'द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे[3] न ना' इति रभसकोशः। तोत्र [4]वैणुकम्। गजभीषणार्थं कृतार्धचन्द्राकारायोमुखवेणुदण्डनामनी। '[5]आरागोला'। आलानं बन्धस्तम्भे। [6]गजबन्धनार्थं स्तम्भ आलानं स्यात्॥ अथ शृङ्खले—निगलोऽस्त्री स्यात्। [7]शृङ्खलानामानि। 'संकल[5]'। 'निगडः पादबन्धश्च हिञ्जीरः शृङ्खलोऽन्दुकः' इति हलायुधपाठात् (अ. मा. २. ६८) शृङ्खलः पुंलिङ्गः। 'अन्दुको निगलो न स्त्री भिदुरं शृङ्खला त्रयी' इति वैजयन्त्यां (पृ. ११०, श्लो. ८३) त्रिलिङ्गतोक्ता॥ अनुक्तम्—'कलापकः कण्ठबन्धः'। ग्रीवानिगलः कलापकः स्यात्। 'त्रिपदी पादबन्धनम्'। पादशृङ्खला त्रिपदी स्यात्॥ अङ्कुशो—सृणिर्द्वयोः। अङ्कुशनामनी। सृणिर्दन्त्यादिः॥ ४०–१॥

[1] गात्रा $B_3$. [2] अपरा $A_1$. [3] गात्रापरे $A_1$. [4] वेणुकं $B_3$. [5] $B_3$ omits. [6] बन्धस्तम्भनाम $B_3$. [7] शृङ्खल° $B_3$.

**दूष्या कक्ष्या वरत्रा च कल्पना सज्जना समे।**
**प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः ॥ ४२ ॥**
**वीतं त्वसारं हस्त्यश्वं वारी तु गजबन्धनी।**

(वि.) दूष्येति—दूष्यते[1] गजस्योद्धलभङ्गः क्रियतेऽनयेति दूष्या। 'दुष वैकृत्ये'। कक्षायां [2]गजपार्श्वभागे वर्तमाना[3] कक्ष्या। त्रियते [4]गजमध्यमनयेति वरत्रा।

'वृञ् वरणे'। गजमध्यबन्धनाय निर्मितचर्मरज्जुनामानि ॥ क्ल्प्यते कल्पना। 'कृपू सामर्थ्ये'। सज्यते विरच्यते सज्जना[5]। गजशृङ्गारनामनी। [शृङ्गार अलङ्करणम्]। [6]सज्जीकरणस्येति केचित् ॥ प्रकर्षेण चित्रवर्णत्वेन वयन्त्येनामिति प्रवेणी। 'वेञ् तन्तुसताने'। आस्तीर्यते गजपृष्ठमनेन आस्तरणम्। 'स्तृञ् आच्छादने'। वर्ण्यते चित्रवर्णत्वेन वर्ण। 'वर्ण स्तुतौ'। परिस्तोम्यते[7] गजपृष्ठ परिकीर्यते परिस्तोम। 'स्तोम श्लाघायाम्'। कुथ्यते गजोपरि सश्लिष्यते कुथ। 'कुथ सश्लेषणे'। [8]गजोपरिस्थचित्रकम्बलनामानि ॥ वेति स्म विगत बलमस्येति वीतम्[9]। नि सत्त्वहस्त्यश्वनाम ॥ [10]गजपलायन वार्यतेऽनयेति वारी। 'वृञ् वरणे'। गजग्रहणाय कृतस्य गर्तादेर्नाम[11] ॥ ४२ ॥

[1] दूयते, 'दूञ् परितापे' $F_2$, $Pt_2$ चूष्या चूषा इति च पाठौ [2] मध्य° $D_2$, $Pt_2$
[3] मवा $K_6$ $Pt_2$ [4] मध्यभाग $D_2$, $K_5$, $K_6$ [5] $Pt_2$ adds 'षस्ज गतौ'
[6] $K_3$ omits two lines [7] परिस्तूयते $K_5$ [8] °स्थित° $W_2$ [9] $D_2$, $Pt_2$ add 'वी गत्यादिषु' [10] गज $F_2$, $Pt_2$ [11] $K_3$, $K_6$ add गजप्रकरण समाप्तम्

(पा.) [1]चूषा कक्ष्या वरत्रा स्यात्। गजमध्यबद्धस्थूलचर्मरज्जुनामानि[2]। 'येनुगनडिमिदोड्डन्नोकु'॥ कल्पना सज्जना समे। गजसज्जीकरणाय [3]बद्धदीर्घचर्मरज्जु नामनी। 'प्रनम्नेकु'। क्रियाशब्दत्वात् कल्पित सज्जितो गज ॥ अनुक्तम्—'[4]तिर्यग्दन्तप्रहारो य परिणाम स दन्तिनाम्'। गजाना तिर्यक्प्रसारितदन्तप्रहार परिणाम स्यात्। क्रियाशब्दत्वात् परिणतो गज ॥ प्रवेण्यास्तरण—कुथो द्वयो। [5]रत्नकम्बलनामानि ॥ अनुक्तम्—'पिधान[6] हस्तिकम्बल'। गजकम्बल पिधान[6] स्यात् ॥ 'निर्याण हस्तिमज्जनम्'। [7]गजमज्जन निर्याण स्यात् ॥ 'शारिर्नो हस्तिपर्याणम्'। गजपल्याण शारि स्यात् ॥ 'शृङ्गारो हस्तिमण्डनम्'। गजालकार शृङ्गार स्यात् ॥ वीत त्वसारहस्त्यश्वम्। असार करितुरग वीत स्यात्। पादकर्माङ्कुशवारणे[8] [9]मिलित्वा वीत स्यात्।

'पादकर्म[10] यत तेषा यातमङ्कुशवारणम्।
वीत तदुभय यत्र नि सार[11] हयकुञ्जरम् ॥'

इति वैजयन्ती (पृ १११, श्लो ८९)॥ वारी तु गजबन्धनी। करिग्रहणभूमिनाम ॥ 'गजग्रहणभूमौ स्त्री [1]"वारि' स्यात् सलिले नपुम्' इति वैजयन्ती (पृ २३६, श्लो ८२)॥ अनुक्तम्—'अवपातस्तु पाताय [1] गर्तस्तृणादिना'। गजाना [14]ग्रहणाय कृतो गर्तोऽवपात[15] स्यात्। 'ओंदामु'॥ ४२ ॥

[1] दूष्या $B_3$ [2] $B_3$ omits [3] $A_1$ adds परिणिनसुर्गज
[4] तिर्यग्दन्तप्रहारस्तु गज परिणतो मत इति हलायुध (२ ६५) [5] $A_1$ adds एतानि पञ्च
[6] विधान $A_1$ [7] गजाना $A_1$ [8] चारणे $A_1$ [9] $A_1$ adds द्वे [10] °वर्मयुत
प्रोक्त $A_1$ [11] नि सारहय° $A_1$ [12] वारी $B_3$ [13] पुष्करिणीकृत $B_3$
[14] निपातनाय $B_3$ [15] निपात $A_1$

**घोटके वीतितुरगतुरंगाश्वतुरंगमाः ॥ ४३ ॥**
**वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः ।**

(वि.) घोटक इति—भूमौ [1]घोटते परिवर्तते घोटक । 'घुट परिवर्तने'। वेति शीघ्र गच्छतीति वीति । 'वी गत्यादौ'। पीतिरिति वा पाठ । तुर त्वरित' गच्छतीति तुरग । तुरग । तुरगमश्च ॥ अश्नुते [3]गमनेनेत्यश्व । 'अशू व्याप्तौ'। वजतीति वाजी । 'वज[4] गतौ'। वहति नरमिति वाह । 'वह प्रापणे'। अर्वति क्षिप्र गच्छतीत्यर्वा । 'अर्व [5]गतौ'। नकारान्तोऽयम् । गन्ध्यते कशादिना [6]ताड्यत गन्धर्व । 'गन्ध अर्दने'। हयतीति[7] हय । 'हय गतिकान्त्यो[8]'। सिन्धुदेशे भव सैन्धव । सपति [9]जवादिधर्मेण समवैतीति सप्ति । 'षप समवाये'। अश्वनामानि ॥ ४३ ॥

[1] घुटति $K_5$, $K_4$, $Pt_2$ [2] शीघ्र $D_2$, $W_2$ [3] जवेन गच्छति $K_2$, $K_3$, $K_4$
[4] वज व्रज $K_5$ $K_6$ [5] क्षिप्रगतौ $K_3$, $K_4$ [6] पीड्यते $F_2$, $Pt_2$ [7] $K_3$, $Pt_2$
add गच्छति [8] गतौ $F_2$, $W_2$ [9] सेनादि $Pt_2$

(पा.) घोटके पीतितुरग—सैन्धवसप्तय । पीतिशब्द इकारान्त । 'पाने स्त्री पीतिरश्वे ना' इति रुद्र । अर्वेति शब्दो नकारन्त । 'अर्वा[1] च कुत्सिते वाहे वृषा कर्णमहेन्द्रयो' इति विश्वप्रकाशिका (पृ ९४, श्लो (१७) ॥ अश्वनामानि ॥

*'कुदर स्वाम्युपकारक स्थौरी याकलो जुहूराणश्च ।*
*धाराट खुङ्गाह [2] प्रकीर्णक शालिहोत्री च ॥'*

एतानि च ॥ ४३ ॥

[1] 'अर्धा च कुत्सिते इति मुद्रितग्रन्थे [2] खेकोश $A_1$, खेंकोल $B_3$

**आजानेयाः कुलीनाः स्युर्विनीताः साधुवाहिनः ॥ ४४ ॥**
**वनायुजाः पारसीकाः काम्बोजा बाह्लिका हयाः ।**

(वि.) आजानेया इति—अजेन गतिक्षेपेण[1] आनेया आजानेयाः। कुलीनाश्वनाम॥ विनीयन्त[2] इति विनीताः[3]। 'णीञ् प्रापणे'। सुशीलाश्वनाम॥ वनायुदेशे भवा वनायुजाः। पारसीकदेशे भवाः पारसीकाः। [4]कम्बोजेषु भवाः काम्बोजाः। [5]वह्लिकदेशे भवाः वाह्लिकाः। एतानि तत्तद्देशजाश्वनामानि॥ ४४॥

[1] जवेन $Pt_2$. [2] $K_2$, $K_6$, $W_2$ add साधु. [3] साधुवहनशीला; साधुवाहिनः $D_2$, $F_2$. [4] काम्बोज° $F_2$, $Pt_2$. [5] वल्हिक° $Pt_2$.

(पा.) आजानेयाः कुलीनाः स्युः। जात्याश्वाः कुलीनाः स्युः। विनीता साधुवाहिनः। सम्यग्वाहनशीला[1] विनीताः स्युः। तदन्ये शूलकाः[2] स्युः। '[3]शूलको दुर्विनीतोऽश्वः' इति हलायुधः (अ. मा. २. २८५)॥ वानायुजाः [4]पारशीकाः। भिन्नदेशत्वाद् भिन्नार्थकाः। वानायुजशब्दो[5] ह्रस्वादिश्च स्यात्। 'वानायुजः पारशीको वनायुजः' इति रत्नकोशः। [6]काम्बोजा वाह्लिका हयाः। वाह्लिकशब्दो दीर्घमध्यश्च स्यात्। 'वाह्लीकं वाह्लिकं धीरहिङ्गुनोर्नाश्वदेशयोः' इति त्रिकाण्डशेषः[7]॥ ४४॥

[1] $A_1$ adds अश्वाः. [2] शूकलाः $A_1$, $B_3$. [3] शूकलः $B_3$. [4] पारसीकाः $A_1$. [5] वानायुजा इति दीर्घादिश्च $B_3$. [6] काम्भोजा $A_1$. [7] ३. ३. श्लो. ५९५.

**ययुरश्वोऽश्वमेधीयो जवनस्तु जवाधिकः॥ ४५॥**
**पृष्ठ्यः स्थौरी सितः कर्को रथ्यो वोढा रथस्य यः।**

(वि.) ययुरिति—[1]उत्सृष्टो दिशं[2] यातीति ययुः। 'या प्रापणे'। अश्वमेधाय हितोऽश्वमेधीयः। अश्वमेधीयाश्वनाम॥ [3]जवते शीघ्रं गच्छतीति जवनः। 'जु गतौ'। जवाधिकाश्वनाम॥ पृष्ठेन वोढुं क्षमः पृष्ठ्यः। [4]स्थूलस्य पृष्ठभागस्येदं स्थौरम्। रलयोरभेदः। स्थौरं बलमस्यास्तीति स्थौरी। अतिभरवहनसमर्थाश्वनामनी। सितस्य वर्णान्तरं क्रियत इति [5]कर्कः। 'डुकृञ् करणे'। सिताश्वनाम॥ रथं वहतीति रथ्यः। रथवोढुरश्वस्य नाम॥ ४५॥

[1] विसृष्टः $F_2$, $Pt_2$. [2] दिशि दिशि $W_2$, देशे देशे $Pt_2$. [3] जवति $Pt_2$. [4] स्थूराया अश्वजङ्घाया इदं $D_2$, $K_5$, $K_6$. [5] करोति कौतुकं $F_2$, $Pt_2$.

(पा.) ययुरश्वोऽश्वमेधीयः। अश्वमेधाश्वो ययुः स्यात्। अश्वमात्रेऽपि[1] ययुः स्यात्। 'ययुरश्वोऽश्वमेधाश्वे' इति वैजयन्ती (पृ. २१८, श्लो. ४८)॥ जवनस्तु जवाधिकः।

जवाधिकोऽश्वो जवनः स्यात् ॥ पृष्ठ्यः स्थौरी । पृष्ठवहनशीलाश्वनामनी । 'स्थौरं पशूना पृष्ठवाह्यां तद्योगादिनिः' इति [2]सुभूतिटीकावचनात् स्थौरं[3] पृष्ठवाह्यम्[3] । 'वन्नेमोपु' ॥ सित. कर्क । श्वेतवर्णाश्वः कर्कः स्यात् । अनुक्तम्—'कृष्णवर्णस्तु हेमः स्यात्' । नीलवर्णाश्वो हेमः स्यात् । 'शोणाङ्गः शोण एव हि' । शोणवर्णाश्वः शोणः स्यात् । 'हरित पीतवर्णाश्वः' । [4]पीतवर्णस्तुरंगः हरितः स्यात् । 'हलाहः चित्रवर्णकः' । चित्रवर्णाश्वो हलाहः स्यात् । 'इन्द्रायुधस्तु नीलाक्ष' । नीलेक्षणोऽश्व इन्द्रायुध स्यात् । 'मल्लिकाक्षः सितेक्षणः' । शुभ्रनेत्रोऽश्वो मल्लिकाक्ष स्यात् । 'श्रीवृक्षकी स तुरगः श्रीवृक्षो यस्य लाञ्छनम्' । श्रीवृक्षलाञ्छनोऽश्वः श्रीवृक्षकी स्यात् । 'श्रीवृक्षकी पुरुषकोन्नमिता-ग्रकायः' इति माघः (शिशु. ५. ५६) ॥ रथ्यो वोढा रथस्य यः । रथवहनशीलोऽश्वो रथ्यः स्यात् ॥ ४५ ॥

[1] माश्वमपि $A_1$. [2] टीकाकार° $A_1$. [3] $B_3$ omits. [4] पीतवर्णाश्वः $B_3$

**बालः किशोरो वाम्यश्वा वडवा वाडवं गणे ॥ ४६ ॥**
**त्रिष्वाश्वीनं यदश्वेन दिनेनैकेन गम्यते ।**

(वि.) बाल इति—कश्यते [1]कशया किशोरः । 'कश गतिशासनयो [2] । बालाश्वनाम ॥ वमति गर्भमिति वामी । 'टुवमु उद्गिरणे' । अश्वजातिस्त्री अश्वा । वलत इति वडवा[3] । 'वल संवरणे संचरणे च' । अश्वस्त्रीनामानि ॥ वडवाना समूहो वाडवम् । अश्वासमूहनाम ॥ अश्वेनैकेन दिनेन गम्यत इति आश्वीनम्[4] । यो [5]मार्गोऽश्वेनैकदिनेनैव गम्यते तस्य नाम ॥ ४६ ॥

[1] केशेन $W_2$ [2] शातनयोः $W_2$, $Pt_2$ [3] वाडते आप्लवते वाडवा, 'वाडृ आप्ला॰वे' $D_2$, $K_6$ [4] आश्विन $K_6$ [5] यद्वर्त्म $F_2$, $Pt_2$

(पा.) बालः किशोरः । बालोऽश्वः किशोर स्यात् ॥ वाम्यश्वा वडवा । [1]स्त्रीतुरगनामानि ॥ अश्वेत्यत्राजादित्वाद् ङीप् न भवति । अन्यत्र ङीप् । घोटी हयी तुरगी अर्वती । 'अर्वणस्त्रसावनञः' (६. ४. १२७) इति तृ [2]इत्यन्तादेशः ॥ वाडव गणे । वडवानां समूहो वाडव स्यात्[3] ॥ त्रिष्वाश्वीनं—एकेन गम्यते । अश्वस्यैकदिनवर्त्म आश्वीनं स्यात् ॥ ४६ ॥

[1] अश्वस्त्री° $A_1$. [2] त्रादेश; $A_1$. [3] $B_3$ adds अश्वासमूहनाम.

**कश्यं तु मध्यमश्वानां हेषा ह्रेषा च निस्वनः ॥ ४७ ॥**
**निगालस्तु गलोद्देशो वृन्दे त्वाश्वीयमाश्ववत् ।**

(वि.) कश्यमिति—कशामर्हतीति कश्यम् । अश्वमध्यनाम ॥ ह्रेषणं[1] हेषा ह्रेषा च । 'ह्रेषृ ह्रेषृ अव्यक्ते शब्दे' । अश्वनिस्वननाम ॥ निगलत्यनेन कवलमिति निगाल । 'गल अदने' । अश्वगलदेशनाम ॥ अश्वाना वृन्दम्[2] आश्वीयम्[3] । आश्वं च । अश्वसमूहनामनी ॥ ४७ ॥

[1] हेषते $D_2$, $K_2$, $W_2$ [2] समूह $W_2$ [3] अश्वीयम् $W_2$

(पा.) कश्यं तु मध्यमश्वानाम् । अश्वमध्यम[1] कश्यं स्यात् ॥ हेषा ह्रेषा च निस्वने । अश्वनिस्वननामनी ॥ निगालस्तु गलोद्देशो[2] । अश्वगलप्रदेशो निगाल' स्यात् ॥ वृन्दे [3]त्वश्वीयमाश्ववत् । अश्वसमूहनामनी ॥ ४७ ॥

[1] मध्यम् $A_1$ [2] गलोद्दश $B_3$ [3] आश्वीयम् $B_3$

**आस्कन्दितं धोरितकं रेचितं वल्गितं प्लुतम् ॥ ४८ ॥**
**गतयोऽमूः पञ्च धारा घोणा तु प्रोथमस्त्रियाम् ।**

(वि.) आस्कन्दितमिति—आस्कन्दति चतुरं गच्छतीति आस्कन्दितम्[1] । 'स्कन्दिर् गतिशोषणयो' । धोरणम् अतिवेगेन धावन धोरितकम्[2] । 'धोर्ऋ गतिचातुर्ये' । धुर्याणा वेगेन सह किंचिद्गर्वितसहित गमन रेचितमित्युच्यते । रेचनं रेचितम् । 'रिचिर् विरेचने[3]' । वल्गतीति वल्गितम् । 'वल्ग गतौ' । वलितमिति पाठे वलते वलितम् । 'वल सवरणे सचलने च' । प्लवत इति प्लुतम् । 'प्लुङ् गतौ' । अश्वानाम् अमू पञ्च गतयो धारा भवन्ति । धार्यन्ते तुरगैरिति धारा ॥ घोणते श्वासेन चलतीति घोणा । 'घुण भ्रमणे' । प्रोथतीति[4] प्रोथ । 'प्रोथृ पर्याप्तौ' । अश्वनासा-नामनी ॥ ४८ ॥

[1] आस्कन्दन $F_3$, $Pt_2$ [2] चातुर्येणाधोरणं $Pt_2$ [3] पृथग्भावे $Pt_2$, रिच्यते विरिच्यते $W_2$ [4] $W_2$ adds वल्तीति.

(पा.) आस्कन्दित धौरितक—पञ्च धाराः । कोपात् सर्वपदैरुत्प्लुत्योत्प्लुत्य गमनमास्कन्दितम् । कङ्कशिखिक्रोडनकुलगतै सदृश धौरितकम्[1] । पद्भिर्वल्गन वल्गितम् ।

अवक्रद्रुता गतिस्तु रेचितम्। पक्षिमृगसाम्येन लङ्घनं प्लुतम्। [1]स्कन्दितादीनि पञ्च धाराशब्दवाच्यानि॥ घोणा तु—अस्त्रियाम्। अश्वानां नासिका [3]प्रोथ स्यात्॥ ४८॥

[1] धोरितकम् $B_3$ [2] आस्कन्दित* $B_3$ [3] प्रोथ $A_1$

**कविका तु खलीनोऽस्त्री शफं क्लीबे खुरः पुमान्॥ ४९॥**
**पुच्छोऽस्त्री लूमलाङ्गूले वालहस्तश्च वालधिः।**

(वि.) कविकेति—कवते भक्षणसमये शब्दायते[1] इति कविका। 'कुङ् शब्दे'। खलति चलतीति खलीनः। 'खल [2]चलने'। अश्वस्य मुखनियन्त्रिकानामनी॥ शायते [3]भुवा ताडनादिना शफम्। 'शो तनूकरणे'। खुरति भुवमिति खुरः। 'खुर विलेखने[4]'। पशुचरणाग्रनामनी॥ पूयन्ते [5]दशाद्योऽनेनेति पुच्छः। 'पूयी [6]विशरणे'। लूयन्ते रोमाण्यत्रेति लूम। नकारान्तः। 'लूञ् छेदने'। लङ्गति चलतीति लाङ्गूलम्। 'लगि [7]गतौ'। वालसमूहयोगात् वालहस्तः। वाला धीयन्तेऽस्मिन्निति वालधिः[8]। पशुपुच्छनामानि॥ ४९॥

[1] चलति $K_3$ $K_4$ [2] सचये च $K_2$ $K_6$ [3] भुव $K_3$ $K_4$ [4] छेदने $Pt_2$ [5] उत्सारयति दशादीन् $F_2$ $Pt_2$ [6] अपवारणे $K_4$ [7] चलने $K_5$ $K_6$ [8] $D_2$ $Pt_2$ add 'डुधाञ् धारणपोषणयोः'

(पा.) कविका—खलीनोऽस्त्री। अश्वमुखनिक्षिप्तायोयन्त्रनामनी॥ अनुक्तम्— 'पल्याणं स्यात् पल्ययनम्'। अश्वपल्याणनाम। 'पल्ययु'। 'वागा। वल्गावक्षेपणी कुशा'। वागानामानि। 'वागे'॥ 'केशकारः केशरचकः'। अश्वक्षुरकनामनी॥ 'बोकाणस्तु प्ररोहकः'। बोकाणनामनी। 'बोकेन'॥ शफ—पुमान्। केषाञ्चिन्मते शफशब्दोऽपि पुलिङ्गः। 'खुरः शफः शको विष्ठा यासस्तु यवसः शरिः' इति वैजयन्ती (पृ ७१, श्लो ७४)। खुरनामानि॥ पुच्छोऽस्त्री लूम। नान्तम्। लाङ्गूले—वालधिः। अश्वादिवालगुच्छनामानि॥ अनुक्तम्—'आवर्तो रोमजः पुंसि'। रोम्णामवस्थानविशेषनाम। 'सुडि'॥ ४९॥

**त्रिषूपावृत्तलुठितौ परावृत्ते मुहुर्भुवि॥ ५०॥**
**याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः।**

(वि.) त्रिष्विति—उपावर्तत स्म भुवि जाड्यपरिहाराय उपावृत्तः। 'वृतु वर्तने'। लुठति भुवि परिवर्तते[1] स्म लुठितः। 'लुठ [2]प्रतिघाते'। भुवि मुहु

परावृत्ताश्वनामानि ॥ अश्वप्रकरणं समाप्तम् ॥ शतम् अङ्गानि यस्य शताङ्गः । स्यन्दते यातीति[3] स्यन्दनः । 'स्यन्दू प्रस्रवणे' । रमन्तेऽत्र धन्विनः[4] रथः । 'रमु क्रीडायाम्' । रथनामानि ॥ ५० ॥

[1] परावर्तते $K_5$. [2] परिवर्तने $K_5$. [3] $D_2$ adds यात्यनेन यानम्, चक्रमस्यास्तीति तस्मिन् चक्रिणि. [4] ध्वनिना $K_6$.

(पा.) त्रिपूपावृत्त—मुहुर्भुवि । मुहुर्भूतले परावृत्तेऽश्वे [1]उपावृत्तलुठितशब्दौ स्याताम् । तौ च त्रिलिङ्गौ ॥ याने चक्रिणि—स्यन्दनो रथः । [2]चक्रयानं रथः । युद्धार्थे तस्मिन् रथे [3]शताङ्गस्यन्दनशब्दौ स्याताम् । 'चङ्क्रुरो मूलविभुजः' । एते द्वे च ॥ ५० ॥

[1] अपावृत्त° $A_1$. [2] चक्रियानम् $A_1$. [3] शताङ्गादिशब्दौ $B_1$.

**असौ पुष्यरथश्चक्रयानं न समराय यत् ॥ ५१ ॥**
**कर्णीरथः प्रवहणं डयनं च समं त्रयम् ।**

(वि.) असाविति—पुष्ये[1] उत्सवादौ विहितशुभकाले उपयोगी रथः [2]पुष्यरथः । यच्चक्रवद्यानं समराय न भवति यात्रादावेव तस्य रथस्य नाम ॥ कण्ठेषु[3] मनुष्यस्कन्धेषु उह्यमानो रथः कण्ठीरथः । कर्णीरथ इति वा पाठः । प्रवहति नरश्रेष्ठमिति[4] प्रवहणम् । 'वह प्रापणे' । डयते विहायसि गच्छत्यत्रस्थ इति डयनम् । 'डीङ् विहायसा गतौ' । विमानाख्ययाननामानि ॥ ५१ ॥

[1] पुष्ययात्रादौ $W_2$. [2] पुष्परथः $W_2$. [3] कर्णेषु $W_2$. [4] $D_1$, $K_5$, $K_6$ add अनेन.

(पा.) असौ पुष्यरथः—समराय यत् । न समरायेति प्रतिषेधात् क्रीडार्थं [1]चक्रयानं पुष्यरथः स्यात् ॥ कर्णीरथः प्रवहणं—समं त्रयम् । [2]मनुष्यस्कन्धवाह्ययाननामानि ॥ 'कर्णीरथस्थां रघुवीरपत्नीम्' इति कालिदासः (रघु. १४. १३) ॥ ५१ ॥

[1] चक्रियानं $A_1$. [2] बालकादिक्रीडाशकटनामानि $A_1$.

**क्लीबेऽनः शकटोऽस्त्री स्याद् गन्त्री कम्बलिवाह्यकम् ॥५२॥**
**शिबिका याप्ययानं स्याद् डोला प्रेङ्खादिका स्त्रियाम् ।**

(वि) क्लीब इति—अनिति [1]अक्षेण चीत्करोतीति अन । 'अन प्राणने'। सान्तोऽयं नपुंसकलिङ्गः । शक्नोति भारं वोढुं शकटः । 'शक्लृ शक्तौ'। शकटनामनी ॥ गच्छतीति गन्त्री। 'गम्लृ सृप्लृ गतौ'। [2]कं सुखकरं बलं येषां ते कम्बलिनः बलीवर्दाः, तैर्वाह्यते कम्बलिवाह्यकम्। अल्पशकटनामनी ॥ शिवा[3] मङ्गलदायिका। शिवैव शिविका। [4]याप्यो नेतव्यो राजादिः, तस्य यानं याप्ययानम्। आन्दोलिकानामनी ॥ डोल्यते इतस्ततः उत्क्षिप्यते डोला। 'डुल उत्क्षेपे'। दोलेति वा पाठः। [5]प्रेङ्खयते इतस्ततः प्रेङ्खा[6]। 'इखि गतौ'। डोलानामनी ॥ ५२ ॥

[1] अक्षे $W_2$ [2] कम्बलं सास्ना तद्योगात् कम्बलिनो बलीवर्दाः $F_2$, $Pt_2$ [3] नृपाणां श्रेयस्करी $D_2$, $K_2$, $K_4$ [4] याप्यैरधमैर्यायते $F_2$, $Pt_2$ [5] प्रेङ्खते $K_2$, $K_4$ [6] आदिना शयनखट्वा वाह्यादिदोला इति भानुजीदीक्षित (पृ ३२५)

(पा.) क्लीबेऽनः । सान्तोऽयम्। शकटोऽस्त्री स्यात्। शकटनामनी ॥ 'लघ्वी वेसरयुक्तश्च'। [1]एते द्वे च। 'विलङ्घ्य[2] लघ्वीं करभौ बभञ्जतुः'। (शिशु १२ २४)। [3]'प्रचोदितं वेसरयुक्तमध्वनि'। (शिशु १२ १९) इति प्रयोगात् सञ्ज्ञाशब्दत्वादलघुश्चेदपि लघ्वी, अवेसरयुक्तं चेदपि वेसरयुक्तम्॥ गन्त्री कम्बलिवाह्यकम्। कम्बलिभिर्वृषैः। करीषशकटनामनी। गन्त्रीशब्दः स्त्रीलिङ्गः। 'गन्त्री स्त्री कूबरं न स्त्री रथे कम्बलिवाह्यके' इति वैजयन्ती (पृ ११४, श्लो १२७)। शिविका याप्ययानं स्यात्। आन्दोलिकानामनी॥ डोला प्रेङ्खादिका स्त्रियाम्। डोलानामनी। डोला प्रेङ्खः पुमान् प्रेङ्खा निश्रेणिरधिरोहणी' इति रत्नकोशः ॥ ५२ ॥

[1] लघ्वीवेसरयुक्तशब्दावपि $A_1$ [2] विभज्य $A_1$ [3] प्रणोदितं वसरयुग्यमध्वनि' इति मुद्रितग्रन्थे (पृ २९४)

**उभौ तु द्वैपवैयाघ्रौ द्वीपिचर्मावृते रथे ॥ ५३ ॥**
**पाण्डुकम्बलसंवीतः स्यन्दनः पाण्डुकम्बली ।**

(वि.) उभाविति—द्वीपिचर्मणा[1] आवृतो रथः द्वैपः। व्याघ्रचर्मणा आवृतो वैयाघ्रः। शार्दूलचर्मावृतयाननामनी ॥ पाण्डुकम्बलसंवृतो रथः पाण्डुकम्बली[2]। श्वेतकम्बलावृतरथनाम ॥ ५३ ॥

[1] चमावृत $Pt_2$ [2] $F_2$, $Pt_2$ add नान्त

(पा.) उभौ तु द्वैपवैयाघ्रौ—आवृते रथे । द्वैपवैयाघ्रशब्दौ द्वीपिचर्मार्थकौ । 'द्वैपवैयाघ्रादञ्' इति (४. २. १२) ताभ्यामावृते रथेऽपि द्वैपवैयाघ्रशब्दौ स्याताम् ॥ पाण्डुकम्बल—पाण्डुकम्बली । श्वेतकम्बलेन संवीतो रथः पाण्डुकम्बली स्यात् ॥ ५३ ॥

**रथे काम्बलवास्त्राद्याः कम्बलादिभिरावृते ॥ ५४ ॥**
**त्रिषु द्वैपादयो रथ्या रथकट्या रथव्रजे ।**

(वि.) रथ इति—कम्बलेनावृतः[1] काम्बलः । वस्त्रेणावृतो[1] वास्त्रः । एवमादीनि कम्बलाद्यावृतरथनामानि ॥ पूर्वोक्ता द्वैपादयः पञ्च शब्दाः त्रिषु लिङ्गेषु वर्तन्ते ॥ रथानां समूहो रथ्या । रथकट्या च । रथव्रजनामनी ॥ ५४ ॥

[1] $F_2$, $Pt_2$ add रथः.

(पा.) रथे काम्बलवास्त्राद्याः—आवृते । कम्बलवस्त्रादिभिरावृते रथे काम्बल-वास्त्राद्याः शब्दाः स्युः ॥ त्रिषु द्वैपादयः । [1]द्वैपादिशब्दास्त्रिलिङ्गाः द्वैपी रथ्या वैयाघ्री रथ्या । 'परिवृतो रथः' (४. २. १०) इति नियमात् द्वैपी पेटीति न भवति ॥ रथ्या रथकट्या रथव्रजे । रथसमूहनामनी ॥ ५४ ॥

[1] $B_3$ adds पञ्च.

**धूः स्त्री क्लीबे यानमुखं स्याद् रथाङ्गमपस्करः ॥ ५५ ॥**
**चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात् प्रधिः पुमान् ।**

(वि.) धूरिति—धूर्वति हिनस्तीति धूः । 'धुर्वी हिंसायाम्' । यानमुखनाम ॥ अपकीर्यते तत्तदुचितस्थाने निक्षिप्यते अपस्करः[1] । अवस्कर इति वा पाठः । रथावयव-नाम ॥ करोति रथगमनमिति चक्रम् । 'डुकृञ् करणे' । रथस्याङ्गं रथाङ्गम् । रथचक्रनाम ॥ गमनसमये [2]नमतीति नेमिः[3] । 'णमु प्रह्वत्वे शब्दे च' । चक्रस्य प्रान्ते प्रधीयते क्षिप्यते प्रधिः[4] । चक्रान्ते सर्वतोनिहितलोहवलयनामनी ॥ ५५ ॥

[1] $D_2$, $Pt_2$ add 'कॄ विक्षेपे'. [2] $D_2$, $Pt_2$ add शब्दायते. [3] नयतीति वा, 'नियो मिः' (उ. ४. ४४) $K_2$. [4] 'डुधाञ् धारणपोषणयोः' $Pt_2$.

(पा.) धूः स्त्री क्लीबे यानमुखम् । 'धूः स्त्री धुर्वी यानमुखम्' इति वैजयन्त्य-नुसारिपाठः (पृ. ११४, श्लो. १३०) । रथनासिकानामानि ॥ स्याद्रथाङ्गमपस्करः ।

धूःप्रभृति रथावयवः सर्वोऽपि अपस्करः स्यात् ॥ चक्रं रथाङ्गम् । रथचरणनामनी । '[1]वण्डिकल्लु' । अत्र रथाङ्गमिति संज्ञा । 'अरि चक्रं रथपद रथाङ्गं केशवायुधम्' इति वैजयन्ती (पृ. ११५, श्लो. १३४) ॥ तस्यान्ते नेमिः—प्रधिः पुमान् । [2]चक्रान्तनामनी । 'वण्डिकम्मि' ॥ ५५ ॥

[1] B₃ omits [2] चक्रस्यान्तस्य° B₃

## पिण्डिका नाभिरक्षाग्रकीलके तु द्वयोरणिः ॥ ५६ ॥
## रथगुप्तिर्वरूथो ना कूबरस्तु युगंधरः ।

(वि.) पिण्डिकेति—पिण्ड्यन्ते [1]नैरन्तर्येण निखन्यन्ते अरा अस्यामिति पिण्डिका । 'पिडि सघाते' । नभ्यते हिंस्यतेऽक्षेणेति नाभिः । 'णभ हिंसायाम्' । चक्रनाभिनाम ॥ अणति शब्दायत इत्यणिः । 'अण शब्दे' । अक्षस्य नाभिक्षेप्यस्य काष्ठस्यान्ते [2]रन्ध्रक्षिप्तकीलकनाम ॥ रथोऽनेन गुप्यते रथगुप्तिः । 'गुपू रक्षणे' । व्रियते रथोऽनेनेति वरूथः । 'वृञ् वरणे' । [3]रथस्य द्वीपिचर्मादिगुप्तेर्नामनी ॥ [4]कुवते शब्दायते कूबरः । 'कूङ् शब्दे' । युगं धारयतीति युगधरः[5] । युगमध्यप्रदेशधारकस्य रथावयवस्य नामनी ॥ ५६ ॥

[1] सर्वाण्यग्राण्यस्यामिति F₂, Pt₂. [2] निक्षित° W₂. [3] K₃, W₂ add द्वीपिचर्मावृतरथस्य. [4] कवते, 'कुङ् शब्दे' K₃, K₄ [5] K₃, Pt₂ add 'धृञ् धारणे'.

(पा.) पिण्डिका नाभिः । चक्रमध्यरन्ध्रनामनी ॥ अक्षाग्रकीलके—अणिः । अक्षो नाम कर्पचक्र, [1]तस्याग्रस्थः कीलोऽणि· स्यात्[2] । आणिश्च[3] स्यात् । 'सीमाश्रयक्षाग्रकीलेषु स्यादाणिरणिवद् द्वयोः' इति रुद्रः ॥ रथगुप्तिर्वरूथो ना । चक्ररन्ध्रकीलितस्य क्रुम्भनामनी । 'नेम्मुलु' ॥ 'रथो वरूथस्य ह्यस्य वाजी गज. [4]करेणोः पथिक. पदातेः' इत्यत्र वरूथशब्दोऽर्शआद्यजन्तः (५. २. १२७) ॥ कूबरस्तु युगंधरः । चक्ररन्ध्रप्रविष्टदीर्घदारुनामनी । 'इरुसु[5]' ॥ ५६ ॥

[1] अग्रस्थकीलके B₂. [2] A₁ adds 'अच्चुकोनचिल'. [3] आणिरिति दीर्घादिश्च B₂ [4] करिणः A₁. [5] 'यिरुसु' A₁.

## अनुकर्षो दार्वधःस्थं प्रासङ्गो ना युगान्तरम् ॥ ५७ ॥
## सर्वं स्याद् वाहनं यानं युग्यं पत्रं च धोरणम् ।

(वि.) अनुकर्ष इति—अक्षम् [1]अनुकृष्यत इति अनुकर्षः। 'कृष विलेखने'। अक्षाधःक्षिप्तदारुनाम॥ प्रासज्यते बलीवर्दकण्ठेष्विति प्रासङ्गः। 'षञ्ज सङ्गे'। द्वितीययुगनाम॥ यान्त्यनेनेति यानम्। 'या प्रापणे'। युगं [2]वहतीति युग्यम्। पतन्त्यनेनेति पत्रम्। 'पत्लृ गतौ'। घोरति चातुर्येण गच्छत्यनेनेति धोरणम्। 'घोर्ऋ गतिचातुर्ये'। सर्ववाहनमात्रनामानि॥ [सर्वं हस्त्यश्वरथादि दोलान्तं वाहनमिति क्षीरस्वामी (पृ. १८७)]॥ ५७॥

[1] $K_5$, $K_6$ add पश्चात्. [2] अर्हतीति $W_2$.

(पा.) अनुकर्षो दार्वधःस्थम्। [1]अधस्तनं धारणादारु अनुकर्षः स्यात्[2]॥ प्रासङ्गो ना युगाद्युगः। युगो नाम यानाद्यङ्गम्। युगात् परस्थितयुगः प्रासङ्गः स्यात्॥ अनुक्तम्—'शिविका याप्ययानं स्यात्'। याप्ययानं शिविका स्यात्। '[3]पल्लकी'। 'दोलाप्यान्दोलिका स्त्रियाम्'। डोला प्रेङ्खोलिका स्त्रियामिति पाठान्तरम्। आन्दोलनामनी। 'अंदलमु'। 'आन्दोलनं स्यादान्दोलो दोला स्याद्दोलिकापि च' इति वैजयन्ती (पृ. ११५, श्लो. १३७)। [4]दोलानामापि स्यात्। 'दोला हेलार्थरूपणम्[5]' इति वैजयन्ती (पृ. ११५, श्लो. १३६)॥ सर्वं स्यात्—धोरणम्। उक्ता एते हस्त्यादयः सर्वेऽपि वाहनादिशब्दवाच्याः स्युः॥ ५७॥

[1] अधःस्थ° $B_3$. [2] $B_3$ adds 'कोटिर्वीड'. [3] 'पल्लकि' $A_1$.
[4] डोलापि $B_3$. [5] रोहणम् $A_1$.

**परंपरावाहनं यत् तद् वैनीतकमस्त्रियाम्॥ ५८॥**
**आधोरणा हस्तिपका हस्त्यारोहा निषादिनः।**

(वि.) परंपरेति—वोढृभिः परंपरया वाह्यत इति परंपरावाहनम्। विनीतानामधानामिदं वैनीतकम्। परंपरावाहननाम॥ आधोर्यन्ते हस्तिनः एभिरिति आधोरणाः। 'घोर्ऋ गतिचातुर्ये'। [1]हस्तिनं पान्तीति हस्तिपकाः। 'पा रक्षणे'। [2]हस्तिन आरोहन्तीति हस्त्यारोहाः। हस्तिस्कन्धे निषीदन्तीति निषादिनः। 'षद्लृ विशरणगत्यवसादनेषु'। गजशिक्षकनामानि॥ ५८॥

[1] हस्तिनः $F_2$, $Pt_2$. [2] हस्तिषु $K_5$, $K_6$.

(पा.) परंपरावाहनं—वैनीतकमस्त्रियाम्। रथशिबिकादिपरंपरावाहनं वैनीतकं स्यात्। दीर्घद्वितीयः। आधोरणा—निषादिनः। गजसादिनामानि॥ महामात्रा-

स्तत्प्रधानाः स्युः । 'तत्प्रधाना महामात्रा आरोहा गजजीवनाः' इति वैजयन्ती (पृ. १११, श्लो. ८८) ॥ ५८ ॥

**नियन्ता प्राजिता यन्ता सूतः क्षत्ता च सारथिः ॥ ५९ ॥**
**सव्येष्ठदक्षिणस्थौ च संज्ञा रथकुटुम्बिनः ।**

(वि.) नियन्तेति—अश्वादीन् नियच्छतीति नियन्ता । यन्ता च । 'यम उपरमे' । [1]प्राजति प्रेरयत्यश्वानिति प्राजिता । 'अज गतिक्षेपणयोः' । सुवत्यश्वानिति सूतः । 'षू प्रेरणे' । [2]क्षदति ताडयत्यश्वानिति क्षत्ता । 'क्षद गतिहिंसनयोः' । सारयति प्रेरयति अश्वानिति सारथिः । 'सृ गतौ' । कदाचित् सव्यभागगतानश्वान् प्रेरयितुं सव्यभागे तिष्ठतीति सव्येष्ठः । दक्षिणभागगतानश्वान् प्रेरयितुं कदाचित् दक्षिणभागे तिष्ठतीति दक्षिणस्थः[3] । 'ष्ठा गतिनिवृत्तौ' । रथकुटुम्बिनो नामानि ॥ ५९ ॥

[1] प्राजयति $K_3$, $K_8$, $Pt_2$. [2] क्षतति $K_8$. [3] $W_2$ adds दक्षिणस्थाश्वरथवाहकनाम; रथं कुटुम्बयितुं शीलमस्य । 'कुटुम्ब धारणे' । यद्वा रथ एव कुटुम्बम् । रथकुटुम्बमस्यास्ति । इनिः । इति भानुजीदीक्षितः (पृ. ३२८).

(पा.) नियन्ता प्राजिता यन्ता । एते त्रदन्ताः । सूतः क्षत्ता—रथकुटुम्बिनः । नियन्त्रादयोऽष्ट शब्दाः [1]रथकुटुम्बिसंज्ञाः स्युः । रथसारथिनामानि ॥ ५९ ॥

[1] °कुटुम्बिनः $B_3$

**रथिनः स्यन्दनारोहा अश्वारोहास्तु सादिनः ॥ ६० ॥**
**भटा योधाश्च योद्धारः सेनारक्षास्तु सैनिकाः ।**

(वि.) रथिन इति—रथा एषां सन्तीति रथिनः । [1]स्यन्दनमारोहन्तीति स्यन्दनारोहाः । 'रुह बीजजन्मनि प्रादुर्भावे च' । ये रथमारुह्य युध्यन्ते तेषां नामनी । रथाधिष्ठितनामनी वा ॥ [2]सीदन्त्यवश्यं परबलं नाशयन्तीति सादिनः । 'षद्लृ विशरणादौ' । अश्वारोहनाम ॥ भटन्ति [3]परस्परं तिष्ठ तिष्ठेति भाषन्ते भटाः । 'भट परिभाषणे' । युध्यन्त इति योधाः । योद्धारश्च । 'युध सम्प्रहारे' । योद्धृपुरुषनामनी ॥ सेनां रक्षन्तीति सेनारक्षाः, सैनिकाश्च[4] । सेनारक्षकनामनी ॥ ६० ॥

[1] स्यन्दनान् $F_2$, $Pt_2$. [2] सादयन्ति $W_2$. [3] युद्धं काङ्क्षन्तीति $Pt_2$.
[4] $D_2$, $K_3$, $Pt_2$ add 'रक्ष पालने'.

(पा.) रथिन स्यन्दनारोहा । रथिकनामनी ॥ अश्वारोहास्तु सादिन । अश्वारोहनामनी[1] ॥ 'तुरगिणोऽश्ववाहाश्च'। एते द्वे च ॥ भटा योधाश्च योद्धार । योधनामानि ॥ सेनारक्षास्तु सैनिका । [2]सेनारक्षकनामनी ॥ ६० ॥

[1] राहुत्तनामानि $A_1$ $B_3$　　[2] °रक्षकनायकनामनी $A_1$

**सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते ॥ ६१ ॥**
**बलिनो ये सहस्रेण साहस्रास्ते सहस्रिणः ।**

(वि.) सेनायामिति—सेनाया समवेता मिलिता सैन्या । सैनिकाश्च । सेनाया समूहत्वेन मिथो मिलिताना नामानि ॥ सहस्रेण सहस्रसंख्यावच्छिन्नेन बलेन बलिन [1]साहस्रा । सहस्रिणश्च । ये सहस्रेण बलिन तेषा नामनी ॥ ६१ ॥

[1] सहस्र बलमस्तीति $F_3$ $Pt_2$

(पा.) सेनाया समवेता—सैनिकाश्च ते । [1]कूटनायकनामनी ॥ बलिनो ये—सहस्रिण । [2]सहस्राश्वानामुपरिस्थितसहस्रसंख्याकाना सादिना नामनी ॥ ६१ ॥

[1] सेनाया मिलित्वा स्थिताना नामनी $B_3$　　[2] सहस्रबलाधिकारिनामनी $B_3$

**परिधिस्थः परिचरः सेनानीर्वाहिनीपतिः ॥ ६२ ॥**
**कञ्चुको वारवाणोऽस्त्री यत्तु मध्ये सकञ्चुकाः ।**
**बध्नन्ति तत्सारसनमधिकाङ्गोऽथ शीर्षकम् ॥ ६३ ॥**
**शीर्षण्यं च शिरस्त्रेऽथ तनुत्रं वर्म दंशनम् ।**
**उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम् ॥ ६४ ॥**

(वि.) परिधिस्थ इति—परिधौ सेनाप्रत्यन्ते[1] तिष्ठतीति परिधिस्थ । 'ष्ठा गतिनिवृत्तौ'। परितश्चरतीति परिचर । 'चर गतिभक्षणयो'। सेनाप्रत्यन्तरक्षिणो नामनी ॥ सेना [2]नयतीति सेनानी । 'णीञ् प्रापणे'। वाहिन्या सेनाया पति वाहिनीपति । [3]सेनापतिनामनी ॥ कच्यते बध्यते कञ्चुक । 'कचि दीप्तिबन्धनयो'। बाणान् वारयतीति वारवाण । बवयोरैक्यात्[4] । 'वृञ् आवरणे'। देहरक्षणार्थं कृतस्य कूर्पासविशेषस्य नामनी ॥ सार स्थिरत्व कञ्चुकस्य सनोति ददातीति सारसनम् ।

'पणु दाने'। अङ्गादधिकम् अधिकाङ्ग । कञ्चुकोपरिबन्धनाय पट्टसूत्रादिकृतरज्जु नामनी ।। [6]शीर्षमिव निर्मित शीर्षकम्। [7]शिरसे हित शीर्षण्यम्। शिरो घातात् त्रायत इति शिरस्त्रम्। '"त्रैङ् पालने'। [8]शिरस्त्रनामानि ॥ [9]तनु त्रायते तनुत्रम्। वृणोति शरीर वर्म। 'वृञ् वरणे'। [10]दश्यतेऽनेनेति दशनम्। 'दश दशने'। उर छाद्यतेऽनेनेति उरश्छद । 'छद अपवारणे'। क वक्ष [11]कटतीति कङ्कटक । 'कटे वर्षावरणयो '। जागर्तीति [12]जगर । 'जागृ निद्राक्षये'। कान्[13] वाणान् वञ्चयते[14] कवच । 'वञ्चु प्रलम्भने'। उरस्त्राणनामानि ॥ ६२-४ ॥

[1] $K_5$ $K_8$ add देशे [2] $K_2$ $K_8$ add नियुक्त [3] वाहिनी° $K_8$ [4] अभेद $K_3$ $K_5$ [5] यल $F_2$ $Pt_2$ [6] शीर्ष रक्षति $F_2$ $Pt_2$ [7] शिरसि वर्तमान $K_8$ [8] शिरोरक्षक° $K_3$ [9] देह $W_2$ वक्ष स्थल $K_8$ [10] दश्यते बध्यते $K_5$ $K_8$ [11] $K_5$ $K_8$ add वृणोति [12] अजगर इति वा पाठ $D_2$ $K_8$ [13] क वात $Pt_2$ [14] वञ्चयति $K_5$ $K_8$

(पा.) परिधिस्था परिचरा । काटवद्वलयाकारेण स्थिताना भटाना नामनी ॥ सेनानीर्वाहिनीपति । सेनाधिपतिनामनी ॥ कञ्चुको वारवाणोऽस्त्री। [1]कार्पासकूर्पासक नामनी। 'झग'॥ यत्तु मध्ये—अधिकाङ्ग । आमुक्तकञ्चुकैर्मध्यनिबद्धपट्टनामनी[2] ॥ अथ शीर्षक—शिरस्त्रे। शिरस्त्राणनामनी ॥ अथ तनुत्र वर्म दशन—कवचोऽस्त्रियाम्। 'अदशयन्नरहितशौर्यदशना ' इति माघ (शिशु १७ २१)। कवचनामानि। 'जूड'। 'सूत्रक स्यात् सूत्रमय जालिका स्यादयोमयी' इति सूत्रकजालिक कवचविशेषे[3] ॥ ६२-४॥

[1] कञ्चुकनामनी $B_3$ [2] वद्धरथि° $A_1$ [3] °विशेषौ $B_3$

## आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत्।
## सनद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः ॥ ६५ ॥

(वि.) आमुक्त इति—आमुच्यते वध्यते आमुक्त । प्रतिमुच्यते स्म प्रतिमुक्त । 'मुच्लृ मोक्षणे'। अपिनह्यत इति पिनद्ध । अपिनद्धश्च । 'णह बन्धने'। 'युद्धार्थं वर्मादिनोपक्लृप्तशरीरस्य नामानि ॥ सनह्यते सनद्ध । वर्म सजातमस्य वर्मित । सज्जति [1]सज्ज । 'षस्ज गतौ'। [2]दशोऽस्य सजातो दंशित । व्यूढ कङ्कटोऽनेन व्यूढकङ्कट । उरस्त्राणयुक्तस्य नामानि ॥ ६५ ॥

[1] उरश्छदेन सञ्च्छते $K_5$ $K_8$ [2] $Pt_2$ adds दशन दश

(पा.) आमुक्तः प्रतिमुक्तश्च—नद्धवत्। आमुक्तकवचनामानि। 'तोडगवड्[1]जूडु'॥ संनद्धो वर्मितः—व्यूढकङ्कटः। व्यूढः कङ्कटो येन, तस्य नामानि। 'जूड-तोड्गुकुत्रपुरुपुनिपेल्लु'॥ ६५॥

[1] 'तोडिगिन जोडु' $B_3$.

**त्रिष्वामुक्तादयो वर्मभृतां कावचिकं गणे।**
**पदातिपत्तिपदगपादातिकपदाजयः॥ ६६॥**
**पद्गश्च पदिकश्चाथ पादातं पत्तिसंहतिः।**

(वि.) त्रिष्विति—आमुक्तादयो व्यूढकङ्कटान्ताः त्रिषु लिङ्गेषु वर्तन्ते॥ कवचिनां समूहः कावचिकम्। वर्मभृतां समूहनाम॥ [1]पादाभ्यामतति गच्छतीति पदातिः। 'अत सातत्यगमने'। [2]पतत्परीन् प्रति पत्तिः। 'पत्ऌ गतौ'। पदाभ्यां गच्छतीति पदगः। 'गम्ऌ गतौ'। पादाभ्यामततीति पादातिकः[3]। पदाभ्यामजतीति पदाजिः। 'अज गतिक्षेपणयोः'। पद्भ्यां गच्छतीति पद्गः। पादाभ्यां चरतीति पदिकः। पदातिनामानि॥ पदातीनां समूहः पादातम्। पत्तीनां संहतिः पत्तिसंहतिः। पत्तिसमूहनाम॥ ६६॥

[1] पदाभ्या $W_2$.　[2] $K_3$ adds गच्छति, पद्यते $D_2$.　[3] पदाभ्याम् अतिगच्छतीति पदातिगः $K_3$

(पा.) त्रिष्वामुक्तादयः। [1]आमुक्तादयस्त्रिलिङ्गाः[2]। आमुक्तः कवचः। आमुक्तं कवचम्। सनद्धमनीकमित्यादि॥ वर्मभृतां कावचिकं गणे। कवचधारिणां[3] समूहः कावचिकं स्यात्॥ पदातिपत्ति—पद्गश्च पदिकश्च। [4]पादचारियोधनामानि। 'काल्-बल्मु[5]'॥ अथ पादातं पत्तिसंहतिः। पङ्क्तिरततां समूहः पादातं स्यात्।

'पादातिकः पदातिः पादातपदाजिपद्गपदिकाः स्युः।

इति रत्नकोशः॥ ६६॥

[1] $A_1$ adds पूर्वोक्ताः.　[2] $B_2$ adds शब्दाः.　[3] कवचवतां $B_2$.　[4] $A_1$ adds पदाजिः पुलिङ्गः.　[5] $B_1$ omits.

**शस्त्राजीवे काण्डपृष्ठायुधीयायुधिकाः समाः॥ ६७॥**
**कृतहस्तः सुप्रयोगविशिखः कृतपुङ्खवत्।**

(वि.) शस्त्राजीव इति—शस्त्रेणाजीवतीति शस्त्राजीवः[1]। काण्डाः बाणाः पृष्ठे यस्य काण्डपृष्ठः। आयुधेन जीवतीति आयुधीयः। आयुधिकश्च। शस्त्राजीवकनामानि॥ कृतौ शिक्षितौ हस्तौ यस्य कृतहस्तः। सुष्ठु प्रयुज्यन्ते सुप्रयोगाः। तथाविधाः विशिखाः यस्य सुप्रयोगविशिखः। कृतः शिक्षितः[2] पुङ्खः शराभ्यासो येन कृतपुङ्खः। लब्धलक्ष्यनामानि ॥ ६७ ॥

[1] D₂, K₂ add 'जीव प्राणधारणे'. [2] गृहीतः Pt₂; K₂ adds सु°; साधु W₂.

(पा.) शस्त्राजीवे काण्डपृष्ठ—समाः। शस्त्राण्युपजीव्य [1]जीवतो नामानि॥ कृतहस्तः—कृतपुङ्खवत्। [2]लक्ष्यभेदे [3]करप्रयोगिणो नामानि ॥ ६७ ॥

[1] °जीवता B₃. [2] लक्ष्य° A₁. [3] लक्ष्यवेधिनः B₃.

**अपराद्धपृषत्कोऽसौ लक्ष्याद् यश्च्युतसायकः ॥ ६८ ॥**
**धन्वी धनुष्मान् धानुष्को निषङ्ग्यस्त्री धनुर्धरः ।**

(वि.) अपराद्धेति—अपराद्धाः [1]अलब्धलक्ष्याः पृषत्का बाणा यस्य अपराद्धपृषत्कः। [2]लक्ष्यादन्यत्र च्युतसायकस्य नाम॥ धन्वा अस्यास्तीति धन्वी। धनुरस्यास्तीति धनुष्मान्। धनुः प्रहरणमस्य धानुष्कः। निषङ्गस्तूणोऽस्यास्तीति निषङ्गी। अस्त्राण्यस्य सन्तीति अस्त्री। धनुर्धारयतीति धनुर्धरः[3]। धनुर्धरनामानि ॥ ६८ ॥

[1] अपलब्ध° K₅, K₂ [2] लक्ष्यच्युतबाणस्य° K₂. [3] D₃, W₂ add 'धृञ् धारणे'.

(पा.) अपराद्धपृषत्कोऽसौ—सायकः। तद्विपरीतस्य[1] नाम। धन्वी धनुष्मान्—धनुर्धरः। अर्शआदिपाठादुरसोऽपि स्यात्। धृतधनुषां नामानि ॥ ६८ ॥

[1] लक्ष्यप्राप्तसायकस्य B₃.

**स्यात् काण्डवांस्तु काण्डीरः शाक्तीकः शक्तिहेतिकः ॥६९॥**
**याष्टीकपारश्वधिकौ यष्टिपर्श्वधहेतिकौ ।**

(वि.) स्यादिति—काण्डा बाणा अस्य सन्तीति काण्डवान्। काण्डीरश्च। बाणवतो नामनी॥ शक्तिः प्रहरणमस्य [1]शाक्तीकः। शक्तिः हेतिः आयुधं यस्य शक्तिहेतिकः। शक्त्याख्यायुधधरस्य[2] नामनी॥ यष्टिः प्रहरणमस्य याष्टीकः। लगुडायुध-

धरस्य नाम ॥ परश्वध. परशु प्रहरणमस्य पारश्वधिकः । [3]परश्वधाख्यायुधधरस्य नाम ॥ ६९ ॥

[1] शाक्तिक. $D_2$, $K_5$, $K_6$ [2] °वत: $W_2$ [3] परश्वाख्य° $K_3$, $K_4$

(पा.) स्यात् काण्डवास्तु काण्डीर । दण्डधारिनामनी । [1]अधिकशरधारिनामनी इति केचित् ॥ शाक्तीक । दीर्घमध्य. । शक्तिहेतिक । केवलशक्त्यायुध पुरुषः [2]शाक्तीक स्यात् । 'शक्तियष्ट्योरीकक्' (४. ४. ५९) इतीकक्प्रत्यय ॥ याष्टीक-पारश्वधिकौ—हेतिकौ । यष्टिधारी याष्टीक. स्यात् । इष्टियोगादैष्टिक स्यात् । परशुहेतिकः पारश्वधिक स्यात् । पारश्वधोऽपि भवति । 'परश्वधाद्वाण्' इति शाकटायनमतादण्[3] (शा व्या ३ २. ५८) ॥ ६९ ॥

[1] $B_3$ *omits* [2] शाक्तिक. $B_3$ [3] अपि $A_1$

**नैस्त्रिंशिकोऽसिहेतिः स्यात् समौ प्रासिककौन्तिकौ ॥७०॥**
**चर्मी फलकपाणिः स्यात् पताकी वैजयन्तिकः ।**

(वि.) नैस्त्रिंशिक इति—निस्त्रिंश. प्रहरणमस्य नैस्त्रिंशिकः । असि हेतिर्यस्य असिहेति । खड्गायुधधरस्य नामनी ॥ प्रास. प्रहरणमस्य प्रासिक । कुन्त प्रहरणमस्य कौन्तिक । [1]कुन्ताख्यायुधधरस्य नामनी ॥ चर्म फलकमस्यास्तीति चर्मी । [2]फलक पाणौ यस्य फलकपाणि । फलकपाणिनाम ॥ पताकास्यास्तीति पताकी । वैजयन्त्या ध्वजेन चरतीति वैजयन्तिक । पताका धृत्वा सेनामध्ये चरतो नामनी ॥ ७० ॥

[1] प्रास° $W_2$ [2] $Pt_2$ adds फलति विशीर्यते घातैरिति फलकम्, 'निफला विशरणे'

(पा.) नैस्त्रिंशिकोऽसिहेति[1] स्यात् । [2]केवलखड्गायुधो नैस्त्रिंशिक स्यात् । आसिकदैष्टिकादिशब्दा एवविधा ॥ समौ प्रासिककौन्तिकौ । [3]कुन्तधारिनामनी । 'योंटवाड्डु[4]' ॥ चर्मी फलकपाणिः स्यात् । चर्मधरनामनी । 'हरिगेवाड्डु[4]' ॥ पताकी वैजयन्तिक । [5]ध्वजधरनामनी । 'टेक्क [4]चट्टवाड्डु' । अनुक्तम्—छायाकरश्छत्रधर । धृतातपत्रनामनी ॥ ७० ॥

[1] असिर्हेति. $B_3$ [2] खड्गायुधनाम $B_3$ [3] कुन्तभृन्नाम $B_3$ [4] $B_3$ omits. [5] ध्वजधारि° $A_1$.

**अनुप्लवः सहायश्चानुचरोऽभिचरः समाः ॥ ७१ ॥**
**पुरोगाग्रेसरप्रष्ठाग्रतःसरपुरःसराः ।**
**पुरोगमः पुरोगामी मन्दगामी तु मन्थरः ॥ ७२ ॥**

(वि.) अनुप्लव इति—[1]अनु पश्चात् प्लवते गच्छतीति अनुप्लव । 'प्लुङ् गतौ'। मुख्येन सह अयते गच्छतीति सहाय । 'अय गतौ'। अनु पश्चात् मुख्यस्य चरतीति अनुचर । 'चर गतिभक्षणयो'। मुख्यम् अभितश्चरतीति अभिचर । अभिसर इति वा पाठ । मुख्यस्य पश्चाद्गामिनो नामानि ॥ पुरो गच्छतीति पुरोग । 'गम्लृ गतौ'। अग्रे सरतीति अग्रेसर । 'सृ गतौ'। प्रतिष्ठते [2]पुरो गच्छतीति प्रष्ठ । 'ष्ठा गतिनिवृत्तौ'। अग्रत सरति गच्छतीति अग्रत सर । पुर सरतीति पुर सर । 'सृ गतौ'। पुरो गच्छतीति पुरोगम [3]। पुरोगामी च । नान्त । यो मुख्यस्य पुरो गच्छति तस्य नामानि ॥ मन्द गच्छतीति मन्दगामी । 'गम्लृ गतौ'। मन्थति[4] गच्छन् सङ्क्लिश्यते मन्थर । 'मथि हिंसासङ्क्लेशनयो'। मन्दगामिनामनी ॥ ७१-२ ॥

[1] $K_5$ $K_6$ add मुख्यस्य [2] अग्र $W_2$ [3] $K_6$ adds पुरोगश्च [4] मथ्नाति चरणाविति $F_2$ $Pt_2$

(पा.) अनुप्लव सहायश्च—[1]अभिचर समा । अनुसृत्य गच्छता नामानि ॥ पुरोगाग्रेसर—पुरोगामी । पुरोभागे गच्छता नामानि[2] ॥ मन्दगामी—मन्थर । शनैर्गच्छता नामनी ॥ ७१-२ ॥

[1] अभिसर $B_3$ [2] अग्रसर इत्यत्र अग्र इति निपात्यते $A_1$

**जङ्घालोऽतिजवस्तुल्यौ जङ्घाकरिकजाङ्घिकौ ।**
**तरस्वी त्वरितो वेगी प्रजवी जवनो जवः ॥ ७३ ॥**

(वि.) जङ्घाल इति—दीर्घ जङ्घे अस्य स्त इति जङ्घाल । अतिशयितो जवो वेगो यस्य अतिजव । अतिवेगेन गच्छतो नामनी ॥ जङ्घे एव [1]कर्मकरौ यस्य जङ्घाकरिक । जङ्घाभ्या जीवतीति जाङ्घिक । दूर गत्वा तत आगत्य तत्रस्थवार्ता निवेदयितुर्नामनी ॥ तर वेगोऽस्यास्तीति तरस्वी[2] । त्वरते स्म त्वरित [3]। 'ञित्वरा सम्भ्रमे'। वेगोऽस्यास्तीति वेगी । प्रजवति प्रजवी[4] । जवन । जवश्च । 'जुङ् गतौ'। वेगवतो नामानि ॥ ७३ ॥

[1] जीवनकर्यौ $F_2$ $Pt_2$ [2] $D_2$ $Pt_2$ add नान्त [3] त्वरास्य संजाता वा $D_2$ $K_2$ [4] प्रकृष्टो जवो यस्य $F_2$ $Pt_2$

(पा.) जङ्घालोऽतिजवस्तुल्यौ। [1]अतिशीघ्रगामिनामनी॥ जङ्घाकरिकजाङ्घिकौ। धावतो[2] नामनी। 'पारटिवाडु'॥ तरस्वी त्वरितो—जवनो जव। शीघ्रगामिनामानि॥ ७३॥

[1] अतिवेग° $B_3$ [2] जङ्घाभ्या जीवत. $A_1$

**जय्यो यः शक्यते जेतुं जेयो जेतव्यमात्रके।**
**जैत्रस्तु जेता यो गच्छत्यलं विद्विषतः प्रति॥ ७४॥**
**सोऽभ्यमित्र्योऽभ्यमित्रीयोऽप्यभ्यमित्रीण इत्यपि।**

(वि.) जय्य इति—जेतु शक्यते जय्य। 'जि[1] जये'। सामाद्युपायैर्जेतुं शक्यस्य शत्रोर्नाम॥ जेतु योग्यो जेय। जेतव्यमात्रनाम॥ जेतृसवन्धी भवति जैत्र.[2]। जयतीति जेता। जेतृनामनी॥ आभिमुख्येन [3]अमित्र सुष्ठु[4] गच्छतीति अभ्यमित्र्यः। अभ्यमित्रीय। अभ्यमित्रीणश्च॥ य शत्रून् प्रति अल गच्छति तस्य नामानि॥ ७४॥

[1] 'जि अभिभवे' $D_2$, $W_3$ [2] जयतीति $F_2$, $Pt_2$ [3] शत्रु $Pt_2$ [4] अलं $F_2$, $Pt_2$

(पा.) जय्यो य—जेतुम्। यो जेतु शक्य. स[1] जय्य स्यात्॥ जेयो जेतव्यमात्रके। जेतु यो योग्य स जेय स्यात्॥ जैत्रस्तु जेता। [2]जेतुर्नामनी॥ यो गच्छत्यल—अभ्यमित्रीण इत्यपि। य शत्रून् प्रति चाञ्चल्यरहित सन् गच्छति तस्य नामानि॥ ७४॥

[1] तस्य शत्रोर्नाम $B_3$ [2] जयशीलस्य $A_1$

**ऊर्जस्वलः स्यादूर्जस्वी य ऊर्जोतिशयान्वितः॥ ७५॥**
**स्यादुरस्वानुरसिलो रथिनो रथिको रथी।**

(वि.) ऊर्जस्वल इति—ऊर्जो बलमस्यास्तीति[1] ऊर्जस्वल। ऊर्जस्वी च। अतिबलवतो नामनी॥ [2]प्रशस्तमुरोऽस्यास्तीति उरस्वान्। उरसिलश्च। उरोबलान्वितस्य नामनी॥ रथोऽस्यास्तीति रथिक। रथिन। रथी च। रथिर इति वा पाठ.। रथविद्याविशारदस्य नामानि॥ ७५॥

[1] तद्योगात् $F_2$, $Pt_2$ [2] अतिबल $K_2$, $K_6$, $W_2$

(पा.) ऊर्जस्वल स्यात्—[1]ऊर्जोऽतिशयान्वित । ऊर्जो [2]नामोत्साह । ऊर्ज इति पराक्रमश्च । तयोर्द्वयोरतिशयवानूर्जस्वल ऊर्जस्वी च स्यात् ॥ स्यादुरस्वानुरसिल । य शत्रुभ्य उरो दत्त्वा स्वबल रक्षति तस्य नामनी । अर्शआदिपाठादुरसश्च स्यात् । अकारान्त । [3]रथिनो रथिको रथी । रथबलवतो नामानि । भूमार्थे प्रत्यय ॥ ७५ ॥

[1] ऊर्जातिशय° $A_1$ [2] $B_3$ omits [3] रथिर $B_3$

**कामंगाम्यनुकामीनो ह्यत्यन्तीनस्तथा भृशम् ॥ ७६ ॥**
**शूरो वीरश्च विक्रान्तो जेता जिष्णुश्च जित्वरः ।**

(वि.) कामगामीति—काम यथेच्छ गच्छतीति कामगामी । अनुकाम यथेष्ट गमिष्यतीति अनुकामीन । युद्धादौ यथेष्ट गमिष्यतो नाम ॥ युद्धादावत्यर्थं[1] गमिष्यतीति अत्यन्तीन । युद्धे शत्रून् प्रत्यर्थं [2]चरतो नाम ॥ शूरयतीति शूर । वीरयतीति वीर । 'शूर वीर विक्रान्तौ' । विरुद्धान् राति हन्तीति वा वीर । 'रा दाने छेदने च' । विक्रामतीति[3] विक्रान्त । 'क्रमु पादविक्षेपे' । शूरनामानि । जयत्यरीनिति जेता । अरीन् जेतु शीलमस्येति जिष्णु । जित्वरश्च । 'जि जये' । 'जि अभिभवे' वा धातु । [4]जयैकशीलस्य नामानि ॥ ७६ ॥

[1] अत्यन्त गच्छति $F_2$ $Pt_2$ [2] गच्छत $W_2$ [3] $Pt_2$ adds स
[4] जयशीलस्य $W_2$

(पा.) [1]कामगाम्यनुगामीन[2] । यथेष्ट गामी अनुगामीन स्यात् । ह्यत्यन्तीनस्तथा भृशम् । भृश गामी अत्यन्तीन स्यात् । '[3]वोत्तिनडचिवाडु' ॥ शूरो वीरश्च विक्रान्त । शूरनामानि । 'शूरो वीरश्च विक्रान्तो भटश्चारभटो भवेत्[4]' इति पर्यायशेषे हलायुध (अ मा २ १९९) । अनुक्तम्—'स्यादशूरस्तु हतक' । शूरादन्यस्य नाम । जेता जिष्णुश्च जित्वर । जयशीलनामानि । पूर्वं तद्धम, इदानीं तच्छीले प्रत्यय ॥ ७६ ॥

[1] कामगामी $B_3$ [2] अनुकामीन $A_1$ [3] $B_3$ omits [4] मत $A_1$ $B_3$

**सांयुगीनो रणे साधुः शस्त्राजीवादयस्त्रिषु ॥ ७७ ॥**
**ध्वजिनी वाहिनी सेना पृतनानीकिनी चमूः ।**
**वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम् ॥ ७८ ॥**

(वि.) सायुगीन इति—सयुगे रणे साधु सायुगीन । युद्धप्रवीणनाम ॥ शस्त्राजीवादय सायुगीनान्ता शब्दा त्रिषु लिङ्गेषु वर्तन्ते ॥ ध्वजा अस्या सन्तीति ध्वजिनी । वाहा सन्त्यस्यामिति वाहिनी । इनेन प्रभुणा सह वर्तत इति सेना । प्रियते व्यायच्छति हन्तुमुद्युङ्क्ते परवलमिति पृतना । 'पृङ् व्यायामे[1]' । [2]अनीकोऽश्वादिसघोऽस्यामस्तीति अनीकिनी । चमति छिनत्त्यरीनिति[3] चमू । 'चमु [4]भक्षणे' । वरूथो रथगुप्तिरस्यामस्तीति वरूथिनी । वलति प्राणिति स्वपक्षोऽनेनेति वलम् । 'वल प्राणने' । सेनैव सैन्यम् । चकते हन्ति परवलमिति [5]चक्रम् । 'चक तृप्तौ प्रतिघाते च' । विभज्य न नीयत इत्यनीकम् । 'णीञ् प्रापणे' । हस्त्यादिचतुरङ्गबल समूहनामानि[6] ॥ ७७–८ ॥

[1] D₂ K₃, K₆ add व्यायाम उद्योग [2] अश्वादिक W₂ [3] पर(प्रति K₅) पक्षवल K₃ K₆ K₅ W₂ add भक्षयति [4] अदने Pt₂ [5] Pt₂ adds करोति जयमिति वा [6] K₅ omits

(पा.) सायुगीनो रणे साधु । रणकुशल सायुगीन स्यात् । अनुक्तम्— 'जितकाशी जिताहव' । विजितरणो जितकाशी स्यात् । शस्त्राजीवादयस्त्रिषु । पूर्वोक्ता शस्त्राजीवादय शब्दास्त्रिलिङ्गा । शस्त्राजीवा प्रजा । शस्त्राजीव[1] कुलम् । इत्यादि । ध्वजिनी वाहिनी—अनीकमस्त्रियाम् । सेनानामानि । 'पताकिनी च दण्डश्च' । एते द्वे च ॥ ७७–८ ॥

[1] शस्त्राजीवि A₁

व्यूहस्तु बलविन्यासो भेदा दण्डादयो युधि ।
प्रत्यासारो व्यूहपार्ष्णिः सैन्यपृष्ठे प्रतिग्रहः ॥ ७९ ॥
एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका ।

(वि.) व्यूह इति—व्यूह्यते समूहतया रच्यते व्यूह । 'ऊह वितर्क' । बलस्य सैन्यस्य विन्यास रचना । बलविन्यासप्रकारनाम ॥ बलस्य तिर्यगवस्थान दण्ड । आदिग्रहणान्मण्डलशकटमौञ्चादयो गृह्यन्ते[1] । व्यूहभेदनामानि ॥ [2]भग्नानात्मीयाननु प्राह्कतया प्रतिसरतीति प्रत्यासार । 'सृ गतौ' । व्यूहस्य पार्ष्णि पृष्ठभाग । व्यूहजघन भागस्य नाम ॥ [3]प्रतिगृह्यतेऽवष्टभ्यतेऽनेन प्रतिग्रह । 'ग्रह उपादाने' । सैन्यस्य चरम स्थाने स्थितस्य राजवतो व्यूहस्य नाम ॥ एकेभा एकरथा त्र्यश्वा पञ्चपदातिका सेना पत्तिरित्युच्यते । 'पद्यते पत्ति' । 'पद गतौ' ॥ ७९ ॥

34

[1] $F_1$, $Pt_2$ add यदाह कामन्दकः—(२०. ३५. ४२)

'तिर्यग्वृत्तिस्तु दण्डः स्याद्भोगोऽन्यावृत्तिरेव च।
मण्डलः सर्वतोवृत्तिः पृथग्वृत्तिरसंहतः ॥' इति.

[2] $W_2$ adds जयग्राहकतया. [3] प्रतिगृह्णाति $Pt_2$. [4] पतति गच्छतीति, 'पत्लृ गतौ' $K_3$, $K_6$, $Pt_2$.

(पा.) व्यूहस्तु बलविन्यासः। बलविन्यासः व्यूहः स्यात्॥ भेदा दण्डादयो युधि।

'तिर्यग्वृत्तिस्तु दण्डः स्याद् भोगोऽन्यावृत्तिरेव च।
मण्डलः[1] सर्वतोवृत्तिः पृथग्वृत्तिरसंहतः[2] ॥'

इति (कामन्दकीयनीतिसारः २०. ३५. ४२)। दण्डादयश्चत्वारो व्यूहभेदाः। चक्रगोमूत्रिकादयस्तदवान्तरभेदाः॥ प्रत्यासारो व्यूहपार्ष्णिः। व्यूहात् पश्चाद्भागनिविष्टं व्यूहान्तरं प्रत्यासारः स्यात्॥ सैन्यपृष्ठे प्रतिग्रहः। बलस्य [3]पृष्ठभागस्थराजबलं प्रतिग्रहः स्यात्। एकेभैकरथा—पञ्चपदातिका। एको गजः, एको रथः, त्रयस्तुरंगाः, पञ्चपदातयः, एते[4] सर्वे मिलित्वा पत्तिनामा सेनाभेदः॥ ७९॥

[1] मण्डलं $A_1$. [2] असंहृतिः $A_1$. [3] °भागस्थस्य राज्ञः $B_3$. [4] $B_3$ omits एते सर्वे.

**पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम्॥ ८०॥**
**सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः।**
**अनीकिनी दशानीकिन्यक्षौहिण्यथ संपदि॥ ८१॥**
**संपत्तिः श्रीश्च लक्ष्मीश्च विपत्तौ विपदापदौ।**

(वि.) पत्त्यङ्गैरिति—त्रिगुणैः सर्वैः पत्त्यङ्गैर्यथोत्तरं उत्तरोत्तरस्य आख्या नामानि क्रमाद् भवन्ति। सेनाया मुखं सेनामुखम्।

इभानां च रथानां च त्रितयं नव वाजिनः।
सेनामुखं स्मृतं यत्र भटानां दश पञ्च च॥ इति।

गुड्यते रक्ष्यतेऽस्मात् गुल्मः। 'गुड रक्षायाम्'।

नवेभाना रथाना च हयाना सप्तविंशति ।
गुल्म प्रोक्तो भटाना तु चत्वारिंशच्च पञ्च च ॥ इति ।

गण्यते सख्यायते गण । 'गण सख्याने' ।

एकाशीतितुरङ्गाणा रथेभा सप्तविंशति ।
गण प्रोक्तो भटाना तु शत त्रिंशच्च पञ्च च ॥ इति ।

वाहा अश्वा अस्या सन्तीति वाहिनी ।

एकाशीतिरथेभस्य भटा पञ्च चतु शतम् ।
चत्वारिंशत् त्रयोऽश्वाना द्विशत वाहिनी मता ॥ इति ।

पृतना पूर्वोक्ता (श्लो ७८)—

चत्वारिंशत्त्रयो नागा द्विशतं च रथास्तथा ।
पृतना सा सप्तशती हयाना विंशतिर्नव ।
सहस्र द्विशत पञ्च दश पद्मा मनीषिभि ॥

चमूरप्युक्ता (श्लो ७८)—

द्विसहस्र शत सप्ताशीतिर्वाजिकुलस्य च ।
रथाश्वेभा सप्तशती विंशतिर्नव यत्र सा ॥
त्रिसहस्र पट्शतक चत्वारिंशच्च पञ्च च ।
पदातीना चमूर्ज्ञेया सैन्यसख्याविचक्षणै ॥

अनीकिनी पूर्वोक्ता (श्लो ७८)—

षट्सहस्र पञ्चशत षष्टिरेक तु वाजिनाम् ।
द्विसहस्र शत सप्ताशीतिर्गजरथस्य च ॥
यत्रायुत नवशत त्रिंशत्पञ्चपदातय ।
अनीकिन्यभिधेया सा परिज्ञेया मनीषिभि ॥

दश अनीकिन्यो यस्या सा दशानीकिनी । सैव अक्षौहिणीत्युच्यते । अक्षाणा रथाना समूह सघोऽस्यामस्तीति अक्षौहिणी ।

प्रयुत नवसाहस्र पञ्चाशत् त्रिशत भटा ।
पञ्चाशत् षष्टिसाहस्र षट्शतीर्दश वाजिन ॥
एकविंशतिसाहस्र शतानामष्टसप्तति ।
द्विरदा स्यन्दना यत्र साक्षौहिण्युच्यते बुधै ॥ इति ।

संपद्यते जनैरिति संपत्। संपत्तिश्च[1]। श्रयत[2] इति श्रीः। 'श्रिञ् सेवायाम्'। लक्ष्यत इति लक्ष्मीः। 'लक्ष दर्शनाङ्कनयोः'। संपन्नामानि॥ विपद्यत इति विपत्। विपत्तिश्च। आपद्यते आपत्। 'पद गतौ'॥ ८०-१॥

[1] $K_2$, $W_2$ add 'पद गतौ'. [2] श्रीयते जनैः $F_2$, $Pt_2$.

(पा.) पत्त्यङ्गैस्त्रिगुणैः सर्वैः—चमूः अनीकिनी। [1]पत्त्यङ्गानि त्रिगुणानि चेद् गुल्मः। गुल्माङ्गानि त्रिगुणानि चेद् गणः। गणाङ्गानि त्रिगुणानि चेद् वाहिनी। वाहिन्यङ्गानि त्रिगुणानि चेद् पृतना। पृतनाङ्गानि त्रिगुणानि चेच्चमूः। चम्वङ्गानि त्रिगुणानि चेदनीकिनी। गोबलीवर्दन्यायाद् वाहिनीशब्दस्य सामान्यविशेषवृत्तित्वम्॥ दशानीकिन्यक्षौहिणी। तादृश्योऽनीकिन्यो दश[2] चेदक्षौहिणी स्यात्। [3]तादृगक्षौहिण्या गजाः २१८७०, रथाः २१८७०, अश्वाः ६५६१०, पदातयः १०९३५०॥ अथ संपदि—लक्ष्मीश्च। संपदो नामानि। ऐश्वर्यपर्यायवाच्या[4] अपि स्यात्। 'विभूतिर्भूतिरैश्वर्यमणिमादिकसंपदोः' इति वैजयन्ती (पृ. २८०, श्लो. ३४)॥ विपत्त्यां विपदापदौ। विपत्तिनामानि॥ ८०-१॥

[1] प्रत्यङ्गानि $A_1$. [2] $A_1$ adds स्युः. [3] तादृग्विधायाः $A_1$. [4] वाच्यमपि $A_1$.

**आयुधं तु प्रहरणं शस्त्रमस्त्रमथास्त्रियौ॥ ८२॥**
**धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्।**
**इष्वासोऽप्यथ कर्णस्य कालपृष्ठं शरासनम्॥ ८३॥**

(वि.) आयुधमिति—आयुध्यन्तेऽनेनेति आयुधम्। 'युध [1]संप्रहारे'। प्रहरत्यनेनेति प्रहरणम्। 'हृञ् हरणे'। शस्यते हिंस्यतेऽनेनेति शस्त्रम्। 'शसु हिंसायाम्'। अस्यते देहादाविति अस्त्रम्। 'असु क्षेपणे'। आयुधमात्रनामानि॥ धन्यते निषङ्गिभिरभ्यर्थ्यत इति धनुः। 'धन धान्ये'। सान्तोऽयम्। चपस्य वेणोरयं[2] विकारः चापः। धनुश्चापावस्त्रियां वर्तेते[3]। 'अश्नौघं धनुषम्' इति पुंलिङ्गप्रयोगोऽप्यस्ति। धन्यते धन्व। 'धन धान्ये[4]'। शरा अस्यन्तेऽनेनेति शरासनम्[5]। कूर्दते धन्वी अनेनेति कोदण्डम्। 'कुर्द क्रीडायाम्'। कर्मणि प्रभवतीति कार्मुकम्। इषवोऽस्यन्तेऽनेनेति इष्वासः। 'असु क्षेपणे'। धनुषो नामानि॥ कालवर्णः पृष्ठे यस्य कालपृष्ठम्। कर्णस्य[6] धनुषो नाम॥ ८२-३॥

[1] संप्रहरणे $D_2$, $K_2$. [2] वृक्षविशेषस्य वा $F_2$, $Pt_2$. [3] $K_5$, $K_8$, $W_2$ add पुंलिङ्गनपुंसकलिङ्गौ स्याताम्. [4] $Pt_2$ adds प्रार्थनायां च. [5] $K_2$, $W_2$ add 'असु क्षेपणे'. [6] कर्णशरासननाम $K_2$, $K_6$.

(पा.) आयुधं तु । आयुच्छब्दोऽप्यस्ति । 'न क्ली हेतिः शस्त्रमस्त्रमायुच्छत्तुन्न-मायुधम्' इति वैजयन्ती (पृ ११७, श्लो १५७) । प्रहरणं शस्त्रमस्त्रम् । आयुधनामानि ॥ अथास्त्रिया[1]—धनुश्चापौ[2] धन्व । नान्तं । शरासनं—कार्मुकमिष्वासोऽपि । चाप-नामानि । 'शार्ङ्गं नखमुचो[3] युष्मो [4]धर्मो ना तूणता स्त्रियाम्' इत्येतानि पञ्च च । [5]सिंहावलोकन्यायादस्त्रस्य ग्रहणम् । अथ कर्णस्य—शरासनम् । [6]कर्णो नाम राधेयः, तस्य चापं कालपृष्ठं स्यात् ॥ ८२–३ ॥

[1] अस्त्रियौ $A_1$ [2] धनुश्चापे $B_3$ [3] नखमुरा A [4] धर $A_1$ [5] अवलोकन° $A_1$ [6] कर्णस्य राधेयस्य शरासनं $B_3$

**कपिध्वजस्य गाण्डीवगाण्डिवौ पुंनपुंसकौ ।**
**कोटिरस्याटनी गोधे तले ज्याघातवारणे ॥ ८४ ॥**
**लस्तकस्तु धनुर्मध्यं मौर्वी ज्या शिञ्जिनी गुणः ।**

(वि.) कपिध्वजस्येति—गाण्डीकृतं अश्लक्ष्णीकृतं पर्वस्थानमस्येति गाण्डीवः । गाण्डिवश्च ॥ इमौ द्वौ शब्दौ पुंनपुंसकयोर्वर्तेते । अर्जुनशरासननामनी ॥ अटति धनुषो नमननालेऽधोगच्छतीति अटनी । अटनिरप्यस्ति । मौर्वीबन्धनस्थाननाम ॥ गुध्यति[1] प्रकोष्ठमिति गोधा । 'गुध परिवेष्टने' । तलति प्रतितिष्ठतीति तलम् । 'तल प्रतिष्ठायाम्' । ज्याघातवारणत्वविशेषनामनी ॥ लसति सश्लिष्यति[2] करे लस्तकः । 'लस सश्लेषण-क्रीडनयोः' । धनुर्मध्यभागनाम ॥ मूर्वाख्यतृणविशेषजत्वात् मौर्वी[3] । जिनाति कालेन शिथिलीभवतीति ज्या । 'ज्या वयोहानौ' । शिञ्जतेऽव्यक्तं स्वनतीति शिञ्जिनी । 'शिजि अव्यक्ते शब्दे' । गुण्यते आकृष्यमाणतया अभ्यस्यते गुणः । 'गुण अभ्यासे' । मौर्वीनामानि ॥ ८४ ॥

[1] $K_2$, $Pt_2$ add परिवेष्टयति [2] श्लिष्यते घनीकरेण $K_5$, $K_6$, $W_2$ [3] मूर्वा वृक्षविशेषः, तद्विकारः $F_2$, $Pt_2$

(पा.) कपिध्वजस्य—पुंनपुंसकौ[1] । कपिध्वजोऽर्जुनः[2] । तस्य चापं गाण्डीवो गाण्डिवश्च स्यात् ॥ कोटिरस्याटनिः[3] । चापस्य कोटिरटनिः स्यात् । ''विटिकोप्पु' । प्रयोगस्तु्त्वस्या अस्येति निदर्श ।

'घनकार्मुककोटिघट्यमानो हिमधामा विगलत्सुधो विरेजे ।'

इति, 'शिरसि . . अटन्या ताड्यमानस्य शंभोः' इति च प्रयोगात् ॥ गोधे तले ज्याघातवारणे। मौर्व्याघातवारणार्थं[5] मणिबन्धबद्धचर्मनामनी। गोधे तले इति रूपनामा स्यात्। स्त्रीनपुंसके स्याताम्। 'गोधा तला च न नरौ [6]हस्तघ्रज्यानिवारणे' इति वैजयन्ती (पृ. ११६, श्लो. १५५)। हस्तद्वयापेक्षया द्विवचनप्रयोगः ॥ लस्तकस्तु धनुर्मध्यम्। चापस्य[7] मध्यं लस्तकः स्यात् ॥ मौर्वी ज्या—गुणः। धनुर्गुणनामानि। नाली जीवा द्रुणा चापि। एतानि त्रीणि च ॥ ८४ ॥

[1] नपुंसके $A_1$. [2] अर्जुनस्य चापः $B_3$. [3] अटनी $B_3$. [4] $B_3$ omits.
[5] निवारण° $A_1$. [6] 'हस्तघ्नो' इति मुद्रितग्रन्थे. [7] धनुर्मध्यं $B_3$.

## स्यात्प्रत्यालीढमालीढमित्यादि स्थानपञ्चकम् ॥ ८५ ॥
## लक्षं लक्ष्यं शरव्यं च शराभ्यास उपासनम्।

(वि.) स्यादिति—प्रत्यालिह्यतेऽनेनेति प्रत्यालीढम्। आलीढं च। 'लिह आस्वादने'। आदिग्रहणेन समपादं वैशाखं मण्डलमिति त्रीणि भवन्ति। धनुःशास्त्रविहितस्थानपञ्चकस्य प्रत्येकं नामानि ॥ लक्ष्यते दृश्यते वेध्यमिति[1] लक्षं, लक्ष्यं च। 'लक्ष दर्शनाङ्कनयोः'। शरैः वीयते संवीयते शरव्यम्। 'वेञ् संवरणे'। लक्ष्यनामानि ॥ शराणाम् अभ्यासः शराभ्यासः। उपास्यन्ते पुनः पुनः शराः क्षिप्यन्तेऽत्रेति उपासनम्[2]। शराभ्यासनाम ॥ ८५ ॥

[1] वध्यं $K_2$. [2] $F_2$, $Pt_2$ add 'असु क्षेपणे'.

(पा.) स्यात् प्रत्यालीढं—स्थानपञ्चकम्। वामपादप्रसारे दक्षिणसंकोचे प्रत्यालीढम्। दक्षिणजङ्घाप्रसारे वामसंकोचे चालीढम्। तुल्यपादयुगं समपदम्। वितस्त्यन्तरेण स्थिते पादद्वये विशाखः, मण्डलाकृतिपादद्वयं मण्डलमिति धनुर्वेदोक्तानि पञ्च [1]धनुर्धरस्थानानि स्युः। अनुक्तम्—'पूर्णं ज्याकृष्टिराकर्णात्'। [2]श्रुतिपर्यन्तज्याकर्षणं पूर्णं स्यात्। 'संधानं त्विषुयोजनम्'। [2]गुणस्य वक्त्रे बाणस्य संयोजनं संधानं स्यात् ॥ लक्षं लक्ष्यं शरव्यं च। शरवेध्यनामानि। 'गुटि'। 'निमित्तं लक्षणं वेध्यम्'। एतानि त्रीणि च। शराभ्यास उपासनम्। बाणाभ्यास उपासनं स्यात्[3]। 'अभ्यासः कथ्यते योग्या श्रमस्थानं खलूरिका' इति हलायुधः (अ. मा. २. ३१५) ॥ ८५ ॥

[1] धन्विनां स्थानकानि $A_1$. [2] $B_3$ omits the sentence. [3] $A_1$ adds इति शाखपदे रामपदे योग्येऽभ्यासः कथ्यते.

**पृषत्कबाणविशिखा अजिह्मगखगाशुगाः ॥ ८६ ॥**
**कलम्बमार्गणशराः पत्री रोप इषुर्द्वयोः ।**

(वि.) पृषत्केति—रुधिरपृषद्भिः शत्रुं पर्षति वर्षतीति पृषत्कः । 'पृषु[1] सेचनहिंसाक्लेशनेषु' । बाणयति विरावयति शत्रुमिति बाणः । 'बण क्वण शब्दे' । विशीयते[2] तीक्ष्णं कर्तुं तनूक्रियते विशिखः । 'शिञ् निशातने' । अजिह्मं ऋजु यथा भवति तथा गच्छतीति अजिह्मगः । खे आकाशे गच्छतीति खगः । 'गम्लृ गतौ' । आशु गच्छतीति आशुगः । रणमध्ये कल्यते क्षिप्यते कलम्बः । 'कल किल क्षेपे' । वेध्यमेव मार्गयति अन्विष्यतीति[3] मार्गणः । 'मार्ग अन्वेषणे' । शृणातीति शरः । 'शॄ हिंसायाम्' । पत्रं पक्षोऽस्यास्तीति पत्री । नान्तः । रोपयति[4] मोहयति शत्रुमिति रोपः । 'रुप विमोहने' । इष्यति [5]वध्यं प्रति गच्छतीति इषुः । 'इष गतौ' । इषुशब्दः स्त्रीपुंलिङ्गयोर्वर्तते । बाणनामानि ॥ ८६ ॥

[1] 'पृष वृष सेचने' $K_3$, $K_5$, $K_8$.   [2] विशीर्यते $K_5$, $K_8$.   [3] अन्वेषते $D_2$.
[4] रोप्यते क्षिप्यते शत्रुदेहे, 'रुह बीजजन्मनि प्रादुर्भावे च', हकारस्य पकारादेशः $K_5$, $K_8$, $W_2$.
[5] वेध्यं $W_2$.

(पा.) पृषत्कबाणविशिखा—मार्गणशराः । तालव्यादिर्दन्त्यादिश्च भवति । 'चित्रपुङ्खः शरः सरः' इति त्रिकाण्डशेषः (२. ८. ४२७) । पत्री रोप इषुर्द्वयोः । शरनामानि ।

'कङ्कपत्रो वत्सदन्त एषणो[1] रोपणः कणः ।
कादम्बश्च विपाठश्च[2] ॥'

एतानि सप्त च ॥ ८६ ॥

[1] तोमरोम पणः कणः $A_1$.   [2] विपाटश्च $B_3$.

**प्रक्ष्वेडनास्तु नाराचाः पक्षो वाजस्त्रिपूत्तरे ॥ ८७ ॥**
**निरस्तः प्रहिते बाणे विषाक्ते दिग्धलिप्तकौ ।**

(वि.) प्रक्ष्वेडना इति—प्रक्ष्वेडन्तेऽव्यक्तं ध्वनन्तीति प्रक्ष्वेडनाः । 'ञिक्ष्विदा[1] अव्यक्ते शब्दे' । नारं नरसमूहं प्रति अञ्चन्ति गच्छन्तीति[2] नाराचाः । 'अन्चु गतिपूजनयोः' । एकवचनद्विवचने अपि स्तः । नाराचनामनी ॥ पक्षति [3]शरं गृह्णातीति पक्षः । 'पक्ष परिग्रहे' । 'वजत्यनेन बाण इति वाजः । 'वज गतौ' । बाणपक्षनामनी ॥

उत्तरे वर्तमानाः चत्वारः शब्दास्त्रिषु लिङ्गेषु वर्तन्ते। निरस्यते प्रक्षिप्यतेऽस्मात् धनुष इति निरस्तः[5]। उत्सृष्टबाणनाम॥ विषेण दिह्यते उपलिप्यते दिग्धम्। 'दिह उपचये'। विषेण लिप्यते लिप्तकः। 'लिप उपदेहे'। विषलिप्तबाणनामनी॥ ८७॥

[1] त्रिक्षिन्दा $K_2$. [2] $K_5$ adds शत्रुशीर्षादौ. [3] परिगृह्णाति बाणं $D_2$, $K_6$, $W_2$. [4] $D_2$, $W_2$ add आशु गच्छति. [5] $K_6$ adds वध्य प्रति प्रहीयते प्रक्षिप्यते प्रहितः। 'ओहाक् त्यागे'.

(पा.) प्रक्ष्वेडनास्तु नाराचाः। आयसबाणनामनी[1]॥ पक्षो वाजः। [2]सायकपुङ्खादुपरिनिबद्धगृध्रादिगरुन्नामनी॥ त्रिपूत्तरे निरस्तः—बाणे। [3]लक्ष्यं प्रति प्रयुक्तो[4] बाणो निरस्तः स्यात्॥ विषाक्ते दिग्धलिप्तकौ। विषेण[5] लिप्ते बाणे दिग्धलिप्तकशब्दौ स्याताम्। विशेषणत्वे[6] त्रिलिङ्गाः। इषुर्निरस्ता, इषुर्दिग्धा, इषुर्लिप्तेत्यादि। विशेष्यत्वे[7] पुंलिङ्गा एव। निरस्तो हन्त्येव। दिग्धो हन्त्येवेत्यादि॥ ८७॥

[1] शर° $B_3$. [2] शरगरुन्नाम्नी $B_5$. [3] लक्ष्यं $B_3$. [4] प्रयुक्ते बाणे निरस्तशब्दः स्यात् $A_1$. [5] विषानुलिप्ते $B_3$. [6] विशेषणरूपे $A_1$. [7] विशेष्यरूपे $A_1$.

**तूणोपासङ्गतूणीरनिषङ्गा इषुधिर्द्वयोः॥ ८८॥**
**तूण्यां खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः।**
**कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्॥ ८९॥**

(वि.) तूण इति—तूण्यते प्रपूर्यते शरैरिति तूणः। तूणीरश्च[1]। 'तूण [2]पूरणे'। उपासज्यते[3] तनोः पृष्ठभागे उपासङ्गः। निषङ्गश्च। 'षञ्ज सङ्गे'। इषवो धीयन्तेऽत्रेति इषुधिः। 'डुधाञ् धारणपोषणयोः'। तूणीरनामानि॥ खण्डयति शिरःकपालादिकमिति खड्गः। '[4]खडि भेदने'। दैर्घ्यात् त्रिंशदङ्गुलिपरिमाणतो[5] निष्क्रान्तो निस्त्रिंशः। चन्द्रवत् [6]हासः प्रभा यस्य चन्द्रहासः। अस्यते शत्रुशीर्षादौ[7] असिः। 'असु क्षेपणे'। रिष्यति[8] रिपुं हन्तीति रिष्टिः। 'रिष हिंसायाम्'। कुक्षौ चर्मनिर्मितकोशान्तरे भवो वर्तमानः कौक्षेयकः। मण्डलाकारोऽग्रभागोऽस्य मण्डलाग्रः। करे वलत इति करवालः। 'वल संचलने'। करपाल इति वा पाठः[9]। कल्पते हनने समर्थो भवतीति कृपाणः। 'कृपू सामर्थ्ये'। खड्गनामानि॥ ८८–९॥

[1] $W_2$ adds तूणी च. [2] प्रपूरणे $K_5$, $K_6$. [3] उपासज्यन्तेऽत्र शराः $F_2$, $Pt_2$. [4] 'खडि खण्ड छेदने' $K_5$, $K_6$. [5] अङ्गुलिभ्यः $F_2$, $Pt_2$. [6] हसति प्रकाशते $K_5$, $Pt_2$. [7] कंधरादौ $K_5$. [8] रिष्यते हिंस्यतेऽनेन $K_6$, $Pt_2$. [9] $Pt_2$ adds करं पालयति.

(पा.) तूणोपसङ्गतूणीर—तूण्याम्। व्यासाङ्गीकारात् तूणाशब्द स्त्रीलिङ्ग। 'आपाढा धिपणा तूणा' इति चन्द्रगोमिलिङ्गानुशासनम्। समासाङ्गीकारात् तूणशब्द पुलिङ्ग। 'तूणो निषङ्गस्तूणीर' इति अमरमालापुस्काण्ड। इषुधिर्द्वयो। धियति-धातुसिद्ध इषुधिशब्द उभयलिङ्ग। दधातिधातुसिद्ध पुलिङ्ग एव॥ तूण्याम्। तूणीशब्दस्य सप्तमी। शरधिनामानि। '[1]वत्तलिके'॥ खड्गे तु—असिरिष्टय। 'तस्मान्निरपतद् भूरि शिलाश्लेष्टिमुद्गरम्' इति भट्टिप्रयोगादजादिश्च स्यात् (भ का १७ ४५)। कौक्षेयको—करवाल कृपाणवत्। खड्गनामानि।

> 'असिताङ्गो विशसनस्तरवारिश्च [2]हुकृत।
> धर्मपाल [3] कठारश्च [4]शास्ता भद्रसुतोऽपि च॥'

एतानि च॥ ८८–९॥

[1] B₃ omits [2] शिवकर B₃ [3] करवाल A₁ [4] वाल A

**त्सरुः खड्गादिमुष्टौ स्यान्मेखला तन्निबन्धनम्।**
**फलकोऽस्त्री फलं चर्म सग्राहो मुष्टिरस्य यः॥ ९०॥**
**द्रुघणे मुद्गरघनौ स्यादीली करवालिका।**

(वि.) त्सरुरिति—मुष्टिना त्सरतीति त्सरु। 'त्सर छद्मगतौ'। खड्गादि-मुष्टिनाम॥ मीयते मुष्टेरुपरि क्षिप्यते मेखला। 'डुमिञ् प्रक्षेपणे'। त्सरुबन्धननाम॥ फलति परप्रहारैर्विशीर्यत इति [1]फलक। फल च। 'ञिफला विशरणे'। चर्मणा सबद्धत्वात् चर्म। परप्रहारपरिहारार्थं खड्गिभिर्धार्यमाणस्य [2]चर्मनद्धफलकस्य[3] नामानि॥ सगृह्यते पाणिनेति सग्राह। फलकमुष्टिनाम॥ द्रो वृक्षस्य घन साराश द्रुघण[4]। द्रु [5]वृक्षादिक हन्यतेऽनेनेति वा। 'हन हिंसागत्यो'। हन्यमानस्य[6] मुद हर्षं गिरति नाशयतीति मुद्गर। 'गॄ निगरणे'। हन्यतेऽनेनेति घन। मुद्गराद्यायुध-नामानि॥ ईड्यत इति ईली। 'ईड स्तुतौ'। स्वल्पकरवालसाम्यात् करवालिका। एकधारकरवालनामनी॥ ९०॥

[1] फलक K₅, W₂ [2] °बन्धन° W₂ [3] D₂, W₂ add निस्त्रिंशस्य
[4] द्रुघन W₂ [5] ललाटादिक K₃ K₆ [6] K₅ adds रिपो

(पा.) त्सरु खड्गादिमुष्टौ स्यात्। खड्गादीना मुष्टि त्सरु स्यात्। मेखला तन्निबन्धनम्। खड्गादीना निबन्धन मेखला स्यात्। '[1]परशु'। अनुक्तम्—'प्रत्याकार-

त्सपिधानम्’। खड्गादीनामाच्छादकं प्रत्याकारं स्यात्। ‘चोर’। फलको—चर्म। चर्मनामानि। ‘हरिगे’। चर्मशब्दः केषाञ्चिन्मते सामान्यवचनः। ‘खेटकं फलकं चर्म’ इति हलायुधः (अ० मा २ ३०५)। केषाञ्चिन्मते विशेषवचनः। ‘फलं चर्ममयं चर्म फलकं खेटकं समम्’ इति वैजयन्ती (पृ १२०, श्लो १९७)। [3]अङ्कनकटिके विशेषवचने स्याताम्। ‘कटिका स्यात् सूत्रमयी वेत्रादिकृतमण्डनम्। [3]अङ्कनम्।’ इति। ‘केडेमु’॥ समहो मुष्टिरस्य य। फलकस्य मुष्टिः संग्रहः स्यात्। द्रुघणे मुद्गरघनौ। आयसगदानामानि। ‘इनुपदुड्डु’॥ दारवी गदा भुशुण्डी स्यात्। ‘भुसुण्डी[4] स्याद् दारुमयी वृत्ताय कीलसंचिता’ इति वैजयन्ती (पृ ११८, श्लो० १७०)॥ स्यादीली करवालिका। स्वल्पकरवालनामनी। ‘करासूरिकत्ति’॥ ९०॥

[1] B₃ omits [2] °वचनानि A₁ [3] अङ्काण° A₁, B₃ [4] भुशुण्ठीति मुद्रितग्रन्थे, भुशुण्डी B₃

## भिन्दिपालः सृगस्तुल्यौ परिघः परिघातनः॥ ९१॥
## द्वयोः कुठारः स्वधितिः परशुश्च परश्वधः।

(वि.) भिन्दिपाल इति—भिन्दत[1] [2]पालयतीति भिन्दिपालः। ‘पाल रक्षणे’। भिण्डिपाल इति वा पाठः। भिन्दिवाल इति पाठे भिन्दन् वलते संवृणोतीति भिन्दिवालः। ‘वल संवरणे’। सृज्यते रिपुं प्रति सृगः। ‘सृज विसर्गे’। हस्तक्षिप्यलगुडविशेषनामनी॥ परितो [3]हन्यतेऽनेनेति परिघः। ‘हन हिंसागत्योः’। परितो घातयत्यनेनेति परिघातनः। परिघाख्यायुधनामनी॥ कुठान् वृक्षान् हन्तृत्वेन इयर्तीति कुठारः। ‘ऋ गतौ’। स्वयं धियति छेद्यमाकाशे धारयतीति स्वधितिः। ‘धि धारणे’। परान् शृणातीति परशुः। ‘शॄ हिंसायाम्’। परान् श्यति नाशयतीति परश्वधः। ‘शो तनूकरणे’। परशुनामानि॥ ९१॥

[1] भिन्दन् W₂ [2] K₂ K₆ add स्वधारक [3] परितो हन्ति K₂

(पा.) भिन्दिपाल[1] सृगस्तुल्यौ। [2]द्विनचक्रसड्गनामनी। परिघ परिघातन। परिघाख्यायुधविशेषनामनी। ‘[3]लोडि’। द्वयो कुठार—परश्वध। परशुनामानि। कुठार स्त्रीपुंसलिङ्गक। स्वधित्यादय पुंलिङ्गा[4]। ‘गण्ड गोड्डलि’॥ ९१॥

[1] भिण्डिपाल A₁, भिन्दिवाल B₃ [2] लगुडविशेषनामनी B₃ [3] B₃ omits
[4] B₃ adds कुठारनामानि

**स्याच्छस्त्री चासिपुत्री च छुरिका चासिधेनुका ॥ ९२ ॥**
**वा पुंसि शल्यं शङ्कुर्ना सर्वला तोमरोऽस्त्रियाम् ।**

(टि.) स्यादिति—शस्यतेऽनया शस्त्री । 'शसु हिंसायाम्' । सूक्ष्मत्वात् असेः खड्गस्य पुत्री असिपुत्री । छुरति [1]छेदयतीति छुरिका । 'छुर छेदने' । असि धेनुरिव असिधेनुका । नीचखड्गनामानि ॥ शलत्याशुगच्छत्यन्तरिति शल्यम् । 'शल आशुगमने' । शङ्कते शत्रुरस्मादिति शङ्कुः । 'शकि शङ्कायाम्' । [2]दारुकृततीक्ष्णाग्रशूलनामनी ॥ सर्वं प्रतिपक्षं हन्तृत्वेन लाति स्वीकरोतीति सर्वला । 'ला आदाने' । शर्वलेति वा पाठः । स्तोम्यते प्रशस्यते इति तोमरम्[3] । ताम्यतेऽनेनेति वा । 'तमु ग्लानौ' । अयोऽग्रस्य वेणुदण्डस्य नामनी ॥ ९२ ॥

[1] K₅, W₂ add छिनत्ति  [2] सूक्ष्म° K₃  [3] K₂, K₃ K₆ add 'स्तोम श्लाघायाम्

(पा.) स्याच्छस्त्री—असिधेनुका । छुरिकानामानि । '[1]चूरकत्ति' । दीर्घा चेत् पत्रलता स्यात् । 'सातिदीर्घा [2]पत्रलता' इति वैजयन्ती (पृ ११७, श्लो १६४) ॥ वा पुंसि शल्यं शङ्कुर्ना । शल्यनामनी । क्षुद्रकुन्तनामनी इति केचित् ॥ [3]सर्वला तोमरोऽस्त्रियाम् । शक्तिनामनी ॥ ९२ ॥

[1] 'चूरिकत्ति A₁  [2] पत्रफलेति मुद्रितग्रन्थे  [3] B₁ adds शर्वलेति पाठान्तरम्.

**प्रासस्तु कुन्तः कोणस्तु स्त्रियः पाल्यश्रिकोटयः ॥ ९३ ॥**
**सर्वाभिसारः सर्वौघः सर्वसंनहनार्थकः ।**

(टि.) प्रास इति—प्रास्यते क्षिप्यते शत्रु[1] प्रति प्रासः । 'असु क्षेपणे' । कुणत्यनेनाहत इति कुन्तः । 'कुण[2] शब्दोपकरणयोः' । स्वल्पतोमरनामनी ॥ कुणत्युपकरोतीति कोणः । पालयति आहकर्मिति पालिः । 'पाल रक्षणे' । [3]अश्नुतेऽग्रपर्यन्तम्[4] अश्रिः । 'अशू व्याप्तौ' । कोटयते रिपुं प्रपातयतीति कोटिः । 'कुट [5]छेदने' । शस्त्रधारानामानि ॥ सर्वेण सैन्येनाभिसरणं सर्वाभिसारः । 'सृ गतौ' । सर्वेषां सैनिकानाम् ओघः सर्वौघः । सर्वं संनह्यतेऽत्र सर्वसंनहनम्[6] । 'णह बन्धने' । सनद्धसैन्यनामानि ॥ ९३ ॥

[1] शत्रुं F₂, Pt₂  [2] 'कुण शब्दे' K₃ K₆ Pt₂  [3] अश्नाति, 'अश भोजने' Pt₂  [4] K₂ adds आदिमारभ्य°  [5] प्रपातने K₃, K₆, प्रतापने K₄. [6] सर्वेषां संनहनम् F₂, Pt₂

(पा.) प्रासस्तु कुन्त । कुन्तायुधनामनी । 'कोंतमु[1]' ॥ कोणस्तु—पाल्य-श्रिकोटय । धाराया नामानि । चतुरश्रः पट्ट । चतुरश्रिर्मा भूदिति [2]नित्यसमासान्त-विधिप्रयोजनम् । नो चेदश्रशब्दात् तत्सिद्धि[3] । 'अणिरश्रिस्तथा कोटिरश्र कोणश्च कथ्यते' इति हलायुधः (अ. मा. ४ ४२) ॥ सर्वाभिसार—सनहनार्थक । [4]सर्वाभिसारसर्वौघशब्दौ सर्वसेनासनाहवाचकौ ॥ ९३ ॥

[1] $B_3$ omits  [2] $B_3$ omits नित्य  [3] न चाश्रिशब्दात् $B_3$  [4] सर्वसं-नहननामनी $B_3$

**लोहाभिसारोऽस्त्रभृतां राज्ञां नीराजनाविधिः ॥ ९४ ॥**
**यत् सेनयाभिगमनमरौ तदभिषेणनम् ।**

(वि.) लोहेति—लोह शस्त्रम् अभिसार्यतेऽस्मिन्निति लोहाभिसारः । शस्त्रभृता राज्ञा युद्धनिर्गमनाय यस्मिन् दिने शस्त्राणि नि सार्यन्ते तस्य नाम ॥ लोहाभिहार इति पाठे शस्त्राणा तत्समये पूजाविधिनाम ॥ सेनया सह आभिमुख्येनारि[1] प्रति [2]यानम् अभिषेणनम् । रिपुमनादत्य आभिमुख्येन अभिगमननाम ॥ ९४ ॥

[1] शत्रून् $F_3$, $Pt_2$  [2] गमनम् $K_2$, $W_2$, $Pt_2$

(पा.) लोहाभिसारो—नीराजनाविधि । धृतास्त्राणा राज्ञा[1] मङ्गलनीराज-[2]नाविधिर्लोहाभिसार स्यात् ॥ यत्सेनयाभिगमन—अभिषेणनम् । सेनया[3] समरीन् प्रति गमनमभिषेणन स्यात् ॥ ९४ ॥

[1] नृपाणा $A_1$  [2] $B_3$ omits विधि .  [3] सनयाभियान $B_3$

**यात्रा व्रज्याभिनिर्याणं प्रस्थानं गमनं गमः ॥ ९५ ॥**
**स्यादासारः प्रसरणं प्रचक्रं चलितार्थकम् ।**

(वि.) यात्रेति—यान्त्यस्यामिति यात्रा[1] । 'या प्रापणे' । व्रजन[2] व्रज्या । 'व्रज गतौ' । अभिनिर्यान्ति अभिनिर्याणम्[3] । प्रस्थीयते प्रस्थानम् । 'ष्ठा गतिनिवृत्तौ' । गम्यते गमनम् । गमश्च । 'गम्लृ गतौ' । यात्रानामानि ॥ [4]आसरन्त्यस्मिन्निति आसार । प्रसरन्त्यनेनेति प्रसरणम् । 'सृ गतौ' । सैन्यस्य सर्वतो व्याप्तिनामनी ॥ प्रचलित चक्र सैन्य प्रचक्रम्[5] । प्रचलितसैन्यनाम ॥ ९५ ॥

[1] $K_1$ adds यान यात्रेति वा  [2] व्रज्यते $K_3$, $K_4$, $W_2$.  [3] आभिमुख्येन निर्गम $F_3$, $Pt_2$  [4] आ समन्तात् $F_3$, $Pt_2$  [5] प्रकर्षेण आक्रामति $Pt_2$.

(पा.) यात्रा व्रज्या—गमनं गमः। प्रस्थाननामानि ॥ स्यादासारः प्रसरणम्। प्रसरणीशब्दोऽप्यस्ति। 'आसारस्तु प्रसरणी प्रचक्रं चलितार्थकम्' इति वैजयन्ती (पृ. १२०, श्लो. १०१)। [1]विसरणनामनी ॥ प्रचक्रं चलितार्थकम्। चलितार्थे प्रचक्रशब्दः स्यात्।

'[2]रभसप्रचक्रकुरुचक्रदुन्दुभिध्वनिभिर्जनस्य [3]वधिरीकृतश्रुतेः।'

इति माघः (शिशु. १३. ३) ॥ ९५ ॥

[1] प्रसरण° $B_3$.　　[2] रमसप्रवृत्तेति मुद्रितग्रन्थे.　　[3] वधिरे कृते $A_1$.

**अहितान् प्रत्यभीतस्य रणे यानमभिक्रमः ॥ ९६ ॥**
**वैतालिका बोधकराश्चाक्रिका घाण्टिकार्थकाः।**

(वि.) अहितानिति—आभिमुख्येन क्रमणम् अभिक्रमः। 'क्रमु पादविक्षेपे'। रिपुं प्रत्यभीतस्य गमननाम ॥ [1]विविधास्तालाः प्रयोजनमेषां ते वैतालिकाः। राज्ञां बोधं कुर्वन्तीति बोधकराः। [2]नृपबोधनार्थपाठकनामनी ॥ चक्रेण समूहेन चरन्तीति[3] चाक्रिकाः। घण्टानादेन जीवन्तीति घाण्टिकाः। धनार्थं ये घण्टानादं कुर्वन्ति तेषां नामनी ॥ ९६ ॥

[1] विगतस्तालो वितालः $K_5$, $K_6$　　[2] राज्ञः प्रबोधसमये घण्टावादिकनाम $W_2$.
[3] जीवन्ति $K_5$, $K_6$.

(पा.) अहितान् प्रति—यानमभिक्रम। युद्धे शत्रूनभिमुखीकृत्याभीतस्य[1] यानमभिक्रमः स्यात्। अनुक्रम्—'सौप्तिकश्च प्रपातश्चावस्कन्दश्च समं त्रयम्'। सुप्ताद्युपरिपातनामानि। 'गग्गोलु' ॥ वैतालिका बोधकराः। वैतालिकनामनी ॥ चाक्रिका घाण्टिकार्थकाः। [2]घाण्टिकनामनी ॥ ९६ ॥

[1] अभीकस्य $B_3$.　　[2] स्तावक° $B_3$; घण्टावादिक° $A_1$.

**स्युर्मागधास्तु मगधा वन्दिनः स्तुतिपाठकाः ॥ ९७ ॥**
**संशप्तकास्तु समयात् संग्रामादनिवर्तिनः।**

(वि.) स्युरिति—मगध्यन्ति [1]स्तुवन्ति मागधाः। मगधाश्च। 'मगध स्तुतौ'। वन्दन्ते [2]नमस्कुर्वन्ति [स्तोत्रपूर्वकमिति] वन्दिनः। 'वदि अभिवादनस्तुत्योः'। स्तुतिं स्तोत्रं

पठन्तीति स्तुतिपाठका । 'पठ व्यक्तायां वाचि' । स्तुतिपाठकनामानि ॥ सशप्त सशपथ युध्यन्ते युद्धं कुर्वन्ति सशप्तका । समयं कृत्वा सग्रामाद् ये न निवर्तन्ते तेषां नाम ॥ ९७ ॥

[1] याच-ते $K_3$, $K_6$ adds राजान [2] स्तुवन्ति, तच्छीला $W_2$

(पा.) स्युर्मागधास्तु मगधा । वशक्रमागतस्तावकनामनी[1] । वन्दिन स्तुतिपाठका । स्तुतिपाठकनामनी । चत्वार एकार्था इति केचित् । सशप्तकास्तु—सग्रामादनिवर्तिन । [2]अनिवर्तिसमयाद् युध्यमाना सशप्तका स्यु । केषांचिन्मते 'शप आक्रोशे' इति धातुसिद्धत्वात् तालव्यद्वितीय । 'षप समवाये' इति धातुसिद्धत्वात् केषांचिन्मते[4] दन्त्यद्वितीय ॥ ९७ ॥

[1] $A_1$ adds शब्दी द्वौ चण्डपुत्रप्रभेदौ [2] आनिवृत्य° $B_3$ [3] 'शप शापे' $A_1$
[4] $B_3$ adds ससप्तक इति

**रेणुर्द्वयोः स्त्रियां धूलिः पांसुर्ना न द्वयो रजः ॥ ९८ ॥**
**चूर्णे क्षोदः समुत्पिञ्जपिञ्जलौ भृशमाकुले ।**

(वि.) रेणुरिति—रियति[1] वायुवशात्[2] गच्छतीति रेणु । 'रि गतौ' । रेणुशब्द द्वयो स्त्रीपुलिङ्गयोर्वर्तते । धूयते कम्प्यते वायुनेति धूलि । 'धूञ् कम्पने' । अयं स्त्रीलिङ्ग । पसति[3] दृष्टिमिति पांसु । 'पसि नाशने' । अयं पुलिङ्ग । पाशुरिति वा पाठ । रज्यते वस्त्रादिकमनेनेति रज । 'रञ्ज रागे' । दिशो रञ्जयतीति वा । सान्त नपुसकम् । धूलिनामानि ॥ चूर्ण्यत इति चूर्ण । 'चूर्ण प्रेरणे सकोचने च' । क्षुद्यत सपिष्यते क्षोद । 'क्षुदिर् सपेषणे' । शर्करादिसहितरजोनामनी ॥ [4]समुत्पिञ्ज्यते भृश समुत्पिञ्ज । पिञ्जलश्च । 'पिजि हिंसायाम्' । भृशमाकुलस्य सेनादेर्नामनी ॥ ९८ ॥

[1] रिणाति, 'री गतिरेषणयो' $K_3$ [2] वशेन $K_3$ [3] पाशयति $K_2$ $K_4$, पशयति $W_2$ [4] समुत्पिञ्जयति $K_5$, $K_6$

(पा.) रेणुर्द्वयो—[1]पांसुर्ना न द्वयो रज । अकारान्तरजशब्दोऽप्यस्ति । 'शिरोवाचि शिरोऽदन्तो रजोवाचि रजस्तथा' इति विद्वत्कण्ठभूषणाभिधानम् । 'अर्धा पादरजोपमा गिरिनदीनेगोपम' योजनम्' इति पुरातनप्रयोग । धूलिनामानि ॥ [3]चूर्णं क्षोद । क्षुण्णमृत्नामनी । 'पोडि[4]' ॥ समुत्पिञ्ज—भृशमाकुले । अत्यन्तव्याकुलनामनी । 'मिगलासदडि[4]' ॥ ९८ ॥

[1] पांशु $B_3$ [2] वर्गावर्ग $A_1$ [3] चूर्णे $B_1$ [4] $B_1$ omits

**पताका वैजयन्ती स्यात् केतनं ध्वजमस्त्रियाम् ॥ ९९ ॥**
**सा वीराशंसनं युद्धभूमिर्यातिभयप्रदा ।**

(वि.) पताकेति—[1]पततीति पताका । 'पत्लृ गतौ' । विजयतां संबन्धिनी[2] वैजयन्ती । 'जी[3] अभिभवे' । केत्यते ज्ञायतेऽनेनायमसाविति केतनम् । 'कित ज्ञाने' । ध्वजतीति[4] ध्वजः । 'ध्वज गतौ' । ध्वजनामानि[5] ॥ वीरा भटा [6]आशंस्यन्तेऽत्रेति वीराशंसनम् । 'शसि इच्छायाम्', 'शसु हिंसायाम्', इति वा धातुः । अतिभय-प्रदयुद्धभूमिकानाम ॥ ९९ ॥

[1] $K_5$ adds वायुना कम्पते. [2] विजेतुरियं $D_2$, $K_6$. [3] 'ओविजी भयचलनयोः' $K_6$. [4] ध्वजयति $K_6$. [5] केतन° $D_2$, $K_5$. [6] आशसन्ते $K_2$, $K_4$; आशस्यन्ते $K_5$.

(पा.) पताका वैजयन्ती—ध्वजमस्त्रियाम् । ध्वजनामानि । पटाका नाम देवालयः । 'पटाकावास उच्छ्रितः' इति उणादिवृत्तिकारः[1] । कदली गजवैजयन्ती स्यात् । '[2]कदली गजवैजयन्त्यां च' इति हलायुधः (अ. मा. ५. १७) ॥ अनुक्तम्—'अस्योच्चूडावचूडौ द्वावूर्ध्वाधोमुखकूर्चकौ' । ध्वजस्योर्ध्वमुखकूर्चक उच्चूडः स्यात् अधोमुखकूर्चकोऽवचूडः स्यात्[3] ॥ सा वीराशंसनं—अतिभयप्रदा । अतिभीतिप्रदा[4] समितिर्वीराशंसनं स्यात् । युद्धभूमिमात्रं चेत् पङ्कम् ।

'रुधिरारुणं कुसुमबाणचितं मदनस्य पङ्कमिव[5] ज्वलति ।'

इति राघवपाण्डवीयम् (द्विसं. १२. १७) ॥ ९९ ॥

[1] वृत्तिः $B_3$. [2] कदली स्याद्वैजयन्ती गजस्य $B_3$. [3] $A_1$ adds उपर्यधश्च लम्बन-नामनी इत्यर्थः. [4] प्रदात्री $A_1$. [5] मिव° $A_1$, इति $B_3$.

**अहं पूर्वमहं पूर्वमित्यहंपूर्विका स्त्रियाम् ॥ १०० ॥**
**आहोपुरुषिका दर्पाद् या स्यात् संभावनात्मनि ।**
**अहमहमिका तु सा स्यात् परस्परं यो भवत्यहंकारः॥१०१॥**

(वि.) अहमिति—अहं पूर्वमहं पूर्वमित्यनेकोक्तिरत्रास्तीति अहंपूर्विका । अहमन्येभ्यः पूर्वमिमां क्रियां करोमीति या धावनक्रिया तस्या नाम ॥ अहोपुरुषस्य

भावः आहोपुरुषिका । दर्पादात्मनि अहं पुरुष इति या संभावना तस्या नाम ॥ अहं ²समर्थोऽहं समर्थ इति वचनमत्रास्तीति अहमहमिका । परस्परं वीराणां योऽहंकारः तस्य नाम ॥ १०१-२ ॥

¹ अहो पुरुषोऽस्मीति दर्पेण यस्य पुरुषस्य भावः F₁, Pr₁. ² अहं प्रथम इत्यहं-कारोऽस्यास्तीति D₂

(पा.) अहं पूर्वमहं—स्त्रियाम् । अहं पूर्वमहं पूर्वमित्यन्योन्याभिलषणम् अहंपूर्विका स्यात् ॥ आहोपुरुषिका—संभावनात्मनि । दर्पाद् यदात्मगौरवं तदाहोपुरुषिका स्यात् । दर्पादिश्च ¹स्यात् । 'पुरमथितुराहोपुरुषिका' इति ²शंकराचार्यवचनम् (सौ. ल. ७) 'आहोपुरुषिकां पश्य मम सद्रत्नकान्तिभिः' इति भट्टिः (भ. का. ५. २७) ॥ अहमहमिका—अभ्यहंकारः । अन्योन्याहंकारकरणम् अहमहमिका स्यात् ॥ १०१-२ ॥

¹ अ॰ दिशि B₂. ² B₂ omits this.

द्रविणं तरः सहोबलशौर्याणि स्थाम शुष्मं च ।
शक्तिः पराक्रमः प्राणो विक्रमस्त्वतिशक्तिता ॥ १०२ ॥
वीरपाणं तु यत्पानं वृत्ते भाविनि वा रणे ।

अनुक्रम्—'वीराणां यद्रणे नृत्तं तस्मिन् वीरजयन्तिका'। रणे[3] वीराणां नृत्तं वीरजयन्तिका स्यात्॥ १०२॥

[1] वीरपाण $B_3$ [2] $B_3$ omits [3] युद्धे $A_1$

युद्धमायोधनं जन्यं प्रधनं प्रविदारणम्॥ १०३॥
मृधमास्कन्दनं संख्यं समीकं सांपरायिकम्।
अस्त्रियां समरानीकरणाः कलहविग्रहौ॥ १०४॥
संप्रहाराभिसंपातकलिसंस्फोटसंयुगाः।
अभ्यामर्दसमाघातसंग्रामाभ्यागमाहवाः॥ १०५॥
समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः।

(वि.) युद्धमिति—युध्यत [1]इति युद्धम्। 'युध संप्रहारे'। आभिमुख्येन योधनं [2]आयोधनम्। मत्सरादिना जन्यत इति जन्यम्। 'जनी प्रादुर्भावे'। प्रधनन्ति म्रन्यन्तेति प्रधनम्। 'धन धान्ये'। प्रकर्षेण विदारणमत्रास्तीति [3]प्रविदारणम्। म्रियन्तेऽस्मिन्निति मृधम्। 'मृङ् प्राणत्यागे'। आस्कन्द्यते[4] इत्यास्कन्दनम्। 'स्कन्दिर् गतिशोषणयोः'। संख्यायन्ते पण्डादयः सुभटैरिति संख्यम्। 'चक्षिङ् व्यक्तायां वाचि'। उपसर्गवशात् अयं धातुः वर्जनार्थः। समीयते संगच्छतेऽत्रेति समीकम्। 'इण गतौ'। संपरायः शत्रुमरणमत्र प्रयोजनं सांपरायिकम्[5]। मरेण सह वर्तत इति समरः। समियर्ति शत्रुणा संगच्छत इति वा। 'ऋ गतौ'। विभज्य न नीयन्तेऽत्रेति अनीकः। रणन्ति भेर्यादयोऽत्रेति रणः। 'रण शब्दे'। कलं विकलं हन्त्यत्रेति कलहः। 'हन हिंसागत्योः'। विगृह्णन्ति विग्रहः[6]। संप्रहरन्त्यन्योन्यमत्र संप्रहारः। अभि संपतन्ति वीरा अत्रेति अभिसंपातः। 'पत्लृ गतौ'। कल्यन्त बाणा अत्रेति कलिः। 'कल क्षिल क्षेपे'। संस्फुटति मस्तकादिरत्रेति संस्फोटः। 'स्फुटिर् विशरणे'। संगता रथयुगा अत्रेति संयुगः। अभ्यामृद्नन्ति अन्योन्यमत्रेति अभ्यामर्दः। 'मृद क्षोदे'। समाघ्नन्त्यत्रेति समाघातः। 'हन हिंसागत्योः'। संग्रामयन्ति परस्परं प्रहरन्त्यत्रेति संग्रामः। 'संग्राम युद्धे'। आहूयन्ते वीरा वीरैरत्रेति आहवः। 'ह्वेञ् स्पर्धायां शब्दे च'। समुदायन्ते सकुलयुद्धदशायां मिलन्त्यत्रेति समुदायः। 'अय पय गतौ'। संयतन्ते नितान्तं प्रयत्नं कुर्वन्तीति संयत्। 'यती प्रयत्ने'। समीयन्ते संगच्छन्तेऽत्रेति समितिः। 'इण् गतौ'। समित्। अजन्ति क्षिपन्ति शस्त्राण्यत्रेति आजिः। 'अज गतिक्षेपणयोः'। युध्यन्ते[7] परस्परमिति युत्। 'युध संप्रहारे'। युद्धनामानि॥ १०३–५॥

[1] W₂ adds अत्र [2] आयुध्यत इति F₂, Pt₂. [3] प्रविदणन्ति K₂, W₂ [4] D₂, K₅, K₆ add मवलैर्दुर्वला.. [5] सपरायन्तेऽस्मिन्निति साम्परायिक, 'अय गतौ' F₂, Pt₂ [6] विरुद्ध गृह्णन्त्यत्र K₂, Pt₂. [7] युद्धशब्दवत् युधूशब्दव्युत्पत्ति. K₅, K₆

(पा.) युद्धमायोधनं जन्य—आजिसमिद्युधः । युद्धनामानि ॥ १०३–५ ॥

**नियुद्धं बाहुयुद्धं स्यात् तुमुलं रणसंकुले ॥ १०६ ॥**
**क्ष्वेडा तु सिंहनादः स्यात् करिणां घटना घटा ।**

(वि.) नियुद्धमिति—शस्त्रादिकमनादेयमिति[1] नियत युद्ध नियुद्धम् । बाहुयुद्ध-नाम ॥ ताम्यन्ति सैनिका[2] अत्रेति तुमुलम् । 'तमु ग्लानौ' । रणसकुलनाम[3] ॥ क्ष्वेड्यत इति क्ष्वेडा । 'क्ष्विदृ अव्यक्ते शब्दे' । सिंहाना नाद इव नाद सिंहनाद । योधाना सिंहनादनाम ॥ घाटयन्ति करिणोऽत्रेति घटा[4] । 'घट सघाते' । गजसमूह-नाम ॥ १०६ ॥

[1] न धार्यमिति नियमोपेत K₅, K₆, W₂ [2] सेनाङ्गानि D₂, K₆ [3] D₂ adds रणस्य सकुल, Pt₂ adds 'तुमुल व्याकुले रणे' इति त्रिकाण्डशेष [4] घट्यते करिभिरिति, घटन्ते करिण इति वा K₅

(पा.) नियुद्धं बाहुयुद्ध स्यात् । बाहुयुद्ध [1]नियुद्ध स्यात् । तुमुल रणसकुले । सकीर्णयुद्ध तुमुल स्यात् । 'एडयोभ्व' ॥ अनुक्तम्—'[2]चण्डाल शूरयोर्युद्धम्' । शूरयोरुभयोर्युद्ध चण्डाल [2] स्यात् । 'वैरारोहो महारण' । महायुद्ध वैरारोह स्यात् । क्ष्वेडा तु सिंहनाद. स्यात् । [3]कुञ्जरादिभयार्थकवीरारावनाम ॥ करिणा घटना घटा । गजाना सघटना घटा स्यात् ॥ १०६ ॥

[1] बाहुयुद्धनामनी B₃ [2] चण्डाल A₁ [3] सिन्धुरसीकरणार्थ क्रियमाणविरावनाम A₁

**क्रन्दनं योधसंरावो बृंहितं करिगर्जितम् ॥ १०७ ॥**
**विस्फारो धनुषः स्वानः पटहाडम्बरौ समौ ।**

(वि.) क्रन्दनमिति—क्रन्दन्ति आक्रोशन्त्यत्रेति क्रन्दनम् । 'क्रदि आह्वाने रोदने च' । योद्धृसरावनाम ॥ बृंहन्ति गजा अत्रेति बृंहितम् । 'बृहि शब्दे' । करिगर्जितनाम ॥ विस्फरति[1] शत्रुहृदयमनेनेति विस्फार. । 'स्फर स्फुरणे' । धनु-

स्याननाम ॥ वाद्यमुखचर्मपटो[2] हन्यतेऽत्रेति पटह । 'हन हिंसागत्यो' । आडम्बयति शत्रुहृदयमिति आडम्बर । 'डब डिनि क्षेपे' । [3]युद्धपटहस्य नामनी ॥ १०७ ॥

[1] विस्फुरति $K_5$, $W_2$　[2] मुखगत° $W_2$　[3] °आडम्बर° $K_5$, $K_6$

(पा.) क्रन्दन योधसराव । भटाना सराव क्रन्दन स्यात् । बृहित करि-गर्जितम् । गजाना [1]गर्जित बृहित स्यात् । विस्फारो धनुष स्वान । चापटकारो विस्फार स्यात्[2] । 'स्फुरतिस्फुलत्योर्निर्निविभ्य' (८. ३. ७६) इति वा पत्वम् ॥ पटहाडम्बरौ समौ । [3]युद्धवाद्यध्वनिनामनी । 'पटहाडम्बरौ युद्धे [4]मङ्गले प्रियनादिका' इति वैजयन्ती (पृ. १४७, श्लो. १३८) । युद्धारम्भवाद्यध्वनिरर्धतूर स्यात् । 'अर्धतूरो रणोद्यमे' इति वैजयन्ती (पृ. १४७, श्लो. १३९) ॥ १०७ ॥

[1] गर्जन $A_1$, गर्न $B_2$　[2] $A_1$ adds स्फुरतिस्फुलत्योघञि' (६ १ ४७) इत्यात्वम्　[3] युद्धमध्य° $A_1$　[4] वाद्यध्वान $A_1$

**प्रसभ तु बलात्कारो हठोऽथ स्खलित छलम् ॥ १०८ ॥**
**अजन्य क्लीब उत्पात उपसर्गः सम त्रयम् ।**

(वि.) प्रसभमिति—प्रगता सभा युक्तायुक्तचिन्ता[1] अत्रेति प्रसभम् । बलात् करोतीति बलात्कार । हठतीति हठ । 'हठ [2]प्लुतिशठत्वयो' । बलात्कारनामानि ॥ स्खलन स्खलितम् । 'स्खल सचलने' । छयति छिनत्ति [3]कार्यमिति छलम् । 'छो छेदने' । युद्धधर्मविच्छेदननामनी ॥ जन्यत इति जन्यम् । न जन्यम् अजन्यम् । न जने साधु इति वा । उत्पतति अकस्मादायातीति उत्पात । उपसृज्यते दैवेनेति उपसर्ग । 'सृज विसर्ग' । उत्पातनामानि ॥ १०८ ॥

[1] विचार $F_2$ $Pt_2$　[2] बलात्कारे $K_4$　[3] धर्मानुसारमार्गं $K_5$

(पा.) [1]प्रसभस्तु—हठ । अत्यन्तनिर्बन्धनामानि । 'क्लीबे तु प्रसभ हठ' इति गो(पो)पालित । 'हतोऽपि[2] चित्ते प्रसभ सुभाषिते' इत्यलिङ्गे राघवपाण्डवीयम्[3] (द्विस १ ६) ॥ अथ स्खलित छलम् । [4]युद्धमर्यादाविच्छेदननामनी ॥ अजन्य—सम त्रयम् । प्राणिना शुभाशुभसूचकभूतविकारनामानि ॥ १०८ ॥

[1] प्रसभ तु $B_2$　[2] हतऽपि $A_1$ $B_2$　[3] °पाण्डवीयकार $A_1$　[4] पश्चादागतनामानि $A_1$

**मूर्च्छा तु कश्मलं मोहोऽप्यवमर्दस्तु पीडनम् ॥ १०९ ॥**
**अभ्यवस्कन्दनं त्वभ्यासादनं विजयो जयः ।**

(वि.) मूर्च्छेति—मूर्च्छत्यनया मूर्च्छा । 'मुर्च्छा मोहसमुच्छ्राययो.' । कशति[1] तनूकरोतीन्द्रियप्रचारमिति कश्मलम् । 'कश गतिशातनयोः' । मुह्यत्यनेनेति मोह । 'मुह वैचित्ये' । मूर्च्छानामानि ॥ अवमृद्यत इति अवमर्द । 'मृद [2]क्षोदे' । पीड्यत[3] इति पीडनम् । 'पीड अवगाहने' । [4]परपीडानामानि ॥ अभ्यवस्कन्द्यतेऽनेनेति अभ्यवस्कन्दनम् । 'स्कन्दिर् गतिशोषणयो' । अभ्यासाद्यतेऽनेनेति अभ्यासादनम् । 'पदॢ विशरणगत्यवसादनेषु' । बलादाक्रमणनामनी ॥ विशेषेण जय विजय[5] । जयतीति जय । 'जि जये' । विजयनामनी ॥ १०९ ॥

[1] $K_5$ adds शातयति [2] मर्दने $K_6$ [3] $K_5$, $K_6$ add अनेन. [4] $W_2$ omits पर [5] विजयतेऽनेन $K_6$

(पा.) मूर्च्छा तु कश्मल मोहोऽपि । मूर्च्छानामानि ॥ अवमर्दस्तु पीडनम् । पीडननाम ॥ अभ्यवस्कन्दन त्वभ्यासादनम् । [1]शत्रुकृतपुरादिनिर्बन्धननामनी । '[2]मुट्टिडे' ॥ विजयो जय । जयनामनी ॥ १०९ ॥

[1] $B_3$ omits शत्रुकृत° [2] 'मुत्तिगे' $A_1$

**वैरशुद्धिः प्रतीकारो वैरनिर्यातन च सा ॥ ११० ॥**
**प्रद्रावोद्द्रावसंद्रावसंदावा विद्रवो द्रवः ।**
**अपक्रमोऽपयान च रणे भङ्गः पराजयः ॥ १११ ॥**

(वि.) वैरशुद्धिरिति—वैरस्य शुद्धि वैरशुद्धि । प्रतिकरण प्रतीकार । [1]वैर [2]निर्यात्यतेऽनेनेति वैरनिर्यातनम् । 'या प्रापणे' । प्रत्यपकारनामानि ॥ प्रद्रवण प्रद्राव. । उद्द्राव । सद्रावः । सदाव. । विद्रव । द्रवश्च । 'द्रु गतौ,' 'दु गतौ च' । अपक्रमणम् अपगमनम् अपक्रम । अपयात्यनेनेति अपयानम् । 'क्रमु पादविक्षेपे' । 'या प्रापणे' । रणे पलायननामानि ॥ पराजयतेऽनेनेति पराजय.[3] । 'जि अभिभवे' । रणे शत्रुकृतभङ्गनाम ॥ ११०–११ ॥

[1] वैरस्य निर्यातनं $F_2$, $Pt_2$ [2] $W_2$ adds निष्कास्यते [3] पराजयनं $Pt_2$

(पा.) [1]वैरशुद्धि —वैरनिर्यातन च सा। वैरनिर्यापणनामानि ॥ 'पगसाधि-चुट[2]' ॥ प्रद्रावोद्द्राव—अपक्रमोऽपयान च। रणात्पलायननामानि। विप्रयाण पलायनम्। इत्येते द्वे च॥ रणे भङ्ग पराजय। युद्धे यो भङ्ग स पराजय. स्यात्॥ ११०—११॥

[1] °शुद्ध $A_1$ [2] $B_3$ omits

परजितपराभूतौ त्रिषु नष्टतिरोहितौ।
प्रमापणं निबर्हण निकारणं निशारणम्॥ ११२॥
प्रवासनं परासन निषूदन निर्हिंसनम्।
निर्वासन सञ्ज्ञपनं निर्ग्रन्थनमपासनम्॥ ११३॥
निस्तर्हणं निहनन क्षणन परिवर्जनम्।
निर्वापणं विशसन मारणं प्रतिघातनम्॥ ११४॥
उद्वासनप्रमथनक्रथनोज्जासनानि च।
आलम्भपिञ्जविशरघातोन्माथवधा अपि॥ ११५॥

(नि.) पराजित इति—[1]पराजयं प्राप्त पराजित। पराभूयते शत्रुणा तिरस्क्रियते स्म पराभूत। शत्रुणा रणे भग्नस्य नामनी॥ नश्यते स्म, अदर्शन प्राप्तो नष्ट। 'णश अदर्शने'। तिरोधीयतेऽन्तर्धीयते स्म तिरोहित। 'डुधाञ् धारणपोषणयो'। तिरोऽदर्शन हित गतो वा। 'हि गतौ'। रणात् यत्र कुत्र वा पलायितस्य नामनी॥ प्रमीयते प्रमापणम्[2]। 'मीञ् हिंसायाम्'। नितरा बर्हण निबर्हणम्। 'बर्ह परिभाषण-हिंसादानेषु'। नितरा क्रियत इति निकारणम्। 'कृञ् हिंसायाम्'। नितरा शीर्यत इति निशारणम्। 'शृ हिंसायाम्'। प्रवास्यते प्रवासनम्[3]। उद्वास्यते उद्वासनम्। 'वस स्नेहमोहच्छेदापहरणेषु'। परास्यते परासनम्। 'असु क्षेपणे'। निषूद्यते निषूदनम्। 'षूद क्षरणे हिंसाया च'। नितरा हिंस्यते निर्हिंसनम्। 'हिसि हिंसायाम्'। निर्वाप्यते निर्वापणम्। 'ओवै शोषणे'। सञ्ज्ञायते सञ्ज्ञपनम्। 'ज्ञा अवबोधने'। निर्ग्रथ्यते निर्ग्रन्थनम्। 'ग्रथि कौटिल्ये'। अपास्यतेऽपासनम्। 'असु क्षेपणे'। निस्तृह्यते निस्तर्हणम्। 'तृहि हिंसायाम्'। नितरा हन्यते निहननम्। 'हन हिंसागत्यो'। क्षण्यते क्षणनम्। 'क्षणु हिंसायाम्'। परिवर्ज्यते[4] परिवर्जनम्। 'वृजी वर्जने'। प्रवासन-शब्दवत् निर्वासनशब्द। विशस्यते विशसनम्। 'शसु हिंसायाम्'। मार्यते मारणम्।

'मृङ् प्राणत्यागे' । प्रतिहन्यते प्रतिघातनम् । 'हन हिंसागत्योः' । उद्वास्यते उद्वासनम् । 'वस स्नेहमोहच्छेदापहरणेषु' । प्रमथ्यते प्रमथनम् । 'मथे [5]हिंसायाम्' । क्रथ्यते क्रथनम् । 'क्रथ हिंसायाम्' । उज्जास्यते उज्जासनम् । 'जसु हिंसायाम्' । आलभ्यते आलम्भः । 'डुलभष् प्राप्तौ' । पिञ्जनं पिञ्जः । 'पिजि[6] हिंसायाम्' । विशरणं विशरः । 'शॄ हिंसायाम्' । हननं घातः । उन्मथनम् उन्माथः । 'मथे हिंसायाम्' । हन्यते वधः । 'हन हिंसागत्योः' । अत्र केचन धातवः उपसर्गवशात् हिंसार्थाः । वधनामानि ॥ ११२–१५ ॥

[1] पराजीयते स्म $F_2$, $Pt_2$. [2] प्रकर्षेण मापन $D_2$, $Pt_2$. [3] $W_2$ adds निर्वासनं च. [4] $K_5$, $W_2$ add शरीरात्. [5] 'मथे विलोडने' $K_3$, $K_6$. [6] हिंसायलादाननिकेतेषु $K_5$, $W_2$.

(पा.) पराजितपराभूतौ । पराजयवतो नामनी ॥ त्रिषु नष्टतिरोहितौ । विलीनपुरुषनामनी । प्रमापणं निबर्हणं—उन्माथवधा अपि । मारणनामानि ॥ ११२–१५ ॥

**स्यात् पञ्चता कालधर्मो दिष्टान्तः प्रलयोऽत्ययः ।**
**अन्तो नाशो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम् ॥ ११६ ॥**

(वि.) स्यादिति—पञ्चानां [1]धातूनां भावः पञ्चता । कालस्य[2] धर्मः कालधर्मः । दिष्टस्य प्रारब्धकर्मणोऽन्तो दिष्टान्तः । प्रलीयतेऽत्रेति प्रलयः । 'ली श्लेषणे' । अत्येति गच्छतीति अत्ययः । 'इण् गतौ' । अन्यते वध्यते [3]अन्तः । 'अति बन्धने' । नश्यति [4]नाशः । 'णश अदर्शने' । मरणं मृत्युः । म्रियतेऽनेनेति मरणम् । 'मृङ् प्राणत्यागे' । निवृत्तो धनसंबन्धोऽत्र निधनम् । प्राणत्यागस्य नामानि ॥ ११६ ॥

[1] भूताना $W_2$, $Pt_2$. [2] $F_2$, $Pt_2$ add यमस्य. [3] एति $K_6$. [4] नश्यते $Pt_2$.

(पा.) स्यात् पञ्चता—निधनोऽस्त्रियाम् । मरणनामानि[1] । '[2]हिंसा संस्था दीर्घनिद्रा भूमिलाभो निमीलनम्' । एतानि पञ्च च ॥ ११६ ॥

[1] $B_3$ adds प्रलयोऽस्त्री. [2] $B_3$ adds अरतिः काल इति पाठान्तरात्; एते द्वे च.

**परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः ।**
**मृतप्रमीतौ त्रिष्वेते चिता चित्या चितिः स्त्रियाम् ॥११७॥**
**कबन्धोऽस्त्री क्रियायुक्तमपमूर्धकलेवरम् ।**

(वि.) परासुरिति—परागता असव प्राणा यस्य परासु । [1]प्राप्त पञ्चत्व येन प्राप्तपञ्चत्व । परा दशामित परेत । 'इण् गतौ'। प्रकृष्टा दशामित प्रेत । सतिष्ठते [2]स्म सस्थित । 'ष्ठा गतिनिवृत्तौ'। म्रियते स्म मृत । 'मृङ् प्राणत्यागे'। प्रमीयते स्म प्रमीत । 'मीङ् हिंसायाम्'। मृतस्य नामानि ॥ एते पूर्वोक्ता परास्वादय प्रमीतान्ता [4] त्रिषु लिङ्गेषु वर्तन्ते ॥ चीयन्ते एकत्र काष्ठानि पुञ्जीक्रियन्ते चिता। चित्या। चितिश्च। 'चिञ् चयने'। प्रेतदहनार्थं वह्निरुपकल्पितस्य काष्ठचयस्य नामानि ॥ [5]क शिरोऽस्य बध्यतेऽत्रेति कबन्ध । 'बन्ध बन्धने'। नृत्तक्रियावत शिरोविहीनस्य शरीरस्य नाम ॥ ११७ ॥

[1] प्राप्त पञ्चभूतभाव $K_6$ $W_2$　[2] अत्र $K_6$ अस्मिन् $W_2$　[3] प्रमीनाति स्म $F_2$ $Pt_2$　[4] $W_2$ adds शब्दा　[5] विरुद्धलक्षणया कस्य शिरसो बन्धोऽस्यास्तीति $K_5$ $K_6$ $W_2$

(पा.) परासुप्राप्तपञ्चत्व—मृतप्रमीतौ त्रिष्वेते । मृतनामानि । चिता चित्या चिति स्त्रियाम्। चितानामानि। अनुक्तम्—'कट शवरथ [1]खाटि'। चित्युपरि-कटाद्यास्तरणनामानि ॥ कबन्धोऽस्त्री—अपमूर्धकलेवरम्। प्राय सहस्रनाशे समरमुखे नृत्यति कबन्ध इति क्रियायुक्तमपगतशिर [2] शरीर कबन्ध स्यात् । अपगतशिर.[2] शरीरमात्रमपि कबन्ध स्यात् । 'रुण्डोऽशिरा कबन्धोऽस्त्री' इति वैजयन्ती (पृ १२२, श्लो २१६) ॥ ११७ ॥

[1] खाट $B_3$　[2] गतशिर $B_3$

**श्मशान स्यात् पितृवन कुणपः शवमस्त्रियाम् ॥ ११८ ॥**
**प्रग्रहोपग्रहौ बन्द्यां कारा स्याद् बन्धनालये ।**

(वि.) श्मशानमिति—शवाना शयन श्मशानम्। पृषोदरादि । पितॄन् प्रेतान् वनति सभजतीति पितृवनम् । 'वन षण सभक्तौ'। प्रेतदाहप्रदेशनामनी ॥ [1]कुण शब्दम् आश्रयत्वेन पातीति कुणप । 'पा रक्षणे'। शवति यात्यस्मात् जीव इति शवम्। 'शव गतौ'। मृतशरीरनामनी ॥ प्रगृह्यते बलादिना गृध्यते[2] प्रग्रह उपग्रहश्च । 'ग्रह उपादाने' । वदति कारागृहे तिष्ठतीति वन्दी। 'वद स्थैर्ये'।

कारागृहस्थनामानि ॥ कीर्यते क्षिप्यते राजपुत्रादिरत्रेति कारा । 'कॄ विक्षेपे' । बन्धनालयनाम ॥ ११८ ॥

[1] कुणति, 'कुण शब्दोपकरणयोः' $D_2$, $K_3$ [2] बध्यते $D_2$, $K_5$, $W_2$.

(पा.) श्मशानं स्यात् पितृवनम् । प्रेतवासस्थलनामनी । शवानां शयनं श्मशानमिति व्युत्पत्त्या[1] श्मशानशब्दो द्वितालव्यः । 'वनं पुरगामिश्रका . . .' (८. ४. ४) इत्यादिसूत्रनियमेन पितृवनशब्दस्तवर्गान्त्यः । कुणपः शवमस्त्रियाम् । मृतशरीरनामनी ॥ प्रग्रहोपग्रहौ[2] बन्द्याम् । बन्दिनामानि । 'चेर' । कारा स्याद्बन्धनालये । बन्दिगृहनाम । कारा सिंहावलोकनन्यायेन[3] बन्धननामापि स्यात् ।

'कारा[4] बन्धनगेहे स्यात् कारा बन्धनमुच्यते ।'

इति शाश्वतः (पृ. २४, श्लो. २७२) ॥ ११८ ॥

[1] व्युत्पन्नत्वात् $A_1$. [2] अवग्रहः $A_1$. [3] अवलोकनकमेण $A_1$. [4] 'कारा बन्धनशालायां कारा बन्धनमात्रके' इति मुद्रितग्रन्थे.

**पुंसि भूम्न्यसवः प्राणाश्चैव जीवोऽसुधारणम् ॥ ११९ ॥**
**आयुर्जीवितकालो ना जीवातुर्जीवनौषधम् ।**

## इति क्षत्रियवर्गः

(वि.) पुंसीति—अस्यन्ते[1] शरीरादाविति असवः । 'असु क्षेपणे' । प्राणिति[2] लोकोऽमीभिरिति प्राणाः । 'अन प्राणने' । असुप्राणशब्दौ पुंसि भूम्नि च वर्तेते । प्राणनामनी ॥ जीवत्यनेनेति जीवः । 'जीव प्राणधारणे' । असूनां धारणम् असुधारणम् । प्राणधारणनाम ॥ [3]एतीत्यायुः । 'इण् गतौ' । सान्तोऽयं नपुंसकलिङ्गः । जीवितकालनाम ॥ जीवत्यनेनेति जीवातुः । जीवनस्य औषधम् । जीवनौषधनाम[4] ॥ ११९ ॥

इति श्रीलिङ्गयसूरिविरचितायाम् अमरकोशपदविवृतौ क्षत्रियवर्गः

[1] $F_2$, $Pt_2$ add क्षिप्यन्ते. [2] प्राणन्ति $Pt_2$. [3] एष्यति $K_3$, $K_6$. [4] जीवयतीति जीवनम् । जीवनं च तदौषधं च $Pt_2$.

(पा) पुसि भून्नि—प्राणाश्चैवम्। प्राणनामनी। 'धारणमु'। भूमवचन कैश्चिदनङ्गीकृतम्। 'जनादसो समानत'। इति नरोदय (२ ३६) 'निघ्नु (?) प्रिय प्राणमिवाभिमानम्' इति चन्द्रकाव्यम्। 'हृषीकमिन्द्रिय प्राण प्राणा ना भून्नि चासव'। 'प्राणस्तु प्रणवे जीवे जीविते परमात्मनि' इति वैजयन्ती[1] (पृ ९९, श्लो २०३, पृ २१७, श्लो ३८)॥ जीवोऽसुधारण—जीवितकाल। प्राणधारणनामानि। ना जीवातुर्जीवनौषधम्। जीवनौषध जीवातु स्यात् ॥ ११९॥

इति [2]श्रीवत्सनृसिंहसूरिसुतमल्लिनाथसुधीविरचितेऽमरपदपारिजाते क्षत्रियवर्ग

[1] प्राणो जीवो जीवाया कथ्यते $A_1$ जीव प्राणे त्रयी ना तु जन्तौ $B_3$ [2] नरसिंह° $A_1$

---

## ९. वैश्यवर्गः

**ऊरव्या ऊरुजा अर्या वैश्या भूमिस्पृशो विशः।**
**आजीवो जीविका वार्ता वृत्तिर्वर्तनजीवने ॥ १ ॥**

(वि.) अथ क्रमप्राप्त वैश्यवर्गमुपक्रमते ऊरव्या इति—ब्रह्मण [1]ऊरुस्थाने भवा ऊरव्या। [2]ऊरुजाश्च। अरणीयाधिकारित्वात् भक्षकैरधिगम्यन्ते अर्या [3]। 'ऋ गतौ'। विशोऽपत्यानि वैश्या [4]। [5]भूमिं स्पृशन्ति लाङ्गलादिना भूमिस्पृश [6]। विशन्ति आपणादिक विश। 'विश प्रवेशने'। वैश्यनामानि ॥ आजीवन्त्यनेनेति आजीव। जीविका च। 'जीव प्राणधारणे'। वृत्ति प्राणधारणा, सा अस्यामस्तीति वार्ता। वर्ततेऽनयेति वृत्ति। वर्तन च। 'वृतु वर्तने'। जीवन्त्यनेनेति जीवनम्। जीवन नामानि ॥ १ ॥

[1] ऊर्वो $Pt_2$ [2] ऊर्वोजाता $D_2$ $Pt_2$ [3] अरणीया $Pt_2$ [4] विश एव $Pt_2$ [5] $Pt_2$ adds क्षेत्रसंस्काराय [6] $K_6$ adds स्पृश स्पर्शने [7] आजीवन्ति प्राणिन $D_2$ $Pt_2$

(पा.) ऊरव्या ऊरुजा—विश । वेश्यनामानि ॥ आजीवो जीविका—जीवने । जीवननामानि । वृत्तिशब्दसाहचर्याद् वर्तनशब्द स्त्रीलिङ्गोऽपि स्यात् । 'वर्तनी वृत्तिमार्गयो ' इति वैजयन्ती (पृ २४८, श्लो २१)॥ १॥

**स्त्रियां कृषिः पाशुपाल्य वाणिज्य चेति वृत्तयः ।**
**सेवा श्ववृत्तिरनृत कृषिरुञ्छशिलं त्वृतम् ॥ २ ॥**

(वि.) स्त्रियामिति—लाङ्गलादिना कर्षण कृषि । 'कृष विलेखने' । पशून् पालयतीति पशुपाल , तस्य कर्म पाशुपाल्यम्[1] । वणिजो भाव [2] वाणिज्यम् । इति शब्दात् कुसीदविजययज्ञप्रतिग्रहसेवाशुश्रूषादयो वृत्तयो भवन्ति । शुनो वर्तनमिव [3]कष्टत्वात् श्ववृत्ति । सेवन सेवा । 'षेवृ सेवने' । सेवावृत्तिनाम ॥ अनृतवत् पापहेतुत्वाद् अनृतम् । कृषिवृत्तिनाम ॥ उलूखलसमीपे पतत्तण्डुलकणानादाय जीवनम् उञ्छम् । उञ्छीयते उञ्छम् । 'उञ्छि उञ्छे' । शिलन शिलम् । 'शिल उञ्छे' । क्षेत्रे त्यक्तकणिकानादाय जीवन शिलम् । उञ्छ च शिल च उञ्छशिलम् । तदेव ऋतमित्युच्यते । अर्यते स्तूयत इति ऋतम् । 'ऋ शब्दे' । उञ्छवृत्तिनामानि ॥ २ ॥

[1] पशुपालस्य भाव $K_2$ $K_5$ $K_6$ [2] कर्म $Pt_2$ [3] $F_2$ $Pt_3$ add दैन्यादिना अपकृष्टत्वात्

(पा.) स्त्रिया कृषि —वृत्तय । इतिशब्द प्रकारवचन । कृषिपाशुपाल्य वाणिज्यानीत्येवप्रकारा वृत्तय ॥ सेवा श्ववृत्ति । सेवा परप्रेष्यता । सा गर्हितत्वात् श्ववृत्ति । 'शुनो[1] वृत्ति स्मृता सेवा गर्हिता सा द्विजन्मनाम्' इति मनु (म स्मृ ४ ६)॥ अनृत कृषि [2]। सा कृषि कृषिकर्म अनृत स्यात् । उञ्छशिल त्वृतम् । उञ्छो [3]धान्याश आदानमिति लूनकेदारावशिष्टधान्यस्यादानम् । 'उञ्छ कणिशाद्यर्जन [4]शिलम्' इति लूनकेदारावशिष्टकणिशार्जनम् ।

'शिल किमनल भवेदनलमौदर बाधितु
पय प्रसृतिपूरक किमु न धारक सारसम् ।
अयत्नमलमल्लक पथि पटच्चर कच्चर
[5]भजन्ति हि सुधाबुधा अहह कुक्षित कुक्षित ॥' (वै प श्लो• १)

तदुभय मिलित चेदुञ्छशिल शिलोञ्छोऽपि स्यात् । 'यन्मविधाजीविलङ्ने शिलोञ्छमिव कुर्वते कवय' इति । एवविधा वृत्ति ऋत स्यात् ॥ २ ॥

[1] सेवा श्ववृत्तिराख्याता तस्मात्ता परिवर्जयेत्' इति मुद्रितग्रन्थे (पृ ११३) [2] $B_3$ adds प्रमृत कृषि । कृषि प्रमृत स्यात् [3] उञ्छ कणश स्वीकार $B_3$ [4] शिल केदारसस्यकणिशाद्यर्जनम् $A_1$ $B_3$ adds 'उञ्छ कणश आदान कणिशाद्यर्जन शिलम्'
[5] मजन्ति हि मुधा बुधा° $B_3$

## द्वे याचितायाचितयोर्यथासंख्यं मृतामृते ।
## सत्यानृतं वणिग्भावः स्याहृणं पर्युदञ्चनम् ॥ ३ ॥
## उद्धारोऽर्थप्रयोगस्तु कुसीदं वृद्धिजीविका ।

(वि.) द्वे इति—याच्ञादशायामतिकष्टत्वात् मरणसमदुःखतया [1]मृतवद्भवतीति मृतम् । याच्ञावृत्तिनाम ॥ याच्ञाया अभावाद् अमृतम् । अयाचितवृत्तिनाम ॥ सत्यं चानृतं च विद्येते अस्मिन्निति [2]सत्यानृतम् । वाणिज्यवृत्तिनाम ॥ कालान्तरेऽर्यते प्राप्यत इति ऋणम् । 'ऋ[3] गतिप्रापणयोः' । पर्युदञ्च्यते परिप्राप्यत इति पर्युदञ्चनम् । 'अञ्चु गतिपूजनयोः' । उद्ध्रियते गृह्यत इति उद्धारः । 'हृञ् हरणे' । ऋणनामानि ॥ अर्थस्य प्रयोगोऽर्थप्रयोगः । कुत्सितं सीदति कदाचिन्मूलधननाशे कुसीदम् । 'षद्लृ विशरणगत्यवसादनेषु' । वृद्धिरूपा जीविका वृद्धिजीविका । वृद्धिजीविकानामानि ॥ ३ ॥

[1] निर्जीववत् $K_2$ $K_6$ $W_3$ [2] किंचित् सत्यं किंचिदसत्यं $F_2$ $Pt_2$ [3] ऋ गतौ' या धातु $K_3$

(पा.) द्वे याचिता—मृतामृते । याचितायाचितयोरिति भावे निष्ठा । याच्ञावृत्ति मृतं स्यात् । अयाच्ञावृत्तिरमृतं स्यात् । अनुक्तम्—'पाशुपाल्यं जीववृत्तिः' । पाशुपाल्यं गवाश्वादिपोषणम् । तदेव[1] जीववृत्तिः स्यात् ॥ सत्यानृतं वणिग्भावः । वणिग्भावो वाणिज्यम् । तत् सत्यानृतं स्यात् । स्याहृणं पर्युदञ्चनम् । ऋणनामनी । 'अस्तु[1]' ॥ उद्धारः । [2]अवृद्धिकमृणमुद्धारः स्यात् । 'तदवृद्धिकमुद्धारः कुसीदं तु सवृद्धिकम्' इति वैजयन्ती (पृ. १२३, श्लो. ४) ॥ अर्थप्रयोगस्तु—वृद्धिजीविका । वृद्धेर्नामानि[3] । 'वर्द्धिः' । सा च [4]कालिकाद्यनेकभेदभिन्ना ।

> '[5]सा[5] कायिकान्वहं देया प्रतिमासं तु कालिका ।
> कारिका[6] तु स्वयं दृष्टा चक्रवृद्धिस्तु[7] वृद्धिजा ॥'

वृद्ध्या जीविका वृद्धिजीविका । सा अर्थप्रयोगः कुसीदं च स्यात् ॥ ३ ॥

[1] $B_3$ omits [2] अवृद्धिकमृणं $A_1$ [3] नामधेयानि $A_1$ [4] साकालिका $A_1$
[5] साकालिका $A_1$, $B_3$ [6] कारिता $B_3$ [7] चक्रवृत्ति $B_3$

याच्ञयाप्तं याचितकं निमयादापमित्यकम् ॥ ४ ॥
उत्तमर्णाधमर्णौ द्वौ प्रयोक्तृग्राहकौ क्रमात् ।
कुसीदको वार्धुषिको वृद्ध्याजीवश्च वार्धुपिः ॥ ५ ॥

(वि.) याच्ञयेति—याच्ञया[1] आप्त याचितकम् । याच्ञालब्धद्रव्यनाम ॥ अपमीयते दीयते अपमित्यकम् । तदेव आपमित्यकम् । 'मेङ् प्रणिदाने'। निमयात् अर्थविनिमयात् प्राप्यद्रव्यनाम ॥ ऋणे [2]उत्कृष्ट उत्तमर्ण । वृद्ध्यर्थं धनप्रयोक्तृनाम । [3]ऋणेऽवम अधमर्ण । धनग्राहकनाम ॥ कुसीदम् अल्पवृद्धया गृहीत [4]बहुवृद्ध्यर्थं प्रयच्छतीति कुसीदक । वृद्धया जीवतीति वार्धुपिक । वार्धुपिश्च । गर्ह्यवृद्धिमाजीवतीति वृद्ध्याजीव । अल्पवृद्धया अन्यहस्तादादाय अन्यस्य बहुवृद्ध्यर्थं प्रयोक्तुर्नामानि ॥ ४–५ ॥

[1] याचितेन $D_2$ [2] उत्तम $K_r$ [3] ऋणेन $W_2$ [4] $D_2$, $K_2$, $W_2$ add धन

(पा.) याच्ञयाप्त याचितकम् । निमयेन विना याच्ञयानीत याचितक स्यात् । '[1]कुदुवलेकतेर्बिनदि'। निमयादापमित्यकम् । निमयादानीतम् आपमित्यक [2]स्यात् । 'कुदवयिध्रि तेम्बिनदि[1]' । उत्तमर्णाधमर्णौ—क्रमात् । प्रदाता प्रयोक्ता, प्रहीता ग्राहक [1] । तौ द्वौ यथाक्रमम् उत्तमर्ण [3] अधमर्णश्चेत्युच्येते ॥ कुसीदको वार्धुपिको—वार्धुपि । वृद्धया जीवतो नामानि[4] । कुसीदश्च द्वैगुणिको वार्धुषी च प्रयोक्तरि । एतानि चत्वारि च ॥ ४–५ ॥

[1] $B_3$ omits [2] $A_1$ adds स्ववस्तुन उत्तमर्णसमीपे निक्षेपो निमय [3] $B_3$ adds च [4] $B_3$ adds 'वृद्धेर्वृधुषिभावो वक्तव्य' (वा ४ ४ ३०) इति वार्धुषिक

क्षेत्राजीवः कर्षकश्च कृषकश्च कृषीवलः ।
क्षेत्रं व्रैहेयशालेयं व्रीहिशाल्युद्भवोचितम् ॥ ६ ॥

(वि.) क्षेत्राजीव इति—क्षेत्रेणाजीवतीति क्षेत्राजीव । 'जीव प्राणधारणे'। [1]कर्षतीति कर्षक । 'कृष विलेखने' । कृषकश्च[2] । कृषिरस्यास्तीति कृषीवल । कृषिक-नामानि ॥ व्रीह्युद्भवोचित क्षेत्र व्रैहेयम् । शाल्युद्भवोचित क्षेत्र शालेयम् ॥ ६ ॥

[1] कृषिं करोति $D_2$ $K_6$ $W_2$ [2] कृषिक $K_5$, $K_6$

(पा.) क्षेत्राजीवः कर्षकश्च—कृषीवलः। [1]कृष्या जीवतो नामानि। क्षेत्रं व्रैहेय-शालेयं—उद्भवोचितम्। व्रीहीणां शालीनां च भवने क्षेत्रे[2] व्रैहेयशालेये स्याताम्॥ ६॥

[1] $A_1$ adds वृत्तिभेदानुक्त्वा वैश्यवृत्तिभूतकृषिपाशुपाल्यवाणिज्यानि वक्ष्यति [2] भवन-क्षेत्रे $A_1$.

**यव्यं यवक्यं षष्टिक्यं यवादिभवनं हि तत्।**
**तिल्यतैलीनवन्माषोमाणुभङ्गाद् द्विरूपता॥ ७॥**

(वि.) यव्यमिति—[1]यवोद्भवोचितं क्षेत्रं यव्यम्। यवकाः शालिविशेषाः। तद्भवनोचितं क्षेत्रं यवक्यम्। षष्टिकानां[2] भवनोचितं क्षेत्रं षष्टिक्यम्। तिलभवनोचितं क्षेत्रं तिल्यम्। तैलीनं च। माषभवनोचितं क्षेत्रं माष्यम्। माषीणं च। उमानां अतसीनां भवनोचितं क्षेत्रम् उम्य। औमीनं च। अणूनां[3] भवनोचितं क्षेत्रम् अणव्यम्। आणवीनं च। [4]भङ्गानां भवनोचितं क्षेत्रं भङ्ग्यम्। भाङ्गीन च॥ ७॥

[1] यवाना $F_2$, $Pt_2$. [2] $D_2$ adds षष्टिरात्रेण पक्वाना [3] $D_2$ adds सर्षपादीना
[4] तृणविशेषाणा $D_2$

(पा.) यव्यं यवक्यं—भवनं हि यत्। यवयवकषष्टि[1]कभवनक्षेत्राणि यव्यय-वक्यषष्टिक्यानि स्युः॥ तिल्यतैलीनवत्—द्विरूपता। तिलानां भवने क्षेत्रे तिल्यतैलीने स्याताम्। [2]तद्वत् माषाणां भवनक्षेत्रे माष्यमाषीणे स्याताम्। उमानां भवनक्षेत्रे उम्यौमीने[3], अणूनां भवनक्षेत्रेऽणव्याणवीने, भङ्गानां भवनक्षेत्रे भङ्ग्यभाङ्गीने च स्याताम्॥ ७॥

[1] षष्टिकाना. [2] $A_1$ adds द्विरूपतापि, तद्वन्माषादीनामपि द्विरूपता स्यात् $B_3$.
[3] $A_1$ adds स्याताम्.

**मौद्गीनकौद्रवीणादि शेषधान्योद्भवक्षमम्।**
**(शाकक्षेत्रादिके शाकशाकटं शाकशाकिनम्)**
**बीजाकृतं तूप्तकृष्टं सीत्यं कृष्टं च हल्यवत्॥ ८॥**

(वि.) मौद्गीनमिति—मुद्गभवनोचितं क्षेत्रं मौद्गीनम्, कोद्रवभवनोचितं क्षेत्रं कौद्रवीणम्। आदिग्रहणात् मसूरभवनोचितं क्षेत्रं मासूरीणमित्यादयो गृह्यन्ते। एतानि

व्रैहेयादीनि कौद्रवीणान्तानि प्रत्येक तत्तद्धान्योद्भवोचितक्षेत्रनामानि । तिल्यमाष्योम्याण व्यभङ्गयाना तु प्रत्येक द्वे द्वे नामनी भवत । शाकभवनोचित क्षेत्र शाकशाकट शाकशाकिनमिति च द्वे [1]नामनी भवत ॥ बीजावापेन सहैव क्रियते कृष्यते बीजाकृतम् । उप्तेन बीजेन सह कृष्टम् उप्तकृष्टम् । आदौ उप्त पश्चात् कृष्टमिति वा । बीजावापेन सह कृष्यमाणक्षेत्रनामनी ॥ सीतया[2] सगत सीत्यम् । हलेन कृष्यते कृष्टम् । हलेन कृष्ट हल्यम् । हललिखितक्षेत्रनामानि ॥ ८ ॥

[1] शाकभवनोचितक्षेत्रनामनी $W_2$ [2] $Pt_2$ adds लाङ्गलपद्धति

(पा.) मौद्गीनकौद्रवीणादि—क्षमम् । मुद्गकोद्रवादिशेषधान्याना भवनक्षेत्राणा मौद्गीनकौद्रवीणादीनि स्यु । अनुक्तम्—' इक्षुशाकटमिक्षूणा क्षेत्रमिक्षुवण वनम् ' । इक्षूणा क्षेत्रमिक्षुशाकट स्यात् । इक्षूणा वनमिक्षुवण स्यात् । ' प्रनिरन्त शरेक्षुप्लक्षाम्र[1] . . . ' (८ ४ ५) इत्यादिना णत्वम् ॥ बीजाकृत तूप्तकृष्टम् । पूर्वं बीजैरुप्त [2]पश्चाल्लाङ्गलेन कृष्ट क्षेत्र बीजाकृत स्यात् । ' विन्तिप्राशिनदि ' । सीत्य कृष्ट च हल्यवत् । हलेनैकवार कृष्टक्षेत्रनामानि ॥ ८ ॥

[1] $A_1$ adds °कार्ष्यखदिरपीयूक्षाभ्योऽपीति [2] $A_1$ adds पश्चाद्विशाल्यमुसनिरीपयुक्त°

**त्रिगुणाकृत तृतीयाकृत त्रिहल्य त्रिसीत्यमपि तस्मिन् ।**
**द्विगुणाकृते तु तत् सर्वं द्विपूर्वं शम्बाकृतमपीह ॥ ९ ॥**

(वि.) त्रिगुणाकृतमिति—त्रिवार कृष्ट त्रिगुणाकृतम् । तृतीयाकृतम् । त्रिहल्यम् । त्रिसीत्य च । त्रिवारकृष्टक्षेत्रनामानि ॥ द्विवारकृष्टक्षेत्रे पूर्वोक्तानि सर्वाणि नामान्यपि वर्तन्ते । इह द्विवारकृष्टक्षेत्रे न केवल तावन्त्येव नामानि, किंतु शम्बाकृतम् इति नामापि वर्तते । शम्बम् अनुलोमेन प्रतिलोमेन च कृष्ट शम्बाकृतम्[1] । कथम् । द्विगुणाकृतम् । द्वितीयाकृतम् । द्विहल्यम् । द्विसीत्यम् । द्विवारकृष्टक्षेत्रनामानि ॥ ९ ॥

[1] शम्ब कृत हि सम्यक् कृष्ट्वा पुनस्तिर्यक् कृष्टमुच्यत $D_2$

(पा.) त्रिगुणाकृत—त्रिसीत्यमपि तस्मिन् । [1]त्रिवारकृष्टक्षेत्रनामानि ॥ द्विगुणाकृते तु—शम्बाकृतमपीह । द्विवार हलेन कृष्टे क्षेत्रे द्विगुणाकृतद्वितीयाकृतद्विहल्यद्विसीत्यानि स्यु । तत्र शम्बाकृतशब्दोऽपि स्यात् । 'सैरिभसभाकृते च सीताम्' इति दन्त्यादिषु वर्णनिर्देशना ॥ ९ ॥

[1] त्रिगुण° $B_2$

**द्रोणाढकादिवापादौ द्रौणिकाढकिकादयः ।**
**खारीवापस्तु खारीक उत्तमर्णादयस्त्रिषु ॥ १० ॥**

(वि.) द्रोणेति—उप्यते धान्यादिकमस्मिन्निति वाप क्षेत्रम् । तस्मिन् द्रोणाढकप्रस्थादिपरिमितबीजावापपर्याप्तक्षेत्रे द्रौणिकम्, आढकिकम्, आदिग्रहणात् प्रास्थिकिकादय शब्दा वर्तन्ते । द्रोणपरिमित बीजमत्र उप्यते द्रौणिकम्[1] । एव [2]सर्वत्राप्युन्नेयम् । खारिपरिमितानि बीजान्यत्र उप्यन्ते खारीक[3] । खारिपरिमितबीजावापपर्याप्तक्षेत्रनाम ॥ उत्तमर्णादय खारीकान्ता शब्दा त्रिषु लिङ्गेषु वर्तन्ते ॥ १० ॥

[1] द्रोणस्य वाप $F_2$, $Pt_2$　　[2] $D_2$, $W_2$ $Pt_2$ add आढकस्य वाप आढकिकम्
[3] खार्या वाप $Pt_2$

(पा.) द्रोणाढकादि—आढकिकादय । द्रोणस्य वापो द्रौणिक क्षेत्रम् । द्रोण पचति द्रौणि । उखा द्रोण सम्भवत्यवहरति वा । द्रौणिक प्रसेव । इति द्रोणाढकादीना वापादिषु द्रौणिकाढकिकादिशब्दा स्यु । वापो वपनस्थानम् । पाकस्तण्डुलादीनामनादिभाव । सम्भव आधारप्रमाणानतिरिक्ताधेयप्रमाणता । अवहरणमुपसहार ॥ खारीवापस्तु खारीक । खार्या वाप खारीक स्यात् । पाकादिषु खारिक इति ठगेव स्यात् ॥ उत्तमर्णादयस्त्रिषु । उत्तमर्णादिशब्दास्त्रिलिङ्गा । उत्तमर्ण किराटकुलम् । किराटो वैश्य । 'कोमटि' । अधमर्ण कुटिम्बिकुलम् । कुटिम्बिन शूद्रकुमारा । 'रापुकोडुकु' ॥ १० ॥

**पुंनपुसकयोर्वप्रः केदारः क्षेत्रमस्य तु ।**
**कैदारक स्यात् कैदार्यं क्षैत्र कैदारिक गणे ॥ ११ ॥**

(वि.) पुमिति—उप्यते धान्यमत्र वप्र । 'डुवप् बीजसन्ताने' । के जले हलेन दार्यत इति केदार[1] । 'दॄ विदारणे' । क्षीयते हलेन लिख्यते क्षेत्रम् । 'क्षिणु हिंसायाम्' । क्षीयते धान्यैरस्मिन्निति वा । 'क्षि निवासगत्यो' । व्रीहिक्षेत्रनामानि ॥ केदाराणा समूह कैदारकम् । कैदार्यम् कैदारिकम् । क्षेत्राणा समूह क्षैत्रम् । केदारसमूहनामानि ॥ ११ ॥

[1] कन जलेन दीर्यत इति वा $D_2$

(पा.) पुंनपुंसकयोर्वप्रः—क्षेत्रम् । व्रैहेयादिक्षेत्रनामानि । '[1]चेनुमडिमुद लैनदि'॥ अस्य तु कैदारकं—कैदारिकं गणे। क्षेत्राणां[2] समूहनामानि ॥ ११ ॥

[1] $B_3$ omits [2] जानर(?)शालेयादिक्षेत्रसमूह॰ $A_1$.

लोष्टानि लोष्टवः पुंसि कोटिशो लोष्टभेदनः ।
प्राजनं तोदनं तोत्रं खनित्रमवदारणम् ॥ १२ ॥

(वि.) लोष्टानीति—लोष्टयन्ते पृथगेव संहन्यन्ते लोष्टानि । लोष्टवश्च । 'लोष्ट संघाते'। द्वितीयं पदमुकारान्तम् । लेष्टव इति पाठे लिश्यत इति लेष्टुः। 'लिश गतौ' । मृत्पिण्डनामनी ॥ कोटिभिरश्रिभिः लोष्टानि श्यतीति कोटिशः । 'शो तनूकरणे' । [2]लोष्ट-भेदनदारुयन्त्रनाम ॥ प्राज्यते प्रेर्यतेऽनड्वाननेनेति प्राजनम् । 'अज गतिक्षेपणयोः' । तुद्यते बलीवर्दोऽनेनेति तोदनम् । तोत्रं च । 'तुद व्यथने' । अल्पशल्ययुक्तवेणुदण्डादेर्नामानि ॥ खन्यते [3]भूमिरनेनेति खनित्रम् । 'खनु अवदारणे' । अवदार्यते भूमिरनेनेति अवदारणम् । 'दृ विदारणे' । कुद्दालादेर्नामनी ॥ १२ ॥

[1] लूयन्ते, 'लूञ् छेदने' $F_2$, $Pt_2$. [2] $Pt_2$ adds लोष्टानि भिनत्तीति. [3] भूः $W_2$.

(पा.) लोष्टानि लोष्टवः पुंसि । उकारान्तबहुवचनम् । लोष्टनामनी । 'वेड्डुलु[1]' । पुंसीति विशेषविधिर्लोष्टेषु संभाव्यः । 'लोष्टुः शण्डेऽपि लोष्टः[2] स्यात्' इति गो(वो)पालितः । कोटिशो लोष्टभेदनः । लोष्टानां संभेदकः[3] कोटिशः स्यात् । '[1]कोदरिपेड्डलु पगलगोट्टिदि' । प्राजनं—तोत्रम् । [4]कण्टकवद्यष्टिनामानि । 'मुल्लुकोल[1]' । चर्मदण्डवाचकान्यपि स्युः॥ खनित्रमवदारणम् । कुद्दालनामनी । 'गुद्दलि[1]'॥ अनुक्तम्—'विशिरा तु खनित्री स्यात्' । विशालकुद्दालनामनी । 'सलिके [1]पार'॥ १२ ॥

[1] $B_2$ omits. [2] लोष्टं $A_1$. [3] संभेदनः $A_1$. [4] कण्टकयष्टि॰ $A_1$.

दात्रं लवित्रमाबन्धो योत्रं योक्त्रमथो फलम् ।
निरीषं कुटकं फालः कृषको लाङ्गलं हलम् ॥ १३ ॥
गोदारणं च सीरोऽथ शम्या स्त्री युगकीलकः ।

(वि.) दात्रमिति—दाति मिनत्त्यनेन तृणमिति दात्रम्। 'दाप् लवने'। लुनन्त्यनेन लवित्रम्। 'लूञ् छेदने'। वक्रस्यायोमयस्य तृणादिलवनसाधनस्य[1] नामानि॥ आबध्यतेऽनेन बलीवर्दकण्ठ इति आबन्ध। 'बधि संयमने'। यूयतेऽनेन बलीवर्दकण्ठ इति योत्रम्। 'युञ् [2]बन्धने'। युज्यतेऽनेन बलीवर्दकण्ठ इति योक्त्रम्। 'युजिर् योगे'। बलीवर्दादिकण्ठबन्धनार्थनिर्मितवल्कलादिकृतरज्जुनामानि॥ फलतीति फलम्। 'ञिफला विशरणे'। निर्गता ईषास्मादिति निरीषम्। कुटति कुत्सितं सरतीति कुटकम्। 'कुट कौटिल्ये'। [3]फलति विशीर्यते भूमिरनेनेति फाल। 'ञिफला विशरणे'। कृषति भुवमिति कृषक। 'कृष विलेखने'। लाङ्गलदण्डरहितस्य लोहमयफलकस्य नामानि॥ लङ्गति भुवोऽन्त. प्रविश्य गच्छतीति लाङ्गलम्। 'लगि गतौ'। हलति विलिखति भुवमिति हलम्। 'हल विलेखने'। गौर्भूः दार्यतेऽनेन गोदारणम्। 'दृ विदारणे'। सीयत युगेन सह बध्यते सीर। 'षिञ् बन्धने'। ईषाफालाभ्यामन्वितस्य [4]कुटकस्य नामानि॥ बलीवर्दादिदौष्ट्यं शमयतीति शम्या। 'शम उपशमने'। युगस्य कीलक। युगकीलकनाम॥ १३॥

[1] $W_2$ adds शस्त्रस्य. [2] 'यु मिश्रणे' $F_2$, $Pt_2$ [3] $W_2$ omits two lines
[4] कूटस्य $K_5$, $K_6$.

(पा.) दात्र लवित्रम्। लवनसाधननामनी। 'कोडवलि'। आबन्धो—योक्त्रम्। योत्रनामानि। 'जोतिगे'॥ अथो [1]फले—[2]कृषक। [3]फालनामानि। 'कुर्डु'। लाङ्गल हलं—सीर'। [4]लाङ्गलनामानि। 'नागलि'। 'क्षेत्रमिव सरोवर सारासिराव-गाहितम्' इति श्लेषाद् दन्त्यादिः। 'जित्या हलिरुभे स्त्रियाम्'। इत्येते द्वे च॥ अथ शम्या स्त्री युगकीलक। [5]युगमध्यस्थ स्वल्पकील. शम्या स्यात्। 'कुरुचकाण्डिकोड्डुसु'। 'हलमिव शम्याश्रयमाश्रममपश्यत्' इति श्लेषात् तालव्यादिः॥ १३॥

[1] फलम् $A_1$ [2] $B_3$ adds तत्तदण्डे फले कूटकशब्द स्यात् [3] अय.-फीलनामनी। 'कर्ड' $B_3$ [4] बलभद्रायुधनामानि $A_1$ [5] युगकीलकनाम $B_3$

ईषा लाङ्गलदण्डः स्यात् सीता लाङ्गलपद्धतिः॥ १४॥
पुंसि मेधिः खले दारु न्यस्त यत् पशुबन्धने।
आशुर्व्रीहिः पाटलः स्याच्छितशूकयवौ समौ॥ १५॥

(वि.) ईषेति—बलीवर्दारूढा[1] ईषते गच्छतीति ईषा। 'ईष गतिहिंसा-दानेषु[2]'। लाङ्गलस्य दण्डः लाङ्गलदण्डः। युगहलयोः मध्यघटितदण्डस्य नामनी॥

स्यति नाशयति कठिनामपि भुवमिति सीता। 'षोऽन्तकर्मणि'। लाङ्गलपद्धतिनाम ॥ मेधवे वलीवर्दैः सगच्छते मेधिः। 'मेधृ संगमे'। [3]खलमध्यबलीवर्दबन्धनविषयस्य दारुणो नाम ॥ अश्नु पचत इति आशुः। अश्नुते वा। 'अशू व्याप्तौ'। '[4]व्रीणाति देहमिति व्रीहिः। 'व्री भरणे'। आशुव्रीहिरित्येकं पदं वा। पाटलपुष्पवर्णत्वात् पाटलः। रक्तव्रीहिनामानि ॥ शितः तीक्ष्णः शूको यस्य शितशूकः। यूयते संबध्यते महाजनेनेति यवः। 'युञ् बन्धने'। यौति तुषेणेति वा। 'यु मिश्रणे'। यवनामनी ॥ १४–१५ ॥

[1] $D_2$, $K_2$, $W_2$ add सती. [2] दर्शनेषु $K_5$, $K_6$. [3] गल° $K_8$; खलबलीवर्द . . . न्यस्तदारुणः $W_2$. [4] वृणाति, 'वृञ् वरणे' $Pt_2$.

(पा.) ईषा लाङ्गलदण्डः स्यात्। लाङ्गलस्य दण्ड ईषा स्यात्। 'येंडिकोल'। 'ईषा मनीषा मञ्जूषा गण्डूषा सह [1]लिक्षया' इति मूर्धन्यान्तेषु चन्द्रगोमिः।

'ईशः प्रभौ शंकरे स्यादीशा लाङ्गलदण्डके[2]'।

इति तालव्यान्तेषु विश्वप्रकाशिका (पृ. १६८, श्लो. ९)॥ सीता लाङ्गलपद्धतिः। [3]लाङ्गलेन कृष्टो मार्गः सीता स्यात्। 'चालु'। 'सीता लाङ्गलरेखा स्याद् व्योमगङ्गा च जानकी' इति दन्त्यादिषु रभसः॥ पुंसि मेधिः—खलपशुबन्धने। खलो नाम धान्यराशिकरणस्थानम्। तत्र पशुबन्धनार्थं निखातस्तम्भो मेधिः स्यात्। '"मेधृ सगमे"। मेध्यन्ते पशवोऽत्र मेधिः' इति सुभूतिटीकायां[4] व्युत्पत्त्या तवर्गचतुर्थान्तः। पुंसीति पदं मेधिखलशब्दोभयविशेषणम्। 'न[5] स्त्री मेधिः[6] खले पाली खलधानं पुनः खलः' इति वैजयन्ती (पृ. १२५, श्लो. ३१)॥ आशुर्व्रीहिः पाटलः स्यात्। व्रीहिनामानि। 'पड्लु'। आशुशब्दः पर्यायवाचकः। 'व्रीहिराशुश्च पाटलः' इति रत्नमाला॥ शितशूकयवौ समौ। शितशूकशब्दो ह्रस्वादिः। यवनामनी ॥ १४–१५ ॥

[1] रिक्षया $A_1$. [2] °दण्डिका $A_1$, $B_3$. [3] लाङ्गलमार्गः $B_1$. [4] °टीका व्युत्पत्त्या $A_1$. [5] न स्त्री $A_1$. [6] मेधिरिति मुद्रितग्रन्थे.

तोक्मस्तु तत्र हरिते कलायस्तु सतीनकः।
हरेणुखण्डिकौ चास्मिन् कोरदूषस्तु कोद्रवः ॥ १६ ॥

(नि.) तोक्म इति—तुद्यते पशुभिः खाद्यत इति तोक्मः। 'तुज हिंसायाम्'। हरितवर्णयवनाम ॥ कं वातं लात्युपादत्त इति कलायः। 'ला आदाने'। सीदन्ति

वातप्रकृतयोऽनेनेति सतीनकः। 'षद्लृ विशरणगत्यवसादनेषु'। [1]ह्रियतेऽनेन पुरीषं कुक्षेरिति हरेणुः। 'हृञ् हरणे'। खण्ड्यतेऽद्यते नरैरिति खण्डिकः। 'खडि[2] भेदने'। कलायनामानि॥ कोरमन्नं[3] दूषयतीति कोरदूषः। 'दुष वैकृत्ये'। केन बहूदकेन उद्यते क्लिद्यत[4] इति कोद्रवः। 'उन्दी क्लेदने'। कोद्रवाख्यधान्यनामनी॥ १६॥

[1] D₂, K₆ add अपह्रियते. [2] K₅, K₆ add खण्ड. [3] रुचिरं Pt₃.
[4] क्लिद्यते K₆. Pt₂.

(पा.) तोक्मस्तु तत्र हरिते। आमयवस्तोक्मः स्यात्। 'पञ्चियवलु'॥ कलायस्तु सतीनकः। [1]खण्डिकौ चास्मिन्। [2]वृत्तचणकनामानि। 'लंकलु'॥ कोरदूषस्तु कोद्रवः। कोद्रवनामनी[3]। 'आल्लु'॥ १६॥

[1] हलेणुः A₁. [2] चणकविशेष° B₃. [3] B₂ adds धान्य°.

**मङ्गल्यको मसूरोऽथ मकुष्ठकमयुष्ठकौ।**
**वनमुद्गे सर्षपे तु द्वौ तुन्दुभकदम्बकौ॥ १७॥**

(वि.) मङ्गल्यक इति—मङ्गलमस्माद्भवतीति [1]मङ्गल्यकः। मस्यति परिणमति काले मसूरः। 'मसी परिणामे'। चणकभेदनामनी॥ मङ्क्यते फलैरिति मकुष्ठकः। 'मकि मण्डने'। [2]मिनोति क्रिमीनिति मयुष्ठकः। 'डुमिञ् प्रक्षेपणे'। वनमुद्गनामानि॥ कटुत्वेन [3]मुखं सरति व्याप्नोतीति सर्षपः। 'सृ गतौ'। तुदति व्यथयति मुखं तुन्दुभः। 'तुद व्यथने'। शुष्कदशायां कत् कुत्सितमम्बते कदम्बकः। 'अबि शब्दे'। सर्षपनामानि॥ १७॥

[1] मङ्गले साधुः D₂. [2] मीनाति 'मीञ् हिंसायाम्' K₃, K₆, W₂. [3] देहं F₂, Pt₃.

(पा.) मङ्गल्यको मसूरः। चणकविशेषनामनी[1]। मसूरोऽथेति पाठे वैजयन्ती (पृ. १२६, श्लो. ४०) 'मसुरस्तु मसूरकः' इति। मसूराथेति पाठे—'[2]वेदयायां व्रीहिभेदे च मसूरा मसुरा स्त्रियाम्' इति रभसकोशः॥ अथ मकुष्ठकमयुष्ठकौ वनमुद्गे। वनमुद्गनामानि॥ अनुकम्—'खण्डिरः पीतमुद्गः स्यात्'। हरितमुद्गनाम। 'कृष्णमुद्गस्तु शिम्बिकः[3]'। नीलमुद्गनाम॥ सर्षपे तु—कदम्बकौ। सर्षपनामानि। 'आवालु'॥१७॥

[1] A₁ adds 'चिरसनग'. [2] वेश्यायाम् A₁. [3] शिम्बिका B₂.

**सिद्धार्थस्त्वेष धवलो गोधूमः सुमनः समौ ।**
**स्याद् यावकस्तु कुल्माषः चणको हरिमन्थकः ॥ १८ ॥**

(वि.) सिद्धार्थ इति—सिद्धोऽर्थः प्रयोजनमस्य सिद्धार्थः । श्वेतसर्षपनाम ॥ [1]आ समन्तात् गां भुवं शूकैर्धुनोतीति गोधूमः । 'धूञ् कम्पने' । शोभनं मन्यते सर्व एनमिति सुमनः । 'मन ज्ञाने' । अकारान्तोऽयम् । गोधूमनामनी ॥ यूयते पाकसमयेऽल्पाम्भसा युज्यत इति [4]यावकः । 'युञ् बन्धने' । कोलति पाकसमये स्थूलो भवति कुल्माषः[3] । 'कुल संस्त्याने' । कुलुत्थनामनी ॥ अर्धपक्वदशायामेव निष्कृतानां गोधूमानां नामेति केचित् । चण्यते भक्षणार्थं दीयत इति चणकः । 'चण 'दाने' । हरिभिरश्वैः मथ्यते हरिमन्थकः । 'मथि विलोडने' । चणकनामनी ॥ १८ ॥

[1] अत्तुमुद्यता $K_3$, $W_2$; गुध्यते परिवेष्ट्यते $F_2$, $Pt_2$. [2] यौतीति, 'यु मिश्रणे' $F_2$, $Pt_2$. [3] कुत्सितो माषः $F_2$, $Pt_2$. [4] भपणे $K_3$, $K_6$; 'चण विश्राणने' वा $K_6$.

(पा.) सिद्धार्थकस्तु धवलः । एष सर्षपो धवलश्चेत् सिद्धार्थकः स्यात् । 'तेह्ननि आयालु' । गोधूमः सुमनः समौ । 'गोधूमसुमनौ [1]समौ' इति रभसकोशपाठाद् अकारान्तः । गोधूमनामनी । स्याद्यावकस्तु कुल्माषः । गोधूमानन्तरपाठाद् गोधूमविशेषनामनी । 'यावके वल्कुल्माषौ यवके तोयपर्णिका' इति यवविशेषे वैजयन्ती (पृ. १२७, श्लो. ९३) ॥ चणको हरिमन्थकः[2] । चणकनामनी ॥ ॥ १८ ॥

[1] $A_1$ adds म्लेच्छभोजनप्रयरोऽव्ययम् (!). [2] °मन्दकः $A_1$; °मन्थरः $B_1$.

**द्वौ तिले तिलपेजश्च तिलपिञ्जश्च निष्फले ।**
**क्षवः क्षुताभिजननो राजिका कृष्णिकासुरी ॥ १९ ॥**

(वि.) द्वाविति—निष्फलस्तिलः तिलपेजः । तिलपिञ्जश्च । [1]निष्फलतिलनामनी । क्षौत्यनेन क्षवः । 'टुक्षु शब्दे' । [2]क्षुतमभिजनयतीति क्षुताभिजननः । 'जनी प्रादुर्भावे' । राजते कृष्णवर्णपुष्पैरिति[3] राजिका । 'राजृ दीप्तौ' । कृष्णवर्णयोगात् कृष्णिका । कटुरसेन [4]असुरस्त्रीवदनिष्टकारिणीत्वात्[5] आसुरी । कृष्णसर्षपनामानि ॥ १९ ॥

[1] तैलरहित° $D_2$, $W_2$. [2] क्षुधं, क्षुधामिजननः $W_2$. [3] °षट्रेन $K_1$, $K_4$. [4] असुरी $K_6$. [5] °कारित्वात् $W_2$.

(पा.) द्वौ तिले—तिलपिञ्जश्च निष्फले। निष्फले तिले तिलपेजतिलपिञ्ज-शब्दौ स्याताम्। 'पोल्लुनूपु'। अनुक्तम्—[1]'जालकश्चुलिकस्तिलः'। तिलनामानि॥ 'नव्वु'॥ 'जर्तिलोऽरण्यजस्तिलः'। अरण्यजातस्तिलो जर्तिलः स्यात्। क्षवः [2]क्षुताभि-जननः—कृष्णिकासुरी। कृष्णसर्षपनामानि॥ १९॥

[1] तिलः काकरुहः $A_1$. [2] क्षुधाभिजननः $A_1$.

**स्त्रियौ कङ्गुप्रियङ्गू द्वे अतसी स्यादुमा क्षुमा।**
**मातुलानी तु भङ्गायां व्रीहिभेदस्त्वणुः पुमान्॥ २०॥**

(वि.) स्त्रियाविति—केन [1]जलेन गच्छत्युद्गच्छतीति कङ्गुः। 'गम्लृ गतौ'। प्रिय,ण्यङ्गान्यस्याः प्रियङ्गुः। प्रियङ्ग्वाख्यधान्यनामनी॥ न [2]तस्यते न क्षीयत इति अतसी। 'तसु उपक्षये'। अवते शुष्कदशायां स्वनतीति [3]उमा। 'उङ् शब्दे'। क्षौतीति[4] क्षुमा। 'टुक्षु शब्दे'। अतसीनामानि॥ मा तोल्यते न उपमीयते उपयोगिधान्येनेति[5] मातुलानी। 'तुल उन्माने'। भज्यते वल्कलार्थमिति भङ्गा। 'भञ्जो आमर्दने'। शणविशेषस्य[6] नामनी॥ [7]अल्पधान्यत्वात् अणुः। व्रीहिभेदा-ल्पधान्यनाम॥ २०॥

[1] वृद्दयुदकेन $K_2$, $K_6$, $W_2$ [2] तस्यति $D_2$ [3] $D_2$ ends here. [4] $K_5$, $K_6$ add शब्दायते. [5] वस्तुषु $F_2$, $Pt_2$ [6] भङ्गानाम $K_6$. [7] अणुत्वात् $Pt_2$.

(पा.) समौ कङ्गुप्रियङ्गू द्वौ। प्रियङ्ग्वाख्यधान्यजातिनामनी। 'कोर्रलु'॥ अतसी स्यादुमा क्षुमा। अतसीनामानि। मातुलानी तु भङ्गायाम्। भङ्गाख्यधान्य-विशेषजातिनामनी। 'कुसुमुलु'। अनुक्तम्—'यावनालस्तु जोनालो जोन्नला बीज-पुष्पिका'। जोनलनामानि। 'जोन्नलु'॥ 'समौ तु रस्त्वनिष्पावौ'। निष्पावनामनी। 'अनुमुलु'। 'वल्ला तुवरिकाढकी'। आढकीनामानि। 'कंदुलु'। 'राजमाषोऽलसान्द्रः स्यात्'। 'अलसद'। 'माषो वृष्यः पचेलिमः'। मापनामानि। 'कुलुत्थिका वलकुलः'। कुलुत्थनामनी। 'उलुवलु'। 'व्रीहिभेदस्त्वणुः पुमान्'। व्रीहिविशेषोऽणुः स्यात्। 'कोरे'। 'ऊदरवित्तुलु'॥ २०॥

**किंशारुः सस्यशूकं स्यात् कणिशं सस्यमञ्जरी।**
**धान्यं व्रीहिः स्तम्बकरिः स्तम्बो गुच्छस्तृणादिनः॥ २१॥**

(वि.) किंशारुरिति—कुत्सितं शृणाति हस्तादिकमिति किंशारुः। 'शॄ हिंसायाम्'। [1]सस्यस्य शूकं तीक्ष्णाग्रम्। सस्यशूकनाम॥ कणा धान्यकणाः सन्त्यत्रेति कणिशम्। सस्यमञ्जरीनाम॥ दधाति देहमिति धान्यम्। 'डुधाञ् धारणपोषणयोः'। व्रीहिशब्दो व्युत्पन्नः[2] (श्लो॰ १५)। स्तम्बं गुच्छं करोतीति स्तम्बकरिः। धान्यनामानि॥ तिष्ठतीति स्तम्बः। गुध्यति परिवेष्टयति भुवमिति गुच्छः। 'गुध परिवेष्टने'। तृणादिस्तम्बनाम॥ २१॥

[1] शस्यस्य $K_3$. [2] $K_2$ adds व्रीणाति देहं, 'व्री मरणे'.

(पा.) किंशारुः सस्यशूकं स्यात्। धान्यस्य कण्टकः किंशारुः स्यात्। पुंलिङ्गः। पुमानिति [1]पूर्वोत्तरान्वयः॥ कणिशं सस्यमञ्जरी। धान्यमञ्जरी कणिशं स्यात्॥ धान्यं व्रीहिः स्तम्बकरिः। धान्यनामानि। धान्यध्वनिरर्थेत्यविवक्ष्यमाणवचनाद्, व्रीहिस्तम्बकरिशब्दौ पुंलिङ्गौ॥ स्तम्बो गुच्छस्तृणादिनः। तृणादीनां गुच्छः स्तम्बः स्यात्॥ 'परिघंट'॥ २१॥

[1] शब्दस्तुलासूत्रादिवदुभयपर्यायभागी $A_1$.

## नाली नालं च काण्डोऽस्य पलालोऽस्त्री स निष्फलः।
## कडङ्गरो बुसं क्लीबे धान्यत्वचि पुमांस्तुषः॥ २२॥

(वि.) नालीति—[1]नलति बध्नातीति नाली। नालं च। '[2]णल बन्धने'। तृणशलाकानामानि॥ पलति उच्चैर्गच्छतीति पलालः। 'पल गतौ'। निष्फलनाडीनाम॥ कटति खलमावृणोति कट्। तदेवाङ्गं रूपं[3] यस्य सः कडंगरः। 'कटे वर्षावरणयोः'। बुस्यते उत्सृज्यत इति बुसम्। 'बुस उत्सर्गे'। खले पशुपादघट्टितस्य क्षोदस्य नामनी॥ तुष्यतेऽग्निरनेनेति तुषः। 'तुष तुष्टौ'। धान्यत्वङ्नाम॥ २२॥

[1] नल्यते $K_2$, $K_6$ [2] गन्धने बन्धने च $K_6$. [3] $K_2$ adds आवरण.

(पा.) नाली नालं च काण्डोऽस्य। अस्य [1]तृणादिनो दण्डनामानि। पलालोऽस्त्री स निष्फलः। विफलस्तृणादिकाण्डः पलालः स्यात्। '[2]वन्नुलु दाडिपोयिन-दण्डमु'। 'मोडु'॥ कडङ्गरो बुसं क्लीबे। पलालादिक्षोदस्य नामनी। 'पोल्लुप्फुलु'। धान्यत्वचि पुमांस्तुषः। धान्यस्य त्वक् तुषः स्यात्। 'उमुक'। अनुक्तम्—'कञ्जुरः फण्डनं चेति तण्डुलस्य मले द्वयम्'। तण्डुलमलनामनी। 'तवुडु'॥ २२॥

[1] तृणादिकाण्ड॰ $B_3$. [2] $B_3$ omits.

**शूकोऽस्त्री श्लक्ष्णतीक्ष्णाग्रे शमी शिम्बा त्रिपूत्तरे ।**
**ऋद्धमावसितं धान्यं पूतं तु बहुलीकृतम् ॥ २३ ॥**

(वि.) शूक इति—श्यति स्वापगमनेन धान्यं तनूकरोतीति शूकः । 'शो तनूकरणे' । श्लक्ष्णतीक्ष्णाग्रधान्यकण्टकनाम ॥ शाम्यति सस्यवृद्धिरस्यां सत्यामिति शमी । 'शमु उपशमने' । शिनोति तनूकरोति स्वगतबीजद्वारेण कफं पित्तं चेति शिम्बा । 'शिञ् [1]निशाने' । मुद्गादित्वड्नाम ॥ [2]उत्तरे बहुलीकृतान्ताः शब्दाः त्रिपु लिङ्गेपु वर्तन्ते ॥ अवैगुण्येन सपन्नं फलम् ऋद्धम् । 'ऋधु वृद्धौ' । श्रिया शोभया आवस्यते आवसितम् । 'वस आच्छादने' । सुक्षेत्रादिगुणैः सपूर्णधान्यनाम ॥ वुसापकरणेन शुद्धत्वात् पूतम् । 'पूञ् पवने' । बहुमूल्यं लातीति बहुलम् । तथा कृतं बहुलीकृतम् । 'ला आदाने' । निर्बुसीकृतधान्यनामनी ॥ २३ ॥

[1] निशातने $K_3$, $K_6$   [2] $K_5$, $K_6$ add त्रिपूत्तर

(पा.) शूकोऽस्त्री—तीक्ष्णाग्रे । यस्याग्रं श्लक्ष्णं तीक्ष्णं च स्यात् तच्छूकं स्यात् । 'मुल्लु' ॥ शमी शिम्बा । मुद्गादित्वड्नामनी । '[1]चिप्पजूम्रलमिदि तूगु' ॥ त्रिपूत्तरे । इत उपरि वक्ष्यमाणा ऋद्धादयश्चत्वारः शब्दास्त्रिलिङ्गा । ऋद्धो जोनलः । ऋद्धा राजिका ॥ ऋद्धमावसितं धान्यम् । अनडुद्भिरावसितं धान्यं ऋद्धं स्यात् । '[1]नुरिचिन-कोलुचु' ॥ पूतं तु बहुलीकृतम् । वायुना निस्तुपं [2]कृतं धान्यं पूतं स्यात् । 'तूरुपत्तिनरोल्पु' ॥ २३ ॥

[1] $B_3$ omits   [2] $A_1$ adds.

**मापादयः शमीधान्ये शूकधान्ये यवादयः ।**
**शालयः कलमाद्याश्च षष्टिकाद्याश्च पुंस्यमी ॥ २४ ॥**

(वि.) मापादय इति—मष्यते वातोऽनेनेति मापः । 'मष हिंसायाम्' । शमीसहितं धान्यं शमीधान्यम् । मापादयः शमीधान्ये वर्तन्ते । आदिशब्देन 'मुद्गादयो गृह्यन्ते । यवादयो यवगोधूमरक्तशाल्यादयः शूकधान्येपु वर्तन्ते ॥ शाल्यन्ते श्लाघ्यन्ते जनैरिति शालयः । 'शाडृ श्लाघायाम्' । कल्यन्त इति कलमाः । 'कड मदने' ।

षष्टिरात्रेण पच्यन्ते षष्टिकाः। कलमाद्याः षष्टिकाद्याश्च शालय इत्युच्यन्ते। पुंस्यमी। अमी माषयवशालिकलमषष्टिकशब्दाः पुंसि वर्तन्ते॥ २४॥

[1] 'माषो मुद्गो राजमाषः कुलत्थश्चणकस्तिलः।
काकाण्डश्चीवर इति शमीधान्यगणः स्मृतः॥
इति रत्नकोषः' इति भानुजीदीक्षितः (पृ. ३५६).

(पा.) माषादयः शमीधान्ये। शमीसहितं धान्यं शमीधान्यम्। [1]तस्मिन् माषादयः स्युः। माषादयः शमीधान्यानीत्यर्थः॥ शूकधान्ये यवादयः। शूकसहितं धान्यं शूकधान्यम्। तस्मिन्[2] यवादयः स्युः। यवादयः शूकधान्यानीत्यर्थः॥ शालयः—षष्टिकाद्याश्च। [3]कलमप्रभृतयो व्रीहयश्च षष्टिकाद्याः[4] षष्टिसंख्याकदिवसपचेलिमा व्रीहयश्च[5] शालयः स्युः॥ पुंस्यमी। सामान्यविशेषनामभिरेते पुंलिङ्गाः। कलमान् वप। षष्टिकान् वप। शालीन् वप॥ २४॥

[1] अस्मिन् $A_1$. [2] अत्र $A_1$. [3] $A_1$ adds कलमाद्याश्च. [4] षष्टिकप्रभृतयश्च $B_3$. [5] प्रमुखाः $A_1$.

तृणधान्यानि नीवाराः स्त्री गवेधुर्गवेधुका।
अयोऽग्रं मुसलोऽस्त्री स्यादुदूखलमुलूखलम्॥ २५॥

(वि.) तृणेति—नितरां व्रियन्ते नीवाराः। 'वृञ् [1]वरणे'। तृणधान्यनाम॥ गवि [2]अक्कुष्टभूमावेधते गवेधुः। गवेधुका च। 'एध वृद्धौ'। वनगोधूमनामनी॥ अयोऽग्रेऽस्य अयोऽग्रम्। मुस्यते धान्यमनेनेति मुसलः। 'मुस खण्डने'। येन धान्यादिकं[3] भिद्यते तस्य नामनी॥ उद् ऊर्ध्वं खमाकाशमस्येति उदूखलम्। उलूखलं च। धान्यखण्डनार्थमाधारभूतस्य दार्वादेर्नामनी॥ २५॥

[1] $K_5$, $K_6$ add 'वृङ् संभक्तौ' इति वा धातुः. [2] आकृष्ट° $W_2$; अश्मसि $Pt_2$.
[3] $K_8$ adds तुषादिकं; $W_2$ adds वह्यादिकं.

(पा.) तृणधान्यानि नीवाराः। तृणधान्यनाम। '[1]निव्वरिलु'। तृणधान्यशब्दः पर्यायवचनश्चाधिकारवचनश्च स्यात्। स्त्री गवेधुर्गवेधिका। अरण्यगोधूमनामनी। 'वट्टुवड्लु'॥ अनुक्तम्—'श्यामाकस्तु स्मयाकः स्यात्'। श्यामाकनामनी॥ 'चाम'॥ 'गर्मुद्गर्मुटिका[2] समे'। गर्मुन्नामनी। 'वरगु'॥ अयोऽग्रं मुसलोऽस्त्री

स्यात्। 'मुसलो दन्त्यमध्यो मूर्धन्यमध्यश्च स्यात्' इति वर्णनिर्देशनामवचनाद् मुपलोऽपि स्यात्। मुसलनामनी। 'रोंकलि'॥ 'उदूखलमुलूखलम्'। अवहननस्थानगर्तवच्छिलानामनी[3]। [4]'रोलु'॥ २५॥

[1] 'निव्वरुलु दूसपरि' $A_1$. [2] गर्तटिका $A_1$. [3] शिलागर्त° $A_1$. [4] 'कोलु' $A_1$.

**प्रस्फोटनं शूर्पमस्त्री चालनी तितउः पुमान्।**
**स्यूतप्रसेवौ कण्डोलपिटौ कटकिलिञ्जकौ॥ २६॥**

(वि.) प्रस्फोटनमिति—प्रस्फोट्यते तुषादिरनेन बहिष्क्रियत इति प्रस्फोटनम्। 'स्फुटिर् विशरणे'। शीर्यते विशीर्यते तुषादिरनेन शूर्पम्। 'शॄ हिंसायाम्'। शूर्पनामनी॥ चाल्यतेऽनया पिष्टमिति चालनी। 'चल कम्पने'। तनोत्यधस्तात् पिष्टसारमिति तितउः। 'तनु विस्तारे'। क्षुद्रच्छिद्रोपेतस्य शूर्पविशेषस्य नामनी॥ सीव्यते वेणुदलैरिति स्यूतः। स्योन इति वा पाठ। प्रसेवश्च। 'षिवु तन्तुसन्ताने'। वेणुदलनिर्मितस्य [1]तिर्यग्वृत्तपात्रस्य नामनी॥ कण्ड्यते मूषकैरिति कण्डोलः। 'कडि भेदने'। पिट्यते वेणुदलैरिति पिटः[2]। 'पिट शब्दसङ्घातयोः'। वेणुदलादिनिर्मितस्य वर्तुलोन्नतस्य धान्यवापनसाधनस्य [3]नामनी॥ [4]कटत्यङ्गणदेशमिति कटः। 'कटे वर्षावरणयोः'। किल्यते धान्यमस्मिन्निति किलिञ्जकः। '[5]किल क्षेपे'। व्रीह्यादिप्रसारणार्थं वेणुदलनिर्मितास्तरणनामनी॥ २६॥

[1] $W_2$ adds वर्तुलोत्पन्नस्य [2] पेटः $K_3$, $K_6$ [3] धान्यकरण्ड° $W_2$.
[4] $W_2$ adds आवृणोति. [5] 'कल किल क्षेपे' $K_5$, $K_6$.

(पा.) प्रस्फोटनं शूर्पमस्त्री। 'सुशॄभ्यां निच्च' (उ. ३. २५) इति [1]शृणातेः पप्रत्यये उत्परत्वदीर्घत्वानि। केचित्तु सर्वदन्त्यादिसूर्पमिच्छन्तीति पुरुषोत्तमवचनात् तालव्यादिश्च दन्त्यादिश्च स्यात्। तण्डुलादिवैतुष्यसाधननामनी। 'चाट'॥ चालनी तितउः पुमान्। 'तनोतेर्डउः सन्वच्च' (उ. ४. ५१) इति निर्देशसामर्थ्याद् गुणाभावः[2]। तितऊ तितवः इत्यादि। 'चालनं तितउ प्रोक्तम्' इति रत्नकोशमते तितउनी तितऊनि। चालननामनी। 'जलेड'। स्यूतप्रसेवौ। विल्कनामनी'। 'सजि'। 'स्यूनः[3] स्यूतः प्रसेवकः' इति रभसकोशपाठात् [3]स्यूतशब्दोऽपि स्यात्॥ कण्डोलपिटौ। वेण्वादिकृतपिटकस्य नामनी। 'गंप्प'॥ कटकिलिञ्जकौ। वेण्वादिकृतस्टकस्य नामनी। 'चाप'॥ २६॥

[1] वाप्पादय इति शृणोतेः $A_1$. [2] एङ्भावः $A_1$. [3] स्योनः $B_2$.

**समानौ रसवत्यां तु पाकस्थानमहानसे ।**
**पौरोगवस्तदध्यक्षः सूपकारास्तु वल्लवाः ॥ २७ ॥**
**आरालिका आन्धसिकाः सूदा औदनिका गुणाः ।**

(वि ) समानाविति—अनेकरससंयोगात् [1]रसवती । पाकस्य स्थानं पाकस्थानम् । अनोवत् शकटवदुपकारत्वादनः पाकस्थानम् । महच्च तदनश्च महानसम् । [2]पाकवेश्मनामानि ॥ पुरः गौर्जलमत्रास्तीति पुरोगुः पाकस्थानम् । तस्यायमध्यक्षः पौरोगवः । पाकस्थानाध्यक्षनाम ॥ सूपं व्यञ्जनं कुर्वन्तीति सूपकाराः । 'डुकृञ् करणे' । वल्लन्ति भोक्तुः [3]प्रीतिमुत्पादयन्तीति वल्लवाः । 'वल्ल प्रीतौ' । सूपशाकव्यञ्जनादिपाचकस्य नाम ॥ अरालमन्नं[4] प्रयोजनमेषामिति आरालिकाः । अन्धोऽन्नं [5]प्रयोजनमेषामिति आन्धसिकाः । ओदनं प्रयोजनमेषां त औदनिकाः । सूदयन्ति हिङ्गुमरीचादिगताल्पप्राणिनः इति सूदाः । 'षूद क्षरणे[6]' । गुणयन्ति पुनः पुनः पाकमावर्तयन्तीति गुणाः । 'गुण अभ्यासे' । भक्तादिकारिणां नामानि ॥ २७ ॥

[1] रसः संक्रियमाणोऽस्यामस्तीति $F_2$ $Pt_2$ [2] °देश° $W_2$ [3] प्रमापादयन्ति $K_5$ $K_6$ [4] कुटिलं चरन्तीति $F_2$ $Pt_2$ [5] तत् साधनं शिल्पमेषां $Pt_2$ [6] $K_6$, $W_2$ add हिंसायां च

(पा.) समानौ रसवत्यां तु—महानसे । [1]पाकस्थाननामानि । 'वाणसेल्लु[2]' । पौरोगवस्तदध्यक्षः । महानसाधिकारी पौरोगवः स्यात् ॥ सूपकारस्तु—औदनिका गुणाः । पाचकनामानि । इमे त्रिष्वित्यनेन त्रिलिङ्गाः ।

'कान्ता चेयं गुणा चेयं प्रेष्या चेयं ममैकिका[3]' ॥ २७ ॥

[1] रसवती° $A_1$ [2] 'वाणसिल्लु' $A_1$, 'वटयल्लु' $B_3$ [3] एषका $A_1$

**आपूपिकः कान्दविको भक्ष्यकार इमे त्रिषु ॥ २८ ॥**
**अश्मन्तमुद्धानमधिश्रयणी चुल्लिरन्तिका ।**

(वि.) आपूपिक इति—अपूपः [1]प्रयोजनमस्य आपूपिकः । [2]कन्दौ संस्कृतं कान्दवम् । तत् [3]पण्यमस्येति कान्दविकः । भक्ष्यं करोतीति [4]भक्ष्यकारः । मोदकादिकारिणां नामानि ॥ इमे त्रिषु । इमे पौरोगवाद्या भक्ष्यकारान्ताः शब्दाः त्रिषु लिङ्गेषु वर्तन्ते ॥ अश्नुते स्थालीमूलमिति अश्मन्तम् । 'अशू व्याप्तौ' । अश्मनोऽपि अन्तोऽत्रेति

वा। उद्धीयतेऽग्निरनेनेति उद्धानम्। 'डुधाञ् धारणपोषणयो'। उद्धानमिति पाठे उद्धयन्ते ज्वाला अत्रेति। 'वेञ् तन्तुसताने'। अधिश्रीयतेऽनयेति अधिश्रयणी। 'श्रीञ् पाके'। 'चोद्यते निरस्यतेऽग्निरस्यामिति चुल्ली। 'चुद प्रेरणे'। 'चुल्ल भावकरणे' इति वा धातु। पुन पुन अन्तो नाशोऽस्यामस्तीति अन्तिका। [6]चुल्ली-नामानि ॥ २८ ॥

[1] अर्धसाधन $K_2$ $K_5$ [2] कन्दो $K_5$ $K_6$ [3] प्रयोजन $K_5$ $W_2$
[4] भक्षकार $F_2$ $Pt_2$ [5] चुद्यते $K_2$ चुल्लयते $F_2$ $Pt_2$ [6] चुल्लि° $W_2$

(पा.) आपूपिक—भक्ष्यकार। सुभूतिटीकायां कान्दुक कान्दविक भक्ष्यकार इति सुभागमश्चोक्त। भक्ष्यपाचकनामानि। अनुक्तम्—'शाककार कटम्बक'। शाकपाचक कटम्बक स्यात्॥ इमे त्रिपु। इमे पौरोगवाद्या भक्ष्यकारान्ता शब्दा त्रिपु लिङ्गेपु स्यु॥ अश्मन्त—चुल्लिरन्तिका। चुल्लीनामानि॥ 'प्रोच्य'॥ २८॥

**अङ्गारधानिकाङ्गारशकट्यपि हसन्त्यपि ॥ २९ ॥**
**हसन्यप्यथ न स्त्री स्यादङ्गारोऽलातमुल्मुकम्।**
**क्लीबेऽम्बरीष भ्राष्ट्रो ना कन्दुर्वा स्वेदनी स्त्रियाम्॥ ३० ॥**

(वि.) अङ्गार इति—अङ्गारा धीयन्तेऽस्यामिति अङ्गारधानिका[1]। अङ्गाराणा शकटी अङ्गारशकटी। अङ्गारप्रकाशेन हसति चकास्ते[2] हसन्ती। हसनी च। 'हसे हसने'। अङ्गाराहरणार्थं निर्मितस्य अय शकटस्य नामानि॥ अङ्गति इतस्ततो गच्छतीति अङ्गार। 'अगि गतौ'। अय पुनपुसकयोर्वर्तते। अतिक्रान्तकाष्ठदशस्य अप्राप्तभस्मावस्थस्य इन्धनस्य नाम॥ दहनभयात्[3] न लान्ति एतन्न स्वीकुर्वन्तीति अलातम्। 'ला आदाने'। [4]स्फुलिङ्गैरुलति उल्मुकम्। 'उल आवरणे'। अग्नियुक्तकाष्ठनामनी॥ [5]अम्ब्यते भृज्यमानलाजादिभिरिति अम्बरीषम्। 'अबि शब्दे'। भृज्यते लाजादिरत्रेति भ्राष्ट्र। 'भ्रस्ज पाके'। लाजादिकरणार्थं कृतस्य घटकपालस्य नामनी॥ [6]स्कन्दयति स्वगततापेन अपूपादिक शोषयतीति कन्दु। 'स्कन्दिर् गतिशोषणयो'। [7]स्वेद्यतऽग्नितापेनेति स्वेदनी। 'ञिष्विदा गात्रप्रक्षरणे'। अपूपादिपचनार्थं निर्मितस्यायोमयस्य पात्रस्य नामनी ॥ २९–३० ॥

[1] $K_3$ $W_2$ add डुधाञ् धारणपोषणयो [2] चकास्ति $W_2$ [3] दहनतया $K_5$
[4] निस्फुलिङ्गै $K_5$ [5] अम्ब्यते $W_2$ [6] स्कन्दति $F_2$ $Pt_2$ [7] स्विद्यते $K_5$, स्वेदयति $W_2$

(पा.) अङ्गारधानिका—हसन्यपि। [1]अग्निष्ठाननामानि। 'कुंप्पटि'। अथ न स्त्री स्यादङ्गार.। 'हरनयनेङ्गारितो मदनः' इति प्राकृतरूपस्यापि ग्रहणम्। 'इङ्गारो दृश्यते क्वापि' इति रभसकोशपाठात् प्रयोगार्ह एव। 'वितेनुरिङ्गालमिवायशः परे' इति नैषधः (१.९)॥ [2]अलातमुल्मुकम्। अङ्गारनामानि। 'निप्पु'।अनुक्तम्—अग्निचित् कालिका। 'चोग्गु'। अथ स्याद्रक्षा भसितभस्मनी। भस्मनामानि॥ क्लीबेऽम्बरीष भ्राष्ट्रो ना। भर्जनपात्रनामनी। 'मङ्गलमु'। अम्बरीषशब्दस्य भ्राष्ट्रशब्दसाहचर्यं केचिदिच्छन्ति॥ कन्दुर्ना स्वेदिनी स्त्रियाम्। अयोनिर्मितपात्रनामनी। 'पेनमु'। कन्दुशब्दस्य स्वेदनीशब्दसाहचर्यं केचिदिच्छन्ति॥ २९–३०॥

[1] अङ्गारधानी° $B_3$ [2] अलात उ° $B_3$

**अलिंजरः स्यान्मणिकः कर्कर्यालुर्गलन्तिका।**
**पिठरः स्थाल्युखा कुण्डं कलशस्तु त्रिषु द्वयोः॥ ३१॥**
**घटः कुटनिपावस्त्री शरावो वर्धमानकः।**

(वि.) अलिंजर इति—अल शीघ्रं जीर्यते अलिंजरः। 'जूष् झूष् वयोहानौ'। मणति गम्भीरं ध्वनतीति मणिकः। 'मण शब्दे'। महाकुम्भनामनी॥ किरति जलधारामिति कर्करी। 'कृ विक्षेपे'। आ ईषदुदकं लातीति[1] आलु। 'ला आदाने'। गलति ईषदुदकमिति गलन्तिका। 'गल [2]क्षरणे'॥ गलन्तिकानामानि॥ पिठ्यते यह्नमत्र सन्क्लिश्यते पिठरः। 'पिठ हिंसासंक्लेशनयोः'। स्थलन्ति तण्डुलादयोऽस्यामिति [3]स्थाली। 'ष्ठल [4]प्रतिष्ठायाम्'। ओषति भोजनस्थानं गच्छतीति उखा। 'उख गतौ'। कुण्ड्यन्ते तण्डुला अत्र पच्यन्त इति कुण्डम्। 'कुडि दाहे'। कुण्डनामानि॥ कमुदकं लातीति कलशः। 'ला आदाने'। घटते जलाहरणक्रियायामिति घटः। 'घट चेष्टायाम्'। घटशब्दः स्त्रीपुलिङ्गयोर्वर्तते। कुटति स्वनति[5] पूर्यमाणोऽम्भसेति कुटः। 'कुट शब्दे'। नितरां पिबति जलमस्मादिति निपः। 'पा पाने'। इमौ पुनपुंसकयोर्वर्तेते। उदकघटनामानि॥ शरः शीर्यमाणं पतदुदकादिकम् अवतीति शरावः। 'अव रक्षणे'। शरावशब्दः पुनपुंसकयोर्वर्तते। वर्ध्यते छिद्यते महतः कर्मण इति वर्धमानकः। 'वर्ध छेदनपूरणयोः'। वर्धतेऽनेन उदकादिकमिति वा। 'वृधु वृद्धौ'। मृण्मयपतद्ग्रहनामनी॥ ३१॥

[1] $K_1$, $K_6$ add स्वीकरोति [2] 'गल अदने स्रवणे च' $W_2$. [3] तिष्ठन्ति पदार्था अस्यामिति, 'ष्ठा गतिनिवृत्तौ' $F_2$, $Pt_2$. [4] स्थाने $K_5$, $K_6$. [5] $K_5$ adds शब्दं करोति.

(पा.) अलिंजरः स्यान्मणिकः। आवपननामनी[1]। 'निराडुमुंत्तकलु'। भाषान्तरे 'केलपेसरु'॥ [2]कर्कर्यालूर्गलन्तिका। करकनामानि। '[3]गरगे'। 'वर्धनी तु गलन्त्यालुः[4] कर्करी करकोऽपि च' इति वैजयन्ती (पृ. १६३, श्लो. ५७)। अनुक्तम्—'करंको नारिकेलस्य'। स एव करकः नालिकेरसंबन्धी चेत् करंकः स्यात्। 'टंकायंकमण्डलमु[5]'। कृत्तिः [6]करकवर्तिका। स एव करकः चर्मसंबन्धी चेत् करकवर्तिका[6] स्यात्। 'करवतिगे' 'तोलुगिण्डि'॥ पिठरः—कुण्डम्। पचनपात्रनामानि। 'वण्टकुण्डलु'॥ कलशस्तु—घटः कुटनिपौ[7]। घटनामानि। 'रडुव'॥ अस्त्री शरावो वर्धमानकः। शरावनामानि। '[8]मूकुडु'। [9]शरावं तालव्यादि। शालाजिरशब्दोऽपि तद्वदेव॥ ३१॥

1 महाकुम्भ° B₃. 2 आलुः B₃ 3 'गरग' B₃. 4 आलुरित्येव मुद्रितग्रन्थे. 5 B₃ omits 'कमण्डलमु'. 6 °पात्रिका B₃; पत्रिका A₁. 7 कुटो निपः B₃. 8 A₁ adds श्रव 9 शरावः B₃.

**ऋजीषं पिष्टपचनं कंसोऽस्त्री पानभाजनम्॥ ३२॥**
**कुतूः कृत्तेः स्नेहपात्रं सैवाल्पा कुतुपः पुमान्।**
**सर्वमावपनं भाण्डं पात्रामत्रं च भाजनम्॥ ३३॥**

(वि.) ऋजीषमिति—अर्जयत्यपूपादिकमिति [1]ऋजीषम्। 'अर्ज अर्जने'। पिष्टं पच्यतेऽस्मिन्निति पिष्टपचनम्[2]। पिष्टपचनसाधनस्य ऋचीषमिति वा पाठः। नामनी॥ काम्यतेऽस्मिन्निःसृतं[3] पानं कंसः। 'कमु कान्तौ'। पानस्य भाजनं पानभाजनम्। भोजनकाले चोष्याद्याहाराधारस्य कांस्यादिसाधनस्य नामनी॥ कुत्सितं शुद्धिरहितं चर्म तन्यतेऽत्र कुतूः। 'तनु विस्तारे'। कृत्तिनिर्मितस्नेहपात्रनाम॥ अल्पा कुतूः कुतुपः। अल्पकुतूनाम॥ आ समन्तात् [4]उप्यते न्यस्यते धान्यादिकमस्मिन्निति आवपनम्। आङ्पूर्वो वपिः न्यसने[5]। [6]भन्दयति आधेयस्य कल्याणं करोतीति भाण्डः। 'भदि कल्याणे सुखे च'। सर्वपात्राणां साधारणनामनी॥ पाति[7] [8]मृगादन्नादिकमिति पात्रम्। 'पा रक्षणे'। अमति संभजति, भुङ्क्ते निर्दुष्टमन्नमत्रेति अमत्रम्। 'अम गत्यादिषु'। भज्यते [9]भोक्तृणेति भाजनम्। 'भज सेवायाम्'। भोजनपात्रनामानि॥ ३२–३॥

1 ऋज्यते पिष्टपाकादि, 'ऋजि भर्जने' W₂; K₅ adds इन्धनत्वात्. 2 W₂ adds 'डुपचष् पाके'. 3 पानार्थं F₂, Pt₂. 4 आवपन्ति K₅, K₆. 5 'डुवप् बीजसंताने' K₆. 6 मण्डयति K₅. 7 K₆ adds पालयति. 8 मृगादिसंसर्गात् K₅, W₂. 9 आधेयेन Pt₂.

(पा.) ऋजीषं पिष्टपचनम्। पिष्टानां[1] पचनपात्रमृजीषं स्यात्। 'शिरीषं पुरीषं करीषम् ऋजीषं तरीषम्' इति दीर्घमध्येषु सरस्वतीकण्ठालंकारः। '[2]पिष्टपचनं स्पृजिपम्' इति नाममाला। 'चाणरि[3]'॥ कंसोऽस्त्री पानभाजनम्। पानपात्रनामनी। 'गिण्डि'। रूढशब्दत्वात् हेमरजतादिनिर्मितमपि कंसमेव। स्वार्थे ष्यञि प्राप्ते कांस्यमपि स्यात्। 'कांस्यं कंसोऽस्त्रियां पानपात्रे तैजस आढके' इति वैजयन्ती (पृ. २३०, श्लो. ११)। कुतूः—स्नेहपात्रम्। चर्ममयं स्नेहपात्रं कुतूः स्यात्। '[4]नूनेशिद्वे'। सैवाल्पा—पुमान्। अल्पा सैव कुतूः कुतुपः स्यात्। 'तल्लिगे'॥ अनुक्तम्—'काचपात्रे तु कुल्लारम्'। काचपात्रनामनी। 'पिंगाल्यिगिने'। 'अथ मृद्भाण्डमुष्ट्रिका'। मृत्पात्रनाम। 'मंटिकुंड'। सर्वमावपनं भाण्डम्। अलिञ्जराद्यावपनान्तं सर्वं भाण्डं स्यात्॥ पात्रामत्रं च भाजनम्। कांस्यपात्रनामानि। 'कंचमु'। चशब्दाद्[5] भाण्डपर्यायोऽपि स्यात्॥ ३२–३॥

[1] पिष्टस्य $B_3$ [2] पिष्टि° $A_1$. [3] $B_3$ omits. [4] 'नूनेसिद्दे' $A_1$ [5] चकारात् $B_3$.

दर्वी कम्बिः खजाका च स्यात्तर्दूर्दारुहस्तकः।
अस्त्री शाकं हरितकं शिग्रुरस्य तु नालिका॥ ३४॥
कडम्बश्च कलम्बश्च वेषवार उपस्करः।

(वि.) दर्वीति—दृणाति पाक्यमन्नमनयेति दर्वी। 'दृ विदारणे'। दर्विरिति वा पाठः। [1]कम्यते उष्णान्नस्पर्शपरिहारायेति कम्बिः। 'कमु कान्तौ'। खजति मथ्नाति अन्नमनयेति खजाका। 'खज मन्थे'। कांस्यदर्वीनामानि॥ उष्णपायसादिकं तनोत्यनया तर्दूः। 'तनु विस्तारे'। तरत्यनया उष्णभयमिति वा। 'तॄ प्लवनतरणयोः'। दारुमयहस्तवद्विशालदर्वीनाम॥ शक्यते भोक्तुमनेनेति शाकम्। 'शक्लृ शक्तौ'। प्रायेण हरितवर्णत्वात् हरितकम्। शिनोति तनूकरोत्यरुचिमिति शिग्रुः। 'शिञ् निशातने'। शाकमात्रनामानि॥ कड्यते त्वचमुत्सृज्य[2] भक्ष्यते कडम्बः। कलम्बश्च। 'कडु [3]घसने'। शाकनालनामानि॥ वेषं[4] पच्यमानशाकव्याप्तं[5] वृणोतीति वेषवारः। 'वृञ् वरणे'। उपक्रियते[6] संस्क्रियते शाकमनेनेति उपस्करः। 'डुकृञ् करणे'। मरीचिहिङ्ग्वादिसंस्कारनामनी॥ ३४॥

[1] काम्यते $K_1$, $W_2$. [2] भुज्यते $F_2$, $Pt_2$. [3] अदने $Pt_2$. [4] वेषं $Pt_2$; वेषो $W_2$. [5] व्याप्ति $F_2$, $W_2$. [6] उपस्करोति $Pt_2$.

(पा.) दर्वि कम्बि —दारुहस्तक । तद्धूनामानि । 'तेड्डु' । तड्डूशब्दस्य खजूकाशब्दसाहचर्यमपि केचिदिच्छन्ति । केचिद्दारुहस्तकशब्दसाहचर्यमिच्छति । 'तड्डूर्द्वयो खजूका स्यात्' इति नाममाला ॥ अस्त्री शाक—शिग्रु । शाकनामानि । अस्त्रीशब्देन शाक पुनपुसक । हरितक रूपभेदात् नपुसकम् । शिग्रुशब्दोऽनभिधानात् स्त्रीपुलिङ्गयोरन्यतर । 'शाकोऽस्त्री हरितक शिग्रु [1]स्त्री इति वैजयन्ती (पृ १६६, श्लो ९०)। 'पुलिङ्ग शाकमात्रे स्यात्। शिग्रु शोभाञ्जनेऽपि च' इति रभसकोश ॥ अस्य तु—कदम्बश्च कलम्बश्च । अस्य तु नाडिकेति शाकस्य वल्कलम् । सा नाडिका कदम्बश्च कलम्बश्च स्यात्। 'वडे [2]कूर कुतुचिन नार'॥ वेशवार उपस्कर । [3]सस्कारनामनी । वेसवारप्रसभसेतुसिनीवालीति [4]दन्त्यसकारेषु वर्णनिर्देशना ॥ ३४ ॥

[1] अस्त्री $A_1$ [2] $B_3$ omits [3] समार° $A_1$ [4] दन्त्यव ▒ $B_3$

**तिन्त्रिणीक च चुक्रं च वृक्षाम्लमथ वेल्लजम् ॥ ३५ ॥**
**मरीच कोलक कृष्णमूषण धर्मपत्तनम् ।**

(वि.) तिन्त्रिणीकमिति—ताडयति वातमाहन्तीति [1]तिन्त्रिणीकम् । 'तड आघात'। तिन्त्रिणीवृक्षजातत्वाद्वा । चुक्रयति व्यथयति दन्तानिति चुक्रम्[2]। 'चुक्र व्यथने'। तिन्त्रिणीवृक्षस्याम्ल वृक्षाम्लम् । तिन्त्रिणीफलनामानि ॥ वेल्ले समुद्रवेलातटे प्रायेण जायते वेल्लजम्[3]। [4]जिह्वा म्रियते इव व्यथतेऽनेनेति मरीचम् । 'मृङ् प्राणत्यागे'। कुडत्यल्पीभवतीति कोलकम्[5]। 'कुड अल्पीभावे'। कृष्णवर्णफलत्वात् कृष्णम् । ऊषति तापयतीति ऊषणम् । 'ऊष [6]दाहे'। धर्मपत्तनाख्यस्थानविशेषे भव धर्मपत्तनम् । मरिचनामानि ॥ ३५ ॥

[1] तिन्तिडीक $W_2$ [2] चकति तर्पयति चक तृप्तौ $F_2$ $Pt_2$ [3] $K_3$ $W_2$ add जनी प्रादुर्भाव [4] जिह्वाग्र $Pt_2$ [5] कोलात सङ्घातमवति कुल सघाते' $Pt_2$ [6] रुजाया $K_3$ $K_6$

(पा.) तिन्त्रिणीक—वृक्षाम्लम् । तिन्त्रिणीफलनामानि । 'चिन्तपण्डु' । अथ वेल्लज मरिचम् । ह्रस्वदीर्घोभयेकार । 'मरीच मरिच कोलम्' इति रभसकोश । अनुक्तम्—

'कोलक कृष्णसुपणमूषण धर्मपत्तनम् ।
श्याम च ।'

मरिचनामानि । 'मिरियालु' ॥ ३५ ॥

**जीरको जीरणोऽजाजी कणा कृष्णे तु जीरके ॥ ३६ ॥**
**सुषवी कारवी पृथ्वी पृथुः कालोपकुञ्चिका ।**

(वि.) जीरक इति—जीर्यतेऽन्नमनेनेति जीरकः । जीरणश्च । जरण[1] इति वा पाठः । 'जॄष् वयोहानौ'। अज स्वाभाविकमग्निम्[2] अजत्याक्षिपतीति अजाजी । 'अज गतिक्षेपणयोः'। कणाः सन्त्यस्यामिति[3] कणा । जीरकनामानि ॥ सुष्ठु सवति मन्दमग्निं प्रेरयतीति सुषवी । 'षू प्रेरणे'। कारुवदग्निप्रदीपनकर्मणि नैपुण्यात्[4] कारवी । [5]बृहत्कण-योगात् पृथ्वी । पृथुश्च । [6]कालवर्णत्वात् काला । उपकुञ्चयति वातादिकमल्पीकरोतीति उपकुञ्चिका । 'कुञ्च गतिकौटिल्याल्पीभावयोः'। कृष्णजीरकनामानि ॥ ३६ ॥

[1] जरयति $W_2$ [2] मन्दाग्निं $W_2$, $Pt_2$ [3] अस्या $Pt_2$ [4] निपुणत्वात् $W_2$, $Pt_2$ [5] कृष्ण° $K_6$, $Pt_2$ [6] कृष्ण° $K_3$, $K_6$

(पा.) जीरको जीरणो—कणा[1] । जीरकनामानि । 'जीरकर्'। कृष्णे तु जीरके—कालोपकुञ्चिका । कृष्णजीरकनामानि । 'नल्जीलकर्' ॥ ३६ ॥

[1] कणे $A_1$

**आर्द्रकं शृङ्गवेरं स्यादथ छत्रा वितुन्नकम् ॥ ३७ ॥**
**कुस्तुम्बरु च धान्याकमथ शुण्ठी महौषधम् ।**
**स्त्रीनपुंसकयोर्विश्वं नागरं विश्वभेषजम् ॥ ३८ ॥**

(वि.) आर्द्रकमिति—अर्दयति कफशूलादीनिति आर्द्रकम् । 'अर्द हिंसायाम्'। 'आर्द्रायां भवमिति वा । [1]शृङ्गोपेतं वेरं शरीरमस्येति [2]शृङ्गवेरम् । आर्द्रकनामनी ॥ छादयति पित्तादिदोषानभिभवतीति छत्रा । 'छद अपवारणे'। वितुदति[3] रोगान्नाशयति वितुन्नकम् । 'तुद व्यथने'। कुत्सितं दाहादिरोगं तुम्बयति कुस्तुम्बरु[4] । 'तुबि अर्दने'। धान्यं धान्यसादृश्यमकति प्राप्नोतीति धान्याकम् । 'अक अग कुटिलायां गतौ'। कुस्तुम्बरुनामानि ॥ आतपेन शुण्ठति शुष्यतीति शुण्ठी । 'शुठि शोषणे प्रतिघाते च'। महच्च तदौषधं च महौषधम् । [5]विश्वभेषजनामैकदेशत्वाद् विश्वम् । नगराख्यदेशे समीचीनं भवतीति नागरम् । बहुरोगभेषजत्वाद् [6]विश्वभेषजम् । शुण्ठीनामानि ॥ ३७–८ ॥

[1] $K_6$ adds क्षुद्रावयवं, क्षुद्रशृङ्गावयवोपेतं $K_3$, $K_5$, $W_2$ [2] शृङ्गिबेरं $K_3$, $K_6$
[3] त्रिदोषान् पित्तादिरोगान् $P_3$, $Pt_2$ [4] कुस्तुम्बुरु $K_6$ [5] विश्वनामैकदेशत्वात् $Pt_2$
[6] विश्वाख्यभेषजत्वात् $Pt_2$

(पा.) आर्द्रकं शृङ्गवेरं स्यात्। [1]आर्द्रकनामनी। 'अल्लु'। अथ छत्रा—धान्याकम्। 'छत्रा [2]कुस्तुम्बरी धान्या धन्या धाना धनीयिका' इति वैजयन्त्यां (पृ. १२७, श्लो. ४९) प्रकारान्तरेणापि पठितम्। कुस्तुम्बर्या नामानि। 'कोतिमिदि'॥ अथ शुण्ठी—विश्वभेषजम्। शुण्ठीनामानि। ऊषणं सिहणं च स्यात्। एते द्वे च॥ ३७-८॥

[1] आर्द्रशुण्ठीनाम $A_1$. [2] कुस्तुमुरुः $A_1$.

**आरनालकसौवीरकुल्माषाभिषुतानि च।**
**अवन्तिसोमधान्याम्लकुञ्जलानि च काञ्जिके॥ ३९॥**

(वि.) आरनालकमिति—आरनालमन्नम्। [1]तन्निस्रावजत्वाद् आरनालकम्। सुवीराख्यदेशे प्रायेण भवतीति सौवीरम्। कुल्माषैरर्धस्विन्नैर्जीरकादिभिरभिपूयते परिवास्यत इति कुल्माषाभिषुतम्। 'षुञ् अभिषवे'। [2]अवन्त्याख्यदेशे सूयते प्रायेण सपद्यत[3] इति अवन्तिसोमम्। पूर्वोक्त एव धातु। धान्यं तण्डुलक्षालनोदक कालेनाम्लीभवति [4]धान्याम्लम्। कुत्सित रसयुक्तजलमस्येति कुंजलम्। केन जलेन अञ्जिका अभिव्यक्तिरस्येति काञ्जिकम्। काञ्चिकमिति पाठे कञ्चयति दीपयति अग्निम्। 'कचि दीप्तिबन्धनयोः'। काञ्जिकनामानि॥ ३९॥

[1] तन्निसृत° $Pt_2$ [2] अवन्तिदेशे $K_3$ [3] जायते, 'षूङ् प्राणिप्रसवे' $W_2$, $Pt_2$.
[4] अम्लीभूतधान्यत्वात् $F_2$, $Pt_2$.

(पा.) आरनालकसौवीर—कुञ्जलानि च काञ्जिके। धान्याम्लनामानि। 'कलि'। गृहोदक स्यात् सधानं रक्षोघ्न शुक्तमित्यपि[1]। एतानि चत्वारि च॥ ३९॥

[1] शुक्लम् $B_2$

**सहस्रवेधि जतुकं बाह्लीकं हिङ्गु रामठम्।**
**तत्पत्री कारवी पृथ्वी बाष्पिका कवरी पृथुः॥ ४०॥**

(वि.) सहस्रेति—सहस्रं बहुतरमपि शाकं स्वगन्धेन विध्यति [1]परिवासयतीति सहस्रवेधि। 'व्यध ताडने'। वृक्षविशेषे[2] जायत इति जतुकम्। बाह्लीकदेशे [3]भवत्वात् बाह्लीकम्। हिनोति गन्धेन गृहान्तरमपि गच्छतीति हिङ्गु। 'हि गतौ'। रामठदेशे वृक्षविशेषे भवं रामठम्। हिङ्गुनामानि॥ कारुवत् कर्मणि निपुणत्वात् कारवी।

[4]बहुकार्यकरत्वात् पृथ्वी। पृथुश्च। बाष्पं निर्यासं मुञ्चतीति वाष्पिका। कथचित् कवरीसादृश्यात् कवरी। त्वक्पत्रिणो हिङ्गुवृक्षस्य नामानि ॥ ४० ॥

[1] परिहासयति $K_6$. [2] विशेषात् $Pt_2$; $K_2$, $Pt_3$ add 'जनी प्रादुर्भावे'. [3] भवतीति $K_5$, $K_6$ [4] बृहत्करणयोगात् $K_5$, $K_6$.

(पा.) सहस्रवेधि—हिङ्गु रामठम्। हिङ्गुनामानि। तत्पत्री कारवी—कवरी पृथुः। कारव्यादयस्तत्पत्री हिङ्गुपत्रम्। अथवा त्वक्पत्रादयः[1] हिङ्गुपत्रम्।

'त्वक्पत्रं तु समाख्यातं त्वक्पत्रीति च कारवी'।

इति रुद्रः ॥ ४० ॥

[1] पत्रादीनि $A_1$.

**निशाह्वा काञ्चनी पीता हरिद्रा वरवर्णिनी।**
**सामुद्रं यत्तु लवणमक्षीवं वशिरं च तत् ॥ ४१ ॥**

(वि.) निशाह्वेति—निशाया नामान्यस्याः सन्तीति [1]निशाह्वा। काञ्चनवर्णयोगात् काञ्चनी। पीतवर्णयोगात् पीता। [2]हरितं पर्णवर्णसदृशं पीतवर्णं द्रातीति हरिद्रा। 'द्रा कुत्सायां गतौ'। श्रेष्ठवर्णत्वाद् [3]वरवर्णिनी। हरिद्रानामानि ॥ अक्ष्णोति व्याप्नोति बहुतरशाकमपि अक्षीवम्। 'अक्षू व्याप्तौ'। वष्टि कामयते रसाभिव्यञ्जकत्वादेतदिति वशिरम्। 'वश कान्तौ'। समुद्रे भवं सामुद्रम्[4]। समुद्रोद्भवलवणनामनी ॥ ४१ ॥

[1] निशाख्या $K_5$, $K_6$, $Pt_2$. [2] हरिद्वर्णं द्राति $F_2$, $Pt_2$ [3] वरः श्रेष्ठः वर्णोऽस्या अस्तीति $K_3$ [4] $W_2$ adds लुनाति जाड्यं लवणम्.

(पा.) [1]निशाख्या काञ्चनी—वरवर्णिनी। हरिद्रानामानि। 'पसपु' ॥ सामुद्रं यत्तु—[2]वशिरं च तत्। समुद्रलवणम् अक्षीवं स्यात्। तदेव वशिरं स्यात्। तालव्यमध्यः। अक्षीवं च शिवं च तत्—इति पाठेऽपि तदेव शिवशब्दस्तालव्यादि ॥ ४१ ॥

[1] निशाह्वा $B_3$. [2] वसिरम् $A_1$.

**सैन्धवोऽस्त्री शीतशिवं माणिमन्थं च सिन्धुजे।**
**रौमके वस्तकं पाक्यं विडं च कृतके द्वयम् ॥ ४२ ॥**

(वि.) सैन्धव इति—सिन्ध्वाख्यदेशे भव [1]सैन्धवम्। शीत मन्दाग्निं शिनोति तनूकरोतीति [2]शीतशिवम्। 'शिव् निशातने'। मणिबन्धाख्यगिरौ भव माणिबन्धम्। माणिमन्थमिति वा पाठः। सिन्धुदेशजलवणनामानि॥ रुमाख्याकरे भव रौमकम्। वस्तोऽजः तस्य ईषद्गन्धयोगात् वस्तकम्। वसुकमिति वा पाठ। रुमाख्याकरोद्भवलवणनामनी॥ पक्तव्य पाक्यम्। विडति [3]विष्कम्भशूलादि[4] नाशयतीति विडम्। 'विड भेदने'। पक्तव्यलवणनामनी॥ ४२॥

[1] सिन्धुदेशे भव. $F_2$, $Pt_2$ [2] $F_2$, $Pt_2$ add उष्णवीर्यत्वात् [3] विव° $W_2$
[4] आदिक $K_3$, $K_6$.

(पा.) सैन्धवोऽस्त्री—सिन्धुजे। [1]सैन्धवलवणनामानि। रौमके वस्तकम्। रौमकलवणनामनी। 'दोनवुप्पु'॥ पाक्य विड—द्वयम्। विडलवणनामनी॥ ४२॥

[1] सिन्धुदेशज° $B_3$

**सौवर्चलेऽक्षरुचके तिलकं तत्र मेचके।**
**मत्स्यन्डी फाणितं खण्डविकारे शर्करा सिता॥ ४३॥**

(वि.) सौवर्चल इति—सौवर्चलाकरोद्भवत्वात् सौवर्चलम्। अक्ष्णोति[1] वह्नौपधादिकमिति अक्षम्। 'अक्षू व्याप्तौ'। रोचतेऽन्नमनेनेति रुचकम्। 'रुच दीप्तौ अभिप्रीतौ च'। सुवर्चलाख्याकरोद्भवलवणनामानि॥ [2]तिलति स्निह्यतीति तिलकम्। 'तिल स्नेहने'। [3]कृष्णवर्णरुचकनाम॥ [4]मन्द स्यन्दत इति मत्स्यन्डी। 'स्यन्दू प्रस्रवणे'। मत्स्यण्डीति वा पाठ। श्रेष्ठगुडचूर्णाभनिकृष्टशर्कराविकारनाम॥ फाण्यते पक्वसमये [5]घाटान्तरे निक्षिप्यते फाणितम्। 'फण गतौ'। पङ्कवदपिण्डावस्थगुडविकारनाम॥ विशेषनिष्पीडितपाकजखण्डविकारस्य नामानीति केचित्॥ शीर्यत इति शर्करा। 'शॄ विशरणे'। [6]धवलवर्णत्वात् सिता। पञ्चसारानाम्नि [7] शर्करायां नाम॥ ४३॥

[1] $K_3$ adds व्याप्नोति [2] तिलवत् $K_5$, $K_6$ [3] स्यण° $K_5$ [4] मन्दते $K_6$
[5] घटादौ $W_2$. [6] आद्यन्तश्वेतत्वात् $K_6$, अत्यन्त° $K_5$ $W_2$ [7] °धारा° $K_6$

(पा.) सौवर्चलेऽक्षरुचके[1]। सौवर्चललवणनामानि। 'ना चक्रे शकटेऽप्यक्ष द्वौ सौवर्चल इन्द्रिये' इत्यभिधानादक्ष पान्तम्। 'अक्ष्य काङ्क्ष्य रुचिष्य च' इति पाठादक्ष्य यान्त च॥ तिलक तत्र मेचके। नीलसौवर्चललवण तिलक स्यात्।

अनुक्तम्—'पटु क्षेत्र्यं चोपरजे'। क्षेत्रजलवणनामानि॥ मत्स्यण्डी फाणितं खण्डविकारे। खण्डशर्करानामानि॥ शर्करा सिता। [2]शर्करानामनी॥ ४३॥

[1] °रुचिके $B_3$. [2] पञ्चधारा° $B_3$.

**कूर्चिका क्षीरविकृतिः स्याद्रसाला तु मार्जिता।**
**स्यात्तेमनं तु निष्ठानं त्रिलिङ्गा वासितावधेः॥ ४४॥**

(वि.) कूर्चिकेति—कूर्चकः[1] क्षीरमस्तु, तदस्यास्तीति कूर्चिका। नवप्रसूतगोक्षीरविकारनाम[2]॥ दध्यादिगतनानाविधरसयोगाद्[3] रसाला। रसान् आलातीति रसाला। 'ला दाने'। यत्सूदशास्त्रम्—

'अर्धाढकं सुदृढपर्युषितस्य दध्नः खण्डस्य षोडश पलानि शशिप्रभस्य।
सर्पिष्पलं मधुपलं मरिचद्विकर्षं शुण्ठ्याः पलार्धमपि चार्धपलं चतुर्णाम्॥
श्लक्ष्णे पटे ललनया मृदुपाणिघृष्टा कर्पूरधूलिसुरभीकृतभाण्डसंस्था।
एषा वृकोदरकृता सुरसा रसाला या स्वादिता भगवता मधुसूदनेन॥'

इति क्षीरस्वामी (पृ. २०९)॥ पटे निधाय मृज्यते शोध्यते मार्जिता। 'मृजूष् शुद्धौ अलंकारे च'। शिखरिणीनाम्नो लेह्यस्य नामनी॥ तिम्यति आर्द्रीभवतीति तेमनम्। 'तिम[4] आर्द्रीभावे'। नितिष्ठत्यन्तं गच्छत्यनेनान्नमिति निष्ठानम्। [5]चोष्यनामनी॥ इत आरभ्य वासितशब्दपर्यन्तं त्रिलिङ्गाः॥ ४४॥

[1] कूर्चं $Pt_2$. [2] $K_5$, $K_4$ omit विकार. [3] संप्रयोगात् $K_2$. [4] तिम ष्टिम $K_3$, $K_4$, $W_2$. [5] व्यञ्जननामनी $W_2$.

(पा.) कूर्चिका क्षीरविकृतिः स्यात्। क्षीरविकारः कूर्चिका स्यात्। संस्कारभेदात् सा द्विविधा।

'दध्ना सह पयः पक्वं यत्स्यात् सा दधिकूर्चिका।
तक्रेण पक्वं यत्क्षीरं सा भवेत् तक्रकूर्चिका॥'

स्याद्रसाला तु मार्जिता[1]। शिखरिणीनामनी। 'शिखरि'॥

'अपक्वतक्रं सघोषं चातुर्जातगुडार्द्रकम्।
सजीरकं रसाला स्यात् मार्जिका शिखरिण्यपि॥'

स्यात्तेमनं तु निष्टानम्। तेमनं निष्टानं स्यात्। 'पळिचें'। अनुक्तम्—सूदः पुंस्यस्त्रियां सूपम्। सूपनामनी। 'पप्पु'॥ उपदंशोऽपदंशकः। उपदंशनामनी॥ त्रिलिङ्गा वासितावधेः। वासितशब्दावधेस्त्रिलिङ्गा.। शूल्या पेशी। पैठरी मिस्सा॥ ४४॥

[1] माजिका $A_1$, $B_2$

**शूलाकृतं भटित्रं च शूल्यमुख्यं तु पैठरम्।**
**प्रणीतमुपसंपन्नं प्रयस्तं स्यात्सुसंस्कृतम्॥ ४५॥**

(वि.) शूलाकृतमिति—शूलेनोद्भिद्य पच्यत[1] इति शूलाकृतम्। भटति विभर्ति पुष्णातीति भटित्रम्। 'भट भृतौ'। शूलेन[2] संस्कृतं शूल्यम्। यद्वेणवादिशलाकया उद्भिद्य जम्बीररसादिभावितमांसादिकम् अङ्गारेषु पच्यते तस्य नामानि॥ उखायां संस्कृतं उख्यम्। पिठरे संस्कृतं पैठरम्। स्थाल्यां संस्कृतस्य पिष्टादेर्नामनी॥ रसादिना [3]प्रकर्षं नीतं प्रणीतम्। उप समीपे रसेन संपन्नम् उपसंपन्नम्। पाकरसरूपातिशयान्वितस्यान्नादेर्नामनी॥ प्रशस्यत इति प्रशस्तम्। 'शसु स्तुतौ'। प्रयस्तमिति पाठे [4]प्रयत्ननिष्पन्नम्। 'यसु प्रयत्ने'। कर्पूरादिसंस्कृतस्य लेह्यादेर्नामनी॥ ४५॥

[1] शूलेन कृतं $W_2$ [2] शूले $W_2$ [3] प्रकर्षेण $W_2$ [4] प्रकर्षेणातिशयित $K_3$, $K_6$

(पा.) शूलाकृत—शूल्यम्। शूले पक्वस्य[1] नामानि। 'कर्कुट्टु'। उख्य तु पैठरम्। पिठरे[2] पक्वस्य नामनी। प्रणीतमुपसंपन्नम्। [3]उदकपक्वस्य नामनी॥ प्रयस्तं स्यात् सुसंस्कृतम्। तैलघृतादिभिर्घृष्टस्य नामनी। 'यसु प्रयत्न इत्यतः क्तः' इति सुभूतिटीकावचनात् प्रयस्तमन्तस्थमध्यम्॥ ४५॥

[1] दग्धस्य $A_1$ [2] भाण्डे $A_1$ [3] उदकेन $A_1$

**स्यात् पिच्छिलं तु विजिलं संमृष्टं शोधितं समे।**
**चिक्कणं मसृणं स्निग्धं तुल्ये भावितवासिते॥ ४६॥**

(वि.) स्यादिति—पिच्छा [1]अस्य संजाता पिच्छिलम्। विजते सद्रवत्वेन चलतीति विजिलम्। 'ओविजी भयचलनयोः'। मण्डान्वितादेर्नामनी॥ संमृज्यत इति संमृष्टम्। 'मृजूष् शुद्धौ'। शोध्यत इति शोधितम्। 'शुध शौचे'। वस्त्रादिना परिशोधितस्य तक्रादेर्नामनी॥ पेषणकाले चिमिति कणति चिक्कणम्[2]। 'कण शब्दे'। मस्यति द्रवत्वेन परिणमति मसृणम्। 'मसी परिणामे'। स्निह्यतीति स्निग्धम्। 'ष्णिह प्रीतौ'।

स्निग्धस्य जलयुक्तस्य गोधूमपिष्टादेर्नामानि ॥ भाव्यते वास्यते भावितम् । 'भुवोऽव-कल्कने' । वास्यत इति वासितम्[3] । 'वस स्नेहमोहच्छेदापहरणेषु' । कृत्रिमगन्धान्तरवत पानीयादेर्नामनी ॥ ४६ ॥

[1] अत्र अस्तीति $K_5$ $K_6$ [2] चित्यत इति, 'चिती सज्ञाने' $F_2$, $Pt_2$ [3] धूपित स्विति विदुरिति पाठे वासितमिति एक नाम धूपितस्य $K_5$, $K_6$

(पा.) स्यात् पिच्छिल तु विजिलम् । [1]घनीभूतस्य दध्यादेर्नामनी । 'जिनुगज्जिद-नदानि पेरु' ॥ समृष्ट शोधित समे । [2]वस्त्रादिना [3]शोधितस्य [4]वस्तुनो नामनी । 'कोलगिन्नचातकोलचिनवि' ॥ चिक्कण—स्निग्धम् । सान्द्रवस्तुनामानि । 'साय सूक्ष्म मसृण मसूर सिन्दूर सधानम्' इत्यूष्मभेदपाठात् मसृण दन्त्यम् ॥ तुल्ये भावितवासिते । कर्पूरादिभि [5]सौगन्ध्यादिगुणापादितस्य नामनी ॥ ४६ ॥

[1] $A_1$ omits [2] कुद्दालादिना $A_1$ [3] $A_1$ adds परि° [4] $B_2$ omits [5] आपादितसौगन्ध्यस्य $B_2$

## आपक्कं पौलिरभ्यूषो लाजाः पुंभूम्नि चाक्षताः ।
## पृथुकः स्याच्चिपिटको धाना भृष्टयवे स्त्रियः ॥ ४७ ॥

(वि.) आपक्कमिति—ईषत्पक्कम् आपक्कम् । पुलति ईषत् [1]पृथु भवतीति पौलि । 'पुल महत्वे' । अभ्यूषति रुजतीत्यभ्यूष । 'ऊष रुजायाम्' । भृष्टचणकादेर्नामनी ॥ लाज्यन्ते भृज्यन्त इति लाजा । 'लाज[2] भर्जने भर्त्सने च' । भृष्टधान्याना नाम । न विद्यते क्षत येषा ते अक्षता । अक्षतशब्द लाजशब्दवत् पुसि भूम्नि च वर्तते । न क्षण्यन्त इति वा अक्षता । 'क्षणु हिंसायाम्' । हरिद्रादियुक्तशाल्यादिबीजनाम ॥ भर्जनात् पृथु भवतीति पृथुक । मुसलाघातेन चिपिटो भवतीति चिपिटक । सार्द्रान् व्रीहीन् भृष्टान् कृत्वा उदूखले मुसलेन कुट्टयित्वा भक्ष्यत्वेन कल्पिताना[3] नामनी ॥ [4]धीयन्ते धाना । 'डुधाञ् धारणपोषणयो' । भृष्टयवनाम ॥ ४७ ॥

[1] महद्भवतीति $F_2$, $Pt_2$ [2] 'लाज लाजि भर्जने' $K_5$ $K_6$ [3] $W_2$ adds परि° [4] न धीयन्त भ्राष्ट्रादन्यत्र $K_5$, $K_6$, धनन्ति पुष्णन्ति, 'धन धान्ये' $Pt_2$

(पा.) आपक्क—अभ्यूष । आसमन्तात्पक्वनिष्पावादिनामानि । 'गुल्लिडु' । आपक्क पुंनपुसकम् । पौलि पुलिङ्ग ॥ लाजा —चाक्षता । 'बहुवस्तु सवचो लाजा' इति वामनसूत्रात् लाजशब्दो बहुवचनान्त पुलिङ्ग । लाजा इति पृथक्प्रकरणात्

तत्पर्यायस्यापि पुस्त्व बहुवचन च। 'लाजा अक्षता असव प्राणा' इति तद्वृत्त्या अक्षतशब्दश्च पुलिङ्गो बहुवचनान्त । 'अक्षत तण्डुले क्लीव न ना लाजेषु कथ्यते' इति केषाचिदपुलिङ्गो बहुवचनान्तश्च ॥ पृथुक स्याच्चिपिटक । पृथुकनामनी। 'अटुकुलु'॥ धाना—स्त्रिय । भृष्टयवतण्डुला धाना स्यु । स्त्रिय इत्यनेन स्त्रीलिङ्गो बहुवचनान्तश्च । 'वचिनयवलु'। अनुक्तम्—शम्बूकास्तण्डुलकणा । तण्डुलकणनाम। 'नूकलु'। समौ शदकतण्डुलौ। समीचीनतण्डुलनामनी। गोधूमचूर्णे कणिका। गोधूमचूर्णनाम। पलल तिलचूर्णके। तिलाना चूर्ण पलल स्यात्॥ ४७॥

## पूपोऽपूपः पिष्टकः स्यात् करम्भो दधिसक्तवः।
## भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री स दीदिविः॥ ४८॥

(वि.) पूप इति—पूयत पाकसमये लग्न भस्म मृज्यतेऽस्येति पूप । 'पूञ् पवने'। न पूय[व्य]ते न विशीर्यत इति अपूप । 'पूयी विशरणे'। पिष्टविकारत्वात् पिष्टक[2]। गोधूमादिपिष्टकृतस्य भक्ष्यस्य नामानि॥ कीर्यते दध्यनेति करम्भ । 'कॄ विक्षेपे'। दध्युपसिक्तसक्तुनाम॥ भस्यते मनुष्यैरिति भिस्सा। 'भस [3]भक्षणदीप्त्यो'। भज्यते सेव्यत इति भक्तम्। 'भज सेवायाम्'। अद्यत इत्यन्ध । 'अद भक्षणे'। सान्तोऽयम्। अद्यत इति अन्नम्[4]। आज्येन उद्यते सिच्यत इति ओदनम्। 'उन्दी क्लेदने'। अनेन दीव्यति प्रहृष्यतीति दीदिवि । 'दिवु क्रीडादौ'। पुमानयम्। अन्ननामानि॥ ४८॥

[1] पुनाति $W_2$ $Pt_2$　[2] पिष्टस्य विकार $W_2$　[3] भसन° $K_6$　[4] अनन्ति, 'अन प्राणने $Pt_2$　[5] उन्दति[उनत्ति]क्लिद्यति $Pt$.

(पा.) पूपोऽपूप पिष्टक स्यात्। भक्ष्यनामानि। पूपलिकापि।

'पूरिकया धारिकया पोलिकया इड्डरिकया च वटकेन।
किमितरपूपलिकाभि क्षीरसखो मन्दक स यदि॥'

करम्भो दधिसक्तव । दध्युपसिक्ता सक्तव करम्भ स्यात्। पवर्गचतुर्थान्त । अनुक्तम्—'चक्षुष्या [1]धुम्बिका भृष्ट्रि पुलिङ्गेऽपि च सक्तव'। सक्तुनामानि॥ भिस्सा स्त्री—स दीदिवि । अन्ननामानि। स दीदिविरिति दीदिविशब्दस्याप्यस्त्रीत्वमुक्तम्। 'अशन कूरमाहारो वाजो वा दीदिवि स्त्रियाम्' इति केषाचित् स्त्रीपुसलिङ्ग ॥ ४८॥

[1] जन्दिका $A_1$

**भिस्सटा दग्धिका सर्वरसाग्रे मण्डमस्त्रियाम् ।**
**मासराचामनिस्रावा मण्डे भक्तसमुद्भवे ॥ ४९ ॥**

(वि.) भिस्सटेति—कुत्सिता भिस्सा भिस्सटा। दग्धैव दग्धिका। स्थाल्यामधो दग्धान्ननाम॥ मण्डयति रसमिति मण्डम्। 'मडि भूषायाम्'। इक्षुरसादेर्निर्मलस्योपरिभागस्य नाम॥ मस्यति घनीभावेन परिणमति[1] मासरः। 'मसी परिणामे'। आचम्यते ओदनाभावेन आचामः। 'चमु अदने'। निस्राव्यते स्थाल्यामवस्राव्यते[2] [3]निस्राव.। 'स्रु स्रवणे'। 'स्रु गतौ' वा। भक्तसमुद्भवमण्डनामानि॥ ४९॥

[1] परिणमते $K_5$, $K_6$ [2] अवस्रावयते $W_2$ [3] नि.स्रावः $K_6$

(पा.) भिस्सटा दग्धिका। दग्धान्ननामनी। 'माडु'। 'दग्धान्नं [1]भिस्सटा सिद्धी' इति वैजयन्ती (पृ. १६५, श्लो. ७७)॥ अनुक्तम्—मुद्गादिसिद्धं कृसरम्। मुद्गान्ननाम। 'पुलगम्'॥ सयावो यन्त्रपातितः। यन्त्रपातितो मृणालतन्त्वाकृतिरोदनः सयावः स्यात्। 'सरे सत्तु'॥ सर्वरसाग्रे मण्डमस्त्रियाम्। सर्वेषामन्नादीनामग्ररसो मण्डः स्यात्॥ मासराचामनिस्रावाः—समुद्भवे। अन्नाग्ररसनामानि। द्वन्द्वान्तश्रूयमाणपुंस्त्वानि॥४९॥

[1] भिरिसटा इति मुद्रितग्रन्थे

**यवागूरुष्णिका श्राणा विलेपी तरला च सा ।**
**गव्यं त्रिषु गवां सर्वं गोविड् गोमयमस्त्रियाम् ॥ ५० ॥**

(वि.) यवागूरिति—यूयते [1]तण्डुलादिनेति यवागूः। 'यु मिश्रणे'। उष्णत्वाद् [2]उष्णिका। श्रायत इति श्राणा। 'श्रा पाके'। विलिम्पति दर्वीमिति विलेपी। 'लिप उपदेहे'। बहुपेयांशत्वेन चञ्चलत्वात् तरला। अल्पान्नपुलाकाया बहुपेयांशाया[3] नामानि॥ गोरिद गव्यम्। गोसम्बन्धिनः सर्वस्य शकृदुव्यतिरिक्तस्य साधारणनाम॥ गोर्विट् पुरीषं गोविट्। गो. पुरीष गोमयम्। गोपुरीषनामनी॥ ५०॥

[1] पाकात् प्राक् मिश्रेन $K_3$, $K_6$ [2] अत्योष्णत्वात् $K_6$. [3] बहूदकायाः $W_2$.

(पा.) यवागूरुष्णिका—तरला च सा। यवागूनामानि। गव्यं त्रिषु गवां सर्वम्। गवां क्षीरादिकं सर्वं गव्यं स्यात्॥ गोविड् गोमयमस्त्रियाम्। [1]गोपुरीषनामनी। 'पेण्ढ'॥ ५०॥

[1] गोमय° $B_2$.

**तत्तु शुष्कं करीषोऽस्त्री दुग्धं क्षीरं पयः समम् ।**
**पयस्यमाज्यदध्यादि द्रप्सं दधि घनेतरत् ॥ ५१ ॥**
**घृतमाज्यं हविः सर्पिर्नवनीतं नवोद्धृतम् ।**

(चि.) तदिति—अग्निमिन्ध[1] करोतीति करीषम्[2]। कीर्यते इन्धनत्वेनेति वा। 'कॄ विक्षेपे'। शुष्कगोमयनाम ॥ दुह्यत इति दुग्धम्। 'दुह प्रपूरणे'। घस्यत इति क्षीरम्। 'घस्लृ अदने'। पीयत इति पय। 'पा पाने'। सान्तोऽयम्। क्षीरनामानि ॥ पयसो विकार पयस्यम्। दध्याज्यनवनीतादेर्नाम ॥ दध्नो मूल द्रव। दधिमध्य घन। दध्यग्र शर। तत्र घनादितरत् दधिद्रवशरभूत द्रप्समित्युच्यते। द्रवति साराशत्वाद् उपरिस्थितत्वाच्चेति द्रप्सम्। 'द्रु गतौ'। जिघर्ति घृतम्। 'घृ क्षरणदीप्त्यो'। आ ईषदञ्जनीयम् ओदनादौ [4]सेचनीयमिति आज्यम्। 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु'। म्रक्षण सेचनम्। हूयतेऽग्नाविति हवि। 'हु दानादनयो'। सर्पति चलतीति सर्पि। '[5]सृप्लृ गतौ'। उभे सान्ते। घृतनामानि ॥ नव तत्कालदध्नो मन्थनानन्तर नीत ननीतम्। नव तस्मिन् काल एव तक्रादुद्धृत नवोद्धृतम्। मथनानन्तर दध्नो विनिर्गतस्य सर्पिष प्रकृतिभूतस्य साराशस्य नामनी ॥ ५१ ॥

[1] इन्धन $K_5$, $h_6$　　[2] $K_4$ $K_6$ add 'डुकृञ् करणे'　　[3] 'पाङ् पाने' इति वा धातु $W_2$　　[4] सवनीय $K_5$, $K_6$　　[5] $K_2$, $h_6$ add गम्ल

(पा.) तत्तु शुष्क करीपोऽस्त्री। शुष्कगोमय करीप स्यात्। 'पिडक'। केषाचित् 'दोध्लस्तु करीपा स्त्री' इति गोमयखण्डा। 'येरुवु'। गोमन्थि शुष्कगोमय। करीपो गोमन्थि स्यात् ॥ दुग्ध क्षीर पय समम्। क्षीरनामानि। दोहज स्तन्यमूधन्यम्। एतानि च ॥ पयस्यमाज्य दध्यादि। आज्यदध्यादि पयस्य स्यात् ॥ द्रप्स दधि घनेतरत्। सोदक दधि द्रप्स स्यात्। अनुक्तम्—नि सार तद्दधिचुसम्। साररहित दधि दधिचुस स्यात्। 'मीगडतोचिनपेरुगु'। मङ्गल्य श्रीघन दधि। पय पुन्नामनी। 'मीगडपेरुगु'। घृतमाज्य—सर्पि। घृतनामानि ॥ नवनीत नवोद्धृतम्। तस्मिन् दिने मथित्वोद्धृत नवनीत स्यात्। 'वेन्न' ॥ ५१ ॥

**तत्तु हैयङ्गवीनं यद् ह्योगोदोहोद्भव घृतम् ॥ ५२ ॥**
**दण्डाहतं कालशेयमरिष्टमपि गोरसः ।**
**तक्र ह्युदश्विन्मथितं पादाम्ब्वर्धाम्बु निर्जलम् ॥ ५३ ॥**

(वि.) तदिति—ह्यः पूर्वेद्युर्गोदोहः ह्योगोदोहः। तस्य विकारः हैयङ्गवीनम्। पूर्वेद्युर्दुग्धगोक्षीरकृतघृत[1]नवनीतयोर्नाम ॥ [2]मथनदण्डेनाहतं दण्डाहतम्। कलश्यां मन्थनघटे भवं कालशेयम्। न रिष्यति हिंसयति इत्यरिष्टम्[3]। 'रिष हिंसायाम्'। गोः रसः गोरसः। वक्ष्यमाणतक्रोदश्विन्मथितानां प्रत्येकनामानि ॥ तच्यते उदश्विदपेक्षया सकुच्यत इति तक्रम्। 'तञ्चू सकोचने'। चतुर्थांशपरिमितजलेन सहालोडितस्य दण्डाहतस्य नाम ॥ [4]उदकेन श्वयति वर्धते उदश्वित्। 'टुओश्वि गतिवृद्धौ'। अर्धाम्बुना सह मथितस्य तस्यैव नाम॥ मन्थनमात्रात् निष्पन्नं मथितम्। 'मथे विलोडने'। जलमदत्त्वैव लोडितस्य नाम ॥ ५२–३ ॥

[1] °कृतनवनीतघृतनाम $K_2$, $K_3$. [2] मथनादिना $W_2$. [3] $F_2$, $Pt_2$ add सर्वरोगजित्वात्. [4] Gap of nine pages in $K_3$.

(पा.) तत्तु हैयङ्गवीनं—घृतम्। ह्यो गतदिवसः। तस्मिन् गोदोहेन सपन्नं घृतं हैयङ्गवीनं स्यात्॥ दण्डाहतं—गोरसः। गोरसनामानि। अर्शोघ्नं मोरटं घोलं स्याद्रसायनमित्यपि। एतानि च॥ तक्रं—निर्जलम्। पादोदकार्धोदकनिरुदकानि कालशेयानि क्रमात् तक्रोदश्विन्मथितानि स्युः॥ ५२–३ ॥

**मण्डं दधिभवं मस्तु पीयूषोऽभिनवं पयः।**
**अशनाया बुभुक्षा क्षुद् ग्रासस्तु कवलः पुमान्॥ ५४ ॥**

(वि.) मण्डमिति—मस्यति ईषदम्लत्वेन परिणमति[1] मस्तु। 'मसी परिणामे'। दध्युत्पन्नमण्डनाम[2]॥ पीयते वत्सेनैवेति पीयूषः। 'पीङ् पाने'। पेयूष इति वा पाठः। नवप्रसूतधेनुक्षीरनाम[3]॥ अशने भक्षणे इच्छा अशनाया। भोक्तुमिच्छा बुभुक्षा। क्षुध्यत्यनया क्षुत्। 'क्षुध बुभुक्षायाम्'। दीपननामानि॥ ग्रस्यत इति ग्रासः। 'ग्रसु ग्लसु अदने'। भक्षणसमये के तालुनि[4] वलते चलतीति कवलः। 'वल सचलने'। मयूराण्डसमितस्य अन्नपिण्डस्य नामनी॥ ५४ ॥

[1] °णमते $W_2$. [2] द्रवभाग° $W_2$. [3] क्षीरपक तस्य नाम $W_2$. [4] मूर्ध्नि $K_5$, $K_8$

(पा.) मण्डं दधिभवं मस्तु। दध्नो मण्डं मस्तु स्यात्। 'पेरुगुमीगड'। पीयूषोऽभिनवं पयः। आ सप्ताहात्तु पीयूषमिति शास्त्रात् सप्तदिनपयः पीयूषं स्यात्। 'जुन्नु'। अशनाया—क्षुत्। क्षुधानामानि॥ ग्रासस्तु कवल. पुमान्। कवलनामनी। 'कडि'॥ ५४ ॥

**सपीतिः स्त्री तुल्यपानं सग्धिः स्त्री सहभोजनम् ।**
**उदन्या तु पिपासा तृट् तर्षो जग्धिस्तु भोजनम् ॥ ५५ ॥**
**जेमनं लेप आहारो निघसो न्याद इत्यपि ।**

(वि.) सपीतिरिति—सह[1] पीतिः पानं सपीतिः। एकपङ्क्त्युपविष्टानाम् अविशेषेण पानस्य नाम ॥ सह अदनं सग्धिः[2]। एकपङ्क्तौ एकभाजने वा भुजिक्रिया-नाम ॥ उदके इच्छा उदन्या। पातुमिच्छा पिपासा[3]। तर्षणं तृट्। तर्षश्च। 'ञितृषा पिपासायाम्'। जलपानेच्छानामानि ॥ अदनं जग्धिः। 'अद भक्षणे'। भुज्यत इति भोजनम्। 'भुज पालनाभ्यवहारयोः'। जिम्यत इति जेमनम्। 'जिमु अदने'। लिप्यते उपचीयते देहोऽनेनेति लेपः। 'लिप उपदेहे'। आह्रियते[4] भुज्यते आहारः। 'हृञ् हरणे'। नितरामद्यते निघसः। न्यादश्च। 'अद भक्षणे'। भुजिक्रिया-नामानि ॥ ५५ ॥

[1] समाना $F_2$, $Pt_2$ [2] समाना जग्धि. $Pt_2$ [3] $W_2$ adds 'पा पाने'
[4] आहरण $Pt_2$

(पा.) सपीति—तुल्यपानम्। सहपाननाम ॥ सग्धि—सहभोजनम्। [1]सह-भोजननामनी ॥ उदन्या—तर्ष। तृपानामानि ॥ जग्धिस्तु भोजनम्—न्याद इत्यपि। भोजननामानि। अनुक्तम्—'उपोषितस्य या भुक्तिः पारणा सा निगद्यते'। कृतोपवासस्य भोजनं पारणा स्यात् ॥ ५५ ॥

[1] पुनाद्विमि. सहान्नभक्षणनाम $A_1$

**सौहित्यं तर्पणं तृप्तिः फेला भुक्तसमुज्झितम् ॥ ५६ ॥**
**कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम् ।**
**गोपे गोपालगोसंख्यगोधुगाभीरवल्लवाः ॥ ५७ ॥**

(वि.) सौहित्यमिति—सुह्यति तृप्यतीति सुहितः, तस्य भावः सौहित्यम्। 'सुह[1] चक्यर्थे'। चक्यर्थः तृप्त्यर्थः। तृप्यतेऽनेनेति तर्पणम्। तृप्तिश्च। 'तृप प्रीणने'। भुजिक्रियाफलस्य नामानि ॥ [2]फेल्यते भोजनादपास्यते फेला। 'फेल गतौ'। भुक्तेन समुज्झितान्ननाम ॥ काम्यते सर्वैरिति कामम्। प्रकामं च। निकामं च। 'कमु कान्तौ'। पर्याप्यते इच्छाया अन्तः सम्यगाप्यते अनेनेति पर्याप्तम्। 'आप्लृ व्याप्तौ'। इष्यत इति

इष्टम्। 'इष इच्छायाम्'। आप्तुमिच्छा ईप्सा। अस्या अधिकं यथेप्सितम्[3]। यस्य कस्यापि वस्तुन इच्छाधिक्योपेतस्य नामानि ॥ इदानीं पाशुपाल्यमाह—गाः पातीति गोपः। 'पा रक्षणे'। गाः पालयतीति गोपालः। 'पाल रक्षणे'। गाः संचष्टे गोमिने तव गावः सुखेनागता इति गोसंख्यः। 'चक्षिङ् व्यक्तायां वाचि'। गाः दोग्धीति गोधुक्। 'दुह प्रपूरणे'। अभि अग्रे गा ईरयतीति आभीरः। 'ईर प्रेरणे'। गाः वल्लयति कण्डूयनादिना प्रीणयतीति वल्लवः[4]। 'वल्ल प्रीतौ'। गोपनामानि ॥ ५६—७॥

[1] दुह W₂. [2] फेलते K₅, K₆; फेलति भोजनात् चलति, 'फेल्ट गतौ' F₂, Pt₂. [3] ईप्सितमनतिक्रान्तं Pt₂. [4] गोमहिष्यादिकं वल्लमानाः संवृण्वन्तो यान्ति गच्छन्तीति वल्लवाः, 'वल्ल संवरणे' Pt₂.

(पा.) <u>सौहित्यं तर्पणं तृप्तिः</u>। तृप्तिनामानि। '[1]तनिवि'। सुहितस्य भावः सौहित्यमिति व्युत्पत्त्या सुहितस्तृप्तः ॥ <u>फेला भुक्तसमुज्झितम्</u>[2]। भुक्त्वा परित्यक्तमुच्छिष्टान्नं फेला स्यात्। 'फेला फेण्डोलिफेलयः' इति <u>रभसकोशः</u>॥ <u>कामं प्रकामं—यथेप्सितम्</u>। यथेष्टनामानि। क्रियाविशेषणत्वान्नपुंसकानि। [3]काममभोजि। प्रकाममभोजि। अनुक्तम्—[4]ताम्बूलं स्याद्वीटिका स्त्री ताम्बूलं मुखभूषणम्। ताम्बूलनामानि ॥ <u>गोपे गोपाल—आभीरवल्लवाः</u>। गोपालकनामानि। 'गोप' ॥ ५६—७॥

[1] B₃ omits. [2] समुज्झिते B₃. [3] कामभोजि, प्रकामभोजि B₃. [4] स्याद्वीटिका स्त्री क्रमुकं ताम्बूलम् A₁.

**गोमहिष्यादिकं पादबन्धनं द्वौ गवीश्वरे।**
**गोमान् गोमी गोकुलं तु गोधनं स्याद्गवां व्रजे ॥ ५८ ॥**

(वि.) <u>गोमेति</u>—पादे बन्धनमस्य पादबन्धनम्। यादवं धनमिति पाठे गोमहिष्यादिकं धनम्। यदूनामिदं यादवम्।। गोमहिष्यादिनाम ॥ गवामीश्वरे स्वामिनि गवीश्वरे। गावः सन्त्यस्य गोमान्। गोमी च। गोस्वामिनामनी ॥ गवां कुलं [1]समूहो गोकुलम्। गोरूपधनानां समूहो गोधनम्। गोव्रजस्य गोनिवासस्य वा नामनी ॥ ५८॥

[1] संघातः F₂, W₂, Pt₂.

(पा.) <u>गोमहिष्यादिकं पादबन्धनम्</u>। गोमहिषीप्रमुखाः पादबन्धनं स्यात्। <u>रभसकोशेऽपि</u> तथैवोक्तम् 'गोसंख्यायादवं क्लीबं गवादि पादबन्धनम्' इति।

सुभूतिटीकायां तु यादवं धनमिति पठितम्। द्वौ गवेश्वरे—गोमी। गवाध्यक्षनामनी[1]॥ गोकुलं तु—गवां व्रजे। गोव्रजनामानि। 'आवुलदोड्डि'॥ ५८॥

[1] गोष्ठाध्यक्ष° $A_1$.

त्रिष्वाशितंगवीनं तद् गावो यत्राशिताः पुरा।
उक्षा भद्रो बलीवर्द ऋषभो वृषभो वृषः॥ ५९॥
अनड्वान् सौरभेयो गौरुक्ष्णां संहतिरौक्षकम्।

(वि.) त्रिष्विति—पुरा यत्र गावः आशिताः उषिताः[1] तदेव आशितंगवीनम्। यत्र [2]शाड्वलादिस्थले[3] गावः पुरा उषिताः तस्य स्थलस्य नाम॥ उक्षति रेतः सिञ्चति उक्षा। 'उक्ष सेचने'। भन्दते कल्याणाङ्गत्वाद् भद्रः। 'भदि कल्याणे'। बली. कण्ठप्रदेशे धृणुते स्वीकृतवान्[4] बलीवर्दः। 'वृञ् वरणे'। ऋषति गां प्रति गच्छतीति ऋषभः। 'ऋषी गतौ'। वर्षति[5] रेत इति वृषभः। 'वृष सेचने'। वृषश्च[6]। अनः शकटं वहतीति अनड्वान्। 'वह प्रापणे'। सुरभेर्गोरपत्यं सौरभेयः। [7]रुचिरं गच्छतीति गौः। साण्डस्य पुंगवस्य नामानि॥ उक्ष्णां समूह औक्षकम्। वृषसमूहनाम॥ ५९॥

[1] भोजिताः $W_2$, आशिताः $F_2$. [2] शाद्वल° $W_2$ [3] स्थाने $W_2$ [4] स्वीकुरुते $K_3$; करोति $F_2$, $Pt_2$. [5] $F_2$, $W_2$ add सिञ्चति [6] $K_5$, $K_6$ add स एव धातु.. [7] रुचिर $Pt_2$

(पा.) त्रिष्वाशितंगवीनं—पुरा। यत्र पूर्वं तृणं भक्षयित्वा गावो गतास्तत् तृणान्नारण्यम् आशितंगवीनं स्यात्। उक्षा नान्तोऽयम्। भद्रो बलीवर्द—गौः। अनडुहां नामानि। शाकरो वाडवेयः स्यात् ककुद्मानक्षधूर्तिलः। एतानि चत्वारि च॥ उक्ष्णां संहतिरौक्षकम्। अनडुहां समूह औक्षकं स्यात्॥ ५९॥

गव्या गोत्रा गवां वत्सधेन्वोर्वात्सकधैनुके॥ ६०॥
उक्षा महान् महोक्षः स्याद् वृद्धोक्षस्तु जरद्गवः।
उत्पन्न उक्षा जातोक्षः सद्यो जातस्तु तर्णकः॥ ६१॥

(वि). गव्येति—गवां समूहो गव्या। गोत्रा च। गोसमूहनामनी। वत्सानां समूहो वात्सकम्। वत्ससमूहनाम॥ धेनूनां समूहो धैनुकम्। धेनुसमूहनाम॥

महांश्चासौ उक्षा च महोक्ष । महावृषभनाम ॥ वृद्धश्चासौ उक्षा च वृद्धोक्ष । जरश्चासौ गौश्च जरद्गव । वृद्धवृषभनामनी ॥ जातश्चासौ उक्षा च जातोक्ष । उत्पन्नस्य वृषभस्य[1] नाम ॥ तृणोति स्तन्य पय परप्रेरणया पिबतीति तर्णक । 'तृणु भक्षणे' । सद्य एव जातस्य वत्सस्य नाम ॥ ६०–१ ॥

[1] वृषस्य $W_2$, तरुण $K_5$ $K_6$

(पा.) गव्या गोत्रा गवाम् । गवा [1]समूह गव्या गोत्रा च स्यात् ॥ वत्सधेन्वोर्वात्सकधैनुके । वत्साना समूहो वात्स स्यात् । धेनूना[2] समूहो धैनुक स्यात् । [3]उक्षो महान् महोक्ष स्यात् । महावृषनाम[4] । '[5]सरिगेहु' ॥ वृद्धोक्षस्तु जरद्गव । वृद्धवृषभनामनी ॥ उत्पन्न उक्षा जातोक्ष । मर्दितवृषणो वृषभो जातोक्ष स्यात् । 'पिड्डगोट्टिनयहु[5]' ॥ सद्योजातस्तु तर्णक । सद्य समुत्पन्नवत्सनाम । 'लेंगदूड' ॥ ६०–१ ॥

[1] वृष $A_1$ [2] वत्समातृणा गवा $A_1$ [3] वृष $A_1$ [4] °वृषभ° $B_3$
[5] $B_3$ omits

**शकृत्करिस्तु वत्सः स्याद् दम्यवत्सतरौ समौ ।**
**आर्षभ्यः षण्डतायोग्यः षण्डो गोपतिरिट्चरः ॥ ६२ ॥**

(वि.) शकृदिति—शकृत विष्ठा करोतीति शकृत्करि[1] । 'डुकृञ् करणे' । प्रथमे वयसि वसतीति वत्स । 'वस निवासे' । दशदिनाभ्यन्तरवर्तिनो वत्सस्य नामनी ॥ दमनार्ह शिक्षार्ह दम्य । 'दमु उपशमने'[2] । प्रथमवयसो निवृत्तो वत्सो वत्सतर । यूनो वत्सतरस्य[3] नामनी ॥ ऋषभस्य आकृष्टाण्डस्य [4]प्रतिकृतिरिति आर्षभ्य । अण्डाकर्षणयोग्यकालस्य वत्सतरस्य[5] नाम ॥ सन्यत उत्सृज्यत इति षण्ड । 'षणु दाने' । गोपु पतिवत् गर्भाधानकारित्वात् गोपति । इषा स्वेच्छया चरतीति इट्चर[6] । उत्सृष्टवृषभस्य नामानि ॥ ६२ ॥

[1] शकृत्करी $K_5$ $K_6$ [2] 'दमु दान्तौ' $Pt_2$ [3] वत्सस्य $W_2$ [4] प्रकृति $W_2$
[5] वत्सस्य $W_2$ [6] इत्वर इति वा पाठ $K_5$ $K_6$

(पा.) शकृत्करिस्तु वत्स स्यात् । वत्सनाम । 'दूडु[1]' । अनुत्तम—कयाद्दो मद्दिर्पाशिशु । मद्दिष्या शिशु कयाद स्यात् । दम्यवत्सतरौ समौ । वृन्दयोग्यवत्सनामनी । 'दिद्दनैगाडे' । आर्षभ्य षण्डतायोग्य । [2]उत्सर्जनयोग्यस्य वत्सतरस्य नामनी ।

'न्राशिविडिच्चिपेट्टयोग्यमैनकोडे'। षण्डो गोपतिरिट्चरः। षण्डो गोपतिरिट्चर, षण्डो गोपतिरित्वर, इति च पाठान्तरम्। [3]वृषभराजनामानि। 'गूळिरसुवडु'। 'षण्डस्तु गोपति श्रीमान् डङ्क[1] इट्टर[5] [6]ईश्वर' इति वैजयन्ती (प्र ६९, श्लो ५२)॥ ६२॥

[1] B₂ omits [2] लिखि वोत्सर्जनीयवत्सतर आर्षभ्य स्यात् A₁ [3] उत्सृष्टवृषभनामनी B₃ [4] धक A₁ [5] इत्वर A₁ [6] इट्चर A₁

**स्कन्धप्रदेशस्तु वहः सास्ना तु गलकम्बलः।**
**स्यान्नस्तितस्तु नस्योतः प्रष्ठवाड् युगपार्श्वगः॥ ६३॥**

(वि.) स्कन्धेति—वहति शकटादिकमनेनेति वह। 'वह प्रापणे'। बलीवर्दादिस्कन्धप्रदेशनाम॥ सस्ति अप्रयोजकत्वात् स्वपितीव तिष्ठतीति सास्ना। 'षस स्वप्ने'। बलीवर्दकण्ठे मृदुकम्बलवत् स्थितस्यावयवस्य नाम॥ नस्त नासिकाया सूच्यादिना विद्धो नस्तित। 'णस कौटिल्ये'। नसि[1] नासिकाया रज्ज्वादिना प्रोतो नस्योत। नासिकाया कृतच्छिद्रस्य बलीवर्दस्य नामनी॥ प्रष्ठम् अग्रगामिन वहतीति प्रष्ठवाट्। 'वह प्रापणे'। पष्ठ्याडिति पाठे पञ्चम षष्ठ वा वर्षं वहति। युगपार्श्वे गच्छतीति युगपार्श्वग। युगस्य दान्तपार्श्वे दमनाय योजितबलीवर्दस्य नामनी॥ ६३॥

[1] नस्ये नासिकारन्ध्र ऊत F₂ Pt₂

(पा.) स्कन्धप्रदेशस्तु वह। [1]वृषस्कन्धदेशो वह स्यात्। 'असकूटस्तु [2]स्कुदम्' इति [3]ककुत्पर्याये हलायुध (अ॰ मा २ १११)। '[4]मूपरसु'॥ सास्ना तु गलकम्बल। गवा ग्रीवाकम्बलनाम। 'गगडोलु'। स्यान्नस्तितस्तु नस्योत। रज्ज्वा[5] प्रोतनासिको वृषभो नस्तित स्यात्। 'मुकुदाडुपेट्टिनयद्दु'॥ प्रष्ठवाड युगपार्श्वक। शिक्षार्थ[6] युगादधोनिबद्धो वृष प्रष्ठवाड् स्यात्। 'अणिकवेसिन कुट्टियद्दु'॥ ६३॥

[1] वृषमाणां स्कन्ध A₁ [2] ककुद A₁, B₃ [3] A₁ adds पृष्ठगत° [4] B₃ omits. [5] प्रोतनासिकस्य नाम B₃ [6] B₃ omits

**युगादीनां तु वोढारो युग्यप्रासङ्ग्यशाकटाः।**
**खनति तेन तद्वोढास्येद हालिकसैरिकौ॥ ६४॥**

(वि.) युगादीनामिति—युगं वहतीति युग्यः। प्रासङ्गं वहतीति प्रासङ्ग्यः। शकटं रथं वहतीति शाकटः। युगप्रासङ्गशकटवाहकानां बलीवर्दानां क्रमेण नामानि॥ हलेन खनतीति हालिकः। हलं वहतीति हालिकः। हलस्य [1]संबन्धी हालिकः। एवं सैरिकश्च[2]। हलेन खनतः हलं वहतः हलसंबन्धिनो वा बलीवर्दस्य नामानि॥ ६४॥

[1] हलस्याय $F_3$, $Pt_2$. [2] सीरेण खनतीत्यादि $W_2$.

(पा.) युगादीनां तु—शाकटाः। युगप्रासङ्गशकटानां वाहकाः वृषाः क्रमाद् युग्यप्रासङ्ग्यशाकटाः स्युः। 'तद्वहति [1]रथयुगप्रासङ्गम्' इति यत्। खनति येन—हालिकसैरिकौ। तेन खनति, तस्येदम्, तस्य वोढा इत्यर्थेषु हालिकसैरिकशब्दौ स्याताम्। हलेन खनति, हलास्यायं, हलस्य वोढा वा [2]अनड्वान् हालिकः। सीरेण खनति, सीरस्यायं, सीरस्य वोढा वा सैरिकोऽनड्वान्॥ ६४॥

[1] रथमित्यादिना $A_1$. [2] हालिकोऽनड्वान् $A_1$.

**धूर्वहे धुर्यधौरेयधुरीणाः सधुरंधराः।**
**उभावेकधुरीणैकधुरावेकधुरावहे॥ ६५॥**

(वि.) धूर्वह इति—धुरं वहतीति धूर्वहः। धुर्यः। धौरेयः। धुरीणश्च। धुरं धारयतीति धुरंधरः[1]। युगधुरां वोढुः बलीवर्दस्य नामानि॥ एकां धुरं वहतीति एकधुरीणः[2]। एकधुरः। एकधुरावहश्च। शकटलाङ्गलतैलिकयन्त्रादिनानाविधधुरावहस्य बलीवर्दस्य[3] नामानि॥ ६५॥

[1] $K_3$ adds 'धृञ् धारणे'. [2] एका च सा धूश्च एकधुरा, तामेकधुरं $W_2$. [3] तैलिकस्य अल्पयन्त्रस्य युगधुरां यो वहति तस्य बलीवर्दस्य $K_3$, $W_2$.

(पा.) धूर्वहे धुर्यधौरेय—धुरंधराः। भारक्षमवृषभनामानि॥ उभावेक—धुरावहे। हलं विना शकटं न[1] वहति, शकटं विना हलं न वहति, इत्येतादृग्विधैकधुरावहो वृषः, तस्मिन् एकधुरीण एकधुरशब्दौ स्याताम्॥ ६५॥

[1] $B_3$ omits न वहति.

**स तु सर्वधुरीणो यो भवेत् सर्वधुरावहः ।**
**माहेयी सौरभेयी गौरुस्रा माहा च शृङ्गिणी ॥ ६६ ॥**
**अर्जुन्यघ्न्या रोहिणी स्यादुत्तमा गोषु नैचिकी ।**

(वि.) स इति—[1]सर्वधुरा वहतीति सर्वधुरीणः । सर्वधुरायाः वहः । सर्वधुरावहस्य नाम ॥ मह्यते देवैरिति मही सुरभिः । तस्याः [2]अपत्यं स्त्री माहेयी । सुरभेरपत्यं सौरभेयी । स्वस्थानं प्रति गच्छतीति गौः । 'गम्लृ गतौ' । वसति क्षीरमस्यामिति उस्रा । 'वस निवासे' । मह्यते सर्वैरिति माहा[3] । 'मह पूजायाम्' । शृङ्गयोगात् शृङ्गिणी । प्रायेण धवलवर्णत्वात् अर्जुनी । अघ्नते वेगेन गच्छतीति अघ्न्या । 'अघि लघि गत्याक्षेपे' । न हन्यत इति वा[4] । रोहिणीनक्षत्रवद् [5]उदयहेतुत्वात् रोहिणी । गोजातीयस्त्रीनामानि ॥ नीचैर्भूतेन पालकध्वनिनापि[6] चरतीति नैचिकी । 'चर गतिभक्षणयोः' । बहुक्षीरादिगुणवत्या गोर्नाम ॥ ६६ ॥

[1] सर्वां धुरं W₂ [2] गोत्रापत्यं K₅ L₆ [3] मा यते माता W₂ [4] F₂ Pt₂ add हन हिंसागत्योः [5] अभ्युदय° Pt₂ रोहितवर्णत्वात् K₃ [6] स्वरेण Pt₂

(पा.) स तु सर्वधुरीणो—सर्वधुरावहः । हलशकटगोण्यादिसर्वधुरावहो वृषभः[1] सर्वधुरीणः स्यात् । अनुक्तम्—भग्नशृङ्गस्तु कूटः स्यात् । भग्नविषाणो [2]वृषः कूटः स्यात् । पण्डस्तु[3] भिन्नपुच्छकः । [4]छिन्नपुच्छो वृषः [3]पण्डः स्यात् । माहेयी सौरभेयी—अघ्न्या रोहिणी स्यात् । सुभूतिटीकायां अघ्न्यामाहाशब्दौ अघा माता इति पठितौ । वृषभपत्नीनामानि । तस्या निलिम्पिका तम्पा[5] चानड्वाहनडुह्यपि । एतानि पञ्च च ॥ उत्तमा गोषु नैचिकी । रूपशीलवय क्षीराद्यशेषगुणसपन्ना[6] गौर्नैचिकी स्यात् ॥ ६६ ॥

[1] भद्रः L₁ [2] भग्नविषाणस्य नाम B₃ [3] षण्डः A₁ [4] छिन्नपुच्छवृषस्य नाम B₃. [5] नन्दिनी L₁ [6] °गुणाधारा अनडुही A₁

**वर्णादिभेदात् संज्ञाः स्युः शबलीधवलादयः ॥ ६७ ॥**
**द्विहायनी द्विवर्षा गौरेकाब्दा त्वेकहायनी ।**
**चतुरब्दा चतुर्हायण्येव त्र्यब्दा त्रिहायणी ॥ ६८ ॥**

(वि.) वर्णेति—वर्णभेदात् आदिग्रहणात् द्विवर्षत्वादिधर्मभेदात् । शबली । धवला । पाटला । कृष्णा । रक्ता कपिला द्विवर्षा । त्रिवर्षा इत्येवमादयः संज्ञा भवन्ति ।

[1]द्विहायनवय परिमाणमस्या इति द्विहायनी। द्विवर्षगोनाम॥ एकाब्दो वय परिमाणमस्या इति एकाब्दा। एकहायनो वय परिमाणमस्या इति एकहायनी। एकवत्सरगोनाम॥ एव [2]चतुरब्दा। चतुर्हायणी[3]। त्र्यब्दा[4]। त्रिहायणी। पञ्चाब्दा। पञ्चहायनी इत्यादय सज्ञा विज्ञेया॥ ६७–८॥

[1] द्वौ हायनौ वय $F_2$ $Pt_2$ [2] चत्वारोऽब्दा प्रमाण यस्या $Pt_2$ [3] चत्वारो हायना प्रमाण यस्या $Pt_2$ [4] त्रयोऽब्दा प्रमाण $Pt_2$

(पा.) वर्णादिभेदात्—धवलादय। वर्णादिभेदेन [1]गवा शवलीधवल्यादिसज्ञा स्यु। धवलीत्यपि। 'चारौ श्रेष्ठे वृषे श्वेत धवलो धवली गवि' इति प्रमाणात्[2]॥ द्विहायनी—गौ। द्विवर्षानडुाही द्विहायनी स्यात्॥ एकाब्दा त्वेकहायनी। एकवर्षा गौरेकहायनी स्यात्। 'हायनो वयसि स्मृत' इत्यनेन 'वयसि प्रथमे' (४ १ २०) इति ङीप्। अन्यत्र [3]टावेव, द्विहायना चित्रगवी॥ चतुरब्दा चतुर्हायणी। चतुर्वर्षा[4] गौश्चतुर्हायणी स्यात्। एव त्र्यब्दा त्रिहायणी। त्रिवर्षा[4] गौस्त्रिहायणी स्यात्। णत्वमपि वयस्येव स्मर्यत इत्यनेनान्यत्र णत्व न भवति। चतुर्हायना लेप्यगवी॥ ६७–८॥

[1] अनडुहीना $A_1$ [2] वैजयन्ती (पृ २६० श्लो ४९) [3] टारन्तापेव $A_1$ [4] °वत्सरा $A_1$

**वशा वन्ध्यावतोका तु स्रवद्गर्भाथ सधिनी।**
**आक्रान्ता वृषभेणाथ वेहद्गर्भोपघातिनी॥ ६९॥**

(वि.) वशेति—वष्टि कामयते [1]वन्ध्यात्वापगमहेतुभूतमौषधमिति वशा। 'वश कान्तौ'। वध्नाति स्वगतदोषेण गर्भमिति वन्ध्या। 'बन्ध बन्धने'। वृषयोगादपि गर्भविहीनगोर्नामनी॥ अवसृतम् [2]अवनष्ट तोकमपत्य यस्या सा अवतोका। स्रवन् नश्यन् गर्भो यस्या सा स्रवद्गर्भा। अवसृतगर्भगोनामनी॥ सधा गर्भसधानमस्या इति सधिनी[3]। वृषाक्रान्तगोनाम॥ विहन्ति गर्भं वेहत्। 'हन हिंसागत्यो'। विहद्गर्भेति वा पाठ। गर्भम् उपहन्तीति गर्भोपघातिनी। गर्भहन्तृगोर्नामनी॥ ६९॥

[1] वन्ध्यात्वापगम° $W_2$ [2] अवगत $Pt_2$ [3] गर्भ सधीयतेऽस्यामिति $F_2$ $Pt_2$

(पा.) वशा वन्ध्या। अनपत्या गौर्वशा स्यात्॥ अवतोका तु स्रवद्गर्भा। स्रवद्गर्भा गौरवतोका स्यात्॥ अथ सधिनी—वृषभेण। गोपतिनोपर्याक्रान्ता गौ सधिनी स्यात्॥ अथ वेहद्गर्भोपघातिनी। उपहतगर्भा गौर्वेहत् स्यात्। 'कन्दुवेचिनदि'॥ ६९॥

**काल्योपसर्या प्रजने प्रष्ठौही बालगर्भिणी ।**
**स्यादचण्डी तु सुकरा बहुसूतिः परेष्टुका ॥ ७० ॥**

(वि.) काल्येति—वृषभेण उपसर्तुं[1] योग्या उपसर्या । 'सृ गतौ' । प्रजने प्रथमगर्भग्रहणे प्राप्तकालाया गोर्नाम । प्रष्ठं प्रथमगर्भं वहतीति प्रष्ठौही । 'वह प्रापणे' । पञ्चमं षष्ठं वा वर्षं वहतीति पष्ठौहीति वा पाठः । बालगर्भिणीगोर्नाम ॥ न चण्डते न कुप्यतीति अचण्डी[2] । 'चडि [3]कोपे' । सु शोभनं करोतीति सुकरा । अकोपनागोर्नामनी । बह्वयः सूतयः प्रसवाः अस्याः सन्तीति बहुप्रसूतिः । [4]उत्पन्नापत्येभ्यः परमन्यदपत्यमिच्छतीति परेष्टुका । 'इषु इच्छायाम्' । बह्वपत्याया गोर्नामनी ॥ ७० ॥

[1] उपसरणीया $K_5$, $K_6$ [2] $K_6$, $W_2$ add अचण्डा वा [3] कोपने $K_6$.
[4] उत्सन्न° $K_5$, $K_6$

(पा.) काल्योपसर्या प्रजने । प्रजनं नाम [1]गर्भग्रहणम् । तत्र काल्येति प्राप्तकाला गौरुपसर्या स्यात् । '[2]कट्टुपट्टु' ॥ प्रष्ठौही बालगर्भिणी । प्रथमगर्भा गौः प्रष्ठौही स्यात् । 'तोलिचूलिपट्टु' । 'पलिक्नी बालगर्भिणी' इति हलायुध (अ. मा. २. ११८) वैजयन्ती (पृ. ६८, श्लो. ४६) इत्युभयपाठात् पलिक्नी च स्यात् । अनुक्तम्—प्रस्तुता तु प्रसोष्यन्ती । प्राप्तप्रसवसमया गौः प्रस्तुता स्यात् ॥ सूता दोग्ध्री पयस्विनी । जनिततोका गौः पयस्विनी दोग्ध्री च स्यात् । स्यादचण्डी तु सुकरा । साधुः गौ सुकरा स्यात् । अनुक्तम्—सुकृता तद्विपर्यये । असाधुर्गौ सुकृता स्यात् ॥ बहुसूतिः परेष्टुका । बहुलसूतिमती गौः परेष्टुका स्यात् ॥ ७० ॥

[1] वृषभसङ्ग. $A_1$. [2] $B_2$ omits.

**चिरसूता बष्कयणी धेनुः स्यान्नवसूतिका ।**
**सुव्रता सुखसंदोह्या पीनोघ्नी पीवरस्तनी ॥ ७१ ॥**

(वि.) चिरसूतेति—चिरं सूता चिरसूता । 'षूङ् प्राणिप्रसवे' । [1]बष्कते यातीति बष्कयः । प्रसवादूर्ध्वंभाविचिरकालः । 'बष्क गतौ' । सोऽस्या अस्तीति बष्कयणी । चिरप्रसूतगोर्नाम ॥ वत्सो धयत्येनां धेनुः । 'धेट् पाने' । नवं सूता नवसूतिका । नवसूतिकायाः सवत्सायाः गोर्नामनी ॥ सुशीलत्वादिगुणयोगात्[2] सुव्रता ।

सुखेन संदुह्यते सुखसंदोह्या। सुशीलायाः गोर्नामनी॥ पीनमूधो यस्याः पीनोध्नी। पीवरः स्तनोऽस्याः पीवरस्तनी। स्थूलस्तनाया गोर्नामनी॥ ७१॥

[1] बष्कयति $W_2$, बष्कयस्त्वेकहायनो वत्स इति शाकटायनः। तद्योगात् $Pt_2$. [2] शोभनं व्रतं शीलं $Pt_2$.

(पा.) चिरसूता वष्कयणी। बहुकालप्रसूता गौः वष्कयणी स्यात्। वष्कयेण नीता अनुगता बष्कयणीति शाकटायनव्युत्पत्त्या। वष्कयो नामैकवत्सरवत्सः। 'तलिपिदूड'॥ धेनुः स्यान्नवसूतिका। बालवत्सा गौर्धेनुः स्यात्॥ सुव्रता सुखसंदोह्या। अनायासेन[1] दोग्धुं योग्या गौः सुव्रता स्यात्॥ अनुक्तम्—'करटा तद्विपर्यये'। प्रयासेन संदोह्या गौः करटा स्यात्॥ पीनोध्नी पीवरस्तनी। पीवरस्तनी गौः पीनोध्नी स्यात्। 'बलमैनदोदुगुगलदि'। स्तनशब्द ऊधःपर्यायः॥ ७१॥

[1] सुखसंदोह्यायाः गोर्नामनी $B_3$.

**द्रोणक्षीरा द्रोणदुघा धेनुष्या बन्धके स्थिता।**
**समांसमीना सा यैव प्रतिवर्षं प्रसूयते॥ ७२॥**

(वि.) द्रोणेति—द्रोणपरिमितं क्षीरं दोग्धीति द्रोणदुघा। 'दुह प्रपूरणे'। द्रोणपरिमितं क्षीरं यस्याः द्रोणक्षीरा। द्रोणपरिमितक्षीरदोग्ध्रीनामनी॥ धेनुरेव धेनुष्या। [1]भोगाधिकत्वेन धनिकगृहस्थापितधेनोर्नाम॥ समायां समायां[2] वत्सरे वत्सरे प्रसूते समांसमीना। प्रतिवर्षं प्रसूताया गोर्नाम॥ ७२॥

[1] भाग्य° $W_2$. [2] विजायत इति $F_2$, $Pt_2$

(पा.) द्रोणक्षीरा द्रोणदुघा। द्रोणपरिमितक्षीरदोग्ध्री[1] धेनुर्द्रोणदुघा स्यात्। 'अढिगिनपुड्डपिंडे पांडि आवु'॥ धेनुष्या बन्धके स्थिता। बन्धके सस्थिता गौर्धेनुष्या स्यात्। 'कुदवबुन्न आवु'॥ समांसमीना सा—प्रसूयते। या गौः प्रतिसंवत्सरं वत्सान् प्रसूते सा गौः समांसमीना स्यात्॥ अनुक्तम्—'सकृत्प्रसूतिर्गृष्टिः स्यात्'। एकवारं प्रसूता गौर्गृष्टिः स्यात्। 'निडिचूलि आवु'॥ ७२॥

[1] दुग्धदोग्ध्रा(ह्या) $B_3$.

**ऊधस्तु क्लीबमापीनं समौ शिवककीलकौ।**
**न पुंसि दाम संदानं पशुरज्जुस्तु दामनी॥ ७३॥**

(वि). ऊध इति—उनत्ति क्षीरविन्दुभिः स्थालीमिति ऊधः। 'उन्दी क्लेदने'। सान्तः। दोहनादुपरि पुनराप्यायते[1] वर्धत इति आपीनम्। 'ओप्यायी वृद्धौ'। स्तन्यमूलबन्धनस्य नामनी॥ दौष्ट्यशमनेन शिवकरत्वात् शिवक.। कील्यते पश्वादिरत्रेति[2] कीलक'। 'कील बन्धने'। पशुबन्धनाय निखातदार्वादेर्नामनी॥ यति पशुदौष्ट्यमिति दाम। 'दोऽवखण्डने'[3]। दीयते पलायनाद् रक्ष्यतेऽनेनेति वा। 'देङ् रक्षणे'। सदीयते बध्यतेऽनेनेति सदानम्। 'दाण् दाने'। सपूर्वत्वात् बन्धनार्थः। वत्सादिबन्धनरज्जुनामनी॥ मध्ये तत्र तत्र बहुदामयोगात् दामनी। बहुपशुबन्धनाय निर्मितदीर्घरज्जुनाम॥ ७३॥

[1] $K_9$, $K_4$ add आपूर्यन　　[2] आदिक $F_2$, $Pt_2$　　[3] 'दोऽवखण्डने' $K_6$

(पा.) ऊधस्तु क्लीबमापीनम्। क्षीरजननस्थाननामनी। 'पोदुगु'॥ समौ शिवककीलकौ। [1]पशुबन्धनगुण्ठनामनी। 'गूंटालु'॥ न पुंसि दाम सदानम्। [2]दोहनसमये चरणबन्धनरज्जुनामनी॥ पशुरज्जुस्तु दामनी। पशुबन्धनदीर्घरज्जु दामनी स्यात्। अनुक्तम्—नासारज्जुर्गवां नास्या। गोराजनासिकारज्जुर्नास्या स्यात्। 'यद्दुमुक्कुत्ताडु'॥ ७३॥

[1] °कीलक° $B_3$　　[2] रज्जुसामान्यनामनी $A_1$

**वैशाखमन्थमन्थानमन्थानो मन्थदण्डके।**
**कुठरो दण्डविष्कम्भे मन्थनी गर्गरी समे॥ ७४॥**

(वि.) वैशाखेति—विशाखा प्रयोजनमस्य वैशाख[1]। विशाखस्य काष्ठविशेषस्यायमिति वा। मथ्यते दध्यनेनेति मन्थः। 'मन्थ विलोडने'। मन्थानश्च। मन्थाश्च। दधिमन्थनदण्डनामानि॥ कुटति कुटिलगतिमानिव भ्रमति [2]कुटर। 'कुट कौटिल्ये'। दण्ड विष्कभ्नाति दण्डविष्कम्भ। 'स्कम्भु[3] रोधने'। मन्थनदण्डस्यान्ते निक्षिप्तनारिकेलफलसदृशदारुपिण्डनामानि॥ मथ्यते दध्यस्यामिति मन्थनी। 'मन्थ विलोडने'। गिरति अन्तर्गतं दधीति गर्गरी। 'गॄ निगरणे'। दधिमन्थनघटस्य नाम॥ ७४॥

[1] विशाखाया मत. $Pt_2$　　[2] भ्रमत्यनेन मन्थनदण्ड. $F_2$, $Pt_2$, कुठर इति वा पाठ. $K_5$, $W_2$　　[3] अय धातु सौत्र. $W_2$

(पा.) वैशाखमन्थ—मन्थदण्डके। दधिमन्थनदण्डनामानि। 'कव्वमु'॥ [1]कुठरो दण्डविष्कम्भ.। दण्डो मन्थदण्डः। तस्य विष्कम्भो विष्कम्भनस्तम्भ.। स

[1]कुठरः स्यात्। मन्थदण्डबन्धस्तम्भः॥ मन्थनी गर्गरी समे। दधिमथन(?)नामनी। 'कलशिमुदधिगुर्वीं वल्लवा लोडयन्ति' इति माघप्रयोगात् (शिशु. ११. ८) [2]कलशिशब्दः कालकेय(?)व्युत्पत्तिसिद्धः॥ ७४॥

[1] कुटरः B₃. [2] कलशी A₁.

**उष्ट्रे क्रमेलकमयमहाङ्गाः करभः शिशुः।**
**करभाः स्युः शृङ्खलका दारवैः पादबन्धनैः॥ ७५॥**

(वि.) उष्ट्र इति—उष्यते सदा [1]आतपेनेति उष्ट्रः। 'उष दाहे'। [2]क्रमेण पादानिलयति दूरे क्षिपतीति क्रमेलकः। 'इल स्वप्नक्षेपणयोः'। मयते बहूनि योजनानि गच्छतीति [3]मयः। 'मय गतौ'। महान्ति ग्रीवाद्यङ्गानि यस्येति महाङ्गः। उष्ट्रनामानि॥ कं शिरो रभतेऽसकृदुन्नमयतीति करभः[4]। 'रभ राभस्ये'। उष्ट्रशिशुनाम॥ शृङ्खलं बन्धनमेषामस्तीति शृङ्खलकाः। दारुमयैः [5]पादबन्धनैरुपलक्षितानां करभाणां नाम॥ ७५॥

[1] आतपे दह्यते W₂. [2] क्रमान् K₅, K₆; क्रमैः एलतीति Pt₂. [3] मयुः K₆.
[4] किरति विक्षिपति धूलिमिति Pt₂. [5] °बन्धनयुक्तकरभनाम W₂.

(पा.) उष्ट्रे क्रमेलकमयमहाङ्गाः। उष्ट्रनामानि। 'लोटिपेट्र'। 'दाशेरकश्च रवणः'। एते द्वे च॥ करभः शिशौ। उष्ट्रशिशुः करभः स्यात्॥ करभाः स्युः—पादबन्धनैः। दारुमयपादबन्धनविशिष्टाः करभा [1]इत्यर्थः॥ ७५॥

[1] B₂ adds शृङ्खलकाः.

**अजा छागी स्तभच्छागबस्तच्छगलका अजे।**
**मेढ्रोरभ्रोरणोर्णायुर्मेषवृष्णय एडके॥ ७६॥**

(वि.) अजेति—अजतीत्यजा[1]। 'अज गतिक्षेपणयोः'। छ्यति रोगानिति छागी[2]। 'छो छेदने'। अजजातिस्त्रीनामनी॥ स्तभ्नाति युद्धार्थमुद्यते वेगं प्रतिबध्नातीति स्तभः। 'स्तम्भु रोधनस्तम्भनयोः'। तुभ इति पाठे तोभते हिनस्ति पर्णानीति तुभः। 'तुभ हिंसायाम्'। छ्यति भक्षणार्थं पत्राणीति छागः। [3]छगलकश्च। 'छो छेदने'। बस्यते हिंस्यत इति बस्तः। 'बस्त अर्दने'। अजति पर्णभक्षणाय

गच्छतीति अजः । 'अज गतिक्षेपणयोः' । अजनामानि ॥ मेहति रेतः सिञ्चतीति मेढ्रः । 'मिह सेचने' । मेण्ढ इति वा पाठः । उरः स्थलमितस्ततो भ्रमयतीति[4] उरभ्रः । 'भ्रमु चलने' । उच्चैः रणतीति उरणः । 'रण शब्दे' । ऊर्णा मेषरोम । [5]तदस्यास्तीति ऊर्णायुः । रेतो मिषति सिञ्चतीति मेषः । 'मिष सेचने' । मिषति स्पर्धत इति वा । रेतो वर्षतीति वृष्णिः । 'वृषु सेचने' । आ समन्तात् ईडन्ते मांसभक्षका एनमिति एडकः[6] । 'ईड स्तुतौ' । एडकनामानि ॥ ७६ ॥

[1] अजजातिस्त्री $K_5$ $K_6$　[2] छागजातिस्त्री $K_5$, $K_6$　[3] छागलकः $K_5$ $W_2$
[4] भ्रामयति $K_5$　[5] सा $W_2$　[6] इलति गच्छति $Pt_2$

(पा.) अजा छागी । अजानामनी । 'मेक' ॥ स्तभच्छाग—[1]अजे । छागनामानि । 'मेकपोतु' । मेढोरभ्रोरणो—एडके । मेषनामानि । 'तगरु' ॥ अनुक्तम्—'एडका कुररी मेषी' । मेषीनामानि । 'गोट्रे' ॥ एतानि त्रीणि च ॥ ७६ ॥

[1] अजा $A_1$

**उष्ट्रोरभ्राजवृन्दे स्यादौष्ट्रकौरभ्रकाजकम् ।**
**चक्रीवन्तस्तु वालेया रासभा गर्दभाः खराः ॥ ७७ ॥**

(वि.) उष्ट्रेति—उष्ट्राणां समूहः औष्ट्रकम् । उरभ्रकाणां समूहः औरभ्रकम् । अजानां समूहः आजकम् । उष्ट्रोरभ्राजानां क्रमेण समूहनामानि । चक्रं समूहः तद्वन्तः चक्रीवन्तः । प्रायेण बालेभ्यो वत्सेभ्य एव हिता वालेयाः । रासन्ते याद्यन्ते उच्चैरिति रासभाः । 'रास शब्दे' । गर्दन्ति उच्चैरिति गर्दभाः । 'गर्द शब्दे' । खं मुखान्तर्वर्ति महदाकाशमेषामिति[1] खराः । गर्दभनामानि ॥ ७७ ॥

[1] $K_5$ $W_2$ $Pt_2$ add अस्तीति

(पा.) उष्ट्रोरभ्राजवृन्दे—आजकम् । उष्ट्राणां समूहः औष्ट्रकम् । उरभ्राणां समूहः औरभ्रकम् । अजानां समूहः आजकम् । उष्ट्रादीनां समूहे औष्ट्रकादिशब्दाः स्युरिति वा योजना । चक्रीवन्तस्तु—गर्दभाः खराः । गर्दभनामानि । 'गाडिडिपेरु' । [1]कोलिण्टा करभा शाला[2] । एतानि त्रीणि च ॥ ७७ ॥

[1] कोलण्ठ $A_1$　[2] शाला $B_3$

**वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक् ।**
**पण्याजीवो ह्यापणिकः क्रयविक्रयिकश्च सः ॥ ७८ ॥**

(वि.) वैदेहक इति—विदेहे विविधोपचये भव वर्तमानः वैदेहक.[1] । अर्थेन सह वर्तते सार्थः । तं नरं स्वपण्यं वाहयतीति [2]सार्थवाहः । 'वह प्रापणे' । निगमे धनागमे भवो वर्तमान. नैगम । वणिगेव वाणिजः । पणते व्यवहरतीति वणिक् । 'पण [3]व्यवहारे' । धात्वादेः पकारस्य वकारादेश । पण्यम् आजीवो यस्य '[4]पण्याजीव. । आपणः प्रयोजनमस्य आपणिकः । क्रयविक्रयाभ्यां जीवतीति क्रयविक्रयिक । वाणिज्यवृत्त्युपजीविनो नामानि ॥ ७८ ॥

[1] $K_3$, $K_5$ add 'दिह उपचये' [2] सार्थं वहति $W_2$, प्रापयति $K_3$, $K_5$
[3] $W_2$ adds स्तुतौ च [4] पण्येन आजीवति $F_2$, $Pt_2$

(पा.) वैदेहक सार्थवाहो—वणिक् । जान्तः । वणिजां नामानि । 'वरवारु' ॥ पण्याजीवो—क्रयविक्रयिकश्च[1] स । क्रयविक्रयोभयवतो नामानि ॥ ७८ ॥

[1] क्रयविक्रयकः $A_1$

**विक्रेता स्याद्विक्रयिकः क्रायकः क्रयिकः समौ ।**
**वाणिज्यं तु वणिज्या स्यान्मूल्यं वस्नोऽप्यवक्रयः ॥ ७९ ॥**

(वि.) विक्रेतेति—विक्रीणाति पण्यमिति विक्रेता । 'डुक्रीञ् द्रव्यविनिमये' । विक्रयेण जीवतीति विक्रयिक । यः पण्यस्य विक्रयेण जीवति तस्य नामनी ॥ उच्चनीचमूल्यकल्पनया पण्यं क्रीणाति गृह्णातीति क्रायक.[1] । क्रयेण जीवतीति क्रयिकः । पण्यकर्तृनामनी ॥ वणिजः कर्म वाणिज्यम् । वणिज्या च । वाणिज्यवृत्तिनामनी ॥ मूलेनानाम्यम्[2] अनभिभवनीयं मूल्यम् । वसत्यस्मिन् स्ववनव्ययेन कारित पण्यादिकमिति वस्न.[3] । 'वस निवासे' । वसत्यनिर्वाहकक्रयः अनेन मूलद्रव्यरहितेनेति अवक्रय.[4] । मूल्यनामानि ॥ ७९ ॥

[1] क्रयकश्च $Pt_2$ [2] मूलभूतद्रव्येण अभिभूयते शेषत्वेन क्रियते $K_3$, $K_6$. [3] वसत्यनेन पण्यादिक $Pt_2$ [4] अवक्रियतऽनेन $F_2$, $Pt_2$.

(पा.) विक्रेता स्याद्विक्रयिक । विक्रयमानिणो नामनी । [1]क्रायकः क्रयिकः समौ । मूल्येन पण्यानि गृह्णतो नामनी । 'कोनेडिगाड्लु' ॥ वाणिज्य तु [2]वणिज्य

स्यात्। नपुंसके स्यादपि वणिज्यापि स्यात्। वणिकर्मनामनी ॥ मूल्यं वस्नोऽप्यवक्रयः। मूल्यनामानि। 'वेल'। योगविभागादवक्रयो भाटकः। 'भाटकोऽवक्रयः स्मृतः'। इति हलायुध (अ. मा. २. ४१८)। 'बाडिगे' ॥ ७९ ॥

[1] क्रानि२, $A_1$. [2] वणिज्या $B_3$.

## नीवी परिपणो मूलधनं लाभोऽधिकं फलम्।
## परिदानं परीवर्तो नैमेयनिमयावपि ॥ ८० ॥

(वि.) नीवीति—नितरां वीयते सन्नियत इति नीवी। 'व्येञ् संवरणे'। स्त्रीनीवीस्थानवत् [1]परसपत्नप्राप्तिनिमित्तत्वात् वा। परिपण्यते लाभार्थं प्रयुज्यते परिपणः[2]। लाभार्थं प्रयुज्यमानधनस्य नामानि ॥ मूलधनप्रयोगेण 'पण व्यवहारे स्तुतौ च'। लाभार्थं प्रयुज्यमानधनस्य नामानि ॥ मूलधनप्रयोगेण लभ्यत इति लाभः। 'डुलभष् प्राप्तौ'। मूलधनप्रयोगेण फलतीति फलम्। 'फल निष्पत्तौ'। [3]मूलधनप्रयोगेण यदधिकं[4] लभ्यते तस्य नामनी ॥ परिदीयत इति परिदानम्[5]। 'दा दाने'। परिवर्त्यते दीयत इति परिवर्तः[6]। 'वृतु वर्तने'। निमेये परिवर्तनीये भवो नैमेय। 'मेङ् प्रणिदाने'। निमयते [7]विनियुज्यते निमयः। 'मय गतौ'। विनिमयनामानि ॥ ८० ॥

[1] रसपत्नप्राप्ति° $K_3$ [2] परिपणम् $K_5$, $K_6$ [3] मूल च तद्धन च $Pt_2$. [4] $F_2$, $Pt_2$ add अध्यारूढ [5] परिवृत्य दान, 'डुदाञ् दाने' $F_2$, $Pt_2$ [6] परिवर्तन $Pt_2$ [7] $K_5$ adds विनिमयते

(पा.) नीवी परिपणो[1] मूलधनम्। मूलधननामानि ॥ लाभोऽधिक धनम्[2]। मूलधनेनार्जितमधिकं धनं लाभः स्यात्। 'वडवलमुत्त्न्न आमीदगणिचिन धनमु लाभमनिपिंचुकोनुतु' ॥ परिदान परीवर्तो—नियमावपि। घृतादेस्तैलादिप्रत्यर्पणनामनी। 'सार्टिपेरु' ॥ ८० ॥

[1] परिपणं $A_1$ [2] फलम् $B_3$

## पुमानुपनिधिर्न्यासः प्रतिदानं तदर्पणम्।
## क्रये प्रसारितं क्रय्यं क्रेयं क्रेतव्यमात्रके ॥ ८१ ॥

(वि.) पुमानिति—आधारकहस्तस्य उप समीपे निधीयते[1] इति उपनिधिः। 'डुधाञ् धारणपोषणयोः'। ग्राहकजनसन्निधौ [2]न्यस्यत इति न्यास। 'असु क्षेपणे'।

निक्षेपविशेषस्य नामनी ॥ प्रतिदीयत इति प्रतिदानम् । 'डुदाञ् दाने'। न्यासप्रत्यर्पणस्य नाम ॥ क्रयार्थं प्रसारित क्रय्यम् । क्रेतु योग्य क्रेयम् । क्रेतव्यमात्रनाम ॥ ८१ ॥

[1] निधान $F_2$, $Pt_2$ [2] -यसन $Pt_2$

(पा.) पुमानुपनिधिर्न्यास । [1]निक्षेपविशेषनामनी। 'वाडिके'॥ प्रतिदान तदर्पणम्। तस्योपनिधे प्रत्यर्पण प्रतिदान स्यात्। '[2]वाढिकतिरुगतिरुगवोपिचुट'॥ क्रये प्रसारित क्रय्यम्। क्रयार्थे प्रसारित द्रव्य क्रय्य स्यात्॥ क्रेय क्रेतव्यमात्रके। [3]क्रयार्हं द्रव्य क्रेय स्यात्। परिक्रेतु पृष्ट द्रव्यमित्यर्थ ॥ ८१ ॥

[1] द्र०यत्यागनामनी $A_1$ [2] $B_3$ omits [3] क्रय्याद-यद् द्रव्य $A_1$

**विक्रेयं पणितव्य च पण्य क्रय्यादयस्त्रिषु ।**
**क्लीबे सत्यापन सत्यकारः सत्याकृतिः स्त्रियाम् ॥ ८२ ॥**

(वि.) विक्रेयमिति—[1]विक्रेतु योग्य विक्रेयम्। पणितु व्यवहर्तुं योग्य पणितव्यम्। पण्यत इति पण्यम्। 'पण व्यवहारे स्तुतौ च'। [2]पण्यमात्रनामानि ॥ क्रय्यादय पण्यान्ता त्रिषु लिङ्गेषु वर्तन्ते ॥ सत्यस्य करण सत्यापनम्। सत्यकारश्च। सत्याकृतिश्च। विक्रेत्रे क्रेत्रा इद पण्य मया गृहीतमित्युक्त्वा यत्किंचिदङ्गुलीयादिक दीयते तस्य नामानि ॥ ८२ ॥

[1] विक्रयस्य $K_5$, $K_6$ [2] विक्रयक्रियाक्रमण $W_2$

(पा.) विक्रेय पणितव्य च। [1]विक्रेतुमापृष्टद्रव्यनामनी। क्रय्यादयस्त्रिषु। क्रय्यादय शब्दास्त्रिलिङ्गा। क्रय्य कर्पूर। क्रय्या कस्तूरिका॥ क्लीबे सत्यापन—स्त्रियाम्। [2]क्रयनिश्चयार्थं दत्तवित्तस्य नामानि॥ 'सचकरुवु'॥ ८२ ॥

[1] विक्रतुमिष्° $B_3$ [2] सत्यार्थं $A_1$

**विपणो विक्रयः सङ्ख्याः संख्येये ह्यादश त्रिषु ।**
**विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसङ्ख्ययोः ॥ ८३ ॥**

(वि.) विपण इति—विपण्यते व्यवह्रियते विपण । 'पण [1]व्यवहारे'। विक्रीयत इति विक्रय । 'डुक्रीञ् द्रव्यविनिमये'। मूल्य गृहीत्वा पण्यार्पणस्य नामनी॥

एकाद्याः [2]अष्टादशशब्दपर्यन्ताः सङ्ख्याः सङ्ख्येये घटादौ सङ्ख्येयलिङ्गानुसारेण त्रिषु लिङ्गेषु वर्तन्ते। कदाचिदपि सङ्ख्यामात्रे न वर्तन्ते। अत्रोदाहरणानि—एकः पुमान्। द्वौ पुमांसौ। त्रयो गुणाः। इत्यादि॥ अत्र विंशतिशब्देन एकोनविंशतिशब्दो विज्ञेयः। एकोनविंशत्याद्याः नवतिशब्दपर्यन्ताः सर्वाः सङ्ख्या बहुषु सङ्ख्येयेषु घटादिषु सङ्ख्यायां च वर्तमाना अपि सदा एकत्वे एकवचने वर्तन्ते॥ ८३॥

[1] $W_2$ adds स्तुतौ च. [2] आदश दशश्रुतिपर्यन्तम्। अष्टादशभ्य इति यावत्। एकादिसङ्ख्याशब्दाः सङ्ख्येये वस्तुनि वर्तमानाः त्रिषु। एतेषां सङ्ख्यासङ्ख्येययोः सामानाधिकरण्यं भवति $Pt_2$

(पा.) विपणो विक्रयः। [1]पणमादाय द्रव्यदाननामनी। 'अम्मकसु[2]' । सङ्ख्याः सङ्ख्येयेऽऽदश त्रिषु। अष्टादशशब्दावधिकाः निरुपसर्गौ चेत् [3]क्रयवाचकौ। सङ्ख्याः सङ्ख्येयेऽऽदश त्रिषु। अष्टादशशब्दावधिकाः सङ्ख्याशब्दाः सङ्ख्येयमात्रवृत्तय। एको ब्राह्मण इति सामानाधिकरण्यं सुवचनम्। तथा ब्राह्मणानां दश द्वादश वेति वैयधिकरण्यं न सुवचनम्। एक, द्वे, त्रीणि, चत्वारि, पञ्च, षट्, सप्त, अष्ट, नव, दश, एकादश, द्वादश, त्रयोदश, चतुर्दश, पञ्चदश, षोडश, सप्तदश, अष्टादश। त्रिष्वित्यनेन त्रिलिङ्गाः॥ विंशत्याद्याः—सङ्ख्येयसङ्ख्ययोः। विंशत्यादिसङ्ख्याशब्दाः सर्वे सङ्ख्येयसङ्ख्यारूपयोरुभयोरप्यर्थयोः स्युः। विंशतिर्गावः। विंशतिर्गवाम्। सामानाधिकरण्यवैयधिकरण्ये उभये अपि सुवचने। विंशतिः, त्रिंशत्, चत्वारिंशत्, पञ्चाशत्, षष्टिः, सप्ततिः, अशीतिः, नवतिः, शतम्, सहस्रम्, अयुतम्, नियुतम्, कोटिः। सदैकत्वे इत्यनेन नित्यैकवचनता॥ ८३॥

[1] मूल्य $B_3$ [2] 'अम्मुट कोतुटि' $B_3$ [3] मूल्यदानवाचकौ $B_3$

**सङ्ख्यार्थे द्विबहुत्वे स्तस्तासु चानवतेः स्त्रियः।**
**पङ्क्तेः शतसहस्रादि क्रमाद्दशगुणोत्तरम्॥ ८४॥**

(वि.) सङ्ख्यार्थ इति—सङ्ख्यार्थे सङ्ख्यामात्रे वर्तमानानाम् एकोनविंशत्यादीनां द्विवचनबहुवचनेऽपि स्तः। तात्पर्यार्थस्तु एकोनविंशत्याद्या शब्दा सङ्ख्यायामेकवचन-द्विवचनबहुवचनान्ता भवन्ति। सङ्ख्येये वर्तमानास्तु एकवचनान्ता एव भवन्तीत्यर्थः॥ तासु सङ्ख्येयसङ्ख्यासु वर्तमाना एकोनविंशत्याद्या सर्वे शब्दा आनवतेः नवतिशब्दपर्यन्तं स्त्रियः स्त्रीलिङ्गा भवन्ति। सङ्ख्येयानुसारेण तल्लिङ्गा न भवन्ति[1]। अत्रोदाहरणानि—विंशत्या शरैर्विद्धः। विंशत्यै स्त्रीभ्यो देयानि फलानि। विंशतिः फलानि॥ सङ्ख्यायामुदाहरणानि—गवां द्वे विंशती। गवां तिस्रो विंशतयः॥ पङ्क्तिः[2] दश सङ्ख्या, तस्या आरभ्य दशगुणोत्तरं क्रमात् शतं सहस्रम्। दश दशगुणं शतम्। शतं दशगुणं सहस्रम्।

आदिग्रहणात् अयुत प्रयुतमित्यादि। सहस्रं दशगुणम् अयुतम् इत्यादि। एवमादि परार्धशब्दपर्यन्ता भवन्ति ॥ ८४ ॥

[1] $K_3$, $K_6$ add किंतु नियतस्त्रीलिङ्गा एव भवन्ति; भिन्नलिङ्गेन समानाधिकरणा अपि स्त्रीलिङ्गाः $F_2$, $Pt_2$. [2] पङ्क्तिशब्देन दशसंख्योच्यते $Pt_2$.

(पा.) संख्यार्थे द्विबहुत्वे स्तः। [1]संख्यार्थे [2]विंशत्यादीनां द्वित्वबहुत्वेऽपि स्याताम्। अमत्राणां द्वे विंशती। अतिथीनां तिस्रो विंशतयः॥ तासु चानवतेः स्त्रियाम्। तासु नवतिशब्दान्ताः सर्वे शब्दा स्त्रीलिङ्गाः। [3]विंशत्या पुरुषैर्भुक्तम्। 'कोट्याः शतादि-संख्यान्या वा लक्षा नियुतं च तत्' (३. ५. २४) इति वक्ष्यमाणत्वात् शतादीनि नपुंसकान्येव। 'परैः परिभवे प्राप्ते वयं पञ्चोत्तरं शतम्' (म. भा. ३. २३२. १२)॥ पङ्क्तेः शतसहस्रादि—दशगुणोत्तरम्। पङ्क्तिशब्दो दशपर्यायः। 'नृपतेः प्रतिषिद्धमेव तत् कृतवान् पङ्क्तिरथो विलङ्घ्य यत्'। (रघु. ९. ७४) इति दशरथे पङ्क्तिरथशब्द-प्रयोगः। दशशब्दान्यत्वादस्य विंशतिशब्दवत् लिङ्गवचनव्यवस्था। पङ्क्तिशब्दादारभ्य शतसहस्रादीनि पदानि क्रमेण [4]दशगुणोत्तरसंख्यावाचकानि। पङ्क्तिर्दशगुणा चेच्छतम्। शतं दशगुणं चेत् सहस्रम्। सहस्रं दशगुणं[5] चेदयुतमित्यादि ॥ ८४ ॥

[1] संख्यानार्थे $A_1$. [2] एतेषां $A_1$. [3] नवसप्तत्या $A_1$. [4] दशगुणोत्तराणि $A_1$ [5] दशगुणितं $A_1$

पौतवं द्रुवयं पाय्यमिति मानार्थकं त्रयम्।
मानं तुलाङ्गुलिप्रस्थैर्गुञ्जाः पञ्चाद्यमाषकः ॥ ८५ ॥

(वि.) पौतवमिति—पुनाति धान्यादिमानं शोधयतीति पोतुः राजपुरुष.[1]। तस्येदं पौतवम्। यौतवमिति वा पाठः। द्रोः [2]द्रुमस्य विकारः द्रुवयम्। मकारस्य वकारादेशो भवति। मीयतेऽनेनेति पाय्यम्। 'माङ् माने'। धात्वादेर्मकारस्य पकारादेशः। धान्यादिमानार्थनामानि॥ मीयतेऽनेनेति मानम्। तच्च तुलाङ्गुलिप्रस्थैः त्रिप्रकारं भवति। यथा [3]हिरण्यादिमानं तुलादिरूपम्। क्षेत्रादिमानम् अङ्गुल्यादिकम्। धान्यादिमानं प्रस्थादिरूपम् इति। माषवत् स्थूलत्वात् माषक.[4]। आद्यश्चासौ माषकश्च आद्यमाषकः। रजतव्यतिरिक्तपञ्चगुञ्जापरिमितहिरण्यादेर्नाम ॥ ८५ ॥

[1] $F_2$, $Pt_2$ add 'पूञ् पवने'. [2] द्रुमस्य $W_2$, $Pt_2$. [3] हिरण्यादि $K_3$, $K_6$ [4] माषाकृतित्वात् $Pt_2$

(पा.) पौतव द्रुवय—त्रयम्। पौतवादीनि त्रीण्यपि [1]मानसामान्यनामानि। पाय्य हस्तादिभिर्मान, द्रुवय [2]कुडुवादिभि। पौतव तु लयेत्यन्या राद्धान्ता तुलाङ्गुलिप्रस्थैरिति व्यत्यस्तपाठन प्रत्याख्यात॥ मान तुलाङ्गुलिप्रस्थै। मीयतेऽनेनेति मानम्। यत् पण्यद्रव्यादीयत्तापरिच्छेदक[3] तन्मानम्। [4]तच्च तुलाङ्गुलिप्रस्थैस्त्रिविध स्यात्। तत्र पलकर्षादीनि तुलामानानि। हस्तवितस्त्यादीनि अङ्गुलिमानानि। द्रोणाढकादीनि प्रस्थमानानि॥ गुञ्जा पञ्चाद्यमापक। गुञ्जा पञ्च स्युश्चेद् आद्यमापक स्यात्॥ ८५॥

[1] सामान्यार्थकानि $A_1$ [2] कुडपादिभि $B_3$ [3] परिच्छदरूप $A_1$ [4] त मान $A_1$

**ते षोडशाक्षः कर्षोऽस्त्री पल कर्षचतुष्टयम्।**
**सुवर्णबिस्तौ हेम्नोऽक्षे कुरुबिस्तस्तु तत्पले॥ ८६॥**

(वि.) त इति—अक्ष्णोति [1]सघातरूपतामापद्यत इति अक्ष। 'अक्षू व्याप्तौ'। कर्षति स्वभारेण तुलाकोटिमिति कर्ष। 'कृष विलेखने'। षोडशाद्यमापकपरिमित सुवर्णादिनामनी॥ पलति तुलाकोटि गच्छतीति पलम्। 'पल गतौ'। कर्षाणा चतुष्टयस्य नाम॥ शोभनो वर्णो यस्य [2]सुवर्ण। बिस्यति तुलाकोटि नीचै प्रेरयतीति बिस्त। 'बिस [3]क्षेपे'। अक्षपरिमितहेम्नो नामनी॥ कुरुदेशे बिस्त इति प्रसिद्धत्वात् कुरुबिस्त। पलपरिमितहेम्नो नाम॥ ८६॥

[1] ०प्राप्नोतीति $Pt_2$ [2] सुवर्णमत्रास्तीति $Pt_2$ [3] प्ररण $W_2$

(पा.) ते षोडशाक्ष—अस्त्री। आद्यमापा षोडश स्युश्चेद् अक्ष स्यात्। स एव [1]कर्ष॥ पल कर्षचतुष्टयम्। कर्षाश्चत्वार स्युश्चेत् पल स्यात्॥ सुवर्णबिस्तौ हेम्नोऽक्षे। काञ्चनस्य कर्षे सुवर्णबिस्तशब्दौ स्यातम्॥ कुरुबिस्तस्तु तत्पले। तस्यैव हेम्न[2] पले कुरुबिस्तशब्दश्च स्यात्। अनुक्तम्—राजते पल इन्दु स्यात्। रजतस्य पले इन्दुशब्द स्यात्॥ ८६॥

[1] कर्षश्च $B_3$ [2] पलपरिमितहेम्न $B_3$

**तुला स्त्रियां पलशत भारः स्याद् विंशतिस्तुलाः।**
**आचितो दश भाराः स्युः शाकटो भार आचितः॥ ८७॥**

(वि.) तुलेति—तोल्यत[1] इति तुला। 'तुल उन्माने'। [2]पलानां शतस्य नाम॥ भ्रियत इति भारः। 'भृञ् भरणे'। द्विसहस्रपलपरिमितताम्रादिद्रव्यनाम॥ आचीयते राशीक्रियते आचितः। 'चिञ् चयने'। विंशतिसहस्रपलपरिमितताम्रादिद्रव्यराशिनाम॥ शकटेन उह्यते शाकटः। शकटेन वोढुं शक्यस्य भारस्य नाम॥ ८७॥

[1] तुल्यते $K_1$, $Pt_2$. [2] पलशतपरिमितसुवर्णादिनाम $K_3$, $K_6$.

(पा.) तुला स्त्रियां पलशतम्। पलानां शतं तुला स्यात्॥ भारः स्याद् विंशतिस्तुलाः। तुला विंशतिश्चेत् भारः स्यात्। आचित दश भाराः स्युः। भारा दश चेदाचितं स्यात्। नपुंसकम्॥ शाकटो भार आचितः। शकटभार आचितः स्यात्। पुंलिङ्गः। लिङ्गविवेकद्वारा आनुषङ्गिकार्थाभिधानम्॥ ८७॥

**कार्षापणः कार्षिकः स्यात् कार्षिके ताम्रिके पणः।**
**अस्त्रियामाढकद्रोणौ खारी वाहो निकुञ्चकः॥ ८८॥**
**कुडवः प्रस्थ इत्याद्याः परिमाणार्थकाः पृथक्।**

(वि.) कार्षापण इति—कर्षरूपेण [1]ताम्रेण पण्यत इति कार्षापणः। कर्षप्रमाणमस्येति कार्षिकः। पण्यते व्यवह्रियतेऽनेनेति पणः। 'पण व्यवहारे'। ताम्रकृतकर्षप्रमाणकरूपकनामानि॥ [2]आ समन्तात् ढौकते गच्छतीति आढकः। 'ढौकृ गतौ'। प्रस्थचतुष्टयपरिमाणस्य नाम॥ [3]द्रुणति धान्यपरिमाणाय वर्तते सर्वतो गच्छतीति द्रोणः। 'द्रुण हिंसागतिकौटिल्येषु'। अष्टाढकप्रमाणस्य नाम॥ खं महदाकाशमस्या इति खारी। चतुर्विंशतिद्रोणपरिमाणनाम॥ वहति धान्यादिकमिति वाहः। 'वह प्रापणे'। अष्टद्रोणान्न्यूनाष्टखारिपरिमाणनाम॥ निकुञ्चति कुडवापेक्षया अल्पीभवतीति निकुञ्चकः। 'कुञ्च कौटिल्याल्पीभावयोः'। कुडवचतुर्थांशनाम॥ कुल्यते संख्यायते धान्यमिति कुडवः[4]। 'कुल संस्त्याने बन्धुषु च'। द्वादशप्रसृतिपरिमाणनाम॥ प्रतिष्ठते धान्यमत्रेति प्रस्थः। 'ष्ठा गतिनिवृत्तौ'। कुडवचतुष्टयपरिमाणनाम॥ ८८॥

[1] रूप्यकरूपेण $W_2$, रूप्येण $Pt_2$ [2] *Gap of ten pages in* $K_2$. [3] द्रवति, 'द्रु गतौ' $F_2$, $Pt_2$. [4] कुडुव इति वा पाठः: $K_3$ यदाहुः—'पलं प्रकुञ्चकं मुष्टिः कुडवस्तच्चतुष्टयम्। चत्वारः कुडवाः प्रस्थश्चतुःप्रस्थमथाढकम्। अष्टाढको भवेद् द्रोणो द्विद्रोणः शूर्प उच्यते। सार्धशूर्पो भवेत् खारी द्विगुणा गोण्युदाहृता। तामेव भारं जानीयाद्वाहो भारचतुष्टयम्' इति स्वामी (पृ. २२०)॥

(पा.) कार्षापणः कार्षिकः स्यात्। हेमरजतादि कर्षादिमुद्रया हताक्षनामनी। 'हेमरजतादिकर्पं चेत्तवोर्ग्रिचिन अच्चु'। कार्षिके ताम्रिके पणः। ताम्रेण कृतः कार्षापणः पणः स्यात्॥ अस्त्रियामाढकद्रोणौ—परिमाणार्थकाः पृथक्। आढकं प्रस्थचतुष्टयपरिमाणनाम। 'तूमेड्डु'। द्रोणं चत्वार्याढकानि। 'तलुतुमु'। खारी द्रोणार्धम्। 'यिड्डुमु'। वाह आढकार्धम्। 'यिरन'। 'कुम्भः शूर्पोऽस्त्रियां तौ द्वौ गोणिर्वाहस्तु तद्द्वयम्'। तौ द्वौ खारीति केचित्। केषांचित् खारिवाहौ। तन्मते वाहश्चतुःशूर्पाः, खारिरष्टशूर्पाः। द्विपण्टकः प्रसृतिः। 'चारेड्डु'। निकुञ्चक इति पाठान्तरम्। निकुञ्चकश्च मानचतुर्थांशः। 'सौलेड्डु'। कुडुवो मानम्। 'पडेड्डु'। पलचतुष्टयं कुडुव इति तुलामानविषयः। प्रस्थ इति मानचतुष्टयम्। एवमूह्याः पृथक्परिमाणार्थकाः॥ ८८॥

पादस्तुरीयो भाग स्यादंशभागौ तु वण्टके॥ ८९॥
द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु।
हिरण्यं द्रविण द्युम्नमर्थरैविभवा अपि॥ ९०॥

(वि.) पाद इति—पद्यत इति पादः। 'पद गतौ'। चतुर्थांशनाम॥ अंश्यते अंशः। 'अंश विभागे'। अम्यते सेव्यते क्रमेणेति वा। 'अम गत्यादिषु'। भज्यते क्रमेण भागः। 'भज सेवायाम्'। वण्ट्यते [1]सेव्यते वण्टकः। 'वटि विभाजने'। मापाद्येकदेशनामानि॥ द्रवणीयमिति द्रव्यम्[2]। 'द्रु गतौ'। द्रविणं च। विद्यते लभ्यत इति वित्तम्। 'विद्लृ लाभे'। स्वपतौ वित्तस्वामिनि साधु स्वापतेयम्। रिच्यते पुत्रादिना [3]निःसार्यत इति रिक्थम्। 'रिचिर् विरेचने'। ऋच्यते स्तूयत इति ऋक्थम्। 'ऋच स्तुतौ'। धिनोति स्वामिनमिति धनम्। 'धिवि प्रीणने'। धनतीति वा। 'धन धान्ये'। वसति नीतिमतां गृह इति वसु। 'वस निवासे'। हर्यति गच्छतीति[4] हिरण्यम्। 'हर्य गतिकान्त्योः'। [5]द्यूयतेऽभिगम्यते[6] द्युम्नम्। 'द्यु अभिगमने'। अर्थ्यते जनैरिति अर्थः। 'अर्थ उपयाच्ञायाम्'। [7]राति पुष्टिमिति राः। 'रा दाने'। विभवति कार्यसिद्धौ समर्थो भवति विभवः। धननामानि॥ ८९–९०॥

[1] वट्यते, 'वट' $K_5$, $K_6$　　[2] यत्नात् अधिगन्तव्यत्वात् $K_3$, $K_6$, द्रवणीयत्वात् $W_2$.
[3] विभज्यते, 'रिचिर् पृथग्भावे' $F_2$, $Pt_2$.　　[4] दीव्यति $K_5$, $K_6$.　　[5] $Pt_2$ adds द्रवति गच्छतीति द्रविणम्, 'द्रु गतौ'.　　[6] $K_6$ adds अर्थिभिः.　　[7] रास्यनेनमिति, 'रा आदाने' $Pt_2$.

(पा.) पादस्तुरीयो भागः स्यात्। चतुर्थभागः पादः स्यात्। प्रस्थपादः कुडुवः। पलपादः कर्ष इत्यादि ॥ अंशभागौ तु वण्टके। एकदेशनामनी ॥ द्रव्यं वित्तं—विभवा अपि। धननामानि ॥ ८९–९० ॥

स्यात् कोशश्च हिरण्यं च हेमरूप्ये कृताकृते।
ताभ्यां यदन्यत् तत्कुप्यं रूप्यं तद् द्वयमाहतम् ॥ ९१ ॥

(वि.) स्यादिति—कूयते स्तूयत इति कोशः[1]। 'कु शब्दे'। हर्यति दीप्यतीति हिरण्यम्। 'हर्य गतिकान्त्योः'। कृतावस्थस्य[2] अकृतावस्थस्य वा हेम्नो रूप्यस्य च नामनी ॥ गोप्यते अप्रमत्तैरिति कुप्यम्[3]। धात्वादेर्गकारस्य ककारादेशः। ताभ्यां कृताकृताभ्यां हेमरूप्याभ्याम् अन्यस्य कांस्यादिलोहस्य नाम ॥ रूपमस्यास्तीति रूप्यम्। आहतस्य राजमुद्राङ्कितस्य तद्द्वयस्य कुंप्याकुप्यस्य[4] नाम ॥ ९१ ॥

[1] कोष इति वा पाठः $W_2$ [2] घटिताघटितस्य $F_2$. [3] $W_2$, $Pt_2$ add 'गुपू रक्षणे'. [4] हेमरूप्यस्य $K_5$, $K_6$

(पा.) स्यात् कोशश्च—कृताकृते। अग्निना [1]द्रुतं पश्चाद्घनीभूतं[2] तत् हेम कोशहिरण्यशब्दवाच्यम्, तद्रूप्यं च कोशहिरण्यशब्दवाच्यम्। अंशरूपपरित्यागात् कृतं च, कटकादिरूपमप्राप्तेरकृतं च, इति कृताकृतं पिण्डीभूतमुच्यते। ताभ्यां यदन्यत् तत्कुप्यम्। ताभ्यां हेमरूप्याभ्यामन्यत्ताम्रादि द्रव्यं कुप्यं स्यात् ॥ रूप्य तद्द्वयमाहतम्। व्यवहारार्थं आहते मुद्रिते कुप्याकुप्ये द्वे च रूप्यं स्यात्[3] ॥ ९१ ॥

[1] तत $A_1$. [2] $B_2$ adds इति यावत्. [3] $A_1$ adds नाणकनामाप्यम्.

गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः।
शोणरत्नं लोहितकः पद्मरागोऽथ मौक्तिकम् ॥ ९२ ॥
मुक्ताथ विद्रुमः पुंसि प्रवालं पुंनपुंसकम्।

(वि.) गारुत्मतमिति—गरुत्मत इदं [1]गारुत्मतम्। मरणं तरत्यनेन मरकतम्[2]। गरुडोद्गारलिप्तः अश्मा गर्भे यस्य अश्मगर्भः। हरितवर्णो मणिः हरिन्मणिः। हरितवर्णस्य रत्नस्य नामानि ॥ शोणवर्णं रत्नं शोणरत्नम्। लोहितवर्णत्वात् लोहितकः। पद्मवद् रागो

यस्य पद्मराग । रक्तवर्णरत्नस्य नामानि ॥ मुक्तैव मौक्तिकम् । मुच्यते शुक्तिसपुटगर्भान्मुक्ता । 'मुच्लृ मोक्षणे'। मुक्तानामनी ॥ विशिष्टश्चासौ द्रुमश्च विद्रुम । अप्सु प्ररुह्य चलते प्रवालम् । 'वल सचलने'। विद्रुमनामनी ॥ ९२ ॥

[1] गरुत्मतो जात $F_2$ $Pt_2$. [2] मर मरण तत्कल्पनेन, 'तक हसने' $Pt_2$ मरक तरति $W_2$

(पा.) गारुत्मत मरकत—हरिन्मणि । मरतकमिति कचित् पाठ । मरकतमणि[1]-नामानि ॥ शोणरत्न—पद्मराग । [2]शोणमणिनामानि । कुरुविन्दोऽपि । 'कुरुविन्दमणिश्रेणिकनत्कोटीरशोभिता' इति प्रयोगात् (ललिता ४)।

'बहलानुरागकुरुविन्ददलप्रतिबद्धमध्यमिव दिग्वलयम्'।

इति माघश्च (शिशु ९. ८)॥ अथ मौक्तिक मुक्ता । मुक्ताफलमपि स्यात् । 'मुक्ताफल शौक्तिकेय गङ्गेष्टि कटशर्करा' इति वैजयन्ती (पृ. १५२, श्लो ५७)। मुक्तामणिनामनी ॥ अथ विद्रुम —पुनपुसकम् । प्रवालनामनी । 'पगडमु'। अनुक्तम्—इन्द्रनील महानीलम्[3]। [4]नीलरत्ननामनी ॥ सूर्यकान्तस्त्वग्निमणि । रविरत्ननामनी । वैडूर्यं वाल्वायजम् । [5]वैडूर्यमणिनामनी ॥ ९२ ॥

[1] हरितवर्णमणि° $B_3$ [2] माणिक्य° $A_1$ [3] महानील $A_1$ [4] मणि° $B_3$ [5] विडूररत्न° $A_2$

**रत्न मणिर्द्वयोरश्मजातौ मुक्तादिकेऽपि च ॥ ९३ ॥**
**स्वर्ण सुवर्ण कनक हिरण्य हेम हाटकम् ।**
**तपनीय शातकुम्भं गाङ्गेय भर्म कर्बुरम् ॥ ९४ ॥**
**चामीकरं जातरूपं महारजतकाञ्चने ।**
**रुक्मं कार्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम् ॥ ९५ ॥**

(वि.) रत्नमिति—रमन्तेऽस्मिन् जना इति रत्नम् । 'रमु क्रीडायाम्'। मण्यते [1]रत्नमिति मणि । 'मण शब्दे'। गारुडाद्यश्मजातीयमुक्ताप्रवालादेर्नामनी ॥ शोभनो वर्णो यस्य स्वर्णम् । सुवर्णं च । कनति [2]दीप्यतीति कनकम् । 'कन दीप्तिकान्तिगतिषु'। हर्यतीति हिरण्यम् । 'हर्य गतिकान्त्यो'। हिनोति ताम्राद्यवलेपनात् वर्धत इति हेम । 'हि [3]गतौ'। नान्त । हटति [4]दीप्यतीति हाटकम् । 'हट दीप्तौ'। तप्यतेऽग्नाविति[5] तपनीयम् । 'तप सतापे'। शतकुम्भाख्ये आकरे गिरौ वा भवतीति शातकुम्भम् ।

गङ्गाया अपत्यं गाङ्गेयम्[6]। भ्रियतेऽङ्गुल्यादिभिरिति भर्म। 'भृञ् भरणे'। नान्तः। कर्वति लोहमध्ये स्वश्रैष्ठ्यादिति कर्बुरम्। 'कर्व [7]दर्पे'। चामीकराख्याकरे गिरौ वा भवत्वात् चामीकरम्। महार्घतया जातं प्रशस्तं रूपमस्येति जातरूपम्। रज्यते ताम्रादिकमनेनेति रजतम्। महच्च तद्रजतं च महारजतम्। काञ्चते दीप्यत इति काञ्चनम्। 'काचि दीप्तिबन्धनयोः'। रोचत इति रुक्मम्। 'रुच दीप्तौ'। कृतस्वराख्याकरभवत्वात् कार्तस्वरम्। जम्बूफलरसोत्पन्ननदीभवत्वात् जाम्बूनदम्। अष्टसु लोहेषु पदं प्रतिष्ठाऽस्येति अष्टापदम्। अष्टलोहानि यथा—

> 'सुवर्णं रजतं ताम्रं रीतिः कांस्यं तथा त्रपु।
> सीसं च धीवरं चैव अष्टलोहानि चक्षते॥'

इति। सुवर्णनामानि॥ ९३–५॥

[1] F₂, Pt₂ add स्तूयते. [2] दीप्यते W₂, Pt₂. [3] K₁, K₆ add वृद्धौ च. [4] दीप्यत इति F₂, Pt₂. [5] W₂ adds अनेन; तापनमर्हतीति Pt₂. [6] गङ्गायामग्निना न्यस्तस्य माहेश्वरवीर्यस्य हिरण्यत्वेन भूतत्वात् Pt₂. [7] 'कर्व खर्व गर्व दर्पे' K₅, K₆.

(पा.) रत्नं मणिर्द्वयोः—मुक्तादिकेऽपि च। रत्नमणिशब्दौ द्वौ मरकताद्यश्मजातौ मौक्तिकाद्यनश्मजातावपि[1] स्याताम्॥ स्वर्णं सुवर्णं कनकं हिरण्यं हेम। 'हेममष्टापदं स्वर्णम्' इति धनंजयपाठाद् अकारान्तोऽपि स्यात्। हाटकं—भर्म। 'भर्म रुक्मं हाटकं शातकुम्भम्' इति हलायुधपाठाद् (अ॰ मा॰ २॰ १८) अकारान्तोऽपि स्यात्। कर्बुरं—अष्टापदोऽस्त्रियाम्। कनकनामानि। कल्याणमग्निबीजं च देवार्हं [2]गौरमर्जुनम्। एतानि पञ्च च॥ ९३–५॥

[1] अश्मजातौ A₁. [2] तारजीवनम् B₂.

**अलंकारसुवर्णं यच्छृङ्गीकनकमित्यदः।**
**दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतमित्यपि॥ ९६॥**

(वि.) अलंकारेति—[1]शृङ्गयामलंकारे उपादेयं कनकं शृङ्गीकनकम्। अलंकारयोग्यसुवर्णनाम॥ कनकापेक्षया निकृष्टवर्णत्वाद् दुर्वर्णम्[2]। रज्यते ताम्रादिकमनेनेति रजतम्। 'रञ्ज रागे'। प्रशस्तं रूपमस्येति रूप्यम्। खर्जति व्यथते घनघाताघातिकतया खर्जूरम्। 'खर्ज व्यथने'। [3]श्वेतवर्णत्वात् श्वेतम्। रजतनामानि॥ ९६॥

[1] शृङ्गैरलंकाराय K₅, K₆. [2] दुष्टो वर्णोऽस्य W₂. [3] श्वेतते, 'श्विता वर्णे' K₅.

(पा.) अलंकारसुवर्णं—कनकमित्यद । कटकाद्यलंकारसंबन्धि सुवर्णं शृङ्गीकनकं स्यात्। शृङ्गीकनकमित्यौर्वानलादिवत् प्रयोग । 'स्त्री शृङ्गी मण्डनसुवर्णम्' इति रत्नकोशे पृथङ्निर्देश । केषांचित् शृङ्गीकनकमिति सघातोऽपि[1] गृहीत एव। 'अलंकारसुवर्णं तु शृङ्गीकनकमाशु च' इति वैजयन्ती (पृ ४२, श्लो २२)। दुर्वर्णं रजत—श्वेतमित्यपि। रजतनामानि। अनुक्तम्—'तार शुभ्र चन्द्रहासम्'[2]। एतानि त्रीणि च ॥ ९८ ॥

[1] $B_3$ omits अपि [2] च द्रव्योजम् $A_1$

**रीतिः स्त्रियामारकूटो न स्त्रियामथ ताम्रकम् ।**
**शुल्ब म्लेच्छमुख द्व्यष्टवरिष्ठोदुम्बराणि च ॥ ९७ ॥**

(वि.) रीतिरिति—[1]रीयतेऽग्निसयोगात् रीति । 'रीङ् स्रवणे'। आरस्य सुवर्णस्य कूटो [2]मायारूपमिव भासत इति आरकूट । पित्तलाख्यलोहनामनी ॥ ताम्यति सुवर्णस्य कूटो... ताम्यति काङ्क्षते [3]स्वनैर्मल्यार्थमाम्ल व्यथतेऽग्निसयोगादिति ताम्रम्। 'तमु ग्लानौ'। ताम्यति काङ्क्षते [3]स्वनैर्मल्यार्थमाम्ल रसमिति वा। 'तमु काङ्क्षायाम्'। शलति द्रवावस्थायामाशुगच्छतीति शुल्बम्। 'शल [4]गतौ'। म्लेच्छदेशे मुख्यत्वात् म्लेच्छमुखम्[5]। द्वे हेमरूप्ये अश्नुते द्व्यष्टम्। 'अशू व्याप्तौ'। सुवर्णरजतेतरलोहेभ्य श्रेष्ठत्वात् वरिष्ठम्। उदुम्बर[6] सुवर्णम्। तत्साहश्यात् उदुम्बरम्[7]। औदुम्बरमिति वा पाठ । ताम्रनामानि ॥ ९७ ॥

[1] $F_2$ $Pt_2$ add स्रवति [2] मायामय रूपमिव $K_5$ $K_6$ [3] सुवर्ण° $W_2$ स्वर्ण° $K_5$ [4] शल गल आशुगमने $K_5$ $K_6$ [5] म्लेच्छस्य मुखमिव $W_2$ [6] औदुम्बर $K_5$ $K_6$ [7] उदुम्बराभत्वात् $Pt_2$

(पा.) रीति स्त्रिया—न स्त्रियाम्। रीतिनामनी। 'पित्तसि'। [1]पित्तल कपिलोह च। एते द्वे च॥ अथ ताम्रक—उदुम्बराणि च। ताम्रनामानि। अनुक्तम्—कांस्य प्रभास सौराष्ट्रमसुराह्वयमप्यद । कांस्यनामानि ॥ ९७ ॥

[1] पीतल $B_2$

**लोहोऽस्त्री शस्त्रक तीक्ष्णं पिण्ड कालायसायसी ।**
**अश्मसारोऽथ मण्डूर सिंहाणमपि तन्मले ॥ ९८ ॥**

(वि.) लोह इति—लुनात्यङ्गमिति लोहः। 'लूञ् छेदने'। शस्यते हिंस्यतेऽने-[1]नेति शस्त्रकम्। 'शसु हिंसायाम्'। तिज्यते तनूक्रियते शातनायेति तीक्ष्णम्। 'तिज निशातने[2]'। पिण्ड्यते संहन्यतेऽनेनेति पिण्डम्। 'पिडि संघाते'। [3]कालवर्णं च तदयश्च कालायसम्। शल्यादिरूपेण भेद्यमेतीत्ययः। 'इण् गतौ'। अश्मनः सारोऽश्मसारः। अयसो नामानि॥ मण्ड्यतेऽयःपिण्डात् विभज्यत इति मण्डूरम्। 'मडि विभाजने'। हिनस्ति [4]नाशयति पाण्डुरोगमिति सिङ्घाणम्। 'हिसि हिंसायाम्'। अयोमलस्य नामनी[5] ॥ ९८ ॥

[1] $W_3$ adds देहः. [2] निशाने $W_2$. [3] कालं $K_3$. [4] नश्यतीति $K_5$, $K_6$.
[5] $W_3$ ends here.

(पा.) लोहोऽस्त्री शस्त्रकं—अश्मसारः। अयसो नामानि। 'यतुमु'। शस्त्र-शब्देन शस्त्रपर्यायस्यापि ग्रहणम्। 'शस्त्राख्यं विषमायुधम्' इति वैजयन्ती (पृ. ४३, श्लो. ३३)॥ अथ मण्डूरं—तन्मले। शिङ्घाणमिति वा पाठः। [1]आयसमलनामनी। 'चिट्टमु' ॥ ९८ ॥

[1] अयोमल° $A_1$.

**सर्वं स्यात्तैजसं लोहं विकारस्त्वयसः कुशी।**
**क्षारः काचोऽथ चपलो रसः सूतश्च पारदे ॥ ९९ ॥**

(वि.) सर्वमिति—तेजसो विकारः तैजसम्। सर्वं तैजसं हेमादि लोहं भवति। सुवर्णं रजतमित्यादि अष्टौ लोहानि। कुत्सितं श्यति लोहादिकं तनूकरोतीति [1]कुशी। अयोविकारनाम॥ क्षरति चलतीति[2] क्षारः। 'क्षर संचलने'। द्वारतया सूत्रेण कच्यते काचः। 'कचि [3]बन्धने'। काचनामानि॥ अस्थिरत्वात् चपलः। रस्यते औषधत्वेनेति रसः। 'रस आस्वादने'। सूते हेमादिकमिति सूतः। 'पूङ् प्राणिप्रसवे'। रोगस्य पारं ददातीति पारदः। 'दा दाने'। पारत इति वा पाठः। पारदरसनामानि ॥ ९९ ॥

[1] $K_6$, $Pr_2$ add 'शो तनूकरणे'. [2] द्रावस्थायां चलति $K_5$, $K_6$. [3] 'कचि दीप्तिबन्धनयोः' $K_3$.

(पा.) सर्वं स्यात्तैजसं लोहम्। [1]सुवर्णरजतचत्वारि तैजससामान्यं लोहं स्यात्॥ विकारस्त्वयसः कुशी। अयोविकारः कुशी स्यात्। '[2]सरलुसुदलेनदि'॥

क्षारः काचः। मृद्विकारनामनी। 'गाजुमुदलैनदि[3]'॥ अथ चपलो—पारदे। तान्तो दान्तोऽपि स्यात्। 'रसेन्द्रः[4] पारदः प्रोक्तः पारतोऽपि निगद्यते' इति तारपालः। पारदनामानि। 'पादरसमु'॥ ९९॥

[1] सवर्ण° $A_1$. [2] $B_3$ omits. [3] $B_3$ omits 'मुदलैनदि'. [4] रसे तु $B_3$, रेवे तु $A_1$.

**गवलं माहिषं शृङ्गमभ्रकं गिरिजामले।**
**स्रोतोऽञ्जनं तु सौवीरं कापोताञ्जनयामुने॥ १००॥**

(वि.) गवलमिति—[1]गामलति [2]निवारयतीति गवलम्। 'अल भूषणपर्याप्तिवारणेषु'। महिषशृङ्गनाम॥ शरदभ्ररेखासदृशत्वाद् अभ्रकम्। गिरौ [3]जायत इति गिरिजम्[4]। न विद्यते मलमत्रेति अमलम्। अभ्रकनामानि[5]॥ [6]अज्यते लोचनमनेनेति अञ्जनम्। 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु'। स्रोतसि यमुनास्रोतसि जातमञ्जनं स्रोतोऽञ्जनम्। [7]सुवीराख्यदेशे भवत्वात् सौवीरम्। कपोतवर्णसदृशम् अञ्जनं कपोताञ्जनम्। यमुनाया भवं यामुनम्। सुवीरदेशोद्भवाञ्जननामानि॥ १००॥

[1] गाः $F_2$, $Pt_2$. [2] वारयति $K_3$, $Pt_2$. [3] भवतीति $K_5$, $K_6$. [4] $K_3$, $Pt_2$ add 'जनी प्रादुर्भावे'. [5] $K_5$, $K_6$ add 'काकियञ्जारुपेरु'. [6] अञ्जते $K_5$, $K_6$. [7] सौवीर° $K_6$.

(पा.) [1]गवलं माहिषं शृङ्गम्। महिषविषाणं [2]गवलं स्यात्। अभ्रकं गिरिजामले। पदद्वयमेतत्। अभ्रकनामानि। 'भिंगमु'। व्योममेघपर्यायाभिधेयत्वादभ्रकं व्योममेघाभिधानं च। गौरीबीजाख्यमभ्रकमिति तन्त्रान्तरम्॥ स्रोतोऽञ्जनं तु—यामुने। नीलाञ्जननामानि॥ १००॥

[1] लवङ्ग देवकुसुमम् $A_1$. [2] लवग $B_3$, लवङ्ग $A_1$

**तुत्थाञ्जनं शिखिग्रीवं वितुन्नकमयूरके।**
**कर्परी दार्विका क्वाथोद्भवं तुत्थं रसाञ्जनम्॥ १०१॥**
**रसगर्भं तार्क्ष्यशैलं गन्धाश्मनि तु गन्धकः।**
**सौगन्धिकश्च चक्षुष्याकुलाल्यौ तु कुलत्थिका॥ १०२॥**

(वि.) तुत्थाञ्जनमिति—तुदति नाशयत्यक्षिरोगमिति तुत्थम्। 'तुद व्यथने'। तुत्थं च तदञ्जनं च तुत्थाञ्जनम्। [1]शिखिग्रीवाभत्वात् शिखिग्रीवम्। विशेषेण तुदति रोगानिति वितुन्नकम्। मयूरसदृशत्वात् मयूरकम्। कल्पतेऽक्षिरोग जेतुमिति कर्परी। 'कृपू सामर्थ्ये'। तुत्थाञ्जननामानि॥ दार्वी हरिद्रा। तस्या क्वाथोद्भवमञ्जनं दार्विका। क्वाथोद्भवं च। तुत्थं व्युत्पन्नम्। दार्व्या रसोद्भवमञ्जनं [2]रसाञ्जनम्। दार्वीरसो गर्भ उत्पत्तिस्थानमस्येति रसगर्भम्। तार्क्ष्यस्य गरुडस्य शिलाया भवं तार्क्ष्यशैलम्। रसाञ्जननामानि॥ गन्धप्रधानोऽश्मा गन्धाश्मा। सालगन्धवत् गन्धोऽस्यास्तीति गन्धक[3]। शोभनो गन्धो यस्य सुगन्धि। सुगन्धिरेव सौगन्धिकं। गन्धाश्मनामानि॥ चक्षुषे हिता चक्षुष्या। कुलं [4]पाषाणकुलम् अलति भूषयतीति कुलाली। 'अल भूषणादौ'। कुलुत्थसदृशत्वात्[5] कुलुत्थिका। कुलुत्थसदृशाञ्जनस्य नामानि॥ १०१–२॥

[1] मयूर॰ $K_3$ [2] रसश्च दार्विकाकाथस्य $h_3$, $h_6$ [3] गन्धिक, सौगन्धिकश्च $K_5$ $h_6$ [4] लोचन $K_6$ [5] प्रकृतित्वात् $h_5$ $h_6$

(पा.) तुत्थाञ्जन—मयूरके। मयूरतुत्थनामानि॥ कर्परी दार्विका—तुत्थम्। कर्परीतुत्थनामानि॥ रसाञ्जन—तार्क्ष्यशैलम्। रसाञ्जननामानि॥ [1]गन्धाश्मनि—सौगन्धिकं च। 'सौगन्धिकं पद्मरागे कल्हारे गन्धके च षण्' इति नपुंसकम्। गन्धकनामानि॥ चक्षुष्याकुलाल्यौ तु कुलत्थिका। कुलत्थाञ्जननामानि। '[2]कनुपाल-वितुल्लु'॥ १०१–२॥

[1] गन्धोऽश्मनि $A_1$. [2] $B_3$ omits

**रीतिपुष्पं पुष्पकेतु पौष्पकं कुसुमाञ्जनम्।**
**पिञ्जरं पीतनं तालमालं च हरितालके॥ १०३॥**

(वि.) रीतिपुष्पमिति—रीते पित्तलस्य पुष्पसदृश[1] मलं रीतिपुष्पम्। अक्षिगतपुष्पस्य केतु परिपन्थीभूतं पुष्पकेतु। पुष्पसदृशत्वात् पौष्पकम्। कुसुमसदृशमञ्जनं कुसुमाञ्जनम्[2]। कुसुमाञ्जननामानि॥ पीतवर्णत्वात् पिञ्जरम्। पीतनं च। तलति प्रतितिष्ठति श्रीविरत्नेति तालम्। 'तल प्रतिष्ठायाम्'। अलति भूषयति चित्रादिकमिति[3] आलम्। 'अल भूषणादौ'। हरितवर्णं [4]तालकं हरितालकम्। हरितालनामानि॥ १०३॥

[1] पर्णं $h_5$ $h_6$ [2] कुसुमार्थं $h_5$, कुसुमं चाञ्जनं च $h_6$ [3] चित्र [illegible]-पुष्पादिकं $h_5$, $h_6$ [4] अलं $h_5$.

(पा.) रीतिपुष्प पुष्पकेतु[1]—कुसुमाञ्जनम् । पुष्पाञ्जननामानि । अनुक्तम्— विस्रगन्धि तु गोदन्त[2] वैर च नखमण्डनम् ॥ पिञ्जर पीतन—हरितालके । हरिताल-नामानि । 'हरिदल्मु' । 'वालमूल[3] वशपत्रम्' इति वैजयन्तीपाठात् (पृ. ४२, श्लो १४) वालमूलम् । 'हरितालमल ताल तालक दलम्' इति माधवीयपाठाद् [4]दलमपि ॥ १०३ ॥

[1] पौरकतु $A_1$　　[2] गोदन्तो नटसशक्र ' इति त्रिकाण्डशेष　　[3] तालमालमित्येव मुद्रितग्रन्थे　　[4] $A_1$ omits अपि

**गैरेयमर्थ्यं गिरिजमश्मजं च शिलाजतु ।**
**बोलगन्धरसप्राणपिण्डगोपरसाः समाः ॥ १०४ ॥**

(वि.) गैरेयमिति—गिरौ गिरिशिलाया भव गैरेयम् । गिरिज[1] च । अर्थ्यते [2]औषधादिभिरिति अर्थ्यम् । 'अर्थ उपयाच्ञायाम्' । अश्मनि जायत इत्यश्मजम् । 'जनी प्रादुर्भावे' । [3]शिलाविशेषे जायत इति शिलाजतु । गिरिशिलोत्थलाक्षानामानि ॥ बोल्यते मषीकरणाय[4] कज्जलपुञ्ज निमज्ज्यते बोल । 'बुल निमज्जने' । गन्धवाही रस गन्धरस[5] । प्राणित्यनेन प्राण । पिण्ड्यते पिण्डीक्रियते पिण्ड । 'पिडि सघाते' । औषधार्थं गोप्यते गोप[6] । रस्यते आस्वाद्यते रस । 'रस आस्वादने' । बोल-नामानि ॥ १०४ ॥

[1] गिरेर्जात $K_3$　　[2] रसायनादिभि $K_5$ $K_6$　　[3] शिलाया $Pt_2$ शिलाया $K_5$　　[4] औषधेषु $F_3$, $P_2$　　[5] गन्धप्रधानो रसोऽस्य $F_2$ $Pt_2$　　[6] $K_3$ $Pt_2$ add 'गुपू रक्षणे'

(पा.) [1]गैरेयमर्थ्यं—शिलाजतु । शिलामदनामानि । '[2]कलुमदमु' । बोलगन्धरस—रसा समा । 'बोलो गोल शश पिण्ड' इति वैजयन्ती (पृ. ४२, श्लो १५) । बोलनामानि ॥ १०४ ॥

[1] गैलेयम् $A_1$　　[2] $B_2$ omits

**डिण्डीरोऽब्धिकफः फेनः सिन्दूरं नागसंभवम् ।**
**नागसीसकयोगेष्टवप्राणि त्रपु पिच्चटम् ॥ १०५ ॥**

**रङ्गवङ्गे चाथ पिचुस्तूलोऽथ कमलोत्तरम्।**
**स्यात्कुसुम्भं वह्निशिखं महारजनमित्यपि॥ १०६॥**

(वि.) डिण्डीर इति—डिण्डीत्येवमनुकारध्वनिम् ईरयतीति डिण्डीर। 'ईर क्षेपे'। अब्धे कफ इव प्रतिभात्यब्धिकफ। स्फायते वर्धत इति फेन। 'स्फायी[1] वृद्धौ'। समुद्रफेननामानि॥ स्यन्दते प्रस्रवति सूक्ष्मत्वादिति सिन्दूरम्। 'स्यन्दू प्रस्रवणे'। नागात् सीसात् [2]सम्भवोऽस्य नागसम्भवम्। सिन्दूरनामनी॥ न गच्छतीत्यगम्। तत्र भवतीति नागम्। 'गम्लृ गतौ'। सिनोति पारदं बध्नातीति सीसकम्। 'षिञ् बन्धने'। सुवर्णकरणयोगे इष्ट भवतीति योगेष्टम्। सुवर्णयोगे उप्यत इति वप्रम्। 'डुवप् बीजसताने'। सीसकनामानि॥ त्रपतेऽग्निसनिधावाशु द्रवतीति त्रपु। 'त्रपूष् लज्जायाम्'। पिच्च्यते कुट्ट्यते घटेष्वनेनेति पिच्चटम्। 'पिच्च कुट्टने'। रज्यते चर्माद्यनेन रङ्गम्[3]। 'रञ्ज रागे'। वङ्गति द्रवतीति वङ्गम्। 'वगि गतौ'। त्रपुसङ्ख्यकलोहनामानि॥ पच्यते तन्तुरस्माद् व्यक्तीक्रियते पिचु[4]। 'पचि व्यक्तीकरणे'। तोल्यते फलसकाशात् [5]निष्कृष्यते तूल। 'तूल निष्कर्षे'। उपगतबीजस्य कार्पासस्य नामनी॥ [6]कमलेभ्य उत्कृष्टवर्णं कमलोत्तरम्। कुस्यत्यङ्गुल्यादिकमिति कुसुम्भम्। 'कुस सश्लेषणे'। वह्निरिव पिङ्गला शिखास्येति वह्निशिखम्। [7]महश्च तद्रजन च महारजनम्। 'रञ्ज रागे'। तैलहेतुबीजस्य कुसुम्भाख्यौषधिविशेष पुष्पस्य नामानि॥ १०५–६॥

[1] $K_5$, $K_6$ add ओप्यायी [2] सम्भवतीति $K_3$ $K_5$ [3] रङ्गति द्रवति 'रगि गतौ' $Pt_2$ [4] पिच्यत मर्द्यत इति, 'पिचु मर्दने' $Pt_2$ [5] निष्कोष्यते $F_2$, $Pt_2$ [6] $K_3$ adds वर्णाधिक्यात् [7] $K_3$ $Pt_2$ add रज्यते वस्त्रादि क्रमनेनेति रजनम्। 'रञ्ज रागे'

(पा.) डिण्डीरोऽब्धिकफ फेन। [1]समुद्रश्लेष्मनामानि। 'नुरुगु'। सिन्दूर नागसम्भवम्। सिन्दूरनामनी॥ नागसीसक—वप्राणि। सीसकनामानि। यवनेष्ट चीनपिष्टम्। एते द्वे च॥ त्रपु पिच्चट रङ्गवङ्गे च। त्रपुनामानि। 'तगरमु'। स्यात् कस्तीर तमरकम्। एते द्वे च॥ अथ पिचुस्तूल। कार्पासस्य नामनी। 'दूदि'। शाल्मलीतूलनामन्यपि स्याताम्॥ अथ कमलोत्तर—[2]महारजनमित्यपि। चन्द्रिका पुष्पनामानि। 'कुङ्कुमपुव्वु'॥ १०५–६॥

[1] फेननामानि $B_3$ [2] महारजत $A_1$

**मेषकम्बल ऊर्णायुः शशोर्णं शशलोमनि ।**
**मधु क्षौद्रं माक्षिकादि मधूच्छिष्टं तु सिक्थकम् ॥ १०७ ॥**

(वि.) मेषेति—मेषलोमकृत [1]कम्बल मेषकम्बल । ऊर्णा मेषलोम, तदस्यास्तीति ऊर्णायु । मेषलोमकृतकम्बलनाम ॥ शशस्योर्णं शशोर्णम् । शशलोमनाम ॥ मन्यतेऽभिलष्यत इति मधु । 'मन ज्ञाने'। क्षुद्राभिर्मक्षिकाभि कृत क्षौद्रम् । मक्षिकाभि कृत माक्षिकम्[2] । माक्षिकपौत्तिकभ्रामरिकक्षौद्रचतुर्विधमधुनो नाम ॥ मधुना उच्छिष्यते त्यज्यत इति मधूच्छिष्टम्[3] । सिञ्चति अग्निसयोगादिति सिक्थकम् । 'पिच क्षरणे' । मधूच्छिष्टनामनी ॥ १०७ ॥

[1] $F_2$ Pt add काम्यते शीतार्तैरिति कम्बल

[2] $Pt_2$ adds

माक्षिक तैलवर्णं स्याद् घृतवर्णं तु पौत्तिकम्
विद्येय भ्रामर श्वत क्षौद्र तु कपिल मतम् ॥

[3] $K_3$ adds 'शिष असर्वोपयोगे

(पा.) मेषकम्बल ऊर्णायु । एडकरोमज कम्बल ऊर्णायु स्यात् । [1]'जानमु' ॥ शशोर्णं शशलोमनि । [2]शशलोमज शशोर्णं स्यात् ॥ मधु क्षौद्रं माक्षिकादि । आदिशब्दो भ्रामरसारघादिसग्रहार्थ [3] । [4]मधुमक्षिकासात्नामानि । 'तेने' । अनुक्तम्—[5]औद्दालक-मशालाकम्(?) । 'कोल्जु' । अत्र सर्वौघमित्युभे । 'पेइजुन्नु' ॥ मधूच्छिष्टं तु सिक्थकम् । मधूच्छिष्टनामनी । 'मैनमु' ॥ १०७ ॥

[1] $B_2$ omits　　[2] शशस्य $A_1$　　[3] $A_1$ adds सशा　　[4] माक्षिकादि $B_3$
[5] 'औद्दाल्क तु शालाम् इति वैजयन्ती (पृ १३४ श्लो १३६)

**मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका ।**
**नैपाली कुनटी गोला यवक्षारो यवाग्रजः ॥ १०८ ॥**
**पाक्योऽथ सर्जिकाक्षारः कापोतः सुखवर्चकः ।**
**सौवर्चलं स्याद् रुचक त्वक्क्षीरी वशरोचना ॥ १०९ ॥**

(वि.) मनःशिलेति—मन शब्दवाच्या शिला मन शिला । मन शब्देन गोप्यत इति मनोगुप्ता[1] । मन-शब्देन हूयत इति मनोह्वा । 'ह्वेञ् स्पर्धाया शब्दे च' । नागजिह्वा प्रतिकृतित्वात् नागजिह्विका । मन शिलानामानि ॥ नेपालदेशे भवा नैपाली । कौ

नेपालभूमौ[2] नटतीति कुनटी । 'नट नृत्तौ' । गा नेपालभूमिं [3]स्वजन्मभूमित्वेन लातीति गोला । 'ला आदाने' । नेपालदेशमन शिलानामानि ॥ यवस्य क्षारो यवक्षार । [4]यवाग्रैर्जन्यत इति यवाग्रज । 'जनी प्रादुर्भावे' । [5]पाकेन सिद्ध पाक्य । यवक्षार नामानि ॥ सर्जिकादिकृत क्षार [6]सर्जिकाक्षार । कपोतवर्णत्वात् कापोत । सुखेन दीपनाग्निं वर्चयतीति सुखवर्चक । 'वर्च दीप्तौ' । क्षारनामानि ॥ सौवर्चलरुचकशब्दौ पूर्वमेव व्युत्पन्नौ (२ ९ ४३) । सुवर्चलाख्याकरोद्भवक्षारनामनी ॥ त्वचो वेणो सकाशात् [7]स्रवत्क्षीरमस्या इति त्वक्क्षीरा । त्वक्क्षीरीति वा पाठ । वशोत्था रोचना वशरोचना । त्वक्क्षीरीनामनी ॥ १०८–९ ॥

[1] $K_3$, $Pt_2$ add 'गुपू रक्षणे', गुप्यत $K_5$ [2] भुवि $K_6$ [3] स्वजन्मत्वेन $K_5$, $K_6$ [4] $K_5$, $K_6$ add यवशूके [5] पचनीय $Pt_2$ $F_2$ adds 'डुपचष् पाक' [6] सजका $K_5$, $K_6$ [7] प्रस्रवति $K_6$, स्रवति $K_2$, $K_3$, $K_5$

(पा.) मन शिला—कुनटी गोला । मन शिलानामानि । 'मणिशिल' । अनुक्तम्—'पाकशुक्ला तु [1]कठिनी कक्खटी च सम त्रयम्' । [2]फलकलेखनीशिला नामानि । 'पलपुगनि[3]' ॥ यवक्षार यवाग्रज पाक्य । यवक्षारनामानि । अथ [4]सर्जिकाक्षार—सुखवर्चक । [4]सर्जिकाक्षारनामानि ॥ सौवर्चल स्याद्रुचकम् । सौवर्चलक्षार[5] नामनी । '[6]वोणारखारम्' ॥ अनुक्तम्—'टङ्कणो रसयोनि स्यात्' । 'वेलिगारमु' ॥ [7]त्वक्क्षीरी वशलोचना । तुगाक्षीरीनामानि । 'तदक्षिरमु' । तुकाक्षीरी तुगाक्षीरी च स्यात् । 'तुगाक्षीरी तुकाक्षीरी त्वक्क्षीरी पार्थिवी तुका' इति माधव. ॥ १०८–९ ॥

[1] घटिका $A_1$ [2] लेखिनी $A_1$ [3] 'बलपमु' $B_1$ [4] सज्जिका° $A_1$ [5] $A_1$ adds रस° [6] $B_1$ omits [7] त्वक्क्षीरा $B_3$

**शिग्रुजं श्वेतमरिचं मोरटं मूलमैक्षवम् ।**
**ग्रन्थिकं पिप्पलीमूलं चटकाशिर इत्यपि ॥ ११० ॥**

(वि.) शिग्रुजमिति—शिनोति तनूकरोति रोगमिति शिग्रु । तस्माज्जात शिग्रुजम्[1] । 'शिञ् निशातने' । श्वेत च तत् मरिच च श्वेतमरिचम्[2] । [3]सौभाञ्जनबीजनामनी ॥ मुरति भुव वेष्टयतीति मोरटम् । 'मुर वेष्टने' । इक्षोरिदम ऐक्षवम् । इक्षुमूलनाम ॥ ग्रन्थिप्रतिकृतित्वात् ग्रन्थिकम् । पिप्पल्या मूल पिप्पलीमूलम् । चटकाशिरोरूपत्वात् चटकाशिर । पिप्पलीमूलनामानि ॥ ११० ॥

[1] $K_3$, $Pt_2$ add 'जनी प्रादुर्भावे' [2] श्वेतमरिचगुणयोगात् $F_2$, $Pt_2$
[3] शोभाञ्जन° $K_5$

(पा.) शिग्रुज श्वेतमरिचम्। [1]शिग्रुजनामनी। 'मुनुगवित्तुलु'। मोरट मूलमैक्षवम्। इक्षूणां मूलं मोरटं स्यात्। ग्रन्थिकं पिप्पलीमूलं [2]चटकाशिर इत्यपि। पिप्पलीमूलनामानि ॥ ११० ॥

[1] शिग्रुजात' $B_3$ [2] चटिकाशिर $A_1$

**गोलोमी भूतकेशो ना पत्राङ्गं रक्तचन्दनम्।**
**त्रिकटु त्र्यूषणं व्योषं त्रिफला तु फलत्रिकम् ॥ १११ ॥**

इति वैश्यवर्गः

(वि.) गोलोमीति—गोरिव लोमान्यस्या गोलोमी। भूतस्य केशा इव केशा यस्य भूतकेशः। औषधविशेषनामनी ॥ पत्राण्यङ्गान्यस्य[1] पत्राङ्गम्। [2]रक्तचन्दननाम ॥ त्रीणि कटूनि सन्त्यत्रेति [3]त्रिकटु। त्रीण्यूषणान्यत्र सन्तीति त्र्यूषणम्[4]। विशेषेण जिह्वामूषतीति व्योषम्। 'ऊष रुजायाम्'। 'ऊष दाहे वा'। समाहृतस्य शुण्ठीमरीच पिप्पल्याख्यद्रव्यत्रयस्य नामानि ॥ त्रयाणां फलानां समाहारः त्रिफला। हरीतकी-विभीतक्यामलकीत्रयस्य नाम ॥ १११ ॥

इति श्रीरङ्गलकामयभट्टोपाध्यायसूनुलिङ्गयसूरिविरचितायाममरकोशपदविवृतौ वैश्यवर्गः

[1] अङ्ग $F_2$, $Pt_2$ [2] $Pt_2$ adds रक्तचन्दनसदृशत्वात् [3] त्रयाणां कटूनां समाहारः $F_2$ $Pt_2$ [4] $F_2$, $Pt_2$ add ऊष्यन्ते रोगा एभिरिति

(पा.) गोलोमी भूतकेशो ना। कापिशेयजतुनामनी। 'मरुलुजडे' ॥ पत्राङ्गं रक्तचन्दनम्। रक्तचन्दननामनी। '[1]पतगमु' ॥ त्रिकटु त्र्यूषणं व्योषम्। त्रिकटुनामानि। 'अयस्तिलत्र्यूषणकोलभागै' इति योगशतकपाठाद् दीर्घादि। 'त्र्युषणं त्रिकटु दोषं रुचकं सौवर्चलं पुंसि' इति रत्नकोशपाठात् ह्रस्वादिरपि ॥ त्रिफला तु फलत्रिका। स्त्रीलिङ्गावेतौ। 'त्रिफला तृफलापि च' इति त्रिकाण्डशेषः (२. ९. ४७५) 'भूतसारी फलत्रिका' इति वैजयन्ती (पृ १२९, श्लो. ८२)। फलत्रयनाम ॥

'हरीतकी चामलकी विभीतकमिति त्रयम्।
त्रिफला प्रथमा सैव फलत्रयमिति स्मृतम् ॥

द्राक्षा काश्मर्यखर्जूरे[2] फलानि तु फलत्रयम् ।
सैव ज्ञेया द्वितीया तु त्रिफला शास्त्रकोविदैः ॥
जातीफलं पूगफलं लवङ्गफलमेव च ।
तृतीया त्रिफला प्रोक्ता सैव प्रोक्तं फलत्रयम् ॥ १११ ॥[1]

इति [3]श्रीवत्सनृसिंहसूरिसुतमल्लिनाथसुधीविरचितेऽमरपदपारिजाते वैश्यवर्गः

[1] $B_3$ omits. [2] °खर्जूरफलानीति $A_1$. [3] °नरसिंह° $A_1$.

---

## १०. शूद्रवर्गः

**शूद्राश्चावरवर्णाश्च वृषलाश्च जघन्यजाः ।**
**आचण्डालात्तु संकीर्णा अम्बष्ठकरणादयः ॥ १ ॥**

(वि.) अथ क्रमप्राप्तां शूद्रवर्गविवृतिमुपक्रमते—शूद्रा इति । शुद्धानां शुदं शोधनं दानेन रान्तीति शूद्राः । 'रा दाने' । शुद्धान् स्वस्पर्शनेन उन्दन्ति सेचयन्तीति वा शूद्राः । 'उन्दी क्लेदने' । अवरोऽधमो वर्णो येषां ते अवरवर्णाः । वृषं धर्मं धनेन [1]लान्तीति वृषलाः । 'ला आदाने' । ब्रह्मणो [2]जघन्यात् पादात् जाताः जघन्यजाः । शूद्रनामानि ॥ संकीर्यन्ते परस्परं मिश्रीभवन्तीति [3]संकीर्णाः । 'कॄ विक्षेपे' । अम्बष्ठादि-चण्डालान्तस्य संकरजातीयस्य नाम ॥ १ ॥

[1] लुनन्ति, 'लूञ् छेदने' $F_2$, $Pt_2$. [2] जघने जाता जघन्याः, तेभ्यो जाताः $K_3$, $K_4$. [3] विजातीयमातापितृकत्वात् उभयवर्णाभ्यां संकीर्यन्ते $F_2$, $Pt_2$.

(पा.) शूद्राश्चावरवर्णाश्च—जघन्यजाः । शूद्रनामानि । 'पादजा द्विजपोताश्च' । एते द्वे च ॥ आ चण्डालात्तु—करणादयः । भिन्नजातिमातापितृकत्वात् चण्डालावधिका अम्बष्ठकरणादयः संकीर्णजातयः । 'शूद्राः संकीर्णजा अपि' इति शास्त्रात् शूद्रा एव[1] संकीर्णजातय[2] ॥ १ ॥

[1] $A_1$ adds संकीर्णजाः. [2] $A_1$ adds क्रियाद्वारेण कथिताः.

**शूद्राविशोस्तु करणोऽम्बष्ठो वैश्याद्विजन्मनोः ।**
**शूद्राक्षत्रिययोरुग्रो मागधः क्षत्रियाविशोः ॥ २ ॥**

(वि.) शूद्रेति—[1]विलेपनादि कर्म करोतीति करण । 'डुकृञ् करणे'। वैश्यात् शूद्राया जातस्य नाम ॥ [2]अम्बासमीपे तिष्ठति चिकित्सार्थमिति अम्बष्ठ । 'ष्ठा गतिनिवृत्तौ'। वैश्याया ब्राह्मणात् जातस्य नाम ॥ उच्यति समवैति वर्णद्वयमिति उग्र । 'उच समवाये'। शूद्राया क्षत्रियाज्जातस्य नाम ॥ मगध्यति[3] राजान स्तौतीति मागध । 'मगध [4]स्तुतौ'। क्षत्रियाया वैश्याज्जातस्य नाम ॥ २ ॥

[1] लेपनकर्मेति $F_2$, $Pt_2$　[2] अम्ब $F_2$ $Pt_2$.　[3] मगधदेशे प्रायेण भवन्ति तिष्ठन्तीति $F_2$ $Pt_2$　[4] परिवेष्टने $K_3$

(पा.) शूद्राविशोस्तु करण । शूद्राया वैश्यादुत्पन्न करण स्यात् । स चाय व्ययादिलेखनोपजीवी । स्त्रिया [1]टित्त्वाद् ङीपि[2] करणी ॥ अम्बष्ठो वैश्याद्विजन्मनो । वैश्यस्त्रीब्राह्मणपुरुषयोरुत्पन्नपुत्रोऽम्बष्ठ स्यात् । स च चिकित्सोपजीवी ॥ शूद्राक्षत्रिययोरुग्र । शूद्राया क्षत्रियोत्पन्न उग्र स्यात् । स च कोशदुर्गरक्षणोपजीवी ॥ मागध क्षत्रियाविशो । क्षत्रियस्त्रीवैश्यपुरुषयोरुत्पन्न पुत्रो मागध स्यात् । स च वशवीर्यादिस्तुत्युपजीवी । अनुक्तम्—शूद्राद्विजन्मनो पारशव । शूद्राया ब्राह्मणोत्पन्न पारशव स्यात् । स च कालिकापूजनाद्युपजीवी ॥ राज्ञीद्विजन्मनोर्मूर्धावसिक्त । क्षत्रियाया ब्राह्मणादुत्पन्न मूर्धावसिक्त स्यात् । स धनुर्वेदोपजीवी ॥ राज्ञीशूद्रयो पारशेनुक । क्षत्रियाया शूद्रादुत्पन्न पारशेनुक स्यात् । स च मृगपक्षिबन्धनोपजीवी ॥ २ ॥

[1] ३ ३ ११७　[2] ४ १ १५

**माहिष्योऽर्याक्षत्रिययोः क्षत्तार्याशूद्रयोः सुतः ।**
**ब्राह्मण्यां क्षत्रियात् सूतस्तस्यां वैदेहको विशः ॥ ३ ॥**

(नि.) माहिष्य इति—राजमहिषीरक्षणे [1]नियुक्तो माहिष्य । क्षत्रियात् वैश्याया जातस्य नाम ॥ [2]क्षदतेऽश्वान् ताडयतीति क्षत्ता । 'क्षदि हिंसार्थे'। ब्राह्मणयोषिति अर्याया शूद्राज्जातस्य नाम ॥ सुवति प्रेरयत्यश्वानिति सूत । 'षू प्रेरणे'। ब्राह्मणयोषिति क्षत्रियाज्जातस्य नाम ॥ विदेहे पण्यस्य विविधोपचयेन वर्तमान वैदेहक । तस्यामेव ब्राह्मण्या वैश्याज्जातस्य नाम ॥ ३ ॥

[1] साधु $F_2$, $Pt_2$ [2] क्षदति $K_5$, $K_6$, क्षदति द्वारस्थत्वात् जनान् पीडयति $F_2$, $Pt_2$ [3] विदेहेन, 'दिह उपचये' $K_5$, $K_6$

(पा.) माहिष्योऽर्याक्षत्रिययो । वैश्यायां[1] क्षत्रियादुत्पन्नो माहिष्य स्यात्। स च भरतशास्त्रोपजीवी ॥ क्षत्तार्याशूद्रयो सुत । वैश्याया शूद्रादुत्पन्न सुत क्षत्ता स्यात्। जदन्त । [2]दूतद्वारपाल्योपजीवी ॥ ब्राह्मण्या क्षत्रियात् सूत । ब्राह्मण्या क्षत्रियादुत्पन्न सुत सूत स्यात्। [3]सारथ्योपजीवी ॥ तस्या वैदेहिको विश । ब्राह्मण्या वैश्यादुत्पन्न वैदेहक स्यात्। [4]स्तुत्युपजीवी । स एव वन्दी ॥ ३ ॥

[1] वैश्यस्त्रीक्षत्रियपुरुषयोरुत्पन्न पुत्र $A_1$ [2] दौत्य° $A_1$ [3] B adds विष्णु पूजेतिहासकथोपजीवी च [4] $A_1$ adds अन्त पुररक्षणोपजीवी

**रथकारस्तु माहिष्यात् करण्यां यस्य सभवः ।**
**स्याचण्डालस्तु जनितो ब्राह्मण्यां वृषलेन यः ॥ ४ ॥**

(वि.) रथकार इति—रथ करोतीति रथकार[1]। करण्या माहिष्याज्जातस्य नाम ॥ चण्डाय उग्रकर्मणेऽलति पर्याप्त[2] इति चण्डाल । 'अल भूषणपर्याप्तिशक्तिवारणेषु' । ब्राह्मण्या शूद्राज्जातस्य नाम ॥ ४ ॥

[1] $F_2$, $Pt_2$ add 'डुकृञ् करणे' [2] पर्याप्नोति $K_5$ चण्डत कुप्यति क्रूरत्मकत्वे नेति $Pt_2$

(पा.) रथकारस्तु माहिष्यात्—सभव । [1]शूद्रावैश्ययोर्जाताया वैश्याक्षत्रियजातादुत्पन्नो रथकार स्यात्। रथवास्तुकर्मोपजीवी । स्याचण्डालस्तु—वृषलेन य । [2]ब्राह्मणस्त्रीशूद्रपुरुषयोरुत्पन्न पुत्र चण्डाल स्यात्। स च वीथीमलोत्सारणोपजीवी ॥ ४ ॥

[1] करण्या माहिष्याज्जात $B_2$ [2] ब्राह्मण्या शूद्रादुत्पन्न $B_2$

**कारुः शिल्पी संहतैस्तैर्द्वयोः श्रेणिः सजातिभिः ।**
**कुलकः स्यात् कुलश्रेष्ठी मालाकारस्तु मालिकः ॥ ५ ॥**

(वि.) कारुरिति—करोति शिल्पादिकर्म कारु[1]। शिल्पिकर्मास्यास्तीति शिल्पी । तन्तुवायनापितरजकचर्मकारादिनामनी ॥ श्रियत इति श्रेणि । 'श्रिञ् सेवायाम्' ।

स्वजातीयशिल्पिसघस्य नाम ॥ कुल करोति श्रेष्ठत्वेनेति कुलक । कुलिक इति वा पाठ । [2]कुलश्रेष्ठिनो नाम ॥ माल्य करोतीति माल्यकार । माला[3] शिल्पमस्यास्तीति मालिक । पुष्पजीविनो नामनी ॥ ५ ॥

[1] $Pt_2$ adds 'डुकृञ् करणे'

'तक्षा च तन्तुवायश्च नापितो रजकस्तथा ।
पञ्चमश्चर्मकारश्च कारव शिल्पिनो मता ॥' $Pt_2$

[2] $F_2$, $Pt_2$ add कुले श्रेष्ठत्वमस्येति कुलश्रेष्ठी [3] $F_2$ adds निर्माण

(पा.) कारु शिल्पी । कारुनामनी । [1]तक्षकरजकनापितादीना साधारणाभिधानम् ।

'तक्षा च तन्तुवायश्च नापितो रजकस्तथा ।
पञ्चमश्चर्मकारश्च कारव' शिल्पिनश्च ते ॥'

सहतैस्तैर्द्वयो श्रेणि सजातिभि । कर्मणा सजातीयाना कारूणा सघात श्रेणि स्यात् ॥ कुलक स्यात् कुलश्रेष्ठ । कुल[2] श्रेष्ठ कुलक स्यात् । 'कुलक स्यात् कुलश्रेष्ठे वल्मीके काकतिन्दुके' इति विश्वप्रकाशिका (प्र. ७, श्लो. ५९) । कुलश्रेष्ठीति रभसकोशानुसारिपाठात् कुलश्रेष्ठी च स्यात् ॥ मालकारस्तु मालिक । पुष्पमालानिर्मातृनामनी । पुष्पलावो वनार्चक । एते द्वे च ॥ ५ ॥

[1] तक्षकादीना $B_2$ [2] कुलश्रेष्ठ $B_2$

**कुम्भकारः कुलालः स्यात् पलगण्डस्तु लेपकः ।**
**तन्तुवायः कुविन्दः स्यात् तुन्नवायस्तु सौचिकः ॥ ६ ॥**

(त्रि.) कुम्भकार इति—कुम्भ करोतीति कुम्भकार[1] । कु भूमि मृदर्थं लडति खद्दातीति कुलाल । 'लड मर्दने' । कुलै कुम्भकुलैर्गृहमलति भूषयतीति वा । 'अल भूषणादौ' । कुम्भकारनामनी ॥ पलेन मासेनेव मृदादिना [2]गडति भित्त्यादिकमिति पलगण्ड । 'गड सेचने' । लिम्पति[3] सुधादिना प्रासादादिकमिति लेपक । 'लिप उपदेहे' । सुधालेपोपजीविनो नामनी ॥ तन्तून् वयतीति तन्तुवाय । 'वेञ् तन्तुसताने' । पटादिरचनार्थं कु भुव विन्दतीति कुविन्द । 'विदिर् लाभे' । वस्त्रकारनामनी ॥ तुन्न छिन्न वस्त्रादि[4] वयति सूच्यादिना तुन्नवाय[5] । [6]सूचीशिल्पमस्यास्तीति सौचिक । सूचिक इति वा पाठ । कूर्पासादिकारिणो नामनी ॥ ६ ॥

[1] $K_2$ $Pt_2$ add 'डुकृञ् करणे' [2] गण्डति $Pt_2$ [3] $K_2$ adds उपदेग्धि
[4] आदिक $K_2$ [5] $F_2$ $Pt_2$ add 'वेञ् तन्तुसताने'. [6] सूचाकम $Pt_2$

(पा.) कुम्भकारः कुलाल स्यात्। [1]घटादिनिर्मातृनामनी। 'कुम्मलि'। पलगण्डस्तु लेपकः। [2]भित्त्यादिलेपकनामनी। '[3]उप्पलि'। तन्तुवायः कुविन्दः स्यात्। पटकारनामनी। शालिकः पटकारश्च। एते द्वे च॥ तुन्नवायस्तु सौचिकः। कञ्चुकादि-[4]कारनामनी। 'चिप्पिवाडु'॥ ६॥

[1]घटमणिकादि $A_1$ [2]भित्यनुलेपक° $A_1$ [3] $B_3$ omits. [4] °कारिणः $B_3$

**रङ्गाजीवश्चित्रकारः शस्त्रमार्जोऽसिधावकः।**
**पादूकृच्चर्मकारः स्याद् व्योकारो लोहकारकः॥ ७॥**

(वि.) रङ्गाजीव इति—रङ्गेण[1] चित्रवर्णेन आजीवतीति रङ्गाजीवः। 'जीव प्राणधारणे'। चित्रं करोतीति चित्रकारः। चित्रकारनामनी॥ शस्त्रं मार्ष्टीति शस्त्रमार्जः। 'मृजूष् शुद्धौ'। असिं धावतीति असिधावकः। 'धावु गतिशुद्ध्योः'। आयुधशोधकनामनी॥ पादूं [2]पादुका करोतीति पादूकृत्। 'डुकृञ् करणे'। चर्म करोतीति चर्मकारः। चर्मकारस्य नामनी॥ व्योऽयः करोतीति व्योकारः। विशेषेण लोहमियर्तीति[3] वा। लोहकारकनामनी॥ ७॥

[1] $F_2$, $Pt_2$ add रज्यते धवल रक्ततामापन्नत इति रङ्गः हरितालादिः [2] पादू उपानहौ $K_5$, $K_6$. [3] $K_2$, $K_3$ add 'ऋ गतौ'.

(पा.) रङ्गाजीवश्चित्रकरः[1]। आलेख्यकारनामनी। [2]'चित्तरुवुव्राशिवाडु'॥ शस्त्रमार्जोऽसिधावकः। शाणिकनामनी। 'सानपट्टिवाडु'॥ पादूकृच्चर्मकारः स्यात्। पादरक्षकारनामनी॥ व्योकारो लोहकारकः। [3]लोहकृन्नामनी। 'कमरि'। कर्मारश्चाप्ययस्कारः। एते द्वे च॥ ७॥

[1] चित्रकारः $B_3$. [2] $B_3$ omits [3] लोहकार° $B_3$

**नाडिंधमः स्वर्णकारः कलादो रुक्मकारके।**
**स्याच्छाङ्खिकः काम्बविकः शौल्बिकस्ताम्रकुट्टकः॥ ८॥**

(वि.) नाडिधम इति—[1]नाडीं धमतीति नाडिधमः। 'ध्मा [2]पूरणे'। स्वर्णं करोतीति स्वर्णकारः। [2]कल स्वर्णादिकमाद्यतीति कलादः। 'दोऽवखण्डने'। रुक्मं करोतीति रुक्मकारकः। भूषणकारिणो नामानि॥ शङ्खस्य विकारः शाङ्खम्। तत्पण्य-

मस्येति शाङ्खिक । कम्वोर्विकार काम्बवम् । तत्पण्यमस्येति काम्बविक । शङ्खध्मान शिल्पिन शङ्खपण्याजीविनो वा नामनी ॥ शुल्व ताम्र [4]तत्पण्यमस्येति शौल्बिक । ताम्र [5]कुट्टयतीति ताम्रकुट्टक । 'कुट्ट छेदनभर्त्सनयो' । ताम्रपण्याजीविनो नामनी ॥ ८ ॥

[1] नाडिं अग्निसंदीपनार्थं $K_5$ $Pt_2$　　[2] शब्दाग्निसंयोगयो $K_8$, $Pt_2$　　[3] कला स्वर्णशिल्पमादत्त $Pt_2$　　[4] ताम्रनिर्माण शिल्पमस्य $F_2$, $Pt_2$　　[5] $Pt_2$ adds छेदयति

(पा.) नाडिंधम स्वर्णकार —रुक्मकारक । [1]सुवर्णकारनामानि ॥ स्याच्छाङ्खिक काम्बविक । शङ्खकारनामनी । अनुक्तम्—मणिकारो वैकटिक । रत्नकारनामनी ॥ शौल्बिकस्ताम्रकुट्टक । ताम्रपात्रकारनामनी । 'चेम्बुचेशे वाडु[2]' ॥ ८ ॥

[1] कनककार° $A_1$　　[2] $B_3$ omits

## तक्षा तु वर्धकिस्त्वष्टा रथकारश्च काष्ठतट् । ग्रामाधीनो ग्रामतक्षः कौटतक्षोऽनधीनक. ॥ ९ ॥

(वि.) तक्षेति—तक्ष्णोति काष्ठादिकमिति तक्षा[1] । नकारान्तोऽयम् । 'तक्षू तनूकरणे' । वर्धयति छिनत्ति[2] काष्ठादिकमिति वर्धकि । 'वर्ध छेदने' । त्वक्ष्णोति तनूकरोति काष्ठानीति त्वष्टा । 'त्वक्षू तनूकरणे' । रथ करोतीति रथकार [3] । काष्ठ [4]तक्ष्णोतीति काष्ठतट् । स्थपतिनामानि ॥ ग्रामस्य तक्षा ग्रामतक्ष । ग्रामाधीनस्थपतिनाम ॥ स्वगृहे वर्तमान [5] कौट । स चासौ तक्षा च कौटतक्ष । स्वगृह एवात्मकर्मोपक्लृप्त्या [6]जीविस्थपतिनाम ॥ ९ ॥

[1] त्वक्षा च $K_8$ $K_6$　　[2] छदयति $Pt_2$　　[3] $Pt_2$ adds 'डुकृञ् करणे'　　[4] तक्षति $K_3$　　[5] भव $K_8$　　[6] जीवक° $K_6$

(पा.) तक्षा । नान्त । तु वर्धकि —काष्ठतट् । वर्धकिनामानि । 'वड्लवाडु' । ग्रामाधीनो ग्रामतक्ष । [1]ग्रामाधीनो वर्धकिर्ग्रामतक्ष स्यात् । काष्ठतट् काष्टतक्षौ काष्ठतक्ष । कौटतक्षोऽनधीनक । स्वाधीनो वर्धकि कौटतक्ष स्यात् । अनुक्तम्—स्यादश्मकुट्टक कूट । शिलाकुट्टकनामनी ॥ वैलिकश्चात्रिक समौ । [2]शिल्पतुदनामनी ॥ ९ ॥

[1] ग्रामायत्त $A_1$　　[2] शिल्पातक° $A_1$ °पातुक° $B_3$

**क्षुरी मुण्डी दिवाकीर्तिनापितान्तावसायिनः।**
**निर्णेजकः स्याद् रजकः शौण्डिको मण्डहारकः ॥ १० ॥**

(वि.) क्षुरीति—क्षुरशिल्पमस्यास्तीति क्षुरी। केशान् [1]मुण्डयति मुण्डी। 'मुडि खण्डने'। दिवैव[2] कीर्त्यते दिवाकीर्ति। 'कृत सशब्दने'। श्रेष्ठकुले न पततीति नापित। नाप्नोत्यपूज्यत्वादिति वा[3]। ग्रामस्यान्त समीपे आवसत इति अन्तावसायी। [4]अन्तेऽवसातु शीलमस्येति वा। 'षोऽन्तकर्मणि'। नापितनामानि ॥ निर्णेनेक्ति वस्त्र [5]शोधयतीति निर्णेजक। 'णिजिर् शौचपोषणयो'। रञ्जयति वस्त्राणीति रजक। 'रञ्ज रागे'। वस्त्रशोधकनामनी॥ शुण्डा सुरा पण्यमस्यास्तीति शौण्डिक। मण्डमच्छसुरा हरतीति मण्डहारक। 'हृञ् हरणे'। सुरापण्यजीविनो नामनी ॥ १० ॥

[1] मुण्डति $K_3$ [2] $F_2$ $Pt_2$ add रात्रौ क्षुरकर्मनिषेधात्। [3] $K_3$ $Pt_2$ add 'गम्लृ गतौ आप्लृ व्याप्तौ' [4] अन्त $K_6$ [5] क्षालयति $Pt_2$.

(पा.) क्षुरी मुण्डी—अन्तावसायिन। [नापितनामानि '[1]मङ्गलि'। चण्डिल क्षुरमर्दी च। एते द्वे च॥ निर्णेजक स्याद्रजक। वस्त्रधावकनामनी। शौण्डिको मण्डहारक। सुरापण्यजीविनामनी। सुराजीवी सौरिकश्च। एते द्वे च। '[2]कल्पपालस्तु शौण्डिक' इति हलायुध (अ. मा २ ४३८)]॥ १० ॥

[1] $B_3$ omits [2] कल्यपाल $A_1$

**जाबालः स्यादजाजीवो देवाजीवस्तु देवलः।**
**स्यान्माया शाम्बरी मायाकारस्तु प्रातिहारिकः ॥ ११ ॥**

(वि.) जाबाल इति—जबमलतीति जबालो छाग, तस्यायं जाबाल। अजा पालयतीति वा। अजा एव आजीवो जीवनमस्येति अजाजीव[1]। अजापालनामनी ॥ देव आजीवोऽस्य देवाजीव। देवान् अलति पूजयतीति देवल। देवान् पूजार्थं लातीति वा। 'ला आदाने'। देवपूजाजीविनो नामनी ॥ मीनातीति माया[2]। 'मीञ् हिंसायाम्'। मयस्येय वा। शम्बरासुरस्येय माया शाम्बरी। कुहकस्य[3] नामनी ॥ माया करोतीति मायाकार। प्रतिहरति संहरति सवपा हद्धन्सी इति प्रतिहार माया। स अस्यास्तीति प्रातिहारिक[4]। इन्द्रजालिकनामनी ॥ ११ ॥

[1] अजैराजीवितु शीलमस्य अजाजीवी $K_6$ [2] मात्यस्या विश्वमिति $Pt_2$ [3] कुहक-कमण $K_3$ [4] प्रतिहरति नयने $Pt_2$

(पा.) जावालः स्यादजाजीवः। [1]अजाजीविनो नामनी। 'कुरुव'॥ देवाजीवस्तु देवलः। 'तम्मलवांडु'। [2]शूद्रस्य ब्राह्मणस्य वा देवार्चनजीविनो नामनी। तथा च स्मृतिः—

'देवार्चनपरो विप्रः शूद्रो वा वत्सरत्रयम्।
जीवेद् देवलको नाम ह्यर्चकश्चैषु गण्यते॥'

इति॥ स्यान्माया शाम्बरी। इन्द्रजालनामनी॥ मायाकारस्तु प्रातिहारिकः[3]। [4]इन्द्रजालविद्याविशारदनामनी॥ ११॥

[1] कम्बलनायकनाम $A_1$. [2] देवतार्चकनाम $A_1$. [3] प्रतिहारकः $A_1$. [4] माया° $B_3$.

**शैलालिनस्तु शैलूषा जायाजीवाः कृशाश्विनः।**
**भरता इत्यपि नटाश्चारणास्तु कुशीलवाः॥ १२॥**

(वि.) शैलेति—शिलालिना कृशाश्वेन प्रोक्तं [1]सूत्रमधीयत इति शैलालिनः, कृशाश्विनश्च। 'इङ् अध्ययने'। शिलूषस्यापत्यानि शैलूषाः। जायया जीवन्तीति जायाजीवाः[2]। भरतस्य मुनेरपत्यानि शिष्या वा भरताः। नटन्तीति नटाः। 'नट नृत्तौ'। नटनामानि॥ दिक्षु कीर्तिं चारयन्तीति चारणाः। 'चर गतौ'। कुत्सितं शीलं कुशीलम्। तदेषामस्तीति कुशीलवाः[3]। वन्दिविशेषनामनी॥ १२॥

[1] नटसूत्रं $K_3$, $Pt_2$. [2] $F_2$, $Pt_2$ add 'जीव प्राणधारणे'. [3] कुत्सितं शीलं वान्तीति वा, 'वा गत्यादौ' $K_3$.

(पा.) शैलालिनस्तु शैलूषा—नटाः। बहुरूपधरनामानि[1]। भरता इत्यत्र उत्सादित्वादञ् (४. १. ८६)। भारतः, भारतौ। 'यञञोश्च' (२. ४. ६४) इति बहुत्वे लुकि भरताः। चारणास्तु कुशीलवाः। [2]नानादेशसंचारिनटगायकनामनी। 'पेरडिवांडु[3]'। अनुक्तम्—'ये यष्ट्यादिषु नृत्यन्ति वेल्लकाः प्लवकाश्च ते'। यष्टिक्रीडकनामनी॥ 'कोलाटलवांडु'॥ १२॥

[1] धारक° $A_1$. [2] $A_1$ omits. [3] $B_3$ omits.

**मार्दङ्गिका मौरजिकाः पाणिवादास्तु पाणिघाः ।**
**वेणुध्माः स्युर्वैणविका वीणावादास्तु वैणिकाः ॥ १३ ॥**

(वि.) मार्दङ्गिका इति—मृदङ्गवादेन[1] जीवन्तीति मार्दङ्गिका.। मुरजवादनं शिल्पमेषामिति मौरजिकाः । मृदङ्गवाद्यजीविनां नामनी ॥ पाणी वादयन्तीति पाणिवादाः । 'वद व्यक्तायां वाचि'। [2]पाणी घ्नन्तीति पाणिघाः । 'हन हिंसागत्योः' । पाणिभ्यां ये वाद्यमुत्पादयन्ति तेषां नामनी ॥ वेणुं धमन्ति पूरयन्तीति वेणुध्माः । 'ध्मा [3]शब्दाग्निसंयोगयोः' । वेणोरिदं[4] ध्मानं वैणवम् । [5]तच्छीलमेषामस्तीति वैणविकाः । वांशिकनामनी ॥ वीणावादनमेषामस्तीति वीणावादा.[6] । वीणा शिल्पमेषामिति वैणिकाः । वीणाजीविनां नामनी ॥ १३ ॥

[1] वादनं शिल्पमेषा $K_3$, $Pt_2$ [2] पाणिना $K_5$, $K_6$ [3] पूरणे $K_3$. [4] वेणो-विकारः $Pt_2$ [5] तच्छिल्पं $K_3$, $Pt_2$. [6] वीणा वादयन्ति $K_5$, $K_6$.

(पा.) मार्दङ्गिका मौरजिकाः । [1]मर्दलवादकनामनी ॥ पाणिवादास्तु पाणिघाः । करतलवादकनामनी ॥ वेणुध्माः स्युर्वैणविकाः । वेणुवादकनामनी । 'पिल्लकोविवूदवांडु' ॥ 'वैणुको वांशिकस्तथा' । एते द्वे च ॥ वीणावादास्तु वैणिकाः वीणावादकनामनी । 'वीणेलवारु' ॥ १३ ॥

[1] मृदङ्ग° $B_1$. [2] $B_3$ omits.

**जीवान्तकः शाकुनिको द्वौ वागुरिकजालिकौ ।**
**वैतंसिकः कौटिकश्च मांसिकश्च समं त्रयम् ॥ १४ ॥**

(वि.) जीवान्तक इति—जीवानां पक्षिणामन्तं नाशं करोतीति [1]जीवान्तकः । [2]शकुनान् पक्षिणो हन्तीति शाकुनिकः । जीवान्तकस्य नामनी ॥ वागुरया मृगबन्धिन्या चरतीति वागुरिकः । जालेन चरतीति जालिकः । येऽरण्यादौ मृगबन्धनाय जालेन चरन्ति तेषां नामनी ॥ मृगपक्ष्यादेर्बन्धनोपायो वितंसः । तेन चरतीति वैतंसिकः[3] । कूटेन[4] सामिषबन्धेन चरतीति कौटिकः । मांसं पण्यमस्य मांसिकः । मांसविक्रयजीविनो नामानि ॥ १४ ॥

[1] जीवानामन्तकः $F_2$, $Pt_2$. [2] शकुनीन् $K_6$; शकुनिं $K_3$. [3] सामिष मृगबन्धो-पकरणं, तेन चरति $K_5$, $K_6$. [4] मृगपक्ष्यादिबन्धनयन्त्र $Pt_2$.

(पा.) जीवान्तकः शाकुनिकः । पक्ष्याखेटकनामनी । 'गुव्वपेटिकाडु' । द्वौ वागुरिकजालिकौ । मृगाखेटकनामनी । 'मेकमरुदवेंकाडु' ॥ वैतंसिकः कौटिकश्च— समं त्रयम् । कौटिकनामानि । 'कटिकारवांडु' ॥

'विज्ञातव्यौ पक्षिमृगप्रभृतेर्वधनाधने ।
शब्दौ वितंसवीतंसौ कूटोऽस्त्री तत्र सामिषः ॥'

इति माधवः । शेषकारश्च—

'मृगपक्ष्यादिकं हत्वा मांसविक्रयजीविनि ।
किरातशबरम्लेच्छप्रभृतौ कौटिकादिकम् ॥'

इति ॥ १४ ॥

**भृतको भृतिभुक् कर्मकरो वैतनिकोऽपि सः ।**
**वार्तावहो वैवधिको भारवाहस्तु भारिकः ॥ १५ ॥**

(वि.) भृतक इति—भ्रियत इति भृतकः । 'डुभृञ्[1] धारणपोषणयोः' । भृतिं वेतनं भुङ्क्ते भृतिभुक् । 'भुज पालनाभ्यवहारयोः' । नियुक्तं कर्म करोतीति कर्मकरः[2] । वेतनेन जीवतीति वैतनिकः । नियुक्तकर्मकारिणो नामानि ॥ [3]धान्यादिवार्तां वहतीति वार्तावहः । 'वह प्रापणे' । विवधः पर्याहारः सः पण्यं तेन वा जीवतीति वैवधिकः[4] । पर्याहारवतो नामनी ॥ भारं वहतीति भारवाहः । भारिकश्च । भारवाहकनामनी ॥ १५॥

1 'भृञ् भरणे' $K_4$. 2 $F_2$, $Pt_2$ add 'डुकृञ् करणे'. 3 $F_2$, $Pt_2$ add वार्तावाणिज्यादिजीविका, तादर्थ्यात् धान्यादिरपि. 4 विवधेन हरतीति $F_2$, $Pt_2$.

(पा.) भृतको भृतिभुक्—वैतनिकश्च सः । भृत्युपजीविनामानि । 'कूलिकाडु' । 'भरटः स्याद्वैतनिकः' । एते द्वे च ॥ वार्तावहो वैवधिकः । वार्तावाहकनामनी । 'पारिकतवांडु' ॥ भारवाहस्तु भारिकः । भारवहनसमर्थकनामनी । 'वाढीरडिङ्गरमेष्ठ-पाल्ककपरिकर्मिणः' । एतानि च ॥ १५ ॥

**विवर्णः पामरो नीचः प्राकृतश्च पृथग्जनः ।**
**निहीनोऽपशदो जाल्मः क्षुल्लकश्चेतरश्च सः ॥ १६ ॥**

(वि.) विवर्ण इति—विरुद्धो [1]वर्णोऽस्येति विवर्णः। पामान शोफ रातीति[2] पामर। 'रा आदाने'। [3]निकृष्टं चिनोतीति नीचः। 'चिञ् चयने'। प्रकृतौ भवो वर्तमान प्राकृत.। जनेभ्यः पृथक् इतर जनः पृथग्जन। नियत ह्निनोतीति निहीन.। नितरां हीयते जनैरिति वा। 'हि गतौ वृद्धौ च', 'ओहाक् त्यागे'। अपशीयते हीनो भवतीति अपशद.। 'शिव् निशातने'। अपसद इति वा पाठः। जलति जडो [4]भवतीति जाल्म.। 'जल [5]घातने'। तुच्छत्वात् क्षुध लातीति क्षुल्लक। 'ला आदाने'। इतं तुच्छगमनं[6] रातीति इतर। 'रा आदाने'। नीचजननामानि॥ १६॥

[1] जातिर्यद्यो वा $F_2$, $Pt_2$ [2] $K_5$ adds स्वीकरोति [3] निकर्षमञ्चति, 'अञ्चु गतौ याचने च' $Pt_2$ [4] जडीभवति $K_5$ [5] 'जल शून्ये' $K_5$, $K_6$, $Pt_2$ [6] क्षुद्रवृत्ति $Pt_2$.

(पा.) विवर्ण पामरो—क्षुल्लकश्चेतरश्च सः। विवर्णादयो दश पामरवाचका। 'नीचिड्ड'॥ १६॥

**भृत्ये दासेयदासेरदासगोप्यकचेटकाः।**
**नियोज्यकिंकरप्रैष्यभुजिष्यपरिचारकाः॥ १७॥**

(वि.) भृत्य इति—भ्रियत इति भृत्यः। भरणीयो वा। '[1]भृञ् भरणे'। दास्या अपत्य दासेय, दासेरश्च। दस्यति बहुतरकर्मणि उपक्षीयत इति दास.[2]। 'दसु उपक्षये'। दीयत इति वा। 'दीङ् क्षये'। गोपनीयो रक्षणीय गोप्यक। 'गुपू रक्षणे'। [3]चेटति परप्रेष्य करोतीति चेट.। 'चिट परप्रेष्ये'। नियुज्यते कर्मसु नियोज्यः। 'युजिर् योगे'। किं करोमीति आज्ञा प्रतीक्षत इति किंकरः। 'डुकृञ् करणे'। प्रेषणीयः प्रैष्य.। 'इष गतौ'। प्रेष्य इति वा पाठ। वेतनं भुङ्क्ते भुजिष्य। 'भुज पालनाभ्यवहारयोः'। परिचरति स्वामिनमिति परिचारक.। 'चर गति-भक्षणयो.'। भृत्यनामानि॥ १७॥

[1] 'डुभृञ् धारणपोषणयो.' $F_2$, $Pt_2$. [2] दसयति स्वामिकार्याणि सावधानेनेति, 'दसि दशदर्शनयो.' $Pt_2$ [3] चिट्यते $F_2$, $Pt_2$

(पा.) भृत्ये दासेयदासेर—भुजिष्यपरिचारका। भृत्यनामानि। [1]स्त्रिया तु दासी चेटी प्रेष्या परिचारिका। टावपि किंकरा। किंकरीति प्रेष्यार्थे विधि.[2]॥ १७॥

[1] $A_1$ adds एते एव स्त्रीलिङ्गाश्चेत् किंकरीनामानि [2] पुयोगे ङीप् इति सि कौ. (पृ. ४७०. ३. २. २१)

**पराचितपरिस्कन्दपरजातपरैधिताः ।**
**मन्दस्तुन्दपरिमृज आलस्यः शीतकोऽलसोऽनुष्णः ॥ १८॥**

(वि.) पराचित इति—परैराचीयते[1] पोष्यत इति पराचित । 'चिञ् चयने'। परैः स्कन्द्यते शोष्यते परस्कन्द । 'स्कन्दिर् गतिशोषणयो '। [2]परिस्कन्द इति वा पाठ । [3]परस्मात् जात इव पुष्ट परजात । परैरेधितो वर्धित परैधित । 'एध वृद्धौ'। परपोषितनामानि ॥ आलस्येन मन्दते स्वपितीति मन्द । 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु'। पुन पुन तुन्द परिमार्ष्टीति तुन्दपरिमृज । 'मृजूष् शुद्धौ'। न लसति जाड्यादित्यलस । अलस एव आलस्य । 'लस श्लेषणक्रीडनयो '। शीत इव जडत्वात् शीतक[4] । न विद्यते [5]उष्णमस्य जडत्वात् अनुष्ण । अलसनामानि ॥ १८ ॥

[1] आचित $F_2$ $Pt_2$ [2] परित स्क दतीति $K_3$ $Pt_1$ [3] परै $K_6$ $K_8$
[4] शीत म द करोतीति $F_2$ $Pt_2$ [5] $Pt_2$ adds तेज

(पा.) पराचितपरिस्कन्द—परैधिता । परपुष्टवत् परै संवर्धितनामानि । 'परपुष्ट[1]' । अनुक्तम्—'बन्धके स्थित आयत्त '। बन्धकार्थं स्थितनाम । 'कुडुवपुग-वाडु'। 'भक्तायारक्षित कृत '। अन्नस्य हेतोर्वसति य स कृत स्यात्। 'कूटिकवुन्नवाडु' ॥ मन्दस्तुन्दपरिमृज —अलसोऽनुष्ण । [2]अलसनामानि । 'सोमरिपोतु' ॥ १८ ॥

[1] $B_3$ omits [2] $A_1$ adds प्रयोजने आसक्त इति देहयस्त्रकपुरुषनामानि

**दक्षे तु चतुरपेशलपटवः सूत्थान उष्णश्च ।**
**चण्डालप्लवमातङ्गदिवाकीर्तिजनंगमाः ॥ १९ ॥**
**निषादश्वपचावन्तेवासिचाण्डालपुल्कसाः ।**

(वि.) दक्ष इति—दक्षत कार्यं शीघ्र करोतीति दक्ष । 'दक्ष वृद्धौ शीघ्रार्थे च'। चतते [1]कार्यमिति चतुर । 'चते याचने'। पिंशति [2]कार्यार्थं यत्र तत्र वा गच्छतीति पेशल । 'पिश [3]गतौ'। पाटयति प्रयोजनानीति पटु । 'पट गतौ'। सुष्ठु उत्थानमुद्योगो यस्य सूत्थान । ओषत्यकार्यमिति उष्ण । 'उष दाहे'। चतुरनामानि ॥ चण्डते कुप्यतीति चण्डाल । 'चडि कोपे'। प्लवते उपकर्मण इति प्लव । 'प्लुङ् गतौ'। मा तङ्गति न [5]गच्छति ग्राममध्यमिति मातङ्ग । 'तगि गतौ'। दिवैव कीर्त्यते दिवाकीर्ति[6]। 'कॄत संशब्दने'। सामर्थ्यात् जन गच्छतीति जनगम ।

निषीदति पापमस्मिन्निति निषादः। 'षद्लृ विशरणगत्यवसादनेषु'। श्वानं पचतीति श्वपचः। 'डुपचष् पाके'। ग्रामान्ते वसतीति अन्तेवासी। 'वस निवासे'। चण्डाल एव चाण्डालः। पुलन्तीति पुलाः महान्तः। 'पुल महत्त्वे'। तान् स्पर्शनेन कसति क्लेशयतीति [7]पुल्कसः। 'कस गतिशातनयोः'। चण्डालनामानि ॥ १९ ॥

[1] काङ्क्षते प्रयोजनमिति $F_3$, $Pt_2$. [2] अवयवो भवति कार्येषु $F_2$, $Pt_2$. [3] 'पिश अवयवे' $Pt_2$. [4] कर्मणि $K_3$; कर्मणे $K_6$. [5] प्रविशति $K_5$, $K_6$. [6] दिवसस्य पुण्यकालत्वात् दिवा अकीर्तनमस्य $Pt_2$. [7] पुत् कुत्सितं कसतीति पुक्कसः $K_3$.

(पा.) दक्षे तु चतुर—सूत्थान उष्णश्च। [1]चतुरनामानि। 'पनिकि देहसु [2]वाख्रिटिवाडु'॥ चण्डालप्लवमातङ्ग—चाण्डालपुल्कसाः। [पुत्] पुण्यं कशतीति व्युत्पत्त्या पुल्कशस्तालव्यान्तः। दन्त्यान्त इति [3]टीकासर्वस्वकारः (पृ. २६४)। चण्डाल-नामानि। 'माल'॥ १९॥

[1] प्रयोजनाय देहसर्पकनामानि $A_1$. [2] $B_3$ omits. [3] 'पुत् कुत्सितं कषति पुत्कसः। पुक्कस इत्येके। अवान्तरभेदोऽत्र नादृतः' इति मुद्रितटीकासर्वस्वे.

**भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः ॥ २० ॥**
**व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः ।**

(वि.) भेदा इति—किरातशबरपुलिन्दा म्लेच्छजातयो निषादभेदा भवन्ति। [1]म्लेच्छतीति म्लेच्छः। 'म्लेच्छ अव्यक्ते [2]शब्दे'। कीति शब्दं रातीति किरातः। 'रा दाने'। शवति गच्छति वनमिति शवरः। 'शव गतौ'। पुलिन्ददेशे भवः पुलिन्दः[3]। विध्यति मृगानिति व्याधः। 'व्यध ताडने'। मृगवधेन आजीवतीति मृगवधाजीवः। 'जीव प्राणधारणे'। मृगान् [4]हन्तुं यातीति मृगयुः[5]। मृगान् मृगयते वा। 'मृग अन्वेषणे'। मृगेषु लुभ्यति गृध्यतीति लुब्धकः। 'लुभ गार्ध्ये'। व्याधनामानि ॥ २० ॥

[1] $F_3$, $Pt_2$ अव्यक्तं भाषते. [2] अव्यक्तायां वाचि $K_5$, $K_6$. [3] पोलति, 'पुल महत्त्वे' $F_3$, $Pt_2$. [4] वधार्थं $K_2$. [5] $K_6$ adds 'या प्रापणे'.

(पा.) भेदाः किरात—म्लेच्छजातयः। बहुवचनग्रहणमुपलक्षणार्थम्। [1]किरात-शबरपुलिन्दनिष्टयावाहलमिह्लमाल्प्रभृतिम्लेच्छजातयश्चण्डालभेदा एव। व्याधो मृग-वधाजीवो—लुब्धकश्च सः। व्याधनामानि। '[2]बोयवांडु'॥ २०॥

[1] $B_2$ adds महारण्यवासिनः. [2] $B_3$ omits.

**कौलेयकः सारमेयः कुक्कुरो मृगदंशकः ॥ २१ ॥**
**शुनको भषकः श्वा स्यादलर्कस्तु स योगितः ।**
**श्वा विश्वकद्रुर्मृगयाकुशलः सरमा शुनी ॥ २२ ॥**

(वि). <u>कौलेयक इति</u>—कुले गृहे भव कौलेयकः । सरमा शुनी तस्या अपत्यं सारमेयः । कोकतेऽरथ्यादिकमादत्त इति कुक्कुरः । 'कुक्[1] आदाने' । मृगान् दशतीति मृगदंशकः । 'दंश दशने' । इतस्तत शुनति गच्छतीति शुनकः । 'शुन गतौ' । भषतीति[2] भषकः । 'भष [3]भर्त्सने' । भर्त्सनं स्वरचः । श्वयति इतस्ततो गच्छतीति श्वा । 'टुओश्वि गतिवृद्ध्योः' । शुनकनामानि ॥ अलति[4] वीथ्यां जनान् निवारयतीति अलर्कः । 'अल [5]पर्याप्तिभूषणवारणेषु' । विषादियोगतः उन्मत्तभूतशुनकनाम ॥ विश्व[6] जनं कन्दयति रोदयतीति विश्वकद्रुः । 'कदि आह्वाने रोदने च' । मृगयाचतुरस्य शुनकस्य नाम ॥ सरति श्वान प्रति सरमा । 'सृ गतौ' । श्वजातिस्त्री[7] शुनी । शुनकस्त्री-नामनी ॥ २१–२ ॥

[1] F₂, Pt₂ add वृक.　[2] K₅ adds वाद्यते, वाद्यते K₆　[3] शब्दे K₆.　[4] अल्यते वार्यते दशमयात् F₂, Pt₂.　[5] 'अल निवारणे' K₅, K₆.　[6] विश्वान् मृगान् K₂, K₅.　[7] शुन. स्त्री F₂, Pt₂

(पा.) <u>कौलेयकः सारमेयः—भषकः श्वा स्यात्</u>। शुनकनामानि । श्वानो गृहमृगो यक्षः कृतज्ञो रात्रिजागरः । एतानि पञ्च च ॥ <u>अलर्कस्तु स योगतः</u>। योग औषधम् । तद्भक्षणादुन्मत्त.[1] श्वा अलर्कः स्यात् ।

"प्रभूयमानामभिनायकेन्दुं तारावलिं वीक्ष्य नवामुदीताम् ।
हृष्यत्सु सर्वेष्वसहिष्णुरुच्चैरुच्चावचं बुक्कति कोऽप्यलर्कः ॥"

इति <u>नागभूपालीये</u> ॥ <u>श्वा विश्वकद्रुर्मृगयाकुशलः</u> । आखेटपटुः श्वानः[2] विश्वकद्रुः स्यात् । "वेंटकुक्क" ॥ <u>सरमा शुनी</u> । शुनकस्त्रीनामनी[3] ॥ २१–२ ॥

[1] उन्मत्तशुनकनाम A₁　[2] श्वान. B₂　[3] °मार्या° A₁.

**विट्चरः सूकरो ग्राम्यो वर्करस्तरुणः पशुः ।**
**आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम् ॥ २३ ॥**

(वि.) विट्चर इति—विट् विष्ठा[1] वा चरति भक्षयतीति विट्चर । 'चर गतिभक्षणयो'। ग्राम्यवराहनाम ॥ वर्कते आदत्ते तृणमिति वर्कर । 'वृक आदाने'। युवपशुनाम ॥ [2]आ समन्तात् चोद्यन्ते मृगा अत्रेति आच्छोदनम्[3]। 'चुद प्रेरणे'। [4]मृगान् व्ययन्त्यत्रेति मृगव्यम् । 'व्येञ् सवरणे' । आखेट्यन्ते त्रास्यन्ते मृगा अत्रेति आखेट । 'खिट त्रासे' । मृग्यन्ते मृगा अत्रेति मृगया[5] । 'मृग अन्वेषणे'। मृगयानामानि ॥ २३ ॥

[1] विष विष्ठा $F_2$, $Pt_2$ [2] आच्छोदयन्ति $K_5$, $K_6$ [3] सचोदने $K_6$
[4] मृगा विध्यन्तेऽस्मिन्, 'व्यध ताडने' $F_2$, $Pt_2$ [5] मृगाणामन्वेषण $K_5$, $Pt_2$

(पा.) विट्चर सूकरो ग्राम्य । ग्रामसूकरनामानि । वर्करस्तरुण पशु । बाला पशुजातिर्वर्कर स्यात् ॥ आच्छोदन मृगव्य—मृगया स्त्रियाम् । आखेटनामानि । 'बेंटपेरु' ॥ पापर्द्धिश्च पराधिश्च । एते द्वे च । 'विराजपापर्द्धिविवादशीले' । इत्युदारराघवम् ॥ २३ ॥

**दक्षिणारुर्लुब्धयोगाद् दक्षिणेर्मा कुरङ्गकः ।**
**चोरैकागरिकस्तेनदस्युतस्करमोपकाः ॥ २४ ॥**
**प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः ।**

(वि.) दक्षिणेति—[1]दक्षिणे दक्षिणभागे ईर्म व्रणोऽस्तीति दक्षिणेर्मा । नान्त । दक्षिणभागे व्याधेन कृतव्रणस्य हरिणस्य नाम ॥ चोरयतीति चोर[2] । 'चुर स्तेये' । एकमसहाय गृह प्रयोजनमस्येति [3]ऐकागरिक । स्तेनयतीति स्तेन । 'स्तेन चौर्ये'। दस्यति कदाचित् [4]उपक्षिणोतीति दस्यु । 'दसु उपक्षये' । तत्[5] चोरकर्म करोतीति तस्कर । 'डुकृञ् करणे' । मुष्णातीति मोपक । 'मुष स्तेये'। परान् प्रतिरुणद्धि प्रतिरोधी । 'रुधिर आवरणे' । परान् आस्कन्दयति शोषयतीति परास्कन्दी । 'स्कन्दिर् गतिशोषणयो' । परान् पाटयन् विदलयन् चरतीति पाटच्चर । 'चर गतौ' । पटच्चर जीर्णवस्त्रमपि गृह्णातीति वा । मलिनमपि म्लोचयतीति मलिम्लुच[6] । 'म्लुच स्तेये'। चोरनामानि ॥ २४ ॥

[1] $K_5$ adds दक्षिणेऽरु व्रणमस्य [2] $F_2$, $Pt_2$ add चौर इति वा पाठ । तदा चुरा चौर्यं शीलमस्य [3] एकस्मिन् असहाये अगारे भव $K_5$ $K_6$ [4] उपक्षीयते $K_6$
[5] तत्तत् $K_5$ [6] मलिन यथा तथा म्लोचति गच्छति, 'म्लुच गत्यर्थे' $Pt_2$

(पा.) दक्षिणारुर्लुब्धयोगात्—कुरङ्गक । दक्षिणभागे व्याधेन कृतव्रणो मृगो दक्षिणेर्मा स्यात्। दक्षिणेर्माण पश्य॥ अनुक्तम्—'यूथभ्रष्ट पक्षचर '। स्वकीययूथं परित्यज्य सचरदेकाकी मृग पक्षचर स्यात्। 'कदुप्पलोनुडतप्पिपोय्नि मृगमु'॥ चोरैकागारिकस्तेन—पाटच्चरमलिम्लुचा । अत्र प्रतिरोधिपरास्कन्दिशब्दौ द्वौ नान्तौ। चोरनामानि॥ 'वणिग्भ्य परि न सन्ति पश्यतोहरा ' इति पश्यतोहर । पश्यता धनापहारी चोर । 'कनुपापदोचे दोंग'।

'स खल्वर्द्धिपरिपन्थी य परस्य दौस्थित्यम्।
जानन्नप्यभिलपत्यर्थम्॥'

इति परिप थी मार्गप्रहारी चोर । 'त्रोवगोट्टेदोंग'॥ २४॥

**चौरिका स्तैन्यचौर्ये च स्तेय लोप्त्रं तु तद्धनम्॥ २५॥**
**वीतंसस्तूपकरणं बन्धने मृगपक्षिणाम्।**
**उन्माथः कूटयन्त्रं स्याद्वागुरा मृगबन्धनी॥ २६॥**

(वि.) चौरिकेति—चोरस्य [1]कर्म चौरिका। चौर्यं च। स्तेनस्य [1]कर्म स्तैन्य । स्तेय च। चौरिकानामानि॥ लुप्यत इति लोप्त्रम्[2]। 'लुप्लृ छेदने'। [3]चोरितधनस्य नाम॥ वितसयति व्याधानिति वितस । 'तसि [4]भूषायाम्'। मृगपक्षिबन्धनसाधनस्य नाम॥ ऊर्ध्वमाक्रम्य मथतीति उन्माथ । 'मथे विलोडने[5]'। कूटेन कपटेन [6]कृत यन्त्र कूटयन्त्रम्। 'यम उपरमे'। मृगपक्षिबन्धनाय दारुकृतसाधनस्य नामनी॥ मृगबन्धने- ऽवागुरत इति वागुरा। 'गुरी उद्यमने'। मृगा अनया बध्यन्त इति मृगबन्धनी। 'बन्ध बन्धन'। जालविशेषनामनी॥ २५—६॥

[1] भाव $h_5$ $h_6$ [2] लुप्यते विमुह्यतेऽनेन लुप विमोहने $h_5$ $h_6$ [3] चोरधनस्य $h_6$ [4] अलङ्कारे $h_6$ [5] हिंसायाम् $h_5$ $h_6$ [6] यम्यते बध्यतेऽनेन $h_6$

(पा.) चौरिका—स्तेयम्। चौर्यनामानि। 'दोगुलुट[1]'। चौरशब्दव्युत्पत्तिद्वारा चुराशब्दसिद्धि । सुभूतिटीकायामपि तथैव व्युत्पादित चुरा शीलमस्येति । 'छत्रादिभ्यो ण ' (४ ४. ६२)। चौर । लोप्त्र तु तद्धनम्। चोरापहृत धन लोप्त्र स्यात्। 'दोगिलिन सोम्मु'। वीतसस्तूपकरण—मृगपक्षिणाम्। [2]मृगपक्षिणा बन्धनोपकरण वितस स्यात्। वीतस इति दीर्घीभूतोपसर्गश्च॥ उन्माथ कूटयन्त्र स्यात्। [3]कूटेन कपटेन कल्पित यन्त्रमुन्माथ स्यात्। 'बोनु'॥ वागुरा मृगबन्धनी। मृगजालिका वागुरा

स्यात्। वागुरा मृगजालिका' इति हलायुध (अ मा २. ४४२)। मृगजालनामनी। 'वल'॥ २६॥

[1] $B_3$ omits [2] $A_1$ adds कण्ठपाशपादरज्जुप्रमुख° [3] °व्याघ्रादिग्रहणार्थं कृतफलकगृहनामनी $A_1$

**शुल्वं वटारकः स्त्री तु रज्जुस्त्रिषु वटी गुणः।**
**उद्घाटनं घटीयन्त्रं सलिलोद्वाहनं प्रहेः॥ २७॥**

(वि.) शुल्वमिति—शुल्व्यते इति [1]शुल्वम्। 'शुल्व माने'। वन्यते वेष्ट्यत इति वटारक[2]। 'वट वेष्टने'। वराटक इति वा पाठ। सज्यत इति रज्जु। 'सृज विसर्गे'। वटति वेष्टयतीति वटी। 'वट वेष्टने'। वटशब्द त्रिषु लिङ्गेषु वर्तते, वट वटी वटमिति। गुण्यतेऽभ्यस्यते बन्धनायेति गुण। 'गुण अभ्यासे'। रज्जुनामानि॥ उद्घाट्यन्ते प्रकाश्यन्ते आपोऽनेनेति उद्घाटनम्। 'घट चेष्टायाम्'। घटीभि कृत यन्त्र घटीयन्त्रम्। प्रहे कूपात्। सलिलम् उद्वाह्यतेऽनेनेति सलिलोद्वाहनम्। कूपात् सलिलोद्वहनस्य घटीयन्त्रस्य नामनी॥ २७॥

[1] शुम्भते शोभत इति शुम्भम्। शुभ शुम्भ शोभार्थे' $K_3$, $K_6$ [2] वट वेष्टन करोतीति वटकर $K_3$ $K_6$

(पा.) शुल्व वराटक—वटी गुण। 'शुल्व स्याद् रज्जुताम्रयो' इति रुद्र। रज्जुनामानि। 'त्राडु[1]'। अनुक्तम्—'पक्षिणो येन गृह्यन्ते पक्षिणैव स दीपक'। [2]पक्षिग्राहकमृगयापक्षी दीपक स्यात्। 'वेंटपिट्ट'। कूटगर्तस्तूपशय। जाल वितत्य तत्समीपे देहगोपनार्थं [3]निखातगर्तनाम॥ 'माधुर्यं व्याधगीतिका'। पक्ष्याद्यागमनार्थं कृतव्याधगीतनाम। 'ईलवटटुट'॥ उद्घाटन घटीयन्त्र—प्रहे। [4]कूपस्थितोदकस्य बहिर्गमनाय कृतयन्त्रविशेष उद्घाटन घटीयन्त्र च स्यात्। 'यान्तामु'॥ २७॥

[1] $B_3$ omits [2] पक्षग्राहक° $A_1$ [3] स्वस्पगर्त° $A_1$ [4] कूपादुदकस्य $B_1$

**पुंसि वेमा वायदण्डः सूत्राणि नरि तन्तवः।**
**वाणिर्व्यूतिः स्त्रियौ तुल्ये पुस्तं लेप्यादिकर्मणि॥ २८॥**

(वि.) पुंसीति—वयन्त्यनेनेति वेमा। नान्त। 'वेञ् तन्तुसताने'। वयन वाय। वायस्य दण्डो वायदण्ड। वस्त्रवयनदण्डनामनी॥ सूयन्ते वस्त्राण्येभिरिति

सूत्राणि । सीव्यन्ते एभिरिति वा । 'पिवु तन्तुसताने' । तन्यते वस्त्रमनेनेति[1] तन्तु । 'तनु विस्तारे'। नरीति पुसि वर्तते तन्तुशब्द इत्यर्थ । तन्तुनाम ॥ [2]वणतीति वाणि । 'वण शब्दे'। व्यूयते व्यूति । 'वेञ् तन्तुसताने'। वयननामनी ॥ [3]पुस्यते आद्रियत इति पुस्तम् । 'पुस्त आदरानादरयो'। लेप्यादिकर्मनाम ॥ २८ ॥

[1] एभिरिति तन्तव $F_2$ $Pt_2$ [2] वयन वाणि व्यूतिश्च वञ् तन्तुसताने $F_2$ $Pt_3$
[3] पुस्यते मृद्यतऽनेन, 'पुस अभिवधने $K_5$ $K_6$

(पा.) पुसि वेमा वायदण्ड । शाटिकाघातफलकनामनी । 'ताकुडुफलक' ॥ सूत्राणि नरि तन्तव । सूत्रनामनी । 'नूलु' ॥ वाणिर्व्यूति स्त्रियौ तुल्ये । [1]वयननामनी । 'नेतपेरु'। तुरी (स्यान्न तुली?) स्यान्नरि तन्तूनामन्वरालप्रसारिणी । [2]'कटिक्रोवितुलि'। 'नाडे' ॥ पुस्त लेप्यादिकर्मणि । लेप्यादिकर्म पुस्त स्यात्[3] ।

'मृद्दारुचर्मवस्त्राद्यै कृत वर्णैर्विचित्रितम् ।
सुवर्णरजताद्यैर्वा रचित पुस्तमुच्यते ॥'

इति ग्रन्थलेखनयोग्ये वर्णकलिते पटखण्डादिसचये लेख्यत्वेनोपकारात् । तालपत्रादि सचये च पुस्तकशब्दप्रयोग ॥ अनुक्तम्—'या तु लेप्यमयी नारी सा स्यादञ्जलि कारिका'। लेप्यस्वरूपा नारी अञ्जलिकारिका स्यात् ॥ २८ ॥

[1] °व्यूति° $A_1$ [2] $B_3$ omits [3] $A_1$ adds मणिगासन मुदलैनदि

**पाञ्चालिका पुत्रिका स्याद् वस्त्रदन्तादिभिः कृता ।**
**पिटकः पेटकः पेटा मञ्जूषाथ विहङ्गिका ॥ २९ ॥**
**भारयष्टिस्तदालम्बि शिक्य काचोऽथ पादुका ।**
**पादूरुपानत् स्त्री सैवानुपदीना पदायता ॥ ३० ॥**

(वि.) पाञ्चालिकेति—पञ्चालदेशे भवा पाञ्चालिका। पाञ्चालै शिल्पिभि कृता वा। पुत्रीव कृत्रिमा पुत्रिका। यया बाला खेलन्ति वस्त्रदन्तदार्वादिनिर्मित विहङ्गादिप्रकृत्या तस्या नामनी ॥ पेटति महत्त्व प्राप्नोतीति पिटक । 'पिट[1] महत्त्वे'। पेटकश्च पेटा च। मञ्जु मनोज्ञ यथा भवति तथा [2]शत्रादैरजोष्यत इति मञ्जूषा। 'ऊष रुजायाम्'। मञ्जूषानामानि ॥ विहङ्गप्रतिकृतित्वात् विहङ्गिका । भारवहनार्थ यष्टि । भारयष्टिनाम ॥ शक्यते भार वोढुमिति शिक्यम् । 'शक्लृ शक्तौ'।

कच्यतेऽनेनेति काचः। 'कच बन्धने'। भारयष्टेरुभयतो लम्बमानयोर्नामनी॥ पद्यतेऽनया पादूः। पादूरेव पादुका। 'पद गतौ'। उपनह्यतेऽनया[3] उपानत्। 'णह बन्धने'। पादत्राणस्य नामनी॥ अनुपदं पादायामेनेव बद्धा अनुपदीना। अनुपादयतायाः तस्या एव नाम॥ २९–३०॥

[1] 'पिट संघाते' $K_3$. [2] वस्त्राद्येरत्र उप्यते $K_5$, $K_6$. [3] पादयोः $F_3$, $Pt_2$.

(पा.) पाञ्चालिका पुत्रिका—दन्तादिभिः कृता। वस्त्रदन्तकाष्ठादिभिः [1]कृतप्रतिमानामनी। 'सालभञ्जी पुत्तलिका'। एते द्वे च। जतुत्रपुविकारे तु जातुषं त्रापुषं त्रिपु। जतुविकारे जातुषं त्रपुविकारे त्रापुषं च स्यात्। तदुभयं त्रिलिङ्गम्॥ पिटकः पेटकः पेटो मञ्जूषा। पेटनामानि। 'पेट्टि'। अनुक्तम्—'वस्त्रकोशं करोटकम्'। वस्त्रपेटनामनी। 'बोक्कसमु'। अथ विहंगिका भारयष्टिः। स्कन्धचापविशेषनामनी। 'कंविकावडि'॥ तदालम्बि शिक्यं काचः। भारयष्टयवलम्बियन्त्रनामनी। 'उट्टि[2]'। शिक्यं तालव्यादि। काचः चवर्गप्रथमान्तः॥ अथ पादुका पादूः। दारुमयपादरक्षानामनी। 'पादुकलु'। पादूपानत् स्त्री। [3]चर्ममयपादरक्षनामनी। 'उड्डालु'। 'पादुकोपानहोः पादूः' इति वैजयन्ती (पृ. २२२, श्लो. २४)॥ सैवानुपदीना पदायता। सैवोपानत् पादप्रमाणा चेद् अनुपदीना स्यात्। अनुक्तम्[4]—'पादकोशी पादरथी'। 'मुचपेरु'॥ २९–३०॥

[1] दार्वादिभिः $B_3$. [2] $A_1$ adds 'बोनपुट्टुकिलु'. [3] पादरक्षा $B_3$. [4] शेषे $B_3$.

**नध्री वर्ध्री वरत्रा स्यादश्वादेस्ताडनी कशा।**
**चाण्डालिका तु कण्डोलवीणा चण्डालवल्लकी॥ ३१॥**

(वि.) नध्रीति—नह्यतेऽश्वमध्यमनया नध्री। 'णह बन्धने'। वर्धते दीर्घीभवतीति वर्ध्री। 'वृधु वृद्धौ'। व्रियते आव्रियतेऽनयेति वरत्रा। 'वृञ् वरणे'। पल्ययनबन्धनाय कृतचर्मरज्जुनामानि॥ [1]कशति ताडयति अनयेति कशा। 'कश गतिशासनयोः'। अश्वादिताडनीनाम[2]॥ चण्डालस्येयं चाण्डालिका। कण्ड्यतेऽभिरक्ष्यते[3] चण्डालेनेति कण्डोला। 'कडि भेदाभिरक्षणयोः'। सा च वीणा च कण्डोलवीणा। चण्डालवीणानामानि॥ ३१॥

[1] कश्यते, 'कश मदे' $K_3$. [2] 'चबुकु पेरु' $K_6$. [3] तन्त्रीभिराव्रियते $K_5$.

(पा.) नध्री वर्ध्री वरत्रा स्यात्। वरत्रानामानि। 'वार्लु'। अश्वादेस्ताडनी कशा। अश्वादिताडनोपकरण कशा स्यात्। 'गुरुवुचाटि'। 'सत्रवोमु'। 'कशा कशिशशाककुशेशक' (?) इति कर्पिणाभ्युदयद्व्यक्षरप्रयोगत् तालव्यान्त । चाण्डालिका तु—चण्डालवल्लकी। चण्डालवीणानामानि। 'किन्नेर'॥ ३१॥

[1] अश्वादे $A_1$

**नाराची स्यादेषणिका शाणस्तु निकषः कषः।**
**व्रश्चनः पत्रपरशुरीषिका तूलिका समे॥ ३२॥**

(वि.) नाराचीति—नाराणि नरसमूहान् अञ्चति[1] नाराद् स्वर्णकार । तस्येय नाराची। 'अञ्चु गतिपूजनयो'। इष्यते [2]व्यवहारिजनैरिति एषणिका। 'इषु [3]इच्छायाम्'। स्वर्णकारस्य [4]स्वर्णच्छेदनसाधनस्य नामनी॥ श्यति सुवर्णं तनूकरोतीति शाण। 'शो तनूकरणे'। निकष्यते स्वर्णमत्रेति निकष। कषश्च। 'कष हिंसायाम्'। शाणोपलनामानि॥ [5]वृश्च्यते सुवर्णादिकमनेनेति व्रश्चन। 'ओव्रश्चू छेदने'। पत्रमिव परशु पत्रपरशु। स्वर्णादिभेदनिकाया पत्रशिलाया नामनी॥ [6]ईष्यते चित्रसौष्ठवमनयेति ईषिका। 'ईष उञ्छे'। [7]तूल्यते कृष्यत इति तूलिका। 'तूल निष्कर्षे'। चित्रकाराद्युपकरणनामनी॥ ३२॥

[1] चायति $K_4$ [2] इष्यते स्वर्णमनया $K_4$ [3] इष गतौ $K_3$ $K_4$ [4] तुला $K_3$ [5] वृश्चतेति $K_5$ $K_6$ [6] एषतीत्येषिका $K_3$ [7] तूल्यत वर्णादिक पूरयतीति, तूल पूरणे $Pr_2$

(पा.) नाराची स्यादेषणिका। स्वर्णच्छेदनसाधननामनी। 'शानमु'। स्वर्णकाराणा नाराचाकृतौ लोहतुलायामिद द्वयमिति केचित्। 'त्रासु'॥ शाणस्तु निकष कष। [1]सुवर्णपरीक्षणोपलनामानि। 'वोरगल्लु'। शाणो नाम नृपोऽपि स्यात्।

'शाणे दधानेव कटाक्षबाणम्।'
'गल्लराग भ्रमिभङ्गिभि पत्तप्रसक्तभृङ्गावलिनालकेसरम्।
स मारनाराचनिघर्षणस्खलज्ज्वलत्कण शाणमिद(च?)न्यलोकत॥'

इत्यादिप्रयोगात् (नैष १ ९२)॥ व्रश्चन पत्रपरशु। आयसभेदकनामनी। 'आकुराय[2]'॥ ईषीका। दीर्घमध्य। तूलिका समे। [3]चित्रलेखनसाधनशलाकानामनी॥ ३२॥

[1] स्वर्ण° $B_3$ [2] 'वाणनमु $A_1$ [3] कारुलेखिनीशलाकानाम। 'मिदुपुरङ्गि'। 'काकित मारेद्दि'। 'इषीका तूलं निधाय मादयम्'। चित्रकरवर्णशलाकानामानि स्यात् $A_1$

**तैजसावर्तनी मूषा भस्त्रा चर्मप्रसेविका ।**
**आस्फोटनी वेधनिका कृपाणी कर्तरी समे ॥ ३३ ॥**

(वि.) तैजसेति—तैजसं हेमादिकम् आवर्त्यते [1]द्रवीक्रियतेऽस्यामिति तैजसावर्तनी। 'वृतु वर्तने'। मूयते बध्यते स्वर्णादिकमत्रेति मूषा। 'मूङ् बन्धने'। मूष्यते स्वर्णादिकमस्यामिति वा। 'मूष स्तेये'। मूषानामानि॥ भस्यते दीप्यतेऽनया अग्निरिति भस्त्रा। 'भस भर्त्सनदीप्त्योः'। प्रसेवतेऽग्निमिति प्रसेविका। चर्मनिर्मिता प्रसेविका चर्मप्रसेविका। 'षेवृ सेवने'। चर्मप्रसेविकानाम॥ आस्फोट्यते विध्यतेऽनया आस्फोटनी। 'स्फुटिर् विशरणे'। विध्यतेऽनयेति वेधनिका। मणिशङ्खादिवेधोपकरणनामनी॥ कल्पते छेत्तुं [2]समर्थो भवतीति कृपाणी। 'कृपू सामर्थ्ये'। [3]कृत्यते छिद्यतेऽनयेति कर्तरी। 'कृती छेदने'। केशादिकर्तनसाधनस्य नामनी॥ ३३॥

[1] द्रवीभवति $K_3$, $K_8$.　[2] छेदनाय $F_3$, $Pt_2$.　[3] कृन्तति $K_3$.

(पा.) तैजसावर्तनी मूषा। सुवर्णादिद्रवीकरणपात्रनामनी[1]। भस्त्रा चर्मप्रसेविका। चर्ममयवायुपूरकबिलकानामनी। 'कोलिमितित्ति'। अनुक्तम्—'सदंशः स्यात् काकमुखः'। [2]गृध्रचञ्चूपुटाकारमुखतप्तायसादिग्राहकायोनाम। 'पट्टगाट[3]'। सदंशीति समदलम्॥ आस्फोटनी वेधनिका। [4]वज्रसूचीनामनी॥ कृपाणी कर्तरी समे। केशवस्त्रादिकृन्तनीनामनी। 'कत्तेर'। कौटिकरवालनामन्यपि भवतः। 'सूनातर्दिर्वधस्थानं कृपाणीली च कर्तरी' इति वैजयन्ती (पृ. १३९, श्लो. ३७)॥ ३३॥

[1] °करणसाधन° $A_1$.　[2] तप्तलोहग्राहकनामनी $B_3$.　[3] 'पट्टगाट' $B_3$.
[4] सूचिका $B_3$.

**वृक्षादनी वृक्षभेदी टङ्कः पाषाणदारणः ।**
**क्रकचोऽस्त्री करपत्रमारा चर्मप्रभेदिका ॥ ३४ ॥**

(वि.) वृक्षादनीति—वृक्षोऽद्यते भिद्यतेऽनयेति [1]वृक्षादनी। 'अद भक्षणे'। वृक्षं भिनत्तीति वृक्षभेदी। 'भिदिर् विदारणे'। वृक्षभेदिनः परशोर्नामनी॥ टैत्यनुकरणशब्दं करोतीति [2]टङ्कः। पाषाणं दारयतीति पाषाणदारणः। 'दृ विदारणे'। पाषाणभेदकस्यायोविकारस्य नामनी॥ क्र इति शब्दं कचतीति क्रकचः। 'कच बन्धने'। करकरेति शब्दोच्चारणेन पततीति करपत्रम्। 'पत्लृ गतौ'। दारुच्छिद्रकरणसाधनस्य

नामनी ॥ धा इयर्ति चर्मेति आरा[3]। 'ऋ गतौ प्रापणे च'। चर्म प्रभिनत्तीति चर्मप्रभेदिका। चर्मभेदिकाया नामनी ॥ ३४ ॥

[1] वृक्षादन $K_5$, $K_6$ [2] कायति, 'कै शब्दे' $K_3$, टङ्कयते, 'टकि बन्धने' $K_8$
[3] आरति चर्म पीडयति, 'अर भेदने' $K_2$

(पा.) वृक्षादनी वृक्षभेदी। [1]वृक्षरन्ध्रकरायसनामनी। 'उलि'॥ टङ्कः पाषाणदारकः। [2]पाषाणभेदकनामनी। 'कासुलि'। क्रकचः करपत्रं स्यात्। करपत्रनामनी। 'करकसरवसु'॥ अनुक्तम्—'[3]वाशी स्याद् दारुतक्षणी'। वाश्या नाम। 'वाडसि[4]'॥ आरा चर्मप्रभेदिका। [5]चर्मभेदिका आरा स्यात्। '[6]आरि' ॥ ३४ ॥

[1] °रन्ध्रादिकरणनामनी $B_3$ [2] शिलामक्षकनाम $A_1$ वाशी $B_4$ [3] वाश्या $B_3$
[4] 'वाडित $B_3$ [5] $A_1$ adds चमकार° [6] आरे $B_3$

**सूर्मी स्थूणाऽयःप्रतिमा शिल्पं कर्म कलादिकम्।**
**प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया॥३५॥**
**प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात्।**

(चि.) सूर्मीति—सुष्ठु शोभनमूर्वति अमङ्गलत्वादिति सूर्मी। 'उर्वी हिंसायाम्'। चिरकाल तिष्ठतीति स्थूणा। 'ष्ठा गतिनिवृत्तौ'। अय प्रतिमानामनी ॥ शिल्यन्ते [1]उद्योयन्ते सर्वा कला अत्रेति शिल्पम्। 'शिल उञ्छे'। गीतादिचतुःषष्टिकलादिकर्मनाम ॥ प्रतिमीयतेऽनेनेति प्रतिमानम्। 'माङ् माने'। प्रतिबिम्ब्यते प्रतिमीयतेऽनेनेति प्रतिबिम्बम्[2]। 'बिम्ब दीप्तौ'। प्रतिमीयतेऽनयेति प्रतिमा। प्रतियात्यतेऽनया प्रतियातना। 'यती [3]प्रयत्ने'। प्रतिरूपा छाया प्रतिच्छाया। प्रतिरूपं क्रियत इति प्रतिकृतिः[4]। अर्च्यत इत्यर्चा। 'अर्च पूजायाम्'। प्रतिनिधीयत इति प्रतिनिधिः। 'डुधाञ् धारणपोषणयोः'। मूर्तिसदृशशिलादिप्रतिरूपस्य नामानि॥ उपमीयते [5]इत्युपमा। उपमानं च। 'माङ् माने'। अन्यस्य वस्तुनो गुणान् अन्यस्मिन् वस्तुनि आरोपस्य नामनी ॥ ३४ ॥

[1] अभ्यस्यत इति $F_2$, $Pt_2$ [2] प्रतिनिधिरूपं बिम्बं $F_2$, $Pt_2$ [3] 'यत निराकोपस्कारयोः' $K_3$ [4] $K_3$ adds 'डुकृञ् करणे' [5] उपमीयतेऽनेन, उपमितिर्वा $Pt_2$

(पा.) सूर्मी स्थूणायःप्रतिमा। लोहप्रतिमानामनी। [1]शूर्मिस्ताम्र्यादिरिति श्रीधरः। अय शब्दस्ताम्रादिलोहवचनः। 'हरिणी हेमप्रतिमा [2]सूर्मिः स्थूणान्यलोहजा'।

इति वैजयन्ती (पृ. १३७, श्लो. २२)॥ शिल्पं कर्म कलादिकम्। अत्र कलाशब्देन गीतवाद्यादिका वाह्या. कलाश्चतुःषष्टिक्रिया, आलिङ्गनचुम्बनाद्याश्चाभ्यन्तराश्चतुःषष्टिः परिगृहीताः। आदिशब्देन विश्वकर्माद्युक्तकारुकर्म संगृहीतम्। तत् सर्वं शिल्पं स्यात्॥ प्रतिमानं प्रतिबिम्बं—पुंसि प्रतिनिधिः। [3]शिलादिनिर्मितविनायकादिमूर्तिनामानि[4]॥ उपमोपमानं स्यात्॥ ३५॥

[1] शूर्मी B₃. [2] शूर्मिः A₁. [3] A₁ adds लोह. [4] निर्मितविष्णु° A₁.

**वाच्यलिङ्गाः समस्तुल्यः सदृक्षः सदृशः सदृक्॥ ३६॥**
**साधारणः समानश्च स्युरुत्तरपदे त्वमी।**
**निभसंकाशनीकाशप्रतीकाशोपमादयः॥ ३७॥**

(वि.) वाच्येति—समति समीभवतीति समः[1]। 'षम ष्टम अवैकल्ये'। तुलया संमित इव तुल्य.। समान इव दृश्यते सदृक्षः। सदृशः। सदृक् च। 'दृशिर् प्रेक्षणे'। समानमाधारणं मानमस्येति साधारणः। समानं मानमस्येति समानः। नितरां भातीति निभः। 'भा दीप्तौ'। संकाशते इति संकाशः। 'काशृ दीप्तौ'। नितरां काशते नीकाशः। प्रति काशते प्रतीकाशः। उपमीयत इत्युपमा। आदिग्रहणात् भूतरूपकल्पादयो[2] गृह्यन्ते। उत्तरपदीभूता निभादयः समादयश्च तुल्यनामानि वाच्यलिङ्गाश्च भवन्ति। उत्तरपदीभूता यथा—चन्द्रनिभः, सूर्यप्रतीकाशः, विष्णुरूपः, कामसदृशः, नारायणसाधारण इत्यादि॥ ३६–७॥

[1] सम्यते स्तूयते Pt₂ [2] K₈ omits कल्प°.

(पा.) वाच्यलिङ्गाः समस्तुल्यः—प्रतीकाशोपमादयः। समाननामानि। 'सरि'। अत्रोपमोपमानशब्दावविष्टलिङ्गौ।

'रात्रावेव मघावेव राकायामेव सुन्दरम्।
मुखचन्द्रस्य ते चन्द्रं कथयेदुपमां कथम्॥
न मञ्जुभाषणं पद्मं न मन्दहसितः शशी।
अतोऽन्यदपि पश्यामि नोपमानं मुखस्य ते॥'

समादिशब्दा वाच्यलिङ्गाः। 'शशिना सदृशं वक्त्रं यस्यास्य सदृशः शशी' इत्यादि। निभादिशब्दा वाच्यलिङ्गा अपि उत्तरपदीभूता समासचरमावयवा एव। 'सागरः सागरोपमः' (रामा. ६. ११०. २४) 'व्याजहार हरसूनुसन्निभः' (रघु. ११. ८३)॥ ३६–७॥

**कर्मण्या तु विधाभृत्याभृतयो भर्म वेतनम् ।**
**भरण्यं भरणं मूल्यं निर्वेशः पण इत्यपि ॥ ३८ ॥**

(वि.) कर्मण्येति—कर्मणि साध्वी कर्मण्या[1] । विधीयते कर्मानया विधा । 'डुधाञ् धारणपोषणयोः' । भ्रियते पोष्यतेऽनयेति भृत्या । भृतिश्च । भर्म च । भरण्य च । भरण च । 'डुभृञ् धारणपोषणयोः' । वीयते भ्रियतेऽनेनेति वेतनम् । 'वी [2]गत्यादिषु' । मूलेन साम्य मूल्यम्[3] । निर्विश्यते भुज्यत इति निर्वेश । 'विश प्रवेशने' । पण्यते व्यवह्रियतेऽनेनेति पण । 'पण व्यवहारे स्तुतौ च' । वेतननामानि ॥ ३८ ॥

[1] कर्मणा लभ्यते $F_2$, $Pt_2$　　[2] 'वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु' $Pt_2$
[3] मूलेनानाम्य $F_2$, $Pt_2$

(पा.) कर्मण्या तु विधा—भर्म वेतनम् । वेतनमन्त्यस्यादि । भरण्य भरण—पण इत्यपि । [1]वेतननामानि । '[2]कूलि' ॥ ३८ ॥

[1] मूल्यनामानि $A_1$　　[2] 'जीवनु $B_3$

**सुरा हलिप्रिया हाला परिस्रुद् वरुणात्मजा ।**
**गन्धोत्तमा प्रसन्नेराकादम्बर्यः परिस्रुता ॥ ३९ ॥**
**मदिरा कश्यमद्ये चाप्यवदंशस्तु भक्षणम् ।**

(वि.) सुरेति—सूयतेऽभिषूयत इति [1]सुरा । 'षुञ् अभिषवे' । हलिनो बलभद्रस्य प्रिया हलिप्रिया । हलति लज्जा नाशयतीति हाला[2] । 'हल विलेखने' । परिस्रवतीति परिस्रुत् । परिस्रुता[3] च । 'स्रु स्रवणे' । वरुणस्यात्मजा वरुणात्मजा । गन्धेनोत्तमा गन्धोत्तमा । प्रसीदतीति प्रसन्ना । 'षद्लृ विशरणादौ' । मदमेत्यनयेति इरा[4] । 'इण् गतौ' । [5]कदम्बकोटरे जाता कादम्बरी । क्त् कुत्सित नीलमम्बर यस्य कदम्बर हली । तस्येयं प्रिया कादम्बरी । मदयतीति मदिरा[6] । 'मदी हर्षे' । कश्यते मदमुपैत्यनेनेति कश्यम् । 'कश गतिसाधनयोः' । मदे साधु मद्यम् । 'मदि हर्षग्लपनयोः' । माद्यन्त्यनेनेति वा । सुरानामानि ॥ अवदश्यते पानसमये अवदश । उपदश इति वा पाठ । 'दश दशने' । सुरापानसमये कृतभक्षणस्य नाम ॥ ३९ ॥

[1] सुरु राजन्तेऽनया $F_2$ $Pt_2$　　[2] हीयते लज्जाऽनया $h_3$ $Pt_2$　　[3] परिसृतेति वा पाठ $h_4$　　[4] यन्ति भ्राम्यन्त्यनया $Pt_2$　　[5] $Pt_2$ adds गोम-तपाते　　[6] माद्यन्त्यनया $h_3$, $Pt_2$

(पा.) सुरा हलिप्रिया—कश्यमद्ये चापि । सुरानामानि । शुण्डा स्वादुरसा कल्या मधूलि कापिशायनम् । एतानि पञ्च च ॥ अवदंशस्तु भक्षणम् । पलाण्ड्वादिपानसाधननाम ॥ ३९ ॥

**शुण्डापानं मदस्थानं मधुवारा मधुक्रमाः ॥ ४० ॥**
**मध्वासवो माधवको मधु माद्वीकमद्वयोः ।**
**मैरेयमासवः शीधुर्मेदको जगलः समौ ॥ ४१ ॥**

(वि.) शुण्डेति—शुण्डा सुरा पीयतेऽत्रेति शुण्डापानम् । 'पा पाने' । शुण्डापानमिति पदद्वय वा । मदस्य स्थान मदस्थानम् । सुरागृहनामनी ॥ मधुनो मद्यपानस्य वारा मधुवारा । मधुनो मद्यस्य क्रमा परिपाट्य मधुक्रमा । मदेनासक्तृत् मधुपानावसरनामनी । मधुना मधुकपुष्पेण कृत आसव मध्वासव[1] । मधुनो द्राक्षाया विकार माधवक । मधु प्रकृतिकत्वात् मधु । मृद्वीका द्राक्षा तस्या विकारो माद्वीकम् । द्राक्षाकृतमद्यनामानि ॥ एते चत्वारो माक्षिककृतमद्यस्यैव पर्याया इति केचित् ॥ इरा सामान्यसुरा स्वरुच्या मेति प्रतिषेधयतीति मेरा । सैव मैरेयम्[2] । धातकीपुष्पमिश्रगुडसहितधान्याम्बुकृतमद्यनाम ॥ आसूयते अभिषूयत इति आसव[3] । अपक्वेक्षुरसकृतमद्यनाम ॥ मत्ता शेरतेऽनेनेति शीधु । 'शीङ् स्वप्ने' । पक्वेक्षुरसकृतमद्यनाम ॥ मेद्यति स्निह्यत्यत्र सुरेति मेदक । 'ञिमिदा स्नेहने' । भृश सुरा गलति आदत्त इति जगल । 'गल अदने' । सुरासधानकरकल्कनामनी ॥ ४०–१ ॥

[1] माक्षिककृतमद्यनाम $K_5$, $K_8$ [2] मिरायां देशे भव $Pt_2$ [3] $K_5$, $K_8$ add 'षुञ् अभिषवे', $Pt_2$ adds इक्षुस्य

(पा.) शुण्डापान मदस्थानम् । पानगृहनामनी ॥ मधुवारा मधुक्रमा । [1]सुरापानक्रमनामनी । '[2]मारचुक्रोनित्रागुण' । मध्वासवो माधवको मधु । माधवशब्दसाहचर्य केचिदिच्छन्ति ।

'मकरन्दस्य मद्यस्य माक्षिकस्य च वाचक ।
अर्धर्चादिगणे पाठात् पुनपुसकयोर्मधु ॥'

इति दुर्गसिंह । माध्वीकमद्वयो । अद्वयोरिति विशेषविधिर्मधुमाध्वीकशब्दयोरनित्यताज्ञापनार्थ । मधूकपुष्पजनितसुरानामानि ॥ मैरेयमासव शीधु[3] । [4]इक्षुरसजनितसुरानामानि ॥ मेदको जगल समौ । पैष्टिकसुरानामनी ॥ ४०–१ ॥

[1] $A_1$ adds क्रमेण [2] $B_3$ omits [3] सीधु $B_3$ [4] मद्य° $B_3$

**संधानं स्यादभिषवः किण्वं पुंसि तु नग्नहूः ।**
**कारोत्तमः सुरामण्ड आपानं पानगोष्ठिका ॥ ४२ ॥**

(वि.) संधानमिति—मद्यस्य संधा [1]संधानम् । 'डुधाञ् धारणपोषणयोः' । अभिपूयत इत्यभिषवः । 'षुञ् अभिषवे' । फलादिसंधानस्य नामनी ॥ किणन्ति मत्ता अनेनेति किण्वम् । 'किण शब्दे' । नग्ना हूयन्तेऽनेनेति नग्नहूः[2] । 'ह्वेञ् स्पर्धायां शब्दे च' । अयं शब्दः पुंसि वर्तते । नानाद्रव्यकृतसुरासाधनस्य नामनी ॥ कारेण क्रियया उत्तमः कारोत्तमः । सुराया मण्डः । सुराग्रभागनामनी ॥ आपिबन्ति संभूय सुरामत्रेति आपानम् । 'पा पाने' । गावो वद्वाचः अत्र तिष्ठन्तीति गोष्ठी[3] । पानस्य पानाय वा गोष्ठी पानगोष्ठिका ॥ सुरापानगोष्ठीनामनी ॥ ४२ ॥

[1] संदीयते संदानम् । सुरापानमध्ये सर्षपमिश्रभक्ष्यविशेषनामनी $K_5$, $K_6$. [2] नग्नैर्हूयते गम्यत इति, 'ओहाङ्गतौ' $K_5$, $K_6$. [3] $K_2$ adds 'ष्ठा गतिनिवृत्तौ'.

(पा.) संधानं स्यादभिषवः । निर्मलत्यनामनी । 'तेट' । 'आसूतिर्मद्यसंधान-मासवोऽभिषवोऽपि च' इति वैजयन्ती (पृ. १४०, श्लो. ५१) ॥ किण्वं पुंसि तु नग्नहूः । सुराबीजनामनी । 'मुलक' । 'नानाद्रव्ये सुराबीजे किण्वादिद्वयम्' इति [1]सर्वधरः ॥ कारोत्तमः सुरामण्डः । सुरादिपिच्छानाम ॥ आपानं पानगोष्ठिका । पानगोष्ठी-नामनी ॥ ४२ ॥

[1] 'नानाद्रव्यकृते सुराबीजे किण्वद्वयम्' इति टीकासर्वस्वे (पृ. २८३, श्लो. ४१).

**चषकोऽस्त्री पानपात्रं सरकोऽप्यनुतर्षणम् ।**
**धूर्तोऽक्षदेवी कितवोऽक्षधूर्तो द्यूतकृत्समाः ॥ ४३ ॥**

(वि.) चषक इति—चषन्ति पिबन्ति सुरामत्रेति चषकः । 'चष भक्षणे' । पानस्य पात्रं पानपात्रम् । सुरापानपात्रस्य नामनी ॥ सरति सुरात्र सरकः । 'सृ गतौ' । अनुतृप्यन्त्यनेनेति अनुतर्षणम् । 'ञितृषा पिपासायाम्' । सुरापरिवेषणनामनी[1] ॥ धूर्वति[2] हिनस्तीति धूर्तः । 'धुर्व हिंसायाम्' । अक्षैर्दीव्यतीति[3] अक्षदेवी । 'दिवु क्रीडादौ' । किं तवास्तीति वदतीति कितवः । अक्षेषु धूर्तः अक्षधूर्तः । द्यूतं करोतीति द्यूतकृत् । द्यूतक्रीडाकरस्य नामानि ॥ ४३ ॥

[1] $K_5$, $K_6$ add चत्वार्यपि नामानि चषकस्यैवेति केचित् . [2] $Pt_2$ adds कुटुम्बा-दिकमिति. [3] $K_5$, $K_6$ add क्रीडति.

(पा.) चपकोऽस्त्री पानपात्रं—अनुतर्पणम् । सुरापानपात्रनामानि । अपिशब्दे-नास्त्रीति पदं सरकेणापि संबध्यते । अत एव '[1]अर्धर्चाः पुंसि च' इत्यत्र महाभाष्ये सरकः सरकमित्युभयमुदाहृतम् । 'चषकश्चानुतर्षश्च सरकश्च' इति भागुरिः । नपुंसकमध्यप्रयोगात् सरकः पुंनपुंसकश्च । पानपात्रमात्रनामानीति सर्वधरः । केचित्तु चपकादिद्वयं सुरापानपात्रे, सरकादिद्वयं सुरापरिवेषणे वर्तत इत्याहुः । शेषकारेण तु पक्षद्वयमप्युक्तम् 'सरकोऽप्यनुतर्षश्च चषके परिवेषणे' इति । 'सरकं चषकं चास्त्री गल्वर्कोऽप्यनुकर्षणम्' इति वैजयन्ती (पृ १४०, श्लो. ५३) । 'शीधौ च शीधुनः पाने चषके सरकोऽस्त्रियाम्' इति रुद्रः ॥ धूर्तोऽक्षदेवी—द्यूतकृत्समाः । द्यूतकारनामानि । 'जूजंगांडु' । 'शारिको[2] जगलश्च स्यात् साक्षिकः कृष्णकोहलः' । एतानि चत्वारि च ॥ ४३ ॥

[1] २. ४. ३१. [2] चौरिकः $A_1$.

**स्युर्लग्नकाः प्रतिभुवः सभिका द्यूतकारकाः ।**
**द्यूतोऽस्त्रियामक्षवती कैतवं पण इत्यपि ॥ ४४ ॥**

(वि.) स्युरिति—लगन्ति द्यूते प्रसज्यन्ते लग्नकाः । 'लग सङ्गे' । अधमर्णस्य प्रतिनिधयो भवतीति प्रतिभुवः । 'भू सत्तायाम्' । द्यूतप्रतिभूनामनी ॥ सभास्यास्तीति सभिकः । द्यूतं कारयन्तीति द्यूतकारकाः[1] । यः स्वगृहे द्यूतं कारयति तस्य नामनी ॥ दीव्यते स्मानेन द्यूतः[2] । 'दिवु क्रीडादौ' । अक्षा अस्यां सन्तीति अक्षवती । कितवस्य कर्म कैतवम् । पण्यते व्यवह्रियतेऽनेन पणः[3] । द्यूतक्रीडनस्य नामानि ॥ ४४ ॥

[1] $Pt_2$ adds 'डुकृञ् करणे'. [2] देवनं $F_2$, $Pt_2$. [3] $F_3$, $K_3$ add 'पण व्यवहारे स्तुतौ च'.

(पा.) स्युर्लग्नकाः प्रतिभुवः । मदर्थमयं दास्यतीत्यन्येन नियुक्तनामनी । '[1]जामीनु' ॥ सभिका द्यूतकारकाः ।

'द्यूतशालामधिष्ठाय द्यूतोपकरणान्वितः ।
यः प्रवर्तयति द्यूतं सभिकः स उदाहृतः ॥'

द्यूतप्रवर्तकनामनी । लग्नकादिचतुष्टयमेकार्थमिति स्वामी[2] । 'अचेदिवांडु' ॥ द्यूतो स्त्रियामक्षवती । स्त्रीलिङ्गः । 'नियुज्य कुन्तीसुतमक्षवत्याम्' । कैतवं पण इत्यपि ।

द्यूतनामानि। 'जूजमु'। कलिखल इति क्रीडाद्यूतम्। 'क्रीडाद्यूते कलिखल इति वैजयन्ती (पृ ३०१, श्लो. १४०)। क्रीडाद्यूतनाम ॥ ४४ ॥

[1] 'पूटकापु' $A_1$ [2] द्वौ द्वौ मिलार्थौ, आद्ययोः सर्वसामान्यात् इति मुद्रितग्रन्थे (पृ २३५) [3] समाह्वय इति मुद्रितग्रन्थे

**पणोऽक्षेषु ग्लहोऽक्षास्तु देवनाः पाशकाश्च ते।**
**परिणायस्तु शारीणां समन्तान्नयनेऽस्त्रियाम् ॥ ४५ ॥**

(वि.) पण इति—गृह्यते इति ग्लह। 'ग्रह [1]उपादाने'। अक्षविषयपण नाम ॥ अक्षन्ति[2] पाणिभिरिति अक्षा। 'अक्षू व्याप्तौ'। दीव्यन्ति एभिरिति देवना। 'दिवु क्रीडादौ'। पाश्यन्ते वध्यन्त एभिरिति पाशका। 'पश बन्धने'। प्रासक इति पाठे 'असु क्षेपणे' इति धातु। अक्षनामानि ॥ परितः शारीणा नयन परिणाय। शारीणा समन्तान्नयनस्य क्षेपणस्य नाम ॥ ४५ ॥

[1] ग्रहणे $K_6$ [2] अक्ष्णुवन्ति $F_2$ $Pt_2$ [3] क्रीडायाम् $K_6$, $K_6$

(पा.) पणोऽक्षेषु ग्लह। पराजये देयद्रव्यनाम। 'पिड्डमि'॥ अक्षास्तु—पाशकाश्च ते। पाशकनामानि। शेषे—'प्रासका पाशका पाशा'। एतानि च। परिणायस्तु शारीणा—अस्त्रियाम्। 'ना पर्याणे विहङ्गे स्त्री शारिर्द्यूते गुडे न पण' इति वैजयन्ती (पृ २३७, श्लो. ८८)। शारीणा सव्यापसव्यप्रसारण परिणाय [1]स्यात् ॥ ४५ ॥

[1] $B_3$ adds शेषे— चेलन्य शारय स्त्रिय इति

**अष्टापदं शारिफलं प्राणिद्यूतं समाह्वयः।**
**उक्ता भूरिप्रयोगत्वादेकस्मिन् येऽत्र यौगिकाः ॥ ४६ ॥**
**ताद्धर्म्यादन्यतो वृत्तावूह्या लिङ्गान्तरेऽपि ते।**
**इत्यमरसिंहकृतौ नामलिङ्गानुशासने।**
**द्वितीयः काण्डो भूम्यादिः साङ्ग एव समर्थितः ॥ ४७ ॥**

इति श्रीमदमरसिंहकृते नामलिङ्गानुशासने शूद्रवर्गः

(वि.) अष्टापदमिति—[1]अष्टौ पदान्यस्य अष्टापदम्। शारिफलनाम ॥ प्राणिना द्यूत प्राणिद्यूतम्। [2]स्पर्धया समाहूयन्त जना अत्रेति समाह्वय। 'ह्वेञ्

स्पर्धायां शब्दे च[2]। [3]कुक्कुटमहिषादिभिः क्रियमाणस्य द्यूतस्य नाम ॥ अत्र वर्गे ये यौगिकाः शब्दाः मायाकाराद्यो भूरिप्रयोगत्वात् प्रयोगाधिक्यात् एकस्मिन्नेव लिङ्गे पुंलिङ्गे उक्ताः ते शब्दाः ताद्धर्म्यात् मायाकारादिधर्मयोगाद् अन्यतो वृत्तौ स्त्र्यादिवृत्तौ सत्यां लिङ्गान्तरेऽपि स्त्रीलिङ्गे नपुंसकलिङ्गे च। एवमूह्याः ऊहनीयाः। तद्यथा मायाकारी स्त्री। मायाकारि कुलमित्यादि ॥ ४६–७ ॥

इति वन्द्लकामयभट्टोपाध्यायसूनुलिङ्गयसूरिविरचितायाममरकोशपदविवृतौ शूद्रवर्गः

[1] $F_2$, $Pt_2$ add प्रतिपङ्क्ति. [2] $K_5$, $K_8$ add संघर्षण. [3] $K_2$, $K_3$ add प्राणिभिः.

(पा.) अष्टापदं शारिफलम्। शारिफलकनामनी। 'पगडसालपिंट' 'अदिपाशापट्ट' ॥ प्राणिद्यूतं समाह्वयः। मेषकुक्कुटादिद्यूतनाम।

'अप्राणिभिर्यत् क्रियते तल्लोके द्यूतमुच्यते।
प्राणिभिः क्रियमाणं तु स विज्ञेयः समाह्वयः' ॥

अनुक्तम्—'चतुरङ्गं विन्दुतन्त्रः'। 'चतुरङ्गम्' ॥ उक्ता भूरिप्रयोगत्वात्—लिङ्गान्तरेऽपि ते। अत्रास्मिन् वर्गे ये केचिद्यौगिका मायाकारमार्दङ्गिकादिशब्दा भूरिप्रयोगत्वात् प्रचुरप्रयोगदर्शनाद् एकस्मिन् पुंलिङ्गमात्रे उक्ताः कथिताः, ते शब्दास्ताद्धर्म्यात् तद्धर्मयोगाद् अन्यतो वृत्तौ स्त्र्यादिवृत्तौ सत्यां लिङ्गान्तरेऽपि स्त्र्यादिलिङ्गेऽपि ऊह्याः ऊहनीयाः।

'मायाकारो मार्दङ्गिको वैणवो वैणिको लोकः।
मायाकारी मार्दङ्गिकी वैणवी वैणिकी सभा।
मायाकारं मार्दङ्गिकं वैणवं वैणिकं वृन्दम् ॥'

सौचिककुम्भकारादिशब्दा जातिवचनत्वादसर्वलिङ्गा एव। 'आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक्' इति जातिलक्षणम्। सौचिकः, सौचिकी। कुम्भकारः, कुम्भकारी। इत्यादि ॥ ४६–७ ॥

इति श्रीवत्स'नृसिंहसूरिसुतमल्लिनाथसुधीविरचितेऽमरपदपारिजाते शूद्रवर्गः

श्रीवत्सान्वयमान्येन मल्लिनाथेन निर्मिते।
व्याख्यानेऽमरसिंहस्य द्वितीयः काण्ड उम्भितः ॥